# KÂVYAMÂLÂ.

A collection of old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhânas, Prahasanas, Chhandas, Alankâras &c.

PART VI.

EDITED BY

PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRNAYA-SÂGARA" PRESS.

BOMBAY.

1890.

*Price 1 Rupee.*

॥ श्रीः ॥

# काव्यमाला

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

---

## षष्ठो गुच्छकः ।

---

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितः ।

---

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

---

१८९०

---



---

मूल्यमेको रूपकः ।

# अनुक्रमणिका ।


| | | |
|---|---|---|
| | | पृष्ठम् । |
| १. शंकराचार्यकृतं शिवपादादिकेशान्तवर्णनस्तोत्रम् | .... | १ |
| २. ,, शिवकेशादिपादान्तवर्णनस्तोत्रम् | .... | ८ |
| ३. नीलकण्ठदीक्षितविरचितः शान्तिविलासः .... | .... | १२ |
| ४. लोष्टकनिर्मितं दीनाक्रन्दनस्तोत्रम् .... .... | .... | २१ |
| ५. श्रीकृष्णवल्लभप्रणीतं काव्यभूषणशतकम् .... | .... | ३१ |
| ६. श्रीनिवासाचार्यविरचितं जानकीचरणचामरम्.... | .... | ४७ |
| ७. क्षेमेन्द्रविरचितं दर्पदलनम् .... .... .... | .... | ६६ |
| ८. शिवरामत्रिपाठिप्रणीतो रसरत्नहारः (सटीकः) | .... | ११८ |
| ९. नीलकण्ठदीक्षितप्रणीतम् अन्यापदेशशतकम्.... | .... | १४३ |

# काव्यमाला।

श्रीशंकराचार्यकृतं

## शिवपादादिकेशान्तवर्णनस्तोत्रम्।

कल्याणं वो विधत्तां कटकतटलसत्कल्पवाटीनिकुञ्ज-
क्रीडासंसक्तविद्याधरनिकरवधूगीतरुद्रावदानः।
तारैर्हेरम्बनादैस्तरलितनिनदत्तारकारातिकेकी
कैलासः शर्वनिर्वृत्यभिजनकपदं सर्वदा पर्वतेन्द्रः॥ १॥
यस्य प्राहुः स्वरूपं सकलदिविषदां सारसर्वस्वयोगं
यस्येषुः शार्ङ्गधन्वा समजनि जगतां रक्षणे जागरूकः।
मौर्वी दर्वीकराणामपि च परिवृढः पूस्त्रयी सा च लक्ष्यं
सोऽव्यादव्याजमस्मानशुभभिदनिशं नाकिनां श्रीपिनाकः॥२॥
आतङ्कावेगहारी सकलदिविषदामङ्घ्रिपद्माश्रयाणां
मातङ्गाद्युग्रदैत्यप्रकरतनुगलद्रक्तधाराक्तधारः।
क्रूरः शूरायुधानामपि च परिभवं स्वीयभासा वितन्व-
न्घोराकारः कुठारो दृढतरदुरिताख्याटवीं पाटयेन्नः॥ ३॥
कालारातेः कराग्रे कृतवसतिरुरःशाणशातो रिपूणां
काले काले कुलाद्रिप्रवरतनयया कल्पितस्नेहलेपः।
पायाद्वः पावकार्चिःप्रसरसखमुखः पापहन्ता नितान्तं
शूलः श्रीपादसेवाभजनरसजुषां पालनैकान्तशीलः॥ ४॥
देवस्याङ्काश्रयायाः कुलगिरिदुहितुर्नेत्रकोणप्रचार-
प्रस्तारानत्युदारान्पिपठिषुरिव यो नित्यमत्यादरेण।
आधत्ते भङ्गितुङ्गैरनिशमवयवैरन्तरङ्गं समोदं
सोमापीडस्य सोऽयं प्रदिशतु कुशलं पाणिरङ्गः कुरङ्गः॥ ५॥

---

१. 'रङ्गत्कुरङ्गः' इति पाठः.

कण्ठप्रान्तावसज्जत्कनकमयमहाघण्टिकाघोरघोषैः
कण्ठारावैरकुण्ठैरपि भरितजगच्चक्रवालान्तरालः ।
चण्डप्रोद्दण्डशृङ्गः ककुदकवलितोत्तुङ्गकैलासशृङ्गः
कण्ठेकालस्य वाहः शमयतु शमलं शाश्वतः शाक्वरेन्द्रः ॥ ६ ॥

निर्यद्दानाम्बुधारापरिमलतरलीभूतरोलम्बपाली-
झंकारैः शंकराद्रेः शिखरशतदरीः पूरयन्भूरिघोषैः ।
शार्वः सौवर्णशैलप्रतिमपृथुवपुः सर्वविघ्नापहर्ता
शर्वाण्याः पूर्वसूनुः स भवतु भवतां स्वस्तिदो हस्तिवक्त्रः ॥ ७ ॥

यः पुण्यैर्देवतानां समजनि शिवयोः श्लाघ्यवीर्यैकमत्या-
यन्नाम्नि श्रूयमाणे दितिजभटघटा भीतिभारं भजन्ते ।
भूयात्सोऽयं विभूत्यै निशितशरशिखापाटितक्रौञ्चशैलः
संसारागाधकूपोदरपतितसमुत्तारकस्तारकारिः ॥ ८ ॥

आरूढः प्रौढवेगप्रविजितपवनं तुङ्गतुङ्गं तुरङ्गं
चैलं नीलं वसानः करतलविलसत्काण्डकोदण्डदण्डः ।
रागद्वेषादिनानाविधमृगपटलीभीतिकृद्भूतभर्ता
कुर्वन्नाखेटलीलां परिलसतु मनःकानने मामकीने ॥ ९ ॥

नृत्तारम्भेषु हस्ताहतमुरजधिमिंधिमिकृतैरत्युदारै-
श्चित्तानन्दं विधत्ते सदसि भगवतः संततं यस्य नन्दी ।
चण्डीशाद्यालभान्ये चतुरगुणगणप्रीणितस्वामिसत्का-
रोत्कर्षोद्यत्प्रसादाः प्रमथपरिवृढाः पान्तु संतोषिणो वः ॥ १० ॥

अम्भोजाभ्यां च रम्भास्थचरणललनाद्वन्द्वमिभीन्द्रकुम्भे-
बिम्बेनेन्दोश्च कम्बोरुपरि विलसता विद्रुमेणोत्पलाभ्याम् ।
अम्भोदेनापि संभावितमुपजनितनाडम्बरं शम्बरारेः
शंभोः संभोगयोग्यं किमपि धनमिदं संभवेत्संपदे नः ॥ ११ ॥

वेणीसौभाग्यविस्मापिततपनसुताचारुवेणीविलासा-
न्वाणीनिर्धूतवाणीकरतलविधृतोदारवीणाविरावान् ।
एणीनेत्रान्तभङ्गीनिरसननिपुणापाङ्गकोणानुपासे
शोणान्प्राणानुदूढप्रतिनवसुषमाकन्दलानिन्दुमौलेः ॥ १२ ॥

मुक्तामाणिक्यजालैः परिकलितमहासालमालोकनीयं
प्रत्युप्तानर्घरत्नैर्दिशि दिशि भवनैः कल्पितं दिक्पतीनाम् ।
उद्यानैरद्रिकन्यापरिजनवनितामाननीयैः परीतं
हृद्यं हृद्यस्तु नित्यं मम भुवनपतेर्धाम चन्द्रार्धमौलेः ॥ १३ ॥

स्तम्भैर्जम्भारिरत्नप्रकरविरचितैः संभृतोपान्तभागं
शुम्भत्सोपानमार्गं शुचिमणिनिचयैर्गुम्फितानल्पशिल्पम् ।
कुम्भैः संपूर्णशोभं शिरसि सुघटितैः शातकौम्भैरकम्प्यैः
शंभोः संभावनीयं सकलमुनिजनैः स्वस्तिदं स्यात्सदो नः ॥ १४ ॥

न्यस्तो मध्ये सभायाः परिसरविलसत्पादपीठाभिरामो
हृद्यः पादैश्चतुर्भिः कनकमणिमयैरुज्ज्वलैरुज्ज्वलात्मा ।
वासोरत्नेन केनाप्यधिकमृदुतरेणास्तृतो विस्तृतश्रीः
पीठः पीडाभरं नः शमयतु शिवयोः स्वैरसंवासयोग्यः ॥ १५ ॥

आसीनस्याधिपीठं त्रिजगदधिपतेरङ्घ्रिपीठानुषक्तौ
पाथोजाभोगभाजौ परिमृदुलतरोल्लासिपद्मादिरेखौ ।
पातां पादावुभौ तौ नमदमरकिरीटोल्लसच्चारुहीर-
श्रेणीशोणायमानोन्नतनखदशकोद्भासमानौ समानौ ॥ १६ ॥

यन्नादो वेदवाचां निगदति निखिलं लक्षणं पक्षिकेतु-
र्लक्ष्मीसंभोगसौख्यं विरचयति ययोश्चापरे रूपभेदे ।
शंभोः संभावनीये पदकमलसमासङ्गतस्तुङ्गशोभे
माङ्गल्यं नः समग्रं सकलसुखकरे नूपुरे पूरयेताम् ॥ १७ ॥

---

१. वेणी केशपाशो नदीप्रवाहश्च. २. 'प्रवरपरिचितैः' इति पाठः. ३. 'शुंभ दीप्तौ.'
४. 'शातदं' इति पाठः. ५. 'उच्चकैः' इति पाठः.

अङ्के शृङ्गारयोनेः सपदि शलभतां नेत्रवह्नौ प्रयाते
शत्रोरुद्धृत्य तस्मादिषुधियुगमधो न्यस्तमेतत्पदाग्रे।
इत्थं शङ्कां नतानाममरपरिषदामन्तरङ्कूरयत्त-
त्संघातं चारुजङ्घायुगमखिलपतेरंहसः संहरेन्नः॥ १८॥

नानुद्धन्द्धेन मीनध्वजनृवरसमुद्गोपमानेन साकं
राजन्तौ राजरम्भाकरिकरकनकस्तम्भसंभावनीयौ।
ऊरू गौरीकराम्भोरुहसरससमामर्दनानन्दभाजौ
चारू दूरीक्रियेतां दुरितमुपचितं जन्मजन्मान्तरे नः॥ १९॥

आमुक्तानर्घरत्नप्रकरकरपरिष्वक्तकल्याणकाञ्ची-
दाम्ना बद्धेन दुग्धद्युतिनिचयमुषा चीनपट्टाम्बरेण।
संवीते शैलकन्यासुचरितपरिपाकायमाणे नितम्बे
नित्यं नर्नर्तु चित्तं मम निखिलजगत्स्वामिनः सोममौलेः॥ २०॥

संध्याकालानुरज्यद्दिनकरसरुचा कालधौतेन गाढं
व्यानद्धः स्निग्धमुग्धः सरससुदरबन्धेन वीतोपमेन।
उद्दीप्रैः स्वप्रकाशैरुपचितमहिमा मन्मथारेरुदारो
मध्यो मिथ्यार्थसध्यङ्मम दिशतु सदा संगतिं मङ्गलानाम्॥ २१॥

नाभीचक्रालवालान्नवनवसुषमादोहदश्रीपरीता-
दुद्गच्छन्ती पुरस्तादुदरपथमतिक्रम्य वक्षः प्रयान्ती।
श्यामा कामागमार्थप्रकथनलिपिवद्भासते या निकामं
सा मा सोमार्धमौलेः सुखयतु नितरां रोमवल्लीमतल्ली॥ २२॥

आश्लेषेष्वद्रिजायाः कठिनकुचतटीलिप्तकाश्मीरपङ्क-
व्यासङ्गादुद्यदर्कद्युतिभिरुपचितस्पर्धमुद्दामहृद्यम्।
दक्षारातेरुदूढप्रतिनवमणिमालावलीभासमानं
वक्षो विक्षोभिताघं सततनतिजुषां रक्षतादक्षतं नः॥ २३॥

---

१. हामस्य. २. 'किमग्रे' इति पाठः. ३. कल्याण सुवर्णम्.

वामाङ्के विस्फुरन्त्या करतलविलसच्चारुरक्तोत्पलायाः
कान्ताया वामवक्षोरुहभरशिखरामर्दनव्यग्रमेकम् ।
अन्यांस्त्रीनप्युदारान्वरपरशुमृगालंकृतानिन्दुमौले-
र्बाहूनाबद्धहेमाङ्गदमणिकटकानन्तरालोकयामः ॥ २४ ॥
संभ्रान्तायाः शिवायाः पतिविलयभिया सर्वलोकोपतापा-
त्संविग्नस्यापि विष्णोः सरभसमुभयोर्वारणप्रेरणाभ्याम् ।
मध्ये त्रैशङ्कवीयामनुभवति दशां यत्र हालाहलोष्मा
सोऽयं सर्वापदां नः शमयतु निचयं नीलकण्ठस्य कण्ठः ॥ २५ ॥
हृद्यैरद्रीन्द्रकन्यामृदुदशनपदैर्मुद्रितो विद्रुमश्री-
रुद्योतन्त्या नितान्तं धवलधवलया मिश्रितो दन्तकान्त्या ।
मुक्तामाणिक्यजालव्यतिकरसदृशा तेजसा भासमानः
सद्योजातस्य दद्यादधरमणिरसौ संपदां संचयं नः ॥ २६ ॥
कर्णालंकारनानामणिनिचयरुचां संचयैरञ्चितायां
वर्ण्यायां स्वर्णपद्मोदरपरिविलसत्कर्णिकासंनिभायाम् ।
पद्धत्यां प्राणवायोः प्रणतजनहृदम्भोजवासस्य शंभो-
र्नित्यं नश्चित्तमेतद्विरचयतु सुखेनासिकां नासिकायाम् ॥ २७ ॥
अत्यन्तं भासमाने रुचिरतररुचां संगमात्सन्मणीना-
मुद्यच्चण्डांशुधामप्रसरनिरसनस्पष्टदृष्टावदाने ।
भूयास्तां भूतये नः करिवरजयिनः कर्णपाशावलम्बे
भक्तालीभालसज्जज्जनिमरणलिपेः कुण्डले कुण्डले ते ॥ २८ ॥
याभ्यां कालव्यवस्था भवति तनुमतां यो मुखं देवतानां
येषामाहुः स्वरूपं जगति मुनिवरा देवतानां त्रयीं ताम् ।
रुद्राणीवक्त्रपङ्केरुहसततविहारोत्सुकेन्दिन्दिरेभ्य-
स्तेभ्यस्त्रिभ्यः प्रणामाञ्जलिमुपरचये त्र्यक्षणस्येक्षणेभ्यः ॥ २९ ॥

---

१. 'भयात्' इति पाठः. २. 'विगलत्' इति पाठः. ३. पुस्तकस्थाधिकलिपि-निरासार्थं कुण्डलाकारं चिह्नं क्रियते.

वामं वामाङ्गगाया वदनसरसिजव्यालगद्भृङ्गभाया
व्यानम्रेष्वन्यदन्यत्पुनरलिकभवं वीतनिःशेषरौक्ष्यम् ।
भूयो भूयोऽपि मोदान्निपतदतिदयाशीतलं चूतबाणे
दक्षारेरीक्षणानां त्रयमपहरतादाशु तापत्रयं नः ॥ ३० ॥

यस्मिन्नर्धेन्दुमुग्धद्युतिनिचयतिरस्कारनिस्तन्द्रकान्तौ
काश्मीरक्षोदसंकलितमिव रुचिरं चित्रकं भाति नेत्रम् ।
तस्मिन्नुल्लीलचिल्लीनटवरतरुणीलास्यरङ्गायमाणे
कालारेः फालदेशे विहरतु हृदयं वीतचिन्तान्तरं नः ॥ ३१ ॥

स्वामिन्गङ्गामिवाङ्गीकुरु तव शिरसा मामपीत्यर्थयन्तीं
धन्यां कन्यां खरांशोः शिरसि वहति किं न्वेष कारुण्यशाली ।
इत्थं शङ्कां जनानां जनयदतिघनं कैशिकं कालमेघ-
च्छायं भूयादुदारं त्रिपुरविजयिनः श्रेयसे भूयसे नः ॥ ३२ ॥

शृङ्गारकल्पयोग्यैः शिखरिवरसुतासत्सखीहस्तलूनैः
सूनैराबद्धमालावलिपरिविगलत्सौरभाकृष्टभृङ्गम् ।
तुङ्गं माणिक्यकान्त्या परिहसितसुरावासशैलेन्द्रशृङ्गं
संघं नः संकटानां विघटयतु सदा काङ्कटीकं किरीटम् ॥ ३३ ॥

वक्राकारः कलङ्की जडतनुरहमप्यङ्घ्रिसेवानुभावा-
दुत्तंसत्वं प्रयातः सुलभतरघृणास्यन्दिनश्चन्द्रमौलेः ।
तत्सेवन्तां जनौघाः शिवमिति निजयावस्थयैव ब्रुवाणं
वन्दे देवस्य शंभोर्मुकुटसुघटितं मुग्धपीयूषभानुम् ॥ ३४ ॥

कान्त्या संफुल्लमल्लीकुसुमधवलया व्याप्य विश्वं विराज-
न्वृत्ताकारो वितन्वन्मुहुरपि च परां निर्वृतिं पादभाजाम् ।
सानन्दं नन्दिदोष्णा मणिकटकवता वाह्यमानः पुरारेः
श्वेतच्छत्राख्यशीतद्युतिरपहरतादापदस्तापदा नः ॥ ३५ ॥

---

१. 'भूयोऽतिमोदात्' इति पाठः. २. 'द्युतितिमिर' इति पाठः. ३. चिल्ली भ्रूः. ४. 'जनानां' इति पाठः. ५. कङ्कटीकः शिवः.

दिव्याकल्पोज्ज्वलानां शिवगिरिसुतयोः पार्श्वयोराश्रितानां
रुद्राणीसत्सखीनां मदतरलकटाक्षाञ्चलैरञ्चितानाम् ।
उद्वेलद्बाहुवल्लीविवलनसमये चामरान्दोलिनीना-
मुद्भूतः कङ्कणालीवलनकलकलो वारयेदापदो नः ॥ ३६ ॥
स्वर्गौकःसुन्दरीणां सुललितवपुषां स्वामिसेवापराणां
वल्गद्भूषाणि वक्त्राम्बुजपरिविगलन्मुग्धगीतामृतानि ।
नित्यं नृत्यान्युपासे भुजविधुतिपदन्यासभावावलोक-
प्रत्युद्यत्प्रीतिमाद्यत्प्रमथनटनटीदत्तसंभावनानि ॥ ३७ ॥
स्थानप्राप्त्या स्वराणां किमपि विशदतां व्यञ्जयन्मञ्जुवीणा-
स्वानावच्छिन्नतालक्रममसृतमिवास्वाद्यमानं शिवाभ्याम् ।
नानारागातिहृद्यं नवरसमधुरस्तोत्रजातानुविद्धं
गानं वीणामहर्षेः कलमतिललितं कर्णपूरायतां नः ॥ ३८ ॥
चेतोजातप्रमोदं सपदि विदधती प्राणिनां वैणिनीनां
पाणिद्वन्द्वाग्रजाग्रत्सुललितरणितस्वर्णतालानुकूला ।
स्वीयारावेण पाथोधररवपटुना नादयन्ती मयूरीं
मायूरी मन्दभावं मणिमुरजभवा मार्जना मार्जयेन्नः ॥ ३९ ॥
देवेभ्यो दानवेभ्यः पितृमुनिपरिषत्सिद्धविद्याधरेभ्यः
साध्येभ्यश्चारणेभ्यो मनुजपशुपतज्जातिकीटादिकेभ्यः ।
श्रीकैलासप्ररूढास्तृणविटपिमुखाश्चापि ये सन्ति तेभ्यः
सर्वेभ्यो निर्विचारं नतिमुपरचये शर्वपादाश्रयेभ्यः ॥ ४० ॥
ध्यायन्नित्यं प्रभाते प्रतिदिवसमिदं स्तोत्ररत्नं पठेद्यः
किं वा ब्रूमस्तदीयं सुचरितमथवा कीर्तयामः समासात् ।
संपज्जातं समग्रं सदसि बहुमतिं सर्वलोकप्रियत्वं
संप्राप्यायुःशतान्ते पदमयति परब्रह्मणो मन्मथारेः ॥ ४१ ॥

इति श्रीमच्छंकराचार्यविरचितं शिवपादादिकेशान्तवर्णनस्तोत्रं समाप्तम् ।

---

१. 'उद्वल्गत्' इति पाठः. २. नारदस्य. ३. नर्तकीनाम्. ४. 'मायूरी मदशान्ति मार्जना मनांसि' इति मार्जनिकाविशेषणम्, प्रथमोऽङ्कः. ५. मार्जना मुरजध्वनिः. ६. 'इत्थं ध्यायन्' इति पाठः.

श्रीशंकराचार्यविरचितं

## शिवकेशादिपादान्तवर्णनस्तोत्रम् ।

देयासुर्मूर्ध्नि राजत्सरससुरसरित्पारपर्यन्तनिर्य-
त्प्रांशुस्तम्बाः पिशङ्गास्तुलितपरिणतारक्तशालीलता वः ।
दुर्वारापत्तिगर्तश्रितनिखिलजनोत्तारणे रज्जुभूता
घोराघोर्वीरुहालीदहनशिखिशिखाः शर्म-शार्वाः कपर्दाः ॥ १ ॥
कुर्वन्निर्वाणमार्गप्रगमपरिलसद्रूप्यसोपानशङ्कां
शक्रारीणां पुराणां त्रयविजयकृतस्पष्टरेखायमाणम् ।
अव्यादव्याजमुच्चैरलिकहिमधराधित्यकान्तस्त्रिधोद्य-
ज्ज्याद्भव्याभं मृडानीकमितुरुडुपरुक्पाण्डुरं वस्त्रिपुण्ड्रम् ॥ २ ॥
क्रुध्यद्गौरीप्रसादानतिसमयपदाङ्गुष्ठसंक्रान्तलाक्षा-
बिन्दुस्पर्धि स्मरारेः स्फटिकमणिदृषन्मग्नमाणिक्यशोभम् ।
मूर्ध्न्युद्यद्दिव्यसिन्धोः पतितशफरिकाकारि वो भास्वकं स्ता-
दस्तोकापत्तिकृत्त्यै हुतवहकणिकामोक्षरूक्षं सदाक्षि ॥ ३ ॥
भूत्यै दृग्भूतयोः स्यादहिमहिमरुग्बिम्बयोः स्निग्धवर्णो
दैत्यौघध्वंसशंसी स्फुट इव परिवेषावशेषो विभाति ।
सर्गस्थित्यन्तवृत्तिर्मयि समुपगतेऽतीव निर्वृत्तगर्वं
शर्वाणीभर्तुरुच्चैर्युगलमथ दधद्विभ्रमं तद्भ्रुवोर्वः ॥ ४ ॥
युग्मे रुक्माब्जपिङ्गे ग्रह इव पिहिते द्राग्ययोः प्राग्दुहित्रा
शैलस्य ध्वान्तनीलाम्बररचितबृहत्कञ्चुकोऽभूत्प्रपञ्चः ।
ते त्रैनेत्रे पवित्रे त्रिदशवरघटामित्रजैत्रोग्रशस्त्रे
नेत्रे नेत्रे भवेतां द्रुतमिह भवतामिन्द्रियाश्वान्नियन्तुम् ॥ ५ ॥
चण्डीवक्त्रार्पणेच्छोस्तदनु भगवतः पाण्डुरुक्पाण्डुगण्ड-
प्रोद्यत्कण्डूं विनेतुं वितनुत इव ये रत्नकोणैर्विघृष्टिम् ।
चण्डार्चिर्मण्डलाभे सततनतजगद्ध्वान्तखण्डातिशौण्डे
चाण्डीशे ते श्रिये स्तामधिकमवनताखण्डले कुण्डले वः ॥ ६ ॥

खट्वाङ्गोदग्रपाणेः स्फुटविकटपुटो वक्ररन्ध्रप्रवेश-
प्रेप्सूदञ्चत्फणोरुश्वसदतिधवलाहीन्द्रशङ्कां दधानः ।
युष्माकं कम्रवक्राम्बुरुहपरिलसत्कर्णिकाकारशोभः
शश्वत्त्राणाय भूयादलमतिविमलोत्तुङ्गकोणः स घोणः ॥ ७ ॥

क्रुध्यत्यद्धा ययोः स्वां तनुमतिलसतोर्बिम्बितां लक्षयन्ती
भर्त्रे स्पर्धातिनिघ्ना मुहुरितरवधूशङ्कया शैलकन्या ।
युष्मांस्तौ शश्वदुच्चैरबहुलदशमीशर्वरीशातिशुभ्रा-
वव्यास्तां दिव्यसिन्धोः कमितुरवनमल्लोकपालौ कपोलौ ॥ ८ ॥

यो भासा भात्युपान्तस्थित इव निभृतं कौस्तुभो द्रष्टुमिच्छ-
न्सोत्थस्नेहान्नितान्तं गलगतगरलं पत्युरुच्चैः पशूनाम् ।
प्रोद्यत्प्रेम्णा यमार्द्रा पिबति गिरिसुता संपदः सातिरेका
लोकाः शोणीकृतान्ता यदधरमहसा सोऽधरो वो विधत्ताम् ॥ ९ ॥

अत्यर्थं राजते या वदनशशधरादुद्गलच्चारुवाणी-
पीयूषाम्भःप्रवाहप्रसरपरिलसत्फेनबिन्द्वावलीव ।
देयात्सा दन्तपङ्क्तिश्चिरमिह दनुदायाददौवारिकस्य
द्युत्या दीप्तेन्दुकुन्दच्छविरमलतरप्रोन्नताग्रा मुदं वः ॥ १० ॥

न्यक्कुर्वन्नुर्वराभृन्निभघनसमयोद्घुष्टमेघौघघोषं
स्फूर्जद्वार्ध्युत्थितोरुध्वनितमपि परब्रह्मभूतो गभीरः ।
सुव्यक्तो व्यक्तमूर्तेः प्रकटितकरणः प्राणनाथस्य सत्याः
प्रीत्या वः संविदध्यात्फलविकलमलं जन्मनादः स नादः ॥ ११ ॥

भासा यस्य त्रिलोकी लसति परिलसत्फेनबिन्दूर्णवान्त-
र्व्यामग्नेवातिगौरस्तुलितसुरसरिद्वारिपूरप्रसारः ।
पीनात्मा दन्तभाभिर्भृशमहहहकारातिभीमः सदेष्टां
पुष्टां तुष्टिं क्रियाष्ट स्फुटमिह भवतामट्टहासोऽष्टमूर्तेः ॥ १२ ॥

---

१. बाणासुरद्वारपालस्य शिवस्य. २. अदो वो जन्म फलविकलं स नादो न संविदध्यात्. सफलं जन्म कुर्यादिति भावः.

सद्योजाताख्यमाप्यं यदुविमलमुदग्वृत्ति यद्वामदेवं
　　नाम्ना हेम्ना सदृक्षं जलदनिभमघोराह्वयं दक्षिणं यत्।
यद्बालार्कप्रभं तत्पुरुषनिगदितं पूर्वमीशानसंज्ञं
　　यद्दिव्यं तानि शंभोर्भवदभिलषितं पञ्च दद्युर्मुखानि ॥ १३ ॥
आत्मप्रेम्णो भवान्याः स्वयमिव रचिताः सादरं सांवनन्या
　　मष्या तिस्रः सुनीलाञ्जननिभगररेखाः समाभान्ति यस्याम्।
आकल्पानल्पभासा भृशरुचिरतरा कम्वकल्पाम्बिकायाः
　　पत्युः सात्यन्तमन्तर्विलसतु सततं मन्थरा कंधरा वः ॥ १४ ॥
वक्त्रेन्दोर्दन्तलक्ष्म्याश्चिरमधरमहाकौस्तुभस्याप्युपान्ते
　　सोत्थानां प्रार्थयन्त्यः स्थितिमचलभुवे वारयन्त्यै निवेशम्।
प्रायुङ्क्ते वाशिषो यः प्रतिपदममृतत्वे स्थितः कालशत्रोः
　　कालं कुर्वन्गलं वो हृदयमलमलं क्षालयेत्कालकूटः ॥ १५ ॥
प्रौढप्रेमाकुलाया दृढतरपरिरम्भेषु पर्वेन्दुमुख्याः
　　पार्वत्याश्चारुचामीकरवलयपदैरङ्कितं कान्तिशालि।
रङ्गन्नागाङ्गदाढ्यं सततमविहितं कर्म निर्मूलयेत्त-
　　द्दोर्मूलं निर्मलं यद्धृदि दुरितमपास्यार्जितं धूर्जटेर्वः ॥ १६ ॥
कण्ठाश्लेषार्थमाप्ता दिव इव कमितुः स्वर्गसिन्धोः प्रवाहाः
　　कान्त्यै संसारसिन्धोः स्फटिकमणिमहासंक्रमाकारदीर्घाः।
तिर्यग्विष्कम्भभूतास्त्रिभुवनवसतेर्भिन्नदैत्येभदेहा
　　बाहा वस्ता हरस्य द्रुतमिह निवहानंहसां संहरन्तु ॥ १७ ॥
वक्षो दक्षद्विषोऽलं स्मरभरविनमद्दक्षजाक्षीणवक्षो-
　　जान्तर्निक्षिप्तशुम्भन्मलयजमिलितोद्भासि भस्मोक्षितं यत्।
क्षिप्रं तद्रूक्षचक्षुः श्रुतिगणफणरत्नौघमाभीक्ष्णशोभं
　　युष्माकं शश्वदेनः स्फटिकमणिशिलामण्डलाभं क्षिणोतु ॥ १८ ॥

१. उविमलं मुक्ताफलशुभ्रम्. उशब्दो मुक्ताफलवाचकः. २. वशीकारिण्या. संवनन वशीकरणम्. ३. मनोहरा. ४. 'प्रतिपदं' इति पाठः. ५. 'रिङ्गन्' इति पाठः. ६. 'प्रसभं' इति पाठः. ७. भुजाः.

मुक्तामुक्ते विचित्राकुलवलिलहरीजालशालिन्यवाध-
आम्भावर्ते विलोटद्भुजगवरयुते कालशत्रोर्विशाले ।
युष्मच्चित्तत्रिधामा प्रतिनवरुचिरे मन्दिरे कान्तिलक्ष्म्याः
शेतां शीतांशुगौरे चिरतरमुदरक्षीरसिन्धौ सलीलम् ॥ १९ ॥
वैयाघ्री यत्र कृत्तिः स्फुरति हिमगिरेर्विस्तृतोपत्यकान्तः
सान्द्रावश्यायमिश्रा परित इव वृता नीलजीमूतमाला ।
आबद्धाहीन्द्रकाञ्चीगुणमतिपृथुलं शैलजाक्रीडभूमि-
स्तद्वो निःश्रेयसे स्याज्जघनमतिघनं बालशीतांशुमौलेः ॥ २० ॥
पुष्टौ पुष्टप्रभूतौ पृथुतरजघनस्यापि नित्यं त्रिलोक्याः
सम्यग्वृत्तौ सुरेन्द्रद्विरदवरकरोदारकान्तिं दधानौ ।
सारावूरू पुरारेः प्रसभमरिघटाघस्मरौ भस्मशुभ्रौ
भक्तैरत्यार्द्रचित्तैरधिकमवनतौ वाञ्छितं वो विधत्ताम् ॥ २१ ॥
आनन्दायेन्दुकान्तोपलरचितसमुद्गायिते ये मुनीनां
चित्तादर्शं निधातुं विदधति चरणे ताण्डवाकुञ्चनानि ।
काञ्चीभोगीन्द्रमूर्ध्नां प्रतिमुहुरुपधानायमाने क्षणं ते
कान्ते स्तामन्तकारेर्द्युतिविजितसुधाभानुनी जानुनी वः ॥ २२ ॥
मञ्जीरीभूतभोगिप्रवरगणफणामण्डलान्तर्नितान्त-
व्यादीर्घानर्घरत्नद्युतिकिसलयिते स्तूयमाने द्युसद्भिः ।
बिभ्रत्यौ विभ्रमं वः स्फटिकमणिबृहद्दण्डवद्भासिते ये
जङ्घे शङ्खेन्दुशुभ्रे भृशमिह भवतां मानसे शूलपाणेः ॥ २३ ॥
अस्तोकस्तोमशस्त्रैरपचितिममलां भूरिभावोपहारैः
कुर्वद्भिः सर्वदोच्चैः सततमभिवृतौ ब्रह्मविद्देववन्द्यैः ।
सम्यक्संपूज्यमानाविह हृदि सरसीवानिशं युष्मदीये
शर्वस्य क्रीडतां तौ प्रपदवरबृहत्कच्छपावच्छभासौ ॥ २४ ॥
याः स्वस्यैकांशपातादतिबहलगलद्रक्तवक्त्रं प्रणुन्न-
प्राणं प्राक्रोशयन्प्राङ्निजमचलवरं चालयन्तं दशास्यम् ।

---

१. भवदीयचेतोविष्णुः. २. स्तोमसञ्ज्ञकाः शस्त्राख्याश्च केचन साममन्त्राः.

पादाङ्गुल्यो दिशन्तु द्रुतमयुगदृशः कल्मषप्लोपकल्याः
कल्याणं फुल्लमाल्यप्रकरविलसिता वः प्रणद्धाहिवल्ल्यः ॥ २५ ॥
प्रह्वप्राचीनबर्हिःप्रमुखसुरवरप्रस्फुरन्मौलिसक्त-
ज्यायोरत्नोत्करोस्रैरविरतममला भूरिनीराजिता या।
प्रोद्यत्प्राप्रा प्रदेयात्ततिरिव रुचिरा नारकाणां नितान्तं
नीलग्रीवस्य पादाम्बुरुहविलसिता सा नखाली सुखं वः ॥ २६ ॥
सत्याः सत्याननेन्दावपि सविधगते ये विकासं दधाते
स्वान्ते स्वां ते लभन्ते श्रियमिह सरसीवामरा ये दधानाः।
लोलं लोलम्बकानां कुलमिव सुधियां सेवते ये सदास्वां
भूत्ये भूत्यैणपाणेर्विमलतररुचस्ते पदाम्भोरुहे वः ॥ २७ ॥
येषां रागादिदोषाक्षतमति यतयो यान्ति मुक्तिं प्रसादा-
द्ये वा नम्रात्ममूर्तिद्युसदधिपपरिपन्मूर्ध्नि शेषायमाणाः।
श्रीकण्ठस्यारुणोद्यच्चरणसरसिजप्रोत्थितास्ते परागा
युष्मान्संतारयेयुश्चिरतरविततार्ज्जन्मसंसारपारात् ॥ २८ ॥
भूम्ना यस्यास्तभूम्ना भुवनमनुसृतं यत्परं धाम धाम्नां
साम्नामाम्नायतत्त्वं यदपि च परमं यद्गुणातीतमाद्यम्।
यच्चांहोहन्निरीहं गहनमिति मुहुः प्राहुरुच्चैर्महान्तो
माहेशं तन्महो मे महितमहरहर्मोहरोहं निहन्तु ॥ २९ ॥

इति श्रीमच्छंकराचार्यविरचितं शिवकेशादिपादान्तवर्णनस्तोत्रं समाप्तम्।

## श्रीनीलकण्ठदीक्षितविरचितः
## शान्तिविलासः।

वंशे कस्मिन्नजनिषि कयोः पुत्रतामग्रहीषं
कत्यश्रौषं तदपि कतिधा तच्च सद्भ्यः कतिभ्यः।
किं नाद्राक्षं व्यसनमपि वा किं सुखं नान्वभूव
नोपारंसीत्तदपि हृदय कीदृशो मे विपाकः ॥ १ ॥

१. प्राचीनबर्हिरिन्द्रः. २. रत्नसमूहकिरणैः. ३. शेषा प्रसाददत्तं माल्यम्.

पादौ मे स्तः परमचतुरौ कीकटानेव गन्तुं
वागप्यास्ते निभृतमनृतान्येव वक्तुं वचांसि ।
मीमांसन्ते मम च मतयो दोषदृष्टौ परेषां
पङ्गुर्मूकः पशुरपि भवाम्यात्मनीने तु कृत्ये ॥ २ ॥
यामाराद्धुं न गणितमिदं जीवितं वा धनं वा
यस्याः प्रीतिर्मनसि कलिता ज्यायसी मोक्षतोऽपि ।
सैवेदानीं वयसि चलिते संप्रहीणे च वित्ते
तूलायापि त्रिपुरहर मां मन्यते नैव भार्या ॥ ३ ॥
कृत्वा पापान्यपि खलु मया पोषिताः शैशवे ये
निद्राहारावपि विजहता शिक्षिता ये कलासु ।
प्रादुर्भूताः स्वयमिव हि ते प्राक्तनादृष्टलब्ध-
प्रज्ञोन्मेषा इव च तनया न स्मरन्त्यात्मनोऽपि ॥ ४ ॥
दाराः पुत्राः परमसुहृदो बान्धवाः किंकरा वा
स्वप्नावस्थास्वपि च विरहं ये मया न क्षमन्ते ।
अद्यासन्ने तपनतनयस्याज्ञया दूतवर्गे
तेष्वेकोऽपि स्मरहर न मे गन्तुमन्वस्ति जन्तुः ॥ ५ ॥
राज्ञो भृत्या यदि परिचिता देशिकस्यैष लाभो
राजद्वारे यदि खलु गतं नैमिषं तत्प्रविष्टम् ।
राजा दृष्टोऽथ च यदि परं ब्रह्म साक्षात्कृतं त-
त्त्यक्तो देहो यदि नृपकुले मादृशां सोऽपवर्गः ॥ ६ ॥
यत्तीर्थानामटनमथ यत्पूजनं देवताना-
मिष्टापूर्तव्यसनमपि यद्यच्च दाक्ष्यं कलासु ।
अर्थप्राप्त्यौपयिकमखिलं जायते मादृशां त-
त्ते चाप्यर्था धरणिशरणा भूमिभृत्सात्कृता वा ॥ ७ ॥
आ कौमाराद्गुरुचरणशुश्रूषया ब्रह्मविद्या-
स्वास्थायास्थामहह महतीमर्जितं कौशलं यत् ।

---

१. सद्गुरोः.

निद्राहेतोर्निशि निशि कथाः शृण्वतां पार्थिवानां
कालक्षेपौपयिकमिदमप्याः कथं पर्यणंसीत् ॥ ८ ॥

छाया तोयं वसतिरशनं वाहनं दीपिका वा
क्रेतुं यस्मिन्किल न सुलभं किंचिदप्येषु मर्त्यैः ।
तस्मिन्दूरे पथि तनुभृतां सर्वथैवाभिगम्ये
प्रस्थानार्हं कमपि तु विधिं घस्मरा न स्मरामः ॥ ९ ॥

आकर्ण्यन्ते तपनतनयग्रामसंलापघोषा
मन्दं मन्दं ग्रसति नियतः कालपाशोऽपि कण्ठे ।
आपृच्छ्यन्ते कृतजिगमिषासंभ्रमाः प्राणवाता
नैवेदानीमपि विषयवैमुख्यमभ्येति चेतः ॥ १० ॥

चक्षुष्यन्धे चलति दशने श्मश्रुणि श्वेतमाने
सीदत्यङ्गे मनसि कलुषे कम्पमाने कराग्रे ।
दूतैरेतैर्दिनकरभुवः शश्वदुद्बोध्यमाना-
स्त्रातुं देहं तदपि भिषजामेव सान्त्वं वदामः ॥ ११ ॥

शान्तो वह्निर्जठरपिठरे संस्थिता कामवार्ता
धावं धावं दिशि दिशि शनैरिन्द्रियाश्वा निपेतुः ।
एवं दैवादुपरममगादेष मे वैरिवर्ग-
श्चेतस्त्वेकं न वशमयते किं करोमि क्व यामि ॥ १२ ॥

नानोपायैर्दिशि दिशि धनान्यर्जयित्वा व्ययित्वा
सम्यक्संपादितमिदमिह स्थौल्यमेकं शरीरे ।
श्रुत्वा श्रुत्वा बहुजनमुखादायुपैतावतापि
प्राप्तं दर्शावधितिमिरवद्गाढमज्ञानमेकम् ॥ १३ ॥

क्रेक्षन्ते मां क्वचन शयितं किंकरा दण्डपाणे-
रीक्षन्तां वा तदपि मयि किं कुर्युरुद्दामवृत्ते ।
कुर्युः किंचित्प्रसभमपि वा यातयिष्यामि रात्रे-
स्त्यन्तर्धैर्यं परमिह वहन्नन्तकं न स्मरामि ॥ १४ ॥

वेदा वा स्युर्वितथवचना विसरेदीश्वरो वा
धर्माधर्मस्थितिविरचनामन्तको वा मृषा स्यात् ।
नित्यो वा स्यामहमिति वहूनुल्लिखन्तः समाधी-
न्मेदोवृद्ध्या मुदितमनसः सर्वतो निर्वृताः स्मः ॥ १५ ॥
यामे यामे गलति वपुषः स्रंसते संधिवन्धः
श्वासे श्वासेऽपि च विचलति क्षीयते दीर्घमायुः ।
भुक्ते भुक्तेऽपि च सुखलवे लुप्यते पुण्यराशिः
कृत्ये कृत्ये निरवधि पुनर्वर्धते पातकं नः ॥ १६ ॥
गन्तव्योऽध्वा सकलदुरवस्थानसंपातभूमि-
र्गत्वा द्रक्ष्यस्त्रिभुवनजनापुंस्कलान्तः कृतान्तः ।
द्रष्टा लभ्या निरयजनिता यातनानेकभेदा
विस्मृत्येदं निखिलमपि तु व्यर्थमायुर्नयामः ॥ १७ ॥
काले काले न किमुपनतं भुञ्जते भोज्यजातं
गृह्णन्त्यम्भो न किमथ न किं संविशन्ति क्षपासु ।
पुष्णन्ति स्वान्न किमु पृथुकान्स्त्रीषु किं नो रमन्ते
कृत्याकृत्यव्यपगतधियां कस्तिरश्चां च भेदः ॥ १८ ॥
कृच्छ्राल्लब्धं धनमपि शतांशाधिकप्राप्तिलोभा-
त्पत्रे किंचिल्लिखितमुपलभ्यैव सर्वं त्यजामः ।
शास्त्रैः सिद्धे बहुशतगुणाधिक्यलाभे परत्र
व्यर्थं शङ्काकलुषमनसो नोत्सृजामोऽर्थलेशम् ॥ १९ ॥
जीर्णे रुग्णे विकलकरणे शत्रुभिर्वा गृहीते
स्वस्मिन्कोऽर्थो भवति सुखदः कश्च कामप्रसङ्गः ।
मा भूदेतत्सकलमथवा स्वायुषः किं प्रमाणं
निश्चित्यैवं दुरितनिचयश्चीयते निर्विशङ्कैः ॥ २० ॥
आयान्त्यग्रे ननु तनुभवा उत्तमर्णा इवेमे
शय्यालग्नाः फणभृत इवाभान्ति दारा इदानीम् ।

कारागेहप्रतिममधुना मन्दिरं दृश्यते मे
तत्र स्थातुं प्रसजति मनो न क्षणं न क्षणार्धम् ॥ २१ ॥
जातं जातं गतमपि गतं बाल्यतो लौल्यतो वा
नेतः स्थेयं क्षणमपि गृहे मुञ्चत को मुहूर्तः ।
इत्यत्यन्तव्यवसितधियो निःसरन्तोऽपि गेहा-
दावर्तन्ते झटिति रुदतां सान्त्वहेतोः शिशूनाम् ॥ २२ ॥
नैव ब्रूमो वयमतिथयोऽभ्यागता बन्धुवर्गा
दीनानाथाः सुहृद इति ये तेषु कार्या दयेति ।
यं त्वं पोष्यं मनसि कुरुषे नित्यमात्मानमेकं
जन्मन्यस्मिन्निवं बिभृहि न सर्वदेत्युल्लपामः ॥ २३ ॥
को नु व्यासः क्व नु इव स मनुः क्वो न्वसौ याज्ञवल्क्यो
येरुद्धुष्टं हितमसकृदस्मासु पित्रेव पुत्रे ।
पश्यामस्तान्निरुपधिकृपासागराँल्लोकबन्धू-
न्पश्यामोऽस्मान्निरवधितमःक्ष्माधरान्ब्रह्मबन्धून् ॥ २४ ॥
यत्तामिस्रे नरककुहरे यद्बहिश्चक्रवाला-
द्यत्पाताले यदपि धरणौ वार्षिकीषु क्षपासु ।
रूढं गाढं तम इति समस्तं च तच्चिन्त्यमानं
नास्माकान्तः करणतमसो दासभावेऽपि योग्यम् ॥ २५ ॥
सर्वानर्थप्रथमकरणे सर्वभावैर्जिहास्ये
देहे मोहो यदि परिणतः पोषणीयो मयेति ।
आस्तामेवं वपुरिदमिवागामि चास्माकमेवे-
त्येषाप्यास्तां मतिरिति परं धर्मशास्त्रेषु घोषः ॥ २६ ॥
कामी कामग्रहपरिगतः कामिनीरेव हित्वा
भुङ्क्ते पश्चादपगतभयं कामिनीनां सहस्रम् ।
इत्थंकारं विषयसुखभोगैकतानैर्नरैर-
प्यस्मिन्देहे कतिपयदिनान्येष भोगो विवर्ज्यः ॥ २७ ॥

न्याय्यादर्थादपि किमधिकं लभ्यमुन्मार्गवृत्त्या
वैधादन्नादपि किमधिकं पर्युदस्तेषु भोज्यम् ।
भार्याभोगादपि भवति कः पण्यकान्तासु लाभः
प्रायो नेति श्रुतिविषयता विश्वमाधुर्यहेतुः ॥ २८ ॥
आस्तिक्यं चेद्धनमखिलमप्यर्थिसात्कर्तुमर्हं
नास्तिक्यं चेत्तदपि सुतरां भोगहेतोरपास्यम् ।
अस्पृष्ट्वापि स्वयमतिरहः स्थाप्यते यत्तदन्त-
स्तस्मिन्हेतुः क इति निभृतं तर्कयामो न विद्मः ॥ २९ ॥
श्वानः पुच्छाञ्चलकुटिलतां सूकराः कुक्षिपोषं
कीशा दन्तप्रकटनविधिं गर्दभा रूक्षघोषम् ।
मर्त्या वक्षःश्वयथुमपि च स्त्रीषु दृष्ट्वा रमन्ते
तत्सौन्दर्यं किमिति फलितं तत्तदज्ञानतोऽन्यत् ॥ ३० ॥
रन्तुं प्राप्तो दशति दशनैराननं चेत्प्रियाया
भोक्तुं प्राप्तः किमिति न दशेदग्रहस्तं प्रदातुः ।
इत्थं व्यक्तेः हृदयजनुषः पामरोन्मादकत्वे
हातुं सद्यः प्रभवति न कोऽप्यन्ततो लज्जितुं वा ॥ ३१ ॥
दाराः पुत्राः शयनमशनं भूषणाच्छादने वा
यच्चेहक्षं पुमभिलषितं तेषु माशाब्दिकः कः ।
किं त्वेतेषां भवति नियमः सेवने कोऽपि कोऽपि
द्वेषस्तस्मिन्नपि यदि भवेत्तत्र वक्ता कृतान्तः ॥ ३२ ॥
वेदाभ्यासव्यसनरसिकैः स्थीयते तावता किं
सूक्ष्मा बुद्धिः श्रुतमिव विशल्यश्रुतं तावता किम् ।
जल्पारम्भे जयति नियतं वादिनस्तावता किं
निर्वेदार्तं न यदि हृदयं शान्तिमभ्येति पुंसः ॥ ३३ ॥
यस्त्वत्यन्तव्यवसितमतिः संजिघृक्षेत धर्मं
खट्वाङ्गादेरिव न किमलं तस्य यामार्धमायुः ।

१. खट्वाङ्गो नाम कश्चन सूर्यवंशोद्भवो भूपः.

दुष्पाण्डित्यादपहृतमतिर्यः पुनः संशयात्मा
कस्मै तस्य प्रभवतु वृथा काकवद्दीर्घमायुः ॥ ३४ ॥
अर्था न स्युर्यदि विजहिमो धर्ममर्थैकसाध्यं
कायक्लेशैः कतिकतिविधः साधनीयो न धर्मः ।
कायः श्रान्तो यदि भवति कस्तावता धर्मलोप-
श्चित्तं दत्त्वा सकृदिव शिवे चिन्तितं साधयामः ॥ ३५ ॥
स्वेनैवोक्तं निगमवचसा बोधनीयास्तु जीवा
जीवैरेवेत्यपि च मुनिभिः कारितं धर्मशास्त्रम् ।
उत्पश्यन्तु स्वयमिति भवो दारुणश्चाल्यतेऽस्मा-
द्यापि स्नो यदि खलु जडाः किं विधत्तां शिवोऽपि ॥ ३६ ॥
येनाचान्ताः सलिलनिधयो येन सृष्टा प्रतिद्यौः
शस्त्राण्यस्त्राण्यपि कवलितान्येकया यस्य यष्ट्या ।
कस्तादृक्षः प्रभवतु जनो देवभूदेववर्गे
कालः कीटानिव कवलयामास तानप्ययत्नम् ॥ ३७ ॥
कायस्थैर्यं करणपटुतां बन्धुसंपत्तिमर्थं
चातुर्यं वा किमिव हि चल बिभ्रतो निर्भराः स्मः ।
अन्त्यः श्वासः किमयमथवोपान्त्य इत्यामृशन्तो
विस्मृत्येशं निमिषमपि किं वर्तितुं पारयामः ॥ ३८ ॥
अभ्यस्यादौ श्रुतिमथ गृहं प्राप्य लब्ध्वा महार्थी-
निष्ट्वा यज्ञैर्जनिततनयः प्रव्रजेदायुषोऽन्ते ।
इत्याचष्टे य इह स मनुर्याज्ञवल्क्योऽपि वा मे
तावत्कालं प्रतिभवति चेदायुषस्तत्प्रमाणम् ॥ ३९ ॥
अन्नं धान्यं वसु वसुमतीत्युत्तरेणोत्तरेण
व्याकृष्यन्ते परमकृपणाः पामरा यद्वदित्थम् ।

---

१. अगस्त्येन. २. विश्वामित्रेण. ३. वसिष्ठस्य. ४. प्रतिभूर्भवति चेत्.

भूमिः खं द्यौर्द्रुहिणगृहमित्युत्तरेणोत्तरेण
व्यामोह्यन्ते विमलमतयोऽप्यस्थिरेणैव धाम्ना ॥ ४० ॥
प्रायश्चित्तं सकृदुपनते वा प्रमादात्कृते वा
भूयो भूयोऽप्यवहिततरैः साधिते कः समाधिः ।
कारुण्याब्धिर्यदि पुरहरः सन्तु कामं दयेत
भ्रष्टे मादृश्यपि स दयते चेत्क्षतो धर्मसेतुः ॥ ४१ ॥
साध्या शंभोः कथमपि दयेत्यप्यसाध्योपदेशः
कोपं तस्य प्रथममपनुद्यैव साध्यः प्रसादः ।
को वा वर्णाश्रमनियमिताचारनिर्लङ्घनोत्थं
शान्तिं नेयः स कथमधुनाप्यव्यवस्थाप्रवृत्तेः ॥ ४२ ॥
इष्टापूर्तैर्निगमपठनैः कृच्छ्रचान्द्रायणाद्यैः
स्वामिन्नन्यैरपि तव मनः काममावर्जयेम ।
मध्ये मध्ये यदि न निपतेत्कर्मणां चोदितानां
ज्ञानं श्रद्धेत्युभयमपि नो जातिवैर्यर्गलेव ॥ ४३ ॥
निर्मर्यादः परमचपलो निःसमाज्ञानराशि-
र्मादृक्षोऽन्यः क इति भुवने मार्गणीयस्त्वयैव ।
ईदृक्षेऽपि क्वचिदपि दयेयेति कौतूहलं चे-
त्स्वामिन्विश्वेश्वर तव भवं निस्तरेयं तदाहम् ॥ ४४ ॥
पश्चात्तप्ताः कथमपि विधेः किंकरीभूय कुर्मः
सेवां शंभोरिति च नियमं वापि संकल्पयामः ।
आयुः किं मे किमिव करणं दुस्तरे संकटेऽस्मि-
न्स्वामिन्गौरीरमण शरणं नस्त्वमेव त्वमेव ॥ ४५ ॥
सम्यङ्मुक्तास्त्रिभिरपि मलैश्चिद्विकासैकरूपा-
स्त्वन्निध्यानप्रवणमनसः सूरयस्त्वत्पुरे ये ।

---

१. आणवमायीयकार्मैः.

तेषां संदर्शयितुमपरिज्ञातपूर्वं कदाचि-
ज्जन्तुं मुग्धं शिव नयसि किं विश्वपारं पुरं माम् ॥ ४६ ॥
दिष्ट्या लब्धं द्विजवरकुले जन्म तत्रापि दिष्ट्या
धर्माधर्मस्थितिरवगतैव प्रसादाद्गुरूणाम्।
जन्मन्यस्मिन्नपि यदि न मे संभवेदास्तिकत्वं
निस्तारः किं निरयभवनात्सर्वमोक्षेऽपि लभ्यः ॥ ४७ ॥
भव्ये देहे पटुपु करणेष्वालये श्रीसमृद्धे
कौमारान्ते वयसि कथमप्यप्रवृत्ते च दुःखे।
प्रैत्यक्पुष्पीप्रसवविषया यस्य पुंसो निसर्गा-
त्प्रत्यग्वक्रं भवति हृदयं कस्ततोऽप्यस्ति धन्यः ॥ ४८ ॥
नाहं याचे पदमुडुपतेर्नाधिकारं मघोनो
नापि ब्राह्मीं भुवनगुरुतां का कथान्यप्रपञ्चे।
अन्यस्यान्यः श्रियमभिलषन्नस्तु कस्तस्य लोको
मह्यं शंभो दिश मसृणितं मामकानन्दमेव ॥ ४९ ॥
आ गर्भादा कुलपरिवृढादा चतुर्वक्त्रतोऽपि
त्वत्पादाब्जप्रपदनपरान्वेत्सि नश्चन्द्रमौले।
मायायाश्च प्रपदनपरेष्वप्रवृत्तिं त्वमात्थ
स्वामिन्नेवं सति यदुचितं तत्र देवः प्रमाणम् ॥ ५० ॥
दण्डं धत्ते सकलजगतां दक्षिणो यः कृतान्तो
नामाप्यस्य प्रतिभयतनोर्नोपगृह्णीमहीति।
प्राप्ताः स्मस्तं निगमवचसामुत्तरो यः कृतान्तो
यद्वा तद्वा भवतु न पुनस्तस्य पश्येम वक्त्रम् ॥ ५१ ॥

इति श्रीमदप्पदीक्षितसोदर्यश्रीमदाचार्यदीक्षितवंशजेन नारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितेन कृतः शान्तिविलासः।

---

१. प्रत्यक्पुष्पी अपामार्गः.

## महाकविश्रीलोष्टकनिर्मितं

## दीनाक्रन्दनस्तोत्रम् ।

चुण्ठीजलैरिव सुखैः परिणामदुःखै-
रास्वादितैरपि मनागविलुप्ततृष्णः ।
श्रान्तोऽसि हा भवमरौ सुचिरं चरित्वा
तच्छायया चरणयोः शिव मां भजेथाः ॥ १ ॥

दुर्वारसंसृतिरुजाभृशकांदिशीक-
स्त्वामोषधीपतिभृतं सुकृतैरवाप्य ।
आवेदयामि यदहं तव तन्निदानं
तत्रावधेहि मृड मा कुरु मय्यवज्ञाम् ॥ २ ॥

दुर्वासनाशतवशादशुचित्वमीक्ष्य
या मे हठात्कृतवती मनसि प्रवेशम् ।

---

१. अयं रम्यदेवसूनुर्लोष्टककविः कश्मीरेषु ख्रिस्ताब्दीयद्वादशशतकपूर्वार्धं आसीत्, यतस्तत्कालोद्भूतेन श्रीमङ्खकेन श्रीकण्ठचरितस्यान्तिमे सर्गे रम्यदेवलोष्टदेवयोर्वर्णनं कृतमस्ति. एतत्स्तोत्रमपहायान्यः कोऽपि ग्रन्थोऽस्य कवेरद्यापि नोपलब्धः. श्रीकण्ठचरितान्तिमसर्ग एव कतिचन श्लोका लोष्टदेवप्रणीताः समुपलभ्यन्ते. अथ च तत्रैव लोष्टदेववर्णने 'वाग्देवतालिनीलीलाधुतपक्षतिचातुरीम् । वदनाम्बुरुहे यस्य भाषाः षडधिशेरते ॥ खलानां यत्प्रबन्धेषु दृब्धव्युत्पत्तिवर्मसु । प्रोद्यच्चोद्यमया दूरे कुण्ठिता इव पत्रिणः ॥' इति पद्यद्वयमस्ति. एतेन सन्ति केचन प्रबन्धा लोष्टदेवप्रणीता इति प्रतीयते. जह्लणसंकलितसूक्तिमुक्तावल्यां च 'प्रकृत्यैवातिवक्रेण गुणदैर्घ्यं वितन्वता । मया शरासनेनेव बाणो दूरं निरस्यते ॥' अयं श्लोको लोष्टदेवनाम्ना समुद्धृतो वर्तते. अन्तिमावस्थायामयं कविर्वाराणसीं गत्वा यतित्वं स्वीकृतवान्. प्रणीतवांश्च तत्रैवेदं दीनाक्रन्दनस्तोत्रमिति स्तोत्रसमाप्तौ स्फुटमस्ति. अस्य दीनाक्रन्दनस्तोत्रस्य पुस्तकद्वयं पुण्यपत्तनतो विद्वन्मूर्धन्यभाण्डारकरोपाह्वश्रीरामकृष्णशर्मभिः कृपयास्मभ्यं प्रहितम्. तदाधारेणैतन्मुद्रणमारभ्यते. तत्र प्रथमं नागराक्षरलिखितं पञ्चपत्रात्मकं क-चिह्नितम्. अपरं शारदालिपिसमुल्लसितं विंशतिपत्रात्मकं ख-चिह्नितम्. पुस्तकद्वयमपि नवीनं काश्मीरलिखितं चास्ति. ख-पुस्तके विंशतिश्लोकपर्यन्तं स्वल्पं टिप्पणमप्यस्ति. २. लतावितानसंछन्न-शिलाकीर्णोऽकृत्रिमो जलाशयश्चुण्ठी. ३. 'ओषधीपतिशिखामणिमाश्रितोऽस्मि' इति क-पाठः.

सानेकजन्ममरणावटपातनेन
मां राक्षसीव बहु नाथ तुदत्यविद्या ॥ ३ ॥
घोरे क्षणं विनिपतन्नरके क्षणं च
पुण्यं पदं दिविषदां सहसाधिरोहन् ।
मोहेन कन्दुकदशामिव नीयमानः
स्वामिन्सहे किमवधीनि गतागतानि ॥ ४ ॥
का मे गतिर्विंशति नैव मनो विवेकः
स्वप्नेऽपि पङ्कणमिव प्रवरो द्विजानाम् ।
रुद्धेऽपि तत्र न स रोद्धुमलं मुहूर्तं
विश्वेश मौक्तिकमिवोपरिदर्पणस्य ॥ ५ ॥
पित्रोर्मिथन्यरसबिन्दुयुगं गृहीत्वा
हन्तासकृत्पतितवानधिगर्भवासम् ।
तद्दुःखमन्वभवमीश गभीरकुम्भी-
पाको वराक इति यस्य पुरो गृणन्ति ॥ ६ ॥
तत्र स्थितस्तदनु तत्तदनेकपूर्व-
जन्मान्तरस्मरणविस्मयदुःखितात्मा ।
अस्माद्विनिसृत्य पुनरुद्भवभङ्गहेतो-
श्चेतो विधास्य इति चाकरवं प्रतिज्ञाम् ॥ ७ ॥
तेनाध्वनाथ निसृतोऽस्मि ततः स्मृतेऽपि
यस्मिन्निकाममभिमानघनास्त्वपन्ते ।
संस्पर्शतस्तु शतशः क्षितिकर्मवायोः
प्रायो निगूढढढमूढदशामवापम् ॥ ८ ॥
तिर्यग्दशामिव शनैरविवेकसेका-
द्दर्पाण्यवाप्य परमेश्वर पञ्चयाणि ।

---

१. 'मित' इति क-पाठः. २. 'गतोऽस्म्याविवेकमेकान्' इति क-पाठः.

तत्तत्कृतं पतदपि स्मृतिसीम्नि यद्य-
त्सद्यो ह्रियं जडधियोऽपि हृदि प्रसूते ॥ ९ ॥
आसाद्य यौवनमथो बहुभिः प्रकारैः[1]
शृङ्गारभङ्ग्यनुगुणैर्गुणिताविवेकः ।
जातोऽस्मि घोरनरकावहकर्मयोगा-
द्भोगाशया प्रशमितोभयलोकशुद्धिः ॥ १० ॥
मोहात्कृतः परिणयोऽप्यनयो महीया-
न्मूलं समस्तभवबन्धनदुर्गतीनाम् ।
यस्मादुदेत्य दुरपत्यजनेन स्पृष्ट-
स्नेहोऽस्मि वेष्टित इवोत्कटनागपाशैः ॥ ११ ॥
तत्पोषणाय विदुषापि मया समस्त-
मौचित्यमुज्झितवतास्तवता कुकृत्यम् ।
द्वारि श्ववल्लडितमेव कदीश्वराणां
सोढावमानशतविक्लवमानसेन ॥ १२ ॥
प्राणाधिकैरथ वियोगमवाप्य तैस्तै-
रिष्टैररुंतुदविषादवशंवदेन ।
स्त्रीवन्मया विलपितं विहितं न किंचि-
त्कृत्यं सतां समुचितं[2] हहहा हतोऽस्मि ॥ १३ ॥
सांसारिकेषु विषयेषु निपत्य राग-
द्वेषैकनिष्ठहृदयो भगवन्नभूवम् ।
आसीददन्तकभयप्रतिकूलवृत्ति
किंचिन्मया[3] न रचितं विदितं न वापि ॥ १४ ॥
इत्थं न किं व्यवहृतं न किमुक्तमात्तं
किं वा न किं न कलितं[4] ललितं न वापि ।

---

१. 'विकारैः' इति क-पाठः. २. 'समुचितमहहा' इति ख-पाठः. ३. 'मया विरचितं' इति ख-पाठः. ४. 'वलितं' इति क-पाठः.

सर्वत्र तत्र शरणं कृपणस्य मे त्व-
मेह्येहि देहि चरणं शिरसीन्दुमौले ॥ १५ ॥
याः प्रोत्कटा[1] भ्रुकुट्यो यमकिंकराणां
पीडाश्च या नवनवा नरकावनीषु ।
ताश्चिन्तिता अपि भयाय ममाधुनैव
सोढासि ताः कथमहो विषमो विपादः ॥ १६ ॥
भीतोऽस्मि दुर्गततमोऽस्मि कदर्थितोऽस्मि
पापोऽस्मि विस्मृतसदध्वपरिग्रहोऽस्मि ।
तत्केन केन न पथासि कृपास्पदं ते[2]
मत्वेति शंकर यथोचितमाचरेथाः ॥ १७ ॥
नो यत्र बन्धुरथ नैव पिता न माता
नो वा सुहृद्धृतिमुपेत्य विधातुमीष्टे ।
तास्वेत्य नाथ मम नारकभूषु कुर्या-
स्त्राणं त्वमेव हि जगत्सु दयार्द्रचेताः ॥ १८ ॥
भ्रष्टोऽस्मि यद्यपि सतां चरितात्तथापि
मां त्रातुमर्हसि कृतान्तभिया[3] श्रयन्तम् ।
प्रह्वेषु विह्वलतया शरणागतेषु
नो साधवो विदधते सदसद्विवेकम् ॥ १९ ॥
येष्वन्धकारनिकरेण करालिता भू-
र्यत्र ज्वलन्ति नरकेष्वनिशं हुताशाः ।
धामत्रयीनयन निर्भरसिन्धुमूर्ध-
स्तत्रेतरस्त्वमिव कः शरणं नराणाम् ॥ २० ॥
ग्राम्यावदिन्द्रियगणः पटुशक्तिरासी-
त्स्वामिन्स तावदगमद्विषयेषु निष्ठाम् ।

---

१. 'प्रोत्कट-भ्रुकुट्यो' इति क-पाठः. २. 'मां' इति क-पाठः. ३. 'कृतान्तभिय' इति ख-पाठः.

शक्तिक्षयेऽद्य स कथं भजते भवन्तं
जन्मेति मे विफलमीश किमाः करोमि ॥ २१ ॥

नादायि दानमथ नैव तपो व्यधायि
नासेवि तीर्थदिगसाध्यतरः समाधिः ।
तत्कापरत्र गतिरस्त्यनवाप्तपुण्य-
ज्ञानस्य मे भव भवत्स्मृतिमन्तरेण ॥ २२ ॥

कालान्न मे भयमथो कनके न लिप्सा
नैवास्मि शैशववशेन पयः पिपासुः ।
त्वद्दर्शनाय तु शिव स्पृहयामि लोभा-
त्तत्रापि किं तव न वा सुकरः प्रकारः ॥ २३ ॥

यज्जन्म दुर्लभमुशन्ति मनुष्यलोके
तत्प्राप्तमप्यतनुपूर्वशुभप्रभावात् ।
जातं वृथैव मम यत्र मुहुः कदापि
नैवान्वभावि भवदर्चनभक्तिसौख्यम् ॥ २४ ॥

जातिर्महेश्वर भुजंगमपुंगवानां
स्तुत्या वरं भवदलंकृतिवाहकृत्यैः ।
मानुष्यकं तु मम धिक्कलया कयापि
यत्रोपयोगमगमत्त्वयि मच्छरीरम् ॥ २५ ॥

शश्वद्दृशव्यसनितामपि मेऽवधार्य
धत्से कथं परमकारुणिकोऽप्यवज्ञाम् ।

---

१. अयं श्लोकः सुभाषितावलौ कर्तृनामरहितो, वल्लभदेवेन समुद्धृतः. २. 'तीर्थदिगसाधि न वा समाधिः' इति क-पाठः. ३. 'भावस्य' इति क-पाठः. ४. श्वेताख्यराजर्षिवत्. स च कृतान्तभयात्परमेश्वरेण मोचितः. ५. मरुत्तनृपतिवत्. मरुत्ततपस्तुष्टेन श्रीशिवेन सप्तदिनपर्यन्तं तत्पुरे सुवर्णवर्षणमकारि. ६. उपमन्युवत्. परमशिवभक्तायोपमन्युनाम्ने मुनिकुमाराय दुग्धं पिपासते परमकारुणिकेन भगवता क्षीराब्धिरेव समर्पितः. ७. सर्पाणां वृषभस्य च. ८. 'धिक्कलयापि शंभो' इति क-पाठः. ९. 'यत्रोपयोगमगमत्त्वयि नो शरीरम्' इति पाठः.

किं नाथ पश्यसि न यत्परिहृत्य शङ्कां
लग्नोऽनिशं शिव शिवेति मम प्रलापः ॥ २६ ॥

रक्तार्द्रचर्मवसनाय महाश्मशान-
धाम्नेऽस्थिभूषणवते फणिकङ्कणाय।
रक्षःपिशाचसचिवाय बलिं प्रयामो
रूपाय ते हर युगान्तनिशाचराय ॥ २७ ॥

दिव्योत्तरीयभृति कौस्तुभरत्नभाजि
देवेऽपरे दधतु लुब्धधियोऽनुबन्धम्।
रूपं दिगम्बरमखण्डनृमुण्डचूडं
भावत्कमेव तु वलेश मम स्पृहायै ॥ २८ ॥

जीवामि चेदथ पृथुप्रियविप्रयोग-
रोगादयो नरकदुःखभियोऽन्यथापि।
घ्नन्त्येव मामुभयथाप्यमुखोऽहमित्य-
मत्रोचितं हर चरस्व कृपालुतायाः ॥ २९ ॥

यत्रेन्द्रियाणि विरमन्ति निजक्रियाभ्यो
यात्यान्तरोऽपि करणप्रसरोऽवसादम्।
प्राणास्त्रुटन्ति च समस्तनिराशभूतं
मामेत्य शंकर कुतोऽपि तदा दयेथाः ॥ ३० ॥

स्वाशेषपूर्वदुरितस्मरणादुदेति
यत्रासमं भयमसुप्रशमप्रसङ्गे।
कः कांदिशीकमनसः शरणं तदा मे
स्वामिंस्त्वमत्र समयः स कृपालुतायाः ॥ ३१ ॥

अद्यैव यामि शरणं परमेश्वर त्वां
शंस्यामि किं ननु तदाहतसर्वशक्तिः।

---

१. 'भुवनभर्तः' इति ख-पाठः. २. शिर्णा. ३. 'भावत्कमेव भवतोऽहा' इति क-पाठः. ४. मार्गेऽपि. ५. 'तदापि गुणां' इति ख-पाठः. ६. 'शरयामि' इति क-पाठः.

मृत्युर्यदा मम भयाय पतत्यकस्मा-
दन्धस्य वक्र इव हस्ततलप्रहारः ॥ ३२ ॥

आर्तिक्षणे सपदि विस्मर तात मात-
रित्यादिकं च विफलं कृपणप्रलापम् ।
शर्वेश शंकर शिवेति नुतिं भजस्व
जिह्वे यतो विघटतेऽखिलदुःखभारः ॥ ३३ ॥

स्वास्थ्ये मदात्कति न दुश्चरितानि नाम
नाथ व्यधां गतविवेकतया विशङ्कः ।
संस्मृत्य मृत्युभयमद्य तु विह्वलोऽस्मि
श्रीकण्ठ भोक्तुमपि येन न पारयामि ॥ ३४ ॥

पूर्वं न चेद्विरचिता तव देव सेवा
तेनैव नैव दयसे श्रयतो ममार्तिम् ।
किं प्रागसंस्तुत इति प्रतिपन्नमूल-
च्छायं गतश्रमरुजं न तरुः करोति ॥ ३५ ॥

ज्ञानप्रकाशसुलभं शिव दर्शनं ते
जात्यन्धतेव च परं मम तद्वियोगात् ।
तत्तां त्वमेव किल कामपि देहि युक्तिं
व्यक्तिं ययैष्यसि मम श्रममन्तरेण ॥ ३६ ॥

प्राप्येदृशीमपि मनुष्यदशां न पुण्ये
ज्ञानेऽथवा विधिहतोऽप्यगमं प्रतिष्ठाम् ।
सामग्र्यसावथ कुतः पुनरप्यतो मां
स्वामिन्नधन्यमनुकम्पितुमर्हसि त्वम् ॥ ३७ ॥

---

१. 'पतदकस्मा' इति क-पाठः. २. 'रित्यादिकोक्तिविफलं' क-पाठः. ३. 'मुखर-प्रलापम्' इति ख-पाठः. ४. 'श्रयस्व' इति क-पाठः. ५. 'नादशतानि नाम' इति क-पाठः. ६. 'त्वयि' इति क-पाठः. ७. 'किं तेन नैव' इति क-पाठः. ८. 'देहयुक्तिं' इति क-पाठः. ९. 'यथैष्यति' इति क-पाठः.

लीनेन भूरिविषयाध्वनि सौख्यलोभा-
नामापि मोहितधिया कलितं न मृत्योः।
आसीदतः सपदि तद्भयतो मया किं
शक्यं विधातुमहहा महदाकुलोऽस्मि॥ ३८॥

या विक्रिया यमभटभ्रुकुटिच्छटानां
पीडाश्च या नवनवा नरकावनीषु।
ता निर्विशन्भव कथं भवितास्म्यमुत्र
कुत्र व्रजामि शरणं कतरं प्रपद्ये॥ ३९॥

स्मृत्वाप्यहो रविजकिंकृतदुष्कृतीनां
मुह्यामि यामि विलयं भयविह्वलात्मा।
आसन्नमेवमहहा विषमं पुरस्ता-
रोगादि, गतिर्मम कुकर्मनिमग्नवृत्तेः॥ ४०॥
घ्नन्त्येव मा शतसंभृतघोरपीडः
मत्रोचितं नन्यगतिकत्ववशात्पुरस्ते।
यत्रेन्द्रियाणि दयसे त्वरितं कुतश्चि-
यात्यान्तरोऽ मय सान्त्वय मां वराकम्॥ ४१॥
प्राणास्त्रुटन्ति च ऽपि यवीयसोऽपि
मामेत्य शंकर ैरपि नीयमानान्।
स्वाशेषपूर्वदुरितस्मरण ताभिमानी
यत्रासमं भयमसुप्र शुभं कदाचित्॥ ४२॥
कः कांदिशीकमनसः पामि शंभो
स्वामिस्त्वैव समयः परिरभ्य च त्वाम्।
अद्यैव यामि शरणं परमेश्व

शक्ष्यामि किं ननु तदाहः यातनाश्च विषमा नरकावनीषु' इति

१. 'भूरनभृते' इति ख-पाठः. २. [illegible] 'क्रियाणां' इति क-पाठः. ५. 'निमग्न
पाठः. ४. मरणेऽपि. ५. 'तदापि तुभ्यो' इति ख-[illegible] ७. 'यमभटैरपनीयमानान्' इति

वातूल[1]तामुपगतोऽस्मि तवानुरागा-
द्धा दुःसहस्त्वयि ममैष दृढोऽनुरागः ॥ ४३ ॥

कण्ठेऽर्पयत्युरगपाशमसूयया मे
यामिन्यधीशशिख यत्समये कृतान्तः ।
नूनं तदा मुहुरुपैमि फणीन्द्रहार
त्वत्तुल्य[2]तामिति भजे मरणेऽपि हर्षम् ॥ ४४ ॥

चित्तं न पारद[3]मिव क्षणमुज्झतीदं
चाञ्चल्यविप्लवमयुक्तिविदः प्रभो मे ।
तस्मात्कथं भवति भक्तिरसस्य सिद्धिः
कस्त्वां[4] विना च भवघोरविपद्विनाशः[5] ॥ ४५ ॥

स्वामिन्ननुद्गतविवेकलवोऽकृतात्मा
तिर्यग्वदेव दिवसानतिवाहयामि ।
नेता क्षणाच्च वशमन्तकसौनिको मा-
माशैव तन्मम कुतः सुगति[6]प्रसक्त्यै ॥ ४६ ॥

दुःस्वप्न एष विषमो भवदुःखनामा
स्वामिन्कथं त्यजति मां विगतप्रबोधम् ।
यस्मान्ममानवरतश्रुतभूरिशास्त्र-
तूर्यस्वनैरपि न शाम्यति मोहनिद्रा ॥ ४७ ॥

कृत्वा पापमसावपोष्यत निजः कायो न दीनो जनो
वैवश्या[7]ल्लुठितं चिरं चरणयोः स्त्रीणां गुरूणां न तु ।
लोभोऽकारि मया धने न सुकृते तेनानुतप्ये मह-
त्किं शक्यं मम तत्र[8] कर्तुमधुना नाथ त्वमेका गतिः ॥ ४८ ॥

---

१. 'वातूलतामिव गतोऽस्मि' इति ख-पाठः. २. 'त्वत्तुल्यतामिव' इति क-पाठः. ३. 'पारतमिव' इति पुस्तकद्वयेऽपि पाठः. काश्मीरकाः 'पारद' इत्यस्य स्थाने 'पारत' इत्येव सर्वत्र पठन्ति. ४. 'कस्त्वां' इति क-पाठः. ५. 'विरामः' इति क-पाठः. ६. 'स्व-गति' इति ख-पाठः. ७. 'वैवश्याल्लडितं' इति क-पाठः. ८. 'तत्र सम्प्रति पुनर्नाथ' इति क-पाठः.

अहं पापी पापक्षपणनिपुणः शंकर भवा-
न्नहं भीतो भीताभयवितरणे ते व्यसनिता ।
अहं दीनो दीनोद्धरणविधिसज्जस्त्वमितर-
न्न जानेऽहं वक्तुं कुरु सकलशोच्ये मयि दयाम् ॥ ४९ ॥

इति परिहृतवाक्यस्वकाव्यशिल्पप्रकटनमाकुलितो भवव्यथाभिः ।
व्यधित गिरिश रैम्यदेवजन्मा तव पुरतो हठदैन्यतः प्रलापान् ॥ ५० ॥

एतत्तीव्रं व्रतमुपचितं सैकते सिद्धसिन्धो-
र्वाराणस्यां शमदमदशोरेष गाढोऽनुबन्धः ।
दीनाक्रन्दं प्रति पशुपतेरुद्यमश्चाटुकानि
त्यक्त्वा राज्ञां व्रत मम शुभैस्तन्यते धन्यतेयम् ॥ ५१ ॥

अभ्रंशे जन्म वंशे सुमहति विहितो वाङ्मयाब्धौ हनूम-
त्संरम्भो दानभोगौ तदनु च रचितौ किंचिदौचित्यरीत्या ।
ज्ञात्वा तत्त्वं यतित्वं श्रितमथ मथिता संसृतिर्दुर्निवारा
वाराणस्यां प्रसन्ना स्थितिरिति कृतिनः किं न मे नाम सिद्धम् ॥ ५२ ॥

ईर्ष्यायै परवादिनां कविकलाकान्ता यति मामियं
यद्युन्मत्यधुनापि तन्मयि भवत्यव्रतचर्यं न किम् ।
एतावत्स्खलितं क्षमस्व भगवन्भूयोऽपि तुभ्यं शपे
श्रीविश्वेश्वर देव नैव भवितास्म्यस्या रहस्यातिथिः ॥ ५३ ॥

नासत्यव्यतिरेकतोऽक्षरमपि प्रायुङ्क्त यद्भारती
नैवान्यत्परबाधतो यदसकृत्संचिन्तितं चेतसा ।
नाकृत्यादितरत्र गात्रमतनोच्चेष्टां यथेष्टां च य-
स्तत्रापि मया त्वमेव शरणं तत्राश्रितो धूर्जटे ॥ ५४ ॥

इति लोष्टकभट्टविरचितं दीनाक्रन्दनस्तोत्रं समाप्तम् ।

---

१. ख-पुस्तकेऽस्य श्लोकस्याग्रिमस्य च पौर्वापर्यमस्ति. २. 'देवरम्यजन्मा' इति ख-पाठः. ३. 'प्रलापम्' इति ख-पाठः. ४. 'एतत्तीव्रव्रत' इति क-पाठः. ५. 'शमदमदिशो' इति ख-पाठः. ६. ख-पुस्तकेऽस्य श्लोकस्याग्रिमस्य च पौर्वापर्यमस्ति. ७. 'प्रसिद्धा' इति ख-पाठः. ८. 'नु' इति क-पाठः. ९. 'नौचित्यादितरत्र' इति क-पाठः. १०. 'तत्राश्रिता आर्द्रता' इति ख-पाठः ११. 'पण्डितभट्टलोष्टकविरचितं' इति क-पाठः.

## भट्टश्रीकृष्णवल्लभकविप्रणीतं
## काव्यभूषणशतकम् ।

हेरम्बस्य कपोलसीम्नि मलिनां मालामलीनां घना-
मालोक्य प्रतिबिम्बितां हरशिरोगङ्गातरङ्गोपरि ।
न्यस्तानेन कलिन्दजापि शिरसीतीर्ष्याकुलाया मरु-
द्वल्गत्कोकनदच्छदच्छविभृतो देव्या दृशः पान्तु वः ॥ १ ॥

श्रीकृष्णे सत्यभामाकुचकलशभुवि स्फीतमातङ्गकुम्भो-
त्तुङ्गायां पारिजातस्रजमुपनयति प्रेमभाजा करेण ।
तस्मिञ्जम्भाभियातिद्विरदकरधिया विस्मृतेर्ष्यारसाया
रुक्मिण्याः क्रान्तभङ्गावलिललितरुचः पान्तु दृग्भङ्गयो वः ॥ २ ॥

नालीकस्य प्रणालीं कलयति नयनं निह्नुते चान्द्रमस्या
शोभायाः सान्द्रमस्या वदनमपि मदं गोधिरर्धेन्दुरार्धी ।
संविभ्राते भ्रुवावप्यसमशरधनुर्विभ्रमं भासि भव्या
सीमेरव्याः स्तनश्रीर्नवजलदलतापेशलः केशपाशः ॥ ३ ॥

तत्पाणिप्रतिषिध्यमानरभसाक्षेपस्खलन्मत्कर-
व्यापारप्रथमानकङ्कणझणत्काराभिरामोदयः ।
आविर्भावलवोल्लसत्कुचरुचिप्रस्तारविस्तारित-
प्रस्तावव्यतिरेकविद्युदुदयो लभ्येत सभ्यः क्षणः ॥ ४ ॥

श्रीखण्डान्वयभाजि वाति मरुति प्रत्यङ्गनाभिः समं
पश्यन्तीषु सखीषु दैवतशतो नेदीयसि प्रेयसि ।
उद्वाहोर्ग्रहणेच्छया नुमनसां वामभ्रुवः संभ्रमा-
द्वक्षोजावरणस्य यत्प्रकरणं तत्किं गिरां गोचरः ॥ ५ ॥

पर्यञ्चत्केशपाशं चलदलकलतं मन्दविस्पन्दतारं
स्वेदाम्भोबिन्दुजालस्तबकितपुलकोच्छ्वासिताभ्यत्कपोलम् ।

१. इन्दिरस्ति. २. ललाटम्.

श्वासावेगानुवारोच्छ्वसितकुचतटव्यस्तहल्लं निघृष्टा-
भूमीभूतोत्तरीयं वरयुवतिवपुर्धन्यमात्रानुभाव्यम् ॥ ६ ॥
नाभौ स्थितिस्त्वयि महासरसीसनाभौ
मुक्तावलावपि सुपर्वतरङ्गवल्याम्।
लावण्यसारजलधौ कलधौतगात्रि
चक्षुस्तृषां मम मृषा न कृशां करोषि ॥ ७ ॥
दृग्भङ्गे श्रवणेन साकमरुणे योगं समासेदुषि
प्रत्यामृष्टदरस्फुटत्पुटकिनीपत्रान्तरालेऽनिले।
यो वेणीमवगाहते वरतनोः सर्वात्मना श्रेयसां
तस्य व्याहरणे विलेशयपतिः किं लेशतोऽपि क्षमः ॥ ८ ॥
मधौ सन्माधुर्ये तरुणि विपिने फुल्लतरुणि
प्रसूनैः सामोदे मरुति रतिमातन्वति पिके।
प्रशस्ते प्रस्तावे रतिरमणबाणव्रणगण-
प्रणेये प्राणेशे नमति परुषा मा भव रुषा ॥ ९ ॥
तादात्म्यानुभवात्स्तनस्तबकयोः सौहित्यमप्राप्नुव-
न्मुक्तादामनि मेरुरेष सरसं ग्रीवां समालिङ्गति।
रत्यावेशविवर्तविभ्रमवशाद्वक्षोजमालिङ्गति
व्यक्तं नायकसंगतादवयवादन्यत्र संयुज्यते ॥ १० ॥
बालामुक्ताकलापग्रथनगुणशिखोपाग्रयुग्मस्य योग-
ग्रन्थौ गारुत्मतोऽयं मणिररुणगुणोदग्रगुच्छश्चकास्ति।
धम्मिल्लव्यालहालाहलगरलसमास्वादनास्वादितेन
प्रादुर्भूतेन तापज्वलदनलशिखाजालकेनेव युक्तः ॥ ११ ॥
तव श्रवणभूषणं कुवलयं विहाय क्षणा-
दतिश्वसितसौरभं व्यवसितः समासादितुम्।
प्रमोदभरमन्थरः प्रियतमापरद्वारक(?)-
त्वदीयनयनाञ्जनच्छलमलिः समालम्ब्यते ॥ १२ ॥

१. गहाराम्. २. शेषनागः.

ज्योत्स्नीं कुन्तलभारबन्धघटनामुक्ताफलस्रक्छला-
च्छयामां न्यस्य विभावरीं च कबरीमारापदेशात्त्वयि ।
सर्वस्वेऽपहृते सुपर्वभिरयं क्षीणः कलानां निधि-
स्त्वद्वक्त्रद्युतिसंचयादवयवं गृह्णाति संपूर्तये ॥ १३ ॥

राजीवस्य विधीयते रुचिभरैराजीवनं शोचत-
स्ताराजीवितवल्लभस्य महसां राजी पराजीयते ।
मालिन्याकृतिसंविदर्पणविधावानीयते दर्पणः
कंदर्पः क्रियते त्रिलोकविजये दर्पस्पृगास्येन ते ॥ १४ ॥

पुष्पेषोर्धनुषि भ्रुवोर्द्वयमसामञ्जस्यमासञ्जय-
त्यङ्गीकारयति प्रथां च वितथां भङ्गिर्दृशोराशुगाम् ।
वेणी सुन्दरि चञ्चरीकमदसंकोचं चरीकर्त्यसा-
वालापः पिकपञ्चमस्य नयते लोपं चमत्कारिताम् ॥ १५ ॥

कामोत्तंसं मरकतमहाग्रावहारो गभीरे
मग्नं नाभीसरसि हृदयं जग्रसेऽनेकपं मे ।
लीलावेशप्रचलितकरः कोऽप्यहीनारिकेतु-
स्तद्भङ्गेन प्रतिविधिमिहैवानुरूपं व्यतानीत् ॥ १६ ॥

पादाङ्गुष्ठशिखैकसंश्रितधरं प्रत्युल्लसद्वेपथु
ग्रीवाग्रोन्नमनप्रयत्नबहलक्षामायमाणत्रिकम् ।
दोरुत्क्षेपणजायमानवलयक्वाणं कुरङ्गीदृशो
माकन्दाग्रिममञ्जरीग्रहदशासंस्थानमत्यद्भुतम् ॥ १७ ॥

प्रत्यग्राभासि भास्वत्सुभगमुभयतो लम्बलम्बालकाग्रं
बालाभालान्तराले विलसति तिलकं नागरे नागरेणोः (?) ।
स्वर्भानोः केशभारात्कवलितगलितं मण्डलं चण्डरश्मे-
र्भूयस्तत्रैव संवेशयितुमभिमतं सूत्रयन्त्रानुषङ्गात् ॥ १८ ॥

कपोलव्यालोलश्रवणनवमाकन्दकलिका-
मरन्दव्यामिश्रास्तव वरतनु स्वेदपृषतः ।

रतिव्यत्यासस्य श्रममपल्पेयुर्यदि भवे-
द्भेदोपक्रान्तक्कणितरशनादाम जघनम् ॥ १९ ॥
प्रभायामध्वर्यो रतिदयित आवाति पवने
गृहीत्वा होतारं भ्रमरकलमुद्गातरि पिके ।
सति प्राणाभीष्टे सुरुचिरतदीक्षे वलयज-
प्रणादः पुण्याहध्वनिमिव तरुण्या विहितवान् ॥ २० ॥

अङ्गं रङ्गस्थलं ते कुवलयनयने मन्मथः सूत्रधारो
ह्रीभारः स्थापकोऽयं तरलितवलयक्काणभङ्गिश्च नान्दी ।
द्रष्टा केलिप्रदीपस्तरुणिमललितं नाटनीयं वसन्तः
सभ्यङ् व्यस्यन्नुरोजावरणजवनिकां नायकोऽयं प्रविष्टः ॥ २१ ॥

केलीभिः कलहायमानवलयं सारावहारावलि
प्रेङ्खच्छृङ्खलमेखलाकलकलं शिञ्जानमञ्जीरकम् ।
व्यालोलालकमव्यलीकपुलकं स्वेदाम्भसां जालकै-
रामीलत्तिलकं कलेवरमलंकारायते केवलम् ॥ २२ ॥

निःश्वासानिलसंगमाविलचलन्नासाग्रमुक्ताफलं
लीलाविच्छुरणक्रमप्रचुरतापन्नक्कणन्नूपुरम् ।
मुक्तादामलतानिकामजनितप्रक्षोभवक्षोरुहं
बालेऽङ्गं किल ते विलक्षणमिलत्कौतूहलं केलिभिः ॥ २३ ॥

स्तने बृहतिकारणद्बृहतिकाञ्चलेनावृते
भृशं मम दृशि स्पृहास्पृशि वरोरु जाता रुजा ।
विलेखविषयीभवद्विचकिले तु मन्दानिले
समुत्थितमुदारया बत मुदा त्रयापन्नया ॥ २४ ॥

दलानां विश्लेषं कुवलयकुलानामनुवनं
सृजन्तः कोकानां ध्रुवमवयवानां रतिभुवः ।
नभस्वन्तोऽत्यन्तं निधुवनपरिक्लान्तयुवती-
जनस्वेदोद्भेदोपहतिषु वहन्ति प्रतिभुवः ॥ २५ ॥

हेलाविध्वस्तमध्याकुलवकुलकुलाश्रम्पकोत्कम्पकोप-
प्रत्यामर्शोसतर्षाः परिमिलितदलन्मल्लिकावल्लिकायाः ।
कुन्दावस्कन्दमन्दा बहुविहितपरिस्पन्दमाकन्दवृन्दाः
स्वेदाम्भोबिन्दुसान्द्रं तव नवपवना देहमाह्लादयन्तु ॥ २६ ॥

भुजौ बिसचये नवे किसलये च बिम्बाधरो
वरोरु हसितं विधो रुचि सरोरुहे लोचनम् ।
भ्रुवौ मदनकार्मुके रजनिकामुके ते मुखं
दिशन्ति कुसुमे घृणामवयवाः सुमेरौ कुचौ ॥ २७ ॥

माकन्दप्रसवोल्लसत्परिमलप्रस्यन्दिमन्दानिल-
व्यस्तैकाञ्चलयापि कञ्चुलिकया विलसत्संदानितौ ।
त्वद्वक्षोरुहजातरूपकलशौ रम्भोरु संभावितौ
साकल्येन विलोकनादपि चमत्कारं दधाते दृशोः ॥ २८ ॥

विभ्राणे विभ्रमेणोद्वल्लितललिततामञ्जनासञ्जनेन
व्यञ्जाने खञ्जनादप्यधिकमधुरतां कञ्जवन्मञ्जुभूते ।
मय्युत्खेदे निदाघात्प्रतियुवतिरतिभ्रान्तिभाराद्भजन्त्या
भुग्नीभावं भ्रुवा ते वरतनु नयने कौतुकं मे सुवाते ॥ २९ ॥

दृगञ्चलवशंवदो कमल(?)शम्बरद्वेषिणो
गुणत्वपदशालिनः पुनरिहोभयत्रालिनः ।
कचैरसुवर्नैः समं तव तुलार्थिनो वातुला-
श्चिरेण मदिरेक्षणे जगदिरे द्विरेफा इति ॥ ३० ॥

त्वदोष्ठ वर्तिष्णावरुणिमनि मैत्रावरुणिना-
प्यवाच्या बिम्बाभा तरुणिममहस्युत्तरुणिते ।
गिरा जीवस्यापि प्रचरति पराजीवनकृता
तुला सम्राजीव क्व तव दृशि राजीवसमता ॥ ३१ ॥

धारावाहिकबाष्पनिर्गतरसं दृग्युग्ममभ्यन्तरा-
वच्छिन्नाग्निशिखान्वयं च हृदयं दूरं भवत्यागते ।

किं वा पल्लवयामि वाचमधुना वामभ्रुवो जीवित-
श्वासाभ्यामपि कण्ठहृद्गततया स्थानं विपर्यासितम् ॥ ३२ ॥
अगुच्छरुचिरौ कुचौ पदमसत्तुलाकोटिकं
विभाति जघनस्थलं न रशनाध्वनेर्गोचरः ।
निरूपणपथातिगं निरुपमत्वमाजानिकं
भवद्भिरहतो भवत्यवयवेषु तस्याः स्फुटम् ॥ ३३ ॥
कोऽङ्गं त्वत्पक्षपातं भृगुभुवि रचयन्यासि यत्पक्षपातं
स्वं कोऽताप्सीत्कृशानूनभि यदमिलनात्त्वं कृशा नूनमेवम् ।
कः स्नातो राजसूयावभृथजलभरैः साम्यसूयासि यस्मि-
न्केनाराद्धः कपाली तव समधिगता तन्वि येनाङ्कपाली ॥ ३४ ॥
को वा भीष्मसुवं व्यगाढ हृदयं यद्व्यगाढक्रमं
प्रादात्को नु धरां चलं सुतनु ते नेत्राञ्चलं यं प्रति ।
कः स्नातोऽमरकण्टकाम्भसि यदाशिश्लिक्षया कण्टकाः
केनाराधि स राधिकापतिरसि सेराधिकारे यतः ॥ ३५ ॥
मुखं तावद्राकाकुमुदसुहृदो दर्पदलनं
स्तनौ हेमग्रावद्युतिमदसमग्रावनतिदौ ।
परीक्षायामूरू करिकरचमूरूपजयिनौ
दृशोर्भङ्गी दुग्धोदविलहरिरुग्घोरणिनिधिः ॥ ३६ ॥
कुचौ जम्भारातिद्विपकरटसंभाव्युपमौ
मतावूरू रम्भारुचिनिचयदम्भापहतया ।
प्रशस्तप्रारम्भाभ्यधिकसुभगंभावुकतया
मृगाक्षि त्वं रम्भावयवपरिरम्भादरहरी ॥ ३७ ॥
माणिक्याभरणं चकोरशिशुके कर्षत्यलातभ्रमा-
द्बिम्बभ्रान्तिवशेन दन्तवसनं केलीशुके चुम्बति ।
आकारोऽयमभिन्नवत्तव दृशोर्नासाग्रविन्यस्तयो-
राचष्टे हृदयस्य बाह्यविषयव्यावृत्तिमात्यन्तिकीम् ॥ ३८ ॥

१. आलिङ्गनम्. २. गहाम् ३. नर्मदोद्गमस्थले शिवक्षेत्रविशेषः.

कर्पूरायितसैकताय शिशिरक्षोदायमानातप-
व्यूहाय व्यजनानिलायितमहाझञ्झामरुद्रंहसे ।
अस्मै तन्वि निदाघवासरवयोमध्याभिसारक्रमो-
त्साहात्युत्सवसाहसाय महते सौहार्दमीहामहे ॥ ३९ ॥
निसाने सरसं कपोलफलकं बिम्बाधरं बाधय-
त्याश्लिष्यत्यपि संमतिं विमतिमप्याहत्य नैव व्यनक् ।
नीवीं जीवितवल्लभे शिथिलयत्युद्ग्रीविकां तन्वती
सध्रीची जनरूपणाय मृगदृक्प्रत्यग्रमन्वग्रहीत् ॥ ४० ॥
रागस्तादृश एव दन्तवसने तादृक्स्तने स्थासको
धम्मिल्लोऽपि तथाविधो विसदृशं नो वा दृशोरञ्जनम् ।
किं त्वन्तः प्रचलायितं दरचलच्छोणाब्जसंवर्तिका-
कारं चक्षुरनक्ति वल्लभसमास्वादावतीर्णामिमाम् ॥ ४१ ॥
आदाय स्वयमेतदीयविषयं नासाग्रदेशं दृशौ
तन्मुक्ताफलकं कपोलफलके पर्यस्यदश्रुच्छलात् ।
सोऽप्येवं परिगृह्य पाणिशिखरं वामभ्रुवो विभ्रमा-
त्तन्मुद्रागतपद्मरागमनयोरेवोपरि न्यस्तवान् ॥ ४२ ॥
अत्याक्षीत्करमाशु कम्बुवलयो जातं विहस्तं मन-
स्तत्कामेन शरैः क्षतं नयनयोरासीत्पुनः साम्रता ।
ते स्वान्तर्गतमञ्जनं व्यजहतां काञ्ची बभूवाध्वनिः
सा प्रौज्झज्जघनं बभावजघनस्तापस्तु तस्यास्तनौ ॥ ४३ ॥
वक्षोजद्वयकुम्भसीम्नि करयोर्यूनोर्विसंवादिनो-
र्भग्ने दामनि पद्मरागगुलिका व्याकीर्यमाणा बभुः ।
आचार्यप्रवरेण नव्यवयसा सूत्रेण गर्भीकृता
नीता भाप्यकृता स्मरेण बहुतां हृद्रागभावा इव ॥ ४४ ॥
नवतरुणिमा सोद्रेकोष्मा महांस्तपवासरः
कचमयतनुर्धम्मिल्लोऽसावकालबलाहकः ।

अभिमतमरुद्व्याधूतोऽयं विमुञ्चति मल्लिका-
मुकुलकरका दृष्टिद्रोणीदलप्रसरच्छिदः ॥ ४५ ॥
तावत्सारघधीप्रसारघटना तावन्मिलिक्षा वला-
दिक्षावस्तु (?) वितायतामथ सितास्वादेऽपि तावद्ग्रहः।
तावद्भातु सुधारसेऽपि बहुधा जन्मस्पृहां वीरुधां (?)
यावत्तावक एष बाधरहितं बिम्बाधरः पीयते ॥ ४६ ॥
अरुणदरुणः स्वस्यायोगं रसेन मधुद्विषा
स्थितमविरतं सक्तं यस्मिन्दधाति मनोभवः।
अजनि जनभृच्छोभा मुक्ताफलेन सुधारुचा
वद दिविषदः कस्याकाङ्क्षास्पदं न रदच्छदः ॥ ४७ ॥
भृतायां सिन्दूरैस्तव तरुणि सीमन्तसरणा-
वियं वल्ली कापि स्फुरति नवमुक्ताफलमयी।
निपीतार्काभीषा[1]बुदरभुवि धम्मिल्लतमसो
रुचीनां चान्द्रीणामुपरि पतयालुस्ततिरिव ॥ ४८ ॥
भवन्ति करका इमा यदि पयोधरौ तौ स्वयं
द्विपेन्द्रकरटौ यदि स्वयममूस्तदा मुक्तिकाः।
मरन्दमयविप्रुषो यदि सरोजगुच्छावमू
वरोरु यदि भूधरौ तदुदबिन्दवो नैर्झराः ॥ ४९ ॥
गात्राणामनुलेपनाद्व्यवहितः स्वाभाविकः श्रीभरो
विन्यासेन विभूषणस्य विहतं साकल्यतो दर्शनम्।
आमुक्तैरथ दामभिः सुमनसां तत्सौरभं मिश्रितं
प्रावारेण तनूरुचां प्रसरणं किंचिद्विपर्यासितम् ॥ ५० ॥
वदनं करतोयया वरुद्धं नयनं च स्थितिमाप नासिकायाम्।
न तनुर्विषयग्रहं व्यतानीदविमुक्तैकसरःस्थितस्तदात्मा ॥ ५१ ॥
तत्कालापहृतारुणांशुकतया जाताकुला पद्मिनी
व्यक्तिं प्राप तमिस्रमुल्लसिततां लेभे सुधादीधितिः।

1. निपीतसूर्यकिरणे.

सद्योऽकम्पत कोकयोर्युगमभूद्विस्फारभृत्तारको
भेजे का कुमुदावली न हसितं ·················· ॥ ९२ ॥
रागस्यातिशयोऽन्तरुच्छ्वसितता ग्लानिर्बहिर्मात्रभूः
संभोगे सति वल्लभस्य युगपद्विम्बाधरे त्वय्यपि ।
मानस्यातिशयोदये कठिनता वक्षोजयो रम्भया
सादृश्यं पुनरूरुसीम्नि सरसीभावोऽभिनाभि स्थितः ॥ ९३ ॥
भूमीभृत्सुतनु स्तनस्तव वरारोहा त्वमुद्गीयसे
मध्यं ते गगनं कलावति महामानं पुनस्ते मनः ।
रम्भारूपभृदूरुरिन्दुवदने सारालकेशोद्भव-
प्रीतिर्मूर्धनि भाति साभ्रमलिकं कान्ते नुतोयान्वयः (?) ॥९४॥
आभोगः स्तनयोर्महत्यतिमहान्मुक्तास्रजं भासुरो
माहात्म्यावहितप्रभूतसुमनोबाणोऽपि तेऽन्तः स्थितः ।
भालं स्वच्छविरोचनं बलिरसावप्यास्त एवोदरे
रोम्णां विक्रियया युवत्वभवया विन्ध्यावली वर्तते ॥ ९५ ॥
प्रतीतेयं नाभीसरसि तव शैवाललतिका
वलग्ने त्वाकाशे नवजलदलेखा विलसति ।
स्तने मेरौ जम्बूरसलहरिका रोमविततिः-
र्श्री कालिन्द्यास्तु स्फुरति मधुरायां त्वयि भृशम् ॥ ९६ ॥
स्तनः प्रभवितस्तया यदि वितस्तया रेवया
मुखं विहितसेवयाप्यवहिरेव यात्यन्वयम् ।
तनौ भवति गोदया सह मिलत्तरङ्गोदया
सदारुणसुतासुदारुणतदा रुणद्धि ज्वरम् ॥ ९७ ॥
अलिन्दे चेत्कालिन्द्यवसरयुता द्वारि सरयूः
कपोलान्तर्गोलाप्युरसि सुरसिन्धुः स्फुरति चेत् ।
वितस्ता विन्यस्ता हृदि कुचभरे वा विनिहिता
भवेद्रेवा जह्याद्रुजमियमसह्यामपि तदा ॥ ९८ ॥

पूरो वैवस्वतस्य स्वसुररसिशयः सर्वदैव स्वतः स्या-
प्रासामोदा वरीवर्त्यपि च यदि तनूसीम्नि गोदावरी सा ।
संजज्ञे भीष्मसूर्यच्यवयवनिचये ग्रीष्मसूर्यप्रभास्त-
त्तापाः संतानवन्तस्तव परविरहो यात्यलं तानवं तत् ॥ ५९ ॥
भिनत्ति जलनीलिका नवपिपीलिकापङ्क्तिव-
द्विभाति हिमवालुकाप्यहिमवालुकायोगवत् ।
करालति मृणालकं बहलजालहालाहलं
निशाकरकरावली वहति हा पिशाचीदशाम् ॥ ६० ॥
अभिनववधूरीषन्मात्रं ह्रदाविवरीषया
परिशिथिलितं यावत्प्रावारकं समुदीक्षते ।
सरभसतरं तावत्तिर्यङ्विवर्तनयन्त्रण-
द्रुतविदलितग्रन्थौ कूर्पासके विजितं मया ॥ ६१ ॥
विदूरे शिश्लिक्षा शयनविविक्षां न नुते
विहारस्यागाराज्जिगमिषति कान्तेऽपि मिषति ।
करस्पर्शेऽपीन्दोरिव मम निकोचं रचयति
प्रसूनाकाराणामियमवयवानां कमलिनी ॥ ६२ ॥
संप्रेरिता कुसुमसायकवैभवेन
व्रीडेन नूतनवधूर्विनिवर्त्यमाना ।
अन्योन्यसंमुखविसृत्वरतुल्यवेग-
वातद्वयान्तरगता नलिनीव भाति ॥ ६३ ॥
करयोः कलहायमानयोरुभयोरेव पयोधरोपरि ।
वलयावलयो बलाबलं बहुवेलं पतयालवो जगुः ॥ ६४ ॥
व्यापारप्रचयः पयोधरतिरोधानानुकूलो मृगी-
नेत्रायाः करयो स्वं (?) प्रियकरं रोद्धुं न पर्याप्तिमान् ।
इच्छां स्वस्य फलोपधानमवधीकृत्याप्यनास्वादित-
स्वात्मानं गमयन्नवीति मदनापेक्षां ह्रियो हीनताम् ॥ ६५ ॥

१. कर्पूरम्.

आकाशमानसविगाहनराजहंसं
नारीजनग्रहिलतानलिनीमहेभम् ।
आघ्रायमानरतिनायकसंप्रदाय-
दीक्षागुरुं दृशि निवेशय सुन्दरीन्दुम् ॥ ६६ ॥

कुसुमविशिखप्राजापत्यक्रतुर्युवतीजना-
न्तरकरणभूर्मानग्रन्थेर्विमोचनकार्मणम् ।
नवरतिकलानाट्यप्रस्तावनाकुसुमाञ्जलिः
कुमुदसुहृदो देवस्यासावुदेति रुचां चयः ॥ ६७ ॥

सर्वस्वं भुवनस्य विभ्रमततेरुज्जीवनं भावना-
वल्लीनां प्रमदावनं निधुवनक्रीडासमालम्बनम् ।
आयुष्यं सवनं सरस्य ललितस्योद्भावनं कामिना-
मेकं संवननं दृशां विजयते वामभ्रुवो यौवनम् ॥ ६८ ॥

किमप्याविर्भूते वयसि परिचुम्बत्यवयवा-
न्प्रियाया राजीवस्तवककमनीयं कुचयुगम् ।
उपन्यस्तः सज्जन्नुपरि परिकर्मप्रकरणे
मुखावच्छेदेन स्पृशति सुकृती नायककरः ॥ ६९ ॥

आरब्धा किमु केतकीकिसलयैर्माला किमायामिनी-
कर्पूरस्य परम्परा मलयजक्षोदस्य लेखाथवा ।
धारा वैबुधसैन्धवी नु विसरत्याहो हिमानीमयी
वृष्टिः पञ्चशरस्य तावकदृशोर्भङ्गी कथं गीयते ॥ ७० ॥

ज्योत्स्नाभिः स्नप्यमानाः सुरभिरजनयः कोकिलानां कलापः
केलीकोलाहलेनाकुलयति ककुभो जाग्रदेवास्त्यनङ्गः ।
दृग्भङ्गानुग्रहाय स्पृहयति दयितः काकुवश्या वयस्याः
सध्रीचीने नवीने वयसि नयसि किं त्वं वृथा वासराणि ॥ ७१ ॥

श्लथीभूतं नैव स्तनमयमिदं पद्ममुकुलं
दृशौ मुग्धे रोमावलितिमिरवीथी प्रसरति ।

सविस्तारं तारालतिमवलग्नेऽतितनुता
मृगाक्षि त्वं श्यामा मनसिजनिदाघस्य घटसे ॥ ७२ ॥
अयं जयति खञ्जनोपमदृशः समासञ्जय-
[2]मृगीमदनिपद्वरः स्तनभुवोऽभितः श्यामताम् ।
स्फुरत्कनककुण्डलभ्रमभयादहंपूर्विका-
वशाद्युगपदापतन्निव मधुव्रतानां व्रजः ॥ ७३ ॥
सामस्त्येन विधीयमानघुसृणालेपे भवत्याः स्तने
तद्रूपेण चकास्ति चूचुकगतं रूपं पराभूतवत् ।
कस्तूरीभिरुपस्कृते तु सहसा विस्तारिणा तद्भुवा
रूपेणैव तदीयरूपमुदितव्यत्यासमाभासते ॥ ७४ ॥
संयोगे यत्र साध्ये सति बहुगणनं द्रव्यमेवास्ति पक्षो
बाहुवीकं(?)प्रमाया घटितविषयतासाधनं कंचिदर्थम् ।
किं चासौजन्यरूपं गमयति सरसवृत्त्यसामान्यधर्मः
सा व्याप्तिप्रक्रियेव भ्रमयति हृदयं भूयसा वारसुभ्रूः ॥ ७५ ॥
यन्नीहारकलङ्कितोत्पलदलावस्थानदुःस्थे दृशौ
श्वासो वेपथुमातनोति कुचयोरन्तर्निरुद्धो बलात् ।
यत्स्तम्बेरमगृह्यमाननलिनीतुल्या दशेयं तनो-
स्तत्कल्याणि किमीरयाणि हृदयं कान्तः समाक्रान्तवान् ॥ ७६ ॥
स्वाभोगेन मलीमसत्वमतुलं कृत्वा विहाय स्तनौ
विस्रस्तापघने रसत्यपि मनाक्श्रोत्रप्रियंभावुकम् ।
[1]म्लानेयं रजसापि संस्कृतिमनापन्ना तनुस्तावकी
बाले नोज्झति वालवायजदपल्लेखेव सोल्लासताम् ॥ ७७ ॥
किमञ्जनशलाकया जितबलाकया मौक्तिक-
स्रजाप्यलमथानया रशनया फलं किं भवेत् ।
रुचां न पदमासदं किमु विना तुलाकोटिना
मधूनि मधुरान्तरैः (?) कथमुपक्रियेरन्प्रिये ॥ ७८ ॥

१. रात्रिः. २. कस्तूरीकर्दमः. ३ वैदूर्यशलाकेव.

आयातेऽर्थिनि गोत्रभिद्यभिमते कर्णोऽमुचत्कुण्डलं
 कामास्त्रं किल भूरिलोचनयुगं तस्मिन्समासज्जताम् ।
नन्वेतत्कुरुनायकस्य हृदयं तस्मात्समाधीयतां
 संभूतस्तपसो भयो रतिरसो मापार्थतो हीयताम् ॥ ७९ ॥
एकेयं रसना न शब्दमभजद्व्रेजेऽनुवारं परा
 नेत्रं किंचिदनूरुसङ्गमभवज्जातोरुसङ्गं परम् ।
रागः कश्चन निर्जगाम हृदयात्तस्यो तथैवापरो
 बाह्ये सत्पुलकोऽन्तरे विपुलको जातोऽङ्कभूसंभ्रमः ॥ ८० ॥
पश्यामि द्विजराजमश्रुतिमितं स्वर्भानुमास्थान्वितं
 चन्द्रं प्रत्यरुचिं चकोरमलिनैर्माणिक्यमुन्म्लानकम् ।
चन्द्रं हस्तगमालिराशिविहितामोदं सुमेरुं पुनः
 कौसुम्भावरणेन हीनमधुना किं स्यादिति त्रस्यते ॥ ८१ ॥
यत्तित्याजयिपांबभूव सहसा विन्ध्याचलो वन्धुना
 पद्मानां विहितं परिक्रममम् तत्सत्यताशङ्कया ।
यत्रासीत्त्रपया मलीमसमुखो मेरुस्तिरश्चीनतां
 तत्कालीनमवैमि तं तव कुचावामेवकचूचुकौ (?) ॥ ८२ ॥
उल्लासोऽधरपल्लवस्य तनुते पर्याप्तमस्याः स्मिते
 विन्यासो नयनाञ्चलस्य गमयत्युत्साहवत्साहसम् ।
रत्यागारपथामुखीनगमकं वैजात्यकक्षावधिः
 पर्यङ्के पदरोपणं पुनरपर्यन्ता विपर्यस्तता ॥ ८३ ॥
 प्रिये तस्या नेदीयसि दृगुपरागोऽप्यसुकरो
 भुजावीरुद्बन्धं नयति वलयादप्यतिनयम् ।
 प्रसह्य प्रावारं हरति रुचिरप्यङ्गरुचिरो
 रहस्याविख्याता विलिखति न सख्यामपि पदम् ॥ ८४ ॥
बन्धं त्यक्तवती विशेषकवरी श्यामा स्वयं न त्वियं
 हारात्प्रास्थितनायको न तु ततोऽप्येषा विहारस्थितात् ।

चित्रं प्रास्थत भाग्यवैभवभुवो भालान्न हृद्वल्लभा-
व्यत्यासं रतिरासताद सुदृशो बाह्येव नाभ्यन्तरी ॥ ८५ ॥
सद्वक्षोजा मनोज्ञो वरतनुरतनुर्मीनदृङ्मीनकेतु-
र्जन्मस्थानं रतीनां रतिपतिरसमा जिह्मगाः पञ्चबाणाः ।
रम्भोरू रम्भयोरुर्मधुरमधुभुवं बिभ्रती तद्वयस्यो
वामाक्षि त्वं च कामोऽपि च कथय कथं सर्वदैवानुकूलौ ॥ ८६ ॥
नीतं प्रागितरेतराभिमततामुद्दिश्य कुञ्जस्थलं
संप्राप्यावसरं चिरेण रजनावागच्छतोः कामिनोः ।
आशङ्काशतशालिनोर्विधिवशान्मध्येऽध्वनि श्लिष्यतो-
र्जातो[1]ऽर्कद्रुम एव शैलगमनोद्युक्तस्य मध्वागमः ॥ ८७ ॥
मध्येकञ्चुलिकं करं प्रियतमे विन्यस्यति त्रस्यति
ग्रन्थिं तस्य विधित्सति श्लथमथ व्यायन्तुमायस्यति ।
वक्षोजं स्पृशतीवदव्यवनम(?)त्युन्मुद्रति द्राग्दृशौ
सुभ्रूर्मुद्रयति क्षतं वितरति व्यङ्क्तेऽभितः कण्टकान् ॥ ८८ ॥
अन्वञ्चद्विटपाय सज्जदसितप्रावारकोपान्तकं
रोलम्बैरभिचुम्ब्यमानसिकतं कस्तूरिकासौरभात् ।
भ्रश्यत्कौसुमदामशङ्खवलयच्छेदैरदो मिश्रितं
श्रेयः पुञ्जविजृम्भितस्य गमकं यूनोर्निकुञ्जस्थलम् ॥ ८९ ॥
आसन्ना नन्दिनी वा पतिरतिगृहभूरस्तु दैनंदिनी वा
निर्वाहं मैहिकं वा परिहरतु महो मैहिकाभावनं वा ।
घूत्कारानम्बुकाकाः सहचरि परितस्तन्वतां जम्बुका वा
साक्ष्ये मे पद्मिनी वा भवतु कुमुदिनी संभ्रमादद्य नीतिम् ॥ ९० ॥
संरब्धं बहु मौलयेन[2] मरुता प्रोद्घाटितं पाटवं
भूयः पाटलया कदम्बकुसुमैराडम्बरश्चुम्बितः ।
मध्येपद्मवनं मरालयुवभिर्नक्तंदिवं क्रन्दितं
नैवं सत्यपि किं नृशंसहृदये योगं प्रति स्नेहवान् ॥ ९१ ॥

---

१ 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्'. २. मलयसंबन्धिना.

कृत्वा शान्तनवावगाहरभसं प्राग्ज्योतिषे भास्वतो
दत्त्वा निग्रहमोजसां द्विजपतेराधाय हानिं गुरोः ।
अत्युद्दामपृषत्कवृष्टिनिवहैराधेय भूयो मदं
निर्मायापिहितं पयोदविजयो जेता न शल्यं कुतः ॥ ९२ ॥

दैवात्सत्यपि विप्रिये तव समालोके न यामि प्रिये
तस्यामेव न लज्जसे तव कथं कामं तदा वर्तयन् ।
किं कुर्मो हतवेधसा त्वयि परा सीमा गुणानां परं
मत्सख्यामधिका न्यधीयत तया सार्धं विशेषज्ञता ॥ ९३ ॥

मलयजरजोजालास्फालाविलो गमितोऽनिलो-
ऽनुमतसुमनोगुम्फाः शेफालिका विनिभालिताः ।
वृतमपि घनस्तोमैर्व्योमेक्षितं विषमच्छद-
द्रुमकुसुममप्यालिख्यन्तां किमालि मनोरथाः ॥ ९४ ॥

बध्नाति गन्धफलिकोत्कलिकोपबन्धं
शेफालिकां शबलयन्ति सखि द्विरेफाः ।
उल्लाघयत्यतिभिदाघनतां निदाघ-
श्चन्द्रानने रचय तन्मिलने रुचं द्राक् ॥ ९५ ॥

नैवातप्यत किं चतुर्भिरनलैर्ध्वान्तद्विपत्पञ्चमे-
र्नासान्द्रीयत वृष्टिभिः किमु कृशश्चान्द्रायणैः किं न सः ।
यस्मिन्सस्मितमाननं विदधती दृग्भङ्गिभङ्गीकृतं
श्रोत्रोत्तंससहस्रपत्रमहसं व्यापारयस्यादरात् ॥ ९६ ॥

उद्यत्तारुण्यवारुण्यतिशयितमदोच्छ्वासचारुण्यतीव
प्रोदञ्चत्पञ्चबाणप्रचुररुचिरदृक्चञ्चरीकप्रपञ्चे ।
मन्दश्रीश्चन्द्रमास्ते सति सुतनु मुखे प्रोच्छ्वसत्तन्द्रमास्ते
हीनं शोभाभिरम्भोरुहमपि रजनौ नैति रम्भोरु हासम् ॥ ९७ ॥

---

१. चम्पककलिका.

लीला कापि न शीलितापि न मनाग्विभ्राजते विभ्रमो
नो किंचित्किलकिञ्चितं परिचितं वेला विलासस्य का।
उल्लासेन कुशेशयस्य कलिकां संभावितां भाविनो
रोलम्बा इव निर्विलम्बितमिमां चुम्बन्ति यूनां दृशः ॥ ९८ ॥

बलादाली कालीयकमुपदधाति स्तनभुवि
प्रभूतायामम्भोरुहमुकुलदम्भो····लि भिदि।
स्वरूपेणाजेयः स किल वनितायाः स्तनभुवा
सरोजाताभाया हृदयदयिते नखपनयः (?) ॥ ९९ ॥

आलिङ्गन्नतिसौरभानवयवान्बिम्बाधरं पाटलं
चुम्बन्नाकलयन्पयोधरतटीं शृण्वन्रुतं हांसकम्।
पश्यन्वानिशमायतां दृशमुपस्कुर्वेल्लवङ्गीरसं
बालायां सकलर्तुसंगमसुखं धन्यः परं मन्यते ॥ १०० ॥

अहानि प्रोल्लासं दधुरतिघना नन्वपघना
बभूवुः सर्वाशा हिमकरकराप्यायमिलिताः।
दृगब्जश्रीबन्धुः श्रवणमतिचक्राम नितरां
भवत्यामासन्नः कुसुमसमयो वामनयने ॥ १०१ ॥

अर्धेन्दुः क्षतमर्दितस्तमकृत प्रस्थानकस्थासकं
विश्लिष्टावरणं रदव्रणगणैः साबाधबिम्बाधरम्।
स्वेदाम्भः पृषताभिमृष्टतिलकं स्रस्तोरुयुग्मं जय-
त्यामीलन्नयनाञ्चलं परिगलद्धम्मिल्लकं तद्वपुः ॥ १०२ ॥

विद्वद्वृन्दकमौलिभूषणलसत्पाण्डित्यलीलाञ्चित-
श्रीमच्छ्रीधरभट्टसूनुरमलप्रज्ञाधराराधितः।
भट्टश्रीयुतकृष्णवल्लभसुधीर्वर्षे शरेष्वष्टभू (१८९५)-
मीने काव्यविभूषणाभिधमिदं काव्यं व्यधादद्भुतम् ॥ १०३ ॥

इति श्रीकृष्णवल्लभकविविरचितं काव्यभूषणशतकम्।

---

## श्रीश्रीनिवासाचार्यविरचितं

# जानकीचरणचामरम् ।

मुक्तावल्लिमतल्लितारकततिश्रीलक्ष्मवक्षःस्थली-
सूत्रामोपलदर्पणप्रतिफलत्सीतास्यशीतद्युतिः ।
अङ्कालंकृतिमैथिलीसितसमुन्मीलत्कपोलस्थली-
रत्नादर्शविशल्लसन्नवदनो देवः प्रसन्नोऽस्तु वः ॥ १ ॥

आयान्ती स्फुरदङ्गुलीयकहरिन्माणिक्यरश्मिच्छटा-
दूर्वाचर्वणजातकौतुकमृगीपोतानुकम्पाकुला ।
मन्दस्मेरमुखाब्जलुब्धमधुकृज्झम्पूत्फलाकर्षिणा
खेलन्ती मणिबन्धकीरशिशुना सीता कदा लक्ष्यते ॥ २ ॥

सर्वालाञ्जलिमुक्तमौक्तिकफलैर्नीतालवालां सुधा-
संपृक्तैः सुरसिन्धुनिर्झरशतैः सिक्ताङ्घ्रिमूलामहो ।
अश्रान्तं सरयूतटीसुरतरोरङ्के कृतालंकृतिं
कांचित्काञ्चनकल्पवल्लिमवनेरुन्मीलितामाश्रये ॥ ३ ॥

स्मेरेन्दीवरसुन्दरां परिवृतामस्तोककोकश्रिया
राजच्छैवलमञ्जरीं जलरुहैरालोहितैर्मोहिनीम् ।
इन्दूत्तुन्दिलदुग्धसिन्धुविहरन्माधुर्यसिन्धून्मुखीं
कामप्याकलये निरङ्कुशदयाकैवल्यकल्लोलिनीम् ॥ ४ ॥

उन्मीलत्कमलोपरिस्थकमलश्रीविभ्रमं बिभ्रतीं
हंसोत्तंसवतंसहंसकचमत्कारेण चेतोहराम् ।

---

१. अयं श्रीनिवासाचार्यः कश्चन रामानुजो द्रविडोऽर्वाचीनश्च भाति. एतत्प्रणीतस्यास्य जानकीचरणचामरस्यैकं सटीकं पुस्तकं प्रायः शुद्धं नवीनं सप्तपञ्चाशत्पत्रात्मकं वाराणसीतः पण्डितश्रीविजयानन्दशर्मभिः प्रहितम्. तत्र सारस्वतभूसुरकुलमण्डनायमानसुप्रसिद्धदिलारामात्मजरामकृष्णापरनामकाकारामपण्डितैः १९०४ मिते विक्रमाब्दे प्रणीता टीकास्ति. अस्माभिस्तु नात्युपयुक्तत्वाट्टीकामुद्रणमुपेक्ष्य टिप्पणमात्रमेव तत उद्धृतम्. २. श्रीवत्सचिह्नम्. ३. माधुर्यसिन्धुः श्रीरामः. ४. मुखकमलोपरि नयनकमले. श्रीरपि हस्तकमले कमलं धारयति.

गङ्गासंगतगङ्गया कृतपरिष्वङ्गैस्तरङ्गैः स्थिरां
क्रामत्तामरसोल्लसद्रसधुनीं कामप्यवेक्षामहे ॥ ५ ॥

अङ्कोन्मुक्तमृगाङ्कमण्डलगलत्पीयूषपानव्रतं
हित्वा यस्य रसं रसज्ञतिलकाः स्वैरं धिया गृह्णते।
कौशल्यासुकृतेऽसुपाकसचिवः सर्वंसहास्वर्गवी
पुण्यक्षीरविपाक एष भजते जीवस्य जीवातुताम् ॥ ६ ॥

यस्मिञ्शैलसुतालिकेन्दुकलिका कल्याणमाल्यायते
वाग्देवीकबरीविभूषणमणिग्रामः फलस्तोमति।
नासामौक्तिकरश्मयः सरसरोजाक्ष्यास्तुपारन्त्यहो
मैथिल्याश्चरणांशुपल्लवचयः शय्यास्तु मच्चेतसः ॥ ७ ॥

मन्दाकिन्यवगाहनामलसुरीवन्दारुमौलिस्खल-
न्मन्दारादिमधूनि यस्य पदयोरिच्छन्ति मन्दानिलम्।
विन्दानीति स वक्ति यं प्रति रसाद्धातारविन्दासनः
किंदास्येन लभेऽरविन्दनिलयापादारविन्दासवम् ॥ ८ ॥

नमद्वाणीन्द्राणीप्रमुखसुमुखीनां शिरसि यं
सुपूरं सिन्दूरं कतिचन विदू रङ्गरसिकाः।
अवव्या नन्दिन्यास्त्रिभुवनजनन्याश्चरणयोः
परागो मे रागोदयकृतपरागो विधुनुताम् ॥ ९ ॥

रुचिं तावच्चिन्तामणिसदसि चिन्ताध्वनि गता
धुनीते ध्येया या मुनिभिरभिधेया श्रुतिशतैः।
मया सानायासापरिणतधिया साधु गदितुं
न शक्या जानक्याश्चरणनखमाणिक्यसुषमा ॥ १० ॥

स्वभाले बालेन्दुं यदकलयदेकस्त्रिनयन-
स्तदन्येषां तेषामपि तदभिलाषः प्रववृधे।

---

१. कस्य दास्येन. २. लक्ष्मीरूपायाः सीतायाः. ३. रङ्गो भक्तिसंज्ञः प्रेमा. ४ पर-मुत्कृष्टमागोऽपराधः.

तदानीं जानीमो जनकतनयापन्नखशिखा-
स्तदालीभिर्लूनाः किल तिलकयन्ति स्म निटिले ॥ ११ ॥
विराजन्ते चिन्तामणिसदसि लक्ष्मीपदनख-
प्रतिच्छायाश्छायापतये इव दर्शेन्दुसहिताः ।
प्रजल्पेदल्पज्ञस्तव कविरिमामसदुपमां
तदा मन्तुः क्षन्तुं समुचित इति क्षोणिलुठिताः ॥ १२ ॥
सकारुण्यारुण्या नखमणय एते चरणयो-
र्हरन्तोऽपि ध्वान्तं न खमणय इत्थं व्यवसिताः ।
पुरस्तादेतेषामनिमिषदृगम्भोजपरिष-
न्निमेषादुन्मेषं कथमितरथा मुञ्चति रसे ॥ १३ ॥
चकोराणां प्राणान्यदवति नवेन्दुच्छविमतिं
वितन्वन्कोकानामपि निशि नवीनातपधियम् ।
मिलिन्दानां हेमाम्बुजघनरजःप्रेम पदयो-
र्नखानामारुण्यं तव जननि केषां न शरणम् ॥ १४ ॥
उदञ्चन्मन्दारस्खलितकुरविन्दाङ्कितमुखै-
रपूर्वस्वर्वापीकनकनलिनापीडितदलैः ।
सवर्णां सौवर्णाम्बुजहृदि निषण्णां कथममी
वयं विद्मः पद्मानुपमपदपद्माङ्गुलितितिम् ॥ १५ ॥
मृणालश्रेणीयं म्रदिममहिमालोचनपथे
शिलाशीला लीलानलिनमलिनः कण्टकसमम् ।
नवोन्नीतं पङ्कीभवति नवनीतं तदतुलं
परामर्शादर्शे प्रतिफलतु लक्ष्मीपदतलम् ॥ १६ ॥
नखश्रेणीमेणीदृश उपनिषद्विश्रुतिजुष-
स्तव क्षोणीशोणीकरणकुशलामप्यविकलाः ।
यदेता लाक्षाभिः सरजननि साक्षात्त्विदधते
तदुल्लेखालक्ष्यीकृतनयनदोषापहृतये ॥ १७ ॥

१. सूर्याः. २. भ्रमरस्य.

न मृद्वी माणिक्यावलिरपि सरोजं न विरज-
श्चिरं के कङ्केल्लेस्तरुणरुचयः पल्लवचयाः ।
किमु स्यादेतस्याश्चरणसदृशं पद्मवसते-
रिति प्रेक्षे यावत्तदनुफलनं तावदसदृशम् ॥ १८ ॥
त्वमेव त्वन्मूर्तिं मृदुभिरभिनिर्माय जनकैः
कलाकारैर्हीरैर्मुखजटितमाणिक्यशकलैः ।
पदाङ्गुल्यावल्योर्नखदशकमस्याः सृजसि चे-
त्तदोदन्वत्कन्ये तुलितमिव मन्ये तव नखम् ॥ १९ ॥
चतुर्णां वर्णानां वरदमिदमेव स्मृतमहो
चतुर्णां वेदानां विशदमिदमेव स्तुतिपदम् ।
चतुर्णामर्थानां प्रकटमिदमेवार्पकमिति
ध्रुवं ब्रूते राकाविधुमुखि पताका तव पदे ॥ २० ॥
उपासाभिः कश्चित्कलयतु विलासाय तनिमा-
दिमाः सिद्धीः सिद्धीभवतु मितबुद्धेरपि पुरः ।
अनङ्के र्ण्यङ्कस्तव स पदपङ्केरुहतले
समाजः सिद्धीनां तव चरण एवेति वदति ॥ २१ ॥
विलोक्य त्रैलोक्यस्थितललितमाणिक्यमखिलं
परिश्रान्तो मातर्मुनिशरणयोस्त्वच्चरणयोः ।
अपश्यन्सादृश्यं क्वचिदपि न दृश्यं मम तदा
तयोरेवान्योन्यं समजनि समत्वव्यवसितिः ॥ २२ ॥
स्थलीं चुम्बच्चम्पाचटुलमुकुलश्रेणियुगली-
मुपान्ते निष्क्रान्ता निभृतविदलद्दाडिमदलात् ।
भजेद्बीजश्रेणी यदि रसमुखी तत्प्रियसखी
भवेदुर्वीजाने तव पदसरोजाङ्गुलिततिः ॥ २३ ॥

१. अशोकस्य. २. तदीयप्रतिविम्बमेव. ३. शरीरारम्भकैः. ४. निर्मलाकारैः. ५. सामुद्रिकप्रसिद्धश्चिह्नविशेषः. ६. अणिमाद्याः. ७. हे निर्दोषे. ८. अङ्कुशनिरूप्. ९. रक्तवर्णा.

पदाम्भोजे भोजे[1] तव कुलिशचिह्नस्य मिषेतः
सदोंकारद्वन्द्वं कमलदलमूर्द्वङ्घ्रि निवसत् ।
श्रुतीनामाद्यन्तस्थितमभिमुखं वाङ्मयमुखं
किमासां सर्वासामिह वदति तात्पर्यमिति नो ॥ २४ ॥
दशेमाः प्रेमाह्ये त्वदमलपदाग्रे श्रुतिशिखा
निमग्ना जानीमः किल नखशिखापङ्क्तिमिषतः ।
नकारोऽयं काकुं ध्वनयति खकारस्तु खगुणं
शिखाशब्दः शीर्षं कविरिति परंतु स्मरतु मे ॥ २५ ॥
समाजैः सम्राजां स्मृतमजरसां सर्वभुवना-
म्बुजानां साम्राज्यं भजदुपनतच्छत्रललितम् ।
अलंकुर्यात्तन्मे हृदयकमलं तेऽङ्घ्रिकमले
ललामं यत्कामं कमलनयनार्धाङ्घ्रि कमलम् ॥ २६ ॥
सकम्पा शम्पा न त्यजति जलदालीजवनिकां
न संध्यान्तर्धानादुचितमपरं ध्यायति पुनः ।
विमुञ्चन्त्यारुण्यं तरुणिकिरणास्तूर्णमनघे
तवालोक्य श्लोक्याश्चरणनखचिन्तामणिरुचः ॥ २७ ॥
सदाशास्ते यस्त्वत्परिचरणशीलाचरणतः
प्रहारं प्राग्भारं कमपि कुसुमानां कलयितुम् ।
अशोकस्य स्तोकोद्गतकिसलयं तस्य विदुषां
रसज्ञा सर्वज्ञे कथयतु कथं त्वत्पदसमम् ॥ २८ ॥
सुधोदग्रोदञ्चद्रससुरतरोर्श्चित्किसलये
सुमस्तोमे प्रेमात्मनि यदि कलङ्केन विकलाः ।
कलाः प्रालेयांशोः किल मधुलिहस्त्वत्पदपुन-
र्भवानां दृष्टान्तं दधतु वसुधानन्दिनि तदा ॥ २९ ॥

---

१. रुक्मिणीरूपेण भोजवंश्ये. २. व्याजेन. ३. दशोपनिषदः. ४. शब्दम्. वेदमिति यावत्. खशिखा वेदशीर्षाण्युपनिषदः किं न, अपि तु सन्त्येव. ५. चिह्नम्. ६. छत्राकारचिह्नसहितं कमलाकारं चिह्नम्. ७. जन्मान्तरे त्वदाराधनेन लब्धसौन्दर्यादिगुणा युवतिस्तस्याश्चरणतः पादेन. ८. चिदाग्रकदलविशिष्टे.

मणीमुद्रोद्गच्छत्किरणपटलच्छन्नविशदः
प्रदेशिन्या श्लिष्टः शशिवदनया रागघनया ।
धनुष्पाणेः प्राणेश्वरि भवतु ते(?) राजति भव-
त्पदाङ्गुष्ठो जुष्टश्चतुरमुनिभिः प्राणचमरैः ॥ ३० ॥
कृपारूपे चापायुधविधुमुखि त्वत्पदनखा-
त्कृपास्रोतश्चोद्यात्यनिशमिदमुद्द्योतकपदात् ।
जितेन्दुर्यद्विन्दुः सृजति सुखसिन्धून्सपदि ता-
न्यदूर्मौ निर्मज्जन्त्यहह निखिला मुक्तिमहिलाः ॥ ३१ ॥
चकोरश्चन्द्रांशुं चुलकयति चिद्रूपिणि यथा
तथा चन्द्रोऽपि त्वच्चरणनखचन्द्रांशुनिचयम् ।
चकास्त्यद्वैचित्त्याचरणचणचण्डीशचिकुरे
क्षयाचान्तोऽप्यश्चत्ययमुपचयं तेन चतुरः ॥ ३२ ॥
यदम्भोदम्भोलिर्दुरितगिरिदर्पोपशमने
शिरः शंभोरम्भोरुहनयनरम्भोरु भजते ।
सदङ्गा सा गङ्गा त्विदिनसमरङ्गासनतला-
नुषङ्गात्त्वत्तुङ्गाङ्घ्रिजरुचितरङ्गान्वहति के ॥ ३३ ॥
करं डिम्भः शंभोरमरसरिदम्भोरुहधिया
सुधास्रोतःप्रोतस्मृतिरहिपतिः सर्वरसनाः ।
विरञ्चेर्विश्चञ्चुं विसचयरसाचञ्चलयति
त्विषां पूरे दूरादमृतनिधिपुत्रीपदरुहाम् ॥ ३४ ॥
युगङ्गागाङ्गेयाम्बुजगणरजःपिञ्जरतनू-
न्प्रवालास्यैरालम्बितनखमृणालाङ्कुरलवान् ।

---

१. राजमहिषीतुल्ययेति भावः. २. नखश्चैत्येन. ३. लौहित्येनानुरागेण च. ४. राजवदाचरति. ५. सालोक्यादिमुक्तिरूपाः. ६. त्वदीयध्यानेन प्रसिद्धस्य महादेवस्य मस्तके. ७. त्वदीयमिनसमरङ्गं रत्नप्रभया सूर्यसमं यदासनं सिंहासनं तस्य तलेनानुषङ्गात्सबन्धात्. ८. जले. ९. विः पक्षी. हंस इति यावत्. १०. सुवर्णकमलसमूहरजसा. ११. विद्रुमतुल्यैर्मुखैः. १२. नखतुल्यानां मृणालानामङ्कुरलेशान्.

मरालानां चालानुसरति किं तावकपदा-
ङ्गुलीनां मालेयं गतिजितमरालेऽब्जनिलये ॥ ३५ ॥
इयं लाक्षा साक्षात्कृतसुकृतकल्पद्रुमफला
शिलापट्टे पिष्टा ज्वलदनलकल्लोलितजले ।
परिक्षिप्ता व्यक्तीभवदतुलरक्तिः श्रुतिशिरो-
विमृग्यं सौभाग्येश्वरि तव पदं रञ्जयति या ॥ ३६ ॥
सखीपक्ष्मप्रक्षालितभवदलक्ताङ्घ्रिसलिलं
दयाक्लिन्ने क्लिन्नां विरचयति यां कामपि महीम् ।
अहं तस्याः पांसुः कथमहह भूयासमथवा
कुतो न स्यां मन्त्रैर्यदि कुलिशपत्रैश्च(?)लुनम् ॥ ३७ ॥
सुरैर्मुक्ता मुक्तास्तवकनिकरास्त्वच्चरणयोः
पुरः सोमस्तोमा इव सपदि तत्तद्भुवनतः ।
उपेतास्त्वामेते शरणममले त्वत्पदसुहृ-
त्सरोजानामोजः क्षपणकृतमागः क्षपयितुम् ॥ ३८ ॥
किमेतौ लौहित्याम्बुधिसमुदितौ विद्रुमतरू
प्रवालावाहोस्विल्लवणिमरसालस्य सरसौ ।
प्रसत्तिस्वर्वापीकमलमुकुलौ किंस्विदतुलौ
हरेराह्लादिन्याः किमुत चरणौ सर्वकरुणौ ॥ ३९ ॥
यदग्रे प्रत्यग्रं जलजनिभजतामेव रसना-
प्रसिद्धः संनद्धो नवकिसलयः पल्लवतया ।
यदस्यैतस्यैवंरसमपि तवैकापि न तुला
तदप्येतल्लभ्यं कथमपि तुलाकोटिकलितम् ॥ ४० ॥
स्पृशन्ती यां शाकोपलशकलनकांशुलहरी-
सवर्णेयं वेणी कलयति वलक्षैवलरुचिम् ।

---

१. गच्छतान्. पद्गुमारं पश्यतामिति यावत्. २. उपमानानभिनिनुभवनः. ३. पदः पारस्य लवनया लैगलेन रसनाप्रसिद्धो जिह्वाहरः. ४. एवंरसमेवाविपन्. ५. 'वेणी दीर्घा प्रवहणे' इत्युक्तेः पार्श्व स्पृशन्तीत्युक्तम्.

स्पृशन्त्यङ्कं प्रेमाङ्कितविरचितं कुङ्कुममयं
प्रिये विष्णोः पार्ष्णिः कनकनलिनीकन्द इव ते ॥ ४१ ॥
मदग्रे माध्वीकव्रजमदरवः किं पिकवधू-
कलः किं वल्लक्याः क्वणितमपि किं पङ्कजदृशाम् ।
क्वणन्त्येवं देवि ध्वनयितुमिमाः सर्वनमतां
शरण्ये किङ्किण्यस्तव चरणयोः किंकिमिति किम् ॥ ४२ ॥
त्रयीचूडाक्रीडत्रिदशतटिनीस्वर्णनलिनी-
सभोत्तंसो हंसः स्पृशति न शुचि त्वत्पदगतिम् ।
मदान्धोऽयं पुष्पंधयनिचयसंबन्धमलिनः
स्पृशेदम्ब स्तम्बेरमकुलमणिस्तां तव कथम् ॥ ४३ ॥
बहिर्द्वारि द्वैमातुरसुरपतिप्रख्यमखभु-
क्कदम्बे संबद्धाञ्जलिवलितमौलि स्थितवति ।
चकोरीभूयांसो किमवनिकिशोरीचरणयो-
र्नखेन्दूनामंशून्रसयतु बसन्दूरमजिरात् ॥ ४४ ॥
महःसिन्धू पङ्केरुहकुमुदबन्धू त्रिभुवन-
प्रदीपौ यद्दीप्तौ भवत इव खद्योतपृथुकौ ।
अशेषस्थानेषु ध्रुवसुखविशेषं विदधती
विरिञ्चिर्त्रोर्वीपुत्रीपदरुहततिर्मङ्गलमयी ॥ ४५ ॥
सुधाफेनच्छायाखचितसिचयेन प्रियसखी-
शतैर्या पर्यङ्कान्तिकमुपसृता केसरधियम् ।
स्पृशन्ती सेरं ते वदनमवलोक्यानमति सा
पदे रेखाराजी तव जयति राजीवनयने ॥ ४६ ॥

---

१. विष्णोरङ्कं स्पृशन्तीति पार्ष्णिविशेषणम्. २. प्रेमाङ्कितानि प्रेमलिखितचित्ररूपाणि विरचितानि यस्मिन्नङ्के. ३. केसरद्रवव्याप्तम्. ४. माध्वीका भ्रमराः. ५. किंकिमिति किङ्किणीशब्दानुकरणम्. ६. त्रयी वेदः शंभुरूपस्तच्चूडायाम्. ७. परोक्षतामापन्नो मञ्जीरः. ८. भवतीति शेषः. ९. उपनीता. महतां पादन्यासाय पादस्थाने उत्तमजातीयवस्त्रं निदधति तद्भक्ताः. १०. प्रणामसदृशीमधोगतिं भजते.

त्रपावश्या पश्यंस्त्यजति ननु गीः कोशलपते-
 र्¹सूर्यंपश्यायाः पदकिसलयस्नानसलिलम् ।
भवेद्योगे नद्यो हिमवदहिमांशुप्रभवयो-
 र्निलीना सेदानीमपि न पदवीं रोहति दृशोः ॥ ४७ ॥
स्फुटः स्वां चेद्याचेद्वितरणगुणं स्वं मणिगणः
 स्वयं स्वर्गोवर्गः कुलमपि सुपर्वक्षितिरुहाम् ।
कविर्वा कुर्वीत प्रतिममितरैर्मामिति भृशं
 विमृश्याद्दृश्यत्वं तव भजति गुल्फः किमु रमे ॥ ४८ ॥
मिलिन्दत्वं विन्दे यदि वसुमतीनन्दिनि तदा
 त्वदीयाङ्घ्रिच्छायार्पितसरसमाल्यस्य रजसा ।
परिष्वक्तः ²श्वद्गतिरहह यां यां दिशमिया-
 दहं तस्यां तस्यां दिशि तदनुगः स्यामनुयुगम् ॥ ४९ ॥
पटीरः स्वां कस्यामपि भुवि यदि क्षीरधिसुते
 तदा केचिद्धन्याः शुभपरशुभिः खण्डश इमम् ।
सृजेयुर्मा ³धैर्यावृति दृषदि मज्जेयुरपरे
 दधीरन्वा धीरं तव पदरुहे केऽपि कृतिनः ॥ ५० ॥
निलिम्पस्त्रीहस्ताङ्गुलिकलितशक्राश्मशकलो-
 र्मिकालोकस्तोकेतरमधुपसंपर्कमधुरम् ।
विहारक्ष्माहीरच्छविकुलसुधापल्वलनिभ
 मदीयं वैदेहीचरणनलिनद्वन्द्वमखिलम् ॥ ५१ ॥
यदुन्मेषे भूपास्त्यजति गिरिजाजानिरुडुपः
 ⁵कलङ्कं ⁶पर्यङ्कं नलिननयनः ⁸पन्नमनिलः ।

१. जानक्या गीर्वाणी पश्यन्ती परादिवाग्भेदेषु द्वितीया भवति. सा च चरणप्रक्षालनजलमजति गच्छति. तत्र प्रविशतीति यावत्. इत्थं त्रपावश्यतायाः परम्परागमनात्प्रयागे तिरोहिता सरस्वती भवेत्. प्रयुञ्जते हि लोकाः—अयं तत्र लज्जया जलभावं गत इति. गङ्गायमुनयोर्मध्ये जानकी वाणीरूपा सरस्वती लज्जया तिरोहिता तिष्ठतीति भावः. २. वायुः. ३. धर्मस्य यागहोमादेरात्मदनुष्ठानं तस्यां योजयेयुः. ४. सर्वस्वभूतम्. ५. सर्परूपाणि भूषणानि तद्ध्वनिश्रवणलोभेन क्षुब्धानि धारयितुं न शक्नोति. ६. मृगरूपम्. ७. शेषनागरूपम्. ८. मृगरूपं वाहनम्.

स मैञ्जीयान्संजीवयतु जगतां मातुरुषसि
व्रजन्त्या मञ्जीरध्वनिरशरणं जीवहरिणम् ॥ ९२ ॥
भ्रमन्त्यास्त्वच्चिन्तामणिगृहसमन्ताद्यदुदये
विपञ्ची स्वं चोलं प्रविशति विरञ्चेर्मृगदृशः ।
शुकोऽप्यस्याः पश्यत्यभिमुखमहो पञ्जरमुखं
जगन्मातुः(त)ः प्रातः स जयति भवन्नूपुररवः ॥ ९३ ॥
यदप्याशाधीशास्तव दश लभन्तेऽङ्घ्रिजशिखाः
शनैर्नूनं लूनास्तदपि वरुणस्तत्र करुणः ।
दिशि स्वस्यां यस्तां प्रमुदितसमस्तां प्रकटय-
त्यपूर्वेन्दुं सर्वेऽप्यभिदधति यां निर्वृतिमयीम् ॥ ९४ ॥
मणीनेकैकस्यां दशदश फणीशो वहति य-
त्फणायां विच्छायीकृतनवदिनेशानवनिजे ।
नखायां ध्यानाय प्रतिफणमयं तत्प्रतिकृतीः
प्रतीमः सप्रेमा कलयत इमास्त्वच्चरणयोः ॥ ९५ ॥
तपःस्फूर्जन्नूर्जस्वलनखकुलं तेऽङ्घ्रिकमलं
मुनिः कश्चित्सच्चिन्मपि शिरसि दध्यौ प्रतिपलम् ।
स एष श्रीशेषः शिरसि शिरसि त्वच्चरणयोः
प्रपेदे सारूप्यं दश दश मणीन्बिभ्रति शुभान् ॥ ९६ ॥
विवाहे वैदेह्याः पदरुहमहःपाटलकलाः
कृशानौ संक्रान्तास्तदवधि किलायं दैशकलः ।
प्रविश्यामुं क्षामच्छविरपि रविर्धाम लभते
नवीनं दीनेन्दुः खमिदमनुसृत्य प्रसरति ॥ ९७ ॥
तृणमन्यश्चिन्तामणिमपि मुनिर्यः कलयति
प्रियं प्राणात्पृथ्वीदुहितरिदमङ्घ्रेस्तव नखम् ।

१. अतिशयेन मञ्जुः. २. दीनो बालो यथा फलविशेषं लब्ध्वा तं सर्वेभ्यो दर्शयति तथा. ३. वह्नेर्दश रवेर्द्वादश चन्द्रस्य षोडश कलाः सन्तीति तान्त्रिकाः. ४. अभिप्रवेशमकुर्वाणोऽत एव दीनस्तेजोहीनो विधुः खमनुसृत्याकाशतुल्यचरणौ मूल्ला धावति.

कथं तन्माणिक्यप्रमित(तिम)मिति शक्यं कथयितुं
किमारोपस्थानी द्युमणिरपि यस्यैककिरणे ॥ ५८ ॥
ससंकोचाः सिञ्चन्त्यमरललनाः कुङ्कुमरसै-
र्नमच्छंभुं संभावयति च कुसुम्भाक्तसिचयैः ।
पिधत्ते या पिष्टातकपटलतो दिङ्मुखमियं
श्रियं दिश्याल्लक्ष्मीचरणरुहलौहित्यलहरी ॥ ५९ ॥
विरिञ्चाद्यैरर्च्ये तव चरणयोरर्चनकृते
शुभैः पुष्पैः शोभाजुषि मरकताकाशचषके ।
चकास्तीदं चन्द्रोज्ज्वलनमखिलामोदजनकं
ससंकोचं नो चेत्कथममुकयोः स्पर्धि कमलम् ॥ ६० ॥
कुरुक्षेत्रं क्षेत्रं कुरु चरणयोः सच्चरणयोः
सरस्वत्या कान्त्याङ्गुलिवलयशक्रोपलरुचा ।
समुद्यत्कालिन्द्याजनजननि वृन्दावनमिदं
नखाग्रप्रत्यग्रद्युतिगगनधुन्या सुखवनम् ॥ ६१ ॥
दरोन्मीलत्कल्पद्रुमकुसुमसौरभ्यलहरी-
धुरीणैर्धम्मिल्लैः सुरयुवतिभिर्धूतरजसी ।
त्रिलोकीनिःशोकीकरणनिपुणे रामरमणी-
पदत्राणे प्राणेशितुरिव रतेर्नौमि शरधी ॥ ६२ ॥
स्फुरामि द्युस्वामिप्रमुखहृदयान्तर्ध्रुवमहं
मदन्तः सीतायाः स्फुरति वसुमत्याः पदमिदम् ।
अमुष्यान्तः किं किं न सुखमिति किङ्किण्यनुरण-
त्कृतैरङ्घ्रित्राणं भणति धरिणीनन्दिनि तव ॥ ६३ ॥
वनं म्लानीकर्तुं विमृशति हिमानी वनरुहा-
मियं सेना तेषां खलु मधुलिहामम्बुजधिया ।
झटित्यावां धावेदिति किमु पदाभ्यां तव धृते
पदावन्यावन्याद्दशमणिधरे प्रेयसि हरेः ॥ ६४ ॥

१. चन्द्रशब्दः कर्पूरवाचकोऽपि. २. आनन्दवनं वाराणसीरूपम्. ३. उपानह.

प्रणामं कुर्वाणः पदकमलयोस्ते विमलयो-
 स्त्रयाणां त्राणाय प्रभवति मनोजाम्ब जगताम्।
प्रवीणे तत्राणे नमयति शिरो यः कृतिवरः
 स कां सिद्धिं विद्यादिह बहुतरां मुह्यति मनः ॥ ६५ ॥

पदस्वेदामोदप्रसरणसमाहूतमधुपे
 विमुक्ते मञ्जस्याक्रमणसमये भूमिसुतया।
पदत्रे सुत्रामद्रुमकिसलयप्रश्लथनव-
 प्रसूने केनेमे शिरसि सरसं न प्रणिहिते ॥ ६६ ॥

न साक्षादस्राक्षीन्मृगरिपुमृगाक्षीपदयुगं
 तदप्येतां चिन्तां वरमकृत चिन्तामणिकुलम्।
विना याच्ञां वाचामविषयफलं दातुमुचिते
 यदासक्तं नक्तंदिवमवनिजापत्रयुगले ॥ ६७ ॥

स्वशोणिम्ना निम्नानमरमणिमौलीन्विदधती
 सुखोद्योते हेतू वत नयनयोरभ्युदयदे।
जगद्वन्द्ये संध्ये इव सकुरुविन्दे त्रिजगतः
 सवित्रि त्वत्पत्रे परमनुसृते तारकवरैः ॥ ६८ ॥

अमी नूनं चामीकरतनुगुणैः पूर्णनिपुणैः
 प्रणीताः पत्राणे तव नवतराः कल्पतरवः।
प्रयच्छन्तो वाञ्छोपरि विदधते लाञ्छनधुरं
 पुराणं गीर्वाणद्रुमगणमलिव्रातकपटात् ॥ ६९ ॥

मृशामः सुत्रामद्युमणिवरुणास्त्वत्पदवनीं
 समर्थाः स्प्रष्टुं न व्यवसितपुमर्थास्तदपि ते।
वसन्त्योतप्रोता यदिह मिथिलाधीशतनये
 शचीशग्रावाणस्तरणिमणयो मौक्तिकगणाः ॥ ७० ॥

---

१. कल्पवृक्षपुष्पार्चिते. २. मृगो मारीचस्तद्रिपू रामः. ३. पादत्राणयुग्मे. ४. कलङ्कभारसहितम्. ५. पादत्राणिकाम्.

त्रिवेणीयं चित्रा त्वदमलपदत्राणजटिता-
रुणश्वेताश्वेताद्भुतमणिमयूखैः परिणता ।
गिरां देवी यस्यामपि सुरसरिद्भास्करसुता
जनानां धुन्वाना सकलशमलं [1]मज्जतितराम् ॥ ७१ ॥

यदीहन्ते हन्त श्रवणकुहरेऽनाहतरुता-
नुसंधानं हित्वाद्भुतसुखनिधानं शमधनाः ।
दिवो गव्याः स्तव्यं सुरमणिरणन्नूपुरनुतं
मम प्राणः क्षोणीदुहितृचरणत्राणरणनम् ॥ ७२ ॥

दयानन्ते चिन्तामणिमपि [2]पदस्यावनि मृदु-
स्वनैः कर्णे कुर्वन्त्यमृतरससर्वस्वमधुना ।
सखीहस्तन्यस्तोभयकरतलां स्निग्धसरलां
दृशोरध्वानं मे गमय कमलामात्तकमलाम् ॥ ७३ ॥

दयाशीले लीलापरिपदि शुकः स्वां तव तदा
चलच्चञ्चुश्चुम्बन्पदकवचयोस्ते कवचितम् ।
मणिग्रामं कामं विदलविदलद्दाडिमधिया
करोमि स्वैरां त्वां सह सहचरीभिर्मुहुरहम् ॥ ७४ ॥

अये रामक्षामोदरि मयि कृपां कल्पय तथा
सदासौ त्वत्सौधावनिषु हरिणीभूय विहरन् ।
यथा दूर्वापूर्वाङ्कुरचयधिया चुम्बति भव-
त्पदत्राणप्रोतत्रिदशपतिमाणिक्यकिरणान् ॥ ७५ ॥

पदाङ्गुल्यस्तुल्यांस्तव कुसुमशस्त्रस्य विशिखा-
ञ्जगज्जिष्णूञ्जेतुं कथमकलयन्वज्रकवचम् ।
अनायासावासं स्मृतिमय[3]मेयं वर्म कलय-
न्सुजिह्मब्रह्मास्त्राण्यपि विफलयत्यम्त्र शतशः ॥ ७६ ॥

---

१. अन्तर्भवति. २. हे पादरक्षिके. ३. तव भक्तः.

ई[1]लालीलोन्मीलत्कुतुकलतिकापत्रजरजः
कृपावीरः कश्चिद्वितरति समीरः सकृदपि ।
विमुक्तिक्षामाङ्गीवदनकमलामोदलहरी-
मुरीकर्तुं को वा स्पृहयतु तदा क्ष्वेडलहरीम् ॥ ७७ ॥

पदत्रेऽस्मिन्मुक्ताखिलकलुषमुक्ताफलमिषा-
त्क[2]विर्देहव्यूही निवसति चलैरेष सचिवः ।
कथं नो चेद्वैरोचनिरनिमिषाधीशनगरी-
मुरीकुर्याद्भूयो दनुजदमनप्राणदयिते ॥ ७८ ॥

कृती वं[3]शोत्तंसः स किल नलिनाक्षस्य महिले-
ऽखिलैर्मुक्तेत्युक्ता कवचयति यत्संततिरियम् ।
चिरं चित्ते चिन्त्यं चरणकवचं तेऽभिदधती
नियुक्तं मुक्तानामपि सुखविधानेष्विदमिति ॥ ७९ ॥

कृपायुक्ते मुक्तामयभवदुपानत्प्रसृमर-
प्रभापूरक्षीराम्बुधिरयमगम्यो मम गिराम् ।
लभन्ते ध्यायन्तोऽप्यमितममृतं यं सकृदपि
श्रियोऽसंख्याः संख्यावदभिमतदिव्या अ[4]भिगवीः ॥ ८० ॥

परित्यज्य प्राज्यानपि मखभुजो मय्यवनिजा
पदाभ्यामभ्यस्या वसतिरिति पद्माहिनि मदम् ।
जहीहि त्रायेथामिति कथयतः क्वापि सभये
न किं हित्वापि त्वां मम वसतिमायास्यत इमे ॥ ८१ ॥

द्विजोत्तंसैर्हंसैरविरतमुपास्याम्बुधिसुता-
पदावन्यावेते कनककमलिन्यावनुपमे ।
यदुद्दामेन्द्राश्मद्युतिविततनालेषु दिविष-
द्विशालाक्षीरिङ्खत्करकमललक्षं विजयते ॥ ८२ ॥

---

१. भूमिसुतापादत्राणसमुद्भूतं रजः. २. भृगुः. ३. मुक्ताफलोत्पत्तिस्थान वेणुश्रेष्ठः. ४. गोभ्यः कामधेनुभ्योऽधिकाः.

विदूराद्वन्दारुत्रिदशवरकोटीरशिखर-
स्फुरद्धीरक्षीरोज्ज्वलकरसहस्रद्युसरितः ।
यदिन्द्राश्मश्रेणीकिरणवरुणागारशरणा
विराजन्ते सन्तः स्मरत तदिलानाङ्घ्रिकवचम् ॥ ८३ ॥
मुखब्रह्मब्रह्मप्रमुखसुरकोटीरशिखर-
स्फुरद्धीरक्षीरच्छविहरमहःपूरनिवहः ।
यदिन्द्राश्मश्रेणीकिरणनिकरे सागर इव
प्रवाहः स्वर्वाप्यास्तदवतु सवित्र्यङ्घ्रिकवचम् ॥ ८४ ॥
समुद्रान्तर्निद्राप्रवणभगवच्चन्द्रवदना-
पदाधारोद्धारी स्फुटपुरटपीठोद्भवतटात् ।
पटुप्रेमप्रह्वामरकमुकुटोद्घृष्टकटका-
दुदञ्चद्भिः पुञ्जैः कनकरजसां पिञ्जरमुखः ॥ ८५ ॥
पदावन्योर्धन्ये तव वितरणं वेत्त्यनिमिष-
द्रुमाली त्वल्लीलावनमुपगता नन्दनवनात् ।
भवत्यां खेलन्त्यामुपवनसरस्यां यदनयो-
स्तलस्थेये प्रेम्णा सृजति कुसुमैरर्चनमियम् ॥ ८६ ॥
अजस्रं यः स्रंसत्यभिनवभवत्पत्कवचयोः
समन्तात्सीमन्ताभरणनवसिन्दूरशबलः ।
तमेव स्वर्वामासुरभिकबरीमाल्यरजसां
कदम्बं हेरम्बः शिरसि कुरुते लम्बकरतः ॥ ८७ ॥
पिधत्तस्त्वत्पत्रे चरणशतपत्रे तव जग-
त्प्रसिद्धे सिद्धीशे सुरतरुसुमौघः पुनरिमे ।
इमं तावद्भावग्रहिलविबुधोत्तंसमहिला-
कबर्यस्ता एताश्चतुरमधुकर्यः पिदधते ॥ ८८ ॥

---

१. मुखे ब्रह्म वेदो येषाम्. २. गङ्गायाः. ३. भक्तो भवतीति शेषः. ४. सुरद्रुमाधो-देशस्थितौ सत्याम्. ५. शुण्डादण्डेनादाय. ६. भवदीयपादत्राणे. ७. पादत्राणे.

जगद्योगक्षेमौ जनकजगतीजानितनये
त्वदीये पादाब्जे वहत इमके रत्नकवचे ।
मम प्रेमप्राणावपि वहत एते पुनरहं
वहाम्येतौ तस्मादिह मम समानोऽस्तु कतमः ॥ ८९ ॥

बहिर्मुक्ते लीलागृहगमनवेलासु वसुधा-
दुहित्रेत्यङ्घ्रित्रे निजविफलतां मा कलयताम् ।
विना वां किं वास्याः पदकिसलयौ द्रष्टुमधिको-
त्सुकानां लोकानां जनयतु विनोदं नयनयोः ॥ ९० ॥

परिष्वक्ते मुक्तावलिभिरभितस्तेऽङ्घ्रिकवचे
नमन्तो दूरेण प्रणयरसपूरेण तरलाः ।
सुपर्वाणः के नो पञ्जतलविशेषान्यतरतां
स्तुवन्तो निन्दन्ति त्रिदशपदवीं रामदयिते ॥ ९१ ॥

उपस्तीरोत्तीर्णत्रिदशपुरपूर्णेन्दुवदना-
ञ्जलिस्रस्तस्वर्णाम्बुजनवरजस्यर्णवसुते ।
त्वदङ्घ्रिस्पृक्पीठाङ्घ्रिषु परिधिभूते धूणिरयं
लुठित्वा तद्रागं जगति सविभागं वितरति ॥ ९२ ॥

पुरःपश्चात्पार्श्वे प्रणमदमरान्तर्गतगजा-
ननापर्णापर्णारमणतिलकार्धेन्दुकिरणैः ।
चतुःस्रोतःपूर्णं तव सविधुरत्नासनमये
सवर्णे स्वर्णाद्रेः स्रवदमरसिन्धोः प्रतिदिशम् ॥ ९३ ॥

पुरो नम्रान्कस्रोत्तमरमणपत्पद्मसुषमा-
समुद्रामग्नं ते स्पृशतु हृदयं मा स्पृशतु वा ।
परं त्वेतानन्तस्तव चरणपीठं मणिमयं
स्पृशत्येव स्तुत्ये प्रसरदनुरागोर्मिनिकरम् ॥ ९४ ॥

दरोद्यत्पद्मद्रुमसुमनयो यच्चरणयो-
न सीम्नि स्थेमानं वहति सहसोर्वीत इतरः ।
सुनासानां तासामपि शयपुटैश्चुम्बितरुचो
जयन्त्युर्वीजाते तव चरणपीठस्य चरणाः ॥ ९५ ॥

तपस्तप्तं पद्मैः पयसि गलितं केवलहिमे
दुरापा तत्प्राप्ता सुरपुरवधूपाणिपदवी ।
सुरद्रूणां पुष्पैरहह सहवासश्च विहितः
पुटीभूतैः स्पृष्टास्तदुपरि भवत्पीठचरणाः ॥ ९६ ॥

श्रियो लीलाहर्म्यात्पदकमल उन्मीलति मना-
ङ्निमीलत्यालीनामुषसि करनालीकनिकरः ।
निमील्य कीलालाशयशतदलैर्यत्कुवलयै-
र्वृतं मुक्ता युक्तं तदपि शशिकृत्यं विमृशताम् ॥ ९७ ॥

समस्तो विन्यस्तस्तव चरणयोः प्रेमरसिकै-
र्मेरोऽमूम्यां मूल्योज्झितमणिनिर्पद्योपरि पुनः ।
तयात्मीयाम्नायाङ्घ्रिषु च त इमे दुर्वहतमं
पुमर्थानां भारं ददति नमतो मूर्धनि बलात् ॥ ९८ ॥

अयः स्पर्शस्पर्शात्कनकमिव मुक्ताकवचितं
पदस्पर्शात्पीठं तव भवति माणिक्यमनघम् ।
विमुक्तं यन्मुक्तामयमिव पुनर्भाति स भव-
त्पदाभ्यां विश्लेषाद्धवलिमविशेषोऽस्य वरदे ॥ ९९ ॥

सहस्रेणाप्यक्ष्णां तव चरणयोर्वीक्षणविधा-
वतृप्तः संसद्यामिनरमणि इन्द्रसंभवति ते ।
महेन्द्रो मायाभिः पुरुषपुरभूद्दृत्सु च वहं-
स्त्वदङ्घ्री संक्रान्तौ बहिरपि गिरां पश्यति बहिः ॥ १०० ॥

---

१. दूरीकृतः. २. पुष्पार्पकभिर्नः सेवकैः. ३. ताः कराञ्जलीकुर्वन्तीलक्ष्मीः. ४. सिंहासनोपरि. ५. स्पर्शो नाम पाषाणविशेषो यत्स्पर्शाल्लोहस्य सुवर्णभावः ६. सभायाम्. ७. इनः प्रभू रामः. ८. इन्द्रो नेत्रहृष्टो भवति.

सुमो[1]ल्लोचस्यूतायतसितसहस्रच्छदलता[2]-
सहस्रं संक्रान्तं मणिमयभवन्मण्डपभुवि ।
सहस्रं शेषाणामिव धरणिमूलेऽनतशिरः-
सहस्राणां स्तोतुं तव पदमिदं कौतुकनिधे ॥ १०१ ॥

अहो पू[3]र्वापूर्वामरगुरुयुगं तेऽङ्घ्रियुगलं
न शक्नोति स्तोतुं कलियुगजनैः कात्र गणना ।
प्रलापं श्रुत्वा मे तदपि नखकोटीन्दुशकल-
प्रभाजालव्याजाद्धसति मुदितं वत्सलमिदम् ॥ १०२ ॥

मनोभूवामाक्षीस्मयहरमृगाक्षीपरिषदो
दृशः सक्ता नक्तंदिवमवनिजे त्व[5]त्प्रियदृशोः ।
त[4]योस्तावद्भावस्तव नयनयोस्त्वन्नयनयो-
स्तवैवाङ्घ्र्योस्तस्मान्मम हृदयमत्रैव रमते ॥ १०३ ॥

चिदानन्दां मन्दस्मितदमितराकेन्दुशतकां
मुकुन्दाङ्के लग्नां घुसृणरसमग्नाम्बरधराम् ।
स्फुरन्नासामुक्तामुरसि नवहारेण मधुरां
तडित्काञ्चीं कांचित्स्मरत चतुराश्चारुचरणाम् ॥ १०४ ।

दुकूलेनाचूडामणि पिहितमानूपुरमहि
स्वरूपं तेऽनन्ते चरणयुगलं मुक्तमतुलम् ।
नखज्योतिःस्रोतः सुरमुकुटरत्नांशुनिकरा-
त्परावृत्तं रत्नांशुकमिव विधत्ते पुनरिदम् ॥ १०५ ॥

शरज्ज्योत्स्नाजालोज्ज्वलमपि दुकूलं विजयते
यदङ्गानां सङ्गात्सपदि र[6]जनीरञ्जितमपि ।
पुनर्यस्या हास्यै[7]रमृतसरसीकेन सदृशं
श्रियः पश्याम्यस्याश्चरणकिरणैर्विश्वमरुणम् ॥ १०६ ॥

---

१. सुमोल्लोचः पुष्पमयवितानम्. २. मुक्तालतासहस्रमित्यर्थः. ३. पूर्वामरा दैत्याः, अपूर्वामरा देवाः. ४. रामचन्द्रनयनयोः. ५. रामनयनयोः. ६. हरिद्रा. ७. चन्द्रेण.

सुधावीचीनीचीकरणनिपुणापाङ्गकरुणा-
तरङ्गैरुत्तुङ्गैश्चरणशरणं सिञ्च कृपणम् ।
मम प्रज्ञावापीप्रभवनवकाव्याम्बुजवने
पदन्यासं कुर्याः सरसिजनिवासव्यसनिनि ॥ १०७ ॥

वितानाधस्तानाः शतदशकमुक्तामयलताः
सभायामाभान्ति त्रिदशसरिदोघा इव तव ।
प्रभाभिर्वीचीभिस्तव नखमयूखामृतनिधे-
र्विलोलैः कल्लोलैः सह परिमिलन्त्यो रसनिधे ॥ १०८ ॥

सुराः सर्वे खर्वास्तव चरणमूले सुरतरो-
स्त्वमासीना मूलेऽनुचितमिति मत्वा सुरतरुः ।
भवन्मञ्चाधस्ताद्भुवि विविधरत्नेषु बहुधा
विशन्प्रायश्चित्तं चरति बहुरूपैः परतरे ॥ १०९ ॥

कपिद्वारा वारामुपरि जलधेः सेतुतरणि-
र्यथोदारा धाराधरसुरुचिरामेण रचिता ।
मया[1] द्वारा नारायणविधुमुखीपद्मुतिरियं
भवोद्धारा साराश्रयहृदयरामेण[2] विहिता ॥ ११० ॥

प्रकृत्या भृत्योऽहं श्वसन इह सामन्ततिलको
मनश्छत्रं पीठं हृदयशतपत्रं विकसितम् ।
सुमानां[3] सम्राजोर्जगदहमहंपूर्वमवतो-
र्वचः स्फीतं सीतारुणचरणयोश्चामरमिदम् ॥ १११ ॥

प्रेमरत्नरचिताक्षरहैमदण्डमण्डितमुपासकगृह्यैः ।
गृह्यतां दशमुखप्रतिमल्लवल्लभाचरणचामरमेतत् ॥ ११२ ॥

इति श्रीमद्रामचरणचन्द्रिकाचकोरायमाणश्रीमार्गतिसिद्धान्तविहरमाणविद्वद्धुरीण-
कौन्तेयाचार्यसूनुश्रीनिवासाचार्यविरचितं सीताचरणचामरस्तोत्रम् ॥

---

१. मां द्वारीकृत्य. २. सकलमलाश्रयेण हृदये स्थितेन च. ३. पद्मानामित्यर्थः.

५

## महाकविश्रीक्षेमेन्द्रविरचितं

# दर्पदलनम् ।

### प्रथमो विचारः ।

प्रशान्ताशेषविघ्नाय दर्पसर्पापसर्पणात् ।
सत्यानृतनिधानाय स्वप्रकाशविकासिने ॥ १ ॥
संसारव्यतिरेकाय हृद्योत्सेकाय चेतसः ।
प्रशमामृतसेकाय विवेकाय नमो नमः ॥ २ ॥ (युग्मम्)
क्षेमेन्द्रः सुहृदां प्रीत्या दर्पदोषचिकित्सकः ।
स्वास्थ्याय कुरुते यत्नं मधुरैः सूक्तिभेषजैः ॥ ३ ॥
कुलं वित्तं श्रुतं रूपं शौर्यं दानं तपस्तथा ।
प्राधान्येन मनुष्याणां सप्तैते मदहेतवः ॥ ४ ॥
अहंकाराभिभूतानां भूतानामिव देहिनाम् ।
हिताय दर्पदलनं क्रियते मोहशान्तये ॥ ५ ॥
कुलं कुलं कलयतां मोहान्मिथ्याभिमानिनाम् ।
लग्नः कोऽयं न जानीमः साभ्यर्थोवाग्रहग्रहः ॥ ६ ॥
कुलस्य कमलस्येव मूलमन्विष्यते यदि ।
दोषपङ्कप्रसक्तान्तस्तदावश्यं प्रकाशते ॥ ७ ॥
यथा जात्यतुरंगस्य न शस्यज्जात्य(?)मुच्यते ।
तथा गुणवतः सूनुर्निर्गुणस्तत्कुलोद्भवः ॥ ८ ॥

---

१. पुस्तकद्वयमस्य दर्पदलनस्य काश्मीरमहाराजाधितरस्मत्सुहृत्तमज्योतिर्वित्तमश्रीविश्वेश्वरशर्मभिः प्रहितम्. पुस्तकद्वयमपि काश्मीराक्षरलिखितं नवीनं नातिशुद्धं च. तत्र प्रथमं ३४ पत्रात्मकं क-संज्ञकम्, द्वितीयं ३३ पत्रात्मकं ख-संज्ञकं ज्ञेयम्. तृतीयमपि पुस्तकं जयपुर एव राजगुरुभट्टलक्ष्मीदत्तसूनुभट्टश्रीदत्तशर्मद्वारोपलब्धम्. तत्तु त्रुटितपत्रत्वात्तृतीयविचारपर्यन्तमेव वर्तते. मध्ये मध्ये च जलादिदोषेण गलिताक्षरमस्ति. तत्तु ग-संज्ञकम्. अत्र क-पुस्तके सर्वत्र विचारान्ते 'नीतिपद्धतौ' इति ग्रन्थस्य नामोपलभ्यते. ख-ग-पुस्तकयोस्तु दर्पदलनमिति. २. 'नमः शमनिधानाय' ख. ३. 'प्राधान्यतः' ख. ४. 'नीतिपद्धतौ' क. ५. 'मिथ्यामोहाभिमानिनाम्' क. ६. 'दोषपङ्कप्रसक्तान्तोत्तदा' क, 'दोषः पङ्कप्रसक्तान्ता···दा' ख. ७. 'प्रदृश्यते' ख. ८. 'गन्ययज्जात्यमुच्यते' क. ९. 'तद्गुणोद्भुतः' ख.

एकश्चेत्पूर्वपुरुषः कुले यज्वा बहुश्रुतः[1]।
अपरः पापकृन्मूर्खः कुलं कस्यानुवर्तताम् ॥ ९ ॥
लोके कुलं कुलं तावद्यावत्पूर्वसमन्वयः ।
गुणप्रभावे विच्छिन्ने समाप्तं सकलं कुलम् ॥ १० ॥
कुलाभिमानः कस्तेषां जघन्यस्थानजन्मनाम्[2] ।
कुलकूलंकषा येषां जनन्यो निम्नगाः स्त्रियः ॥ ११ ॥
कुलीनस्य कुलीनस्य[3] नवदारिद्यलज्जया ।
किं कुलेनाकुलीनाग्रे याच्ञादैन्यप्रलापिनः ॥ १२ ॥
गुणवत्कुलजातोऽपि निर्गुणः केन पूज्यते ।
दोग्ध्रीकुलोद्भवा धेनुर्वन्ध्या कस्योपयुज्यते ॥ १३ ॥
स्वयं कुलकृतस्तस्माद्विचार्य त्यज्यतां मदः ।
गुणाधीनं कुलं ज्ञात्वा गुणेष्वाधीयतां मतिः ॥ १४ ॥

मूलान्वेषणचिन्त्यमानमनिशं नास्त्येव पुंसां कुलं
स्त्रीणां यत्र परम्परैव[4] तनुते संतानतन्तुक्रमम् ।
एतासां कृतकप्रपञ्चरचनालज्जावतीनां पुरः
संसक्तस्मररूढगूढचरितं[5] तत्त्वेन जानाति कः ॥ १५ ॥

कुलाभिमानाभरणस्य[6] माता पितामही वा प्रपितामही वा ।
योषित्स्वभावेन यदि प्रदुष्टा तदेव[7] दोषः कुलमूलघातः ॥ १६ ॥

सूर्यवंशे त्रिशङ्कुर्यश्चण्डालोऽभून्महीपतिः ।
दिलीपरघुरामाद्याः क्षितिपालास्तत्कुलोद्भवाः ॥ १७ ॥
भूभुजां सोमवंश्यानां यः पूर्वपुरुषो बुधः ।
गुरुतल्पे स चन्द्रस्य जातो जगति विश्रुतः ॥ १८ ॥
कन्यापालनयः कर्णः क्षेत्रजाः पाण्डुनन्दनाः ।
सामान्यकुलचर्चाभिः किमन्याभिः प्रयोजनम् ॥ १९ ॥

---

१. 'लुब्धः पापकृत्' ख. २. 'जनानां स्थान' ख. ३. भूमौ लीनस्य. ४. 'पर-म्परैव' क-ख. ५. 'संसक्तस्मरदुर्दरूढ' ख. ६. कुलाभिमानिन इत्यर्थः. ७. 'यत्र' क.

मधुरायामभूत्पूर्वं ब्राह्मणः श्रीमतां वरः ।
यज्वा श्रुतनिधिर्नाम श्रुतिमान्विश्रुतश्रुतः ॥ २० ॥
तस्य मुक्तालता नाम प्रांशुर्वंशसमुद्भवा ।
बभूव वल्लभा पत्नी लावण्यललिताकृतिः ॥ २१ ॥
तस्यां तस्याभवत्कान्तः सुवृत्तः सगुणाग्रणीः ।
पुत्रस्तेजोनिधिर्नाम विद्याविमलदर्पणः ॥ २२ ॥
स धीमान्वेदविद्वादी कविः सर्वकलालयः ।
सभासु विदुषां चक्रे लज्जयावनतं शिरः ॥ २३ ॥
तं दर्पदोषज्वरितं ग्रीवास्तम्भयुतं रहः ।
प्रशमाय पिता स्नेहात्पथ्यं वक्तुं प्रचक्रमे ॥ २४ ॥
पुत्र मिथ्याभिमानेन किं प्रयातोऽसि मूढताम् ।
यन्मदद्विरदारूढः पूज्यपूजासु लज्जसे ॥ २५ ॥
नास्त्युपायः स संसारे दर्पश्वभ्रनिपातिनाम् ।
मूढानां क्रियते येन क्षणं हस्तावलम्बनम् ॥ २६ ॥
कष्टं केनोपदिष्टस्ते विनष्टविनयस्मृतेः ।
मदः साधुजनानिष्टः कुलविद्याधनोद्भवः ॥ २७ ॥
अस्थिरः कुलसंबन्धः सदा विद्याविवादिनी ।
मदो मोहाय मिथ्यैव मुहूर्तनिधनं धनम् ॥ २८ ॥
एतदेव कुलीनत्वमेतदेव गुणार्जनम् ।
यत्सदैव सतां सत्सु विनयावनतं शिरः ॥ २९ ॥
दयैव विदिता विद्या सत्यमेवाक्षयं धनम् ।
अकलङ्कविवेकानां शीलमेवामलं कुलम् ॥ ३० ॥

---

१. 'समभवत्' ख. २. 'सुगुणाग्रणीः' क. ३. 'विपुल' ख. ४. 'सर्वगुणनिर्वादी' ख. ५. 'कलामयः' ख. ६. 'विद्विषां चक्रे लज्जापुञ्जानत' क. ७. 'कष्टः' क. ८. 'प्रगल्भोऽयं कुलोद्भवः' क. ९. 'सुचिरः' क, 'सुशिरः' ख. १०. इदमुत्तरार्धं कपुस्तके नास्ति. ११. 'कुलार्जनम्' क. १२. 'कंचैव' ख.

अभोगसुभगा भूतिरदैन्यधवलं कुलम् ।
अदर्पविशदा विद्या भवत्युन्नतचेतसाम् ॥ ३१ ॥
द्वेषः कस्य न दोषाय प्रीतिः कस्य न भूतये ।
दर्पः कस्य न पाताय नोन्नत्यै कस्य नम्रता ॥ ३२ ॥
त्यागिना किं दरिद्रेण किं कुलीनेन पापिना ।
तुष्टेन किं कदर्येण दर्पान्धेन बुधेन किम् ॥ ३३ ॥
वैरायते सुहृद्भावः प्रदानं हरणायते ।
दर्पभूताभिभूतस्य विद्या मौर्ख्यशतायते ॥ ३४ ॥
गुणिनां मत्सरः शत्रुर्लुब्धानामतियाचकः ।
सर्व एव सदर्पाणां न कश्चित्प्रियवादिनाम् ॥ ३५ ॥
तस्मात्कार्यस्त्वया पुत्र नाहंकारः कदाचन ।
दर्पक्षीवः किलोग्रेण मोहग्राहेण गृह्यते ॥ ३६ ॥
वंशेनोन्नतिशालिना गुणगणेनान्तश्चमत्कारिणा
रूपेणातिमनोहरेण महता वित्तेन वृत्तेन वा ।
रोहन्मोहमहातरुर्मदमयः संजायते यः सदा
तस्यादौ दृढरूढमूलदलने कार्योऽभियोगस्त्वया ॥ ३७ ॥
गुणेष्वनादरं पुत्र प्राप्तश्रीरपि मा कृथाः ।
संपूर्णोऽपि घटः कूपाद्गुणच्छिन्नः पतत्यधः ॥ ३८ ॥
कुलाभिमानं त्यज संवृताग्रं धनाभिमानं त्यज दृष्टनष्टम् ।
विद्याभिमानं त्यज पण्यरूपं रूपाभिमानं त्यज काललेह्यम् ॥ ३९ ।
पुत्र प्रयत्नेन विबोधितोऽसि न मुञ्चसि त्वं यदि दर्पमोहम् ।
तदेष ते यास्यति शल्यभावं तीव्राभितापप्रसवोऽभिमानः ॥ ४० ॥
विभूतिनलिनीगजः सुजनमानमद्राशनि-
निपातपथदैशिकः सुकृतचित्रधूमोद्गमः ।

1. 'मौख्यं शिक्षायते' क. 2. 'वृत्तेन वित्तेन' क. 3. अयं श्लोकः क-पुस्तके. 4. 'संवृताग्रं' क, 'संवृताङ्गं' ख.

मातर्ब्राह्मणपुत्रोऽयं पश्य मामधमाशयः ।
विदारयन्प्रतोदेन वहन्तं हन्तुमुद्यतः ॥ ९० ॥
किं करोमि यमेनाहं लब्धोऽनेन दुरात्मना ।
अवटे पातयाम्येनं तनुं श्वभ्रे क्षिपामि वा ॥ ९१ ॥
इत्यार्तराविणं पुत्रं साश्रुनेत्राथ गर्दभी ।
तमुवाच ससंतापं स्नेहसंक्रान्ततद्व्यथा ॥ ९२ ॥
वहैनं दुर्मदं पुत्र सहस्व विषमां व्यथाम् ।
अस्य नास्त्येव हृदये दारुणे करुणाकणः ॥ ९३ ॥
रौद्रः शूद्रेण जातोऽयं ब्राह्मण्यां ब्रह्मवर्जितः ।
परदुःखं न जानाति चण्डं चण्डालचेष्टितः ॥ ९४ ॥
दयादरिद्रं हृदयं वचः क्रकचकर्कशम् ।
योनिसंकरजातानामेतैत्प्रत्यक्षलक्षणम् ॥ ९५ ॥
नवनीतोपमा वाणी करुणाकोमलं मनः ।
एकबीजप्रजातानां भवत्यवनतं शिरः ॥ ९६ ॥
रटति कटुकाटोपं कोपादकारणवैरवा-
　　न्स्पृशति न दयां दैन्यापन्ने विजातितया शठः ।
क्षणरसिकतालोलः सेवाश्रितानवमन्यते
　　गुणिषु कुरुते गर्वोद्गारानखर्वगलः खलः ॥ ९७ ॥
इति दुःसहमाकर्ण्य गर्दभीवचनं द्विजः ।
सर्वप्राणिस्वनाभिज्ञः संमोहाभिहतोऽपतत् ॥ ९८ ॥
स लब्धसंज्ञः सुचिरान्मेरुशृङ्गादिव च्युतः ।
तत्याज सहसा दर्पं नष्टाखिलकुलोन्नतिः ॥ ९९ ॥
संमूर्छितो विषेणेव स गत्वा मातुरन्तिकम् ।
यथाश्रुतं निवेद्यास्यै सर्वं पप्रच्छ तां रहः ॥ १०० ॥

१. 'विहन्तुं' ख. २. 'ससंतापा' क. ३. 'एतद्भवति' क. ४. 'प्रसूतानां' ख. ५. 'खर्वोद्गर्जदखर्वकलः' क. ६. 'मोहशृङ्गात्' ख.

पराशयनवज्वरश्चरितचन्द्रबिम्बाम्बुदः
सदा समदचेतसां गुणविनाशहेतुर्मदः ॥ ४१ ॥

अनित्यतेयं यदि नित्यता स्यात्सर्वं न पाके विरसं यदि स्यात्।
कुलार्थविद्यादिकृतोऽभिमानस्तदैष ते स्यान्न विडम्बनीयः ॥ ४२ ॥

अहं वादी विद्यापरिचयगुरुः सर्वविदुषा-
महं मानी वाणीप्रसरपरिपाकेन सुकविः।
अहं लीलाहंसः कुवलयदृशां मानसचरः
करोत्यन्तः पुंसामिति मदपिशाचः परिचयम् ॥ ४३ ॥

लक्ष्मीः क्षणक्षयवती परिरक्षितापि
कायोऽप्यपायनिचयस्य निकाय एव।
संभोगयोगसुखसंगतिरप्यतथ्या
मिथ्याभिमानकलनाघन एष शापः ॥ ४४ ॥

इत्युक्तोऽप्यसकृत्पित्रा लीलामीलितलोचनः।
स ययौ मत्तहस्तीव वेगादगणिताङ्कुशः ॥ ४५ ॥

पादेन क्षितिमालिखन्ति समदाः कोपोष्णनिःश्वासिन-
स्तिर्यग्जिह्मनिरीक्षणैर्विदधति भ्रूभङ्गभीमं मुखम्।
सस्वेदाङ्गुलिकन्दलीनिकषणैस्ताम्यल्ललाटत्वचः
कम्पन्ते हितमन्त्रवादसमये भूताभिभूता इव ॥ ४६ ॥

स कदाचिद्वराश्वेषु स्थितेषु जवकौतुकात्।
प्रतस्थे खरमारुह्य वयस्यगृहमुत्सवे ॥ ४७ ॥

तेन तीक्ष्णप्रतोदेन चोद्यमानः पुनः पुनः।
खरस्तीव्रव्यथार्तोऽभूत्प्रक्षरत्क्षतजोक्षितः ॥ ४८ ॥

स्रुताश्रुः कथितक्लेशः स्वस्वनोचितसंज्ञया।
सोऽवदत्संमुखायातां गर्दभीं जननीं निजाम् ॥ ४९ ॥

---

१. अय पादः ख-पुस्तके त्रुटितः. २. 'हेलाहंसः' क. ३. 'सद्गति.' ख. ४. 'हितवादमन्त्र' क. ५. 'स्रुतासः' क, 'मुखासुः' ख. ६. 'स्वस्वरोचित' क.

मातर्ब्राह्मणपुत्रोऽयं पश्य मामधमाशयः ।
विदारयन्प्रतोदेन वहन्तं हन्तुमुद्यतः ॥ ५० ॥
किं करोमि मयेनाहं लब्धोऽनेन दुरात्मना ।
अवटे पातयाम्येनं तनुं श्वभ्रे क्षिपामि वा ॥ ५१ ॥
इत्यार्तराविणं पुत्रं साश्रुनेत्राथ गर्दभी ।
तमुवाच ससंतापं स्नेहसंक्रान्ततद्व्यथा ॥ ५२ ॥
वहैनं दुर्मदं पुत्र सहस्व विषमां व्यथाम् ।
अस्य नास्त्येव हृदये दारुणे करुणाकणः ॥ ५३ ॥
रौद्रः शूद्रेण जातोऽयं ब्राह्मण्यां ब्रह्मवर्जितः ।
परदुःखं न जानाति चण्डं चण्डालचेष्टितः ॥ ५४ ॥
दयादरिद्रं हृदयं वचः क्रकचकर्कशम् ।
योनिसंकरजातानामेतैत्रत्यक्षलक्षणम् ॥ ५५ ॥
नवनीतोपमा वाणी करुणाकोमलं मनः ।
एकबीजप्रजातानां भवत्यवनतं शिरः ॥ ५६ ॥
रटति कटुकाटोपं कोपादकारणवैरवा-
न्स्पृशति न दयां दैन्यापन्ने विजातितया शठः ।
क्षणरसिकतालोलः सेवाश्रितानवमन्यते
गुणिषु कुरुते गर्वोद्गारानखर्वगलः खलः ॥ ५७ ॥
इति दुःसहमाकर्ण्य गर्दभीवचनं द्विजः ।
सर्वप्राणिस्वनाभिज्ञः संमोहाभिहतोऽपतत् ॥ ५८ ॥
स लब्धसंज्ञः सुचिरान्मेरुशृङ्गादिव च्युतः ।
तत्याज सहसा दर्पं नष्टाखिलकुलोन्नतिः ॥ ५९ ॥
संमूर्छितो विषेणेव स गत्वा मातुरन्तिकम् ।
यथाश्रुतं निवेद्यास्यै सर्वं पप्रच्छ तां रहः ॥ ६० ॥

१. 'विहन्तुं' ख. २. 'ससंतापा' क. ३. 'एतद्भवति' क. ४. 'प्रसूतानां भवत्येव' ख. ५. 'खर्वाखर्वगर्वखर्वकलः' क. ६. 'मोहशून्यान्' ख.

तनुत्यागप्रवृत्तेन पृष्टा सा तेन शापिता ।
अधोमुखी समवदद्वैलक्ष्यलुलिताक्षरैः[1] ॥ ६१ ॥
लज्जाकरमसत्कर्म कथं तत्कथयामि ते ।
संसारादपि साश्चर्यं गहनं स्त्रीविचेष्टितम् ॥ ६२ ॥
अपि कुञ्जरकर्णाग्रादपि पिप्पलपल्लवात् ।
अपि विद्युद्विलसिताद्विलोलं ललनामनः ॥ ६३ ॥
न बाध्यन्ते गुणैः पत्युर्न लक्ष्यन्ते परीक्षकैः ।
न धनेन निवार्यन्ते[2] शीलत्यागोद्यताः स्त्रियः ॥ ६४ ॥
[3]धनयौवनसंजातदर्पकालुष्यविप्लवाः ।
केनोन्नतपरिभ्रष्टा वार्यन्ते निम्नगाः स्त्रियः ॥ ६५ ॥

देहप्रदाः प्राणहरा नराणां भीरुस्वभावाः प्रविशन्ति वह्निम् ।
क्रूराः परं पल्लवपेशलाङ्ग्यो मुग्धा विदग्धानपि वञ्चयन्ति ॥ ६६ ॥

अहं पुरा रजःस्नाता काले कुसुमलाञ्छने ।
एकाकिनी पुष्पवने यौवनोन्मादिनी स्थिता ॥ ६७ ॥
व्रतदीक्षापरे पत्यौ सेर्ष्येव विनतानना ।
उन्नतस्तनविन्यस्तहस्ता चिरमचिन्तयम् ॥ ६८ ॥
एताः श्वसनसोत्कम्पाः सजृम्भाः षट्पदस्वनैः ।
सोत्कण्ठमिव[4] गायन्ति लताः पुष्परजस्वलाः ॥ ६९ ॥
उद्भिन्नयौवनाक्रान्ता प्रियभोगवियोगिनी ।
व्रतशेषजुषः पत्युर्दर्पेणैवास्मि निष्फला ॥ ७० ॥
इति चिन्ताक्षणे तस्मिँल्लग्नाभिमुखदर्पणः[5] ।
नापितः परिहासाख्यः शीलशत्रु[6]रिवाययौ ॥ ७१ ॥
स मामेकाकिनीं दृष्ट्वा नष्टसंवृतिकातराम् ।
पस्पर्शोत्कम्पिनीं पादनखग्रहणलीलया[7] ॥ ७२ ॥

---

१. 'ललिताक्षरैः' ख. २. 'विदार्यन्ते' क. ३. अयं श्लोकः ख-पुस्तके नास्ति. ४. 'सोत्कण्ठा इव' क. ५. 'ममाभिमुखमाययौ' क. ६. 'शीलपाशः' क. ७. 'दुष्टः पादग्रहणहेलया' क.

तत्राहं वृत्तकर्तव्या नीचसंगमलज्जया।
अधोमुखी च्युतं शीलं वीक्षमाणेव मूर्छिता॥ ७३॥
अविदूरे चरन्ती सा खरी सर्वं ददर्श तत्।
गूढगर्भप्रदं चैतत्कर्म मे कुलपातकम्॥ ७४॥
आस्तां किमनया पुत्र गुप्तवृत्तान्तचर्चया।
संवृतान्येव शोभन्ते शरीराणि कुलानि च॥ ७५॥
इति मातुर्वचः श्रुत्वा यातः स सहसान्धताम्।
जातिमानावपतनान्निर्जीवित इवाभवत्॥ ७६॥
अथ गत्वा निराहारः स कैलासाट्टहासिनीम्।
आशां ब्राह्मण्यबद्धाशश्चचार सुचिरं तपः॥ ७७॥
तस्योग्रतपसा तुष्टः स्वयमेव शतक्रतुः।
ब्राह्मण्यं याचमानस्य न ददौ दुर्लभं भुवि॥ ७८॥
पुनः पुनः स तपसा संतापितजगत्त्रयः।
सहस्राक्षवरात्प्राप देवत्वं न तु विप्रताम्॥ ७९॥
छन्दोदेवाभिधानोऽथ सोऽभवद्भुवि विश्रुतः।
प्रत्यब्दमेकदिवसे ह्यर्चनीयो मृगीदृशाम्॥ ८०॥
संमोहपातालविशालसर्पस्तस्मान्न कार्यः कुलजातिदर्पः।
शमक्षमादानदयाश्रयाणां शीलं विशालं कुलमामनन्ति॥ ८१॥
माता न यस्यास्त्यविवेकराशिः पुनर्भवाब्धिर्जनको न यस्य।
यस्य प्रसक्ता दयिता न तृष्णा स एव लोके कुशली कुलीनः॥ ८२॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते दर्पदलने कुलविचारः प्रथमः।

---

द्वितीयो विचारः।

धनेन दर्पः किमयं नराणां लक्ष्मीकटाक्षाञ्चलचञ्चलेन।
यत्कंधराबद्धमपि प्रयाति नैकं पदं कालगतस्य पश्चात्॥ १॥

---

१. 'सहसान्ध्यताम्' ख-ग. २. 'यस्यास्ति विवेकराशेः' क. ३. 'इति नीतिपद्धतौ कुलविचारः प्रथमः' क. ४ 'बन्धमपि' क.

कृत्वा समस्तं दिवसं धनानां निधानकुम्भीगणनाविधानम् ।
स लाजपेयापलमानशीलमश्नाति रात्रावुदरं सशूलम् (?) ॥ १३ ॥
निर्व्यञ्जनं निर्लवणं विनष्टमसृष्टपाकं विनिविष्टकष्टम् ।
अट्टहासं व्ययसंनिरोधात्तस्याभवद्वेश्म सशोकमूकम् ॥ १४ ॥
विच्छायं निःसुखानन्दं निर्दीपं जलवर्जितम् ।
तस्य कष्टं कदर्यस्य परलोकमभूद्गृहम् ॥ १५ ॥
स भक्तसंचये नित्यमभक्तः संततामयैः ।
सुवर्णवान्विवर्णोऽभूत्संपूर्णश्चिन्तया कृशः ॥ १६ ॥
पुण्यप्राप्या मतिर्नाम धनर्द्धिरिव रूपिणी ।
भार्याभूत्तदयोग्यस्य तस्य दैवविपर्ययात् ॥ १७ ॥
सदा प्रच्छाद्य सा भर्तुश्चकारातिथिसत्क्रियाम् ।
तेन व्ययविवादेषु शोषिता कलहाग्निना ॥ १८ ॥
तस्यां तस्याभवत्सूनुः सगुणश्चन्दनाभिधः ।
पित्रा लोभान्धकारेण नीतः पद्म इवान्यताम् ॥ १९ ॥
कदाचित्स्वगृहद्वारि दृष्ट्वा लब्धान्नमर्थिनम् ।
चकार कलहं नन्दः पत्न्या शोणितपातनम् ॥ २० ॥
सोऽवदत्कोपदष्टोष्ठः श्वसन्भार्यामधोमुखीम् ।
तत्स्पर्शपापं स्तनयोः क्षालयन्तीमिवाश्रुभिः ॥ २१ ॥
मम दास्यति को भिक्षां त्वत्पाणिक्षीणसंपदः ।
दारिद्र्यजननी यस्य स्थिता त्वं दुर्भगा गृहे ॥ २२ ॥
स्त्रियो यत्र प्रगल्भन्ते भर्तुराच्छाद्य कर्तृताम् ।
गृहं भवत्यवश्यं तदास्पदं परमापदाम् ॥ २३ ॥
गृहमेकं गृहस्थस्य गृहाणां शतमर्थिनः ।
भार्याभर्जितवित्तस्य नष्टा गृहपतेर्गतिः ॥ २४ ॥

१. 'पलमानशीलं मृद्राति' क. २. 'उदरे' ग. ३. 'अपृष्टपाकं' क, 'अमृष्टपाकं' ख. ४. 'सशोकमूलम्' क. ५. 'असुखानन्दं' ख. ६. अयं श्लोकः क-पुस्तके नास्ति. ७. 'इवाल्पताम्' क, 'इवान्धताम्' ग. ८. 'तद्गतिं' क.

सुरक्षितं तिष्ठति निर्निमित्तमरक्षितं तिष्ठति दैवयोगात्।
क्षितं कदर्यस्य न चोपयुक्तमुन्मत्तनृत्तोपममेव वित्तम्॥ २॥

कर्मोक्तिर्मर्मनिर्माणैः प्रातः प्रातः प्रधावताम्।
धनं धनं प्रलपतां निधनं विस्मृतं नृणाम्॥ ३॥

निच्छाययोर्निर्व्ययोः कष्टक्लिष्टकलत्रयोः।
विशेषः कूपदोषस्य कः कदर्यदरिद्रयोः॥ ४॥

ये धनादानसंनद्धा नेक्षन्ते निधनावधिम्।
निन्दन्तो लुब्धतां तेषामन्तेऽन्ये भुञ्जते धनम्॥ ५॥

उक्तं परस्वामिपतामनुक्तं यात्यदृश्यताम्।
हृदये शल्यतां धत्ते निधने धनिनां धनम्॥ ६॥

धनेन जीवितेनेव कण्ठस्थेन निरीक्षते।
पर्यन्तेऽप्यप्रकाशेन बन्धूनां मुखमातुरः॥ ७॥

यदर्जितं परिक्लेशैरर्जितं यत्र भुज्यते।
विभज्यते यदन्तेऽन्यैः कस्यचिन्मास्तु तद्धनम्॥ ८॥

विद्या विवादाय धनं मदाय प्रज्ञाप्रकर्षः परवञ्चनाय।
अत्युन्नतिर्लोकपराभवाय येषां प्रकाशस्तिमिरं हि तेषाम्॥ ९॥

अशान्तान्तस्तृष्णा धनलवणवारिव्यतिकरै-
र्गतच्छायः कायश्चिरविरसरूक्षाशनतया।
अनिद्रा मन्दोऽग्निर्नृपसलिलचौरानलभया-
त्कदर्याणां कष्टं स्फुटमधनकष्टादपि परम्॥ १०॥

श्रावस्त्यां सार्थवाहोऽभूदर्थनाथ इवापरः।
नन्दो नाम निरानन्दः कीर्तनेनार्थिनामपि॥ ११॥

स कदर्यः सदा सर्वजनलोकोद्वेगदुःसहः।
मूर्धशायी निधानानां कालव्याल इवाभवत्॥ १२॥

---

१. 'मर्म' ख. २. इतःप्रभृति श्लोकद्वयं ग-पुस्तके नास्ति. ३. 'तिमिरार तेषाम्' क-ख. ४. अयं श्लोको ग-पुस्तके नास्ति. ५. 'इति पुनः' क.

कृत्वा समस्तं दिवसं धनानां निधानकुम्भीगणनाविधानम्।
स लाजपेयापलमानशीलमश्नाति रात्रावुदरं सशूलम् (?) ॥ १३ ॥
निर्व्यञ्जनं निर्लवणं विनष्टमैमृष्टपाकं विनिविष्टकष्टम्।
अट्टहासं व्ययसंनिरोधात्तस्याभवद्वेश्म सशोकमूकम् ॥ १४ ॥
विच्छायं निःसुखानन्दं निर्दीपं जलवर्जितम्।
तस्य कष्टं कदर्यस्य परलोकमभूद्गृहम् ॥ १५ ॥
स भक्तसंचये नित्यमभक्तः संततामयैः।
सुवर्णवान्विवर्णोऽभूत्संपूर्णश्चिन्तया कृशः ॥ १६ ॥
पुण्यप्राप्या मतिर्नाम धनर्द्धिरिव रूपिणी।
भार्याभूत्तदयोग्यस्य तस्य दैवविपर्ययात् ॥ १७ ॥
सदा प्रच्छाद्य सा भर्तुश्चकारातिथिसत्क्रियाम्।
तेन व्ययविवादेषु शोषिता कलहाग्निना ॥ १८ ॥
तस्यां तस्याभवत्सूनुः सगुणश्चन्दनाभिधः।
पित्रा लोभान्धकारेण नीतः पद्म इवान्यताम् ॥ १९ ॥
कदाचित्स्वगृहद्वारि दृष्ट्वा लब्धान्नमर्थिनम्।
चकार कलहं नन्दः पत्न्या शोणितपातनम् ॥ २० ॥
सोऽवदत्कोपदष्टोष्ठः श्वसन्भार्यामधोमुखीम्।
तत्स्पर्शपापं स्तनयोः क्षालयन्तीमिवाश्रुभिः ॥ २१ ॥
मम दास्यति को भिक्षां त्वत्पाणिक्षीणसंपदः।
दारिद्र्यजननी यस्य स्थिता त्वं दुर्भगा गृहे ॥ २२ ॥
स्त्रियो यत्र प्रगल्भन्ते भर्तुराच्छाद्य कर्तृताम्।
गृहं भवत्यवश्यं तदास्पदं परमापदाम् ॥ २३ ॥
गृहमेकं गृहस्थस्य गृहाणां शतमर्थिनः।
भार्याभर्जितवित्तस्य नष्टा गृहपतेर्गतिः ॥ २४ ॥

---

१. 'पलभारशीलं मुद्राति' क. २. 'उद्दरे' ग. ३. 'अपृष्टपाकं' क, 'असष्टपाकं' ख. ४. 'सशोकशूलम्' क. ५. 'असुखानन्द' ख. ६. अयं श्लोकः क-पुस्तके नास्ति. ७. 'इवाल्पताम्' क, 'इवान्धताम्' ग. ८. 'तदयितं' क.

तृप्तिर्दं दर्शनेनापि जन्तोर्जीवितजीवितम् ।
द्रविणं येन रक्षन्ति स्वकायं भक्षयन्ति ते ॥ २५ ॥
जीवन्नप्यक्रियो निःस्वः शवोऽप्यर्थेन सक्रियः ।
दारिद्र्यं मरणं लोके धनमायुः शरीरिणाम् ॥ २६ ॥
एतदेवार्थसामर्थ्यं प्रत्यक्षेणोपलक्ष्यते ।
यत्स्कन्धबन्धे जीवद्भिः शवः शिबिकयोह्यते ॥ २७ ॥
प्रयच्छसि किमर्थिभ्यस्त्वमन्नं क्लेशसंचितम् ।
दीयते यत्किल प्रास्यै तत्प्राप्तं किं न रक्ष्यते ॥ २८ ॥
पुत्रदारादिसंबन्धः पुंसां धननिबन्धनः ।
क्षीणात्[2]पुत्राः पलायन्ते दारा[3] गच्छन्ति चान्यतः ॥ २९ ॥
पण्डिताः कवयः शूराः कलावन्तस्तपस्विनः ।
[4]वैद्यस्येव सवित्तस्य वीक्षन्ते मुखमातुराः ॥ ३० ॥
इति तस्य वचः श्रुत्वा कृपणस्यार्थनिष्क्रमम् ।
सा तमूचे समुचितं सत्त्वस्याभिजनस्य च ॥ ३१ ॥
सन्तः कुर्वन्ति यत्नेन धर्मस्यार्थे धनार्जनम् ।
धर्माचारविहीनानां द्रविणं मलसंचयः ॥ ३२ ॥
[5]यत्करोत्यरुचिं क्लेशं तृष्णां मोहं प्रजागरम् ।
न तद्धनं कदर्याणां हृदयव्याधिरेव तत् ॥ ३३ ॥
वर्धते यो धनव्याधिः सुखभोगवियोगकृत् ।
तस्याशु [6]शमनं पथ्यं राजवैद्यचिकित्सया ॥ ३४ ॥
लोभान्नाभूद्गृहे यस्य कदाचित्कश्चिदुत्सवः ।
नृत्यन्ति पटहैस्तस्य निधने धनभागिनः ॥ ३५ ॥
[7]कैणानामनुपाङ्गारान्यत्नेन परिरक्षसि ।
नृपकोपहृतं कोपे रत्नराशिं न पश्यसि ॥ ३६ ॥

---

१. एतत्पद्यद्वयं ग-पुस्तके नास्ति. २. 'क्षीणाः' ख-ग. ३. 'पत्न्यः' ख. ४. अयं श्लोको ग-पुस्तके नास्ति. ५. 'सः' क. ६. 'शमन' ख. ७. अयं श्लोको ग-पुस्तके नास्ति.

धनेन दर्पः को नाम यत्क्षणेन विनश्यति ।
[1]रक्ष्यमाणं व्ययेनैव भक्ष्यमाणमुपप्लवैः ॥ ३७ ॥
[2]विचार्यमाणस्तत्त्वेन दैवाधीनतया नृणाम् ।
न कस्यांचिदवस्थायां धनलोभः [3]प्रशस्यते ॥ ३८ ॥
कलौ काले खले मित्रे पुत्रे दुर्व्यसनान्विते ।
[4]तस्करेषु प्रवृद्धेषु लुब्धे राज्ञि धनेन किम् ॥ ३९ ॥
[5]ऋणिकैः [6]कलहैर्नित्यमच्छिन्नगणनागतैः ।
दानद्विषोऽनपत्यस्य मन्दाग्नेश्च धनेन किम् ॥ ४० ॥
सहसासादितार्थस्य राजद्रोहादिपातकैः ।
भयादव्ययशीलस्य शल्येनेव धनेन किम् ॥ ४१ ॥
[7]घोरप्रतिग्रहग्रामग्रस्तोदग्रगुणौजसः ।
तद्विभागानभिज्ञस्य धूर्तासस्य धनेन किम् ॥ ४२ ॥
रात्रिसेवा[8]वसन्नस्य शीतवातातपस्थितेः ।
प्रभुदृष्टिप्रहृष्टस्य कष्टार्हस्य धनेन किम् ॥ ४३ ॥
[9]प्रभूतलाभलोभेन प्रयुक्तार्थस्य सर्वतः ।
भूर्जदृष्टेन तुष्टस्य नष्टबुद्धेर्धनेन किम् ॥ ४४ ॥
[10]मलशीलस्य वणिजस्[11]थूत्कृतस्य जुगुप्सया ।
लशुनस्याशुचेः पाकगन्धेनेव धनेन किम् ॥ ४५ ॥
कौङ्कितेनाप्यलब्धेन भोगार्हे नवयौवने ।
जराजीर्णशरीरस्य भारेणेव धनेन किम् ॥ ४६ ॥
प्रव्रज्यात्यक्तगेहस्य जनगौरव[12]पूजया ।
धनसंघटितार्थस्य [13]वन्धेनेव धनेन किम् ॥ ४७ ॥

---

१. 'भक्ष्यमाणं व्ययेनैव रक्ष्यमाण' क-ख. २. अयं श्लोको ग-पुस्तके नास्ति. ३. 'प्रशाम्यति' क. ४. 'पिशुनेषु' क. ५. अय श्लोकः क-पुस्तके नास्ति. ६. 'फलहः' ग. ७. अयं श्लोकः क-पुस्तके नास्ति. ८. 'वसक्तस्य' क-ग. ९. इतः प्रभृति श्लोकपञ्चकं ग-पुस्तके नास्ति, गणनापत्रमात्रे विलोकितेनार्थेनेति भावः. १०. 'मानशीलस्य' क. ११. 'सीत्कृतस्य' क. १२. 'पूज्यया' क. १३. 'बन्धनेन' ख.

शिशोरङ्कुशशून्यस्य पातितस्यापथे विटैः ।
क्षणक्षयोपयोगेन स्वप्नेनेव धनेन किम् ॥ ४८ ॥
भार्यया स्वैरचारिण्या ग्रामस्थस्य नियोगिनः ।
प्रसभं भुज्यमानेन पापाप्तेन धनेन किम् ॥ ४९ ॥
शिष्यसंपादिताशेषभोगवस्त्रादिसंपदः ।
गुरोर्दम्भेन सिद्धस्य संचितेन धनेन किम् ॥ ५० ॥
राजकोपनियुक्तस्य चौर्यचिह्नेन केवलम् ।
व्ययेन शङ्कनीयस्य वधेनेव धनेन किम् ॥ ५१ ॥
अज्ञातभाविचौरादिदोषैर्नित्यविनाशिना ।
हास्यैकहेतुना लोके गणकस्य धनेन किम् ॥ ५२ ॥
पिटकस्येव पूर्णस्य पीडनीयस्य भूभुजा ।
निष्पाकशाकभोज्यस्य ग्रामीणस्य धनेन किम् ॥ ५३ ॥
कल्माकान्तविश्वस्य मषीकृष्णस्य भोगिनः ।
आसन्नबन्धनस्यान्ते दिविरस्य धनेन किम् ॥ ५४ ॥
गृहिणीविग्रहोग्रस्य मुहुस्तृण उपेक्षया (?) ।
कोपोपवासनिःश्वासंसंतप्तस्य धनेन किम् ॥ ५५ ॥
मलिनस्य कुवस्त्रस्य स्वल्पाशनपरस्य च ।
दारिद्र्याधिककष्टस्य कदर्यस्य धनेन किम् ॥ ५६ ॥
निर्धनाः सुखिनो दृष्टाः सधनाश्चातिदुःखिताः ।
सुखदुःखोदये जन्तोर्दैवाधीने धनेन किम् ॥ ५७ ॥
समानेषु व्यतीतेषु स्वजने शून्यचेतसः ।
विरसासारसंसारविरक्तस्य धनेन किम् ॥ ५८ ॥
यथावाप्तोपयुक्तार्थनिश्चिन्तस्य विपश्चितः ।
अल्पस्वपरितुष्टस्य संतुष्टस्य धनेन किम् ॥ ५९ ॥

वालस्तृणे च कनके च समानदृष्टि-
रिष्टं न वेत्ति विषयेष्वविशेषबुद्धिः
वित्तेन कोपपरिपोषसहेन तस्मि-
न्काले विवेकविकलो वद किं करोति ॥ ६० ॥

प्राणाधिकस्य सुहृदस्तरुणीजनस्य
पुत्रस्य वा गुणनिधेः सहसा वियोगे ।
शोकेन शोचति यदा विवशः शरीरी
रत्नाचलैरपि तदा वद किं करोति ॥ ६१ ॥

नार्थं शृणोति न पुनः स्थितिमीहते वा
स्पर्शं न वेत्ति न रसं न तथाधिवासम् ।
वृद्धः प्रयाति पवनेन यदा जडत्वं
भोगैर्धनेन च तदा वद किं करोति ॥ ६२ ॥

रोगार्दितः स्पृशति नैव दृशापि भोज्यं
तीव्रव्यथः स्पृहयते मरणाय जन्तुः ।
सर्वौषधेषु विफलेषु यदा विरौति
धान्यैर्धनेन च तदा वद किं करोति ॥ ६३ ॥

निद्राच्छेदसखेदबान्धवजनः सोद्वेगवैद्योज्झितः
पाकक्काथकदर्थितः परिजनैस्तन्द्रीभयात्क्षोभितः ।
भग्नस्वास्थ्यमनोरथः प्रियतमावष्टब्धपादद्वयः
पर्यन्ते वपुषः करोति पुरुषः किं शल्यतुल्यैर्धनैः ॥ ६४ ॥

अलंकृतः काञ्चनकोटिमूल्यैर्महार्हरत्नैर्गजवाजिवाहः ।
निमेषमात्रं लभते न जीवं कालेन काले शिखया गृहीतः ॥ ६५ ॥

निश्चेतनः काष्ठसमानकायस्त्यक्तः क्षणात्पुत्रकलत्रमित्रैः ।
शुभाशुभप्राक्तनकर्मभागी यत्नाप्तरत्नैर्वद किं करोति ॥ ६६ ॥

---

१. 'विषयेषु समान' क. २. 'कथार्दितः' ख. ३. 'प्रपतनावष्टब्ध' ख. ४. 'वि-वशः' क. ५. 'विवशः' ख. ६. 'यत्नात्तु' क.

तस्मात्प्रभूतविभवोद्भवविभ्रमेण
भूताभिभूत इव मा भव साभिमानः ।
एताः श्रियः प्रबललोभघनान्धकार-
विद्युल्लतापरिचिताः सहसैव यान्ति ॥ ६७ ॥

नष्टे लज्जितवित्तनाथविभवे साम्राज्यभोगे पुरा
श्रूयन्ते नलरामपाण्डुतनयाः कष्टं प्रविष्टा वनम् ।
शक्रः श्रीविरहे विवेश नलिनी नालान्तरालं ह्रिया
कस्यास्था विविधावधानविधिना निःसंनिधाने धने ॥ ६८ ॥

इत्युक्तोऽप्यसकृत्पत्न्या स्वलोभान्न चचाल सः ।
स्वभावः सर्वभूतानां सहजः केन वार्यते ॥ ६९ ॥
ततः स काले लोभेन भिषग्भैषज्यवर्जितः ।
कोपे निधानकुम्भेषु लीनदृष्टी व्यपद्यत ॥ ७० ॥
अदत्तभुक्तमुत्सृज्य धनं सुचिररक्षितम् ।
मूषका इव गच्छन्ति कदर्याः स्वक्षये क्षयम् ॥ ७१ ॥
तस्य यातस्य निरयं निनाय नृपतिर्धनम् ।
पर्यन्ते राजगामिन्यो लुब्धानां धनसंपदः ॥ ७२ ॥
तत्सूनोश्चन्दनस्याथ शेषार्थेनापि भूयसा ।
बभूव भूरिसंभारभोगव्ययमहोत्सवः ॥ ७३ ॥
मा कश्चिन्नाम नन्दस्य मन्दाग्नेरिह भाषताम् ।
भोगभङ्गभयेनेति प्रातस्तत्राब्रवीज्जनः ॥ ७४ ॥
धिग्धिग्धनं कुनिधनं नन्दस्येवात्मबाधनम् ।
दीयतां भुज्यतां सर्वमित्यूचुः पुरवासिनः ॥ ७५ ॥
ततः काले गते बाह्यकोष्ठद्वारान्तवासिनी ।
वृद्धान्धा सुषुवे पुत्रं चण्डाली खण्डिकाभिधा ॥ ७६ ॥

---

१. 'साम्राज्यहीना.' क. २. 'लीनः पृष्ठे' ख. ३. 'भूरिसंभार.' ख. ४. 'सा काचित्' ग. ५. 'इति तत्रात्रवज्जन.' क. ६. 'गोत्र' ख.

अन्धः कुब्जः कृशः खञ्जः कुष्ठी स्थूलगलग्रहः।
समूह इव दुःखानां स तस्यास्तनयोऽभवत् ॥ ७७ ॥
तदपुण्यैः परिक्षीणे मातुः क्षीरे स निश्चलः।
कृपया बान्धवस्त्रीभिः शुनीक्षीरेण वर्धितः ॥ ७८ ॥
एतदेव विरुद्धानां वैचित्र्यं पूर्वकर्मणाम्।
कृच्छ्रावसन्ना जीवन्ति विपद्यन्ते यदीश्वराः ॥ ७९ ॥
व्रणैः स पूतिकलिलक्राम्यत्क्रिमिकुलैर्वृतः।
पक्कणे कुणपाकारस्तस्थौ क्लिन्नतृणास्तरे ॥ ८० ॥
तस्मिन्नप्यतिवात्सल्यात्पुत्रास्थां जननी स्थिराम्।
बबन्ध वासनालीनः स्नेहमोहो हि दुःसहः ॥ ८१ ॥
स वर्धमानः शनकैः श्मशानाङ्गारधूसरः।
पक्कणोग्रपिशाचानामप्युद्वेगकरोऽभवत् ॥ ८२ ॥
यष्टीनिषण्णगमनः कुष्ठक्लेदजुगुप्सितः।
स जगाम पथा येन प्रययौ तेन नापरः ॥ ८३ ॥
अत्रान्तरे चन्दनस्य पितुः श्राद्धदिने महान्।
बभूवार्थिसमूहान्नदाने कलकलस्वनः ॥ ८४ ॥
ततः कर्परमादाय स चण्डालशिशुः शनैः।
आचामयाचकः कृच्छ्राद्द्वाराग्रभुवमाययौ ॥ ८५ ॥
तं दृष्ट्वा चन्दनः सौधाद्विप्राणां मार्गदूषणम्।
निवार्यतामयं प्राप्तस्तूर्णमित्यवदत्क्रुधा ॥ ८६ ॥
प्रभुभ्रूभङ्गभीतेन लगुडेनाहतस्ततः।
द्वारपालेन सावर्तः स कपोत इवाभवत् ॥ ८७ ॥
स निर्भिन्नललाटास्थिप्रक्षरत्क्षतजोक्षितः।
क्षणं संमूर्छितः प्राप क्लेशभोगाय जीवितम् ॥ ८८ ॥
अदूरवर्तिनी श्रुत्वा चण्डाली तद्व्यथारवम्।
उपसृत्य शुशोचार्ता स्पृशन्ती तस्य शोणितम् ॥ ८९ ॥

---

१. 'स्थूलमूलगलग्रहः' ख. २. 'तृणान्तरे' ख. ३. आचामो मण्डः. ४. 'को

केन निष्करुणेनेदं दर्शितं बत पौरुषम्।
प्रक्लिन्नकायविकले येनास्मिन्सुभटायितम्॥ ९०॥

कायापापमयीं दुःखदशां दृष्ट्वास्य दुःसहाम्।
वैराग्यावसरे केन क्रौर्यमेवंविधं कृतम्॥ ९१॥

आर्तिमेवंविधामस्य हृदयच्छेदिनीमिमाम्।
विलोक्य कुर्यात्कः पापं पापं हि पदमापदाम्॥ ९२॥

यद्यनेन महत्पापं न कृतं पूर्वजन्मनि।
तदुच्यतां स्फुरत्कष्टा दृष्टा कस्येदृशी दशा॥ ९३॥

ये दृश्यन्ते विपत्क्लेशविशेषविषमव्यथाः।
त एव गुरवः पापवापस्य (?) करणे नृणाम्॥ ९४॥

करुणार्हेषु शूराणामुपकारिषु वैरिणाम्।
वञ्चकानामपापेषु पापसंख्यां करोति कः॥ ९५॥

तारं रोदिषि किं पुत्र सहस्वाघातजां रुजम्।
अशर्मकर्मनिर्माणं मर्मच्छेदि शरीरिणाम्॥ ९६॥

इति तस्यां प्रलापिन्यां प्रेक्षवासे जैने जिनः।
अनाथबन्धुः करुणासिन्धुस्तेनाययौ पथा॥ ९७॥

भवभ्रमासक्तपरिश्रमाणां रागादिदोषैरुपतापितानाम्।
आश्वासनेनामृतसोदरेण लिम्पन्निव द्यां द्युतिचन्दनेन॥ ९८॥

दृष्ट्वा तमापद्गतमुग्ररोगभग्नं निमग्नं व्यसने विविग्नम्।
व्यलम्बतार्द्रः करुणारसेन तत्तापशान्त्यै भगवाञ्जिनेन्द्रः॥ ९९॥

तत्संनिधानेन मुहूर्तमात्रं स निर्व्यथः स्वास्थ्यमिवाससाद।
निहन्ति पापं कुशलं प्रसूते संदर्शनं सत्त्वहिताशयानाम्॥ १००॥

ज्ञात्वाथ चन्दनः प्राप्तं भगवन्तं तथागतम्।
विकसत्कुसुमस्मेरां पूजामादाय निर्ययौ॥ १०१॥

---

१. 'तत्र' ग. २. 'पापवापफलत्वकरे' क. ३. 'अपकारिषु' ख. ४. 'जिनः स्वयम्' ग. ५. 'धृतिसोदरेण' ग. ६. 'भिन्न—विलग्नम्' ग. ७. 'मयाशयानाम्' ख-ग.

भगवानपि साश्चर्यप्रभावादुद्गतं भुवः ।
हैमं कमलमारुह्य तस्थौ पर्यङ्कलीलया ॥ १०२ ॥
प्रणतं चरणालीनं पूजाव्यग्रकरं पुरः ।
बभाषे भगवान्प्रीतो भिक्षुसंसदि चन्दनम् ॥ १०३ ॥
किमयं याचमानोऽपि वराकस्ताडितः क्रुधा ।
कृतं न कृपणे कस्मात्करुणाकोमलं मनः ॥ १०४ ॥
दयार्द्राः सर्वसत्त्वेषु भवन्ति विमलाशयाः ।
एवंविधानां दुःखानां कारणं कलुषं मनः ॥ १०५ ॥
कृतक्रूरापकारेषु विद्वेषपरुषेष्वपि ।
भवन्ति सन्तः क्लेशोष्मशोषितेषु न कर्कशाः ॥ १०६ ॥
क्लिष्टः कष्टं कदर्योऽयं लोभेनापरजन्मनि ।
अप्रदानोद्यतेनाद्य कायक्लेशेन पीडितः ॥ १०७ ॥
एष नन्दस्तव पिता पूर्णार्थमलसंचयात् ।
आवृतः पापरोगेण चण्डालत्वमुपागतः ॥ १०८ ॥
जन्मान्तरेऽप्यतोऽन्यस्मिन्रोगयोगान्मुमूर्षुणा ।
सुवर्णं दत्तमेतेन तेनायं सधनोऽभवत् ॥ १०९ ॥
अन्त्यक्लेशदशायां यन्मुमूर्षुः संप्रयच्छति ।
तच्चाभोग्यं भवत्यस्य लोभादन्येषु जन्मसु(?) ॥ ११० ॥
दत्तं न वित्तं करुणानिमित्तं लोभप्रवृत्तं कृतमेव चित्तम् ।
यैः संचयोत्साहरसैः प्रवृत्तं शोचन्ति ते पातकमात्मवृत्तम्॥१११॥
इत्युक्त्वा भगवान्पुण्यां विदधे धर्मदेशनाम् ।
यया क्लेशप्रहाणार्हमर्हत्त्वं प्राप चन्दनः ॥ ११२ ॥
तस्मान्न दर्पः पुरुषेण कार्यः प्रवर्धमानेन धनोदयेन ।
अदानभोगोपहतं हि वित्तं पुंसां परत्रेह च दुर्निमित्तम् ॥ ११३ ॥
इति श्रीव्यासदासापराख्यक्षेमेन्द्रविहिते दर्पदलने धनविचारो द्वितीयः ।

---

१. 'प्रीत्या' क. २. 'क्लिष्टकष्टः' ख. ३. 'मुमुक्षुणा' क. ४. 'तदभोग्यं' क. ५. 'रसात्' क. ६. 'नीतिपद्धतौ' क.

तृतीयो विचारः ।

संसारदोषप्रशमैकहेतुः करोति विद्या यदि दर्पमोहम् ।
तदन्धकराय भवत्यवश्यं साभ्रे नभस्यंशुमतोऽंशुमाला ॥ १ ॥
शिक्षाभ्यासेन सुव्यक्तं पठन्त्यपि विहंगमाः ।
क एष विद्यया दर्पः कष्टप्राप्तैकदेशया ॥ २ ॥
सा विद्या या मदं हन्ति सा श्रीर्यार्थिषु वर्षति ।
धर्मानुसारिणी या च सा बुद्धिरभिधीयते ॥ ३ ॥
यो विद्यागुरुरायाति लघुतां शीलविप्लवात् ।
तस्मै पण्डितमूर्खाय विपरीतात्मने नमः ॥ ४ ॥
विद्यां प्राप्य कृतं येन विद्वेषकलुषं मनः ।
तेनात्मा हन्त मूर्खेण स्नात्वा पांसूत्करैर्वृतः ॥ ५ ॥
विद्या श्रीरिव लोभेन द्वेषेणायाति निन्द्यताम् ।
भाति नम्रतयैवैषा लज्जयेव कुलाङ्गना ॥ ६ ॥
स्पृहणीया सतां तावद्विद्या संतोषशालिनी ।
यावन्न पार्थिवास्थानपण्यस्थाने प्रसारिता ॥ ७ ॥
सद्गुणाः शुचयस्तावद्यावद्वादेन शोधकैः ।
प्रक्षाल्य न परीक्ष्यन्ते खलैर्भूपालसंसदि ॥ ८ ॥
असमाप्यहृदयो यस्य गुणसारं परीक्षते ।
उचितैव सुवर्णस्य तस्याग्निपतने रुचिः ॥ ९ ॥
कविभिर्नृपसेवासु चित्रालंकारहारिणी ।
वाणीवेश्येव लोभेन परोपकरणीकृता ॥ १० ॥
शाब्दिकैः कलहोदर्कैस्तर्कसंपर्ककर्कशा ।
वाणी करुणधारेव मर्ममूले निपातिता ॥ ११ ॥
मायुतेनोपदर्शायेव तार्किकैः कर्कशीकृता ।
वाणी विवादिभिः क्रूरैः सौनिकैरिव कर्तरी ॥ १२ ॥

---

१. 'अनुमदनुमाला' क. २. 'दंसत्पुत्रैन' क. ३. 'गोदकः' क. ४. 'शोरदालिनी' ख-ग. ५. 'स्तुतिदक्षैः' क-ग. ६. अयं श्लोकः ख-ग-पुस्तकयोर्नास्ति.

शीलं नैव बिभर्ति कीर्तिविमले धत्ते न धर्मे धियं
मात्सर्येण मनीषिणां प्रतनुते पारुष्यदोषं गिरा।
तर्कोक्त्या परलोककर्म नयति प्रायेण संदिग्धतां
यस्तस्याफलशास्त्रपाठनपटोर्मूढस्य किं विद्यया॥ १३॥
ये संसत्सु विवादिनः परयशःशल्येन शूलाकुलाः
कुर्वन्ति स्वगुणस्तवेन गुणिनां यत्नाद्गुणाच्छादनम्।
तेषां रोषकषायितोदरदृशां द्वेषोष्णनिःश्वासिनां
दीप्ता रत्नशिखेव कृष्णफणिनां विद्या मनोद्वेगभूः॥ १४॥
शोच्यतां यात्यशीलेन विद्वेषेणापवित्रताम्।
दर्पशापहता विद्या नश्यत्येव सहायुषा॥ १५॥
तपोवने मुनिवरौ मान्यौ मुनिमनीषिणाम्।
पुरा रैभ्यभरद्वाजौ सुहृदौ चक्रतुः स्थितिम्॥ १६॥
पुत्रावभूतां रैभ्यस्य विद्याविमलदर्पणौ।
स्पृहणीयौ गुणज्ञानां सर्वावसुपरावसू॥ १७॥
भरद्वाजस्य पुत्रोऽभूद्यवक्रीताभिधः सुताः।
भवन्त्यविद्याः प्रायेण पितृप्रणयलालिताः॥ १८॥
स युवा रैभ्यतनयौ सर्वत्र श्रुतिविश्रुतौ।
पश्यन्नात्मनि सासूयः पश्चात्तापाकुलोऽभवत्॥ १९॥
स गत्वा जाह्नवीतीरं निराहारकृशाश्चिरम्।
चचार निश्चलतनुस्तीव्रं विद्याप्तये तपः॥ २०॥
तं तपस्तापितात्मानं स्वयमेत्य शतक्रतुः।
उवाच मिथ्यानिर्बन्धः कोऽयं ते मुनिपुत्रक॥ २१॥
अनधीता गुरुमुखात्कथं विद्याधिगम्यते।
अनभ्यासेन पाण्डित्यं नभःकुसुमशेखरः॥ २२॥
अधुना विद्यया किं ते विद्यार्हं शैशवं गतम्।
यत्फलं किल विद्यायास्तस्मिन्नवहितो भव॥ २३॥

---

१. 'कीर्तिविमला' क. २. 'तस्याः' क-ख-ग. ३. 'गुणज्ञानात्' ग.

शीलं परहितासक्तिरनुत्सेकः क्षमा धृतिः।
अलोभश्चेति विद्यायाः परिपाकोज्ज्वलं फलम् ॥ २४ ॥
विवेकरहिता विद्या द्वेषरोषोष्मशोषिता।
दर्पाशनिनिपातेन हता वल्लीव निष्फला ॥ २५ ॥
एतदर्थं श्रुते बुद्धिं करोति द्वेषदूषितः।
यद्विवादैः करिष्यामि मानम्लानिं मनीषिणाम् ॥ २६ ॥
त्यक्त्वा प्रशमसंतोषौ विद्यायाः प्रथमं फलम्।
नानाविपर्ययपथैर्गच्छन्त्यर्थफलार्थिनः ॥ २७ ॥
उपकाराय या पुंसां न परस्य न चात्मनः।
पत्रसंचयसंभारैः किं तया भारविद्यया ॥ २८ ॥
अन्यायः प्रौढवादेन नीयते न्यायतां यया।
न्यायश्चान्यायतां लोभात्किं तया क्षुद्रविद्यया ॥ २९ ॥
स्वजिह्वास्तुतिभिर्नित्यं पर्वीवोद्घाटितांशुका।
क्रियते या सभामध्ये किं तया धृष्टविद्यया ॥ ३० ॥
अनुष्ठानेन रहिता पाठमात्रेण केवलम्।
रञ्जयत्येव या लोकं किं तया शुकविद्यया ॥ ३१ ॥
गोप्यते या श्रुतज्ञस्य मूर्खस्याग्रे प्रकाश्यते।
न दीयते च शिष्येभ्यः किं तया शठविद्यया ॥ ३२ ॥
परोत्कर्ष समाच्छाद्य विक्रयाय प्रसार्यते।
या गुहुर्धनिनामग्रे किं तया पण्यविद्यया ॥ ३३ ॥
न तीर्यते यया घोरः संसारमकराकरः।
नित्यं चित्तानुबन्धिन्या किं तया मोहविद्यया ॥ ३४ ॥
नित्याभ्यासप्रयासेन जीवितं क्षीयते यया।
त्रिवर्गलोपरोधेन किं तया कष्टविद्यया ॥ ३५ ॥

१. 'संतोष' क. २. 'अन्न' क. ३. 'अन्यायः' ग. ४. 'नीयते' ग. ५. 'दृष्ट' क-ख; 'रुष्ट' ग. ६. 'लोकान्' ग. ७. 'लाक्ष' ग. ८. 'मकराकरः' ग. ९. इदमर्धं ...पुस्तके नास्ति. १०. 'प्रमोदेन' ग.

न विवेकोचितां बुद्धिं न वैराग्यमयं मनः ।
संपादयति या पुंसां किं तया जडविद्यया ॥ ३६ ॥
शौचाशौचविवादेन त्यक्ता(?) श्रोत्रियता यया ।
मिथ्याभिमानयोगिन्या किं तया दम्भविद्यया ॥ ३७ ॥
परमात्सर्यशल्येन व्यथा संजायते यया ।
सुखनिद्रापहारिण्या किं तया शूलविद्यया ॥ ३८ ॥
परसूक्तापहारेण स्वसुभाषितवादिना ।
उत्कर्षः स्थाप्यते यस्या किं तया चौरविद्यया ॥ ३९ ॥
अनभ्यासहतोत्साहा परेण परिभूयते ।
या लज्जाजननी जाड्यात्किं तया मन्दविद्यया ॥ ४० ॥
लोभः प्रभूतवित्तस्य रागः प्रव्रजितस्य च ।
न यया शान्तिमायाति किं तयालीकविद्यया ॥ ४१ ॥
यया भूपतिमाश्रित्य परेषां गुणनिन्दकः ।
दानमानोन्नतिं हन्ति किं तया दोषविद्यया ॥ ४२ ॥
गृहे धाराधिरूढापि सभायां न प्रवर्तते ।
प्रतिभाभङ्गसङ्गाद्या किं तया मूकविद्यया ॥ ४३ ॥
भण्डं पिण्डार्थिनां द्वेषपिशुनानां शुनामिव ।
यया संजायते युद्धं किं तया वधविद्यया ॥ ४४ ॥
विस्मृता यावल्लिप्तस्य कण्ठे कृतगतागता ।
जीववृत्तिरिव क्षीणा किं तया नृतविद्यया ॥ ४५ ॥
रसायनी जराजीर्णश्चिररोगी यया भिषक् ।
धातुवादी दरिद्रश्च किं तया हास्यविद्यया ॥ ४६ ॥

---

१. अयं श्लोको ग-पुस्तके नास्ति. २. 'वादिनः' ख-ग. ३. 'प्राप्यते' क. ४. 'धाराभिरूढापि' क. ५. 'मूढ' क. ६. अयं श्लोकः ख-ग-पुस्तकयोर्नास्ति. ७. अयं श्लोको ग-पुस्तके नास्ति. ८ 'धर्मवादी' क.

यथा मुग्धमृगाः कूटैः पीड्यन्ते तीव्रमार्गणैः ।
आशापाशावलम्बिन्या किं तया लुब्धविद्यया ॥ ४७ ॥
परोपतापः क्रियते वेश्यादिकुहकैर्यया ।
यन्त्रतन्त्रानुसारिण्या किं तया व्याजविद्यया ॥ ४८ ॥
गुरुर्गर्वात्क्रिविद्वेषाद्यतिर्भोगपरिग्रहात् ।
नृपः पापाद्द्विजः क्रोधात्सा विद्या वार्यते यया ॥ ४९ ॥
विद्यागुणाले विदुषां ये विवेकनिबन्धनम् ।
स्वल्पशिल्पकलातुल्याः शेषा जीवितहेतवः ॥ ५० ॥
वीणेव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः ।
व्यसोः कुसुममालेव विद्या लब्धस्य निष्फला ॥ ५१ ॥
द्वेषदर्पहता विद्या कामक्रोधहता मतिः ।
लोभमोहहता वृत्तिर्येषां तेषां किमायुषा ॥ ५२ ॥

दूरे व्याकरणं कुरुष्व विषमं धातुक्षयक्षोभितं
मीमांसा विरसा न शोषयति किं तर्करलं कर्कशैः ।
न क्षीवः पतति स्मरभ्रमकरैः किं नव्यकाव्यासवै-
स्तत्स्तान्नित्यहिताय शान्तमनसां वैराग्यमारोग्यदम् ॥ ५३ ॥

इत्युक्तः सुरराजेन निश्चयान्न चचाल सः ।
अभिमानगृहीतानां दुर्निवारो हि दुर्ग्रहः ॥ ५४ ॥
अथ वृद्धद्विजो भूत्वा सिकतामुष्टिभिः शनैः ।
शक्रः प्रचक्रमे कर्तुं गङ्गायां सेतुबन्धनम् ॥ ५५ ॥
तं दृष्ट्वा निष्फलक्लेशविफलोद्योगनिश्चलम् ।
मुनिसूनुः कृपाविष्टः पप्रच्छाभ्येत्य सस्मितः ॥ ५६ ॥
ब्रह्मन्क एष निर्बन्धस्तव बन्ध्यसमुद्यमे ।
निष्फलं विपुलायासं न प्राज्ञाः कर्म कुर्वते ॥ ५७ ॥

---

१. 'दत्र मार्गणैः' ख. २. अयं श्लोको ग-पुस्तके नास्ति. ३. 'वेश्यादि' क.

अस्मिन्कुटिलकल्लोलदोलाविक्षोभितेऽम्भसि ।
हास्यहेतुः कथं सेतुः सिकतामुष्टिभिर्भवेत् ॥ ५८ ॥
इत्युक्ते मुनिपुत्रेण ब्राह्मणस्तमभाषत ।
अहो परोपदेशेषु सर्वो भवति पण्डितः ॥ ५९ ॥
अनधीतां बलाद्विद्यां तपसा प्राप्तुमिच्छसि ।
यथा त्वं निष्फलारम्भस्तथाहमपरो जडः ॥ ६० ॥
एतद्विजवचः श्रुत्वा यथार्थं स्थगितोत्तरः ।
तथापि दृढसंकल्पः स्वकृत्यान्न चचाल सः ॥ ६१ ॥
अथास्य तीव्रतपसा शक्रः प्रादाद्वरं वरम् ।
सर्वविद्यानिधिर्येन सहसैव बभूव सः ॥ ६२ ॥
प्राप्तविद्यः स सोत्साहस्तूर्णं गत्वा स्वमाश्रमम् ।
निजां तपःफलवाप्तिकथां पित्रे न्यवेदयत् ॥ ६३ ॥
तं मंदाक्रान्तमश्रान्तवृत्तसंस्कृतवादिनम् ।
भरद्वाजः प्रमोदेऽपि खेदाकुल इवावदत् ॥ ६४ ॥
पुत्र प्राप्ता त्वया विद्या तपस्तापात्किमुच्यते ।
किं त्वागामिभयादेतन्न युक्तं प्रतिभाति मे ॥ ६५ ॥
इतः समीपे रैभ्यस्य कोपनस्य तपोवनम् ।
विद्यामदान्धौ तत्पुत्रावर्वावसुपरावसू ॥ ६६ ॥
तावश्रान्तश्रुतोन्मादौ त्वं चाभिनवपण्डितः ।
तत्संगमे द्वेषमयः सदा संनिहितः कलिः ॥ ६७ ॥
ग्रीवास्तम्भभृतः परोन्नतिकथामात्रे शिरःशूलिनः
सोद्वेगभ्रमणप्रलापविपुलक्षोभाभिभूतस्थितेः ।
अन्तर्द्वेषविषप्रवेशविषमक्रोधोष्णनिःश्वासिनः
कष्टा नूतनपण्डितस्य विकृतिर्भीमज्वरारम्भभूः ॥ ६८ ॥

---

१. 'यथात्वं' क-ग. २. 'सदाक्रान्तविश्रान्तवृत्तसंस्थित' क. ३. 'भाषिणम्' ग. 'नूनमपण्डितस्य' इति शार्ङ्गधरपद्धतिगतः पाठः.

तव तत्र प्रयातस्य युक्तायुक्तविवादिनः ।
भविष्यति मुनेः शापादवश्यं मदनिग्रहः ॥ ६९ ॥
शुक्तिकारजतज्ञाननीलपीतादिदर्शनैः ।
उन्मादं जनयत्येव विद्यादर्पपिशाचिका ॥ ७० ॥
एष विद्योपदेशेन विनाशः प्रार्थितस्त्वया ।
रैभ्याश्रमो न गन्तव्यः कर्तव्यं यदि मद्वचः ॥ ७१ ॥
इत्युक्तोऽप्यसकृत्पित्रा स गत्वा रैभ्यपुत्रयोः ।
व्यधाद्विवादनिर्वेदैः सदा विद्यामदक्षितिम् ॥ ७२ ॥
तं दर्पमत्तं साकोपभीमभ्रूभङ्गदुर्मुखौ ।
तावूचतुर्मनःसक्तविद्याविद्वेषशूलिनौ ॥ ७३ ॥
कनीयानावयोर्यस्माद्वयसा त्वं श्रुतेन च ।
करोषि वादैराक्षेपं तस्मादायुःक्षयोऽस्तु ते ॥ ७४ ॥
इत्युक्तोऽपि क्रुधा ताभ्यां न दर्पाद्विरराम सः ।
न प्रसन्नं न च क्रुद्धं गणयन्ति मदोद्धताः ॥ ७५ ॥
अत्रान्तरे भ्रमद्भृङ्गमालाभ्रूभङ्गविभ्रमः ।
कालः प्रोषितकान्तानां पुष्पकालः समाययौ ॥ ७६ ॥
क्षिप्तपत्राः सुमनसां रजःकलुषितेक्षणाः ।
सद्वेषा इव विद्वांसश्चेरुर्मलयमारुताः ॥ ७७ ॥
माधुर्यललितोदारवाणीविलसितैर्मुहुः ।
कवीनामिव संघर्षः कोकिलानामजायत ॥ ७८ ॥
रैभ्ये प्रयाते पुत्राभ्यां सह स्नातुं सरित्तटम् ।
भरद्वाजात्मनोऽभ्येत्य प्रविवेश तदाश्रमम् ॥ ७९ ॥
तत्र पुष्पोच्चयव्यग्रां धर्मपत्नीं परावसोः ।
सोऽपश्यत्सुप्रभां नाम रूपदर्पापहां रतेः ॥ ८० ॥
उटजाङ्गनसक्तानां हरिणीनां विलोकने ।
विलासदीक्षां कुर्वाणां तरलापाङ्गभङ्गिभिः ॥ ८१ ॥

1. 'चेरुः' ख.

तां दृष्ट्वा चन्द्रवदनां मदनानन्ददेवताम्।
बभूवोत्क्रान्तमर्यादः सहसैव मुनेः सुतः ॥ ८२ ॥
स ब्रह्मचारी कामेन नवेन तरलीकृतः।
अभिलापोचितं वक्तुमनभिज्ञोऽप्युवाच ताम् ॥ ८३ ॥
उन्मादनमिदं रूपमनुरूपं मनोभुवः।
समुत्सिक्तमिवासक्तं करोति मम मानसम् ॥ ८४ ॥
विद्याविनयमुत्सृज्य संत्यज्य गुरुयन्त्रणाम्।
त्वयि प्रवृत्तं चित्तं मे प्राग्जन्मप्रेमबन्धनम् ॥ ८५ ॥
जानामि यत्कृतस्यास्य विपाके कर्मणः फलम्।
तथाप्यभिमतं धर्तुं न शक्नोमि करोमि किम् ॥ ८६ ॥
न श्रुतेन न वित्तेन[1] न वृत्तेन न कर्मणा।
प्रवृत्तं शक्यते रोद्धुं मनोभवपथे मनः ॥ ८७ ॥
इत्युक्त्वा तां भयोद्भ्रान्तनयनामाश्रमोन्मुखीम्।
गन्तुं प्रवृत्तां सोऽभ्येत्य जग्राहांशुकपल्लवे ॥ ८८ ॥
कदली कुञ्जरेणेव तरसा तेन निर्जने।
कृष्यमाणा तमवदत्सा निषेधचलाङ्गुलिः ॥ ८९ ॥
मा मा मलिनय स्वच्छं शीलं मम तथात्मनः।
विद्याया निरवद्यायाः किमेतदुचितं फलम् ॥ ९० ॥
शीलशुक्लांशुकां त्यक्त्वा लज्जां निजवधूमिव।
गृह्णासि परनारीणां पाणिना पटपल्लवम् ॥ ९१ ॥
किमेतदित्यनुचितं दृष्ट्वा नूनं कमण्डलुः।
उद्ग्रीवः कौतुकेनेव मुखं तव निरीक्षते ॥ ९२ ॥
बिभ्रतोऽन्तर्गतरसां कुसुमेपुरुचिं नवाम्।
जटावल्कलभारस्ते तरोरिव न शान्तये ॥ ९३ ॥
पापसंकल्पमात्रेण त्रपयाधोमुखी तव।
पतिता स्पर्शभीत्येव कम्पलोलाक्षमालिका ॥ ९४ ॥

---

१. 'वृत्तेन निवृत्तेन' क.

आसनाब्जे सरस्वत्या जपलोलरदच्छदे ।
दुर्नयोक्तिर्न युक्तेयं मुखे तव मनीषिणः ॥ ९५ ॥
इयं तपोवनमही विवेकजननी कथम् ।
जनयत्यभिलाषं ते जननीवाजितात्मनः ॥ ९६ ॥
दुर्मदो(दुर्दमो) यौवनभरस्तुरङ्ग इव हारकः ।
सर्वथा शिथिलात्मानमवटे क्षिपति क्षणात् ॥ ९७ ॥
धिग्धियं किं विवेकेन दूरे विश्राम्यतु श्रुतम् ।
धार्यते[1] यैर्न संसारविकारस्खलितं मनः ॥ ९८ ॥
क्व विद्या विदिताशेषकार्याकार्यविमर्शधीः ।
मूढता क्व च दुष्कर्ममहापापकुटुम्बिनी[2] ॥ ९९ ॥
इत्युच्यमानोऽपि यदा न स तत्याज दुर्ग्रहम् ।
शीलापहारसंत्रस्ता सा तदा समचिन्तयत् ॥ १०० ॥
किं करोम्यजने लब्धा विवशाहं प्रमादिना ।
उत्सृष्टधर्मनियमाः किं न कुर्वन्त्यवारिताः ॥ १०१ ॥
अयं स्मरातुरस्तावद्वचसा न निवर्तते ।
वश्यन्ते सान्त्ववादेन कामक्रोधमदोद्धताः ॥ १०२ ॥
इति ध्यात्वा तमवदत्सा शनैर्मृदुवादिनी ।
गच्छ त्वं स्वयमेष्यामि निशि शून्यलतागृहे ॥ १०३ ॥
स्नात्वा सपुत्रः कालेऽस्मिन्नायाति श्वशुरो मम ।
ज्वलज्ज्वलनतुल्यस्य तस्याग्रे किं करिष्यसि ॥ १०४ ॥
इत्युक्तः स तया प्रायात्सत्यं विज्ञाय तद्वचः ।
दुष्प्रापमपि मन्यन्ते सुलभं काममोहिताः ॥ १०५ ॥
रैभ्यं ततः समायातमग्न्यागाराग्रतः स्थितम् ।
स्नुषा प्रोवाच कोपाग्निधूमेनेवाश्रुवर्षिणी[3] ॥ १०६ ॥
भरद्वाजात्मजस्तात पापस्तव सुहृत्सुतः ।
ममाद्य विजने शीलविप्लवेऽभ्यर्थितां गतः ॥ १०७ ॥

---

१. 'धार्यते' क. २. 'दुष्कर्ममाता' क, 'दुष्कर्म' ख. ३. 'भाषिणी' ग.

स मया दुर्ग्रहग्रस्तः समेष्यामीति वञ्चितः।
विमुच्ये नान्यथा हस्तात्तस्य स्वास्तिमती सती ॥ १०८ ॥
एतदाकर्ण्य सहसा प्रज्वलन्मन्युना मुनिः।
बभूव दुर्निमित्तोल्कापातक्रूर इवांशुमान् ॥ १०९ ॥
विद्यावतां स्फुरत्यन्तर्विवेकः स्वस्थचेतसाम्।
विकारकाले संमोहश्चित्ते विद्या च पुस्तके ॥ ११० ॥
स निःश्वसन्नथ क्रोधज्वरारम्भारुणेक्षणः।
अभिचारजपेनेव कम्पमानाधरोऽभ्यधात् ॥ १११ ॥
अहो बत भरद्वाजः पुत्रस्याध्ययने व्यधात्।
धर्मोपदेशं यत्नेन नग्नीकर्तुं पराङ्गनाः ॥ ११२ ॥
इत्युक्त्वामर्षसंरम्भादपरं वक्तुमक्षमः।
स प्रविश्याग्निसदनं प्रतीकारपरोऽभवत् ॥ ११३ ॥
उत्पाट्य विकटाटोपकोपः प्रौढाग्निपिङ्गलाम्।
स जुहाव जटां वह्नौ क्रूरक्रोधसटामिव ॥ ११४ ॥
द्वितीयायां हुतायां च शूलभृद्घोरराक्षसः।
कृत्यासखः समुद्भूतः प्रोवाच प्रणतो मुनिम् ॥ ११५ ॥
किं करोमि मुने कस्य विनाशायास्मि निर्मितः।
त्रैलोक्यमपि निर्दग्धुं संनद्धोऽहं त्वदाज्ञया ॥ ११६ ॥
इति ब्रुवाणं तं रैभ्यः क्रूराकारमभाषत।
भरद्वाजसुतं गच्छ केवलीकुर्वपण्डितम् ॥ ११७ ॥
इति तेन समादिष्टः स व्रजन्कम्पितावनिः।
अर्वशौचं मुनिसुतं दृष्ट्वा दूरात्समाद्रवत् ॥ ११८ ॥
तस्मिन्नभिद्रुते वेगाद्दीप्तशूले निशाचरे।
भयभग्नगतिः प्राप शरणं न मुनेः सुतः ॥ ११९ ॥

---

१. 'ऽभ्यधात्' ख-ग. २. 'अग्नौ' क. ३. 'द्वितीयस्यां' क. ४. 'संदग्धुं' ग. ५. 'शकलीकुरु' ख-ग.

पलायमानः संप्राप्तः स जवात्पितुराश्रमम् ।
अग्न्यागारं विशन्[1]रुद्धः शूद्रेणा[2]शौचदूषितः ॥ १२० ॥
दासस्पृष्टः स निः[3]शौचः पतितः संभ्रमात्क्षितौ ।
रक्षः शूलहतः पश्चात्सहसा भस्मसादभूत् ॥ १२१ ॥
अत्रान्तरे भरद्वाजः प्रविशन्निजमाश्रमम् ।
विध्वस्तच्छायमालोक्य सोद्वेगः[4] समचिन्तयत् ॥ १२२ ॥
मम पुष्पफलादानप्रत्यावृत्तस्य वह्नयः ।
सदोत्तिष्ठन्ति पुरतस्तेऽद्य किं निश्चला इव ॥ १२३ ॥
इति संचिन्त्य दृष्ट्वाग्रे भस्मीभूतं सुतं मुनिः ।
श्रुत्वा च दासकथितं वृत्तान्तं न्यपतद्भुवि ॥ १२४ ॥
स लब्धसंज्ञः शनकैरवदद्बाष्पगद्गदम् ।
रैभ्योऽपि विद्वान्कालेन प्राप्नोतु स्वसुताद्वधम् ॥ १२५ ॥
हा पुत्र रक्षितेनापि क्षणक्षयनिपातिना ।
न जीवामि सदोपेण कायेनेव त्वया विना ॥ १२६ ॥
इत्युक्त्वा पुत्रशोकेन चिताग्निमविशन्मुनिः ।
महत्स्वपि नवोत्सेकादभग्नप्रसराः शुचः ॥ १२७ ॥
अथ याते शनैः काले वृहद्युम्नस्य भूपतेः ।
याजकौ जग्मतुर्गेहमर्वावसुपरावसू ॥ १२८ ॥
प्रवृत्ते विधिवत्तस्य दीर्घसत्रे पृथुश्रियः ।
दानमानोदयः कोऽपि तयोर्याजकयोरभूत् ॥ १२९ ॥
कदाचिद्दिनपर्यन्तसंध्यायां निजमाश्रमम् ।
परावसुः समागच्छन्दृष्ट्वा पितरमग्रतः ॥ १३० ॥
कृष्णाजिनोत्तरासङ्गं दण्डेन मृगशङ्कया ।
जघान शापविवशः स तेनाभूद्विचेतनः ॥ १३१ ॥

---

१. 'उद्धः' ख-ग. २. 'नूढेन' ख-ग. ३. 'निश्चेष्टः' क. ४. 'सोद्वेगं' क. 'वृष्णया' ख-ग.

जनकं हतमालोक्य ब्रह्महत्याभयाकुलः ।
गत्वा यज्ञभुवं भ्रात्रे स तमर्थं न्यवेदयत् ॥ १३२ ॥
अर्वावसुस्तमवदद्भ्रातः किं क्रियते विधेः ।
भवन्ति यस्य संकल्पादेवंरूपा विपर्ययाः ॥ १३३ ॥
धर्मार्थी पापमाप्नोति शीलार्थी शीलविप्लवम् ।
विधौ विधुरतां याते द्रविणार्थी दरिद्रताम् ॥ १३४ ॥
ब्रह्महत्याव्रतं तीव्रं भवतोऽर्थे चराम्यहम् ।
त्वमस्य कुरु भूभर्तुः संपूर्णां याजनक्रियाम् ॥ १३५ ॥
उक्त्वेत्यर्वावसुर्भ्रातुः पापशान्त्यै धृतव्रतः ।
चकार सर्वतीर्थेषु तीव्रनिष्कृतिपारणम् ॥ १३६ ॥
तं समाप्तव्रतं प्राप्तं राज्ञो यज्ञवसुंधराम् ।
दूरात्परावसुर्ज्ञात्वा पितृघ्नः समचिन्तयत् ॥ १३७ ॥
अयं मे दक्षिणाकाले भागहर्ता समागतः ।
मद्भाग्यैश्चिरं तीव्रव्रतक्लिष्टोऽपि जीवति ॥ १३८ ॥
इति संचिन्त्य सोऽभ्येत्य प्रोवाच पृथिवीपतिम् ।
लोभमात्सर्ययोरङ्के पतितः पातकेच्छया ॥ १३९ ॥
राजन्यज्ञमहीमेष किल्बिषी ब्रह्महत्यया ।
प्रविशत्यविकल्पेन मद्भ्राता वार्यतामितः ॥ १४० ॥
इत्युक्तस्तेन नृपतिः कृतघ्नेन विपर्ययात् ।
तस्य प्रवेशमज्ञानान्निष्पापस्य न्यवारयत् ॥ १४१ ॥
अन्धा इव न पश्यन्ति योग्यायोग्यं हिताहितम् ।
पथा तेनैव गच्छन्ति नीयन्ते येन पार्थिवाः ॥ १४२ ॥
मिथ्यापवाददानेन नैव भ्रात्रे चुकोप सः ।
निर्कारे कारणं दैवं मन्यन्ते हि मनीषिणः ॥ १४३ ॥
तेन तस्यानृशंस्येन निर्विकारतया तया ।
तुष्टाः क्रतुसमासीनास्तमूचुस्त्रिदिवौकसः ॥ १४४ ॥

१. 'विपत्तयः' क. २. 'चचार' क. ३. 'कृतघ्नः' क. ४. 'विकारे' ख.

यदा प्रहारैर्दलिताखिलाङ्गः खण्डोष्ठनासः स्फुटिताक्षिदन्तः ।
युवा पिशाचत्वमिवोपयाति तदापि रूपं विगतस्वरूपम् ॥ १२ ॥
यदा न धीमानरिपु प्रमाथी न वाक्पटुश्चित्रमनुष्यतुल्यः ।
तदा सुरूपादविचाररम्याद्वरं विरूपः स्पृहणीयरूपः ॥ १३ ॥
यदा दरिद्रः परिधानहीनस्त्रपानिलीनः कुरुतेऽतियाच्ञाम् ।
कपोलसंजातवलीविकारस्तदा सुरूपोऽपि परं विरूपः ॥ १४ ॥

विद्वत्संसदि वादिभिः कविवरैर्भोपानभिज्ञः परं
मूर्खः शंकरवाहनस्तुतिपदैर्यः संज्ञया हस्यते ।
विक्रीतः परदेशपण्यसदने धूर्तैरिवानुत्तरः
पुंसश्चित्रमयूरचारुवपुषः किं तस्य रूपश्रिया ॥ १५ ॥

कालं मुहूर्ताङ्गुलिमण्डलेन दिनत्रियामाञ्जलिना पिबन्तम् ।
रूपं विलोक्यैव वपुश्च केषां भङ्गेन नाङ्गान्यलसीभवन्ति ॥ १६ ॥
रूपं वयः शौर्यमनङ्गभोगं प्रज्ञाप्रभावं विभवं वपुश्च ।
अश्नाति कालभ्रमरः समन्तात्पुंसां हि किंजल्कमिवाम्बुजानाम्॥१७॥

कदाचित्सह गन्धर्वैः सभास्थाने शचीपतिम् ।
नृत्तेनाप्सरसः सर्वा गीतेन च सिषेविरे ॥ १८ ॥
तासां मध्ये बभौ कान्ता वृत्तीनामिव कैशिकी ।
उर्वशी स्मसुखे मैत्रीं वदन्तीवेन्दुपद्मयोः ॥ १९ ॥
शक्रसेवागतास्तत्र तां दृष्ट्वेन्दुमुखीं सुराः ।
मेनिरे धन्यमात्मानं शृङ्गारस्याज्ञतां गतम् ॥ २० ॥
नृत्यन्ती सा बभौ हारमध्यरत्नेषु बिम्बिता ।
युगपत्प्रविशन्तीव हृदयानि दिवौकसाम् ॥ २१ ॥
लीना देवविमानेषु हंसास्तद्गतिनिर्जिताः ।
तत्कटाक्षजितश्चक्रे निद्रां चेन्द्रे मृगः क्षणम् ॥ २२ ॥

१. 'शंकरवाहनः' क. शंकरवाहनो वृषभः. २. 'मण्डलेन' ख. ३. 'कौशिकी' क. ४. 'दम्बिता' क. ५. 'चन्द्रमृगः' ख.

तस्याः सेर्ष्याप्सरोनेत्रमालेव पतिता बभौ।
स्तनयोः शेखरस्रस्ता नीलोत्पलदलावली ॥ २३ ॥
उत्साहोद्धतविभ्रमभ्रमरकव्यावृत्तहारान्तर-
त्रुट्यत्सूत्रविमुक्तमौक्तिकभरः सक्तः स्तनोत्सङ्गयोः।
वक्त्रेन्दुच्युतसंततामृतकणाकारश्चकार क्षणं
तस्या नृत्तरसश्रमोदितघनस्वेदाम्बुबिम्बश्रियम् ॥ २४ ॥
तस्या नृत्तविलोकने पुलकितं दृष्ट्वा रतिर्मन्मथं
निःश्वासाञ्चितचारुरूप(?)रजसा चक्रे पुरस्तात्पटम्।
उद्वीक्ष्याक्षिपरम्परामपि हरेस्तत्रावसन्ना शची
कोपान्दोलितकेलिपद्ममधुपैर्मध्येऽन्धकारं व्यधात् ॥ २५ ॥
विघ्नं न चक्रुर्ननु नृत्तलीलासंदर्शने पुण्यवतां नराणाम्।
तत्रोर्वशीरूपवशीकृतानां निमेषशून्यानि विलोचनानि ॥ २६ ॥
देवयोरश्विनोस्तत्र रूपमाधुर्यधुर्ययोः।
मिथः कथा समभवत्तद्गुणाकृष्टचित्तयोः ॥ २७ ॥
एकोऽब्रवीदहो रूपमस्यास्तरलचक्षुषः।
निमीलन्नियमा येन मुनयोऽप्याकुलीकृताः ॥ २८ ॥
अस्यां संसदि कस्यास्ये पतन्त्येताः सुजन्मनः।
स्मरसंभोगसंवादलज्जाकुटिलिता दृशः ॥ २९ ॥
वृत्तसंगमयोरेव परस्परविलोकने।
न्यासं शृङ्गारसर्वस्वमनङ्गेनार्पितं रहः ॥ ३० ॥
रणोत्सृष्टतनोः कण्ठे सोत्कण्ठा भुजबन्धनम्।
कस्येयं तरलापाङ्गा रङ्गोत्तीर्णा करिष्यति ॥ ३१ ॥
इति ब्रुवाणमपरः सस्मितस्तमभाषत।
अहो नु विस्मृतः किं ते भूतलेन्दुः पुरूरवाः ॥ ३२ ॥
विक्रमाभरणं दिक्षु लावण्यतिलकं भुवः।
उर्वशीभोगसुभगं यस्यैतद्गीयते यशः ॥ ३३ ॥

१. 'भ्रमकर' क. २. 'नूतरजसा' ख. ३. 'वृत्त' क.

तेन रूपगुणोत्साहैरुर्वशीयं वशीकृता ।
पुरः स्थितापि शक्रस्य मनसा तत्र तिष्ठति ॥ ३४ ॥
रूपसाम्येन शीतांशुवंशे जातः स लज्जते ।
न करोति रतेरग्रे तत्कथां मत्सरी स्मरः ॥ ३५ ॥
न जाने वत हेवाकः कोऽयं कुसुमधन्वनः ।
नैवार्पयति यत्पाणौ तस्यैव शरपञ्चकम् ॥ ३६ ॥
भुवः समस्ताम्बुधिमेखलाया वोढारमाजानुविलम्बिबाहुम् ।
लीलागुरुं तं हृदये वहन्ती तन्वी कथं नृत्यति नैव विद्मः ॥ ३७ ॥
द्रष्टव्यः स नृपस्तावदप्रस्तावेऽपि यत्नतः ।
को वेत्ति तद्विधं रत्नं पुण्यैरास्ते कियच्चिरम् ॥ ३८ ॥
इत्युक्त्वा तौ कृतक्षोणीपतिदर्शननिश्चयौ ।
नृत्ते निवृत्ते जम्भारिं प्रणम्य ययतुर्भुवम् ॥ ३९ ॥
राजधानीं समासाद्य तौ पुरूरवसः क्षणात् ।
अवारितौ विविशतुर्वेत्रिभिः सुरगौरवात् ॥ ४० ॥
तौ तं ददृशतुः स्नानविहिताभ्यङ्गसंगमम् ।
पीयूषनवनीतेन स्नातस्नेहमिवोडुपम् ॥ ४१ ॥
स्नानोत्तारितकेयूरमहार्हमणिकंकणम् ।
लावण्याभरणं तस्य विरराजोर्जितं वपुः ॥ ४२ ॥
शून्यश्रवणपाशास्य तस्य कण्ठः समाययौ ।
निर्भूषणनिवेशोऽपि विशेषरमणीयताम् ॥ ४३ ॥
विचार्य तस्या मर्यादं सौन्दर्यौदार्यमश्विनौ ।
प्रशशंसतुराश्चर्यनिर्माणातिशयं विधेः ॥ ४४ ॥
स तौ कृताञ्जलिः प्रीत्या कृतासनपरिग्रहौ ।
पप्रच्छ स्वच्छहृदयस्त्वरागमनकारणम् ॥ ४५ ॥

---

१. 'शीतांशोर्वंशे जातो महीपतिः' क. २. 'रत' ख. ३. 'क्षीरस्नेह' क. ४. 'विशेषोऽपि' क.

तावूचतुः क्षितिपते महीकुसुमधन्वनः ।
त्रैलोक्याभरणं रूपं तवावां द्रष्टुमागतौ ॥ ४६ ॥
निसर्गेण जगत्सर्गनिरर्गलगुणादरात् ।
कौतुकालोकसारेव दृष्टा सृष्टिः प्रजापतेः ॥ ४७ ॥
विलोकितस्त्वं वसुधासुधांशुः पूर्णमण्डलः ।
रूपपीयूषपानेन प्राप्ता प्रीतिः किमुच्यते ॥ ४८ ॥
इत्युक्तः प्रणयात्ताभ्यां किंचित्कुसुमितस्मितः ।
तावूचे नृपतिर्मान्यमानेनाभ्यधिकादरः ॥ ४९ ॥
भवत्संदर्शनेनाहमस्म्यनुग्रहभाजनम् ।
द्रष्टव्या द्रष्टुमायान्ति पुण्यपण्येन केवलम् ॥ ५० ॥
तीर्थाप्तिः साधुसंपर्कः पूज्यपूजामहोत्सवः ।
अस्मिन्विरसनिःसारे संसारे सारसंग्रहः ॥ ५१ ॥
स्नानाभ्यक्तेन न मया युवयोरुचितः कृतः ।
पुण्यसाफल्यनिःशल्यकल्याणायार्चनादरः ॥ ५२ ॥
अग्न्यागारान्तरे तावन्मुहूर्तं क्रियतां स्थितिः ।
कृतस्नानः समेष्यामि पूजाप्रणयपात्रताम् ॥ ५३ ॥
इत्युक्तौ तेन ययतुस्तौ हुताशनमन्दिरम् ।
स्नातं विभूषितं भूपं द्रक्ष्याव इति कौतुकात् ॥ ५४ ॥
अथ राजा कृतस्नानः सर्वाभरणभूषितः ।
पुरोहितेन सहितस्तत्समीपमुपाययौ ॥ ५५ ॥
तौ दृष्ट्वा पृथिवीपालं तारहारं किरीटिनम् ।
क्षणं नैवोचतुः किंचिद्विषण्णौ विनताननौ ॥ ५६ ॥
कृतार्चने नरपतौ तौ पप्रच्छ पुरोहितः ।
अकस्माद्युवयोः कस्मादप्रसाद इवेक्ष्यते ॥ ५७ ॥

---

१. 'निसर्गजगदुत्सर्गे' क. २. 'दृष्टिसृष्टिः' क, 'दृष्टा दृष्टिः' ख. ३. 'भवद्भ्यां दर्शनेनाहं विहितानुग्रहः स्वयम्' क.

विनयातिक्रमोऽस्माकं यातः कश्चिन्न हेतुताम् ।
पृष्टौ पुरोहितेनेति तौ शनैस्तमथापताम् ॥ ५८ ॥
आवयोर्नाप्रसन्नत्वं न युष्माकमतिक्रमः ।
किं तु कालगलत्सर्वभावालोकनविस्मयः ॥ ५९ ॥
अधुनैव नरेन्द्रोऽयं दृष्टोऽभ्यङ्गेऽपि यादृशः ।
क्षणपाकेन कालस्य दृश्यते नैव तादृशः ॥ ६० ॥
दिनेन्धनवने नित्यं दह्यमानेऽर्कवह्निना ।
नीयते कालधूमेन रूपचित्रमचित्रताम् ॥ ६१ ॥
निश्चित्य सर्वभावानां नित्यमेतामनित्यताम् ।
रूपेऽभिमानं कः कुर्यात्स्वप्नचित्रपटोपमे ॥ ६२ ॥
जराजीर्णानि रूपाणि रोगार्तानि वपूंषि च ।
आयूंषि काललीढानि दृष्ट्वा कस्य भवेन्मदः ॥ ६३ ॥
योऽयं विलोक्यते लोकः स्फाराकारविकारवान् ।
उच्छूनतामुपगतास्त एते शुक्रबिन्दवः ॥ ६४ ॥
अहो कालस्य सूक्ष्मोऽयं कोऽप्यलक्ष्यक्रमः क्रमः ।
यत्पाकपरिणामेन सर्वं यात्यन्यरूपताम् ॥ ६५ ॥
राज्ञः स्नानक्षणे याभूल्लावण्यलहरी तनोः ।
पीता क्षणेन सा तेन प्रवृत्तान्यक्षणोचिता ॥ ६६ ॥
संपूर्णस्यायुषो मात्रा रूपस्य विभवस्य च ।
होरायन्त्राम्बुधारेव गलत्येवानिशं नृणाम् ॥ ६७ ॥
कलाकाष्ठामुहूर्तानां कालस्य व्रजतां जवात् ।
न लक्ष्यते विभागेन दीपस्येवार्चिषां गतिः ॥ ६८ ॥
बालः प्रभाते मध्याह्ने तरुणः स्थविरोऽस्तगः ।
दिने दिने दिनेशोऽपि क्रियते काललीलया ॥ ६९ ॥
शुष्यन्त्यम्बुधयस्तरङ्गगहनैरालिङ्गिताशाङ्गनाः
गच्छन्त्युन्नततुङ्गशृङ्गमुकुटोदग्रा गिरीन्द्राः क्षयम् ।

---

१. 'दृष्टः' क.

भ्रश्यत्येव वसुंधरापि सहिता दिग्दन्तिभिर्यद्वशा-
त्सर्वाशी सततं प्रधावति महाकालः स कोऽप्याकुलः ॥ ७० ॥
इत्युक्त्वा नृपमामन्त्र्य दिवं जग्मतुरश्विनौ।
नृपश्च तद्वचश्चिन्ताशान्तरूपमदोऽभवत् ॥ ७१ ॥
तस्मान्न कार्यः सुधिया विचार्य साश्चर्यसौन्दर्यविलासदर्पः।
संसारमोहप्रसरे घनेऽस्मिन्विद्युल्लताविस्फुरितं हि रूपम् ॥ ७२ ॥
प्रातर्बालतरोऽथ कुड्मलतया कान्ताकुचाभः शनै-
र्हेलाहासविकाससुन्दररुचिः संपूर्णकोपस्ततः।
पश्चान्म्लानवपुर्विलोलशिथिलः पद्मः प्रकीर्णोऽनिलै-
स्तस्मिन्नेव दिने स पङ्ककलिलक्लिन्नस्तटे शुष्यति ॥ ७३ ॥
वैरूप्यं सहजं जराहृतरुचिर्यातो ययातिः पुरा
कान्त्या तर्जितकामकीर्तिरभवद्दुर्दर्शमूर्तिर्नलः।
सौदासस्य मनोहरं वपुरभूत्संत्रासनं देहिनां
रूपे कस्य भविष्यति प्रतिदिनम्लायिन्यनित्ये धृतिः ॥ ७४ ॥
तस्मादस्थिररूपं विचार्य रूपं भवस्वरूपं च।
अनुरूपमदनशमनं स्थिरपदसंप्राप्तये सुधियाम् ॥ ७५ ॥
इति श्रीव्यासदासापराख्यक्षेमेन्द्रविहिते दर्पदलने रूपविचारश्चतुर्थः।

---

पञ्चमो विचारः।

अहं शूरः क्रूरप्रतिभटघटापाटनपटु-
स्तरस्वी सेनायां हयगजघटानामधिपतिः।
इति प्रौढः पुंसां निजभुजबलाक्रान्तजगतां
भवत्यन्तर्दर्पः परिभवपदं कालगलितः ॥ १ ॥
शौर्येण दर्पः पुरुषस्य कोऽयं दृष्टस्तिरश्चामपि शूरभावः।
औचित्यहीनं विनयव्यपेतं दयादरिद्रं न वदन्ति शौर्यम् ॥ २ ॥

---

१. 'दिक्संधिभिः' ख. २. 'भूपं' क. ३. 'लीलाहंसविलास' ख. ४. 'सहसा' क. ५. 'पदवीप्राप्तये' क. ६. 'गजरथानां' ख. ७. 'अन्ते' ख.

बालस्य शौर्यं कुसुमोपमस्य मातुः प्रहारे प्रणयासितेषु।
वृद्धस्य शौर्यं शिथिलाङ्गसंधेः स्वश्लाघया पूर्वकथापथेषु॥ ३॥
वयस्त्रिभागे तरुणस्य शौर्यं यदेव दर्पप्रभवाभिभूतम्।
तच्चित्तवृत्तेर्विविधस्वभावात्पर्यायशो यात्यतिवैपरीत्यम्॥ ४॥
............................................................|
चित्तस्य जात्यानिलचञ्चलस्य नानागुणत्वात्क्रियते किमस्य॥ ५॥
ह्यो येन भग्नाः पुरतोऽरिसेना भीतः स एवाद्य भवत्यधीरः।
वृत्रेण शक्रः समरे निगीर्णः फेनेन शक्रः स जघान वृत्रम्॥ ६॥
............................................................|
एकं समालिङ्गति दर्पलोला क्षीवेव वेश्या नहि राजलक्ष्मीः॥ ७॥
यः कार्तवीर्यस्य च दोःसहस्रं चिच्छेद वीरो युधि जामदग्न्यः।
स सायके रामकराधिरूढे ब्राह्मण्यदैन्यप्रणयी बभूव॥ ८॥
रामोऽपि साहायकलाभलोभाच्चके कपेः संश्रयदैन्यसेवाम्।
शूरप्रतापः शिशिरर्तुनेव कालेन लीढस्तनुतामुपैति॥ ९॥
वाली प्रसह्य प्लवगः करेण सोल्लासकैलाससहं दशास्यम्।
निक्षिप्य कक्षाञ्चलसंधिबन्धे ससाब्धिसंध्याविधिमन्वतिष्ठत्॥ १०॥
युद्धोद्धता भूपतयः प्रसिद्धा बद्धा जरासंधनृपेण पूर्वम्।
सभीमसेनेन भुजायुधेन द्विधा कृतः संधिविदारणेन॥ ११॥
भीमोऽपि कर्णेन विकीर्णधैर्यः प्रमूढशक्तिः कृपया विमुक्तः।
कर्णोऽर्जुनस्याततकार्मुकस्य क्षणात्क्षणं याचकतां प्रयातः॥ १२॥
त्यक्त्वार्जुनः कृष्णकलत्रवर्गं जगाम गोपालबलाभिभूतः।
न ज्ञायते दैवपथानुयाता शौर्यस्य वृत्तिः करिकर्णलोला॥ १३॥
भीरुः शूरत्वमायाति शूरोऽप्यायाति भीरुताम्।
न कचिच्चपलस्यास्य शौर्यस्य नियता स्थितिः॥ १४॥
बाणव्यक्षेण कंसारिचक्रधारापथातिथिः।
आजन्मभक्तिप्रणयी रक्षणार्हो न रक्षितः॥ १५॥

१. 'पद्मोपमस्य' ख. २ 'सध्याविधये चचार' ख. ३. 'क्षणक्षमा' ख. ४. 'बाणव्यक्षेण हरार्धकेन' क. ५. 'रक्षितो न तु रक्षितः' ख.

वेगात्ते कालयवने मुचुकुन्दमशिश्रियत् ।
शौरिः शयनपर्यङ्कतलसंकुचिताकृतिः ॥ १६ ॥
शिशुपालस्य शिरसि च्छिन्ने चक्रेण चक्रिणा ।
दृष्टिः कृता न चापेषु नृपैस्तत्पक्षपातिभिः ॥ १७ ॥
भीमनिष्पीयमाणासृग्दृष्टो दुर्योधनानुजः ।
अशस्त्राभिरिव स्त्रीभिर्द्रोणकर्णकृपादिभिः ॥ १८ ॥
स्फाराजगरसंरुद्धभुजद्वन्द्वो वृकोदरः ।
जननीकरुणाक्रन्दनिनादमुखरोऽभवत् ॥ १९ ॥
महतामपि पूर्वेषामेवंरूपा मदक्षितिः ।
सामान्यविक्रमोद्दामश्लाघा केनाभिनन्द्यते ॥ २० ॥
अशक्ते रौद्रतातैक्ष्ण्यं तीव्रपापेषु धीरता ।
छद्मवीर्याचि पारुष्यं नीचानां शौर्यमीदृशम् ॥ २१ ॥
निष्कारणनृशंसस्य शौर्यं हिंस्रत्वमुच्यते ।
यः सर्प इव संनद्धः प्राणबाधाय देहिनाम् ॥ २२ ॥
एतदेव परं शौर्यं यत्परप्राणरक्षणम् ।
नहि प्राणहरः शूरः शूरः प्राणप्रदोऽर्थिनाम् ॥ २३ ॥
न कश्चिद्बुद्धिहीनस्य शौर्येण क्रियते गुणः ।
पर्जन्यगर्जितामर्षी श्वभ्रे पतति केसरी ॥ २४ ॥
किं शौर्येण सरागस्य मदक्षीबस्य दन्तिनः ।
बन्धकीलाभलोभेन यः क्षिपत्यवटे तनुम् ॥ २५ ॥
शौर्यं विक्रीतकायस्य सेवकस्य किमद्भुतम् ।
मेषस्येव वधो यस्य सूनाबद्धस्य निश्चितः ॥ २६ ॥
न दर्पविकृतं शौर्यं न मायामलिनं मनः ।
न द्वेषोष्णं श्रुतं येषां गण्यन्ते तद्गुणा बुधैः ॥ २७ ॥
कुलं कुतनयेनेव लोभेनेव गुणोदयः ।
ऐश्वर्यं दुर्नयेनेव शौर्यं दर्पेण नश्यति ॥ २८ ॥

---

१. 'आसक्ता' क. २. 'यशः' ख. ३. 'गुणाः' ख.

प्रभावभवनस्तम्भ इव दम्भोद्भवोऽभवत्।
सप्ताब्धिपरिखालेखामेखलायाः प्रभुर्भुवः॥ २९॥
तस्य निःशेषितारातेः सदा युद्धमनोरथः।
अप्राप्तप्रतिमल्लस्य ययौ हृदयशल्यताम्॥ ३०॥
स सुरासुरयुद्धात्तदर्पदीर्पितमानसः।
कः कोऽस्ति शूरः संरम्भादित्यपृच्छत्सदाजनम्॥ ३१॥
दर्पकण्डूलदोर्दण्डं पृच्छन्तं रभसेन तम्।
सर्वावमानसंनद्धं जगादाभ्येत्य नारदः॥ ३२॥
नास्ति त्वत्सदृशः शूरस्त्रैलोक्ये सत्यमुच्यते।
किं तु जाने रणार्हौ ते नरनारायणावृषी॥ ३३॥
बदर्याश्रमसंसक्तौ तीव्रे तपसि निष्ठितौ।
युद्धेच्छौ तौ यदि स्यातां तत्पूर्णस्ते मनोरथः॥ ३४॥
नारदेनेत्यभिहिते स बदर्याश्रमं ययौ।
विलोकयन्निजभुजौ प्रत्यासन्नरणोत्सवौ॥ ३५॥
दृष्ट्वा तेजोनिधी तत्र नरनारायणौ नृपः।
मनोरथपथाभ्यस्तं ययाचे युद्धमुद्धतः॥ ३६॥
तं युद्धकामुकं तिर्यग्दृशा गम्भीरधीरया।
विलोक्योवाच सावज्ञस्मितदिग्धाधरं नरः॥ ३७॥
महीपते निवर्तस्व न वयं युद्धकोविदाः।
युक्तस्तैरेव सङ्ग्रामस्तव ये भूम्यनन्तराः॥ ३८॥
इत्युक्तोऽपि यदा राजा न चचाल रणादरात्।
तदा तं दर्भैर्षीकनिशिताग्रैरपूरयत्॥ ३९॥
प्रदीप्तज्वलनाकारैः शरैराकीर्णविग्रहः।
विनष्टविग्रहश्चिन्नृपस्तत्याज धीरताम्॥ ४०॥

---

१. 'तापित' क. २. 'सर्वावसान' ख. ३. 'सर्वज्ञः स्मितलीढाधरो नरः' ख. ४. 'ऐषीकनिस्यूतार्थैरपूजयत्' क.

अकाण्डखण्डितोच्चण्डदर्पज्वरभरो नृपः ।
कृपणः प्राणरक्षायै तमेव शरणं ययौ ॥ ४१ ॥
वारितास्त्रस्ततस्तेन भग्नमानमनोरथः ।
लज्जाविकुण्ठकण्ठः स्वां राजधानीं ययौ नृपः ॥ ४२ ॥
इति मानस्य महतामपि घोराशनिर्मदः ।
लोहस्य स्वमलेनेव क्षयो दर्पेण तेजसः ॥ ४३ ॥
तस्मात्सदा मानधनेन पुंसा दर्पः प्रयत्नेन निवारणीयः ।
दर्पोग्रवक्रस्य सुहृज्जनोऽपि सर्वात्मना तीव्रनिपातसज्जः ॥ ४४ ॥
अदर्पशौर्यस्पृहणीयसत्त्वा गोविप्ररक्षाक्षपितस्वदेहाः ।
प्रयान्ति वीराः सुकृतामृतार्द्रैर्यशःशरीरैरजरामरत्वम् ॥ ४५ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविहिते दर्पदलने शौर्यविचारः पञ्चमः ।

---

षष्ठो विचारः ।

जगत्येको भद्रद्विरद इव दानार्द्रसरणि-
यशस्वी निःस्वानामहमभिमताशाफलतरुः ।
इति त्यागोदग्रं वहति किल दर्पं मनसि य-
स्तदुद्भूतं सर्वं सुकृतमपहाय व्रजति सः ॥ १ ॥
स्वर्गादिसंभोगफलाभिलाषात्पात्राय पूजां प्रतिपद्यते यः ।
धर्मार्थपण्यक्रयविक्रयोऽसौ कस्तेन दानप्रभवोऽभिमानः ॥ २ ॥
यद्विद्यादिगुणोत्कर्षविशेषपरितोषितैः ।
दीयते प्रीतिधनयोः सपण्यक्रयविक्रयः ॥ ३ ॥
लोकप्रसिद्धिसिद्ध्यै यः प्रयच्छति गुणस्तवैः ।
करोति वित्तयशसोः स सदा क्रयविक्रयम् ॥ ४ ॥
अवमानहतं यच्च दत्तमश्रद्धया धनम् ।
ऊपरे निष्फलं बीजं क्षिप्तमक्षिप्तमेव तत् ॥ ५ ॥

---

१.'लोकस्य' क. २.'धीराः' ख. ३.'अभिमतानां' ख. ४.'पूर्णं प्रतिपाद्यते यत्' ख.

त्यागिनोऽन्यस्य संघर्षे कीर्त्युत्कर्षजिगीषया।
दत्तं कारणभूतस्य तस्यैवान्ते फलप्रदम्॥ ६॥
परार्तिशमनं वित्तमज्ञातमनुदीरितम्।
अफलाकाङ्क्षया युक्तं प्रयात्यल्पमनल्पताम्॥ ७॥
कुरुक्षेत्रादिदेशेषु कालेष्वर्कग्रहादिषु।
आत्मोपकारमात्रेण पात्रे दानेन किं मदः॥ ८॥
देशकालक्रियापात्राण्यविचार्यैव केवलम्।
परेषामार्तिशमनं दयार्द्रं दानमुच्यते॥ ९॥
रक्षायै संपदां पुत्रकलत्रसुखसिद्धये।
दीयते यत्प्रयत्नेन लोभदानेन तेन किम्॥ १०॥
वादे खलैः खलीकृत्य वेधद्रुतपरीक्षया।
दीयते यच्चिरक्लिष्टं कष्टदानेन तेन किम्॥ ११॥
त्यक्त्वाशागतसत्पात्रं पूर्णायाभ्यर्थ्य दीयते।
यत्तदुच्छ्वाससंतप्तं दग्धदानेन तेन किम्॥ १२॥
अन्यदाभाषितं पूर्वं दत्तमन्यत्ततोऽल्पकम्।
यत्सदोषमयोग्यं वा कूटदानेन तेन किम्॥ १३॥
चिरसेवानुरोधेन लोभकृच्छ्रादनिच्छया।
अप्रसादेन यद्दत्तं बलादानेन तेन किम्॥ १४॥
यत्पुष्पधूपतिलकप्रतिपत्तिप्रदर्शितम्।
दत्तमत्यल्पनिःसारं दम्भदानेन तेन किम्॥ १५॥
ग्रैभूतभारसंभारं राजचौरादिविप्लवे।
दत्त्वा यद्दृष्टमुं (?) दृष्टं शल्यदानेन तेन किम्॥ १६॥
अनास्वाद्यमविक्रेयमनादेयमनीप्सितम्।
दत्तं निरुपकारं यद्वन्ध्यदानेन तेन किम्॥ १७॥
ऋणवच्चिरसंशोध्यं वचसा प्रतिपादितम्।
यन्नित्ययाच्नदैन्यं याच्यदानेन तेन किम्॥ १८॥

---

१. 'धनिदत्तार्दिरं(?)षु' क. २. अयं श्लोकः क-पुस्तके नास्ति. ३. 'वरसदानेन' क

एकस्मै पूर्णमन्यस्मै कृशं तुल्यगुणोदये ।
भेदाद्यदर्पितं रागद्वेषदानेन तेन किम् ॥ १९ ॥
ऋणदैः स्वजनैः पुत्रैर्लब्धक्षामप्रतिग्रहः ।
नित्यमायास्यते येन कलिदानेन तेन किम् ॥ २० ॥
न परस्यार्तिशमनं नात्मनः पुण्यकारणम् ।
दत्ताल्पमूल्येनाल्पं यत्स्वल्पदानेन तेन किम् ॥ २१ ॥
दुर्ग्रहेषु विरुद्धेषु दशापाकेऽतिदारुणे ।
दीयते दोषशान्त्यै यद्भयदानेन तेन किम् ॥ २२ ॥
मुमूर्षुस्त्यक्तसर्वाशः शयनस्थो ददाति यत् ।
मूर्छास्थानेन मनसा मोहदानेन तेन किम् ॥ २३ ॥
दत्तं प्रियवियोगोग्रशोकशल्यार्तचेतसा ।
यत्पश्चात्तापजननं बाष्पदानेन तेन किम् ॥ २४ ॥
पुरोहिताय गुरवे शान्तिस्वस्तिविधायिने ।
दीयते यत्प्रसङ्गेन भृतिदानेन तेन किम् ॥ २५ ॥
यत्संत्यक्तफलस्पृहं यदुचितं सर्वस्वभूतं च य-
न्न्यायेन यदर्जितं परधनस्पर्शेन शप्तं न यत् ।
दत्त्वा दुःखशतं न यत्स्ववचसा पश्चान्न यद्गण्यते
तद्दानं धनबीजवापनिपुणः शेषः प्रकारः क्रुधेः ॥ २६ ॥
प्राप्तुं स्वर्गवराङ्गनास्तनतटस्पर्शातिरिक्तं सुखं
दत्तो मेरुरपि प्रयाति तृणतामात्मोपकारेच्छया ।
आपन्नार्तिविलोकने करुणया श्रद्धासुधापूरितं
सत्त्वोत्साहसमन्वितं तृणमपि त्रैलोक्यदानाधिकम् ॥ २७ ॥
युधिष्ठिरस्य भूभर्तुः पुरा कनकवर्षिणः ।
अश्वमेधे विधानेन वर्तमाने महाक्रतौ ॥ २८ ॥

१. 'दत्त्वाल्पमूल्येनाल्पं' ख. २. 'भृत्यदानेन' क. ३. 'स्पर्शाभिषिक्तं' क. ४. 'नि-धानाप्तं' क.

सज्जासु राजभोज्यासु विविधास्वन्नपालिषु ।
अनिशं रत्नपात्रेषु भुञ्जानेषु द्विजन्मसु ॥ २९ ॥
विप्रेषु पूर्यमाणेषु मणिकाञ्चनशासनैः ।
उच्छिष्टभूमिं नकुलः स्वबिलात्समुपाययौ ॥ ३० ॥
दीप्तकाञ्चनवर्णेन पार्श्वेनैकेन शोभितः ।
अपरेणासुवर्णेन वितीर्णजनकौतुकः ॥ ३१ ॥
सोऽभ्येत्य तूर्णमुच्छिष्टहेमपात्रच्युतेऽम्भसि ।
लुलोठ शफरोत्फालपरिवर्तविवर्तनैः ॥ ३२ ॥
सुवर्णपार्श्वं नकुलं दृष्ट्वा सर्वे कुतूहलात् ।
मज्जन्तमुच्छिष्टजले क्षितिपाय न्यवेदयन् ॥ ३३ ॥
प्राप्तेन भूभुजा दृष्ट्वा दृष्टया पृष्ट इवेष्टया ।
सोऽवदद्विस्मयभुवा सुस्पष्टाक्षरया गिरा ॥ ३४ ॥
राजन्नस्यातिदानस्य न पश्याम्युचितं फलम् ।
अस्मात्प्रभूतसंभारात्सक्तुपात्रं वरं परम् ॥ ३५ ॥
प्रवृत्तेऽस्मिन्महादाने महतस्ते महीपते ।
वित्ते वृत्ते च चित्ते च शुद्धिं को वेत्ति तत्त्वतः ॥ ३६ ॥
संभारोऽयं भुवनभवनव्याप्तिपर्याप्तभोगः
सर्वाशासु प्रततजनतापूरणेऽत्यन्ततुच्छः ।
आपन्नार्तिप्रशमनविधौ सत्त्वशुद्धिप्रदाने
संनद्धानामपि तृणकणः काञ्चनाद्रित्वमेति ॥ ३७ ॥
श्रूयतां यन्मया दृष्टं भूपते स्वयमद्भुतम् ।
उदेत्युदीरिते यस्मिन्काये रोमाञ्चकञ्चुकः ॥ ३८ ॥
शिलोञ्छवृत्तिना पूर्वं विप्रेण क्षेत्रचारिणा ।
उपवासकृशेनाप्तं यवलोकं (!) कलत्रिणा ॥ ३९ ॥

---

१. 'विविधास्वर्णाद्रिषु' क. २. 'भुक्तवत्सु द्विजातिषु' ख. ३. 'भुक्तवत्सु च विप्रेषु पूर्यमाणेषु काञ्चनैः' क. ४. 'दृष्टो दृष्टया पुष्ट इवेष्टया' क. ५. 'सुस्पष्टाक्षरया' ख. ६. 'सक्तुपात्रं वरं परम्' ख.

सक्तुपात्रे ततः सिद्धे कृतदेवपितृक्रियः ।
जायापुत्रविभागेन स्वं भागं भोक्तुमुद्ययौ ॥ ४० ॥
स प्राणाहुतितोयार्थी ददर्शातिथिमागतम् ।
क्षुत्क्षामकुक्षिं संक्षिप्तसर्वाङ्गशिथिलाकृतिम् ॥ ४१ ॥
तस्मै विहितसत्कारः सप्रसादेन चेतसा ।
श्रद्धासुधावसिक्तं तत्स ददौ निजभोजनम् ॥ ४२ ॥
निगीर्णेऽतिथिना तस्मिन्नक्षीणक्षुद्विकारिणा ।
तद्भार्याप्यादरवती तस्मै स्वमशनं ददौ ॥ ४३ ॥
तेनाप्यतृप्तिमालोक्य तत्सूनुः श्रद्धयातिथिम् ।
स्वभोजनेन विदधे संपूर्णाशननिर्वृतम् ॥ ४४ ॥
गते भुक्त्वातिथौ तस्मिन्नुपवासकृशो द्विजः ।
सत्त्वोत्साहयुतस्तस्थौ क्लान्तोऽपि निशि निर्व्यथः ॥ ४५ ॥
अथाहं सक्तुगन्धेन निर्गतः क्षुधितो विलात् ।
प्राप्तस्तत्पर्णपुटिकामुत्सृष्टोच्छिष्टवर्तिनीम् ॥ ४६ ॥
तत्राचमनतोयेन स्पृष्टमात्रस्य मे नृप ।
पश्य मे दक्षिणं पार्श्वं जातं हेममयच्छवि ॥ ४७ ॥
ततोऽहं वामपार्श्वस्य हेमच्छायाप्तये सदा ।
निर्निद्रश्चिन्तया यातः कृशतामेव केवलम् ॥ ४८ ॥
यद्यत्प्राप्नोति पुरुषः कर्मयोगात्समीहितम् ।
तत्तत्संपूरणायैव याति चिन्ताविधेयताम् ॥ ४९ ॥
अधुना वर्तमानेऽस्मिन्नश्वमेधे तव क्रतौ ।
हेमपार्श्वाशयायातो विप्रोच्छिष्टामहीमहम् ॥ ५० ॥
रत्नकाञ्चनपात्राम्बुसिक्तस्य लुठतश्चिरम् ।
मम कान्तिलवोऽप्यङ्गे न कश्चिदिह दृश्यते ॥ ५१ ॥
सर्वथा सत्त्वशुद्धाय दानायातिलघीयसे ।
नमो महाफलायैव न भोगाङ्गप्रसङ्गिने ॥ ५२ ॥

१. 'मात्रे' क. २. 'कुक्षिस्तं' क. ३. 'तास्मिन्क्षणेन' क. ४. 'सिक्तासुलुठतः' क.

इत्युक्त्वा नकुले याते तत्तथेति युधिष्ठिरः ।
विचिन्त्य संततोच्छ्वासः क्षणं स्तिमिततां ययौ ॥ ९३ ॥
तस्मात्सुवर्णाम्बररत्नभूमिदानैर्न दर्पः पुरुषेण कार्यः ।
भवत्युदारं करुणार्द्रसत्त्वं दानं सदा कस्यचिदेव पुण्यैः ॥ ९४ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते दर्पदलने दानविचारः षष्ठः ।

सप्तमो विचारः ।

तपः सदा रागघनाभिमानमोहप्रहाणाय सतामभीष्टम् ।
तेनैव दर्पो यदि किं वृथैव त्यक्तो निकायः क्षपितश्च कायः ॥ १ ॥
सर्वात्मना शुद्धधिया विधेयः संसारदोषप्रशमाय यत्नः ।
कोपोपतप्तं घनरागदिग्धं करोति तीव्रं न तपः प्रशान्तिम् ॥ २ ॥
चित्तं विरक्तं यदि किं तपोभिश्चित्तं सरागं यदि किं तपोभिः ।
चित्तं प्रसन्नं यदि किं तपोभिश्चित्तं सकोपं यदि किं तपोभिः ॥ ३ ॥
कोपेन शापस्फुरिताधराणां कामेन कम्पस्फुरिताधराणाम् ।
स्वेदाम्भसा तुल्यसमुद्भवेन निस्तेजसां किं तपसा मुनीनाम् ॥ ४ ॥
भार्याप्यहल्या किल गौतमस्य क्रुद्धस्य शापेन शिला बभूव ।
नीतो वसिष्ठेन रुषाभिशप्तश्चण्डालतां भूमिपतिस्त्रिशङ्कुः ॥ ५ ॥
भूमग्नमूर्तिर्वररत्नलोभाद्विपाटयन्तीं नयने सुकन्याम् ।
तत्पाणिसंस्पर्शसुखादरेण सेहे निकारं च्यवनः सरागः ॥ ६ ॥
पाण्डुः प्रियाकण्ठविलम्बिबाहुर्ययौ स्तनन्यस्ततनुर्यदस्तम् ।
दग्धः परीक्षित्फणिफूत्कृतैर्यत्तपस्विकोपस्य विजृम्भितं तत् ॥ ७ ॥
विसारसंसारतरोर्न येन निःशेषमुन्मूलितमेव मूलम् ।
शापोपतापप्रभुणा परेषां किं तेन मिथ्यातपसा मुनीनाम् ॥ ८ ॥
न राजसेवारजसा विलुप्तं न भूमिविद्यादिविवादतप्तम् ।
न दम्भदीक्षाकुहकाकुलं यत्कल्याणमित्रं विमलं व्रतं तत् ॥ ९ ॥
ससंचयं गुप्तकलत्रपुत्रं पुनर्गृहीतव्यवहारभारम् ।
दम्भाभिमानोद्भवकष्टभूतं मिथ्याव्रतं जीवितवृत्त्युपायः ॥ १० ॥

१. 'प्रततोच्छ्वासः' क. २. 'विरम' ख.

सरागरोगं बहुलप्रमोहं सरोगसंभारमखर्वगर्वम्।
प्रद्वेषदोषोष्णममेयमायं संसारचिह्नं व्रतमेतदग्र्यम्॥ ११॥
जटाक्षसूत्राजिनयोगपट्टकन्थादृढग्रन्थिनिपीड्यमानम्।
विवेकहीनं विरतप्रकाशं व्रतं बृहद्बन्धनमामनन्ति॥ १२॥
सरागकाषायकषायचित्तं शैलांशुकत्यागदिगम्बरं वा।
लौल्योद्भवद्भस्मभरप्रहासं व्रतं न वेषोद्भटतुल्यवृत्तम्॥ १३॥
निःसङ्गयोगं घनभोगसङ्गं विलम्बिकङ्कालकपालमालम्।
कोपाकुलं स्पर्शविवर्जनीयं भारव्रतं तत्कथयन्ति पापम्॥ १४॥
बालस्तपस्वी किमतोऽस्ति हास्यं युवा वनैषी किमतोऽस्त्ययोग्यम्।
वृद्धः सरागः किमतोऽस्ति निन्द्यं मूर्खः प्रमाता किमतोऽस्ति शोच्यम् १५
क्षमा शमः शासनमिन्द्रियाणां मनः प्रसिक्तं करुणामृतेन।
तपोऽर्हमेतत्सजने वने वा कायस्य संशोषणमन्यदाहुः॥ १६॥
हिमाचले श्यामलदेवदारुवने पुरा निर्झरचारुहासे।
तपस्यतां शोषभुषां मुनीनां कालो ययौ वर्षसहस्रसंख्यः॥ १७॥
ततः कदाचिद्भगवान्भवार्तिहारी विहाराय नभःपथेन।
समं भवान्या वृषभाधिरूढः समाययौ शीतमयूखमौलिः॥ १८॥
तस्योदितानां वदनप्रभाणां दीर्घीकृतानेकशशिप्रभाणाम्।
विलासहास्येन नभो बभूव विभक्तिसंसक्तसितोत्तरीयम्॥ १९॥
देवी विलोक्याथ तपःप्रयत्नतीव्रप्रयासप्रकटास्थिशेषान्।
मुनीन्कृपावेशविषण्णचित्ता शशाङ्कलेखाभरणं बभाषे॥ २०॥
देव त्वदाराधननिश्चलानां संत्यक्तसर्वाग्रहनिग्रहाणाम्।
तपःक्रियाशोषितविग्रहाणां नाद्यापि मुक्तिः किमहो मुनीनाम्॥ २१॥
कलादमी वर्षसहस्रलग्नक्लेशावलग्नास्तनुशोषमग्नाः।
भवत्पदं नित्यसुखाय नैव निरामयं तन्मुनयः प्रयान्ति॥ २२॥

१. 'निपेच्यमाणः' ख. २. 'नीलांशुक' क. ३. 'भयप्रयासं व्रतं नवोद्भटकरात्तितुल्यम्' ख. ४. 'स्पर्शविवर्जितं यत्' ख. ५. 'शापम्' ख. ६. 'प्रसव्या' क. ७. 'दीर्घं' क. ८. 'मरीचि' ख. ९. 'छवीनाम्' ख. १०. 'विभक्तसंसिक्त' क. ११. 'विग्रहाणाम्' क.

पृथुः प्रसादः प्रथमागतेषु निरादरत्वं चिरसंश्रितेषु।
स्वाच्छन्द्यलीलाविपुलावलेपादेष स्वभावः सुलभः प्रभूणाम्॥ २३॥
इति प्रियायाः प्रणयोपपन्नमाकर्ण्य वाक्यं गिरिशोऽब्रवीत्ताम्।
कुर्वन्विपश्यामलकण्ठकान्तिं दन्तप्रभाभिः प्रतिभाविहीनाम्॥ २४॥
देवि त्वयोक्तं दयया मुनीनां भक्तानुरोधादुचितं ममैतत्।
एषां भवोल्लङ्घनविघ्नभूतौ शान्तिं गतौ किं तु न कामकोपौ॥ २५॥
वनप्रवेशैर्नियमैरशेषैः क्रियाविशेषैः कृतकायशोषैः।
न निर्विकारं पदमाप्नुवन्ति कोपेन कामेन च कृष्यमाणाः॥ २६॥
प्रत्यक्षमेषां मनसो विकारं संदर्शयाम्येष निषक्तमन्तः।
तीव्रव्रतैः शुष्यति काय एव न वासनालीनघनप्रमोहः॥ २७॥
संत्यक्तभोगाः स्पृहया विमुक्ताः स्नेहेऽप्यरागाः सुजनेऽप्यसङ्गाः।
भजन्त्यविक्लेशतपःप्रसक्ता मुक्ताः प्रकामं पदमव्ययं तत्॥ २८॥
उक्त्वेति शंभुर्वृषभात्सलीलं गिरेरिवाग्रादवतीर्य भूमिम्।
क्षणादभूदद्भुतरूपराशिर्निमग्नतः कान्तिसुधावदातः॥ २९॥
तस्यामराधीशकिरीटरत्नशोणप्रभार्द्राविव पादपद्मौ।
प्रचक्रतुर्विद्रुमवालवल्लीनवप्ररोहाद्भुतगर्वमुर्व्याम्॥ ३०॥
सुस्पष्टजानु प्रचितोरुशोभि नाभीह्रदावर्तविभक्तमध्यम्।
ततस्य रूपं प्रविलम्बिबाहोः पीनांसमासीन्मुखपूर्णचन्द्रम्॥ ३१॥
अनन्यलावण्यसुधाब्धिमध्यस्नातैरिवाङ्गैः स्फटिकावदातैः।
चक्रे दशाशाः स पृथुप्रकाशा दिगम्बरत्वादिव जातहासाः॥ ३२॥
पाणिस्थितश्याममयूरपिच्छच्छायाच्छयाविच्छुरितोऽस्य कण्ठः।
रराज लीनान्तरकालकूटविषाग्निनिर्वापितधूमलेखैः॥ ३३॥
स लोचनाभ्यां पृथुपक्ष्मलाभ्यामारक्तपर्यन्तमनोहराभ्याम्।
व्यधाद्विर्वानङ्गनवाङ्गसङ्गे दिगङ्गनानामनुरागदीक्षाम्॥ ३४॥

---

१. 'च यथा' ख. २. 'कोपकामौ' ख. ३. 'हत' ख. ४. 'संदर्शयिष्यामि' ख. ५. 'तिष्ठन्ति' क. ६. 'यस्य' क. ७. 'रेखः' ख. ८ 'अनङ्गमनङ्गसङ्गे' क.

दृष्ट्वा त्रिलोकीकलिताभिलाषं वपुः स्मरारेर्जनितस्मरं तत्।
पूर्वापकारस्मृतिजातलज्जं चक्षुः क्षणं क्वापि ययौ तृतीयम् ॥ ३५ ॥
बभौ स कान्तः कुटिलासितेन स्कन्धस्पृशा कुन्तलसंचयेन।
अन्वेष्टुमिष्टां मुकुटेन्दुलेखां निशागणेनेव समागतेन ॥ ३६ ॥
लतावधूपल्लवपाणिमुक्तैः सितावदातैर्विबभौ स पुष्पैः।
रूपान्तरे निह्नुतजह्नुकन्याफेनावशेषैरिव कीर्णकेशः ॥ ३७ ॥
तेनान्यरूपेण कृता नवैव कान्तिश्चकाशे निजरूपगुप्त्यै।
जूटादिवेन्दुर्मृदितः कराभ्यां सर्वाङ्गमभ्यङ्गपदे नियुक्तः ॥ ३८ ॥
रूपं विरूपीकृतमन्मथस्य तत्तस्य कान्त्या कमनीयमासीत्।
लज्जापहाराद्वनदेवतानां सविस्मयो येन नवाभिलाषः ॥ ३९ ॥
विवाससस्तस्य ससङ्गमङ्गे लज्जावतीनां स्पृहयैव पेतुः।
नेत्राणि विद्याधरसुन्दरीणां लीलारविन्दार्धतिरस्कृतानि ॥ ४० ॥
नभःस्थितानां त्रिदशाङ्गनानां तद्गात्रसौन्दर्यवशीकृतानाम्।
प्रकम्पशिञ्जानविभूषणानां नेत्रोत्सवोऽभूद्रतिविघ्नभूतः ॥ ४१ ॥
सुसिद्धकन्याञ्जलिपल्लवाग्रविमुक्तनीलोत्पलपुष्पकुञ्जम्।
अङ्गे जगल्लोचनवर्गमस्य सौन्दर्यसंसक्तमिवावभासे ॥ ४२ ॥
तद्दर्शने कौतुकनिश्चलानां कर्णावतंसीकृतलोचनानाम्।
मृगाङ्गनानामपि सस्पृहाभूज्जितान्तमन्तःकरणप्रवृत्तिः ॥ ४३ ॥
तस्य प्रवेशे वदनाधिवासलोभभ्रमद्भृङ्गगणाञ्चितानाम्।
अभूत्सजृम्भश्वसनाकुलानां मुहुर्लतानां कुसुमेषु कम्पः ॥ ४४ ॥
शनैः शनैराश्रमसंनिकर्षं तं यौवनं मूर्तमिवापतन्तम्।
विलोक्य कान्तं मुनिकामिनीनां मनः प्रहर्षोच्छलितं बभूव ॥ ४५ ॥
तासां तदालोकननिर्निमेषा दृष्टिः परं कर्णपथप्रविष्टा।
उत्सृष्टलज्जाविपुलाभिलाषादसूचयन्मुग्धमृगीविभ्रमम् ॥ ४६ ॥
तासां तदर्चारभसोत्थितानां स्रस्तांशुकोत्कम्पितनन्दनानाम्।
नवेन कामेन खलीकृतानां जृम्भाभवोऽभूद्वदनयोर्विलासः ॥ ४७ ॥

१. 'पूर्वापराधादिव' ख. २. 'निशायनेनेव' ख. ३. 'पत्र' ख. ८. [illegible]

तासां बभौ रोमलता मुखेन्दुभीता तमःश्रीः स्तनरक्षितेव।
रागाग्निधूमप्रसराग्र्यलेखा तनीयसी नाभिविनिर्गतेव॥ ४८॥
तस्याधरे चुम्बनलालसेव कण्ठे हठालिङ्गनसस्पृहेव।
हृदि स्तनन्याससमुत्सुकेव पपात दृष्टिः सहसैव तासाम्॥ ४९॥
भृङ्गस्वनैराहितहुंकृताभिः पुष्पस्मितैः प्रसृतस्मिताभिः।
वाताञ्चितैः पल्लवपाणिभिस्ता निवार्यमाणा इव मञ्जरीभिः॥ ५०॥
संतर्ज्यमाना इव होमधूमलेखावलीभ्रूभ्रमणेन दिग्भिः।
तस्यान्तिके शीलदुकूलमुक्तिसज्जा विलज्जाः प्रसभं बभूवुः॥ ५१॥
निःश्वासिनीनां स्मरबाणपुङ्खपक्षान्तवातैरिव कम्पितानाम्।
तासां विलोक्यैव मनोविकारं भ्रूभङ्गभीमा मुनिपर्षदासीत्॥ ५२॥
कोपोत्कटव्याघ्रविदीर्यमाणक्षमामृगीरक्तचितेव तेषाम्।
आसन्नदोषागमवासरान्तसंध्यानिभाभूत्सहसैव दृष्टिः॥ ५३॥
दष्टाधराः कम्पविघूर्णमानाः स्वेदार्द्रदेहा विषमं श्वसन्तः।
ते भेजिरे रागसमुद्गतेर्ष्याः कोपाकुलाः कामुकवृत्तमेव॥ ५४॥
अन्तर्ज्वलत्कोपकृशानुधूमसंकाशकृष्णाजिनबद्धकक्षः।
त्रिदण्डमुद्यम्य जवेन कश्चिदभ्याद्रवन्नम्रतनुं नृपाङ्कम्॥ ५५॥
वृसीं समुत्क्षिप्य सकम्पबाहुश्चिक्षेप कश्चित्क्षमया विहीनः।
येनासनात्क्ष्माविरहादिवाशु मोहे निरालम्बतनुः पपात॥ ५६॥
कमण्डलुं कश्चिदकाण्डचण्डसंरम्भपिण्डीकृतकोपतुल्यम्।
आदाय मोहेन पिनाकपाणेः पुरः प्रहाराभिमुखो बभूव॥ ५७॥
तेषाममर्षोद्धुरमानसानां सोढुं निकारं क्षणमक्षमाणाम्।
प्रापुः प्रयाताः क्षितिमक्षमाला भ्रूभङ्गतां तस्य तपोवनस्य॥ ५८॥
तत्संभ्रमाद्वाश्रममञ्जरीणां कम्पाकुलानां कुसुमान्तरोत्थैः।
आसीत्प्रमोहप्रविमोऽन्धकारः शापाक्षराभैर्भ्रमरैर्भ्रमद्भिः॥ ५९॥
ते प्रापुरीर्ष्यापदमन्धकारि वक्त्रं शशाङ्कोपममीक्षमाणाः।
कण्ठस्थलालोकनकालकूटसंपूरिताक्षा इव मोहमूर्छाम्॥ ६०॥

ते तं स्मितप्रस्फुरिताधराग्रमुदग्रलावण्यविशेषतर्षाः ।
पत्नीविकारोग्रनिकारमूचुः कण्ठान्तरस्थास्रविकीर्णवर्णाः ॥ ६१ ॥
कोऽयं विजातिर्विगुणः कलावानग्नो वृषाङ्कः प्रविशत्यलज्जः ।
प्रदूषिता येन महर्षिजुष्टा गङ्गेव शुद्धा ललनावलीयम् ॥ ६२ ॥
अनेन संसूचयता निगूढरूपेण दर्पादकुलीनभावम् ।
नीता पवित्रत्वमियं मुनीनां कापालिकेनेव वनान्तभूमिः ॥ ६३ ॥
अहो बतास्य प्रतिभा प्रसह्य सतीसमालिङ्गनसस्पृहस्य ।
केनापि कामात्कुहकक्रमेण कान्तं कृतं रूपमनेन नूनम् ॥ ६४ ॥
उक्त्वेति तस्मै ससृजुः सकोपास्ते दण्डपाषाणवृसीशतानि ।
द्वेषावृताक्ष्णामविवेकजन्मा मोहः प्रमादे गुरुतामुपैति ॥ ६५ ॥

दूरे भवत्यथ शनैः शिशिरांशुमौलौ
तेषां प्रकोपविपुलानलतापितानाम् ।
तद्दर्शनानुसरणप्रसृतस्य यत्नः
पत्नीजनस्य सुतरां विनिवर्तनेऽभूत् ॥ ६६ ॥

अथ स भगवान्भर्गः स्वर्गापगापृथुनिर्झर-
प्रसृतहसितस्तस्माद्देशात्क्रमेण तिरोहितः ।
प्रशमविमलं व्योम व्याप्य प्रियामवदत्स्मय-
स्मितसितमुखीं दृष्टं देवि त्वया मुनिचेष्टितम् ॥ ६७ ॥

भस्मस्मेरशरीरता पृथुजटाबन्धः शिरोमुण्डनं
कुण्डी दण्डकमण्डलुप्रणयिता चर्माक्षसूत्रग्रहः ।
काषायव्यसनं निरम्बररुचिः कङ्कालमालाधृतिः
कामक्रोधवशाद्विशेषरुचिरं सर्वं वृथैव व्रतम् ॥ ६८ ॥

दर्पात्कोपात्परिणतजटासूत्रबन्धाच्च मोहा-
दन्तःसीदत्सरसविषयास्वादसंवादसङ्गात् ।
आशापाशव्यसननिचयाद्वासनालीनदोषा-
न्नैषां मुक्तिर्भवति तपसा कायसंशोषणेन ॥ ६९ ॥

---

१. 'विषयासङ्गभग्नादनत्वात्' ख.

इत्युक्तं त्रिपुरारिणा गिरिसुता श्रुत्वा यथार्थं वचो
निश्चित्य व्रतमप्रशान्तमनसां मिथ्यैव कायक्षयम्।
संसारोपरमाय मोहरजसः शान्त्यै मुनीनां परं
रागद्वेषविमुक्तये च दयया चक्रे हरस्यार्धनाम्॥ ७० ॥

देव्यार्थितोऽथ भगवान्कृपया स्मरारि-
स्तेषामनुग्रहमयेन विलोकनेन।
चक्रे स्मितक्षपितदिग्वदनो मुनीनां
लीनस्य मोहरजसः सहसैव शान्तिम्॥ ७१ ॥

तपोविशेषैर्निशितप्रयत्नैस्तस्मान्न कार्यः पृथुमोहदर्पः।
द्वेषेण रागेण महोदयेन तपः क्षयं याति सह स्मयेन॥ ७२ ॥

प्रशान्तोऽन्तस्तृष्णाविषमपरितापः शमजले-
रशेषः संतोषामृतविसरपानेन वपुषः।
असङ्गः संभोगः कमलदलकीलालतुल्या
भवारण्ये पुंसां परहितमुदारं खलु तपः॥ ७३ ॥

इति श्रीव्यासदासापराख्यक्षेमेन्द्रविरचिते दर्पदलने तपोविचारः सप्तमः।

समाप्तोऽयं ग्रन्थः।

## श्रीत्रिपाठिशिवरामप्रणीतो

# रसरत्नहारः।

तत्प्रणीतयैव लक्ष्मीविहाराख्यटीकया समेतः।

---

सीताकराब्जमृदुलालितपादपद्मस्तस्या मुखं जलजसुन्दरमीक्षमाणः।
रत्यान्वितस्य मदनस्य रुचिं दधानः श्रीमान्रघुप्रभववंशपतिर्विरेजे॥

ग्रन्थादौ कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—

निरीक्ष्य विष्णोश्चरणारविन्दनखेषु लक्ष्मीः प्रतिबिम्बमप्सात्।
दशावतारादपि मन्यमाना स्वाधिक्यमाल्लाद्विदुषां सुखाय॥ १ ॥

---

१. 'मत तया' क. २. 'सुदर्शन' ख. ३. 'च विस्मयेन' ख. ४. 'परामर्शं' ख. ५. 'सुखतम.' क. ६. पुस्तकद्वयमस्य रसरत्नहारस्यास्माभिः समासादितम्. तत्र प्रथम डॉक्टर् पीटर् पीटर्सन्महाशयेन मथुरातः समानीतमष्टादशपत्रात्मकं सटीकं प्रायः शुद्धं क-संज्ञकम्. द्वितीयं जयपुर एव नारायणशास्त्रिसद्मादधिगतम्, तदपि सटीकं नातिशुद्धं विंशतिपत्रात्मकं ख-संज्ञकं ज्ञेयम्.

विष्णोश्चरणारविन्दनखेषु स्वीयं प्रतिबिम्बं निरीक्ष्य दशावतारादप्यस्माद्विष्णोः स्वाधिक्यं मन्यमाना लक्ष्मीर्विदुषां सुखाय भा साकल्येन स्ताद्भवतु। विष्णोः पादसेवनं कुर्वाणा लक्ष्मीः पादनखेषु दशसु स्वीयं प्रतिबिम्बमीक्षमाणा। एकादशमात्मानं ज्ञात्वा विष्णोराधिक्यं मन्यमानेति भावः। स्त्रीस्वभावादियत्येव धीः समुत्पन्ना न साम्यपर्यन्तम्। यद्वा भगवता तिर्यगादिषु योनिषु जन्म विडम्बयता दशावतारता संपादिता। मया तु वक्षःस्थलस्थितयैव स्वरूपादप्रच्युतया चेति स्वाधिक्यं मन्यमानेति भावः॥

उद्ग्रथ्यते सर्वविचक्षणानां प्रीत्यै मयायं रसरत्नहारः।
गुणैरुपेतोऽखिललब्धवर्णकण्ठस्थितः स्याद्विदितो दिगन्ते॥ २॥

सर्वविचक्षणानां प्रीत्यै मयायं रसरत्नहार उद्ग्रथ्यते। गुणैरुपेतः। अखिललब्धवर्णकण्ठस्थितो दिगन्ते विदितः स्यात्। आशीरलंकारः। 'आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा' इति दण्डी॥

स्यात्स्थायिभावोऽत्र रसो विभावैस्तथानुभावैर्व्यभिचारिभिश्च।
आरोप्यमाणः क्रमशः प्रकर्षं यथोचितैः सात्त्विकसंयुतैश्च॥ ३॥

स्थायी चासौ भावश्च स्थायिभावः। 'भावो विकारश्चित्ते स्याग्निर्विकल्पे य आदिमः' इति। अमरसिंहोऽपि 'विकारो मानसो भावः' इति। विभावैरनुभावैर्व्यभिचारिभिर्यथायोग्यैः सात्त्विकैश्च संयुतैः क्रमशः प्रकर्षमारोप्यमाणो रसः स्यात्। तथा च भरतसूत्रम्—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति। 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः॥' इति। वक्ष्यमाणस्वभावैर्विभावानुभावव्यभिचारिसात्त्विकैः काव्योपात्तैरभिनयोपदर्शितैर्वा श्रोतृप्रेक्षकाणामन्तर्विपरिवर्तमानो रत्यादिर्वक्ष्यमाणलक्षणः स्थायी स्वादगोचरतां नीयमानो रसः। तेन रसिकाः सामाजिकाः। काव्यं तु तथाविधानन्दसंविदुन्मीलनहेतुभावेन रसवत्। 'आयुर्घृतम्' इत्यादि व्यपदेशवत्। स्थायिलक्षणं दशरूपके—'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः। आत्मभावं नयत्यन्यान्स स्थायी लवणाकरः॥' यदुक्तम्—'विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः। आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम्॥' इति॥

तटस्थ उद्दीपयते रसं य उद्दीपनाख्यः स भवेद्विभावः।
रसस्य कार्यं ह्यनुभावसंज्ञं ज्ञेयाः सहाया व्यभिचारिणोऽत्र॥ ४॥

'अनुभावो विकारस्तु भावसंसूचनात्मकः।' स्थायिभावाननुभावयन्तः सामाजिकान्भ्रूक्षेपकटाक्षादयो रसपोषकारिणोऽनुभावा व्यभिचारिणः। "विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः। स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥' 'यथा वारिधौ सत्येव कल्लोला उद्भवन्ति विलीयन्ते च तद्वदेव रत्यादौ स्थायिनि सत्येवाविर्भावतिरोभा-

१. 'उद्दीपनाख्योऽध' क.

वाभ्यामाभिमुख्येन चरन्तो वर्तमाना निर्वेदादयो व्यभिचारिणो भावाः ॥" इति दशरूपके ॥

शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः।
रौद्रबीभत्सशान्ताख्याः काव्ये नवरसाः स्मृताः ॥ ५ ॥

ननु नव रसा इत्यनुपपन्नम्। शृङ्गारस्य लोके आस्वाद्यतायाः सर्वानुभवसिद्धत्वा-काव्ये गुणालंकारयोगेनाधिकास्वादगोचरतया रसत्वं युक्तम्, नेतरेषामिति केषांचिलि-द्धान्त एव। तद्भिन्नमतेनेयं संख्योक्तिः। नन्वेवमपि नवरसा इत्यनुपपन्नम्। भक्तिवा-त्सल्यश्रद्धाख्यैस्त्रिभिः सह द्वादशसंख्यात्वात्। तत्र भक्तिर्भगवति प्रसिद्धा। श्रद्धाप्या-स्तिक्यनिश्चयात्मिका वेदशास्त्रार्थविषया शिष्टानां प्रसिद्धैव। वात्सल्यं पुत्रादौ स्नेहाभि-धानमिति चेत्, न। भक्तिवात्सल्ययोर्भावान्तर्भावात्, श्रद्धायाश्च सुखात्मकत्वाचमत्का-रानुत्पादान्तरसत्वमिति नवसंख्योक्तिर्न विरुद्धा। दशरूपके—'प्रीतिभक्त्यादयो भावा मृगयाक्षादयो रसाः। हर्षोत्साहादिषु स्पष्टमन्तर्भावान्न कीर्तिताः ॥' इति। नन्वेवमपि नवरसत्वं विरुद्धम्। नास्त्येव शान्तो रसः। आचार्येण विभावाद्यप्रतिपादनात्। अन्ये तु अनादिकालप्रवाहायातरागद्वेषयोरुच्छेदस्याशक्यत्वात् (अन्ये तु) वीरबीभत्सादावन्त-र्भावं वर्णयन्ति। अमरसिंहोऽपि—'शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः। बीभत्सरौद्रौ च रसाः' इति चेत्, सत्यम्। मतान्तररीत्या नवसंख्येति बोध्यम्। 'निर्वेदस्थायि-भावोऽस्ति शान्तोऽपि नवमो रसः।' इति काव्यप्रकाशे। 'सम्यग्ज्ञानसमुत्थानः शान्तो निस्पृहनायकः।' इति वाग्भटालंकारे ॥

स्त्रीपुंसयोर्मिथो रागवृद्धिः शृङ्गार उच्यते।
संभोगो विप्रलम्भश्चेत्येष स्याद्द्विविधो द्वयोः ॥ ६ ॥

उक्तं च—'अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ। दर्शनस्पर्शनादीनि स संभोगो मुदान्वितौ ॥' भावो यदा रतिर्नाम प्रकर्षमधिगच्छति। नाधिगच्छति चाभीष्टं विप्रल-म्भस्तदोच्यते ॥ मनोनुकूलेष्वर्थेषु सुखसंवेदनं रतिः।' इति रसलक्षणम् ॥

संयुक्तयोः स्यात्संभोगो विप्रलम्भो वियुक्तयोः।
प्रच्छन्नश्च प्रकाशश्च पुनरेष द्विधा मतः ॥ ७ ॥

[स्पष्टम् ॥]

स्वीये नायिकादिवर्णनप्रकरणे रसमञ्जरीव्यवहारो भानुना कृतश्चिन्त्य एव। नहि के-वलमालम्बनेन रसव्यवहारः। 'विभावानुभाव—' इत्यादिभरतसूत्रविरोधात्। 'आल-म्बनविभावत्वेन तावन्नायिका निरूप्यन्ते' इति सोऽपि चिन्त्य एव। आलम्बनविभावस्य नायिकानायकयोस्तुल्यत्वात्। किं च, 'पूर्वं रक्ता भवेन्नारी पुमान्पश्चात्तदिङ्गितैः' इति नियमादादौ नायक(नायिका)वर्णनमुचितम्। स्फुटतो विमं दोषं परिहरन्नाह—

१. 'स्मृतः' ख.

स्त्रीपुंसाविति निर्देशान्नायिका वर्ण्यते पुरा ।
स्वीया च परकीया च सामान्येति त्रिधा स्त्रियः ॥ ८ ॥
स्वकीयात्रोत्तमाचारा पतिमात्रानुरागिणी ।
मुग्धा मध्या प्रगल्भेति त्रिधाङ्कुरितयौवना ॥ ९ ॥

उदाहरणम्—'अन्तरास्ते हास्यमक्ष्णोः सतीनां प्रपदे गतिः । प्रोल्लङ्घने स्मरेऽपि रोपवारणवारणम् ॥' यत्तु रसमञ्जर्याम्—'गतागतकुतूहलं—' इत्याद्युदाहरणं तत्रापाङ्गवेक्षणस्य परकीयाया अपि धर्मत्वाच्चिन्त्यम् ॥

तास्वाद्या सा द्विधाज्ञातयौवना ज्ञातयौवना ।
नवोढा सैव सुरतप्रतिरोधकलज्जया ॥ १० ॥
स्याद्विश्रब्धनवोढा च मनाक्स्वन्दाक्षमान्यतः ।

आद्या मुग्धा । 'मुग्धा नववयःकामा रतौ वामा मृदुः क्रुधि' इति दशरूपके । सा द्विधा—अज्ञातयौवना ज्ञातयौवना च । आद्योदाहरणम्—'दिने दिने दर्पणमीक्षमाणा कान्ति मुखेन्दोरुपचीयमानाम् । निरीक्ष्य नेत्राम्बुजयोर्विकासं पप्रच्छ बाला मुकुरेऽभयन्तिकम् ॥' 'नीरासीरमुपागता' इत्यत्र नेत्रस्य स्वतो दर्शनमसंभवि । तथा च सुबन्धुः—'गुणिनामपि निजरूपप्रतिपत्तिः परत एव संभवति । स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥' अतस्तदुदाहरणं चिन्त्यम् । ज्ञातयौवना यथा—'वभूव किंस्वित्तव नो वयस्ये नवे वयस्येवमिति प्रलप्य । नताननेन्दुः क्षणमाजहार दिशः श्रियं पाशधरस्य मुग्धा ॥' यत्तु रसमञ्जर्याम्—'अम्भोजलोचन-' इत्यत्र ज्ञातयौवनत्वज्ञानार्थमर्थान्तरं कल्पयन्ति सा कुकल्पनैव । नवोढा यथा—'पत्या सनाथममलं भवनं निरीक्ष्य बाला गवाक्षसहसा त्वरया न यातुम् । यातापि नाप शयने शरदभ्रशुभ्रे विद्युल्लतेव कनकामलतनुः स्थिरत्वम् ॥'

ह्रीकामसाम्ये मध्या स्याद्धैर्ये सागसि नायके ॥ ११ ॥
वक्रोक्तिस्तद्विपरीत्ये भवेत्परुषवाग्रुषा ।

'मध्योद्यद्यौवनानङ्गा मोहान्तसुरतक्षमा' इति दशरूपके । 'संप्राप्ततारुण्यकामा' इति च दशरूपके ॥

रतारम्भेऽचेतना यथा—'धन्यासि या कथयसि प्रियसंगमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु । नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥'

एता ज्येष्ठा कनिष्ठेति द्वेधा स्नेहैकभाजनम् ।
भर्तुर्या सा भवेज्ज्येष्ठा कनिष्ठा तु ततोऽवरा ॥ १३ ॥

ज्येष्ठाकनिष्ठे यथा—'दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादरादेकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः । ईषद्वक्रितकंधरः सपुलकः प्रेमोल्लसन्मानसा(मानसा)मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥' यत्तु रसमञ्जर्याम्—'धैर्य-' इत्युदाहरणं तदसंगतम् । मुग्धायास्तदसंभवात् । 'कोपे मार्दवम्' इति मुग्धाचेष्टोक्तेः । 'पुनरस्याव-लम्बाय नम्रवदनाम्' इत्यत्र स्पष्टमेव मुग्धात्वप्रतीतेः ॥

धीराधीरा तथा धीराधीरेति त्रिविधे स्त्रियौ ।
मध्याप्रगल्भिके मानावस्थायामुदिते बुधैः ॥ १४ ॥
धीराधीरे क्रमाद्व्यङ्ग्याव्यङ्ग्यकोपप्रकाशिके ।
धीराधीरा क्रमाद्व्यङ्ग्याव्यङ्ग्यकोपप्रकाशिका ॥ १५ ॥
प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरा दहेद्रुषा ।
अधीरा परुषोक्त्याथ धीराधीरा तु रोदनैः ॥ १६ ॥
प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ।
उदास्ते सुरते तत्र दर्शयन्त्यादरान्बहिः ॥ १७ ॥
धीराधीराथ सोल्लुण्ठभाषितैः खेदयेद्ध्रुवम् ।
तर्जयेत्ताडयेदन्येत्युक्तं साहित्यदर्पणे ॥ १८ ॥
धीरादिभेदाः स्वीयाया इति प्राचीनलेखनम् ।
नव्यैन्तु परकीयाया अपि ते स्युरितीरितम् ॥ १९ ॥

'धीरा सोत्प्रासवक्रोक्त्या मध्या साश्रु कृतागसम् । खेदयेद्दयितं कोपादधीरा परुषाक्षरम् ॥' यथा—'दीपितमानमहानलशिखा मां हन्तुमेति कैतवनृपत एषः । तदधुना इति बन्धनमाशु प्रारभेत इतरोज्ज्वलओष्ठे ॥' प्रौढाधीरा यथा—'सावहित्थादरोदास्ते रतौ धीरेतरा क्रुधा । संतर्ज्य ताडयेत्कान्तं मध्याधीरेव तां वदेत् ॥' तर्जनता-डनोदाहरणं यथा—'कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः । भूयोऽप्येवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं धन्यो हन्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन् ॥' यत्तु रसमञ्जर्याम्—'प्रतिफल-' इति. तदसंगतम् । दर्शितपद्ये तथाननस्याप्रतीयत्वात् ॥

१. '[illegible]' इति पाठः. हास्यकारेण इत्यर्थः.

स्वानूढा स्वानुरक्ता स्त्री परकीया निगद्यते।
उत्तमाधमभेदाभ्यां द्विविधा द्विविधा मता॥ २०॥
अलक्षितानुरागैषा स्वीयाकल्पोत्तमा भवेत्।
तद्भिन्ना त्वधमा ज्ञेया विदग्धाद्यास्तु तद्भिदाः॥ २१॥

स्वशब्देन वर्ण्यः। यत्तु रसमञ्जर्याम्। 'अप्रकट-' इति लक्षण तत्र कन्यकायाः पत्युरभावात्तद्गुरुप्यानुरागस्यासंभवः। यदि भाविनं पतिमादाय परत्वं तर्हि तथैव परोढात्वमेवास्तु। किं भेदद्वयवर्णनेन। यदि पित्राधीनतया परकीयात्वमिति, तदपि न। लक्षणवाक्ये तस्यानुपयोगात्। अथ संज्ञायाः परस्येयं परकीयेत्यत्रोपयोग इति चेत्तर्हि 'अप्रकट-' इत्याद्यनुपयुक्तम्। तद्भिदा इति 'षिद्भिदादिभ्योऽङ्' ॥

परोढाकन्यकाभेदाद्द्विविधैषा पराङ्गना।
चेष्टैवास्या न प्रसिद्धोऽनुरागः कविभिः स्तुतः॥ २२॥

परकीया यथा—'मूर्ति मुरारेः शिल्पस्य सीमानं निजनिर्मिताम्। अनन्यजवशाद्दूती प्रियां प्रादर्शयद्रसात्॥' अप्रकटानुरागा यथा—'हंहो हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति। एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं नीरन्ध्राः पुन(तनुं)रालिखन्तु जरठच्छेदा नलग्रन्थयः॥' कन्योदाहरणं तु शाकुन्तलमालतीमाधवयोः स्पष्टम्॥

विदग्धा मुदिता चैषानुशयानाथ लक्षिता।
गुप्ता च कुलटा चेति षट्प्रकारोदिता बुधैः॥ २३॥
विदग्धा वाक्क्रियाहेतुवैदग्ध्याभ्यां द्विधेष्यते।
भाविस्वाभीष्टबोधेन प्रहृष्टा मुदितोच्यते॥ २४॥

क्रियाविदग्धा यथा—'भ्रूनिरुद्धोर्ध्वगतिर्विदग्धा मिषेण विक्षालितकेशहस्ता। स्तनावधि स्वच्छनिबद्धवस्त्रा गौरी जगामोर्ध्वमपश्यदिष्टम्॥'

नाशात्संकेतस्थलस्य भाविनोऽभावशङ्कया।
स्वहीनप्रिययातस्य बोधाच्चानुशयस्त्रिधा[1]॥ २५॥

स्वहीनप्रिययातस्येति 'गत्यर्थाकर्मक-' इति भावे क्तः। प्रियस्य यातं गमनं तस्य बोधात्। यथा—'सा वार्षिकोत्सवदिने सरसोरुहाक्षी मात्रा प्रसाधनमिषेण गृहे निरुद्धा। नद्याः समागतमवेक्ष्य गृहीतपद्मं कान्तं मुखं द्रुतमधत्त दिनेन्दुतुल्यम्॥' यत्तु रसमञ्जर्याम्—'कर्णकलित-' इति, तच्चिन्त्यम्। 'निष्पतन्नयनवारिधारया' इत्यनेन चेष्टायाः स्पष्टत्वात्परकीयात्वासंभवः। न च सति स्वीयात्वे का क्षतिः। गुप्तादीनां परकीयायामेवान्तर्भावोक्तेः॥

१. 'चानुनया त्रिधा' क.

लक्षिता सा तु विज्ञेया या जनैर्ज्ञातरागिका ।
या गोपायति सा गुप्ता भूतं भावि भवद्रतम् ॥ २६ ॥

(गुप्ता यथा) भूतसुरतगोपना यथा—'गृह्णन्त्या निष्कुटे श्रीफलदलमसकृद्वृक्षमूले भ्रमन्त्या पूजार्थे शंकरस्य श्रमजलमखिले वर्ष्मणि स्तम्भ ऊर्वोः । स्नुचा किंचिद्विलग्नः क्षतमजनि कुचे कण्टकेनैव तस्य तत्पूजासंग्रहाहं हतसकलजनैरन्यथैव व्यतर्कि ॥' वर्तमानसुरतगोपना यथा—'आराममान्दिरकदिनोचितदेवपूजाहेतोर्विचित्रकुसुमानयनाय यान्त्या । अत्रान्तरे महति मेऽनवधानभाजो भ्रष्टाद्भुदं मृगयते सखि साधुरेषः ॥' अपि च धृतराष्ट्रः कथं भीमं बभञ्जायसमित्यसौ । मया पृष्टो दर्शयति साधुः सर्वपुराणवित् ॥' भाविसुरतगोपना यथा—'निन्दन्तु पापमतयः सखि मानवा मां जानातु किंचिदपि चेतसि वल्लभश्च । गात्रं गतिश्रमभरालसमेतदस्तु यास्यामि किं न वत दैवतपूजनाय ॥' यत्तु रसमञ्जर्याम्—'त्रितयमपि—' इत्यादि तत्तत्र श्लोके वृत्तवर्तिष्यमाणयोरेवं प्रतीतेश्चिन्त्यम् ॥

कुलटा बहुपुंरागा वेश्यादेरया प्रकाशतः ।
लोभेन सर्वपुंरागा सामान्या कथिता बुधैः ॥ २७ ॥

कुलटा यथा—'कांश्चिद्वचो वदति पश्यति कांश्चनेवं कांश्चिच्च दर्शयति संहृतमालनोऽहम् । कांश्च(कांचि)द्रतेन च सुखं नयतेऽद्वितीय नैकत्र हि प्रणयिता कुलटाजनस्य ॥' लोभेनेति । यथा—'आ दर्शनादर्थहरां वेश्यामर्थविशेषकैः । महाजनाना सुवतां साहसं को न वर्णयेत् ॥' साधारणस्त्री गणिका कलाप्रगल्भा धौर्त्ययुक् । 'छन्नकामसुखार्थाज्ञस्वतन्त्राहंयुपण्डकान् । रक्तेव रञ्जयेदेतानि.स्वान्मात्रा विमोचयेत् ॥' छन्नं कामयन्ते छन्नकामाः श्रोत्रियवणिग्लिङ्गिप्रभृतयः । सुखार्थोऽप्रयासावाप्तधनः सुखप्रयोजनो वा । अज्ञो मूर्खः । स्वतन्त्रो निरङ्कुशः । अहंयुरहंकृतः । पण्डको वातपण्डादिः । एतान्बहुवित्तान्रक्तेव रञ्जयेदर्थार्थम् । तत्प्रधानत्वात्तद्वृत्तेः । गृहीतार्थान्कुट्टन्या निष्कासयेत् ॥

गर्विता चान्यसंभोगदुःखिता मानिनीस्त्रियः ।
गर्विता द्विविधा हेत्वोः प्रेमसौन्दर्ययोर्भिदा ॥ २८ ॥

तत्राद्या यथा—'रात्रौ प्रियावियोगस्य धन्यः कोकोऽस्ति साक्षिदः । मामपश्यन्क्षणमपि प्रियो वहुर्मनायते ॥' यत्तु रसमञ्जर्याम्—'एताः षोडशापि—' इति, तन्माल्हवान्व्यदपार्थकौमुयान्—'मध्याप्रगल्भयोर्धीरादिषड्भेदानां ज्येष्ठाकनिष्ठाभ्यां द्वादश भेदाः । मुग्धा एकैव । एवं त्रयोदश । द्विधा परकीया । एका सामान्या । एवं षोडश ।' इति, तच्चिन्त्यम् । भानूक्तज्येष्ठाकनिष्ठालक्षणस्य मुग्धानामपि सत्त्वात् । तस्या द्विविधत्वाच्च ॥

मानः कोपः स तु द्वेधा प्रणयेर्ष्योत्थभेदतः ।
द्वयोः प्रणयमानः स्यात्कोपो यः कारणं विना ॥ २९ ॥

१. 'नज' ख.

यत्तु रसमञ्जर्याम्—'प्रियापराधसूचिका चेष्टा मानः ।' इति, तन्न । 'वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् । मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥' इत्यत्र दोषात् । नहि तत्र सीताया मानः । चेष्टा तु न केवलं शरीरव्यापारः किं तु कृतिरपि । 'मानोऽन्यवनितासङ्गादीर्ष्याविकृतिरुच्यते' इति वाग्भटालंकारे ॥

पत्युरन्यप्रियासङ्गे दृष्टेऽप्यनुमिते श्रुते ।
ईर्ष्या मानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा ॥ ३० ॥
त(उ)त्स्वप्नायितभोगाङ्कगोत्रस्खलनतो भवेत् ।
साम भेदोऽथ दानं च नत्युपेक्षे रसान्तरम् ॥ ३१ ॥
तद्भङ्गाय पतिः कुर्यात्षडुपायानिमान्क्रमात् ।
तत्र प्रियवचः साम भेदः सख्युपरञ्जनम् ॥ ३२ ॥
दानं व्याजेन भूषादेः पादयोः पतनं नतिः ।
सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम् ॥ ३३ ॥
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम् ।
इति मानविचारस्तु कृतः साहित्यदर्पणे ॥ ३४ ॥
मानो लघुर्मध्यमश्च गुरुश्चेति त्रिधा भवेत् ।
असाध्यस्तु रसाभास इति भानुकृतौ स्थितम् ॥ ३५ ॥
अपरस्त्रीदर्शनोत्थो गोत्रस्खलनजस्तथा ।
अन्यस्त्रीसङ्गजनितः क्रमेण त्रिविधो भवेत् ॥ ३६ ॥

रसान्तरं यथा—'समुत्क्षिपन्यः पृथिवीभृतां वरं वरप्रदानस्य चकार शूलिनः । त्रसत्तुषाराद्रिसुताससंभ्रमस्वयंग्रहाश्लेषसुखेन निष्क्रयम् ॥'

विशेषा नायिकानां स्युः स्वाधीनपतिकादयः ।
अन्यत्र पौर्वापर्योक्तौ हेतुरूह्यो मनीषिभिः ॥ ३७ ॥

स्वाधीनपतिकादय इति, 'आसन्नायत्तरमणा हृष्टा स्वाधीनभर्तृका । मुदा वासकसज्जा स्वं मण्डयत्येष्यति प्रिये ॥ चिरयत्यव्यलीके तु विरहोत्कण्ठिता मता । उक्तेति शेषः । ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्यासमाकुला ॥ कलहान्तरितामर्षाद्विधूतानुनयार्तियुक् । विप्रलब्धोक्तसमयमप्राप्तेऽतिविमानिता ॥ दूरदेशान्तरस्थे तु कार्यतः प्रोषितप्रिया । कामार्ताभिसरेत्कान्तं सारयेद्वाभिसारिका ॥' इति दशरूपके ॥

विश्वासपात्रं विश्रामकारिणी पार्श्वचारिणी ।
सखी तस्याः कर्मशिक्षाभूषोपालम्भपूर्वकम् ॥ ४५ ॥

परिहासश्च दंपत्योर्मिथः सख्या कृतस्तथा ।
दूतव्यापारनिपुणा दूती संयोगकारिणी ॥ ४६ ॥
विरहादेर्ज्ञापिका च

'दूती दासी सखी कारुर्धात्रेयी प्रातिवेशिका । लिङ्गिनी शिल्पिनी स्वं च नेतृमित्रगुणान्विताः ॥' दासी परिचारिका । सखी स्नेहनिबद्धा । कारू रजकीप्रभृतिः । धात्रेयी धात्रीपुत्री । प्रातिवेशिका समीपगृहवर्तिनी । लिङ्गिनी भिक्षुक्यादिः । शिल्पिनी चित्रकारादिस्त्री । स्वयं चेति दूतीविशेषाः । नायकमित्राणां पीठमर्दादीनां निसृष्टार्थत्वादिना गुणेन युक्ताः । तथा च मालतीमाधवे कामन्दकीं प्रति—'शास्त्रे च निष्ठा सहजश्च बोधः प्रागल्भ्यमभ्यस्तगुणा च वाणी । कालानुरोधः प्रतिभानवत्त्वमेते गुणाः कामदुघाः क्रियासु ॥' तत्र सखी यथा—'मृगशिशुदृशस्तस्यास्तापं कथं कथयामि ते दहनपतिता दृष्टा मूर्तिर्मया नहि वैधवी । इति तु विदितं नारीरूपः स लोकदृशां सुधा तव शठतया शिल्पोत्कर्षो विधेर्विघटिष्यते ॥' यथा च—'उपेक्षिता सा भवता नताङ्गी न तां समुद्दिश्य वदामि किंचित् । राग तदीयं तव निर्दयत्व स्तोष्यन्ति लोका इति मे विषादः ॥' 'सच्चं जाणइ दट्ठुं सरिसम्मि जणम्मि जुज्जए राओ । मरउ न तुमं भणिस्सं मरणपि सलाहणिज्जं से ॥' स्वयंदूती यथा—'ग्रामोऽतिदूरे रविरस्तमेति प्रयासि चेद्याहि चिराय किं स्यात् । एकाकिनीं त्वां कथमुत्सृजेयमेवं मतिश्चेन्मदनः सहायः ॥' दशरूपके सखीकृतो नायिकापरिहासो यथा—'नखक्षतं वीक्ष्य पयोधरान्ते सख्यैवमुक्ता स्मयते स्म बाला । अधित्यकायां समुदेति चन्द्रो नोपत्यकायां किमिदं वधूटि ॥' पूर्वोक्तभेदातिरिक्तो गुरुजनभीताभेदः । स यथा—'आयाति याति मद्द्वारि सखि वारिजलोचनः । एन वद पराधीने दीने को वा तवाग्रहः ॥' भुजंगभीताभेदोऽपि यथा—'आरामे भ्रमतः कीशात्पुंसा रक्ष्यावला बलात् । इति श्रुत्वा द्रुतं यातो हीनवक्त्रप्रभः प्रभुः ॥'

वर्ण्यन्ते नायका अतः ।
पतिश्चोपपतिश्चैव वैशिकश्च क्रमात्रयः ॥ ४७ ॥

वोढा पतिः स्मृतो रक्तो नित्यं वेश्यासु वैशिकः ।
अन्यो वोढुश्चोपपतेर्यः स्त्रीणामाश्रयो रतेः ॥ ४८ ॥

रक्तानुरक्तोऽनुकूलः समः सर्वासु दक्षिणः ।
धृष्टः स्पष्टापराधोऽपि प्रिययापि निराकृतः ॥ ४९ ॥

नमनं मनसस्तव तोषकृन्मम मनोऽपहृतं च न यच्छसि। इति निगद्य चुकूर्द विदूषकः प्रमदया कृतवि(स्)स्मितया हतः॥'

आद्यानुरागमानात्मप्रवासकरुणात्मकः॥ ९५॥
चतुर्धा विप्रलम्भः स्यात्पूर्वपूर्वो ह्ययं गुरुः।
नवावलोकाद्दंपत्योः कामवर्धितरागयोः॥ ९६॥
पूर्वानुरागो विज्ञेयो ह्यपूर्णस्पृहयोर्दशा।
मानप्रवासावुदितौ पञ्चत्वे करुणस्तयोः॥ ९७॥
एकस्य तत्र वृत्तस्य वर्णनं क्रियते बुधैः।

[स्पष्टम्॥]

अथ स्त्रीणामलंकारा वर्ण्यन्ते शास्त्रदर्शिताः॥ ९८॥
यौवने सत्त्वजास्तासामष्टाविंशतिरीरिताः।
अलंकारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः॥ ९९॥
शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता।
औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः॥ ६०॥
लीला विलासो विच्छित्तिर्विब्बोकः किलकिञ्चितम्।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः॥ ६१॥
विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम्।
हसितं चकितं केलिरित्यष्टादशसंख्यकाः॥ ६२॥
स्वभावजाः स्युर्भावाद्या दश पुंसां भवन्त्यमी।

'यौवने सत्त्वजाः स्त्रीणामलंकाराश्च विंशतिः।' सत्त्वोद्भूता विंशतिरलंकाराः स्त्रीणां भवन्ति। तत्र भावहावहेलास्त्रयोऽङ्गजाः। शोभा कान्तिर्दीप्तिर्माधुर्यं प्रागल्भ्यमौदार्यं धैर्यमित्ययत्नजाः सप्त। लीला विलासो विच्छित्तिर्विभ्रमः किलकिंचितं मोट्टायितं कुट्टमितं विब्बोको ललितं विहृतमिति स्वाभाविका दश। [इति दशरूपके]॥

भावः—

भावो विकारश्चित्ते स्यान्निर्विकारे य आदिमः॥ ६३॥

'निर्विकारात्मकात्सत्त्वाद्भावस्तत्राद्यविक्रिया।' तत्र विकारहेतौ सत्यप्यविकारकं सत्त्वम्। यथा—'श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव।' तस्मादविकाररूपात्सत्त्वादाद्यः प्रथमो यो विकारो भवति स बीजस्योच्छूनतेव भावः॥

निर्लज्जोऽस्यां समासक्तः शठः स्त्रीकपटे पटुः ।
यथासंभवमेतेषां भेदा ज्ञेया मनीषिभिः ॥ ९० ॥
मानी च चतुरश्चोभौ शठभेदौ प्रकीर्तितौ ।

'नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः । रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥ बुद्ध्युत्साहस्मृतिप्रज्ञाकलाज्ञानसमन्वितः । शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥' नेता नायकः । मधुरः प्रियदर्शनः । त्यागी सर्वस्वदायकः । दक्षः क्षिप्रकारी । स्थिरो वाङ्मनःक्रियाभिरचञ्चलः । बुद्धिर्ज्ञानम् । प्रज्ञा गृहीतविशेषकारिणी । 'भेदैश्चतुर्धा ललितशान्तोदात्तोद्धतैरयम् । निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः ॥' मृदुः सुकुमारसत्त्वाचारः । 'सामान्यगुणयुक्तश्च धीरशान्तो द्विजादिकः ।' सामान्यगुणा विनयादयः । द्विजादिक इति विप्रवणिक्सचिवाद्युपलक्षणम् । 'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः । स्थिरो निगूढाहंकारी धीरोदात्तो दृढव्रतः ॥' महासत्त्वः क्रोधाद्यनभिभूतः । अविकत्थनोऽनात्मश्लाघनः । दृढव्रतोऽङ्गीकृतनिर्वाहकः । 'दर्पमात्सर्यभूयिष्ठो मायाछद्मपरायणः । धीरोद्धतस्त्वहंकारी चलश्चण्डो विकत्थनः ॥' 'स दक्षिणः शठो धृष्टः पूर्वां प्रत्यन्यया हृतः ।' पूर्वां नायिकां प्रत्यन्यया नायिकयापहृतचित्तः । 'दक्षिणोऽस्यां सहृदयः' अस्यां ज्येष्ठायां हृदयेन सह व्यवहरति । 'गूढविप्रियकृच्छठः । व्यक्ताङ्गवैकृतो धृष्टोऽनुकूलस्त्वेकनायिकः ॥' इति दशरूपके ॥

वाक्चेष्टाव्यङ्ग्यसंयोगनिपुणश्चतुरो मतः ॥ ९१ ॥
तेषां च नर्मसचिवः पीठमर्दो विटस्तथा ।
चेटो विदूषक इति चतुर्धा भानुनोदितः ॥ ९२ ॥
पीठमर्दः प्रकुपितस्त्रीप्रसादक उच्यते ।
विटः कामकलाभिज्ञश्चेटः संधानदक्षिणः ॥ ९३ ॥
अङ्गवाग्वेषवैकृत्यहास्यकारी विदूषकः ।

तेषां नायकानां नर्मसचिवः क्रीडासहायः । 'मन्त्री सहायः सचिवः' इत्यमरः । 'पताकानायकस्त्वन्यः पीठमर्दो विचक्षणः ।' प्रागुक्तप्रासङ्गिकेतिवृत्तविशेषः पताका । तन्नायकः पीठमर्दः प्रधानेतिवृत्तनायकस्य सहायः । (यथा) रामायणे सुग्रीवः । मालतीमाधवे मकरन्दः । 'एकविद्यो विटश्चान्यो हास्यकृच्च विदूषकः । गीतादिविद्यानां नायकोपयोगिनीनामेकस्या विद्याया वेदिता विटः । इति दशरूपके । पीठमर्दो यथा—'अंसयोः करयोः सखि पादयोरलक्तता विधिना रचितोर्चना । समुचिता न च कान्तिसा रवोर्नापि रुचं न यच्छति सत्फलम् ॥' चेटो यथा—'मनो मनोभवस्तस्य कुरुते निष्ठुरस्तदो । मा नोऽस्मानोऽस्ति ते वाच्यामुरीकुरुते नु कः ॥' विदूषको यथा—'

नमनं मनसस्तव तोषकृन्मम मनोऽपहृतं च न यच्छसि । इति निगद्य चुकूर्द विदूषकः प्रमदया कृतवि(सु)स्मितया हतः ॥'

आद्यानुरागमानात्मप्रवासकरुणात्मकः ॥ ९५ ॥
चतुर्धा विप्रलम्भः स्यात्पूर्वपूर्वो ह्ययं गुरुः ।
नवावलोकाद्दंपत्योः कामवर्धितरागयोः ॥ ९६ ॥
पूर्वानुरागो विज्ञेयो ह्यपूर्णस्पृहयोर्दशा ।
मानप्रवासावुदितौ पञ्चत्वे करुणस्तयोः ॥ ९७ ॥
एकस्य तत्र वृत्तस्य वर्णनं क्रियते बुधैः ।

[स्पष्टम् ॥]

अथ स्त्रीणामलंकारा वर्ण्यन्ते शास्त्रदर्शिताः ॥ ९८ ॥
यौवने सत्त्वजास्तासामष्टाविंशतिरीरिताः ।
अलंकारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ॥ ९९ ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।
औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः ॥ १० ॥
लीला विलासो विच्छित्तिर्विब्बोकः किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥ ११ ॥
विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।
हसितं चकितं केलिरित्यष्टादशसंख्यकाः ॥ १२ ॥
स्वभावजाः स्युर्भावाद्या दश पुंसां भवन्त्यमी ।

'यौवने सत्त्वजाः स्त्रीणामलंकाराश्च विंशतिः ।' सत्त्वोद्भूता विंशतिरलंकाराः स्त्रीणां भवन्ति । तत्र भावहावहेलास्त्रयोऽङ्गजाः । शोभा कान्तिर्दीप्तिर्माधुर्यं प्रागल्भ्यमौदार्यं धैर्यमित्ययत्नजाः सप्त । लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितं मोट्टायितं कुट्टमितं विब्बोको ललितं विहृतमिति स्वाभाविका दश । [इति दशरूपके] ॥

भावः—

भावो विकारश्चित्ते स्यान्निर्विकारे य आदिमः ॥ १३ ॥

'निर्विकारात्मकात्सत्त्वाद्भावस्तत्राद्यविक्रिया ।' तत्र विकारहेतौ सत्यप्यविकारकं सत्त्वम् । यथा—'श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।' तस्मादविकाररूपात्सत्त्वादाद्यः प्रथमो यो विकारो भवति स बीजस्योच्छूनतेव भावः ॥

हावः—

नेत्रादिविकृतिद्योतो भावो हावो रतीच्छकः ।

'अल्पालापः सशृङ्गारो हावोऽक्षिभ्रूविकारकृत् ।' प्रतिनियताङ्गविकारी शृङ्गारस्वभावविशेषो हावः ॥

हेला—

हेलात्यन्तसमालक्ष्यो हाव एवोदितः क्रमात् ॥ ६४ ॥

'स एव हेला सुव्यक्तशृङ्गाररससूचिका ।'

शोभा—

रूपयौवनभोगाद्यैः शोभा स्यादङ्गभूषणे ।

'रूपोपभोगतारुण्यैः शोभाङ्गानां विभूषणम् ।' यथा—'तां प्राङ्मुखीं तत्र निवेश्य बालां क्षणं व्यलम्बन्त पुरो निषण्णाः । भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने संनिहितेऽपि नार्यः ॥'

कान्तिः—

मन्मथोन्मेषणा सैव विस्तृता कान्तिरुच्यते ॥ ६५ ॥

'मन्मथाप्यायिता छाया सैव कान्तिरिति स्मृता ।' शोभैव रागावतारघनीकृता कान्तिः । यथा—'उन्मीलद्वदनेन्दुदीप्तिविसरैर्दूरे समुत्सारितं भिन्नं पीनकुचस्थलस्य च रुचा हस्तप्रभाभिर्हतम् । एतस्याः कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुकादप्राप्ताङ्गसुखं रुषेव सहसा केशेषु लग्नं तमः ॥'

दीप्तिः—

कान्तिरेवातिप्रकाशाद्दीप्तिरित्यभिधीयते ।

'दीप्तिः कान्तेश्च विस्तारः ।' यथा—'देआ पसिअ निअत्तसु मुहससिजोह्णाविलुत्ततमणिवहे । अहिसारिआण विग्घं करोसि अण्णाण वि हआसे ॥'

माधुर्यम्—

सर्वावस्थाविशेषेषु माधुर्यं रमणीयता ॥ ६६ ॥

'अनुल्बणत्वं माधुर्यम् ।' यथा—'सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति । इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥'

प्रागल्भ्यम्—

औदार्यम्—

औदार्यं विनयः सदा।

'औदार्यं प्रश्रयः सदा।'

धैर्यम्—

मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला ॥ ६७ ॥

'चापलाविहता धैर्यं चिद्वृत्तिरविकत्थना'। चापलानुपहता मनोवृत्तिरात्मगुणानाश्लाघिका धैर्यम्। यथा—'ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी दहतु मदनः किं वा मृत्योः परेण विधास्यति। मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥'

लीला—

अङ्गैर्वेषैरलंकारैः प्रेमाभिवचनैरपि।
प्रतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ॥ ६८ ॥

'प्रियानुकरणं लीला मधुराङ्गविचेष्टितैः।' यथा—'तेनोदितं वदति याति यथा तथासौ—' इत्यादि। भागवतेऽपि दशमस्कन्धे त्रिंशत्तमेऽध्याये—'गत्यानुराग—' इत्यादिना ॥

विलासः—

यानस्थानासनादीनां मुखनेत्रादिकर्मणाम्।
विशेषस्तु विलासः स्यादिष्टसंदर्शनादिना ॥ ६९ ॥

'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु।' दयितावलोकनादिकालेऽङ्गे क्रियायां वचने च सातिशयं विशेषोत्पत्तिर्विलासः। यथा—'अत्रान्तरे किमपि वाग्विभवातिवृत्तवैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः। तद्भूरिसात्त्विकविकारविशेषरम्यमाचार्यकं विजयि मान्मथमाविरासीत् ॥'

विच्छित्तिः—

स्तोका माल्यादिरचना विच्छित्तिः कान्तिपोषकृत्।

'आकल्परचनाल्पापि विच्छित्तिः कान्तिपोषकृत्।' यथा—'कर्णार्पितो रोध्रकषायरूक्षे गोरोचनाभेदनितान्तगौरे। तस्याः कपोले परभागलाभाद्बबन्ध चक्षूंषि यवप्ररोहः ॥ रघुवंशे त्रयोदशे सर्गे—'अयं सुजातोऽनुगिरं तमालः—' इत्यादि ॥

विब्बोकः—

विब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ॥ ७० ॥

'गर्वाभिमानादिष्टेऽपि विब्बोकोऽनादरक्रिया।' यथा—'सव्याजं तिलकालकानभि-

---

१. 'प्रेमभिः' ख.

रलं लीलाङ्गुलिः संस्पृशन्वारंवारमुदञ्चयन्कुचयुगे प्रोदञ्चिनीलाञ्चलम्। यद्भ्रूभङ्गतरङ्गिताञ्चितदृशा सावज्ञमालोकितस्तद्गर्वादवधीरितोऽस्मि न पुनः कान्ते कृतार्थीकृतः॥' यत्तु माघः—'किं तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते युवत्याः। संशय्य क्षणमिति निश्चिकाय कश्चिद्विब्बोकैर्बकसहवासिनां परोक्षैः॥' तन्न। विब्बोकस्य केवलं मुखवर्तित्वाभावात्। यत्त्वमरसिंहः—'स्त्रीणां विलासविब्बोकविभ्रमा ललितं तथा। हेलालीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः॥' इति तदपि न। आचार्यैः सर्वेषां भेदवर्णनात्। 'माघो बभ्राम विब्बोके तत्रैवामरनामकः। ताभ्यां समो मया दृष्टः श्रीहर्षः किलकिञ्चिते॥'

किलकिञ्चितम्—

क्रोधश्रमत्रासहासशुष्करोदनसंकरम्।
अभीष्टसंगजाद्धर्षादुदेति किलकिञ्चितम्॥ ७१॥

'क्रोधाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम्।' 'रतिक्रीडाद्यूते कथमपि समासाद्य समयं मया लब्धे तस्याः क्वणितकलकण्ठार्धमधुरम्। कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदितस्मितक्रुद्धोद्भ्रान्तं पुनरपि विदध्यान्मयि मुखम्॥' यत्तु श्रीहर्षः—'त्वयि वीर विराजते परं दमयन्तीकिलकिञ्चितं किल। तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम्॥' इति तन्न। सङ्गाभावात्। भविष्यत्सामीप्ये वर्तमानवद्भाव इति चेत्, दृष्टान्तानुपपत्तिः।

मोट्टायितम्—

तद्भावभाविते चित्ते वल्लभस्य कथादिषु।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम्॥ ७२॥

'मोट्टायितं तु तद्भावभावनेष्टकथादिषु।' प्रियतमानुरागेण भावितान्तःकरणत्वम्। 'चित्रवर्तिन्यपि नृपे तत्त्वावेशेन चेतसि। व्रीडार्धवलितं चक्रे मुखेन्दुमवशैव सा॥'

कुट्टमितम्—

केशस्तनाधरादीनां ग्रहे हर्षेऽपि संभ्रमात्।
आहुः कुट्टमितं नेति शिरःकरविधूननम्॥ ७३॥

'सानन्दान्तः कुट्टमितं कुप्येत्केशाधरग्रहे।' 'दष्टेऽधरे प्रणयिना विधुताग्रपाणेः सीत्कारशुष्करुदितानि जयन्ति नार्याः॥'

विभ्रमः—

त्वरया रागहर्षादेर्दयितागमनादिषु।
अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः॥ ७४॥

'विभ्रमस्त्वरया काले भूषास्थानविपर्ययः।' यथा—'अभ्युद्गते शशिनि कोमलदा-

न्तदूतीसंलापसंवलितलोचनमानसाभिः । अत्राहि मण्डनविधिविपरीतभूषाविन्यासहासितसखीजनमङ्गनाभिः ॥' भागवतेऽपि दशमस्कन्धे—'व्यत्यस्तवस्त्राभरणाः' इति ॥

ललितम्—

सुकुमारतयाङ्गानां विन्यासो ललितं विदुः ।

'सुकुमारोऽङ्गविन्यासो मसृणो ललितं भवेत् ।' यथा—'सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती सा पश्यन्ती ललितललितं यौवनस्याञ्चलेन । विन्यस्यन्ती चरणकमले लीलया स्वैरपातैर्निःसंगीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥'

मदः—

मदो विकारः सौभाग्ययौवनाद्यवलेपजः ॥ ७५ ॥

विरु(हृ)तम्—

वक्तव्यकालेऽप्यवचो व्रीडया विरु(हृ)तं मतम् ।

'प्राप्तकाले न यद्ब्रूयाद्व्रीड्या विहृतं हि तत् ।' 'पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती भूयो भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे । वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना यन्मां नोवाच किंचित्स्थितमपि हृदये मानसं तनुनोति ॥'

तपनम्—

तपनं प्रियविच्छेदे सरावेगोत्थचेष्टितम् ॥ ७६ ॥

मौग्ध्यम्—

अज्ञानादिव संपृच्छा प्रतीतस्यापि वस्तुनः ।

दयितस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः ॥ ७७ ॥

विक्षेपः—

भूषाणामर्धरचना वृथा विष्वगवेक्षणम् ।

रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ॥ ७८ ॥

कुतूहलम्—

रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम् ।

यथा रघुवंशे—'करेण वातायनलम्बितेन स्पृष्टस्त्वया चण्डि कुतूहलिन्या । आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते ॥' इति ॥

हसितम्—

हसितं तु वृथा हासो यौवनोद्भेदसंभवः ॥ ७९ ॥

चकितम्—

कुतोऽपि दयितस्याग्रे चकितं भयसंभ्रमः ।

कलयति कथामात्मविषयाम्। सखीषु स्मेरासु प्रथयति च वैलक्ष्यमसम प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरम्॥' स्वदुर्नयाद्यथा—'दूराद्दवीयो धरणीधराभं यस्ताडकेयं तृणवल्लघूनीत्। हन्ता सुबाहोरपि ताडकारिः स राजपुत्रो हृदि बाधते माम्॥' अनया दिशान्यदनुसर्तव्यम्। अथ मदः—'हर्षोत्कर्षो मदः पानात्स्खलदङ्गवचोगतिः। निद्रा हासोऽत्र रुदितं ज्येष्ठमध्याधमादिषु॥' यथा—'हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः। चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन॥' इत्यादि। अथासूया—'परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा। दोषोक्त्यवज्ञाभ्रुकुटिमन्युक्रोधेङ्गितानि च॥' गर्वजा यथा—'अथित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोरप्युत दुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया। उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः स्त्रीरत्नं च जगत्पतिर्दशमुखो दृप्तः कथं मृष्यते॥' दौर्जन्यजा यथा—'यदि परगुणा न क्षम्यन्ते यतस्व गुणार्जने नहि परयशो निन्दाव्याजैरलं परिमार्जितुम्। विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो दिनकरकरान्पाणिच्छत्रैर्नुदञ्श्रममेष्यसि॥' मन्युजा यथा—'पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः। स्फुटो रेखान्यासः कथमपि स तादृक्परिणतो गता येन व्यक्तिं पुनरवयवैः सैव तरुणी॥ ततश्चाभिज्ञाय स्फुरदरुणगण्डस्थलरुचा मनस्विन्या कोपप्रणयरभसाद्गद्गदगिरा। अहो चित्रं चित्रं स्फुटमिति निगद्याश्रुकलुषं रुषा ब्रह्मास्त्रं मे शिरसि निहितो वामचरणः॥' अथ श्रमः—'श्रमः खेदोऽध्वरत्यादेः स्वेदोऽस्मिन्मर्दनादयः।' अध्वतो यथा—'अलसलुलितमुग्धान्यध्वसंपातखेदादशिथिलपरिरम्भैर्दत्तसंवाहनानि। परिमृदितमृणालीदुर्बलान्यङ्गकानि त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता॥' रतिश्रमो यथा—'प्राप्य मन्मथरसादतिभूमिं दुर्वहस्तनभराः सुरतस्य। शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः॥' इत्याद्युत्प्रेक्ष्यम्। अथ चिन्ता—'ध्यानं चिन्तेहितानाप्तेः शून्यताश्वासतापकृत्।' यथा—'पक्ष्माग्रग्रथिताश्रुबिन्दुनिकरैर्मुक्ताफलस्पर्धिभिः कुर्वत्या हरहासहारि हृदये हारावलीभूषणम्। बाले बालमृणालनालवलयालंकारकान्ते करे विन्यस्याननमायताक्षि सुकृती कोऽयं त्वया स्मर्यते॥' यथा वा—'अस्तमितविषयसङ्गा मुकुलितनयनोत्पला बहुश्वसिता। ध्यायति किमप्यलक्ष्यं बाला योगाभियुक्तेव॥' अथ स्मृतिः—'सदृशज्ञानचिन्ताद्यैः संस्कारः स्मृतिरत्र च। ज्ञातत्वेनावभासिन्या भ्रूसमुन्नयनादयः॥' यथा—'मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि। तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति वा रावणमा ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति॥' यथा माधवः [मालतीमाधवे]—'मम हि प्राक्तनोपलम्भसंभावितात्मजन्मनः संस्कारस्यानवरतप्रबोधात्प्रतीयमानस्तद्विसदृशैः प्रत्ययान्तरैरतिरस्कृतप्रवाहः प्रियतमास्मृतिप्रत्ययोत्पत्तिसंतानस्तन्मयमिव करोत्यन्तर्वृत्ति सारूप्यतश्चैतन्यम्। 'लीनेव प्रतिबिम्बितेव लिखितेव-' इत्यादि। अथ धृतिः—'संतोषो ज्ञानशक्त्यादेर्धृतिरव्यग्रभोगकृत्।' ज्ञानाद्यथा—'वयमिह परितुष्टा व-

किमङ्कस्थितेन । संरम्भोन्निद्रितानां क्षितिभृति गहनेऽन्योन्यमेवं प्रतीत्थं नादः स्वप्नाभिदृष्टे त्वयि चकितधियां विद्विषामाविरासीत् ॥' यथा च—'प्रारब्धां तरुपुत्रकेषु सहसा संत्यज्य सेकक्रियामेतास्तापसकन्यकाः किमिदमित्यालोकयन्त्याकुलाः । आरोहन्त्युटजद्रुमांश्च वटवो वाचंयमाः सत्वरं सद्योमुक्तसमाधयो निजवृसीष्वेवोच्चपादं स्थिताः ॥' वात्यावेगो यथा—'वाताहतं वसनमाकुलमुत्तरीयं' इत्यादि । वर्षजो यथा—'देवे वर्षत्यशनपचनव्यापृ... वहिर्हेतोर्गेहाद्गेहं फलकनिचितैः सेतुभिः कम्पभीताः । नीध्रप्रान्तानविरलजलान्पाणिभिस्ताडयित्वा शूर्पच्छत्रस्थगितशिरसो योषितः संचरन्ति ॥' उत्पातजो यथा—'पौलस्त्यपीनभुजसंपदुदस्यमानकैलाससंभ्रमविलोलदृशः प्रियायाः । श्रेयांसि वो दिशतु निह्नुतकोपचिह्नमालिङ्गनोत्पुलकमासितमिन्दुमौलेः ॥' अहितकृतस्त्वनिष्टदर्शनश्रवणाभ्याम् । तद्यथोदात्तराघवे—'चित्रमायः—(ससंभ्रमम् ।) भगवन्कुलपते रामभद्र, परित्रायताम् । (इत्याकुलतां नाटयति ।) पुनश्चित्रमायः—मृगरूपं परित्यज्य विधाय विकटं वपुः । नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥ रामः—वत्सस्याभयवारिधेः प्रतिभयं मन्ये कथं राक्षसात्त्रस्तश्चैष मुनिर्विरौति न पुनश्चास्त्येव मे संभ्रमः । मा हासीर्जनकात्मजामिति मुहुः स्नेहाद्गुरुर्याचते न स्थातुं न च गन्तुमाकुलमतेर्मूढस्य मे निश्चयः ॥' इत्यनेनानिष्टप्राप्तिकृतः संभ्रमः । इष्टप्राप्तिकृतो यथात्रैव—'(प्रविश्य पटीक्षेपेण संभ्रान्तः) वानरः—'महाराअ, एदं खु पवणणन्दणागमणपरिहस-' इत्यादि 'देवस्स हिदआणन्दजणणविलुलिदं महुवणम्' इत्यन्तम् । यथा वीरचरिते—'एह्येहि वत्स रघुनन्दन पूर्णचन्द्र-' इत्यादि । वह्निजो यथा—'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं' इत्यादि । यथा च—'विरम विरम वह्ने' इत्यादि । करिजो यथा—'स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन । रामापरित्राणविहस्तयोध सेनानिवेशं तुमुलं चकार ॥' करिग्रहणं व्यालोपलक्षणार्थम् । तेन व्याघ्रसूकरवानरादिप्रभवा आवेगा व्याख्याताः । अथ विषादः—'प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः । निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥' यथाह—'आर्ये ताडके, किं हि नामैतत् । अम्बुनि मज्जन्त्यलाबूनि ग्रावाणः प्लवन्ते । नन्वेष राक्षसपतेः स्खलितः प्रतापः प्राप्तोऽद्भुतः परिभवो हि मनुष्यपोतात् । दृष्टः स्थितेन च मया स्वजनप्रमाथो दैन्यं जरा च निरुणद्धि कथं करोमि ॥' यथा वा—'अर्थित्वे प्रकटीकृतेऽपि-' इत्यादि । अथ जडता—'अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः । अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ॥' इष्टदर्शनाद्यथा—'एवमालि निगृहीतसाध्वसं शंकरो रहसि सेव्यतामिति । सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये ॥' अनिष्टश्रवणाद्यथा उदात्तराघवे—'राक्षसः—तावन्तस्ते महात्मानो निहताः केन राक्षसाः । येषां नायकतां प्राप्तास्त्रिशिरःखरदूषणाः ॥ द्वितीयः—गृहीतधनुषा रामहतकेन । प्रथमः—किमेकाकिनैव । द्वितीयः—अदृष्ट्वा कः प्रत्येति । पश्य तावतोऽस्मद्बलस्य सद्यश्छिन्नशिरःश्वभ्रमज्जत्कङ्ककुलाकुलाः । कबन्धाः केवलं जातास्तालोत्ताला रणाङ्गने ॥ प्रथमः—यद्येवं तदहमेवंविधः किं करोमि ॥' अथौत्सुक्यम्—'कालाक्षमत्वमौत्सुक्यं रम्येच्छा-

रतिसंभ्रमैः तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः ॥' यथा—'आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी । हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः ॥' अथ निद्रा—'मनःसंमीलनं निद्रा चिन्तालस्यक्लमादिभिः । तत्र जृम्भाङ्गभङ्गाक्षिमीलनोत्स्वपनादयः ॥' यथा—'निद्रार्धमीलितदृशो मदमन्थराणि नाप्यर्थवन्ति न च यानि निरर्थकानि। अद्यापि मे मृगदृशो मधुराणि तस्यास्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥' यथा च—'प्रहरकमपनीय स्वं निदिद्रासतोच्चैः प्रतिपदमुपहूतः केनचिज्जागृहीति । मुहुरविशदवर्णा निद्रया शून्यशून्यां दददपि गिरमन्तर्बुध्यते नो मनुष्यः ॥' अथ गर्वः—'गर्वोऽभिजनलावण्यबलैश्वर्यादिभिर्मदः । कर्मास्यधर्षणावज्ञा सविलासाङ्गवीक्षणम् ॥' यथा—'मुनिरयमथ वीरस्तादृशस्तत्प्रियं मे विरमतु परिकम्पकातरे क्षत्रियासि । तपसि विततकीर्तेर्दर्पकण्डूलदोष्णः परिचरणसमर्थो राघवः क्षत्रियोऽहम् ॥' यथा वा—'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये । जामदग्न्यस्तु वो मित्रमन्यथा दुर्मनायते ॥' अथ वितर्कः—'तर्को विचारः संदेहाद्भ्रूशिरोङ्गुलिनर्तकः ।' यथा—'किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं सद्यः स्त्रीलघुतां गता किमथवा मातैव सा मध्यमा। मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरुर्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥' अथवा 'कः समुचिताभिषेकादार्यं प्रच्यावयेद्गुणज्येष्ठम् । मन्ये ममैव पुण्यैः सेवावसरः कृतो विधिना ॥' अथापस्मृतिः—आवेशो ग्रहदुःखाद्यैरपस्मारो यथाविधः । भूपातकम्पप्रस्वेदलालाफेनोद्गमादयः ॥' यथा—'आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् । फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥' अथ सुप्तम्—'सुप्तं निद्रोद्भवं तत्र श्वासोच्छ्वासक्रियाकरम् ।' यथा—'लघुनि तृणकुटीरे क्षेत्रकोणे यवानां नवकलमपलालस्रस्तरे सोपधाने । परिहरति सुषुप्तं हालिकद्वन्द्वमारात्कुचकलशमहोष्मावद्धरेखस्तुषारः ॥' अथ विबोध—'विबोधः परिणामादेस्तत्र जृम्भाक्षिमर्दने ।' यथा—'चिररतपरिखेदप्राप्तनिद्रासुखानां चरममपि शयित्वा पूर्वमेव प्रबुद्धाः । अपरिचलितगात्राः कुर्वते न प्रियाणामशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥ अथामर्षः—'अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता । तत्र स्वेदशिरःकम्पतर्जनाताडनादयः ॥' यथा—'प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् । न त्वेव दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥' यथा च—'युष्मच्छासनलङ्घनाम्भसि मया मग्नेन नाम स्थितं प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि । क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवानद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥' अथावहित्थम्—'लज्जाद्यैर्विक्रियागुप्ताववहित्थाङ्गविक्रिया ।' यथा—'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी । लीलाकमलपत्राणि गणयामास पार्वती ॥' अथोग्रता—'दुष्टेऽपराधदौर्मुख्यचौर्याद्यैश्चण्डत्वमुग्रता । तत्र स्वेदशिरःकम्पतर्जनाताडनादयः ॥' यथा जामदग्न्यः—'उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसंतानरोषादुद्दामस्यैकविंशत्यवधि विशसतः सर्वतो राजवंश्यान् । पित्र्यं तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमान क्रोधाग्नि

कुर्वतो मे न खलु न विदितः सर्वभूतैः स्वभावः ॥' अथ व्याधिः—'व्याधयः संनिपातायास्तेषामन्यत्र विस्तरः।' दिङ्मात्रं यथा—'अच्छिन्नं नयनाम्बु बन्धुषु कृतं चिन्ता गुरुभ्योऽर्पिता दत्तं दैन्यमशेषतः परिजने तापः सखीष्वाहितः। अद्यश्वः परनिर्वृतिं व्रजति सा श्वासैः परं खेद्यते विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ॥' अथ मतिः—'भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः।' यथा—'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥' तथा च—'न पण्डिताः साहसिका भवन्ति श्रुत्वापि ते संतुलयन्ति तत्त्वम्। तत्त्वं समादाय समाचरन्ति स्वार्थं च कुर्वन्ति परस्य चार्थम् ॥' अथोन्मादः—'अप्रेक्षाकारितोन्मादः संनिपातग्रहादिभिः। तस्मिन्नस्थानरुदितगीतहासासितादयः ॥' यथा—'आः क्षुद्र राक्षस, तिष्ठ। क्व मे प्रियतमामादाय गच्छसि' इत्युपक्रमे 'कष्टम्, नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः सुरधनुरिदं दूराकृष्टं न नाम शरासनम्। अयमपि पटुर्धारासारो न बाणपरम्परा कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥' इत्यादि। अथ मरणम्—'मरणं तु प्रसिद्धत्वादनर्थत्वाच्च नोच्यते। वीरादावुच्यते यद्वा शृङ्गारेऽध्यवसायि वा॥' यथा—'संप्राप्तेऽवधिवासरे क्षणमनु त्वद्वर्त्मवातायनं वारंवारमुपेत्य निष्क्रियतया निश्चित्य किंचिच्चिरम्। संप्रत्येव निवेद्य केलिकुररीः सास्रं सखीभ्यः शिशोर्माधव्याः सहकारकेण करुणः पाणिग्रहो निर्मितः॥' इत्यादिवच्छृङ्गाराश्रयालम्बनत्वेन मरणाध्यवसायमात्रमुपनिबन्धनीयम्। अन्यत्र कामचारः। यथा—'पश्यन्तु भवन्तस्ताटकाम्, 'हृन्मर्मभेदिपतदुत्कटकङ्कपत्रसंवेगतत्क्षणकृतस्फुरदङ्गभङ्गा। नासाकुटीरकुहरद्वयतुल्यनिर्यदुद्बुद्बुदध्वनदसृक्प्रसरा मृतैव ॥' अथ त्रासः—'गर्जितादेर्मनःक्षोभस्त्रासोऽत्रोत्कम्पनादयः।' यथा—'त्रस्यन्ती चलशफरी-' इत्यादि।

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥ ८४ ॥
प्रथमे त्वभिलाषः स्याद्द्वितीये चिन्तनं भवेत्।
तृतीये तु स्मृतिः प्रोक्ता चतुर्थे गुणकीर्तनम् ॥ ८५ ॥
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते।
उन्मादः सप्तमे प्रोक्तो भवेद्व्याधिस्तथाष्टमे ॥ ८६ ॥
नवमे जडता प्रोक्ता दशमे मरणं भवेत्।
बृहत्समासा गौडी स्याद्रौद्रे वीरे हसे रसे ॥ ८७ ॥
द्वित्रिपदयुक्तसमासा वैदर्भी रीतिराख्याता।
शृङ्गारवीरकरुणबीभत्सभयानके योज्या ॥ ८८ ॥

[स्पष्टम्।]

परविकारदर्शनात्स्मितहसिते। विहसितापहसिते मध्यमस्य। अपहसितातिहसितेऽधमस्य व्यभिचारिणश्चास्य—'निद्रालस्यश्रमग्लानिमूर्च्छास्तु सहचारिणः।'

विस्मयोत्थोऽद्भुतो ज्ञेयः स चासंभाव्यवस्तुनः।
दर्शनाच्छ्रवणाद्वापि देहिनामुपजायते॥ ९२॥
नेत्रप्रकाराः पुलकः स्वेदो निस्पन्दता तथा।
अनुभावा अद्भुतस्य वाणी स्यादत्र गद्गदा॥ ९३॥

'विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात्। अतिलोकैः पदार्थैः स्याद्विस्मयात्माद्भुतो रसः॥ कर्मास्य साधुवादाश्रु वमथुस्वेदगद्गदाः। हर्षावेगधृतिप्राया भवन्ति व्यभिचारिणः॥ लोकसीमातिवृत्तपदार्थवर्णनादिविभावितः साधुवादाद्यनुभावपरिपुष्टो विस्मयस्थायिभावो हर्षावेगादिव्यभिचारिभावितो रसोऽद्भुतः। यथा—'कराग्रस्थापितगिरिं हरिं निर्निमिषेक्षणाः। अपश्यन्गोपिका दन्तदष्टजिह्वा मुदान्विताः॥

घोरवस्त्ववलोकेन भीतिजन्मा भयानकः।
वनितानीचबालेषु बहुधा वर्णयन्त्यमुम्॥ ९४॥
दिग्दर्शनं चास्यशोषो गद्गदा गीश्च संभ्रमः।
कम्पश्वासश्च वैवर्ण्यं संमोहोऽप्यत्र वर्ण्यते॥ ९५॥

'रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम्। विकृतस्वरसत्त्वादेर्भयभावो भयानकः॥ सर्वाङ्गवेपथुस्वेदशोषवैचित्यलक्षणः। दैन्यसंभ्रममोहादित्रासादिस्तस्य सोदरः॥' रौद्रस्वरश्रवणाद्रौद्रसत्त्वदर्शनाच्च भयस्थायिभाव प्रभवो भयानको रसः। तत्र सर्वाङ्गवेपथुप्रभृतयो दैन्यादयश्च व्यभिचारिणः। यथा—'ग्रीवाभङ्गाभिरामं—' इत्यादि शकुन्तलायाम्॥

रौद्रः क्रोधात्मको ज्ञेयः कोपः परपराभवात्।
भीष्मक्रियो भवेदुग्रः सामर्षस्तत्र नायकः॥ ९६॥
भुजाघातः स्वप्रशंसा शस्त्रोत्क्षेपोऽथ भ्रूकुटिः।
आक्षेपो दलनं शत्रोर्वर्णयन्ति कवीश्वराः॥ ९७॥

'प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते।' 'क्रोधो मत्सरवैरिवैकृतमयैः पोषोऽस्य रौद्रो मुहुः क्षोभः स्वाधरदंशकम्पभ्रुकुटिस्वेदास्यरागैर्युतः। युद्धोल्लासविकत्थनांसधरणीघातप्रतिज्ञाग्रहैरत्रामर्षमदौ स्मृतिश्चपलतासूयौग्र्यवेगादयः॥' मात्सर्यविभावो रौद्रो यथा—'त्वं ब्रह्मवर्चसधरो यदि वर्तमानो यद्वा स्वजातिसमयेन धनुर्धरः स्याः। उग्रेण भोस्तव तपस्तपसा दहामि पक्षान्तरस्य सदृशं परशुः करोतु॥' वैरिकृतादिविभावो यथा—'लाक्षागृहानलविषान्नसभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य। आकृष्य पाण्डववधूपरिधानकेशान्स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः॥' इत्येवमादिविभावैः प्रस्वेद-

नयनारुणताद्यनुभावैरमर्षादिव्यभिचारिभिः क्रोधपरिपोषो रौद्रः । परशुरामभीमसेनदुर्योधनादिव्यवहारेषु वीरचरितवेणीसंहारादाववगन्तव्यः ॥

जुगुप्सात्माथ बीभत्सः स्यादहृद्यश्रुतीक्षणैः ।
निष्ठीवनास्यभङ्गादि महतां नात्र वर्ण्यते ॥ ९८ ॥

'जुगुप्सा गर्हणार्थो वा दोषमाहात्म्यदर्शनात् ।' 'बीभत्सः कृमिपूतिगन्धिकारिप्रायैर्जुगुप्सैकभूरुद्वेगी रुधिरान्त्रकीकसवसामांसादिभिः क्षोभणः । वैराग्याज्जघनस्तनादिषु घृणायुक्तो विभावैर्वृतो नासावक्त्रविकूणनादिभिरिहावेगार्तिशङ्कादयः ॥' अत्यन्ताहृद्य कृमिपूतिगन्धिप्रायविभावोद्भूतजुगुप्सास्थायिभावपरिपोषलक्षण उद्वेगी बीभत्सः । यथा—'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छ्रूनभूयांसि मांसान्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा । आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्कादङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥' रुधिरान्त्रकीकसवसामांसादिविभावः क्षोभणो बीभत्सो यथा—'अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कणप्रेङ्खद्भूरिविभूषणारवभैरराघोषयन्त्यम्बरम् । पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥' रम्येष्वपि रमणीजघनस्तनादिषु घृणायुक्तो बीभत्सो यथा—'लालां वक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ । मांसास्थिकूटं जघनं जनः काममहातुरः ॥' न चायं शान्त एव । विरक्तोक्तेः । यतो बीभत्समानो विरज्यते ।

सम्यग्ज्ञानसमुद्भूतः शान्तो निःस्पृहनायकः ।
रागद्वेषपरित्यागात्सम्यग्ज्ञानसमुद्भवः ॥ ९९ ॥

इद वाग्भयालङ्कारीत्या । काव्यप्रकाशे तु—'निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।' दशरूपके तु—'रत्युत्साहजुगुप्साः क्रोधोत्साहौ स्मयो भयं शोकः । शममपि केचित्प्राहुः पुष्टिर्नाट्येषु नैतस्य ॥' इति । अत एवोक्तं मूले—'काव्ये' इति । 'कश्चित्सदम्भो दम्भोलिसदृशं वक्ति चेद्वचः । तथापि नैति विकृतिं शान्तः सागरधीरधीः ॥'

स्निग्धा हृष्टा तथा दीना क्रुद्धा दृप्ता भयान्विता ।
जुगुप्सिता विस्मिता च शान्तेति रसदृष्टयः ॥ १०० ॥

जगति यद्यपि सन्ति परःशता गुरुतमा रचना बुधबुद्धये ।
ननु तथापि मया न वृथा कृता गुरुतमा रचनाबुधबुद्धये ॥ १०१ ॥

शतात्परे परःशताः । 'परःशताद्यास्ते येषां परा सङ्ख्या शतादिकात्' इत्यमरः । नन्विति वाक्यालङ्कारे । अगुरुतमा रचना अबुधबुद्धये बालबोधाय ॥

गुरुपादाम्बुजद्वन्द्वप्रसादावाप्तसन्मतिः ।
त्रिपाठी शिवरामाख्यो हारं पूरितवानमुम् ॥ १०२ ॥

इति श्रीमच्छिवरामत्रिपाठिकृतौ लक्ष्मीविहाराख्यटीकासमेतो रसरत्नहारः ।

## श्रीनीलकण्ठदीक्षितप्रणीतम्

### अन्यापदेशशतकम् ।

छायावृक्षमुपाश्रयन्ति पथिषु श्रान्ता हि पान्थाः समं
तेष्वेकोऽस्य शुभं शुभेन मनसा हृष्यन्ननुध्यायति ।
अन्यो हर्तुमपेक्षतेऽस्य विटपानाधारयष्टेः कृते
कश्चिन्निश्चिनुते कवाटफलकं कर्तुं तमेव क्षणात् ॥ १ ॥

श्वानः सन्त्यभितोऽपि दन्तमुकुलव्यावर्तनोद्घाटित-
स्वैरोत्तानितविड्वराहपृथुकाः किं तैः स्थितैर्वा मृतैः ।
वस्तव्यं गिरिराजमौलिषु विहर्तव्यं पुनः स्वेच्छया
हन्तव्याः करिणो मृगेन्द्र इति च प्राप्तव्यमुच्चैर्यशः ॥ २ ॥

किं पुष्णासि मृगान्मृगादनकुलात्किं वा परं त्रायसे
त्वद्भाग्येन तथाप्यमी वनभुवि स्वैरं चरित्वा तृणम् ।
त्वां राजानमुपासितुं यदि किल श्रद्धां निबध्नन्ति त-
त्किं पारीन्द्र गुहागृहादपि विनिर्गन्तुं तवैष श्रमः ॥ ३ ॥

उन्मुच्य स्वजनानुपेक्ष्य तृणवत्प्राणानपि प्रेयस-
स्तीर्त्वा दुस्तरमर्णवं च वणिजः प्राप्ताः पटीराशया ।
श्वासैस्ते विनिवर्तिताः प्रतिभयैः स्वस्थो भवातःपरं
त्वं वा केवलमङ्गमङ्गभुरग व्यालिम्प गन्धद्रवैः ॥ ४ ॥

भ्रान्त्वा दिग्वलभीर्विचित्य विपिनान्यासाद्य दैवादिह
क्वापि क्वापि मुखेन केवलमथैकैकां शलाकां हरन् ।
कृत्वा नीडकुटीं चिरात्तरुशिरस्यध्यास्त यावन्नतां
काकस्तावदहो तदेव विपिनं दग्धं दवज्वालया ॥ ५ ॥

नाम्भोजाय शशी न चापि शशिने यद्रोचतेऽम्भोरुहं
किं तेन क्षतमस्ति किंचन जगत्येतस्य वा तस्य वा ।

---

१. हे सिंह. २. चन्दनाशया.

लोकानन्दकयोः परं त्विह तयोः प्रेम्णैव भाव्यं मिथ-
स्तच्चेन्नाजनि तत्प्ररूढमयशः स्फारं विधेः केवलम् ॥ ६ ॥

अत्तप्रत्युपकारगन्धमकृतत्वत्प्रार्थनापेक्षम-
प्यम्भोभिर्भुवमार्द्रयन्ति जलदा जीवन्त्यमी जन्तवः ।
देवज्ञः पुनरस्ति वृष्टिरिति वागेका मयोक्तेति य-
द्विश्वं क्रीतमिवाधिगच्छति तदेवाघूर्णते मर्मणि ॥ ७ ॥

अस्ति स्वादुफलं किमस्ति किमथाघ्रातुं क्षमः कोरक-
स्तद्विश्राम्यतु नाम मोक्तुमुचितं पत्रं किमस्त्यन्ततः ।
सेव्यो हन्त यदीदृशोऽपि मनुजैर्वृक्षाधमः पिप्पलो
दुःखातव्यमिदं विधेः कथय तत्कस्याग्रतो रुद्यताम् ॥ ८ ॥

सर्वासां सरितां पतिर्यदि यदि व्याप्ताः समस्ता दिशः
कस्यान्तेप्यपि वा न गुप्यति यदि स्वैरं तदङ्गीकृतम् ।
अम्भः स्वादु पिपासतः पथि परिश्रान्तस्य पान्थस्य किं
तेन स्यात्कलशार्णवोऽयमिति चेदिन्दुग्रहे स्नास्यते ॥ ९ ॥

स्थित्वा तीरभुवि प्रसार्य सरसि स्वैरं कराग्रं पयः
पातव्यं पिब तावता न विरमेद्दन्तीन्द्र किं ते तृषा ।
उन्मृद्नासि तटीरपः कलुषयस्युन्मूलयस्यम्बुजिनीं
हानिः कस्य तवैव शून्यमुदकं भ्रातः पुनस्तृप्यतः ॥ १० ॥

को दोषः परितो गते मधुकरे क्रीतः किमेष त्वया
क्रीतेनापि किमास्यते क्वचिदपि म्लानोदरेण क्षणम् ।
जानास्येवमथापि चेत्क्षिपसि तं कर्णानिलैर्दूरतो
दुर्धर्षोऽसि निरङ्कुशोऽसि भवतो मत्तेभ वार्तैव का ॥ ११ ॥

नेतव्यः समयः कियानिह सखे काक त्वया भ्राम्यता
हंसीभूय सुखेन भुङ्क्ष्व नलिनीनालानि पद्माकरे ।
व्यावर्त्यमिहास्ति किं विमलता किंचित्तु कार्या तनो-
र्हंसत्वे यदि ते जनो विवदते दण्ड्योऽहमस्त्यग्रतः ॥ १२ ॥

किं त्वं दोहदमीहसे किमुदकैः सिक्तोऽसि किं केनचि-
द्बद्धस्ते सकृदालवालवलयः किं ते मही संस्कृता ।
द्वित्रिः पुष्प्यसि वासरे ह्यनुगुणं धुस्तूर ते निह्नवे
दुर्गन्धो न भवेदियान्यदि ततस्त्वं पारिजातोऽसि नः ॥ १३ ॥
गन्तव्यं जलमध्य एव गतवन्मन्तव्यमेतद्वपुः
क्षन्तव्या लवणानिला इति कृतं निर्विद्य सांयात्रिक ।
अन्तर्वेश्मनि हंसतूलशयने सुप्त्वा सुखं जाग्रतो
हस्ताग्रे धनमेष्यति स्वयमिति भ्रातः किमास्ते हृदि ॥ १४ ॥
आसीनः सुखमापणे यदि वणिक्श्रद्धालुभिः प्रार्थितः
किंचिच्छंसति पञ्चकं शतकमित्येतन्न तस्याद्भुतम् ।
आपातालविघूर्णिताम्भसि चलत्यौत्पातिके मारुते
मज्जन्त्यामपि नावि मुञ्चति न यस्तामेव मूल्यस्थितिम् ॥ १५ ॥
विद्धं मर्मसु येन येन गरलोन्मिश्रा गिरः श्राविता
जज्वाल ज्वलनास्त्रवन्निशि निशि क्रूरैः करैर्यः सदा ।
सर्वे ते सुहृदो बभूवुरधुना सङ्गे मिथः कामिनो-
र्दौर्जन्यस्य विभावनात्परिणतो दूती परं दूषिता ॥ १६ ॥
संनद्धेषु पयोधरेषु चलितेऽमन्दं पुरो मारुते
कादम्बे कमलाकरस्थितिमपि त्यक्त्वा सरः प्रस्थिते ।
मिथ्यारोपितपौरुषैर्मधुकरैर्मुग्धैर्यदध्यासितं
तस्येदं फलमम्भसा प्रवहता सैवाब्जिनी मज्जिता ॥ १७ ॥
संत्यक्ता यदि केतकी त्रिभुवनश्लाघ्या पुरद्रोहिणा
तल्लिन्नेव हि पर्यवस्यति ततो वस्तुप्वसारज्ञता ।
किं वेणीषु न तां वहन्ति सुदृशः किं सा न विक्रीयते
किं नेमामुपलालयन्ति रसिकाः क्षोणीभुजो मौलिभिः ॥ १८ ॥
कोणे क्वाप्यवतीर्य गात्रमभितः सिक्त्वा पयःशीकरै-
रास्वाद्योदकमागतोऽस्ति पुनरित्यास्ते गजस्याशये ।

कासारस्य दशा त्वसौ कलुषितान्यम्भांसि मग्नास्तटा
प्रध्वस्ता नलिनी किमत्र बहुना स्नातव्यमास्ते पुनः ॥ १९ ॥
द्यौरित्थं क्षितिरित्थमित्थमुदधेर्मुद्रेति कृत्वा स्थितिं
विश्वस्याहनि विश्रमाय शयितुं प्रारम्भि धात्रा यदा।
दग्धं चण्डकरैस्तदेव पवनैरौत्पातिकैः शोषितं
मेघैः प्लावितमद्भुतैरपि जगत्स्रष्टव्यमासीत्पुनः ॥ २० ॥
स्वस्ति स्वागतमास्यते सुखममी जाताः कुतः पल्लवाः
सन्तः सत्कुसुमान्यपीह किमतो माध्वी च तत्रेक्ष्यते।
किं भृङ्गा अपि सन्ति साधु शिरसि न्यस्तं पदं शाखिनां
धुस्तूरास्ति न दुर्लभं किमपि ते यावद्वसन्तः सुखी ॥ २१ ॥
दृष्टाश्चन्द्रसमुद्गमाः शतमतिक्रान्ताः शतं प्रावृषः
सीमामेष न जात्वलङ्घत किलेत्यब्धिर्न विश्वस्यताम्।
योऽसौ शेत इवायमेव विधिना वामेन चेच्चाल्यते
का सीमेति तदास्ति के जनपदाः का मेदिनी का दिशः ॥ २२ ॥
सर्वत्र स्त्रवतोऽस्य किंचिदुदकं दिष्ट्या मुहूर्तं क्वचि-
च्छुक्तीनामुदरेषु मौक्तिकमभूत्काले कदाचित्किल।
अयत्ने च तथा करोतु पटुता यद्यस्ति तद्दूरतः
शुष्कैरेव तु गर्जितैर्व्यथयति श्रोत्राणि धाराधरः ॥ २३ ॥
आयुस्ते कियदस्ति तत्र च कियत्तारुण्यमत्रापि वा-
प्यर्धं निर्गलितं निशात्मकतया यत्रास्ति सङ्गो न ते।
शेषाः सन्ति कतिक्षणाः प्रणयजस्तत्रापि कोपो यदि
व्यर्थं निश्चिनु चक्रवाकि जननं कस्ते हितं वक्ष्यति ॥ २४ ॥
सर्वेषां विदिताः सुधाकरकराः साक्षात्सुधारूपिणः
संदेहोऽपि न तद्भुजः सुमनसो जाता न मर्त्या इति।
तानेव ह्युपभुञ्जते प्रतिनिशं दीनाश्चकोरा इमे
क्षीयन्ते तृणवच्च को नु गहनां जानातु धातुर्गतिम् ॥ २५ ॥

अर्चामः सततं गणाधिपमथाप्याखून्निहन्मः शतं
ध्यायामो हृदि भैरवं तदपि तु प्रोत्सारयामः शुनः ।
भूतेशं प्रणुमस्तथापि शतशो भूतान्निगृह्णीमहे
नह्येकस्य गुणः परस्य महतो दोषानपि प्रोर्णुते ॥ २६ ॥

अम्बुक्षोभकृतः कतीह तिमयः कत्युच्छ्रिताः पर्वता
कीदृक्स्वान्तरवन्धिनो हुतवहः कीदृक्च नौकागतिः ।
आगच्छत्यतिगच्छदुच्चलदुपाश्लिष्यत्यधावत्यत-
त्कल्लोलारभटीभिरेव जलधेः सर्वं तदाच्छाद्यते॥ २७ ॥

जामाता कमलाक्ष एव गृहिणी गङ्गा जगत्पावनी
शीतांशुप्रमुखाः सुता भगवती श्रीरेव कन्या स्वयम् ।
ईदृक्के गृहमेधिता त्रिभुवनाधारस्य वारांनिधे
कः शक्नोति जनो मनोरथपथेऽप्येतावदुत्प्रेक्षितुम् ॥ २८ ॥

यन्मूले निखिलागमानुपदिशंस्तस्थौ परं शंकरो
यत्पर्णे जगतां निधिः स तु वटो नाम्नापि न स्वीकृतः ।
यच्छाखानिचयः पिशाचनिलयो यन्मूलगाः पन्नगा-
स्तस्याश्वत्थतरोः पुनः कति नमस्काराः कति प्रार्थनाः ॥ २९॥

आगच्छन्त्यवगुण्ठयन्त्यथ पुनः पश्यन्ति जिघ्रन्ति च
स्वारब्धं मधुमक्षिका न कणमप्यस्य स्वयं भुञ्जते ।
धन्यस्त्वन्य उपेत्य निर्भयममूरुत्सारयन्दूरतः
स्वादंस्वादमिदं स्वसंभृतमिव स्वच्छन्दमानन्दति ॥ ३० ॥

आसन्नो मधुरागतं वनभुवः साम्राज्यमित्यद्भुताः
श्रूयन्ते गिर एष तत्त्वमिह न ज्ञातुं विधातुः क्षमः ।
यत्पर्णैस्त्रुटितं यदप्युपरतं पुष्पोद्गमैः शाखिनां
यद्ग्लानं विटपैरिदं पुनरिह प्रत्यक्षमालक्ष्यते ॥ ३१ ॥

---

१. आच्छादयति.

उत्पन्नो मधुरस्ति कोकिलरवैरुत्पन्नमस्त्येतद-
प्युत्पन्नं मलयानिलैरिदमपि प्रागेव जानीमहे।
पान्थास्तुष्यथ तावतैव किमिति भ्रान्ता यदि प्राणिति
स्तोकेनापि मनोभवो विगलतु प्राणेषु शुष्को ग्रहः॥ ३२॥

तिक्ताख्ये विटपास्त्ववो यदि ततोऽप्यासंस्ततोऽपि च्छदा-
स्तेभ्योऽपि प्रसवास्ततोऽपि च फलान्येवं न दृष्टं क्वचित्।
स्तौमि त्वामथवा न निम्ब भवतोऽप्यासीद्यतः संभवः
श्रीमत्तत्किल निम्बबीजमधुना स्तुत्यं वचःशालिनाम्॥ ३३॥

चूताः पल्लवमुद्गिरन्ति वितरन्त्येतत्पिकेभ्यस्तत-
स्तेऽप्येतेन कुहूः कुहूरिति कलं कुर्वन्ति कूजामिति।
निम्बोऽपि स्वयमुद्गिरन्फलमनेनाराधयन्वायसा-
न्किंचित्तेषु ततो रटत्सु सफलं जन्म स्वयं मन्यते॥ ३४॥

भोज्यं स्वादु पयः स्थितं मणिगणैरापिञ्जरे पञ्जरे
दूरे चिन्तयितुं च दंशमशकाः पारे गिरां लालनम्।
सत्यं सर्वमथापि काननभुवि स्वाच्छन्द्यमव्याहतं
ध्यायन्ती विमना मनागपि शुकी नालम्बते निर्वृतिम्॥ ३५॥

प्राग्मेघैः कियदम्बु पीतमुदधेः पीतेऽपि वृष्टिः कचि-
द्वृष्टे चापि कियत्प्रलीनमवनौ पीतं कियत्प्राणिभिः।
नेदं कश्चन वेदयत्तु किमपि प्रापावशिष्टं पुन-
र्घर्मान्ते सरितां मुखेन तदभूद्दीप्यांसदं पश्यताम्॥ ३६॥

नेयं द्वारतया विधाय भुवनान्याप्लावयस्यम्भसा
चन्द्रं द्वारतया विधाय सवितः पुष्णासि सर्वौषधीः।
यत्त्वीपत्तपसीव तत्तु कुरुषे स्वेनैव तेनाधुना
दातृत्वं घनचन्द्रयोः परिणतं क्रौर्यं तु शिष्टं त्वयि॥ ३७॥

द्वारं न प्रजहातु जातु नियतं जागर्तु रात्रीरपि
स्वल्पेनापि मुदं प्रयातु किमतः श्वा श्वेव तावानपि।

संपाद्यो महता धनेन सततं भोज्यश्च सान्त्वैरिति
त्यक्त्वा मत्तगजं पदेऽस्य महतः स्थाप्यः किमेतावता ॥ ३८ ॥
उत्पन्नाः सरितां ह्रदेषु सुचिरं तत्रैव पुष्टास्ततः
प्राप्ताः प्रावृषि सागरं जलचरास्तासां मुखादेव ये ।
द्वित्रैरेव दिनैस्तिमिंगिलकुलस्यासाद्य कूटस्थतां
मृष्यन्त्यद्य न ते रहस्यपि कृतां नादेयतासंकथाम् ॥ ३९ ॥
पन्था कर्दमितः पयः कलुषितं हंसाः कृता दूरतः
पीड्यन्ते च यदेवमर्थिन इति क्रूररवैश्चातकाः ।
सोढाहे तव हे पयोद सकलं शक्तोऽपि दातुं स्वतः
किं त्वं शीकरमेकमप्युदधिना लोभो यदि स्वीकृतः ॥ ४० ॥
सर्वज्ञो यदि शंकरो यदि महादेवो यदि प्रायशो
देवानामपि दैवतं यदि तदप्यास्तामिदं दूरतः ।
धुस्तूरैः फणिभिः कपालवलयैरन्यैश्च ते संगति-
श्चूडाचन्द्रकले न तावदुचिता याचे बहिर्गम्यताम् ॥ ४१ ॥
अस्यां प्रावृषि चातकैर्जलकणा लब्धा न चेत्किं ततो
भाविप्रावृषि दास्यते द्विगुणमित्यत्र त्वया गम्यते ।
एतेऽद्यैव लयं व्रजन्ति पृथुकैरेतत्कुलीनो न चे-
देकः प्राणिति तावतैव कृतमस्त्यत्रैव नः संशयः ॥ ४२ ॥
वर्णस्तेऽतिमनोरमः शिरसि ते वासो मृडानीपतेः
प्रत्येतव्यतरं च काञ्चनमिति प्रौढं पुनर्नाम ते ।
किं कर्तव्यमितःपरं च भवता धुस्तूर लोकाः पुन-
र्न क्रीणन्ति न च स्पृशन्ति न च वा पश्यन्ति गन्धप्रियाः ॥४३॥
राज्यं येन कृतं न तस्य शृणुमः कामस्य नामाधुना
येषामेव गिरः पुरा परभृतैस्तैरद्य मौनं धृतम् ।
व्याप्ता येन दिशो न सांप्रतमसौ मन्दानिलः स्पन्दते
किं ब्रूमो नितरां निदाघहतको विश्वं नवं निर्ममे ॥ ४४ ॥

पीयन्तां तमसा दिशो विदधतां नीचाः पिशाचाः स्मयं
व्याक्रोशन्तु शिवाः कियच्चिरमसौ कालः सखे स्थास्यति।
अद्योदेष्यति भानुरेष्यति दिशामद्य प्रसादो मुखे-
ष्वद्य स्वां प्रकृतिं गमिष्यति मही कोक त्वया क्षम्यताम्॥ ४५॥
मेघा इत्यवतीर्य केऽपि नभसः सर्वं पयो गृह्णते
यादांसीति समागतास्तत इतोऽप्यन्ये रमन्ते सुखम्।
यस्तु स्वान्तिक एव तस्य महतस्तालस्य कालाद्बहोः
शुष्कस्यापि हि नोपयोगकणिकां पश्यामि तेनाब्धिना॥ ४६॥
आक्रामन्तु तमेव चूतमपि च क्रोशन्तु रेफोत्तरं
डिम्भोऽस्माकमपीति वाभिदधतां काका वराकाः स्वयम्।
गन्तव्यं क्व ततोऽन्यतः परभृत क्षन्तव्यमेतावद-
प्यग्रे कस्य निवेद्यतामिदमतिक्रान्तो वसन्तोऽधुना॥ ४७॥
गन्तव्यं शिशिरेण नाम भवितव्यं नाम चूताङ्कुरै-
स्तानास्वाद्य पिकः करिष्यति तदा नाम स्वयं पञ्चमम्।
आस्तामेष तथाविधस्त्वमसि किं काक स्वतन्त्रस्य ते
कालोऽयं स्वर एष भोज्यमिदमित्येषा कुतो यन्त्रणा॥ ४८॥
काका मूर्ध्नि सुखं वसन्ति शतशः शाखासु शाखामृगा
घूकाः कोटरगह्वरेषु मशकैर्दंशैश्च सान्द्रं दलम्।
आधारः कियतामसि स्थिरतरं शुद्धं च लब्धं यशः
पान्था नोपसरन्ति चेत्क्षतमितः किं वृक्षराजस्य ते॥ ४९॥
स्निग्धश्यामलकोमलं दलमतिप्रच्छायशीतं तलं
भूपर्यन्तविलम्बिजम्भलफलस्थूलं च वृत्तं फलम्।
संपश्यन्विजने वने व्यवसितस्तत्रैव वस्तुं सुखं
पान्थः पान्थमुखाद्विषद्रुममनुं दैवादवेत्य द्रुतः॥ ५०॥
वर्षन्त्वम्बुमुचस्तपन्तु तपना मथ्नन्तु देवासुरा
नश्यन्तु उरगाः पतन्तु सरितो गङ्गादिमाः सर्वतः।

पुष्णातूत्पलबान्धवः प्रतिनिशं मुष्णातु वा वाडवो
नाब्धिः क्षुभ्यति न प्रसीदति ततो न क्षीयते नैधते ॥ ५१ ॥
वापीकूपतडागपल्वलसरःस्रोतस्विनीसारणी-
तोयाम्बुद्गमनिर्झरह्रदजलाधारोदपानप्रपाः ।
संपन्ना उपजीव्य यस्य विभवं साक्षात्प्रणाल्योऽपि वा
तस्मै जीवन जीवनाय सरितामीशाय तुभ्यं नमः ॥ ५२ ॥
न ह्युष्णो न च शीतलो जलनिधिर्लब्धप्रतिष्ठोऽपि स-
न्कस्त्वस्याः प्रकृतेरमुं चलयितुं शक्तस्त्रिलोकेष्वपि ।
अद्यापि ज्वलतान्तरेव विहितं किं तावदौर्वाग्निना
सायंसायमुदित्वरेण शशिना तत्रैव वा किं कृतम् ॥ ५३ ॥
राजा विप्रकुलस्य यस्य तनयः सोमः स वारांनिधे-
र्यः सर्वाश्रयणीयपादकमलस्तस्याश्रयोऽयं हरेः ।
आनीतश्चुलुकं स एव चलुकेऽप्यन्तः प्रवेश्येत चे-
त्कः संवेदितुमीहते भगवतः कालस्य लीलायितम् ॥ ५४ ॥
दुग्धं स्वादु रसादपीह मधुनो दग्धं विषैर्वासुकेः
संवर्तव्रतसाक्षिणो जलचरा मन्थाद्रिणा मारिताः ।
प्राणेभ्योऽप्यधिकाः सुरद्रुममुखाः प्राप्ताः समस्ता व्ययं
किंचिद्रक्षितुमिच्छतामृतमिह क्षीराब्धिना नाशितम् ॥ ५५ ॥
लब्धा श्रीर्मुरवैरिणा पुरभिदा लब्धः स्वयं चन्द्रमा
देवैरप्सरसो मणिद्विपहयास्तत्स्वामिनैवाहृताः ।
एकस्मै स्वयमेकमेव वितरत्येतेषु चेत्सागर-
स्त्रैलोक्यं वशयेज्जडस्तु स वृथा विक्रम्य तैर्लुण्ठितः ॥ ५६ ॥
कत्यश्वाः कति धेनवः कति गजाः कत्यद्भुताः पादपाः
सुन्दर्यः कति सुभ्रुवः कति महारत्नान्यनर्घ्याण्यपि ।
जातैका किल कन्यका जलनिधेर्दातुं प्रसक्ता यदा
सर्वं तद्व्ययितं तदा परिणतौ नामैकमुच्छेषितम् ॥ ५७ ॥

प्रागभ्यागतया किलाभ्रसरिता संप्लावयन्त्या महीमम्भोधिः स्वयमप्यपूर्यत सकृत्तत्तज्जलाधारवत् ।
आस्तेऽयं कथमक्षयो निधिरपां ते ते कथं वासते
निर्व्याजाम्बुधराम्बुदानसुकृतं सिद्धं तदित्थं पुनः ॥ ५८ ॥
खातं शीतलवारिवारिदकुलश्यामाभिरामद्रुमं
पान्थश्रान्तिहरं सरः पथि हृतं दुर्भिक्षमप्यम्भसाम् ।
ये त्वेते भुवि चातका इति कदाप्यज्ञातभौमोदका-
स्ते गृह्णन्ति न चेदिहाम्बु किमतो दैवेन ते वञ्चिताः ॥ ५९ ॥
भूमिष्ठा अतिपावनीः सुरभिलाः स्वाद्वीरपः संत्यज-
न्याचत्यम्बुदमम्बु चातकगणो यत्तेन किं साध्यते ।
किं तस्मै द्विगुणं प्रवर्षति घनः किंवा तपः साध्यते
प्राग्जन्मन्यवितीर्णवारिकणिकः पापी स इत्यूह्यते ॥ ६० ॥
स्वादून्येव फलानि सन्ति सुरभीण्येव प्रसूनानि च
स्वान्तं चाप्युपकर्तुमर्हति जने साध्यं वनस्थेन किम् ।
भाग्यं ह्येतदतर्कितं वनतरोः पान्थो यदा तापस-
च्छायामस्य यदृच्छया फलवतीमध्यास्त गन्धोत्तराम् ॥ ६१ ॥
पान्थेपु व्ययितं फलं पथिपु यैर्नम्रैः सदा पादपै-
र्येरप्युन्नतमौलिगोपितफलैः कोणे निलीय स्थितम् ।
दावेन ज्वलता द्वयेऽपि खलु ते निःशेषिताः सांप्रतं
पुण्यं पापमिति स्थितं द्वयमिदं तेषां द्वयानां पृथक् ॥ ६२ ॥
अध्वन्याः किल मूलगर्तमधुनाप्यापूरयन्त्यश्रुभि-
र्व्याक्रोशन्त्यधुना सबान्धवकुलाः सायं मुहुर्तं द्विजाः ।
इत्थं यावदिमानि बिभ्रति शुचं भूतान्यपि त्वत्कृते
तावत्त्वं न गतोऽसि पादप चिरं कीर्त्यात्मना वर्तसे ॥ ६३ ॥
जायन्ते विजने वने क्षितिरुहो यद्यप्यमी दुर्भगा
सर्वं ते बहुभिलयापि (?) न तथा बोढुं क्षमास्तुल्यवत् ।

आक्रान्तेष्वपि तेषु केषुचिदतिक्रूरक्रियैः श्वापदै-
गृंह्यन्ते कतिचिद्यतः शमधनैर्ब्रह्मर्षिभिः पावनैः ॥ ६४ ॥

निद्रालस्यशरीरसादवमनान्नद्वेषकासज्वर-
श्वासश्वेतिमहिक्किकाप्रभृतयो मासेषु मातुर्भुवाः ।
जातस्तत्क्षणमेव नश्यतु शतं वर्षाणि वा जीवतु
स्वर्गे वा पितरौ दधातु नरके वा पातयत्वञ्जसा ॥ ६५ ॥

निघ्नन्तोऽशनिभिस्तडिद्विलसितैश्चक्षुर्हरन्तो नृणां
विघ्यन्तश्च शिलाशतैः परिचिताः प्रायेण धाराधराः ।
वर्षन्तो निभृताश्चिरं च समये दृष्टाश्च केचिद्घना
यैरव्याजपरोपकारनिरतैर्जात्या यशः स्थापितम् ॥ ६६ ॥

नाक्ष्णोर्गच्छसि गोचरं बहुतियान्मासान्नमस्ये पुनः
संवीभूय समेत्य वर्षसि निरुच्छ्वासं समन्तादपः ।
कालं कालमनुव्रजन्मितमिता मुञ्चस्यपश्चेत्ततः
किं जीमूत तव प्रणश्यति कियत्प्राणन्त्वतः प्राणिनः ॥ ६७ ॥

भग्नं भित्तिभिरालयैर्निपतितं स्रोतोभिराप्लावितं
विध्वस्तं पशुभिश्च संवश इति क्रोशन्ति वृष्टे त्वया ।
त्वय्युद्गृह्णति वारि वारिद जना नश्यन्त्यवश्यं क्षणा-
त्कीर्तिं चिन्तय दुर्लभां न गणय क्षुद्रान्गुणान्मादृशाम् ॥ ६८ ॥

उत्पत्तिर्मलये समुद्रनिलये पन्था वृतो राक्षसै-
स्तत्रत्यानपि हन्त चन्दनतरूंश्छिन्दन्ति सांयात्रिकाः ।
वर्तन्ते सविधस्थिताश्च सुखिनः शाखोटमुख्यद्रुमा-
स्तन्मन्ये कृतिनस्तु ते तरुकुले ये नोपयोगक्षमाः ॥ ६९ ॥

गृह्णन्तां करिणः प्रसह्य विनिहन्यन्तां वराहा वृका
भल्लूकाश्च तरक्षवश्च पथिकाः सन्तु त्वया निर्भयाः ।
आखून्कङ्कखराञ्छशाननिमिषान्कीटान्पतङ्गानपि
ग्राहंग्राहमहो कियत्प्रकटयस्याखेटके पाटवम् ॥ ७० ॥

यादोभिर्वडवाग्निना जलनिधेर्यावत्पयो गृह्यते
किं तावत्युपयुज्यते शततमोऽप्यंशः पयोद त्वया।
सौजन्यं किमिति ब्रवीमि भवतः सर्वस्वमित्थं त्यज-
न्ख्यातः ख्यापयसे पयोधिमपि तं सर्वोपयोगक्षमम्॥ ७१॥
मेघः कश्चिदचेतनः कियदपि स्वीकृत्य सिन्धोः पयः
कीर्तिं तस्य समुच्चिनोति कियर्ती धर्मं कियच्छाश्वतम्।
ब्रह्मन्नस्तपसां निधिस्त्रिभुवनख्यातश्च कुम्भोद्भवः
सर्वस्वं विनियुज्य तस्य किमिव श्रेयः समापादयत्॥ ७२॥
यच्छैलेषु यदर्णवेषु यदपि ग्रामाटवीजाङ्गल-
प्रायासु क्षितिषु क्षिपन्ति बहुशस्तोयं वृथा तोयदाः।
दृष्टिस्तत्र न दीयतां यदि गुणग्राही भवान्यत्पुन-
र्ग्रीमेषूपवनेषु वा सकृदमी वर्षन्ति तद्गृह्यताम्॥ ७३॥
ग्रामेष्वेव सुवृष्टयो विनयवत्स्वेव श्रियः पुष्कला
धीमत्स्वेव कलागमव्यसनिता गोष्वेव दुग्धस्थितिः।
वाग्मिष्वेव विवक्षुतेति च जगत्प्रार्थ्यां व्यवस्थामिमां
किं वेधा विदधे पुरेति शृणुमो रामेऽपि राज्यस्थितिः॥ ७४॥
उन्मीलन्ति कियन्ति वा न कुसुमान्युष्णद्युतेरुद्गमे
तत्त्वेतावति बन्धुरित्यतिसखीत्यादित्यकान्तेति च।
कीर्तिं दत्तवतां त्रिलोकविदितामेवं कवीनामृणं
किं कृत्वेयमपाकरोतु जनुषां कोट्यापि नालीकिनी॥ ७५॥
विद्धं साधु न साध्विव प्लुतमिदं रेरे कथं विध्यसी-
त्याख्यातुं रणकौशलं वयमपि प्रौढाः स्थिता दूरतः।
आक्रामन्रणमेदिनीमपि वहन्खड्गं विकोपं करे
वेत्ति स्वं च परं च यद्यवहितो विक्रान्तिरेषैव नः॥ ७६॥
अम्भोजेष्वतिकोमलेषु विहरन्नन्तर्नले संविश-
न्नज्ञातातपवातवर्षमनयत्कालं चिरं यः सुखम्।

सोऽद्य प्रावृषि केतकीमधिवसन्भृङ्गः क्षतः कण्टकै-
राविद्धः करकोपलैरभिहतो वातैः कथं वर्तते ॥ ७७ ॥

ब्रूते स्वागतमीक्षते कृशममुं श्रुत्वा कथाः खिद्यते
पक्षाभ्यामसकृत्प्रमार्ष्टि रचयत्युच्चावचाश्चाशिषः ।
उच्छिन्नप्रसवात्तरोरुपगते भृङ्गे क्षुधा ताम्यति
प्रस्तौति भ्रमरस्तु पूर्णजठरो नाहारवार्तामपि ॥ ७८ ॥

ये मृष्यन्ति सहासिकामपि वकैर्जात्या न हंसाः स्वत-
स्तेष्वेको जरसा विलुप्तगमनस्त्यक्तः स्वकैः प्रावृषि ।
तानेवानुसरन्वकान्बहुतरं तच्चेष्टितानि स्तुव-
स्तज्जात्यै स्पृहयन्कियत्कियदहो जातिं निजां निन्दति ॥ ७९ ॥

शुद्धिं स्वामनुचिन्त्य मीननिवहैः पूर्णेऽपि पद्माकरे
स्वैनैवोपनतैर्मृणालवलयैर्जीवन्ति हंसाः सुखम् ।
ये त्वेते विमलास्ततोऽपि च वका ध्यानैकनिष्ठाः सदा
निर्द्वन्द्वा निभृताश्च बिभ्रति न ते यादोभिरेवोदरम् ॥ ८० ॥

यैर्जीवन्ति सितच्छदा न दुरितं कस्यापि यत्संग्रहे
रोचन्ते नहि ते मृणालवलयाः कस्मै प्रभूता अमी ।
अप्या सायमुपोष्य मीनपृथुकैर्युक्त्या महत्यार्जितै-
रेकद्वैरपि तृप्तिमेति परमां हिंसोपलब्धैर्बकः ॥ ८१ ॥

अस्पृश्योऽस्तु मलीमसोऽस्त्वनियताहारोऽस्त्वतोऽप्युद्भटै-
र्दर्पैरस्तु परःशतैः परिवृतः काकस्ततः का क्षतिः ।
भुङ्क्ते भोज्यमुपस्थितं समुपहूयैव स्वयं बान्धवा-
न्यः सीदत्क्षुधया विचिन्तय ततो धन्यश्च पुण्यश्च कः ॥ ८२ ॥

भृत्यास्ते विभवस्तु तान्वयमिमे क्षुद्रा बृहन्तो वयं
जातौ पक्षवताममी तु कलकण्ठाः कलकण्ठा वयम् ।
इत्युच्चावयसे कुहूमुखकुलादुत्कर्षमेवात्मनः
कण्ठे पातयिता कदा खलु भवान्काक स्वरं पञ्चमम् ॥ ८३ ॥

केनाध्यापितमास्थितं क नु कदाधीतं क वा वर्तितं
तद्विश्राम्यतु कुत्र जातमथ कैः पुष्टं तदालोच्यताम् ।
काले सोऽपि कुहूमुखो यदि जगत्कर्णामृतं कूजति
प्राग्जन्मार्जितभाग्यवैभवमिदं कः स्तोतुमीष्टे कविः ॥ ८४ ॥

कीटः कश्चन वृश्चिकः कियदयं प्राणी कियच्चेष्टते
को भारो हननेऽस्य जीवति स वा कालं कियन्तं पुनः ।
नाम्नोऽप्यस्य कियद्बिभेति जनता दूरे कियद्धावते
किं ब्रूमो गरलस्य दुर्विषहतां पुच्छाग्रशूकस्पृशः ॥ ८५ ॥

किं चन्द्रो न पुरा बभूव किमिमे वृक्षाः पुरा नाभव-
न्किं सृष्टा अधुना पिका मधुकरा अद्योदपद्यन्त किम् ।
साहंकारममुं प्रपञ्चमखिलं भोक्तुं यदा प्राणिनां
प्रासीदद्द्रुहिणस्तदा समुदभूदाश्चर्यचर्यो मधुः ॥ ८६ ॥

आयासानविचिन्तयन्नगणयंल्लाभं ततः किंचिद-
प्यम्भो मुञ्चति कीर्तिमानशरणो धाराधरः सर्वतः ।
तद्यत्नादुपयुज्य वर्धयतु वा दातुर्यशः शाश्वतं
मौढ्यादेतदुपेक्ष्य नाशयतु वा लोकः प्रमाणं ततः ॥ ८७ ॥

वृत्तिं वर्तयितुं निजां विषहरा गृह्णन्तु सर्वान्नरा
गृह्णन्तु क्षुधितास्तदेकविहिताहारा मयूराश्च वा ।
नाजिघ्रन्ति च ये कदापि नकुलास्ते हन्त किं कारणं
दर्शं दर्शमनुद्रवन्ति भुजगान्द्वेधा च विच्छिन्दते ॥ ८८ ॥

खादन्ति क्षुधितास्तृणानि तृषिता गृह्णन्त्यपो निर्झरे
सीदन्तो गिरिकंदरासु हरिणा येऽमी कचिच्छेरते ।
व्याधव्याघ्रदवानलप्रभृतयस्तेष्वेव संनाहिन-
स्तद्वा तिष्ठतु घातयन्ति मुनयोऽप्येतान्कथं चर्मणि ॥ ८९ ॥

घ्नन्त्येकत्र तरक्षवो मृगकुलं दावा दहन्त्यन्यतो
व्याधा वीतभयाः परत्र शतशो विध्यन्ति गृह्णन्ति च ।

किं त्वं वेत्सि कथामिमां मृगपते निद्रासि कोणे क्वचि-
द्दिष्ट्या चेदवबुध्यसे शमयसि द्वित्रान्वृथा दन्तिनः ॥ ९० ॥
दुर्धर्षोऽसि वनेचरोऽसि क इदं नेत्याह किं तु स्वतो
जानीषे न हिताहितं न खलु तज्जिज्ञाससे वान्यतः ।
तद्गृह्णन्ति नियन्त्रयन्ति निगलैस्त्वां ताडयन्त्यङ्कुशै-
रारोहन्ति च वारणेन्द्र मशकप्राया मनुष्या अपि ॥ ९१ ॥
अह्नस्त्रिश्चतुरम्बुभिः स्नपयसि स्वं पुष्करावर्जितै-
र्भुङ्क्ते मेध्यतराणि भद्र तरुणान्यश्वत्थपत्राणि च ।
पुण्यारण्यचरोऽसि न प्रविशसि ग्रामं सकृत्कुञ्जर
ज्ञानं चेत्कियदप्युदेति न समा ब्रह्मर्षयोऽपि त्वया ॥ ९२ ॥
हन्यन्ते कति जन्तवो वनचरैर्नित्यं कति श्वापदै-
र्गृह्यन्ते कति कूटयन्त्ररचनैः क्षोणीभृतां प्रीतये ।
एतावत्यपि विप्लवे न भजसे कस्यापि दृग्गोचरं
स्वच्छन्दश्च सृगाल खेलसि पुनस्तुल्यं वनग्रामयोः ॥ ९३ ॥
अस्ति स्वर्णमयोऽद्रिरस्ति विषयः क्षुत्तृड्भयावर्जितः
सन्ति क्षीरघृताकरा जलधयः सन्ति द्रुमाः कामदाः ।
किं नस्त्वच्चरिताद्भुतश्रवणतः साध्यं क्षुधा ताम्यतां
दृष्टं यत्सविधे विधेहि सुमते तत्रैव सर्वं श्रमम् ॥ ९४ ॥
अस्त्यत्रैव किलार्णवे तदमृतं तत्रैव हालाहलः
सन्त्यस्मिन्मलये पटीरतरवस्तत्रैव वाताशनाः ।
यद्यद्वस्त्वभिजातमस्ति सविधे तत्तद्दुरापं नृणां
प्राप्तव्यं रसनाञ्चले करतले भाले च वेधा न्यधात् ॥ ९५ ॥
तावच्चैधितमेधितव्यमवनौ यावन्महद्भिर्द्रुमै-
श्छायाभिः कुसुमैः फलैश्च पथिकाः शक्त्या समाराधिताः ।
कालोऽयं मम जीर्यतः पतितुमित्यास्ते तरोराशये
पान्थानां च पतत्रिणां च हृदये जातोऽयमलिन्क्षणे ॥ ९६ ॥

दृष्टिघ्राणविपान्फणाधरपतीनष्टापि दष्ट्वा स्वयं
रोद्धुं द्रावयितुं विनाशयितुमप्यव्याहतप्रक्रमः।
मार्जारान्नकुलांश्च किं खगपतिः साह्ये वृणोत्यात्मनः
किं प्रत्यर्थिकुलस्य वृत्तिद इति प्रद्वेष्टि वा मारुतम् ॥ ९७ ॥

अध्वन्यान्कति रुन्धते कति दृढान्भिन्दन्ति तोयाकरा-
न्केदारान्कति मज्जयन्ति कति च व्यापाटयन्ति द्रुमान्।
वाहिन्यः क्षणलुप्तवारिविभवा वन्या अवन्यामिमा
यः सिन्धुः सकलाश्रयः स तु पुनः कुत्रेति न ज्ञायते ॥ ९८ ॥

का द्यौः किं बलिसद्म का वसुमती स्यात्सर्वमेतद्यदि
प्रत्यक्षं न भवेत्कदाचिदपि किं ते सर्वसंदर्शिनः।
भ्राम्यन्तः प्रलपन्तु नाम विदितं मण्डूक सम्यक्त्वया
मुक्त्वेमं परमं कुकूपमितरत्किं नाम संभाव्यते ॥ ९९ ॥

त्वद्गर्भे सुखमासते फणिपतिश्रीकूर्मदिग्दन्तिनः
प्रत्यक्षा कुलभूभृतां स्थितिरपि त्वय्यम्ब सर्वंसहे।
ये त्वेते बिभृमो वयं भुवमिति स्वं ख्यापयन्ते यशो
निःशङ्कं निरपत्रपं च तदिदं नः कर्णशूलायते ॥ १०० ॥

भूतानां प्रभवस्थितिप्रविलयास्त्वय्येव विश्वंभरे
त्वद्गर्भे ननु ते रसातलजुषो दैत्याः फणीन्द्राश्च ये।
त्वं सर्वैरुपजीव्यसे दिविचरैस्त्वत्तोऽपि किंचित्परं
न स्यात्स्यादपि तन्निरस्तविषयं ब्रह्म त्वमेवासि नः ॥ १०१ ॥

इति श्रीभरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्ध-
निर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पय्यदीक्षितसोदर्यश्रीमदच्चादीक्षितपौत्रेण
श्रीनारायणदीक्षितात्मजेन श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठ-
दीक्षितेन विरचितमन्यापदेशशतकम् ॥

---

दष्टिप्राणविषान्फणाधरपतीनष्टापि दृष्ट्या स्वयं
रोद्धुं द्रावयितुं विनाशयितुमप्यव्याहतप्रक्रमः।
मार्जारान्नकुलांश्च किं खगपतिः साह्ये वृणोत्यात्मनः
किं प्रत्यर्थिकुलस्य वृत्तिद इति प्रद्वेष्टि वा मारुतम् ॥ ९७ ॥

अध्वन्यान्कति रुन्धते कति दृढान्भिन्दन्ति तोयाकरा-
न्केदारान्कति मज्जयन्ति कति च व्यापाटयन्ति द्रुमान्।
वाहिन्यः क्षणलुप्तवारिविभवा वन्या अवन्यामिमा
यः सिन्धुः सकलाश्रयः स तु पुनः कुत्रेति न ज्ञायते ॥ ९८ ॥

का द्यौः किं बलिसद्म का वसुमती स्यात्सर्वमेतद्यदि
प्रत्यक्षं न भवेत्कदाचिदपि किं ते सर्वसंदर्शिनः।
भ्राम्यन्तः प्रलपन्तु नाम विदितं मण्डूक सम्यक्त्वया
मुक्त्वेमं परमं कुकूपमितरत्किं नाम संभाव्यते ॥ ९९ ॥

त्वद्गर्भे सुखमासते फणिपतिश्रीकूर्मदिग्दन्तिनः
प्रत्यक्षा कुलभूभृतां स्थितिरपि त्वय्यम्ब सर्वसहे।
ये त्वेते विभुमो वयं भुवमिति स्वं ख्यापयन्ते यशो
निःशङ्कं निरपत्रपं च तदिदं नः कर्णशूलायते ॥ १०० ॥

भूतानां प्रभवस्थितिप्रविलयास्त्वय्येव विश्वंभरे
त्वद्गर्भे ननु ते रसातलजुषो दैत्याः फणीन्द्राश्च ये।
त्वं सर्वैरुपजीव्यसे दिविचरैस्त्वत्तोऽपि किंचित्परं
न स्यात्स्यादपि तन्निरस्तविषयं ब्रह्म त्वमेवासि नः ॥ १०१ ॥

इति श्रीभरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्धनिर्वाहकश्रीमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदच्चादीक्षितपौत्रेण श्रीनारायणदीक्षितात्मजेन श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठदीक्षितेन विरचितमन्यापदेशशतकम् ॥

दृष्टिघ्राणविषान्फणाधरपतीनष्टापि दृष्ट्या स्वयं
रोद्धुं द्रावयितुं विनाशयितुमप्यव्याहतप्रक्रमः।
मार्जारान्नकुलांश्च किं खगपतिः साह्ये वृणीत्यात्मनः
किं प्रत्यर्थिकुलस्य वृत्तिद इति प्रद्वेष्टि वा मारुतम् ॥ ९७ ॥

अघ्वन्यान्कति रुन्धते कति दृढान्भिन्दन्ति तोयाकरा-
न्केदारान्कति मज्जयन्ति कति च व्यापाटयन्ति द्रुमान्।
वाहिन्यः क्षणलुप्तवारिविभवा वन्या अवन्यामिमा
यः सिन्धुः सकलाश्रयः स तु पुनः कुत्रेति न ज्ञायते ॥ ९८ ॥

का द्यौः किं चलितस्त्र का वसुमती स्यात्सर्वमेतद्यदि
प्रत्यक्षं न भवेत्कदाचिदपि किं ते सर्वसंदर्शिनः।
भ्राम्यन्तः प्रलपन्तु नाम विदितं मण्डूक सम्यक्त्वया
मुक्त्वेमं परमं कुकूपमितरत्किं नाम संभाव्यते ॥ ९९ ॥

त्वद्गर्भे सुखमासते फणिपतिश्रीकूर्मदिग्दन्तिनः
प्रत्यक्षा कुलभूभृतां स्थितिरपि त्वय्यम्ब सर्वंसहे।
ये त्वेते बिभृमो वयं भुवमिति स्वं ख्यापयन्ते यशो
निःशङ्कं निरपत्रपं च तदिदं नः कर्णशूलायते ॥ १०० ॥

भूतानां प्रभवस्थितिप्रविलयास्त्वय्येव विश्वंभरे
त्वद्गर्भे ननु ते रसातलजुषो दैत्याः फणीन्द्राश्च ये।
त्वं सर्वैरुपजीव्यसे दिविचरैस्त्वत्तोऽपि किंचित्परं
न स्यात्स्यादपि तन्निरस्तविषयं ब्रह्म त्वमेवासि नः ॥ १०१ ॥

इति श्रीभरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्ध-
निर्वाहकश्रीमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदच्चादीक्षितपौत्रेण
श्रीनारायणदीक्षितात्मजेन श्रीभूमिदेवीगर्भसंभवेन श्रीनीलकण्ठ-
दीक्षितेन विरचितमन्यापदेशशतकम्॥

दृष्टिघ्राणविषान्फणाधरपतीनष्टापि दृष्ट्वा स्वयं
रोद्धुं द्रावयितुं विनाशयितुमप्यव्याहतप्रक्रमः।
मार्जारान्नकुलांश्च किं खगपतिः साह्ये वृणोत्यात्मनः
किं प्रत्यर्थिकुलस्य वृत्तिद इति प्रद्वेष्टि वा मारुतम् ॥ ९७ ॥

अध्वन्यान्कति रुन्धते कति दृढान्भिन्दन्ति तोयाकरा-
न्केदारान्कति मज्जयन्ति कति च व्यापाटयन्ति द्रुमान्।
वाहिन्यः क्षणलुप्तवारिविभवा वन्या अवन्यामिमा
यः सिन्धुः सकलाश्रयः स तु पुनः कुत्रेति न ज्ञायते ॥ ९८ ॥

का द्यौः किं बलिसद्म का वसुमती स्यात्सर्वमेतद्यदि
प्रत्यक्षं न भवेत्कदाचिदपि किं ते सर्वसंदर्शिनः।
भ्राम्यन्तः प्रलपन्तु नाम विदितं मण्डूक सम्यक्त्वया
मुक्त्वेमं परमं कुकूपमितरत्किं नाम संभाव्यते ॥ ९९ ॥

त्वद्गर्भे सुखमासते फणिपतिश्रीकूर्मदिग्दन्तिनः
प्रत्यक्षा कुलभूभृतां स्थितिरपि त्वय्यम्ब सर्वंसहे।
ये त्वेते बिभृमो वयं भुवमिति स्वं ख्यापयन्ते यशो
निःशङ्कं निरपत्रपं च तदिदं नः कर्णशूलायते ॥ १०० ॥

भूतानां प्रभवस्थितिप्रविलयास्त्वय्येव विश्वंभरे
त्वद्गर्भे ननु ते रसातलजुषो दैत्याः फणीन्द्राश्च ये।
त्वं सर्वैरुपजीव्यसे दिविचरैस्त्वत्तोऽपि किंचित्परं
न स्यात्स्यादपि तन्निरस्तविषयं ब्रह्म त्वमेवासि नः ॥ १०१ ॥

इति श्रीभरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्ध-
निर्वाहकश्रीमहाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदच्चादीक्षितपौत्रेण
श्रीनारायणदीक्षितात्मजेन श्रीभूमिदेवीगर्भसम्भवेन श्रीनीलकण्ठ-
दीक्षितेन विरचितमन्यापदेशशतकम् ॥

# KÂVYAMÂLÂ.

A collection of old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhânas, Prahasanas, Chhandas, Alankâras &c.

PART VII.

EDITED BY

PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRNAYA-SÂGARA" PRESS.

BOMBAY.

1890.

*Price 1 Rupee.*

॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

सप्तमो गुच्छकः ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परवोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितः ।

स च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१८९०



मूल्यमेको रूप्यकः ।

॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

## सप्तमो गुच्छकः ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितः ।

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१८९०



मूल्यमेको रूप्यकः ।

# अनुक्रमणिका।

पृष्ठं।

१. मानतुङ्गाचार्यविरचितं भक्तामरस्तोत्रम् .... .... १
२. सिद्धसेनदिवाकरप्रणीतं कल्याणमन्दिरस्तोत्रम् .... १०
३. वादिराजप्रणीतं एकीभावस्तोत्रम् .... .... .... १७
४. धनंजयप्रणीतं विषापहारस्तोत्रम् .... .... .... २२
५. भूपालकविप्रणीता जिनचतुर्विंशतिका .... .... २६
६. देवनन्दिप्रणीतं सिद्धिप्रियस्तोत्रम् .... .... ३०
७. सोमप्रभाचार्यविरचिता सूक्तिमुक्तावली .... .... ३५
८. जम्बूगुरुविरचितं जिनशतकम् .... .... .... ५२
९. पद्मानन्दकविप्रणीतं वैराग्यशतकम्.... .... .... ७१
१०. जिनप्रभसूरिविरचितः सिद्धान्तागमस्तवः (सावचूरिः) ८६
११. आत्मनिन्दाष्टकम् .... .... .... .... ९५
१२. जिनवल्लभसूरिविरचितं महावीरस्वामिस्तोत्रम् .... ९७
१३. हेमचन्द्राचार्यविरचितं ,, .... .... .... १०२
१४. ,, ,, (द्वितीयम्) १०४
१५. जिनप्रभसूरिविरचितः पार्श्वनाथस्तवः .... .... १०७
१६. ,, विरचितं गोतमस्तोत्रम् .... .... ११०
१७. जिनप्रभाचार्यविरचितः श्रीवीरस्तवः.... .... ११२
१८. जिनप्रभसूरिविरचितः चतुर्विंशतिजिनस्तवः.... .... ११५
१९. ,, पार्श्वस्तवः.... .... .... ११७
२०. ,, श्रीवीरनिर्वाणकल्याणकस्तवः ११९
२१. विमलप्रणीता प्रश्नोत्तररत्नमाला .... .... .... १२१
२२. धनपालप्रणीता ऋषभपञ्चाशिका .... .... .... १२४
२३. शोभनमुनिप्रणीता चतुर्विंशतिजिनस्तुतिः (सटिप्पणी) १३२

# काव्यमाला ।

श्रीमानतुङ्गाचार्यविरचितं

## भक्तामरस्तोत्रम् ।

भक्तामरप्रणतमौलिमणिप्रभाणा-
मुद्द्योतकं दलितपापतमोवितानम् ।
सम्यक्प्रणम्य जिनपादयुगं युगादा-
वालम्बनं भवजले पततां जनानाम् ॥ १ ॥

---

१. भक्तामरस्तोत्रप्रणेता मानतुङ्गाचार्यो मालवदेशान्तर्गतोज्जयिनीनगर्यां वृद्धभोजमहीपतिसमये बाणमयूरयोः समकालिक आसीदिति भक्तामरस्तोत्रटीकानामुपोद्धाते समुपलभ्यते. तेन खिस्ताब्दीयसप्तमशतकपूर्वभागो बाणभट्टसमय एव मानतुङ्गसमय इत्यवसीयते. मेरुतुङ्गप्रणीतप्रबन्धचिन्तामणौ तु 'अथ यदा मालमण्डले श्रीभोजराजो राज्यं चकार तदात्र गुर्जरधरित्र्यां चौलुक्यचक्रवर्ती श्रीभीमः पृथिवीं शशास' इत्यस्ति. तदनन्तरं भोजसभायां बाणमयूराभ्यां सह मानतुङ्गाचार्यस्य विवादादि भक्तामरस्तोत्रनिर्माणं च वर्णितमस्ति. भीमभोजराजौ तु खिस्ताब्दीयैकादशशतक आस्तामिति गुजरातदेशीयेतिहासे स्फुटमेव. स एव मानतुङ्गस्य काल इत्यपि वक्तुं शक्यते, एवं किंवदन्तीनां परस्परविसंवादे संदिग्ध एव मानतुङ्गसमयः. एतादृश्यो जनश्रुतयस्तु समयादिनिर्णये नातीवोपयुक्ता इत्यसकृदुक्तमेव. स्तोत्रं चैतद्दिगम्बरैः श्वेताम्बरैश्च श्रद्धया पठ्यते. किं तु दिगम्बरा अष्टचत्वारिंशत्पद्यघटितं श्वेताम्बराश्चतुश्चत्वारिंशत्पद्यात्मकं च पठन्ति. तत्र त्रिंशत्पद्यानन्तरं 'गम्भीरताररव—' इत्यादि पद्यचतुष्टयं दिगम्बरैरधिकमुद्घोष्यते. अस्माकं तु चतुश्चत्वारिंशत्पद्यात्मकमेव स्तोत्रमाचार्येण प्रणीतमित्येव भाति यतो भक्तामरस्तोत्रानुकरणप्रवृत्तः सिद्धसेनदिवाकरोऽपि कल्याणमन्दिरस्तोत्रं चतुश्चत्वारिंशच्छ्लोकैरेव निर्मितवान्. अथ च भक्तामरसमस्यापूर्तिस्तोत्रमपि चतुश्चत्वारिंशत्पद्यात्मकमेव दृश्यते. गंभीरेत्यादि चत्वारि पद्यानि तु केनचन पण्डितंमन्येन निर्माय मणिमालायां काचशकलानीव मानतुङ्गकवितायां प्रवेशितानीत्यपि तद्विलोकनमात्रेणैव कवित्वमर्मविद्भिर्विद्वद्भिर्बोद्धुं शक्यते. टीकाश्चास्य स्तवस्य श्वेताम्बरैर्दिगम्बरैश्च निर्मिता भूयस्यो वर्तन्ते. तत्र दिगम्बरा मानतुङ्गाचार्यं दिगम्बरं श्वेताम्बराश्च श्वेताम्बरं वदन्ति. उपोद्घातस्तु टीकासु प्रायः समान एव वर्तते. कैश्चन टीकाकारैः प्रतिश्लोकं मन्त्रस्तत्प्रभावकथा च लिखितास्ति, ते च मन्त्रास्तत्तत्पद्येभ्यः कथं निर्गता इति त एव जानन्ति. मन्त्रशास्त्ररीत्या तु

य: संस्तुत. सकलवाङ्मयतत्त्वबोधा-
दुद्भूतबुद्धिपटुभिः सुरलोकनाथैः ।
स्तोत्रैर्जगत्त्रितयचित्तहरैरुदारैः
स्तोष्ये किलाहमपि तं प्रथमं जिनेन्द्रम् ॥ २ ॥ (युग्मम्)
बुद्ध्या विनापि विबुधार्चितपादपीठ
स्तोतुं समुद्यतमतिर्विगतत्रपोऽहम् ।
बालं विहाय जलसंस्थितमिन्दुबिम्ब-
मन्यः क इच्छति जन. सहसा ग्रहीतुम् ॥ ३ ॥

---

तेभ्य श्लोकेभ्यस्तेषां मन्त्राणामुद्धारो दुष्कर एव अस्माभिस्तु टीकाचतुष्कमुपल- ब्धम्—तत्र (१) श्वेताम्बरेण गुणचन्द्रसूरिशिष्यगुणाकरेण प्रणीता टीका समीचीना अस्यां चतुश्चत्वारिंशत्पद्यानि व्याख्यातानि प्राय पद्यानन्तरं मन्त्रस्तत्प्रभावकथा च व- र्णितास्ति. टीकानिर्माणसमयस्तु समाप्तौ 'वर्षे षड्विंशाधिकचतुर्दशशतीमिते (१४२६) च वर्षतो । मासि नभस्ये रचिता सरस्वतीपत्तने विवृति ॥' इत्थमुक्त. नागार्जुनप्र- णीतयोगरत्नावल्याष्टीकाकारो गुणाकरस्त्वस्माद्भिन्न. यतस्तट्टीकान्ते 'श्रीमन्नृपविक्र- मतो द्वादशनवषड्भिरङ्किते (१२९६) वर्षे । रचिता गुणाकरेण श्वेताम्बरभिक्षुणा वि- वृतिः ॥' इति टीकानिर्माणकालो वर्तते (२) तपागच्छीयहीरविजयसूरिशिष्यक- नककुशलप्रणीता टीका संक्षिप्ता उपोद्घातप्रभावकथाभ्यां रहिता च. अत्रापि चतुश्च- त्वारिंशत्पद्यान्येव व्याख्यातानि समाप्तौ च 'श्रीमत्तपगणगगनाङ्गणदिनमणिहीरविजय सूरीणाम् । शिष्याणुना विरचिता वृत्तिरियं कनककुशलेन ॥ नयनशररसेन्दु(१६५२) मिते वर्षे सुविराटनाम्नि वरनगरे । बालजनविबोधार्थं विजयदशम्यां हि सुसमाप्ता ॥' ए- तदार्यायुग्मं वर्तते. (३) इयं टीका कर्तृनामरहिता सामान्या उपोद्घातमात्रसमेता व- र्तते. एतत्प्रणेतापि कश्चन श्वेताम्बर एव प्रतीयते. यतोऽनेन मानतुङ्गाचार्यो बृहद्ग- च्छाधीश श्वेताम्बरश्चासीदित्युक्तमस्ति. किंत्वयमष्टचत्वारिंशच्छ्लोकान्व्याख्यातवानि त्यस्य श्वेताम्बरत्वे मनाक्संदेह. (४) इयं टीका १६६७ संवत्सरे दिगम्बरभट्टारकरत्न- चन्द्रेण प्रणीता. अत्रापि तादृश एवोपोद्घातोऽनुष्टुप्पद्यघटितस्तादृश्य एव प्रभावक- थाश्च वर्तन्ते. मानतुङ्गाचार्यो दिगम्बर आसीदित्यप्यत्रास्ति. किं तु टीकाकारः सुम- रामप्रौढ., एतट्टीकाचतुष्टयमस्मभ्य सूरतनगरवासिनास्मन्मित्रेण केवलदासात्मजभगवा- नदासश्रेष्ठिना प्रहितम्. द्वित्राणि मूलपुस्तकानि त्वस्माभिर्जयपुरेऽधिगतानि. तदाधा- रेणास्माभिरेतत्स्तोत्रमुद्रणमारब्धमिति शुभम्.

१. श्रीनाभेयमिति गुणाकर. वृषभमिति रत्नकुशलः. श्रीआदिनाथमिति कर्तृ- नामरहितटीका.

वक्तुं गुणान्गुणसमुद्र शशाङ्ककान्ता-
न्कस्ते क्षमः सुरगुरुप्रतिमोऽपि बुद्ध्या ।
कल्पान्तकालपवनोद्धतनक्रचक्रं
को वा तरीतुमलमम्बुनिधिं भुजाभ्याम् ॥ ४ ॥

सोऽहं तथापि तव भक्तिवशान्मुनीश
कर्तुं स्तवं विगतशक्तिरपि प्रवृत्तः ।
प्रीत्यात्मवीर्यमविचार्य मृगो मृगेन्द्रं
नाभ्येति किं निजशिशोः परिपालनार्थम् ॥ ५ ॥

अल्पश्रुतं श्रुतवतां परिहासधाम
त्वद्भक्तिरेव मुखरीकुरुते बलान्माम् ।
यत्कोकिलः किल मधौ मधुरं विरौति
तच्चारुचूतकलिकानिकरैकहेतु ॥ ६ ॥

त्वत्संस्तवेन भवसंततिसंनिबद्धं
पापं क्षणात्क्षयमुपैति शरीरभाजाम् ।
आक्रान्तलोकमलिनीलमशेषमाशु
सूर्यांशुभिन्नमिव शार्वरमन्धकारम् ॥ ७ ॥

मत्वेति नाथ तव संस्तवनं मयेद-
मारभ्यते तनुधियापि तव प्रभावात् ।
चेतो हरिष्यति सतां नलिनीदलेषु
मुक्ताफलद्युतिमुपैति ननूदबिन्दुः ॥ ८ ॥

आस्तां तव स्तवनमस्तसमस्तदोषं
त्वत्संकथापि जगतां दुरितानि हन्ति ।
दूरे सहस्रकिरणः कुरुते प्रभैव
पद्माकरेषु जलजानि विकासभाञ्जि ॥ ९ ॥

नात्यद्भुतं भुवनभूषणभूत नाथ
भूतैर्गुणैर्भुवि भवन्तमभिष्टुवन्तः ।

तुल्या भवन्ति भवतो ननु तेन किं वा
भूत्याश्रितं य इह नात्मसमं करोति ॥ १० ॥
दृष्ट्वा भवन्तमनिमेषविलोकनीयं
नान्यत्र तोषमुपयाति जनस्य चक्षुः ।
पीत्वा पयः शशिकरद्युति दुग्धसिन्धोः
क्षारं जलं जलनिधे रसितुं क इच्छेत् ॥ ११ ॥
यैः शान्तरागरुचिभिः परमाणुभिस्त्वं
निर्मापितस्त्रिभुवनैकललामभूत ।
तावन्त एव खलु तेऽप्यणवः पृथिव्यां
यत्ते समानमपरं नहि रूपमस्ति ॥ १२ ॥
वक्त्रं क्व ते सुरनरोरगनेत्रहारि
निःशेषनिर्जितजगत्त्रितयोपमानम् ।
बिम्बं कलङ्कमलिनं क्व निशाकरस्य
यद्वासरे भवति पाण्डुपलाशकल्पम् ॥ १३
संपूर्णमण्डलशशाङ्ककलाकलाप-
शुभ्रा गुणास्त्रिभुवनं तव लङ्घयन्ति ।
ये संश्रितास्त्रिजगदीश्वरनाथमेकं
कस्तान्निवारयति संचरतो यथेष्टम् ॥ १४ ।
चित्रं किमत्र यदि ते त्रिदशाङ्गनाभि-
र्नीतं मनागपि मनो न विकारमार्गम् ।
कल्पान्तकालमरुता चलिताचलेन
किं मन्दराद्रिशिखरं चलितं कदाचित् ॥ १५ ॥
निर्धूमवर्तिरपवर्जिततैलपूरः
कृत्स्नं जगत्त्रयमिदं प्रकटीकरोषि ।
गम्यो न जातु मरुतां चलिताचलानां
दीपोऽपरस्त्वमसि नाथ जगत्प्रकाशः ॥ १६ ॥

१. 'मन्दरो मेरुः । युगान्ते सर्वपर्वतानां क्षोभो भवति न तु मेरोः' इति टीकाकृतः.

नास्तं कदाचिदुपयासि न राहुगम्यः
स्पष्टीकरोषि सहसा युगपज्जगन्ति ।
नाम्भोधरोदरनिरुद्धमहाप्रभावः
सूर्यातिशायिमहिमासि मुनीन्द्र लोके ॥ १७ ॥

नित्योदयं दलितमोहमहान्धकारं
गम्यं न राहुवदनस्य न वारिदानाम् ।
विभ्राजते तव मुखाब्जमनल्पकान्ति
विद्योतयज्जगदपूर्वशशाङ्कबिम्बम् ॥ १८ ॥

किं शर्वरीषु शशिनाह्नि विवस्वता वा
युष्मन्मुखेन्दुदलितेषु तमःसु नाथ ।
निष्पन्नशालिवनशालिनि जीवलोके
कार्यं कियज्जलधरैर्जलभारनम्रैः ॥ १९ ॥

ज्ञानं यथा त्वयि विभाति कृतावकाशं
नैवं तथा हरिहरादिषु नायकेषु ।
तेजः स्फुरन्मणिषु याति यथा महत्त्वं
नैवं तु काचशकले किरणाकुलेऽपि ॥ २० ॥

मन्ये वरं हरिहरादय एव दृष्टा
दृष्टेषु येषु हृदयं त्वयि तोषमेति ।
किं वीक्षितेन भवता भुवि येन नान्यः
कश्चिन्मनो हरति नाथ भवान्तरेऽपि ॥ २१ ॥

स्त्रीणां शतानि शतशो जनयन्ति पुत्रा-
न्नान्या सुतं त्वदुपमं जननी प्रसूता ।
सर्वा दिशो दधति भानि सहस्ररश्मिं
प्राच्येव दिग्जनयति स्फुरदंशुजालम् ॥ २२ ॥

त्वामामनन्ति मुनयः परमं पुमांस-
मादित्यवर्णममलं तमसः परस्तात् ।

त्वामेव सम्यगुपलभ्य जयन्ति मृत्युं
नान्यः शिवः शिवपदस्य मुनीन्द्र पन्थाः ॥ २३ ॥
√त्वामव्ययं विभुमचिन्त्यमसंख्यमाद्यं
ब्रह्माणमीश्वरमनन्तमनङ्गकेतुम्[1] ।
योगीश्वरं विदितयोगमनेकमेकं
ज्ञानस्वरूपममलं प्रवदन्ति सन्तः ॥ २४ ॥
बुद्धस्त्वमेव विबुधार्चितबुद्धिबोधा-[2]
त्त्वं शंकरोऽसि भुवनत्रयशंकरत्वात् ।
धातासि धीर शिवमार्गविधेर्विधाना-
द्व्यक्तं त्वमेव भगवन्पुरुषोत्तमोऽसि ॥ २५ ॥
√तुभ्यं नमस्त्रिभुवनार्तिहराय नाथ
तुभ्यं नमः क्षितितलामलभूषणाय ।
तुभ्यं नमस्त्रिजगतः परमेश्वराय
तुभ्यं नमो जिन भवोदधिशोषणाय ॥ २६ ॥
को विस्मयोऽत्र यदि नाम गुणैरशेषै-
स्त्वं संश्रितो निरवकाशतया मुनीश ।
दोषैरुपात्तविविधाश्रयजातगर्वैः
स्वप्नान्तरेऽपि न कदाचिदपीक्षितोऽसि ॥ २७ ॥
उच्चैरशोकतरुसंश्रितमुन्मयूख-
माभाति रूपममलं भवतो नितान्तम् ।
स्पष्टोल्लसत्किरणमस्ततमोवितानं
बिम्बं रवेरिव पयोधरपार्श्ववर्ति ॥ २८ ॥
सिंहासने मणिमयूखशिखाविचित्रे
विभ्राजते तव वपुः कनकावदातम् ।
बिम्बं वियद्विलसदंशुलतावितानं
तुङ्गोदयाद्रिशिरसीव सहस्ररश्मेः ॥ २९ ॥

१. मदनस्य क्षयहेतुम्. २. 'विबुधार्चित' इति पाठः.

कुन्दावदातचलचामरचारुशोभं
विभ्राजते तव वपुः कलधौतकान्तम् ।
उद्यच्छशाङ्करुचिनिर्झरवारिधार-
मुच्चैस्तटं सुरगिरेरिव शातकौम्भम् ॥ ३० ॥

छत्रत्रयं तव विभाति शशाङ्ककान्त-
मुच्चैःस्थितं स्थगितभानुकरप्रतापम् ।
मुक्ताफलप्रकरजालविवृद्धशोभं
प्रख्यापयत्रिजगतः परमेश्वरत्वम् ॥ ३१ ॥

[गम्भीरताररवपूरितदिग्विभाग-
स्त्रैलोक्यलोकशुभसंगमभूतिदक्षः ।
सद्धर्मराजजयघोषणघोषकः स-
न्खे दुन्दुभिर्नदति ते यशसः प्रवादी ॥ ३२ ॥

मन्दारसुन्दरनमेरुसुपारिजात-
संतानकादिकुसुमोत्करवृष्टिरुद्धा ।
गन्धोदबिन्दुशुभमन्दमरुत्प्रयाता
दिव्या दिवः पतति ते वचसां ततिर्वा ॥ ३३ ॥

शुंभत्प्रभावलयभूरिविभा विभोस्ते
लोकत्रये द्युतिमतां द्युतिमाक्षिपन्ती ।
प्रोद्यद्दिवाकरनिरन्तरभूरिसंख्या
दीप्त्या जयत्यपि निशामपि सोमसौम्याम् ॥ ३४ ॥

स्वर्गापवर्गगममार्गविमार्गणेष्टः
सद्धर्मतत्त्वकथनैकपटुस्त्रिलोक्याः ।
दिव्यध्वनिर्भवति ते विशदार्थसर्व-
भाषास्वभावपरिणामगुणप्रयोज्यः ॥ ३५ ॥]

---

१. गम्भीरेत्यादिपद्यचतुष्टयं श्वेताम्बरैर्न व्याख्यातम्. अस्माकमप्येतत्प्रक्षिप्तमेव भाति. २. 'ध्वनति'. ३. उद्धा प्रशस्ता. मतल्लिकादयः शब्दाः समासान्तर्गता एव प्रशस्तवाचकाः. उद्धशब्दस्तु समासं विनापीति रामाश्रम्यां द्रष्टव्यम्.

उन्निद्रहेमनवपङ्कजपुञ्जकान्ती
पर्युल्लसन्नखमयूखशिखाभिरामौ ।
पादौ पदानि तव यत्र जिनेन्द्र धत्तः
पद्मानि तत्र विबुधाः परिकल्पयन्ति ॥ ३६ ॥

इत्थं यथा तव विभूतिरभूज्जिनेन्द्र
धर्मोपदेशनविधौ न तथापरस्य ।
यादृक्प्रभा दिनकृतः प्रहतान्धकारा
तादृक्कुतो ग्रहगणस्य विकासिनोऽपि ॥ ३७ ॥

श्च्योतन्मदाविलविलोलकपोलमूल-
मत्तभ्रमद्भ्रमरनादविवृद्धकोपम् ।
ऐरावताभमिभमुद्धतमापतन्तं
दृष्ट्वा भयं भवति नो भवदाश्रितानाम् ॥ ३८ ॥

भिन्नेभकुम्भगलदुज्ज्वलशोणिताक्त-
मुक्ताफलप्रकरभूषितभूमिभागः ।
बद्धक्रमः क्रमगतं हरिणाधिपोऽपि
नाक्रामति क्रमयुगाचलसंश्रितं ते ॥ ३९ ॥

कल्पान्तकालपवनोद्धतवह्निकल्पं
दावानलं ज्वलितमुज्ज्वलमुत्स्फुलिङ्गम् ।
विश्वं जिघत्सुमिव संमुखमापतन्तं
त्वन्नामकीर्तनजलं शमयत्यशेषम् ॥ ४० ॥

रक्तेक्षणं समदकोकिलकण्ठनीलं
क्रोधोद्धतं फणिनमुत्फणमापतन्तम् ।
आक्रामति क्रमयुगेण निरस्तशङ्क-
स्त्वन्नामनागदमनी हृदि यस्य पुंसः ॥ ४१ ॥

---

१. औषधिविशेषः.

वल्गत्तुरङ्गगजगर्जितभीमनाद-
माजौ बलं बलवतामपि भूपतीनाम् ।
उद्यद्दिवाकरमयूखशिखापविद्धं
त्वत्कीर्तनात्तम इवाशु भिदामुपैति ॥ ४२ ॥

कुन्ताग्रभिन्नगजशोणितवारिवाह-
वेगावतारतरणातुरयोधभीमे ।
युद्धे जयं विजितदुर्जयजेयपक्षा-
स्त्वत्पादपङ्कजवनाश्रयिणो लभन्ते ॥ ४३ ॥

अम्भोनिधौ क्षुभितभीषणनक्रचक्र-
पाठीनपीठभयदोल्बणवाडवाग्नौ ।
रङ्गत्तरङ्गशिखरस्थितयानपात्रा-
स्त्रासं विहाय भवतः स्मरणाद्व्रजन्ति ॥ ४४ ॥

उद्भूतभीषणजलोदरभारभुग्नाः
शोच्यां दशामुपगताश्च्युतजीविताशाः ।
त्वत्पादपङ्कजरजोमृतदिग्धदेहा
मर्त्या भवन्ति मकरध्वजतुल्यरूपाः ॥ ४५ ॥

आपादकण्ठमुरुशृङ्खलवेष्टिताङ्गा
गाढं बृहन्निगडकोटिनिघृष्टजङ्घाः ।
त्वन्नाममन्त्रमनिशं मनुजाः स्मरन्तः
सद्यः स्वयं विगतबन्धभया भवन्ति ॥ ४६ ॥

मत्तद्विपेन्द्रमृगराजदवानलाहि-
सङ्ग्रामवारिधिमहोदरबन्धनोत्थम् ।
तस्याशु नाशमुपयाति भयं भियेव
यस्तावकं स्तवमिमं मतिमानधीते ॥ ४७ ॥

---

१. वारिवाहा जलप्रवाहाः. २. 'चक्रे' इति पाठः. ३. 'भग्नाः,' 'मग्नाः' इति च

स्तोत्रस्रजं तव जिनेन्द्र गुणैर्निबद्धां
भक्त्या मया रुचिरवर्णविचित्रपुष्पाम् ।
धत्ते जनो य इह कण्ठगतामजस्रं
तं मानतुङ्गमवशा समुपैति लक्ष्मीः ॥ ४८ ॥

इति श्रीमानतुङ्गाचार्यविरचितं भक्तामरस्तोत्रम् ।

---

## श्रीसिद्धसेनदिवाकरप्रणीतं
## कल्याणमन्दिरस्तोत्रम् ।

कल्याणमन्दिरमुदारमवद्यभेदि
भीताभयप्रदमनिन्दितमङ्घ्रिपद्मम् ।
संसारसागरनिमज्जदशेषजन्तु-
पोतायमानमभिनम्य जिनेश्वरस्य ॥ १ ॥
यस्य स्वयं सुरगुरुर्गरिमाम्बुराशेः
स्तोत्रं सुविस्तृतमतिर्न विभुर्विधातुम् ।

---

१. मानतुङ्गमिति स्वकीयं नामाप्याचार्येण युक्त्या चरमपद्ये निवेशितम्. २. कल्याणमन्दिरस्तोत्रं सिद्धसेनदिवाकरेण प्रणीतमिति प्रसिद्धिरस्ति. स्तोत्रान्तिमपद्ये तु कुमुदचन्द्र इति कर्तुर्नाम लभ्यते. तच्च सिद्धसेनदिवाकरस्य गुरुणा दीक्षावसरे विहित नामेति स्तोत्रटीकाकर्ता वक्ति. सिद्धसेनदिवाकरो विक्रमादित्यसमय उज्जयिन्यामागत इत्यादि प्रबन्धचिन्तामणौ विक्रमादित्यप्रबन्धे वर्तते. स च श्वेताम्बर आसीदित्यपि तत एव प्रतीयते. दिगम्बरास्तु दिगम्बरमेनं वदन्ति. खिस्ताब्दीयषष्ठशतकोद्भूतः श्रीवराहमिहिराचार्यो बृहज्जातकस्य सप्तमेऽध्याये कंचन सिद्धसेननामानं गणकं स्मरति, स चायमेव सिद्धसेनदिवाकरः स्यात्. अन्येऽपि द्वित्राः सिद्धसेना जैनेषु प्रसिद्धाः सन्ति. कल्याणमन्दिरस्तोत्रं तु दिगम्बराः श्वेताम्बराश्च पठन्ति. किं तु भक्तामरस्तोत्रवदस्य भूयस्यष्टीकाः प्रतिपद्यं मन्त्रास्तत्प्रभावकथाश्च नातीव प्रचरिताः सन्ति. मध्ये प्रक्षिप्तश्लोका अपि न दृश्यन्ते. अस्मद्दृष्टेषु निखिलेष्वपि पुस्तकेषु चतुश्चत्वारिंशत्पद्यान्येव वर्तन्ते. एतन्मुद्रणावसरे चास्माभिरेकं कर्तृनामरहितसंक्षिप्तटीकासमेतमपरं हिन्दीभाषान्तरसहितमिति पुस्तकद्वयं भगवानदासश्रेष्ठितः प्राप्तं द्वित्राणि मूलपुस्तकानि चेति.

तीर्थेश्वरस्य कमठस्मयधूमकेतो-
स्तस्याहमेष किल संस्तवनं करिष्ये ॥ २ ॥ (युग्मम्)
सामान्यतोऽपि तव वर्णयितुं स्वरूप-
मस्मादृशाः कथमधीश भवन्त्यधीशाः ।
धृष्टोऽपि कौशिकशिशुर्यदि वा दिवान्धो
रूपं प्ररूपयति किं किल घर्मरश्मेः ॥ ३ ॥
मोहक्षयादनुभवन्नपि नाथ मर्त्यो
नूनं गुणान्गणयितुं न तव क्षमेत ।
कल्पान्तवान्तपयसः प्रकटोऽपि यस्मा-
न्मीयेत केन जलधेर्ननु रत्नराशिः ॥ ४ ॥
अभ्युद्यतोऽस्मि तव नाथ जडाशयोऽपि
कर्तुं स्तवं लसदसंख्यगुणाकरस्य ।
बालोऽपि किं न निजबाहुयुगं वितत्य
विस्तीर्णतां कथयति स्वधियाम्बुराशेः ॥ ५ ॥
ये योगिनामपि न यान्ति गुणास्तवेश
वक्तुं कथं भवति तेषु ममावकाशः ।
जाता तदेवमसमीक्षितकारितेयं
जल्पन्ति वा निजगिरा ननु पक्षिणोऽपि ॥ ६ ॥
आस्तामचिन्त्यमहिमा जिन संस्तवस्ते
नामापि पाति भवतो भवतो जगन्ति ।
तीव्रातपोपहतपान्थजनान्निदाघे
प्रीणाति पद्मसरसः सरसोऽनिलोऽपि ॥ ७ ॥
हृद्वर्तिनि त्वयि विभो शिथिलीभवन्ति
जन्तोः क्षणेन निबिडा अपि कर्मबन्धाः ।

---

१. कमठो नाम पार्श्वनाथप्रभोस्तपोविघ्नकर्ता कश्चन दैत्य आसीत्. पार्श्वनाथस्यानुजन्मैव शत्रुभूतः कमठ इत्यपि केचिद्वदन्ति. 'शठकमठकृतोपद्रवाबाधितस्य' इति पार्श्वनाथस्तवेऽपि पार्श्वनाथविशेषणम्.

सद्यो भुजंगममया इव मध्यभाग-
मभ्यागते वनशिखण्डिनि चन्दनस्य ॥ ८ ॥

मुच्यन्त एव मनुजाः सहसा जिनेन्द्र
रौद्रैरुपद्रवशतैस्त्वयि वीक्षितेऽपि।
गोस्वामिनि स्फुरिततेजसि दृष्टमात्रे
चौरैरिवाशु पशवः प्रपलायमानैः ॥ ९ ॥

त्वं तारको जिन कथं भविनां त एव
त्वामुद्वहन्ति हृदयेन यदुत्तरन्तः।
यद्वा दृतिस्तरति यज्जलमेष नून-
मन्तर्गतस्य मरुतः स किलानुभावः ॥ १० ॥

यस्मिन्हरप्रभृतयोऽपि हतप्रभावाः
सोऽपि त्वया रतिपतिः क्षपितः क्षणेन।
विध्यापिता हुतभुजः पयसाथ येन
पीतं न किं तदपि दुर्धरवाडवेन ॥ ११ ॥

स्वामिन्ननल्पगरिमाणमपि प्रपन्ना-
स्त्वां जन्तवः कथमहो हृदये दधानाः।
जन्मोदधिं लघु तरन्त्यतिलाघवेन
चिन्त्यो न हन्त महतां यदि वा प्रभावः ॥ १२ ॥

क्रोधस्त्वया यदि विभो प्रथमं निरस्तो
ध्वस्तास्तदा वद कथं किल कर्मचौराः।
प्लोषत्यमुत्र यदि वा शिशिरापि लोके
नीलद्रुमाणि विपिनानि न किं हिमानी ॥ १३ ॥

त्वां योगिनो जिन सदा परमात्मरूप-
मन्वेषयन्ति हृदयाम्बुजकोषदेशे।

१. सूर्ये. २. पर्मभग्ना. ३. निर्गाम नोताः.

पूतस्य निर्मलरुचेर्यदि वा किमन्य-
देक्षस्य संभेवपदं ननु कर्णिकायाः ॥ १४ ॥
ध्यानाज्जिनेश भवतो भविनः क्षणेन
देहं विहाय परमात्मदशां व्रजन्ति ।
तीव्रानलादुपलभावमपास्य लोके
चामीकरत्वमचिरादिव धातुभेदाः ॥ १५ ॥
अन्तः सदैव जिन यस्य विभाव्यसे त्वं
भव्यैः कथं तदपि नाशयसे शरीरम् ।
एतत्स्वरूपमथ मध्यविवर्तिनो हि
यद्विग्रहं प्रशमयन्ति महानुभावाः ॥ १६ ॥
आत्मा मनीषिभिरयं त्वदभेदबुद्ध्या
ध्यातो जिनेन्द्र भवतीह भवत्प्रभावः ।
पानीयमप्यमृतमित्यनुचिन्त्यमानं
किं नाम नो विषविकारमपाकरोति ॥ १७ ॥
त्वामेव वीततमसं परवादिनोऽपि
नूनं विभो हरिहरादिधिया प्रपन्नाः ।
किं काचकामलिभिरीश सितोऽपि शङ्खो
नो गृह्यते विविधवर्णविपर्ययेण ॥ १८ ॥
धर्मोपदेशसमये सविधानुभावा-
दास्तां जनो भवति ते तरुरप्यशोकः ।
अभ्युद्गते दिनपतौ समहीरुहोऽपि
किं वा विबोधमुपयाति न जीवलोकः ॥ १९ ॥
चित्रं विभो कथमवाङ्मुखवृन्तमेव
विष्वक्पतत्यविरला सुरपुष्पवृष्टिः ।

१. अक्षस्य पद्मबीजस्य. २. 'संभविपदं' इति पाठः. ३. काचकामलादयो नेत्ररोगास्तद्युक्तैः. ४. श्रीपार्श्वनाथोऽशोकवृक्षतळे स्थितवान्. 'उच्चैरशोकतरुसंश्रितं' इति भक्तामरस्तवेऽपि.

त्वद्गोचरे सुमनसां यदि वा मुनीश
गच्छन्ति नूनमध एव हि बन्धनानि ॥ २० ॥

स्थाने गभीरहृदयोदधिसंभवायाः
पीयूषतां तव गिरः समुदीरयन्ति ।
पीत्वा यतः परमसंमदसङ्गभाजो
भव्या व्रजन्ति तरसाप्यजरामरत्वम् ॥ २१ ॥

स्वामिन्सुदूरमवनम्य समुत्पतन्तो
मन्ये वदन्ति शुचयः सुरचामरौघाः ।
येऽस्मै नतिं विदधते मुनिपुंगवाय
ते नूनमूर्ध्वगतयः खलु शुद्धभावाः ॥ २२ ॥

श्यामं गभीरगिरमुज्ज्वलहेमरत्न-
सिंहासनस्थमिह भव्यशिखण्डिनस्त्वाम् ।
आलोकयन्ति रभसेन नदन्तमुच्चै-
श्चामीकराद्रिशिरसीव नवाम्बुवाहम् ॥ २३ ॥

उद्गच्छता तव शितिद्युतिमण्डलेन
लुप्तच्छदच्छविरशोकतरुर्बभूव ।
सांनिध्यतोऽपि यदि वा तव वीतराग
नीरागतां व्रजति को न सचेतनोऽपि ॥ २४ ॥

भो भोः प्रमादमवधूय भजध्वमेन-
मागत्य निर्वृतिपुरीं प्रति सार्थवाहम् ।
एतन्निवेदयति देव जगत्त्रयाय
मन्ये नदन्नभिनभः सुरदुन्दुभिस्ते ॥ २५ ॥

उद्द्योतितेषु भवता भुवनेषु नाथ
तारान्वितो विधुरयं विहताधिकारः ।
मुक्ताकलापकलितोरुसितातपत्र-
व्याजात्त्रिधा धृततनुर्ध्रुवमभ्युपेतः ॥ २६ ॥

स्वेन प्रपूरितजगत्त्रयपिण्डितेन
कान्तिप्रतापयशसामिव संचयेन ।
माणिक्यहेमरजतप्रविनिर्मितेन
सालत्रयेण भगवन्नभितो विभासि ॥ २७ ॥
दिव्यस्रजो जिन नमत्त्रिदशाधिपाना-
मुत्सृज्य रत्नरचितानपि मौलिबन्धान् ।
पादौ श्रयन्ति भवतो यदि वापरत्र
त्वत्संगमे सुमनसो न रमन्त एव ॥ २८ ॥
त्वं नाथ जन्मजलधेर्विपराङ्मुखोऽपि
यत्तारयस्यसुमतो निजपृष्ठलग्नान् ।
युक्तं हि पार्थिवनिपस्य सतस्तवैव
चित्रं विभो यदसि कर्मविपाकशून्यः ॥ २९ ॥
विश्वेश्वरोऽपि जनपालक दुर्गतस्त्वं
किं वाक्षरप्रकृतिरप्यलिपिस्त्वमीश ।
अज्ञानवत्यपि सदैव कथंचिदेव
ज्ञानं त्वयि स्फुरति विश्वविकासहेतुः ॥ ३० ॥
प्राग्भारसंभृतनभांसि रजांसि रोषा-
दुत्थापितानि कमठेन शठेन यानि ।
छायापि तैस्तव न नाथ हता हताशो
ग्रस्तस्त्वमीभिरयमेव परं दुरात्मा ॥ ३१ ॥
यद्गर्जदूर्जितघनौघमदभ्रभीम-
भ्रश्यत्तडिन्मुसलमांसलघोरधारम् ।
दैत्येन मुक्तमथ दुस्तरवारि दध्रे
तेनैव तस्य जिन दुस्तरवारिकृत्यम् ॥ ३२ ॥

---

१. प्राकारत्रयेण. २. पार्थिवश्चासौ निपो घटः. 'पार्थिवनिभस्य,' 'पार्थिवभवस्य' इति च पाठः. ३. घटस्तु वह्निकृतपाकेन शून्यस्तारयितुमसमर्थो भवति. ४. तरवारिः खड्गः. 'विमलतरवारिधाराभासितराजहंसमण्डलः' इति वासवदत्ताश्लेषः.

ध्वस्तोर्ध्वकेशविकृताकृति मर्त्यमुण्ड-
प्रालम्बभृद्दयदवक्त्रविनिर्यदग्निः ।
प्रेतव्रजः प्रति भवन्तमपीरितो यः
सोऽस्याभवत्प्रतिभवं भवदुःखहेतुः ॥ ३३ ॥
धन्यास्त एव भुवनाधिप ये त्रिसंध्य-
माराधयन्ति विधिवद्विधुतान्यकृत्याः ।
भक्त्योल्लसत्पुलकपक्ष्मलदेहदेशाः
पादद्वयं तव विभो भुवि जन्मभाजः ॥ ३४ ॥
अस्मिन्नपारभववारिनिधौ मुनीश
मन्ये न मे श्रवणगोचरतां गतोऽसि ।
आकर्णिते तु तव गोत्रपवित्रमन्त्रे
किं वा विपद्विषधरी सविधं समेति ॥ ३५ ॥
जन्मान्तरेऽपि तव पादयुगं न देव
मन्ये मया महितमीहितदानदक्षम् ।
तेनेह जन्मनि मुनीश पराभवानां
जातो निकेतनमहं मथिताशयानाम् ॥ ३६ ॥
नूनं न मोहतिमिरावृतलोचनेन
पूर्वं विभो सकृदपि प्रविलोकितोऽसि ।
मर्माविधो विधुरयन्ति हि मामनर्थाः
प्रोद्यत्प्रबन्धगतयः कथमन्यथैते ॥ ३७ ॥
आकर्णितोऽपि महितोऽपि निरीक्षितोऽपि
नूनं न चेतसि मया विधृतोऽसि भक्त्या ।
जातोऽस्मि तेन जनबान्धव दुःखपात्रं
यस्मात्क्रियाः प्रतिफलन्ति न भावशून्याः ॥ ३८ ॥
त्वं नाथ दुःखिजनवत्सल हे शरण्य
कारुण्यपुण्यवसते वशिनां वरेण्य ।

१. गोत्रं नाम. २. मर्मभेदकाः.

भक्त्या नते मयि महेश दयां विधाय
दुःखाङ्कुरोद्दलनतत्परतां विधेहि ॥ ३९ ॥

निःसंख्यसारशरणं शरणं शरण्य-
मासाद्य सादितरिपुप्रथितावदानम् ।
त्वत्पादपङ्कजमपि प्रणिधानवन्ध्यो
वन्ध्योऽसि चेद्भुवनपावन हा हतोऽसि ॥ ४० ॥

देवेन्द्रवन्द्य विदिताखिलवस्तुसार
संसारतारक विभो भुवनाधिनाथ ।
त्रायस्व देव करुणाह्रद मां पुनीहि
सीदन्तमद्य भयदव्यसनाम्बुराशेः ॥ ४१ ॥

यद्यस्ति नाथ भवदङ्घ्रिसरोरुहाणां
भक्तेः फलं किमपि संततसंचितायाः ।
तन्मे त्वदेकशरणस्य शरण्य भूयाः
स्वामी त्वमेव भुवनेऽत्र भवान्तरेऽपि ॥ ४२ ॥

इत्थं समाहितधियो विधिवज्जिनेन्द्र
सान्द्रोल्लसत्पुलककञ्चुकिताङ्गभागाः ।
त्वद्बिम्ब¹निर्मलमुखाम्बुजबद्धलक्ष्या
ये संस्तवं तव विभो रचयन्ति भव्याः ॥ ४३ ॥

जननयनकुमुदचन्द्र प्रभास्वराः स्वर्गसंपदो भुक्त्वा ।
ते विगलितमलनिचया अचिरान्मोक्षं प्रपद्यन्ते ॥ ४४ ॥ (युग्मम्)

इति श्रीसिद्धसेनदिवाकरविरचितं पार्श्वनाथस्य कल्याणमन्दिरस्तोत्रम् ॥

---

## श्रीवादिराजप्रणीतं[2]
## एकीभावस्तोत्रम् ।

एकीभावं गत इव मया यः स्वयं कर्मबन्धो
घोरं दुःखं भवभवगतो दुर्निवारः करोति ।

---

१. बिम्ब प्रतिमा. २. वादिराजस्य देशकालौ न ज्ञायेते, किं त्वेतत्प्रणीतमेकीभावस्तोत्रं दिगम्बरा एव पठन्ति. अस्य स्तवस्य कर्तृनामरहितैका संक्षिप्तावचूरिस्त्रीणि मूलपुस्तकानि चास्माभिर्जयपुर एव समधिगतानि.

तस्याप्यस्य त्वयि जिनरवे भक्तिरुन्मुक्तये चे-
च्छेत्तुं शक्यो भवति न तया कोऽपरस्तापहेतुः ॥ १ ॥
ज्योतीरूपं दुरितनिवहध्वान्तविध्वंसहेतुं
त्वामेवाहुर्जिनवर चिरं तत्त्वविद्याभियुक्ताः।
चेतोवासे भवसि च मम स्फारमुद्भासमान-
स्तस्मिन्नंहः कथमिव तमो वस्तुतो वस्तुमीष्टे ॥ २ ॥
आनन्दाश्रुस्नपितवदनं गद्गदं चाभिजल्प-
न्यश्चायेत त्वयि दृढमनाः स्तोत्रमन्त्रैर्भवन्तम्।
तस्याभ्यस्तादपि च सुचिरं देहवल्मीकमध्या-
न्निष्कास्यन्ते विविधविषमव्याधयः काद्रवेयाः ॥ ३ ॥
प्रागेवेह त्रिदिवभवनादेष्यता भव्यपुण्या-
त्पृथ्वीचक्रं कनकमयतां देव निन्ये त्वयेदम्।
ध्यानद्वारं मम रुचिकरं स्वान्तगेहं प्रविष्ट-
स्तत्किं चित्रं जिन वपुरिदं यत्सुवर्णीकरोषि ॥ ४ ॥
लोकस्यैकस्त्वमसि भगवन्निर्निमित्तेन बन्धु-
स्त्वय्येवासौ सकलविषया शक्तिरप्रत्यनीका।
भक्तिस्फीतां चिरमधिवसन्मामिकां चित्तशय्यां
मय्युत्पन्नं कथमिव ततः क्लेशयूथं सहेथाः ॥ ५ ॥
जन्माटव्यां कथमपि मया देव दीर्घं भ्रमित्वा
प्राप्तैवेयं तव नयकथा स्फारपीयूषवापी।
तस्या मध्ये हिमकरहिमव्यूहशीते नितान्तं
निर्मग्नं मां न जहति कथं दुःखदावोपतापाः ॥ ६ ॥
पादन्यासादपि च पुनतो यात्रया ते त्रिलोकीं
हेमाभासो भवति सुरभिः श्रीनिवासश्च पद्मः।

१. पुस्तके 'चारु पूजानिशमनदो.'. २. कुष्ठरोगाक्रान्तं शरीरं दर्शयति टीकाकारः.

सर्वाङ्गेण स्पृशति भगवंस्त्वय्यशेषं मनो मे
श्रेयः किं तत्स्वयमहरहर्यन्न मामभ्युपैति ॥ ७ ॥
पश्यन्तं त्वद्वचनममृतं भक्तिपात्र्या पिबन्तं
कर्मारण्यात्पुरुषमसमानन्दधाम प्रविष्टम् ।
त्वां दुर्वारस्मरमदहरं त्वत्प्रसादैकभूमिं
क्रूराकाराः कथमिव रुजाकण्टका निर्लुठन्ति ॥ ८ ॥
पाषाणात्मा तदितरसमः केवलं रत्नमूर्ति-
र्मानस्तम्भो भवति च परस्तादृशो रत्नवर्गः ।
दृष्टिप्राप्तो हरति स कथं मानरोगं नराणां
प्रत्यासत्तिर्यदि न भवतस्तस्य तच्छक्तिहेतुः ॥ ९ ॥
हृद्यः प्राप्तो मरुदपि भवन्मूर्तिशैलोपवाही
सद्यः पुंसां निरवधि रुजाधूलिबन्धं धुनोति ।
ध्यानाहूतो हृदयकमलं यस्य तु त्वं प्रविष्ट-
स्तस्याशक्यः क इह भुवने देव लोकोपकारः ॥ १० ॥
जानासि त्वं मम भवभवे यच्च यादृक्च दुःखं
जातं यस्य स्मरणमपि मे शस्त्रवन्निष्पिनष्टि ।
त्वं सर्वेशः सकृप इति च त्वामुपेतोऽस्मि भक्त्या
यत्कर्तव्यं तदिह विषये देव एव प्रमाणम् ॥ ११ ॥
प्रापद्दैवं तव नुतिपदैर्जीवकेनोपदिष्टैः
पापाचारी मरणसमये सारमेयोऽपि सौख्यम् ।
कः संदेहो यदुपलभते वासवश्रीप्रभुत्वं
जल्पञ्जाप्यैर्मणिभिरमलैस्त्वन्नमस्कारचक्रम् ॥ १२ ॥
शुद्धे ज्ञाने शुचिनि चरिते सत्यपि त्वय्यनीचा
भक्तिर्नो चेदनवधि सुखावञ्चिका कुञ्चिकेयम् ।

१. 'जीवकेन क्षत्रियवंशचूडामणि श्रीसत्यंधरमहाराजपुत्रेणेति टीकाकारः'. २. सौ-ख्यामित्यस्य दैवमिति विशेषणम्. सारमेयः श्वा.

शक्योद्धाटं भवति हि कथं मुक्तिकामस्य पुंसो
मुक्तिद्वारं परिदृढमहामोहमुद्राकवाटम् ॥ १३ ॥

प्रच्छन्नः खल्वयमवमयैरन्धकारैः समन्ता-
त्पन्था मुक्तेः स्थपुटितपदः क्लेशगर्तैरगाधैः ।
तत्कस्तेन व्रजति सुखतो देव तत्त्वावभासी
यद्यग्रेऽग्रे न भवति भवद्भारतीरत्नदीपः ॥ १४ ॥

आत्मज्योतिर्निधिरनवधिर्द्रष्टुरानन्दहेतुः
कर्मक्षोणीपटलपिहितो योऽनवाप्यः परेषाम् ।
हस्ते कुर्वन्त्यनतिचिरतस्तं भवद्भक्तिभाजः
स्तोत्रैर्बन्धप्रकृतिपरुषोद्दामधात्रीखनित्रैः ॥ १५ ॥

प्रत्युत्पन्ना नयहिमगिरेरायता चामृताब्धे-
र्या देव त्वत्पदकमलयोः संगता भक्तिगङ्गा ।
चेतस्तस्यां मम रुचिवशादाप्लुतं क्षालितांहः-
कल्माषं यद्भवति किमियं देव संदेहभूमिः ॥ १६ ॥

प्रादुर्भूतस्थिरपदसुख त्वामनुध्यायतो मे
त्वय्येवाहं स इति मतिरुत्पद्यते निर्विकल्पा ।
मिथ्यैवेयं तदपि तनुते तृप्तिमभ्रेपरूपां
दोषात्मानोऽप्यभिमतफलास्त्वत्प्रसादाद्भवन्ति ॥ १७ ॥

मिथ्यावादं मलमपनुदन्सप्तभङ्गीतरङ्गै-
र्वागम्भोधिर्भुवनमखिलं देव पर्येति यस्ते ।
तस्यावृत्तिं सपदि विबुधाश्चेतसैवाचलेन
व्यातन्वन्तः सुचिरममृतासेवया तृप्नुवन्ति ॥ १८ ॥

आहार्येभ्यः स्पृहयति परं यः स्वभावादहृद्यः
शस्त्रग्राही भवति सततं वैरिणा यश्च शक्यः।
सर्वाङ्गेषु त्वमसि सुभगस्त्वं न शक्यः परेषां
तत्किं भूषावसनकुसुमैः किं च शस्त्रैरुदस्त्रैः॥ १९॥
इन्द्रः सेवां तव सुकुरुतां किं तया श्लाघनं ते
तस्यैवेयं भवलयकरी श्लाघ्यतामातनोति।
त्वं निस्तारी जननजलधेः सिद्धिकान्तापतिस्त्वं
त्वं लोकानां प्रभुरिति तव श्लाघ्यते स्तोत्रमित्थम्॥ २०॥
वृत्तिर्वाचामपरसदृशी न त्वमन्येन तुल्य-
स्तुत्युद्गाराः कथमिव ततस्त्वय्यमी नः क्रमन्ते।
मैवं भूवंस्तदपि भगवन्भक्तिपीयूषपुष्टा-
स्ते भव्यानामभिमतफलाः पारिजाता भवन्ति॥ २१॥
कोपावेशो न तव न तव क्वापि देव प्रसादो
व्याप्तं चेतस्तव हि परमोपेक्षयैवानपेक्षम्।
आज्ञावश्यं तदपि भुवनं संनिधिर्वैरहारी
क्वैवंभूतं भुवनतिलक प्राभवं त्वत्परेषु॥ २२॥
देव स्तोतुं त्रिदिवगणिकामण्डलीगीतकीर्तिं
तोतूर्ति त्वां सकलविषयज्ञानमूर्तिं जनो यः।
तस्य क्षेमं न पदमटतो जातु जोहूर्ति पन्था-
स्तत्त्वग्रन्थस्मरणविषये नैष मोमूर्ति मर्त्यः॥ २३॥
चित्ते कुर्वन्निरवधिसुखज्ञान दृग्वीर्यरूपं
देव त्वां यः समयनियमादादरेण स्तवीति।
श्रेयोमार्गं स खलु सुकृती तावता पूरयित्वा
कल्याणानां भवति विषयः पञ्चधा पञ्चितानाम्॥ २४॥

१. वाह्यभूषणादिभ्यः. २. प्रभुत्वम्. ३. स्तोतुं तोतूर्ति त्वरितो भवति. ४. कुटिलो भवति. ५. संदेहं प्राप्नोति. ६. विस्तृतानाम्.

भक्तिप्रह्वमहेन्द्रपूजितपद त्वत्कीर्तने न क्षमाः
सूक्ष्मज्ञानदृशोऽपि संयमभृतः के हन्त मन्दा वयम् ।
अस्माभिस्तवनच्छलेन तु परस्त्वय्यादरस्तन्यते
स्वात्माधीनसुखैषिणां स खलु नः कल्याणकल्पद्रुमः ॥ २५ ॥
वादिराजमनु शाब्दिकलोको वादिराजमनु तार्किकसिंहः ।
वादिराजमनु काव्यकृतस्ते वादिराजमनु भव्यसहायः ॥ २६ ॥

इति श्रीवादिराजकृतमेकीभावस्तोत्रम् ॥

---

श्रीधनंजयप्रणीतं

## विषापहारस्तोत्रम् ।

स्वात्मस्थितः सर्वगतः समस्तव्यापारवेदी विनिवृत्तसङ्गः ।
प्रवृद्धकालोऽप्यजरो वरेण्यः पायादपायात्पुरुषः पुराणः ॥ १ ॥
परैरचिन्त्यं युगभारमेकः स्तोतुं वहन्योगिभिरप्यशक्यः ।
स्तुत्योऽद्य मेऽसौ वृषभो न भानोः किमप्रवेशे विशति प्रदीपः ॥ २ ॥
तत्याज शक्रः शकनाभिमानं नाहं त्यजामि स्तवनानुबन्धम् ।
स्वल्पेन बोधेन ततोऽधिकार्थं वातायनेनेव निरूपयामि ॥ ३ ॥
त्वं विश्वदृश्वा सकलैरदृश्यो विद्वानशेषं निखिलैरवेद्यः ।
वक्तुं कियान्कीदृश इत्यशक्यः स्तुतिस्ततोऽशक्तिकथा तवास्तु ॥ ४ ॥
व्यापीडितं बालमिवात्मदोषैरुल्लाघतां लोकमवापिपस्त्वम् ।
हिताहितान्वेषणमान्द्यभाजः सर्वस्य जन्तोरसि बालवैद्यः ॥ ५ ॥

दाता न हर्ता दिवसं विवस्वान[1]द्यश्व इत्यच्युत दर्शिताशः ।
सव्याज्यमेवं गमयत्यशक्तः क्षणेन दत्सेऽभिमतं नताय ॥ ६ ॥
उपैति भक्त्या सुमुखः सुखानि त्वयि स्वभावाद्विमुखश्च दुःखम् ।
सदावदातद्युतिरेकरूपस्तयोस्त्वमादर्श इवावभासि ॥ ७ ॥
अगाधताब्धेः स यतः पयोधिर्मेरोश्च तुङ्गा प्रकृतिः स य[2]त्र ।
द्यावापृथिव्योः पृथुता तथैव व्याप त्वदीया भुवनान्तराणि ॥ ८ ॥
त[3]वानवस्था परमार्थतत्त्वं त्वया न गीतः पु[4]नरागमश्च ।
दृष्टं विहाय त्वमदृष्टमपी[5]विरुद्धवृत्तोऽपि समञ्जसस्त्वम् ॥ ९ ॥
स्मरः सुदग्धो भवतैव तस्मिन्नुद्धूलितात्मा यदिनाम शंभुः ।
अशेत वृन्दोपहतोऽपि विष्णुः किं गृह्यते येन भवानजागः ॥१०॥
स नीर[6]जाः स्यादपरोऽघवान्वा तद्दोषकीर्त्यैव न ते गुणित्वम् ।
स्वतोऽम्बुराशेर्महिमा न देव स्तोकापवादेन ज[7]लाशयस्य ॥ ११ ॥
कर्मस्थितिं जन्तुरनेकभूमिं नयत्यमुं सा च परस्परस्य ।
त्वं नेतृभावं हि त[8]योर्भवाब्धौ जिनेन्द्रनौनाविकयोरिवाख्यः ॥१२॥
सुखाय दुःखानि गुणाय दोषान्धर्माय पापानि समाचरन्ति ।
तैलाय बालाः सिकतासमूहं निपीडयन्ति स्फुटम[9]त्वदीयाः ॥ १३ ॥
विषापहारं मणिमौषधानि मन्त्रं समुद्दिश्य रसायनं च ।
भ्राम्यन्त्यहो न त्वमिति स्मरन्ति पर्यायनामानि तवैव तानि ॥ १४ ॥
चित्ते न किंचित्कृतवानसि त्वं देवः कृतश्चेतसि येन सर्वम् ।
हस्ते कृतं तेन जगद्विचित्रं सुखेन जीवत्यपि चित्तबाह्यः ॥ १५ ॥

---

१. सूर्यो न ददाति नापहरति केवलमद्यश्व इत्याशां दर्शयन्नशक्तः सन्सव्याजं दिवसं गमयति, केवलं कालपेक्षं करोतीत्यर्थः. अन्यथाशा दिशः. २. यत्र स मेरुर्वर्तते तत्रैव तुङ्गा प्रकृतिर्नान्यत्र. ३. तव मतेऽनवस्था परमार्थतत्त्वं वर्तते. ४. पुनरावृत्तिः. ५. वाञ्छितवानसि. ६. पापरहितः स ब्रह्मादिदेवसमूहः. ७. सरोवरादेः स्तोकापवादेन स्वल्पमेतदिति निन्दया समुद्रस्य महत्त्वं न ख्याप्यते स तु स्वभावेनैव महान्. ८. जीवकर्मणोरन्योन्यस्य नेतृभाव भवाब्धौ त्वमाख्यः कथितवानसि, यथा समुद्रे नौका नाविकं नयति नाविकश्च नौकां तद्वत्. ९. त्वत्तः पराङ्मुखाः.

त्रिकालतत्त्वं त्वमवैस्त्रिलोकीस्वामीति संख्यानियतेरमीषाम् ।
बोधाधिपत्यं प्रति नाभविष्यंस्तेऽन्येऽपि चेद्व्याप्स्यदमूनपीदम् ॥ १६ ॥
नाकस्य पत्युः परिकर्म रम्यं नागम्यरूपस्य तवोपकारि ।
तस्यैव हेतुः स्वसुखस्य भानोरुद्बिभ्रतच्छत्रमिवादरेण ॥ १७ ॥
कोपेक्षकस्त्वं क्व सुखोपदेशः स चेत्किमिच्छाप्रतिकूलवादः ।
क्वासौ क्व वा सर्वजगत्प्रियत्वं तन्नो यथातथ्यमवेविचं ते ॥ १८ ॥
तुङ्गात्फलं यत्तदकिंचनाच्च प्राप्यं समृद्धान्न धनेश्वरादेः ।
निरम्भसोऽप्युच्चतमादिवाद्रेर्नैकापि निर्याति धुनी पयोधेः ॥ १९ ॥
त्रैलोक्यसेवानियमाय दण्डं दध्रे यदिन्द्रो विनयेन तस्य ।
तत्प्रातिहार्यं भवतः कुतस्त्यं तत्कर्मयोगाद्यदि वा तवास्तु ॥ २० ॥
श्रिया परं पश्यति साधु निःस्वः श्रीमान्न कश्चित्कृपणं त्वदन्यः ।
यथा प्रकाशस्थितमन्धकारस्थायीक्षतेऽसौ न तथा तमःस्थम् ॥ २१ ॥
स्ववृद्धिनिःश्वासनिमेषभाजि प्रत्यक्षमात्मानुभवेऽपि मूढः ।
किं चाखिलज्ञेयविवर्तिबोधस्वरूपमध्यक्षमवैति लोकः ॥ २२ ॥
तस्यात्मजस्तस्य पितेति देव त्वां येऽवगायन्ति कुलं प्रकाश्य ।
तेऽद्यापि नन्वाश्मनमित्यवश्यं पाणौ कृतं हेम पुनस्त्यजन्ति ॥ २३ ॥
दत्तस्त्रिलोक्यां पटहोऽभिभूताः सुरासुरास्तस्य महान्स लाभः ।
मोहस्य मोहस्त्वयि को विरोद्धुर्मूलस्य नाशो बलवद्विरोधः ॥ २४ ॥
मार्गस्त्वयैको ददृशे विमुक्तेश्चतुर्गतीनां गहनं परेण ।
सर्वं मया दृष्टमिति स्मयेन त्वं मा कदाचिद्भुजमालुलोकः ॥ २५ ॥
स्वर्भानुरर्कस्य हविर्भुजोऽम्भः कल्पान्तवातोऽम्बुनिधेर्विघातः ।
संसारभोगस्य वियोगभावो विपक्षपूर्वाभ्युदयास्त्वदन्ये ॥ २६ ॥
अजानतस्त्वां नमतः फलं यत्तज्जानतोऽन्यं न तु देवतेति ।
हरिन्मणिं काचधिया दधानस्तं तस्य बुद्ध्या वहतो न रिक्तः ॥ २७ ॥

प्रशस्तवाचश्चतुराः कषायैर्दग्धस्य देवव्यवहारमाहुः ।
गतस्य दीपस्य हि नन्दितत्वं दृष्टं कपालस्य च मङ्गलत्वम् ॥ २८ ॥
नानार्थमेकार्थमदस्त्वदुक्तं हितं वचस्ते निशमय्य वक्तुः ।
निर्दोषतां के न विभावयन्ति ज्वरेण मुक्तः सुगमः स्वरेण ॥ २९ ॥
न क्वापि वाञ्छा ववृते च वाक्ते काले क्वचित्कोऽपि तथा नियोगः ।
न पूरयाम्यम्बुधिमित्युदंशुः स्वयं हि शीतद्युतिरभ्युदेति ॥ ३० ॥
गुणा गभीराः परमाः प्रसन्ना बहुप्रकारा बहवस्तवेति ।
दृष्टोऽयमन्तः स्तवने न तेषां गुणो गुणानां किमतः परोऽस्ति ॥ ३१ ॥
स्तुत्या परं नाभिमतं हि भक्त्या स्मृत्या प्रणत्या च ततो भजामि ।
स्मरामि देवं प्रणमामि नित्यं केनाप्युपायेन फलं हि साध्यम् ॥ ३२ ॥
ततस्त्रिलोकीनगराधिदेवं नित्यं परं ज्योतिरनन्तशक्तिम् ।
अपुण्यपापं परपुण्यहेतुं नमाम्यहं वन्द्यमवन्दितारम् ॥ ३३ ॥
अशब्दमस्पर्शमरूपगन्धं त्वां नीरसं तद्विषयावबोधम् ।
सर्वस्य मातारममेयमन्यैर्जिनेन्द्रमस्मार्यमनुस्मरामि ॥ ३४ ॥
अगाधमन्यैर्मनसाप्यलङ्घ्यं निष्किंचनं प्रार्थितमर्थवद्भिः ।
विश्वस्य पारं तमदृष्टपारं पतिं जनानां शरणं व्रजामि ॥ ३५ ॥
त्रैलोक्यदीक्षागुरवे नमस्ते यो वर्धमानोऽपि निजोन्नतोऽभूत् ।
प्राग्गण्डशैलः पुनरद्रिकल्पः पश्चान्न मेरुः कुलपर्वतोऽभूत् ॥ ३६ ॥
स्वयंप्रकाशस्य दिवा निशा वा न बाध्यता यस्य न बाधकत्वम् ।
न लाघवं गौरवमेकरूपं वन्दे विभुं कालकलामतीतम् ॥ ३७ ॥
इति स्तुतिं देव विधाय दैन्याद्वरं न याचे त्वमुपेक्षकोऽसि ।
छायातरुं संश्रयतः स्वतः स्यात्कश्छायया याचितयात्मलाभः ॥ ३८ ॥

---

१. पूर्वापरविरोधरहितार्थम्. २. प्रवृत्ता. ३. उत्कृष्टाः. ४. स्वयमेवोन्नतः, न तु मेण वर्धमानः. वर्धमान इति च महावीरस्वामिनो नामान्तरम्. यथा मेरुः पूर्वे गण्डलतुल्यस्तदनन्तरं पर्वतकल्पस्ततः कुलपर्वतोऽभूदिति न क्रमः. उत्पत्तिसमकालमेव लपर्वतत्वं मेरोः. एव जिनोऽपि जन्मनैवोन्नतो न तु नामानुरूपं क्रमेण वर्धमान इति त्पर्यम्.

अथास्ति दित्सा यदि वोपरोधस्त्वय्येव सक्तां दिश भक्तिबुद्धिम् ।
करिष्यते देव तथा कृपां मे को वात्मपोष्ये सुमुखो न सूरिः ॥ ३९ ॥

वितरति विहिता यथाकथंचिज्जिन विनताय मनीषितानि भक्तिः ।
त्वयि नुतिविषया पुनर्विशेषाद्दिशति सुखानि यशो धनं जयं च ॥ ४० ॥

इति श्रीधनञ्जयकृतं विषापहारस्तोत्रम् ॥

---

## श्रीभूपालकविप्रणीता

## जिनचतुर्विंशतिका ।

श्रीलीलायतनं महीकुलगृहं कीर्तिप्रमोदास्पदं
वाग्देवीरतिकेतनं जयरमाक्रीडानिधानं महत् ।
स स्यात्सर्वमहोत्सवैकभवनं यः प्रार्थितार्थप्रदं
प्रातः पश्यति कल्पपादपदलच्छायं जिनाङ्घ्रिद्वयम् ॥ १ ॥

शान्तं वपुः श्रवणहारि वचश्चरित्रं
सर्वोपकारि तव देव ततः श्रुतज्ञाः ।
संसारमारवमहास्थलरुन्द्रसान्द्र-
च्छायामहीरुह भवन्तमुपाश्रयन्ते ॥ २ ॥

स्वामिन्नद्य विनिर्गतोऽस्मि जननीगर्भान्धकूपोदरा-
दद्योद्घाटितदृष्टिरस्मि फलवज्जन्मास्मि चाद्य स्फुटम् ।
त्वामद्राक्षमहं यदक्षयपदानन्दाय लोकत्रयी-
नेत्रेन्दीवरकाननेन्दुममृतस्यन्दिप्रभाचन्द्रिकम् ॥ ३ ॥

निःशेषत्रिदशेन्द्रशेखरशिखारत्नप्रदीपावली
सान्द्रीभूतमृगेन्द्रविष्टरतटीमाणिक्यदीपावलिः ।
क्वेयं श्रीः क्व च निःस्पृहत्वमिदमित्यूहातिगस्त्वादृशः
सर्वज्ञानदृशश्चरित्रमहिमा लोकेश लोके ॥ ४ ॥

राज्यं शासनकारिनाकपति यत्त्यक्तं तृणावत्त्वया
हेलानिर्दलितत्रिलोकमहिमा यन्मोहमल्लो जितः।
लोकालोकमपि (?) स्वबोधमुकुरस्यान्तः कृतं यत्त्वया
सैपाश्चर्यपरम्परा जिनवर क्वान्यत्र संभाव्यते ॥ ५ ॥

दानं ज्ञानधनाय दत्तमसकृत्पात्राय सद्वृत्तये
चीर्णान्युग्रतपांसि तेन सुचिरं पूजाश्च बह्व्यः कृताः।
शीलानां निचयः सहामलगुणैः सर्वैः समासादितो
दृष्टस्त्वं जिन येन दृष्टिसुभगः श्रद्धापरेण क्षणम् ॥ ६ ॥

प्रज्ञापारमितः स एव भगवान्पारं स एव श्रुत-
स्कन्धाब्धेर्गुणरत्नभूषण इति श्लाघ्यः स एव ध्रुवम्।
नीयन्ते जिन येन कर्णहृदयालंकारतां त्वद्गुणाः
संसाराहिविपापहारमणयस्त्रैलोक्यचूडामणे ॥ ७ ॥

जयति दिविजवृन्दान्दोलितैरिन्दुरोचि-
र्निचयरुचिभिरुच्चैश्चामरैर्वीज्यमानः।
जिनपतिरनुरज्यन्मुक्तिसाम्राज्यलक्ष्मी-
युवतिनवकटाक्षक्षेपलीलां दधानैः ॥ ८ ॥

देवः श्वेतातपत्रत्रयचमरिरुहाशोकभाश्चक्रभाषा-
पुष्पौघासारसिंहासनसुरपटहैरष्टभिः प्रातिहार्यैः। (?)
साश्चर्यैर्भ्राजमानः सुरमनुजसभाम्भोजिनीभानुमाली
पायान्नः पादपीठीकृतसकलजगत्पालमौलिर्जिनेन्द्रः ॥ ९ ॥

नृत्यत्स्वर्दन्तिदन्ताम्बुरुहवननटन्नाकनारीनिकायः
सद्यस्त्रैलोक्ययात्रोत्सवकरनिनदातोद्यमाद्यन्निलिम्पः।
हस्ताम्भोजातलीलाविनिहितसुमनोदामरम्यामरस्त्री-
काम्यः कल्याणपूजाविधिषु विजयते देव देवागमस्ते ॥ १० ॥

---

१. आज्ञाविधेयः शक्रो यस्मिन्. २. चमरिरुहं चामरम्, भाश्चक्रं भामण्डलम्, भाषा दिव्यध्वनिः. 'अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यध्वनिश्चामरमासनं च। भामण्डलं दुन्दुभिरातपत्रं सत्प्रातिहार्याणि जिनेश्वराणाम् ॥' इति शान्तिपाठे पद्यम्.

चक्षुष्मानहमेव देव भुवने नेत्रामृतस्यन्दिनं
त्वद्वक्त्रेन्दुमतिप्रसादसुभगैस्तेजोभिरुद्भासितम् ।
येनालोकयता मयानतिचिराच्चक्षुः कृतार्थीकृतं
द्रष्टव्यावधिवीक्षणव्यतिकरव्याजृम्भमाणोत्सवम् ॥ ११ ॥

कन्तोः सकान्तमपि मल्लमवैति कश्चि-
न्मुग्धो मुकुन्दमरविन्दजमिन्दुमौलिम् ।
मोघीकृतत्रिदशयोषिदपाङ्गपात-
स्तस्य त्वमेव विजयी जिनराजमल्लः ॥ १२ ॥

किसलयितमनल्पं त्वद्विलोकाभिलाषा-
त्कुसुमितमतिसान्द्रं त्वत्समीपप्रयाणात् ।
मम फलितममन्दं त्वन्मुखेन्दोरिदानीं
नयनपथमवाप्तादेव पुण्यद्रुमेण ॥ १३ ॥

त्रिभुवनवनपुष्प्यत्पुष्पकोदण्डदर्प-
प्रसरदवनवाम्भोमुक्तिसूक्तिप्रसूतिः ।
स जयति जिनराजव्रातजीमूतसङ्घः
शतमखशिखिनृत्यारम्भनिर्बन्धबन्धुः ॥ १४ ॥

भूपालस्वर्गपालप्रमुखनरसुरश्रेणिनेत्रालिमाला-
लीलाचैत्यस्य चैत्यालयमखिलजगत्कौमुदीन्दोर्जिनस्य ।
उत्तंसीभूतसेवाञ्जलिपुटनलिनीकुड्मलास्त्रिः परीत्य
श्रीपादच्छाययापस्थितभवदवथुः संश्रितोऽस्मीव मुक्तिम् ॥ १५ ॥

देव त्वदङ्घ्रिनखमण्डलदर्पणेऽस्मि-
न्नर्घ्ये निसर्गरुचिरे चिरदृष्टवक्त्रः ।
श्रीकीर्तिकान्तिधृतिसंगमकारणानि
भव्यो न कानि लभते शुभमङ्गलानि ॥ १६ ॥

---

१. कामस्य. २. माधवः. ३. जिनानां गणधरदेवानां राजानस्तेषां व्रातः समूह एव मेघसंघ इति टीका. ४. वृक्षविशेषस्य. ५. अपास्थितो दूरीभूतः.

जयति सुरनरेन्द्रश्रीसुधानिर्झरिण्याः
कुलधरणिधरोऽयं जैनचैत्याभिरामः ।
प्रविपुलफलधर्मानोकहाग्रप्रवाल-
प्रसरशिखरशुम्भत्केतनः श्रीनिकेतः ॥ १७ ॥

विनमदमरकान्ताकुन्तलाक्रान्तकान्ति-
स्फुरितनखमयूखद्योतिताशान्तरालः ।
दिविजमनुजराजव्रातपूज्यक्रमाब्जो
जयति विजितकर्मारातिजालो जिनेन्द्रः ॥ १८ ॥

सुप्तोत्थितेन सुमुखेन सुमङ्गलाय
द्रष्टव्यमस्ति यदि मङ्गलमेव वस्तु ।
अन्येन किं तदिह नाथ तवैव वक्त्रं
त्रैलोक्यमङ्गलनिकेतनमीक्षणीयम् ॥ १९ ॥

त्वं धर्मोदयतापसाश्रमशुकस्त्वं काव्यबन्धक्रम-
क्रीडानन्दनकोकिलस्त्वमुचितः श्रीमल्लिकाषट्पदः ।
त्वं पुन्नागकथारविन्दसरसीहंसस्त्वमुत्तंसकैः
कैर्भूपाल[1] न धार्यसे गुणमणिस्रङ्मालिभिर्मौलिभिः ॥ २० ॥

शिवसुखमजरश्रीसंगमं चाभिलष्य
स्वमभि नियमयन्ति क्लेशपाशेन केचित् ।
वयमिह तु वचस्ते भूपतेर्भावयन्त-
स्तदुभयमपि शश्वल्लीलया निर्विशामः ॥ २१ ॥

देवेन्द्रास्तव मज्जनानि विदधुर्देवाङ्गना मङ्गला-
न्यापेठुः शरदिन्दुनिर्मलयशो गन्धर्वदेवा जगुः ।
शेषाश्चापि यथानियोगमखिलाः सेवां सुराश्चक्रिरे
तत्किं देव वयं विदध्म इति नश्चित्तं तु दोलायते ॥२२ ॥

देव त्वज्जननाभिषेकसमये रोमाञ्चसत्कञ्चुकै-
र्देवेन्द्रैर्यदनर्ति नर्तनविधौ लब्धप्रभावैः स्फुटम् ।

१. हे जगत्पालक.

स्वर्गापवर्गसुखपात्र जिनाति[1]मात्रं
यस्त्वां स्मरन्भुवनमित्र जिनाति मा[2]त्रम् ।
श्रीमन्ननन्त वर निर्वृति[3]कान्त कान्तां
भव्यः स याति पदवीं अ[4]तिकान्तकान्ताम् ॥ १४ ॥

जन्माभिषेकमकरोत्सुरराजनामा
यस्याश्रितो गुणगणैः सुरराज ना[5]मा ।
धर्मः करोत्वनलसं प्रति बोधनानि
सिद्ध्यै मनः सपदि संप्रति वो धनानि ॥ १५ ॥

नास्त्यानि यानि महसा विधुनामितानि
चेतस्तमांसि तपसा विधुनामि तानि ।
इत्याचरन्वरतपो ग[6]तकामिनीति
शान्तिः पदं दिशतु मेऽग[7]तकामिनीति ॥ १६ ॥

कुन्थुः क्षितौ क्षितिपतिर्ग[8]तमानसेनः
पूर्वं पुनर्मुनिरभूद्धतमानसेनः ।
योऽसौ करोतु मम जन्तुदयानिधीनां
संवर्धनानि विविधद्ध्यु[9]दयानि धीनाम् ॥ १७ ॥

या ते शृणोति नितरामुदितानि दानं
यच्छत्यभीप्सति न वा मुदिता निदानम् ।
सा नो करोति जनता जनकोपितापि
चित्तं जिना[10]र गुणभाजन कोपि[11] तापि ॥ १८ ॥

मल्लेर्वचांस्यनिकृतीनि संभावनानि[12]
धर्मोपदेशनकृतीनि संभावनानि[13] ।

---

१. जीर्यते वृद्धो भवति. २. मां मोक्षलक्ष्मीं त्रायते मात्रस्तम्. ३. मुक्तिप्रभो. ४. हे अतिक मतदानदक्ष, अन्तकान्तां यमस्य विनाशकां पदवीम्. ५. ना पुरुषो गुणगणैः अमा सह सुष्ठु रराज. ६. गता कामिनां नीतिर्यस्मात्तपसः. ७. अगता न प्राप्ता कामिन्य ईतयश्च यत्र तादृशं पदम्. ८. अप्रमाणा सेना यस्य. ९. आगामिवाञ्छाम्. १०. हे जिन, हे अर. ११. कोपयुक्त तापयुक्तं च चित्तं नो करोति. १२. भावनया सहितानि. १३. सभाया अवनानि.

कुर्वन्तु भव्यनिवहस्य नभोगतानां
मङ्क्षु श्रियं कृतमुदं जनभोगतानाम् ॥ १९ ॥
संस्तूयसे शुभवता मुनिना यकेन
नीतो जिनाशु भवता मुनिनायकेन ।
नाथेन नाथ मुनिसुव्रत मुक्तमानां
मुक्तिं चरन्स मुनिसुव्रतमुक्तमानाम् ॥ २० ॥
चित्तेन मेरुगिरिधीर दयालुनासि
सर्वोपकारकृतधीरदया लुनासि ।
इत्थं स्तुतो नमिमुनिर्मम तापसानां
लक्ष्मीं करोतु मम निर्ममतापसानाम् ॥ २१ ॥
येनोद्धशृङ्गगिरनारगिराविनापि
नेमिः स्तुतोऽपि पशुनापि गिरा विनापि ।
कंदर्पदर्पदलनः क्षतमोहतान-
स्तस्य श्रियो दिशतु दक्षतमोऽहता नः ॥ २२ ॥
गन्धर्वयक्षनरकिंनर दृश्यमानः
प्रीतिं करिष्यति न किं नरदृश्यमानः ।
भानुप्रभाप्रविकसत्कमलोपमायां
पार्श्वः प्रसूतजनताकमलोऽपमायाम् ॥ २३ ॥
श्रीवर्धमानवचसा परमाकरेण
रत्नत्रयोत्तमनिधेः परमाकरेण ।
कुर्वन्ति यानि मुनयोऽमनता हि तानि
वृत्तानि सन्तु सततं जनताहितानि ॥ २४ ॥

---

१. देवानां जनभोगस्य तानो विस्तारो यस्या तां श्रियं भव्यनिवहस्य कुर्वन्तु. २. यकेन येन. ३. कथितप्रमाणाम्. ४. निःशेषेण ममतामपस्यन्तीति निर्ममतापसास्तेषाम्. ५. उद्धशब्दः प्रशस्तावचनः. प्रशस्तोनास्तरे गिरिनारिपर्वते. ६. इना कार्येनापि. ७. मनुष्यमात्रदर्श्यः. ८. प्रसूता प्रकटीकृता जननार्थ कमला लक्ष्मीर्येन. ९. श्री महावीरस्वामिवाक्येन. १०. परमेणाकरेण खनिरूपेण. ११. परलक्ष्मीकरेण. १२. जनतातो यहिर्भूताः. अर्थाकिका इत्यर्थः.

वृत्तान्तमुल्लसितचित्तवचःप्रसूतेः
श्रीदेवनन्दिमुनिचित्तवचः प्रसूतेः ।
यः पाठकोऽल्पतरजल्पकृतेस्त्रिसंध्यं
लोकत्रयं समनुरञ्जयति त्रिसंध्यम् (?) ॥ २५ ॥

तुष्टिं देशनया जनस्य मनसो येन स्थितं दित्सता
सर्वं वस्तु विजानता शमवता येन क्षता कृच्छ्रता ।
भव्यानन्दकरेण येन महतां तत्त्वप्रणीतिः कृता
तापं हन्तु जिनः स मे शुभधियां तातः सतामीशिता ॥ २६ ॥

इति श्रीदेवनन्दिप्रणीत सिद्धिप्रियस्तोत्रम् ।

---

## श्रीसोमप्रभाचार्यविरचिता
(सिन्दूरप्रकरापरपर्याया)
## सूक्तिमुक्तावली ।

सिन्दूरप्रकरस्तपः करिशिरःक्रोडे कषायाटवी-
दावार्चिर्निचयः प्रबोधदिवसप्रारम्भसूर्योदयः ।
मुक्तिस्त्रीकुचकुम्भकुङ्कुमरसः श्रेयस्तरोः पल्लव-
प्रोल्लासः क्रमयोर्नखद्युतिभरः पार्श्वप्रभोः पातु वः ॥ १ ॥

सन्तः सन्तु मम प्रसन्नमनसो वाचां विचारोद्यताः
सूतेऽम्भः कमलानि तत्परिमलं वाता वितन्वन्ति यत् ।
किं वाम्यर्थनयानया यदि गुणोऽस्त्यासां ततस्ते स्वयं
कर्तारः प्रथनं न चेदथ यशःप्रत्यर्थिना तेन किम् ॥ २ ॥

---

१. चक्रबन्धपद्यमेतत्, तत्र तृतीयवलये 'देवनन्दिकृतिः' इत्युद्ध्रियते. २. अस्याः सूक्तिमुक्तावल्या मुद्रणावसरे पुस्तकत्रयमस्माभिरासादितम्. तत्र प्रथमं जयपुरीयविद्याविभागाध्यक्ष 'मास्टर् ऑव् आर्ट्स्' इत्युपाधिमण्डितश्रीयुक्तहरिदासशास्त्रिणां त्रयोदशपत्रात्मकं शुद्धं नातिनवीनं च क-संज्ञकम्. द्वितीयं संवेगिसाधुसत्तमशमदमादिभूषितनिष्परिग्रहश्रीशान्तिविजयाभिधानां जैनमुनीनां पत्रत्रयात्मकं प्राचीनं शुद्धं च ख-संज्ञकम्. तृतीयमपि पूर्वोक्तमुनीनामेव द्वादशपत्रात्मकं प्राचीनं नातिशुद्धं गुर्जरभाषासंकीर्णया कर्तृनामरहितया संक्षिप्तटीकया समेतं ग-संज्ञकम्. ३. पादयोः. ४. प्रयत्नेन.

अथ धर्मप्रक्रमः।

त्रिवर्गसंसाधनमन्तरेण पशोरिवायुर्विफलं नरस्य।
तत्रापि धर्मं प्रवरं वदन्ति न तं विना यद्भवतोऽर्थकामौ ॥ ३ ॥
यः प्राप्य दुष्प्रापमिदं नरत्वं धर्मं न यत्नेन करोति मूढः।
क्लेशप्रबन्धेन स लब्धमब्धौ चिन्तामणिं पातयति प्रमादात् ॥ ४ ॥
स्वर्णस्थाले क्षिपति स रजः पादशौचं विधत्ते
पीयूषेण प्रवरकरिणं वाहयत्येधभारम्[1]।
चिन्तारत्नं विकिरति कराद्वायसोड्डायनार्थं
यो दुष्प्रापं गमयति मुधा मर्त्यजन्म प्रमत्तः ॥ ५ ॥
ते धत्तूरतरुं वपन्ति भवने प्रोन्मूल्य कल्पद्रुमं
चिन्तारत्नमपास्य काचशकलं स्वीकुर्वते ते जडाः।
विक्रीय द्विरदं गिरीन्द्रकरिणं[2] क्रीणन्ति ते रासभं
ये लब्धं परिहृत्य धर्ममधमा धावन्ति भोगाशया ॥ ६ ॥
अपारे संसारे कथमपि समासाद्य नृभवं
न धर्मं यः कुर्याद्विषयसुखतृष्णातरलितः।
ब्रुडन्[3]पारावारे प्रवरमपहाय प्रवहणं
स मुख्यो मूर्खाणामुपलमुपलब्धुं प्रयतते ॥ ७ ॥
भक्तिं तीर्थकरे गुरौ जिनमते संघे[4] च हिंसानृत-
स्तेयाब्रह्मपरिग्रहव्युपरमं क्रोधाद्यरीणां जयम्।
सौजन्यं गुणिसङ्गमिन्द्रियदमं दानं तपोभावनां
वैराग्यं न कुरुष्व निर्वृतिपदे यद्यस्ति गन्तुं मनः ॥ ८ ॥

अथ पूजाप्रक्रमः[5]।

पापं लुम्पति दुर्गतिं दलयति व्यापादयत्यापदं
पुण्यं संचिनुते श्रियं वितनुते पुष्णाति नीरोगताम्।

१. काष्ठभारम्. २. पर्वततुल्यम्. 'गिरीन्द्रसदृश' इति क-पाठः. ३. मग्न.
४. साधुसमूहे. ५. 'पूजाद्वारम्' ग. क-पुस्तके तु प्रक्रमविभागो नास्ति.

सौभाग्यं विदधाति पल्लवयति प्रीतिं प्रसूते यशः
स्वर्गं यच्छति निर्वृतिं च रचयत्यर्चार्हतां निर्मिता ॥ ९ ॥

स्वर्गस्तस्य गृहाङ्गणं सहचरी साम्राज्यलक्ष्मीः शुभा
सौभाग्यादिगुणावलिर्विलसति स्वैरं वपुर्वेश्मनि ।
संसारः सुतरः शिवं करतलक्रोडे लुठत्यञ्जसा
यः श्रद्धाभरभाजनं जिनपतेः पूजां विधत्ते जनः ॥ १० ॥

कदाचिन्नातङ्कः[1] कुपित इव पश्यत्यभिमुखं
विदूरे दारिद्र्यं चकितमिव नश्यत्यनुदिनम् ।
विरक्ता कान्तेव त्यजति कुगतिः सङ्गमुदयो
न मुञ्चत्यभ्यर्णं सुहृदिव जिनार्चां रचयतः ॥ ११ ॥

यः पुष्पैर्जिनमर्चति स्मितसुरस्त्रीलोचनैः सोऽर्च्यते
यस्तं वन्दत एकशस्त्रिजगता सोऽहर्निशं वन्द्यते ।
यस्तं स्तौति परत्र वृत्रदमनस्तोमेन[2] स स्तूयते
यस्तं ध्यायति क्लृप्तकर्मनिधनः स ध्यायते योगिभिः ॥ १२ ॥

अथ गुरुप्रक्रमः[3] ।

अवद्य[4]मुक्ते पथि यः प्रवर्तते प्रवर्तयत्यन्यजनं च निस्पृहः ।
स[5] सेवितव्यः स्वहितैषिणा गुरुः स्वयं तरंस्तारयितुं क्षमः परम् ॥ १३ ॥

विदलयति कुबोधं बोधयत्यागमार्थं
सुगतिकुगतिमार्गौ पुण्यपापे व्यनक्ति ।
अवगमयति कृत्याकृत्यभेदं गुरुर्यो
भवजलनिधिपोतस्तं विना नास्ति कश्चित् ॥ १४ ॥

पिता माता भ्राता प्रियसहचरी सूनुनिवहः
सुहृत्स्वामी माद्यत्करिभटरथाश्वः परिकरः ।
निमज्जन्तं जन्तुं नरककुहरे रक्षितुमलं
गुरोर्धर्माधर्मप्रकटनपरात्कोऽपि न परः ॥ १५ ॥

१. रोगः. २. इन्द्रसमूहेन. ३. 'गुरुद्वारम्' ग. ४. निर्दोषे. ५. 'स एव'

किं ध्यानेन भवत्वशेषविषयत्यागैस्तपोभिः कृतं
पूर्णं भावनयालमिन्द्रियजयैः पर्याप्तमाप्तागमैः ।
किं त्वेकं भवनाशनं कुरु गुरुप्रीत्या गुरोः शासनं
सर्वे येन विना विनाथबलवत्स्वार्थाय नालं गुणाः ॥ १६ ॥

अथ जिनमतप्रक्रमः ।

न देवं नादेवं न शुभगुरुमेनं न कुगुरुं
न धर्मं नाधर्मं न गुणपरिणद्धं न विगुणम् ।
न कृत्यं नाकृत्यं न हितमहितं नापि निपुणं
विलोकन्ते लोका जिनवचनचक्षुर्विरहिताः ॥ १७ ॥

मानुष्यं विफलं वदन्ति हृदयं व्यर्थं वृथा श्रोत्रयो-
र्निर्माणं गुणदोषभेदनकलां तेषामसंभाविनीम् ।
दुर्वारं नरकान्धकूपपतनं मुक्तिं बुधा दुर्लभां
सार्वज्ञः समयो दयारसमयो येषां न कर्णातिथिः ॥ १८ ॥

पीयूषं विषवज्जलं ज्वलनवत्तेजस्तमःस्तोमव-
न्मित्रं शात्रववत्स्रजं भुजगवच्चिन्तामणिं लोष्टवत् ।
ज्योत्स्नां ग्रीष्मजघर्मवत्स मनुते कारुण्यपण्यापणं
जैनेन्द्रं मतमन्यदर्शनसमं यो दुर्मतिर्मन्यते ॥ १९ ॥

धर्मं जागरयत्यघं विघटयत्युत्थापयत्युत्पथं
भिन्ते मत्सरमुच्छिनत्ति कुनयं मथ्नाति मिथ्यामतिम् ।
वैराग्यं वितनोति पुष्यति कृपां मुष्णाति तृष्णां च य-
त्तज्जैनं मतमर्चति प्रथयति ध्यायत्यधीते कृती ॥ २० ॥

अथ संघप्रक्रमः ।

रत्नानामिव रोहणक्षितिधरः खं तारकाणामिव
स्वर्गः कल्पमहीरुहामिव सरः पङ्केरुहाणामिव ।

१. 'दंभः' क. २. स्वामिरहितमन्यवत्. ३. 'जिनमतद्वारम्' ग. ४. 'मत्सरं' ग. ५. 'रोहणः' क.

पाथोधिः पयसामिवेन्दुमहसां स्थानं गुणानामसा-
वित्यालोच्य विरच्यतां भगवतः संघस्य पूजाविधिः ॥ २१ ॥
यः संसारनिरासलालसमतिर्मुक्त्यर्थमुत्तिष्ठते
यं तीर्थं कथयन्ति पावनतया येनास्ति नान्यः समः।
यस्मै तीर्थपतिर्नमस्यति सतां यस्माच्छुभं जायते
स्फूर्तिर्यस्य परा वसन्ति च गुणा यस्मिन्स संघोऽर्च्यताम् २२
लक्ष्मीस्तं स्वयमभ्युपैति रभसात्कीर्तिस्तमालिङ्गति
प्रीतिस्तं भजते मतिः प्रयतते तं लब्धुमुत्कण्ठया।
स्वःश्रीस्तं परिरब्धुमिच्छति मुहुर्मुक्तिस्तमालोकते
यः संघं गुणसंघकेलिसदनं श्रेयोरुचिः सेवते ॥ २३ ॥
यद्भक्तेः फलमर्हदादिपदवीमुख्यं कृषेः सस्यव-
च्चक्रित्वत्रिदशेन्द्रतादि तृणवत्प्रासङ्गिकं गीयते।
शक्तिं यन्महिमस्तुतौ न दधते वाचोऽपि वाचस्पतेः
संघः सोऽघहरः पुनातु चरणन्यासैः सतां मन्दिरम् ॥ २४ ॥

अथाहिंसाप्रक्रमः।

क्रीडाभूः सुकृतस्य दुष्कृतरजःसंहारवात्या भवो-
दन्वन्नौर्व्यसनाग्निमेघपटली संकेतदूती श्रियाम्।
निःश्रेणिस्त्रिदिवौकसः प्रियसखी मुक्तेः कुगत्यर्गला
सत्त्वेषु क्रियतां कृपैव भवतु क्लेशैरशेषैः परैः ॥ २५ ॥
यदि ग्रावा तोये तरति तरणिर्यद्युदयते
प्रतीच्यां सप्तार्चिर्यदि भजति शैत्यं कथमपि।
यदि क्ष्मापीठं स्यादुपरि सकलस्यापि जगतः
प्रसूते सत्त्वानां तदपि न वधः क्वापि सुकृतम् ॥ २६ ॥
स कमलवनमग्नेर्वासरं भास्वदस्ता-
दमृतमुरगवक्त्रात्साधुवादं विवादात्।

१. 'मुखं' ख. २. 'निःश्रेणी त्रिदिवौकसां' क.

रुगपगममजीर्णाज्जीवितं कालकूटा-
दभिलषति वधाद्यः प्राणिनां धर्ममिच्छेत् ॥ २७ ॥

आयुर्दीर्घतरं वपुर्वरतरं गोत्रं गरीयस्तरं
वित्तं भूरितरं बलं बहुतरं स्वामित्वमुच्चैस्तरम् ।
आरोग्यं विगतान्तरं त्रिजगति श्लाघ्यत्वमल्पेतरं
संसाराम्बुनिधिं करोति सुतरं चेतः कृपार्द्रान्तरम् ॥ २८ ॥

अथासत्यप्रक्रमः ।

विश्वासायतनं विपत्तिदलनं देवैः कृताराधनं
मुक्तेः पथ्यदनं जलाग्निशमनं व्याघ्रोरगस्तम्भनम् ।
श्रेयःसंवननं समृद्धिजननं सौजन्यसंजीवनं
कीर्तेः केलिवनं प्रभावभवनं सत्यं वचः पावनम् ॥ २९ ॥

यशो यस्माद्भस्मीभवति वनवह्नेरिव वनं
निदानं दुःखानां यदवनिरुहाणां जलमिव ।
न यत्र स्याच्छायातप इव तपःसंयमकथा
कथंचित्तन्मिथ्यावचनमभिधत्ते न मतिमान् ॥ ३० ॥

असत्यमप्रत्ययमूलकारणं कुवासनासद्म समृद्धिवारणम् ।
विपन्निदानं परवञ्चनोर्जितं कृतापराधं कृतिभिर्विवर्जितम् ॥ ३१ ॥

तस्याग्निर्जलमर्णवः स्थलमरिर्मित्रं सुराः किंकराः
कान्तारं नगरं गिरिर्गृहमहिर्माल्यं मृगारिर्मृगः ।
पातालं बिलमस्त्रमुत्पलदलं व्यालः सृगालो विषं
पीयूषं विषमं समं च वचनं सत्याञ्चितं वक्ति यः ॥ ३२ ॥

अथ स्तेयप्रक्रमः ।

तमभिलषति सिद्धिस्तं वृणीते समृद्धि-
स्तमभिसरति कीर्तिर्मुञ्चते तं भवार्तिः ।
स्पृहयति सुगतिस्तं नेक्षते दुर्गतिस्तं
परिहरति विपत्तं यो न गृह्णात्यदत्तम् ॥ ३३ ॥

---

१. मार्गोपयुक्त भोजनम्. शम्बलमिति यावत्. २. आतपे छायेव. ३. दुष्टगजः.

अदत्तं नादत्ते कृतसुकृतकामः किमपि यः
शुभश्रेणिस्तस्मिन्वसति कलहंसीव कमले।
विपत्तस्माद्दूरं व्रजति रजनीवाम्बरमणे-
र्विनीतं विद्येव त्रिदिवशिवलक्ष्मीर्भजति तम् ॥ ३४ ॥

यन्निर्वर्तितकीर्तिधर्मनिधनं सर्वागसां साधनं
प्रोन्मीलद्वधबन्धनं विरचितक्लिष्टाशयोद्बोधनम्।
दौर्गत्यैकनिबन्धनं कृतसुगत्याश्लेषसंरोधनं
प्रोत्सर्पत्प्रधनं जिघृक्षति न तद्धीमानदत्तं धनम् ॥ ३५ ॥

परजनमनःपीडाक्रीडावनं वधभावना-
भवनमवनिव्यापिव्यापल्लताघनमण्डलम्।
कुगतिगमने मार्गः स्वर्गापवर्गपुरार्गलं
नियतमनुपादेयं स्तेयं नृणां हितकाङ्क्षिणाम् ॥ ३६ ॥

अथ शीलप्रक्रमः।

दत्तस्तेन जगत्यकीर्तिपटहो गोत्रे मषीकूर्चक-
श्चारित्रस्य जलाञ्जलिर्गुणगणारामस्य दावानलः।
संकेतः सकलापदां शिवपुरद्वारे कपाटो दृढः
शीलं येन निजं विलुप्तमखिलं त्रैलोक्यचिन्तामणिः ॥ ३७ ॥

व्याघ्रव्यालजलानलादिविपदस्तेषां व्रजन्ति क्षयं
कल्याणानि समुल्लसन्ति विबुधाः सांनिध्यमध्यासते।
कीर्तिः स्फूर्तिमियर्ति यात्युपचयं धर्मः प्रणश्यत्यघं
स्वर्निर्वाणसुखानि संनिदधते ये शीलमाबिभ्रते ॥ ३८ ॥

हरति कुलकलङ्कं लुम्पते पापपङ्कं
सुकृतमुपचिनोति श्लाघ्यतामातनोति।
नमयति सुरवर्गं हन्ति दुर्गोपसर्गं
रचयति शुचि शीलं स्वर्गमोक्षौ सलीलम् ॥ ३९ ॥

१. 'क्लिष्टाशयोद्दीपनम्' ख. २. 'कामार्तेस्त्यजति प्रमोदयभिदारार्थो पात्री न यः' ति क-पुस्तके चतुर्थः पादः. ३. गच्छति.

तोयत्यग्निरपि स्रजत्यहिरपि व्याघ्रोऽपि सारङ्गति
व्यालोऽप्यश्वति पर्वतोऽप्युपलति क्ष्वेडोऽपि पीयूषति।
विघ्नोऽप्युत्सवति प्रियत्यरिरपि क्रीडातडागत्यपां-
नाथोऽपि स्वगृहत्यटव्यपि नृणां शीलप्रभावाद्ध्रुवम्॥ ४०॥

अथ परिग्रहप्रक्रमः।

कालुष्यं जनयञ्जडस्य रचयन्धर्मद्रुमोन्मूलनं
क्लिश्नन्नीतिकृपाक्षमाकमलिनीं लोभाम्बुधिं वर्धयन्।
मर्यादातटमुद्रुजञ्छुभमनोहंसप्रवासं दिश-
न्किं न क्लेशकरः परिग्रहनदीपूरः प्रवृद्धिं गतः॥ ४१॥

कलहकलभविन्ध्यः कोपगृध्रश्मशानं
व्यसनभुजगरन्ध्रं द्वेषदस्युप्रदोषः।
सुकृतवनदवाग्निर्मार्दवाम्भोदवायु-
र्नयनलिनतुषारोऽत्यर्थमर्थानुरागः॥ ४२॥

प्रत्यर्थी प्रशमस्य मित्रमधृतेर्मोहस्य विश्रामभूः
पापानां खनिरापदां पदमसद्ध्यानस्य लीलावनम्।
व्याक्षेपस्य निधिर्मदस्य सचिवः शोकस्य हेतुः कलेः
केलीवेश्म परिग्रहः परिहृतेर्योग्यो विविक्तात्मनाम्॥ ४३॥

वह्निस्तृप्यति नेन्धनैरिह यथा नाम्भोभिरम्भोनिधि-
स्तद्वल्लोभघनो घनैरपि धनैर्जन्तुर्न संतुप्यति।
न त्वेवं मनुते विमुच्य विभवं निःशेषमन्यं भवं
यात्यात्मा तदहं मुधैव विदधाम्येनांसि भूयांसि किम्॥ ४४॥

अथ कोपप्रक्रमः।

फलति कलितश्रेयःश्रेणीप्रसूनपरम्परः
प्रशमपयसा सिक्तो मुक्तिं तपश्चरणद्रुमः ।
यदि पुनरसौ प्रत्यासत्तिं प्रकोपहविर्भुजो
भजति लभते भस्मीभावं तदा विफलोदयः ॥ ४६ ॥
संतापं तनुते भिनत्ति विनयं सौहार्दमुत्सादय-
त्युद्वेगं जनयत्यवद्यवचनं सूते विधत्ते कलिम् ।
कीर्तिं कृन्तति दुर्मतिं वितरति व्याहन्ति पुण्योदयं
दत्ते यः कुगतिं स हातुमुचितो रोषः सदोषः सताम् ॥ ४७ ॥
यो धर्मं दहति द्रुमं दव इवोन्मथ्नाति नीतिं लतां
दन्तीवेन्दुकलां विधुंतुद इव क्लिश्नाति कीर्तिं नृणाम् ।
स्वार्थं वायुरिवाम्बुदं विघटयत्युल्लासयत्यापदं
तृष्णां घर्म इवोचितः कृतकृपालोपः स कोपः कथम् ॥ ४८ ॥
अथ मानप्रक्रमः ।
यस्माद्राविर्भवति विततिर्दुस्तरापन्नदीनां
यस्मिन्शिष्टाभिरुचितगुणग्रामनामापि नास्ति ।
यश्च व्याप्तं वहति वधधीधूम्यया क्रोधदावं
तं मानाद्रिं परिहर दुरारोहमौचित्यवृत्तेः ॥ ४९ ॥
शमालानं भञ्जन्विमलमतिनाडीं विघटय-
न्किरन्दुर्वाक्पांशूत्करमगणयन्नागमसृणिम् ।
भ्रमन्नुर्व्यां स्वैरं विनयवनवीथीं विदलय-
ञ्जनः कं नानर्थं जनयति मदान्धो द्विप इव ॥ ५० ॥
औचित्याचरणं विलुम्पति पयोवाहं नभस्वानिव
प्रध्वंसं विनयं नयत्यहिरिव प्राणस्पृशां जीवितम् ।
कीर्तिं कैरविणीं मतङ्गज इव प्रोन्मूलयत्यञ्जसा
मानो नीच इवोपकारनिकरं हन्ति त्रिवर्गं नृणाम् ॥ ५१ ॥
मुष्णाति यः कृतसमस्तसमीहितार्थं
संजीवनं विनयजीवितमङ्गभाजाम् ।

जात्यादिमानविषजं विषमं विकारं
तं मार्दवामृतरसेन नयस्व शान्तिम् ॥ ५२ ॥

अथ मायाप्रक्रमः ।

कुशलजननवन्ध्यां सत्यसूर्यास्तसंध्यां
कुगतियुवतिमालां मोहमातङ्गशालाम् ।
शमकमलहिमानीं दुर्यशोराजधानीं
व्यसनशतसहायां दूरतो मुञ्च मायाम् ॥ ५३ ॥

विधाय मायां विविधैरुपायैः परस्य ये वञ्चनमाचरन्ति ।
ते वञ्चयन्ति त्रिदिवापवर्गसुखान्महामोहसखाः स्वमेव ॥ ५४ ॥

मायामविश्वासविलासमन्दिरं दुराशयो यः कुरुते धनाशया ।
सोऽनर्थसार्थं न पतन्तमीक्षते यथा बिडालो लगुडं पयः पिबन् ॥ ५५ ॥

मुग्धप्रतारणपरायणमुज्जिहीते
यत्पाटवं कपटलम्पटचित्तवृत्तेः ।
जीर्यत्युपप्लवमवश्यमिहाप्यकृत्वा
नापथ्यभोजनमिवामयमायतौ तत् ॥ ५६ ॥

अथ लोभप्रक्रमः ।

यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं
गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते ।
सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं
सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ ५७ ॥

मूलं मोहविषद्रुमस्य सुकृताम्भोराशिकुम्भोद्भवः
क्रोधाग्नेररणिः प्रतापतरणिप्रच्छादने तोयदः ।
क्रीडासद्म कलेर्विवेकशशिनः स्वर्भानुरापन्नदी-
सिन्धुः कीर्तिलताकलापकलभो लोभः पराभूयताम् ॥ ५८ ॥

निःशेषधर्मवनदाहविजृम्भमाणे
दुःखौघभस्मनि विसर्पदकीर्तिधूमे ।

बाढं धनेन्धनसमागमदीप्यमाने
लोभानले शलभतां लभते गुणौघः ॥ ५९ ॥

जातः कल्पतरुः पुरः सुरगवी तेषां प्रविष्टा गृहे
चिन्तारत्नमुपस्थितं करतले प्राप्तो निधिः संनिधिम्।
विश्वं वश्यमवश्यमेव सुलभाः स्वर्गापवर्गश्रियो
ये संतोषमशेषदोषदहनध्वंसाम्बुदं बिभ्रते ॥ ६० ॥

अथ सुजनप्रक्रमः।

वरं क्षिप्तः पाणिः कुपितफणिनो वक्त्रकुहरे
वरं झम्पापातो ज्वलदनलकुण्डे विरचितः।
वरं प्रासप्रान्तः सपदि जठरान्तर्विनिहितो
न जन्यं दौर्जन्यं तदपि विपदां सद्म विदुषा ॥ ६१ ॥

सौजन्यमेव विदधाति यशश्चयं च
स्वश्रेयसं च विभवं च भवक्षयं च।
दौर्जन्यमावहसि यत्कुमते तदर्थं
धान्येऽनलं क्षिपसि तज्जलसेकसाध्ये ॥ ६२ ॥

वरं विभववन्ध्यता सुजनभावभाजां नृणा-
मसाधुचरितार्जिता न पुनरूर्जिताः संपदः।
कृशत्वमपि शोभते सहजमायतौ सुन्दरं
विपाकविरसा न तु श्वयथुसंभवा स्थूलता ॥ ६३ ॥

न ब्रूते परदूषणं परगुणं वक्त्यल्पमप्यन्वहं
संतोषं वहते परर्द्धिषु पराबाधासु धत्ते शुचम्।
स्वश्लाघां न करोति नोज्झति नयं नौचित्यमुल्लङ्घय-
त्युक्तोऽप्यप्रियमक्षमां न रचयत्येतच्चरित्रं सताम् ॥ ६४ ॥

अथ गुणिसङ्गप्रक्रमः।

धर्मं ध्वस्तदयो यशश्च्युतनयो वित्तं प्रमत्तः पुमा-
न्काव्यं निष्प्रतिभस्तपः शमदमैः शून्योऽल्पमेधः श्रुतं।

१ 'शमदयाशून्यो' क.

जात्यादिमानविषजं विषमं विकारं
तं मार्दवामृतरसेन नयस्व शान्तिम् ॥ १२ ॥

अथ मायाप्रक्रमः ।

कुशलजननवन्ध्यां सत्यसूर्यास्तसंध्यां
कुगतियुवतिमालां मोहमातङ्गशालाम् ।
शमकमलहिमानीं दुर्यशोराजधानीं
व्यसनशतसहायां दूरतो मुञ्च मायाम् ॥ १३ ॥

विधाय मायां विविधैरुपायैः परस्य ये वञ्चनमाचरन्ति ।
ते वञ्चयन्ति त्रिदिवापवर्गसुखान्महामोहसखाः स्वमेव ॥ १४ ॥

मायामविश्वासविलासमन्दिरं दुराशयो यः कुरुते धनाशया ।
सोऽनर्थसार्थं न पतन्तमीक्षते यथा बिडालो लगुडं पयः पिबन् ॥ १५ ॥

मुग्धप्रतारणपरायणमुज्जिहीते
यत्पाटवं कपटलम्पटचित्तवृत्तेः ।
जीर्यत्युपप्लवमवश्यमिहाप्यकृत्वा
नापथ्यभोजनमिवामयमायतौ तत् ॥ १६ ॥

अथ लोभप्रक्रम. ।

यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं
गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते ।
सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं
सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ १७ ॥

मूलं मोहविषद्रुमस्य सुकृताम्भोराशिकुम्भोद्भवः
क्रोधाग्नेररणिः प्रतापतरणिप्रच्छादने तोयदः ।
क्रीडासद्मकलेर्विवेकशशिनः स्वर्भानुरापन्नदी-
सिन्धुः कीर्तिलताकलापकलभो लोभः पराभूयताम् ॥ १८ ॥

निःशेषधर्मवनदाहविजृम्भमाणे
दुःखौघभस्मनि विसर्पदकीर्तिधूमे ।

बाढं धनेन्धनसमागमदीप्यमाने
लोभानले शलभतां लभते गुणौघः ॥ ५९ ॥
जातः कल्पतरुः पुरः सुरगवी तेषां प्रविष्टा गृहे
चिन्तारत्नमुपस्थितं करतले प्राप्तो निधिः संनिधिम् ।
विश्वं वश्यमवश्यमेव सुलभाः स्वर्गापवर्गश्रियो
ये संतोषमशेषदोषदहनध्वंसाम्बुदं बिभ्रते ॥ ६० ॥

अथ सुजनप्रक्रमः ।

वरं क्षिप्तः पाणिः कुपितफणिनो वक्त्रकुहरे
वरं झम्पापातो ज्वलदनलकुण्डे विरचितः ।
वरं प्रासप्रान्तः सपदि जठरान्तर्विनिहितो
न जन्यं दौर्जन्यं तदपि विपदां सद्म विदुषा ॥ ६१ ॥
सौजन्यमेव विदधाति यशश्चयं च
स्वश्रेयसं च विभवं च भवक्षयं च ।
दौर्जन्यमावहसि यत्कुमते तदर्थं
धान्येऽनलं क्षिपसि तज्जलसेकसाध्ये ॥ ६२ ॥
वरं विभववन्ध्यता सुजनभावभाजां नृणा-
मसाधुचरितार्जिता न पुनरूर्जिताः संपदः ।
कृशत्वमपि शोभते सहजमायतौ सुन्दरं
विपाकविरसा न तु श्वयथुसंभवा स्थूलता ॥ ६३ ॥
न ब्रूते परदूषणं परगुणं वक्त्यल्पमप्यन्वहं
संतोषं वहते परर्द्धिषु पराबाधासु धत्ते शुचम् ।
स्वश्लाघां न करोति नोज्झति नयं नौचित्यमुल्लङ्घय-
त्युक्तोऽप्यप्रियमक्षमां न रचयत्येतच्चरित्रं सताम् ॥ ६४ ॥

अथ गुणिसङ्गप्रक्रमः ।

धर्मं ध्वस्तदयो यशश्च्युतनयो वित्तं प्रमत्तः पुमा-
न्काव्यं निष्प्रतिभस्तपः शमदमैः शून्योऽल्पमेधः श्रुतं ।

१ 'शमदयाशून्यो' क.

वस्त्वालोकमलोचनश्चलमना ध्यानं च वाञ्छत्यसौ
यः सङ्गं गुणिनां विमुच्य विमतिः कल्याणमाकाङ्क्षति ॥ ६५ ॥
हरति कुमतिं भिन्ते मोहं करोति विवेकितां
वितरति रतिं सूते नीतिं तनोति विनीतताम्।
प्रथयति यशो धत्ते धर्मं व्यपोहति दुर्गतिं
जनयति नृणां किं नाभीष्टं गुणोत्तमसंगमः ॥ ६६ ॥
लब्धुं बुद्धिकलापमापदमपाकर्तुं विहर्तुं पथि
प्राप्तुं कीर्तिमसाधुतां विधुवितुं धर्मं समासेवितुम्।
रोद्धुं पापविपाकमाकलयितुं स्वर्गापवर्गश्रियं
चेत्त्वं चित्त समीहसे गुणवतां सङ्गं तदङ्गीकुरु ॥ ६७ ॥
हिमति महिमाम्भोजे चण्डानिलत्युदयाम्बुदे
द्विरदति दयारामे क्षेमक्ष्माभृति वज्रति।
समिधति कुमत्यग्नौ कन्दत्यनीतिलतासु यः
किमभिलषतां श्रेयः श्रेयान्स निर्गुणि संगमः ॥ ६८ ॥

अथेन्द्रियप्रक्रमः।

आत्मानं कुपथेन निर्गमयितुं यः सूकलाश्वायते
कृत्याकृत्यविवेकजीवितहृतौ यः कृष्णसर्पायते।
यः पुण्यद्रुमखण्डखण्डनविधौ स्फूर्जत्कुठारायते
तं लुप्तव्रतमुद्रमिन्द्रियगणं जित्वा शुभंयुर्भव ॥ ६९ ॥
प्रतिष्ठां यन्निष्ठां नयति नयनिष्ठां विघटय-
त्यकृत्येष्वाधत्ते मतिमतपसि प्रेम तनुते।
विवेकस्योत्सेकं विदलयति दत्ते च विपदं
पदं तद्दोषाणां करणनिकुरुम्बं कुरु वशे ॥ ७० ॥
धत्तां मौनमगारमुज्झतु विधिप्रागल्भ्यमभ्यस्यता-
मस्त्वन्तर्वणमागमश्रममुपादत्तां तपस्तप्यताम्।

१. 'अपाहर्तुं' ख. २. 'दमारामे' ख. ३. 'श्रेयः' क-ख. ४. 'शूकल' क. 'यः शूकलाश्वायते दुर्विनीततुरग इवाचरति' इति टीका. ५. इन्द्रियसमूहम्. ६. वने तिष्ठतु.

श्रेयःपुञ्जनिकुञ्जभञ्जनमहावातं न चेदिन्द्रिय-
व्रातं जेतुमवैति भस्मनि हुतं जानीत सर्वं ततः ॥ ७१ ॥

धर्मध्वंसधुरीणमभ्रमरसावारीणमापत्प्रथा-
लंकर्मीणमशर्मनिर्मितिकलापारीणमेकान्ततः ।
सर्वान्नीनमनात्मनीनमनयात्यन्तीनमिष्टे यथा-
कामीनं कुपथाध्वनीनमजयन्नक्षौघमक्षेमभाक् ॥ ७२ ॥

अथ लक्ष्मीस्वभावप्रक्रमः ।

निम्नं गच्छति निम्नगेव नितरां निद्रेव विष्कम्भते
चैतन्यं मदिरेव पुष्यति मदं धूम्येव धत्तेऽन्धताम् ।
चापल्यं चपलेव चुम्बति दवज्वालेव तृष्णां नय-
त्युल्लासं कुलटाङ्गनेव कमला स्वैरं परिभ्राम्यति ॥ ७३ ॥

दायादाः स्पृहयन्ति तस्करगणा मुष्णन्ति भूमीभुजो
गृह्णन्ति च्छलमाकलय्य हुतभुग्भस्मीकरोति क्षणात् ।
अम्भः प्लावयते क्षितौ विनिहितं यक्षा हरन्ते हठा-
द्दुर्वृत्तास्तनया नयन्ति निधनं धिग्बह्वधीनं धनम् ॥ ७४ ॥

नीचस्यापि चिरं चटूनि रचयन्त्यायान्ति नीचैर्नतिं
शत्रोरप्यगुणात्मनोऽपि विदधत्युच्चैर्गुणोत्कीर्तनम् ।
निर्वेदं न विदन्ति किंचिदकृतज्ञस्यापि सेवाक्रमे
कष्टं किं न मनस्विनोऽपि मनुजाः कुर्वन्ति वित्तार्थिनः ॥७५॥

लक्ष्मीः सर्पति नीचमर्णवपयःसङ्गादिवाम्भोजिनी-
संसर्गादिव कण्टकाकुलपदा न क्वापि धत्ते पदम् ।
चैतन्यं विषसंनिधेरिव नृणामुज्जासयत्यञ्जसा
धर्मस्थाननियोजनेन गुणिभिर्ग्राह्यं तदस्याः फलम् ॥ ७६ ॥

---

१. 'शान्तरसाच्छादनम्' इति टीका. २. 'सर्वभक्षकम्' इति टीका. ३. 'अनयेऽन्तगामिनं' इति टीका. ४. 'इष्टे वस्तुनि यथाकामीनं यथाभिलाषिणम्' इति टीका. ५. 'कुमत' क. ६. 'विनाशयति' इति टीका. ७. रतिम्' क.

अथ दानप्रक्रमः।

चारित्रं चिनुते तनोति विनयं ज्ञानं नयत्युन्नतिं
पुष्णाति प्रशमं तपः प्रबलयत्युल्लासयत्यागमम्।
पुण्यं कन्दलयत्यघं दलयति स्वर्गं ददाति क्रमा-
न्निर्वाणश्रियमातनोति निहितं पात्रे पवित्रं धनम्॥ ७७॥
दारिद्र्यं न तमीक्षते न भजते दौर्गत्यमालम्बते
नाकीर्तिर्न पराभवोऽभिलषते न व्याधिरास्कन्दति।
दैन्यं नाद्रियते दुनोति न दरः क्लिश्नन्ति नैवापदः
पात्रे यो वितरत्यनर्थदलनं दानं निदानं श्रियाम्॥ ७८॥
लक्ष्मीः कामयते मतिर्मृगयते कीर्तिस्तमालोकते
प्रीतिश्चुम्बति सेवते सुभगता नीरोगतालिङ्गति।
श्रेयःसंहतिरभ्युपैति वृणुते स्वर्गोपभोगस्थिति-
र्मुक्तिर्वाञ्छति यः प्रयच्छति पुमान्पुण्यार्थमर्थं निजम्॥७९॥
तस्यासन्ना रतिरनुचरी कीर्तिरुत्कण्ठिता श्रीः
स्निग्धा बुद्धिः परिचयपरा चक्रवर्तित्वऋद्धिः।
पाणौ प्राप्ता त्रिदिवकमला कामुकी मुक्तिसंप-
त्सप्तक्षेत्र्यां (?) वपति विपुलं वित्तबीजं निजं यः॥ ८०॥

अथ तपःप्रक्रमः।

यत्पूर्वार्जितकर्मशैलकुलिशं यत्कामदावानल-
ज्वालाजालजलं यदुग्रकरणग्रामाहिमन्त्राक्षरम्।
यत्प्रत्यूहतमःसमूहदिवसं यल्लब्धिलक्ष्मीलता-
मूलं तद्विविधं यथाविधि तपः कुर्वीत वीतस्पृहः॥ ८१॥
यस्माद्विघ्नपरम्परा विघटते दास्यं सुराः कुर्वते
कामः शाम्यति दाम्यतीन्द्रियगणः कल्याणमुत्सर्पति।
उन्मीलन्ति महर्द्धयः कलयति ध्वंसं चयः कर्मणां
स्वाधीनं त्रिदिवं शिवं च भवति श्लाघ्यं तपस्तन्न किम्॥८२॥

१. 'धिनोति' ख. २. 'पवित्रे' ख.

कान्तारं न यथेतरो ज्वलयितुं दक्षो दवाग्निं विना
दावाग्निं न यथापरः शमयितुं शक्तो विनाम्भोधरम् ।
निष्णातः पवनं विना निरसितुं नान्यो यथाम्भोधरं
कर्मौघं तपसा विना किमपरो हन्तुं समर्थस्तथा ॥ ८३ ॥

संतोषस्थूलमूलः प्रशमपरिकरस्कन्धबन्धप्रपञ्चः
पञ्चाक्षीरोधशाखः स्फुरदभयदलः शीलसंपत्प्रवालः ।
श्रद्धाम्भःपूरसेकाद्विपुलकुलबलैश्वर्यसौन्दर्यभोगः
स्वर्गादिप्राप्तिपुष्पः शिवपदफलदः स्यात्तपःकल्पवृक्षः ॥ ८४ ॥

अथ भावनाप्रक्रमः ।

नीरागे तरुणीकटाक्षितमिव त्यागव्यपेतप्रभोः
सेवाकष्टमिवोपरोपणमिवाम्भोजन्मनामश्मनि ।
विष्वग्वर्षमिवोपराक्षितितले दानार्हदर्चातपः-
स्वाध्यायाध्ययनादि निष्फलमनुष्ठानं विना भावनाम् ॥ ८५ ॥

सर्वं ज्ञीप्सति पुण्यमीप्सति दयां धित्सत्यघं भित्सति
क्रोधं दित्सति दानशीलतपसां साफल्यमादित्सति ।
कल्याणोपचयं चिकीर्षति भवाम्भोधेस्तटं लिप्सते
मुक्तिस्त्रीं परिरिप्सते यदि जनस्तद्भावयेद्भावनाम् ॥ ८६ ॥

विवेकवनसारिणीं प्रशमशर्मसंजीवनीं
भवार्णवमहातरीं मदनदावमेघावलीम् ।
चलाक्षमृगवागुरां गुरुकषायशैलाशनिं
विमुक्तिपथवेसरीं भजत भावनां किं परैः ॥ ८७ ॥

धनं दत्तं वित्तं जिनवचनमभ्यस्तमखिलं
क्रियाकाण्डं चण्डं रचितमवनौ सुप्तमसकृत् ।

१. 'अपरं हर्तुं समर्थं' ख-ग. २. पञ्चेन्द्रियाणि पञ्चाक्षी. ३. 'निस्तारभोगः' ग. ४. 'तपःपादपोऽयम्' क-ग. ५. 'मित्सति' क-ग. ६. 'सन्दानितुमिच्छति' इति टीका. ७. मार्गोपयुक्तामश्वतरीम्.

तपस्तीव्रं तप्तं चरणमपि चीर्णं चिरतरं
न चेच्चित्ते भावस्तुषवपनवत्सर्वमफलम् ॥ ८८ ॥

अथ वैराग्यप्रक्रमः ।

यदशुभरजःपाथो दृप्तेन्द्रियद्विरदाङ्कुशं
कुशलकुसुमोद्यानं माद्यन्मनःकरिशृङ्खला ।
विरतिरमणीलीलावेश्म स्मरज्वरभेषजं
शिवपथरथस्तद्वैराग्यं विमृश्य भवाभयः ॥ ८९ ॥

चण्डानिलः स्फुरितमब्दचयं दवार्चि-
र्वृक्षव्रजं तिमिरमण्डलमर्कबिम्बम् ।
वज्रं महीध्रनिवहं नयते यथान्तं
वैराग्यमेकमपि कर्म तथा समग्रम् ॥ ९० ॥

नमस्या देवानां चरणवरिवस्या शुभगुरो-
स्तपस्या निःसीमक्लमपदमुपास्या गुणवताम् ।
निषद्यारण्ये स्यात्करणदमविद्या च शिवदा
विरागः क्रूरागःक्षपणनिपुणोऽन्तः स्फुरति चेत् ॥ ९१ ॥

भोगान्कृष्णभुजंगभोगविषमान्राज्यं रजःसंनिभं
बन्धून्बन्धनिबन्धनानि विषयग्रामं विषान्नोपमम् ।
भूतिं भूतिसहोदरां तृणतुलं स्त्रैणं विदित्वा त्यजं-
स्तेष्वासक्तिमनाविलो विलभते मुक्तिं विरक्तः पुमान् ॥ ९२ ॥

---

जिनेन्द्रपूजा गुरुपर्युपास्तिः सत्त्वानुकम्पा शुभपात्रदानम् ।
गुणानुरागः श्रुतिरागमस्य नृजन्मवृक्षस्य फलान्यमूनि ॥ ९३ ॥

त्रिसंध्यं देवार्चां विरचय चयं प्रापय यशः
श्रियः पात्रे वापं जनय नयमार्गं नय मनः ।
स्मरक्रोधाद्यारीन्दलय कलय प्राणिषु दयां
जिनोक्तं सिद्धान्तं शृणु वृणु जवान्मुक्तिकमलाम् ॥ ९४ ॥

---

१. 'चारित्र' इति टीका.

[1]कृत्वार्हत्पदपूजनं यतिजनं नत्वा विदित्वागमं
हित्वा सङ्गमधर्मकर्मठधियां पात्रेषु दत्त्वा धनम् ।
गत्वा पद्धतिमुत्तमक्रमजुषां जित्वान्तरारिव्रजं
स्मृत्वा पञ्चनमस्क्रियां कुरु करक्रोडस्थमिष्टं सुखम् ॥ ९५ ॥
प्रसरति यथा कीर्तिर्दिक्षु क्षपाकरसोदरा-
म्युदयजननी याति स्फीतिं यथा गुणसंततिः ।
कलयति यथा वृद्धिं धर्मः कुकर्महतिक्षमः
[2]सुलभकुशले न्याय्ये कार्यं तथा पथि वर्तनम् ॥ ९६ ॥[3]
भवारण्यं मुक्त्वा यदि जिगमिषुर्मुक्तिनगरीं
तदानीं मा कार्षीर्विषयविषवृक्षेषु वसतिम् ।
यतश्छायाप्येषां प्रथयति महामोहमचिरा-
दयं जन्तुर्यस्मात्पदमपि न गन्तुं प्रभवति ॥ ९७ ॥
[5]सोमप्रभाचार्यमभा च लोके वस्तु प्रकाशं कुरुते यथाशु ।
तथायमुच्चैरुपदेशलेशः शुभोत्सवज्ञानगुणांस्तनोति ॥ ९८ ॥
[6]अभजदजितदेवाचार्यपट्टोदयाद्रि-
द्युमणिविजयसिंहाचार्यपादारविन्दे ।
मधुकरसमतां यस्तेन सोमप्रभेण
व्यरचि [7]मुनिपनेत्रा सूक्तिमुक्तावलीयम् ॥ ९९ ॥

इति श्रीसोमप्रभाचार्यविरचिता सिन्दूरप्रकरापरपर्याया सूक्तिमुक्तावली ।

---

१. जिनमतप्रसिद्धां पञ्चपरमेष्ठिनमस्कृतिम्. २. 'कुशलसुलभे' क-ख. ३. एतच्छ्लोकानन्तरं क-पुस्तके 'करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणमनं मुखे सत्या वाणी श्रुतमधिगतं च श्रवणयोः । हृदि स्वच्छा वृत्तिर्विजयि भुजयोः पौरुषमहो विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥' अयं श्लोकोऽधिकः. ४. 'विमुच्यैनं दूरे भव जनमनः शर्मसदनम्' ख. ५. 'सोमप्रभाचार्यप्रभा च यन्न पुंसां तमःपङ्कमपाकरोति । तदप्यमुष्मिन्नुपदेशलेशे निशम्यमानेऽनिशमेति नाशम् ॥' अयं क-पुस्तकपाठः शृङ्गारवैराग्यतरङ्गिणीधृतपाठसमानः. अत्र ग्रन्थकर्ता सोमप्रभाचार्य इति स्वकीयं नाम युक्त्या निवेशितम्. ६. अयं श्लोकः ख-ग-पुस्तकयोर्नास्ति. ७. मुनीन्द्रनायकेन.

## श्रीजम्बूगुरुविरचितं

# जिनशतकम् ।

श्रीमद्भिः स्वैर्महोभिर्भुवनमविभुवत्तापयत्येष शश्व-
त्तत्स्वप्यस्मादृशेषु प्रभुषु किमिति सैन्मन्युनेवोपरक्ताः ।
सूर्ये वीर्यैर्दहार्यादभिभवितुमिवाभीशवो यस्य दीप्राः
प्रोत्सर्पन्त्यङ्घ्रियुग्मप्रभवनखभुवः स श्रिये स्ताज्जिनो वः ॥ १ ॥

संसारापारनीरेश्वरगुरुनिरयाशर्मपङ्कौघमग्ना-
नुद्धर्तुं सत्त्वसार्थानिव नखजमृजाजीर्णरज्जूर्यदीयाः ।
पादाः प्रासीसरन्तः प्रकटितकरुणाः प्रार्थितार्थान्समर्थो
भर्तुं तीर्थाधिपोऽसौ पृथुदवथुपथप्रस्थितिं वो रुणद्धु ॥ २ ॥

प्रोद्यद्दीप्रप्रभाढ्यक्रमनखमुकुरक्रोडसंक्रान्तबिम्बं
वक्त्रं वृत्तस्य शत्रुः स्वकमधिकरुचिं बिभ्रदभ्रान्तचेताः ।
पश्यञ्शीतांशुकान्तं प्रणतिकरणतो न व्यरंसीत्प्रमोदा-
द्यस्यासौ श्रीजिनेन्द्रो द्रुतमतनुतमस्तानवं वस्तनोतु ॥ ३ ॥

मार्तण्डश्चण्डभावं दधदहनि हिनस्त्यस्तदोषोऽपि पादै-
र्बिभ्रात्यह्नाय रात्रौ पुनरलिपटलैरारटन्तीं रटद्भिः ।
मामम्भोजन्मधाम्नि स्थिततनुलतिकामेवमालोच्य लक्ष्मी-
रुद्विग्नेवाँपविघ्नं क्रमकजमगमद्यस्य सोऽव्याज्जिनो वः ॥ ४ ॥

---

१. शतकस्यास्यैकं सटीकं मनोहरमपर्युषितं नातिशुद्धं चाष्टादशपत्रात्मकं पुस्तकं श्रीशान्तिविजयमुनिभिरस्मभ्यं दत्तम्. तत्र नागेन्द्रकुलोद्भूतसाम्बमुनिप्रणीता समीचीना टीका वर्तते. स च साम्बष्टीकासमाप्तौ 'शरदां सपञ्चविंशे शतदशके (१०२५) स्वातिभे च रविवारे । विवरणमिदं समाप्तं वैशाखसितत्रयोदश्याम् ॥' इत्थमात्मनो ग्रन्थनिर्माणसमयं वदति. द्वितीयं तु मूलमात्रं शुद्धं पत्रचतुष्टयात्मकं प्राचीनं पुस्तकं जोधपुरनगरपाठशालाध्यापकपण्डितरामकर्णशर्मभिः प्रहितम्. टीकामुद्रणं तु पुस्तकान्तराभावाद्दुष्करमिति मत्वा ततः संक्षिप्तमुपयोगिटिप्पणमात्रमेवात्रोद्धृतम्. २. अस्वामिकमिव. ३. समुत्पद्यमानश्चासौ मन्युस्तेन. ४. हर्तुमशक्यात्. ५. अपारसंसारसमुद्र एव महानरकदुःखं तदेव पङ्कौघस्तत्र मग्नान्. ६. नखोत्पन्ना दीप्तय एवाजीर्णा नवा रज्जवः. ७. प्रसारितवन्तः. ८. शीघ्रम्. ९. कमलरूपगृहे. १०. निरुपद्रवं यथा स्यात्. ११. चरणकमलम्.

निर्विघ्नान्विघ्ननिघ्नानतिघनघृणया श्लाघ्यघोपानघोघा-
न्घोराघौघैरनुद्घापघनसुघटिताञ्शीघ्रमुद्घाङ्घ्रिपाणीन् ।
अर्घोपघ्नानर्घान्घटयति लघिमालिङ्गितान्वोऽलघिष्ठा-
ञ्श्लाघ्यं यस्याङ्घ्रियुग्मं विघटयतु घनं सोऽघसंघातमर्हन् ॥ ५ ॥
रक्तस्त्यक्तसरोऽपि प्रतिभयभयकृन्निर्भयत्वप्रदोऽपि
प्रायश्चित्तग्रहीता सततनिरतिचारोऽपि यत्पादपद्मः ।
वैकुण्ठाभ्यर्चितोऽपि प्रकटमपचितः पण्डितैः खण्डितांहा-
स्त्वन्यादन्याय्यवृत्तिव्यपगमगुरुतां वः स निर्ग्रन्थनाथः ॥ ६ ॥
स्वान्तारण्यं शरण्याश्रयणमिति यदध्यास्त विध्वस्तशङ्क-
स्तद्धर्मध्यानधूमध्वजजवजनितात्यन्तसंतापतप्तम् ।
संत्यज्यासह्यदाहादिव चरणसरोऽशिश्रियत्तत्सरोजं
यस्यातिप्रौढरागद्विरद उरुरजः सोऽस्यतात्तीर्थपो वः ॥ ७ ॥
जङ्घोद्यत्स्कन्धबुध्नोद्गतलसदरुणाभाङ्गुलीपल्लवाढ्या-
न्प्रेङ्खन्तीभिर्नखार्चिर्निचयरुचिरसन्मञ्जरीभिर्युतान्वः ।
प्रेक्ष्य प्राप्तेप्सितार्थैर्भुवि बलवदवाक्कल्पवृक्षाः किमेवं
विद्वद्भिः शङ्क्यते ऽङ्घ्रीनतुलफलयुजो यस्य सोऽर्हन्मुदेऽस्तु ॥ ८ ॥
क्षोणीं क्षान्त्या क्षिपन्तः क्षणिकरतिकरस्त्रीकटाक्षाक्षताक्षा
मोक्षक्षेत्राभिकाङ्क्षाः क्षपितशुभशताक्षेमविक्षेपदक्षाः ।

---

१. अनुद्घा अप्रशस्ता अपघना अङ्गानि. २. प्रशस्तहस्तपादान्. ३. अर्घेण पूजया आश्रितान्. ४. पूजारहितान्. ५. भयानकभयकर्ता. भयानकभयं कृन्ततीति विरोधपरिहारः. ६. सततं निरन्तरं गृहीतस्य व्रतस्यैकदेशतो भङ्गोऽतिचारः. स निर्गतो यस्मात्सोऽपि प्रायश्चित्तग्रहीतेति विरोधः. प्रायो बाहुल्येन चित्तस्य ग्रहीता आवर्जकः सततं निरतिचारश्चानतिक्रमणीयश्चेति परिहारः. ७. अपचितोऽपचयं नीत इति विरोधः. अपचितः पूजित इति परिहारः. ८. निर्ग्रन्थास्तपस्विनस्तेषां नाथो जिनः. ९. चरणयोः कमलरूपाणि लाञ्छनानि भवन्ति. यस्य हृदयं वीतरागं चरणौ च सरागाविति तात्पर्यम्. १०. बलवदत्यर्थमवाञ्चोऽधोमुखाः कल्पवृक्षाः. ११. पूजायां बहुवचनम्.

अक्षोभाः क्षीणरूक्षाक्षरपटुवचना भिक्षवो[1] मङ्क्ष्वलक्ष्मीं
साक्षाद्वीक्ष्य क्षिपन्ति क्षपयतु स जिनः क्षय्यपक्षं यदङ्घ्री ॥ ९ ॥
तन्वाना वैनतेयश्रियम[2]हितवृषोत्कर्षमोषिप्रतापाः[3]
कामं कौमोदकीनाशरणशरणदा[4] नीरजोदाररागाः[5]।
सद्यः प्रद्युम्नयुक्ताः[6] सदसि[7] कृतमुदो यत्क्रमाश्चक्रिणो[8] वा
भ्राजन्ते भ्राजिताशाः[9] सुखमखिलमसौ श्रीजिनो वो विधेयात्॥१०॥
यत्पादौ पादपौ वा शुचिरुचिनिचिताम्भोजपुञ्जालवालौ
स्वःसन्मूर्धाधिरूढोद्भटमुकुटकुटै[10]र्निर्यदंशूद्भवैरैः।
संसिक्तौ शोणरत्नप्रतिमनखरुचः सत्प्रवालावलीव-
द्वत्तः शुद्धिं विधेयादधिकमधिपतिः श्रीजिनानामसौ वः ॥ ११ ॥
यां द्युत्योद्द्योत्य मुद्यद्[11]द्युसदधिपमता विद्युदुद्द्योतजेत्र्या-
विद्यो[12]नद्यायसद्योनय उपदधते संयमो[13]द्यानमोदम्।
दुर्भेद्यावद्यमुद्यद्द्युमणिमिव समाच्छाद्य वन्द्याभिवन्द्याः
सद्यो यत्पादकंदा[14] द्यतु स जिनपतिर्वोऽतिनिन्द्यामविद्याम् ॥१२॥
निर्वाणापूर्वदेशप्रगमकृतधियां शुद्धबुद्धचध्वगानां
मार्गाचिख्यासयैषा त्रिभुवनविभुना प्रेषिता किं नु लोकैः।
आलोक्यारेकि[15]तैवं चरणनखभवा वो विर्भाविर्भवन्ती[16]
यस्य श्रेयांसि स श्रीजिनपतिरपतिः पाप्मभाजां विदध्यात् ॥१३॥

१. भिक्षवो यतयो यदङ्घ्री साक्षाद्वीक्ष्य मङ्क्षु शीघ्रमलक्ष्मीं क्षिपन्ति स जिनः क्षय्यपक्षं शत्रुपक्षं क्षपयतु. २. वै निश्चयेन नते प्राणिनि अयश्रियं शुभावहविधिसंपत्तिम्; (पक्षे) वैनतेयो गरुडः. ३. अहितो विरुद्धो यो वृषो धर्मः; (पक्षे) वृषोऽरिष्टासुरः. ४. कौ भूमौ मोदस्य कीनाशो नाशको यो रणस्तत्र शरणदाः; (पक्षे) कौमोदकी गदा तस्या इनाः प्रभवोऽशरणशरणदाश्च. ५. नीरजेष्विवोदारो रागो येषु; (पक्षे) नीरजः शङ्खः. ६. प्रकृष्टं द्युम्नं तेजः; (पक्षे) प्रद्युम्नो वासुदेवपुत्रः. ७. सदसि सभायाम्; (पक्षे) संश्चासावसिः खड्गो नन्दकस्तेन कृता मुदो येषाम्. ८. क्रमाः पादा वासुदेवा इव. ९. पूरितस्तोयधाः. १०. कुटो घटः. ११. मुदं यन्गच्छन्. १२. विद्यैव नदी तस्या आयाः सद्योनयः शोभनान्युत्पत्तिस्थानानि. १३. संश्चासौ यमश्च (नियमसहचरः) स एवोद्यानं तस्य मोदं पुष्टिलक्षणम्. १४. क जलं ददतीति कंदा मेघाः. पादा एव कदाः. कमित्यव्ययं जलवाचकम्. १५. आरेकिता उत्प्रेक्षिता. १६. आविर्भवन्ती ऊर्ध्वं गच्छन्ती.

शोभामम्भोरुहाणामपहरति करोत्युद्भवं कौ[1]शिकस्या-
नुष्णैः पुष्णाति पादैः [2]कुमुदमसुमतां नोपतापाय दृष्टेः ।
प्राज्याजेयप्रतापं सततमि[3]नतया युक्तमप्यन्यरूपं
युग्मं यत्पादयोः स्तात्स भवदविभवाभावकृत्तीर्थनाथः ॥ १४ ॥
[4]दूरे दूरेपसो वो वसतिमसुभृतां साधयन्तौ [5]धयन्तौ
वारी वारीतिमङ्घ्री नतससुरमहादेवराजौ [6]वराजौ ।
[7]यस्यायस्याप्तिहेतू जयमुपनयतो मोहितानां हितानां
दध्या[8]दध्यामतेजाः स भुवि जिनवरोऽनन्तमोदं तमोदम् ॥ १५ ॥
कृत्वाधः पादयोर्मां निरतिशयशमश्रीसमालिङ्गिताङ्गः
स्वस्थस्तिष्ठत्यनिष्ठः कथमयमधुनेतीव संचिन्त्य [9]सृष्टा ।
ऊर्ध्वं [10]बाणाशनिर्वा मृदुहृदयभिदे भाति [11]रागेण गाढं
यस्य प्रेङ्खन्नखालीद्युतिरतनुरतिं रातु स श्रीजिनो वः ॥ १६ ॥
चार्वाचारोक्तिचुञ्चुप्रवचनचतुराचार्यचक्रस्य चञ्च-
न्नो[12]च्येताचण्डरोचीरुचिरुचिररुचिर्यस्य वाचां प्रपञ्चैः ।
उच्चैश्चञ्चूर्यमाणश्चरणगुणचय[13]श्चारुचित्तार्चितार्च-
श्चेतःशौचं चिनोतूचितमचलमसौ चारुचेष्टो जिनो वः ॥ १७ ॥
पद्भ्यां भूभृद्गुरुभ्यां भ्रमति भृशमभीभ्रंशयन्हेलयायं
कोऽसन्मूर्धोद्धृतां गामिति फणिसमितेः सक्रुधः क्रोधवद्भेः ।
ज्वाला निर्यान्त्य[14]धस्तात्किमिति सुजनता शङ्कते लोकयन्ती
भव्यानव्याद्द्वयेभ्यो निखिलनखरुचो यस्य योगीश्वरोऽसौ ॥ १८ ॥

---

१. इन्द्रस्योलूकस्य च. २. कोः पृथिव्या मुदम्. ३. सूर्यत्वेन प्रभुत्वेन च. ४. दुष्टं च तद्रेपः पापं तस्माद्दूरे स्थानेऽसुमतां वसतिं साधयन्तौ. स्वर्गप्रदावित्यर्थः. ५. वारीव जलमिव अरीतिं शत्रूपद्रवं धयन्तौ पिबन्तौ. नाशयन्तावित्यर्थः. ६. श्रेष्ठयुद्धे मोहितानां हितानां भक्तानां जयमुपनयतः. ७. यस्याङ्घ्री आयस्य लाभस्याप्तिहेतू. ८. अकुण्ठतेजाः. ९. ऊर्ध्वं क्षिप्ता. १०. बाणावलीव. ११. कामेन. १२. यस्य चरणगुणचयो नोच्येत वक्तुं न शक्येत. अतिप्राचुर्यात्. १३. चारुचित्तैरिन्द्रादिभिरर्चिता अर्चा मूर्तिर्यस्य स जिनः. १४. पातालमुद्दिश्य.

प्रख्यातादच्युतश्रीवरवसतितया शेषकान्त्योपगूढा-
त्सैन्मीनात्क्षीरनीरेश्वरत इव यदङ्घ्योर्युगान्निर्गता भा।
वेलेव प्लावयन्ती नखमणिकिरणोन्मिश्रिता श्रीर्मदब्ज-
श्रेणीं विश्वंभरावद्भवदनभिमतं तीर्थपोऽसौ भिनत्तु॥ १९॥
मा पप्तत्तद्यभावात्कलिकलिलभराक्रान्तमत्यन्तमेत-
त्पातालापारपङ्के त्रिभुवनभवनं द्रागितीवावधार्य।
त्विष्टावष्टम्भनार्थं प्रचुरभरसहौ निर्ममाते यदङ्घ्री
वज्रस्तम्भाविवासौ निखिलसुखखनीर्वो विधत्तां यतीन्द्रः॥ २०॥
दुर्गे स्वर्गापवर्गाध्वनि सदरितया स्यन्दनः संस्यदाग-
स्तिग्मांशूत्तप्तजन्तून्प्रति वरविटपी छायया संयुतत्वात्।
सद्भूत्याह्वतिमन्त्रः सति धननिधने व्यक्तवर्णत्वतो वः
सिद्ध्यध्वन्यध्वनीनानवतु स मुनिपः पादपद्मो यदीयः॥ २१॥
यत्पादैः पारिजातक्षितिरुहमहिमा हानिमानीयतेऽहि-
भ्रातृव्यायाप्ययोषाः प्रमदभरनमन्मस्तकस्रस्तदाम्नः।
द्राग्भूयो भूषयद्भिः शुचिरुचिनखरुङ्मञ्जरीकर्णपूरैः
पापाकूपारवारिप्रतरणपटुतां तीर्थकृद्भः स दध्यात्॥ २२॥
सर्वोर्वीभृत्प्रवर्हप्रणतिपरशिरःश्रेणिचूडामणिद्यु-
त्संदोहालीढमूढभ्रदिम नखमयूखोल्लसत्केसरालि।
वल्गवङ्गुल्यग्रपत्रं सकमलममलं पादयुग्मं यदीयं
भात्यादित्योत्थमिश्रं नलिनमिव स वोऽवद्यमर्हन्हिनस्तु॥ २३॥
प्राज्यप्रौढप्रमादप्रतिभटनिधनप्राप्तदीप्रप्रतापा-
न्प्रोच्चैः प्रीतिं प्रयान्ति प्रतिकलममलान्प्राणिनः प्रेक्षमाणाः।

---

१. शेषनागस्य कान्त्या अशेषया पूर्णया कान्त्या च. २. सन्तो विद्यमाना मीन लाञ्छनरूपा यत्र. ३. क्षीरसमुद्रात्. ४. पादतलवर्तिनीं लाञ्छनरूपां पद्मपङ्क्तिं विश्वम्भरावद्भूमिवत्. ५. तपश्चरणाभावात्. ६. नरककर्दमे त्रिभुवनरूपं गृहं मा पप्तत् पततु. ७. विधात्रा. ८. सचक्रयुक्ततया. ९. सह स्यदेन वेगेन यदागः पापं तदेव तिग्मांशुः. १०. अहिर्वृत्रासुरस्तस्य भ्रातृव्यः शत्रुरिन्द्रस्तस्याप्याप्या अनवद्या योषाः स्त्रियो ऽप्सरसः. ११. द्युत्संदोहो दीप्तिसमूहः.

प्रत्ताश्रान्तप्रसादान्प्रणमदसुमतां यत्क्रमान्सत्प्रणम्या-
न्प्राणिप्राणप्रियाणि प्रवितरतु जिनः स प्रशान्तप्रयासम् ॥ २४ ॥
उज्जृम्भाम्भोजगर्भश्रितमिति परमेष्ठीयते निष्ठितार्थै-
स्त्रैलोक्यत्रासहन्त्र्या नरकरिपुतयानन्तमूर्तीयते वः ।
सद्भूतिश्राजितत्वाद्वृषभगतितया चाद्रिजेशायते य-
त्पादाम्भोजं स सद्यो भवतु भवभयाभोगभित्केवलीशः ॥ २५ ॥

इति श्रीजम्बूकविविरचिते जिनशतके जिनपादवर्णनं नाम प्रथमः परिच्छेदः ।

---

कोपाढ्येऽपि द्रढिम्ना विरहितमहिमन्युत्कटे कण्टकैर्मे
सक्ते व्यक्तं जडौघैः सुचिरमनुचितं सद्रजस्यत्र वस्तुम् ।
पद्मं पद्मा स्वसद्मेत्युदितविपदिव प्रोज्झ्य यत्रानुलिल्ये
छेका दानच्छलेन त्रिजगदधिपतेर्वः पुनीतात्स हस्तः ॥ १ ॥
प्रध्वस्ताशर्मधर्मप्रणयनविषये व्यापृतः प्राणिपूगा-
न्कालव्यालावलुप्तौ प्रतिसमवसृतौ भ्रान्तिमन्तस्तनोति ।
यः संहर्तुं विपार्ति किमयमिह चलत्येवमाखण्डलस्य
स्यातं सौख्यं स दत्तां जिनवृषभनरेन्द्रस्य पाणिर्द्रुतं वः ॥ २ ॥
भाभिर्योऽम्भोजशोभामभिभवति भृशं विभ्रदुद्भूतभव्यं
भूषाभावं सभाया भवभवभयभिद्भूरिभीभारभाजाम् ।
भर्तुर्भद्रस्य पाणिस्त्रिभुवनभवनोद्भासनोद्भूतभूते-
र्भूयाद्भूत्यै स भूतेर्ऋभुविभुविभवाधीशभूभर्तृभाजः ॥ ३ ॥
कल्पान्तेऽनल्पभासः प्रलयमसुमतां यूयमुच्चैर्विघातं
कृत्वायुर्गोत्रनाम्नामपि कुरुत किल द्वादशैकत्वमेत्य ।
नित्यं पञ्चापि कुर्मो वयमिति हसिताकी इवोद्भान्ति भासा
ग्रैस्नसौ यन्नखाः स्तात्स शिवशतकरोऽर्हत्करः प्रोल्लसन्वः ॥ ४ ॥

---

१. शिष्टाशेषप्रयोजनम्. २. केवलं सर्वद्रव्यपर्यायग्राहकमप्रतिहतं ज्ञानं तद्वतामीशो जिनः. ३. चतुरा.. ४. सांवत्सरिकमहादानव्याजेन. ५. जिनवृषभ एव नरेन्द्रो विषवैद्यः. ६. लक्ष्म्याः. ७. ऋभवो देवास्तद्विभुरिन्द्रः. विभवाधीशः कुबेरः. भूभर्तारो राजानः तान्भजते तस्या भूतेः. ८. जिनपक्षे प्रकृष्टो लयो मोक्षः. ९. व्याख्यायाम्.

गीर्वाणैर्निर्मितोर्वीरुहबहलदलश्यामलाभीशुजालै-
जीमूतैः प्रावृषेण्यैरिव नभसि सदस्याततैर्यः समन्तात्।
विद्युत्पुञ्जायमानः स्फुरदरुणरुचा दृश्यते नैदरैर्वि-
स्त्राणाय त्वात्स हस्तस्त्वनुरहितजितः साधु बोधोद्यतोऽद्य ॥ ५ ॥
चञ्चचक्रोऽप्यकृष्णो विवरयुततलोऽप्यस्तरन्ध्रानुषङ्गः
सत्कार्योऽप्यस्तकल्पो विलसितकमलोऽप्यङ्क दोषाकरो नो।
यः सार्वज्ञः सुपर्वा शैय इति महिमापीक्ष्यते नो विरोधी
वध्यात्स ध्यानवृद्धेर्निधनकरमरं वस्तु वः स्तूयमानः ॥ ६ ॥
द्वारं व्यस्तार्गलं वः परमपदपुरो दर्शयाम्येत यूयं
श्रोतृञ्जन्तूनिवैवं गदितुमतिगुरुर्भ्राम्यतीतस्ततो यः।
पर्षद्युल्कर्षवत्यां प्रवचनकरणानेहसि श्रीजिनस्य
स्ताद्धस्तो वः प्रशस्तः प्रणिपतनकृतावाहतानां स वृद्ध्यै ॥ ७ ॥
वज्रिन्वज्रं समस्ति प्रकटतरमिदं मेऽपि मा गर्वितो भू-
र्यक्ष क्षिप्रं जहीहि त्वमपि निधिमदं शङ्खपद्मौ यतः स्तः।
अम्लानो मय्यपीमाविति परिहसतीवोच्छलद्भिर्मयूखै-
र्व्याख्यायां यन्नखेभ्योऽखिलसुखकृदसावस्तु वो जैनहस्तः ॥ ८ ॥
जेताजावूर्जितोजा विजयिजविगजभ्राजि सद्वाजिराज्यां
तेजोभाजां जजौजोविजितजनजितां स्वौजसा दुर्जनानाम्।
योऽन्यग्जोऽजातजाड्यो जगति जिनशयो जम्भजित्पूजितौजा
अर्ज्यायो जन्मबीजं जयतु सरजसोजित्याजित्सोऽञ्जसा वः ॥ ९ ॥
भित्त्वा दोषानुषङ्गं जनवनजवनं बोधयामीद्धधाम्ना
मोत्कर्षं सूर्यं कार्षीरिति मम पुरतो दर्पतो हन्त यत्तत्।

१. उर्वीरुहोऽत्राशोकः. २. त्रिदशसमूहैः. ३. मदनजयिनः. ४. हस्तपक्षे विवरः पक्षिश्रेष्ठा हंसादयस्तच्चिह्नाङ्कितः. ५. सत्कारार्हः. ६. कमलो हरिणः. ७. शयो हस्त-. ८. हे कुबेर. ९. 'जजि युद्धे'। जजन्तीति जजा योधास्तेषामूर्जो बलं तेनाविजित जन जयन्ति ये तेषाम्. १०. न विद्यते न्यग्ज उपतापो रोगो वा यस्य. ११. हस्तः. १२. अ-श्रेष्ठम्. १३. कर्म. १४. सह रजसा वर्तन्ते सरजसाः सरागा अज्ञानिनो मिथ्यादृष्टयस्ते-षामर्जितं यल्लवत्वं जयतीति सः. १५. जनरूपकमलवनम्.

साक्षाद्दोपं[1] श्रितोऽपि श्रमणगणगुरोर्वोधयेऽहं महिम्ने-
तीव प्रेङ्खन्सदोऽन्तः प्रणिगदति करो यः स वो वामहास्तु ॥१०॥
स्निग्धं मूर्ध्नोऽलिनीलद्युतिकचनिचयं प्रोद्धरन्धैर्यराशे-
र्निर्मूलं लोकभर्तुश्चरणकृतमतेर्भाति यः पाणिपद्मः ।
अन्तर्वर्त्यर्तिकृत्किं शितिं कलिलमिदं कर्पतीहेप एवं
देवैरारेक्यमाणो भवद्शिवशताशर्म स स्वाक् शृणातु ॥ ११ ॥
दक्षं दीक्षां जिघृक्षोर्मदनशरंनुदो देहतो दीप्रदीप्तीः
सत्स्वर्णालंकृतीर्यः सरससुमनसः कल्पवृक्षादिवोच्चैः ।
पाणिः प्रोत्तारयन्वः सरसिरुहरुचिः सन्नखांशुप्रसूनो
मालाकारायतेऽसौ स्यतु कुमतिमलं प्राणमत्कंधराणाम् ॥ १२ ॥
यः कालः शोणिमानं दधदपि निधने कल्मपस्योल्बणस्य
द्रष्टॄणां दृष्टमात्रः सरुगपि नितरां नीरुगात्मार्तसक्तः ।
लक्ष्मीदानेन तृष्णाच्छिदपि तनुमतामग्रहस्तोऽजडोऽसौ
मुष्याद्दोपानशेपान्कलुपितवपुपां वो विरुद्धात्मकोऽपि ॥ १३ ॥
मय्यप्यासिन्स्मयारो प्रभवति भुवने भूभृतः किं कराणां
पातैरुत्तापयन्ति क्षितिमितिं किं भवंद्भूमभामादिवालम् ।
रक्तः शक्त्या स्फुरन्वो निगडित इव यो भूपणालीनकाले
व्याधेरव्यात्स पाणिः सदुपलवलयामुक्तितो मुक्तिभाजः ॥ १४ ॥
मा भूदन्तःपुरस्त्रीकठिनकुचभिदाकारिणी रागभाक्त्वा-
त्सक्तैतस्मिन्नखाली सरविकृतिहृतः सर्वदास्येतं कीव ।

---

१. भुजम्. २. जिनस्य. ३. प्रतिकूलहन्ता. ४. चरणं प्रव्रज्या. ५. कृष्णम्. ६. पा-
पम्. ७. आशङ्क्यमानः. ८. हिनस्तु. ९. शीघ्रं यथा स्यात्. १०. जिनस्य. ११. प्र-
कर्पेणानमन्ती कंधरा येपाम्. १२. आप्तो जिनस्तस्य सक्तस्तदीयः. १३. गर्वनाशके.
१४. इतकि इति । अकजागमः. १५. भवज्ञायमानो भूम्ना बाहुल्येन यो भामः क्रो-
धस्तस्मादिव. १६. ग्रहणकाले. १७. सन्तः शोभना उपला मणयो येपु तानि वलयानि
तेपामामुक्तिः परिधानं ततः. १८. जिनस्य. १९. रागो मन्मथासक्तिरपि. २०. इतीव ।
शाकवदकजागमः.

मुद्राभिर्मुद्रितोऽलंकरणविधिकृता वज्रिणार्हत्करो यः
सोऽहांस्यहाय हन्तु प्रविहितविनतेर्भक्तिभाजो जनस्य ॥ १५ ॥

स्रष्टाजस्रं श्रियो यः शिवपुरपथिकासद्महानोचिताया:
कोपाधीशैर्निशान्ते नमुचिरिपुगिरासद्ग्रहा नो चिताया: ।
आनीयानीय नित्यं परमगुरुकर: पर्वशैलीक्षयाय
प्राप्तेर्हेतु: प्रधानो भवतु स भवतां पर्वशालीक्षयाय ॥ १६ ॥

युक्ता यस्मिन्नृजिम्ना मसृणिततरुपोऽग्रेऽर्धचन्द्रायमाणा-
नङ्गुल्य: संदधाना: सघृणिनखमणीन्द्राधिमोद्धस्वरूपा: ।
पुष्पेषोर्निर्जितस्येषव इव विषमा: संग्रहीता विभान्ति
क्षेपीय: पातकान्तं प्रजनयतु स व: पाणिरर्हद्भुजस्थ: ॥ १७ ॥

व्रध्नेनापीद्धधाम्ना परिहृतमिदमालोक्य पातालमूलं
सव्यालत्वात्करालं तिमिरभरभृतं भीरुणेवेति यस्य ।
वीक्ष्यन्तेऽधो विविक्षन्त्य इव ननु भुवो भ्राजनार्थं नखाभा:
स्वस्तास्य ध्यानकाले दलयतु दुरितं व: स जैनेन्द्रपाणि: ॥ १८ ॥

यो नान्वीतो जडिम्ना नयति न कुमुदं नंदथुं दीप्यमानो
न ज्योतिर्ज्यानियुक्तोऽहनि मलिनतमं लक्ष्म धत्ते न मध्ये ।
सोल्लासं नो नदीनं जनयति लभते धाम दोषोदयान्नो
सोऽपूर्वो यत्नखेन्दुश्चरमतनुशयो योग्यतां वो युनक्तु ॥ १९ ॥

अर्थव्यक्तिं विविक्तां विदधति बहवो यां करा हारिदश्वा
विश्वंसिस्तीव्ररूपा: प्रशममितवतैकाकिना सा मयापि ।

---

१. शिवपुरपथिकाश्च तेऽसद्मानोऽनगारास्तेषां हानं त्यागस्तस्योचिताया योग्याया:. २. इन्द्रवचनेन. ३. असद्ग्रहा नो किं तु सद्ग्रहाः सत्तेजोविशिष्टः करः. ४. पूरिताया:. ५. पर्वयुक्त:. ६. ईक्षया दर्शनेनास्य शुभावहविधेः प्राप्तेर्हेतुः. ७. पर्वाण्युत्सवाञ्श्यन्ति तनूकुर्वन्तीति पर्वशा विपक्षास्तेषामाली पङ्क्तिस्तस्या: क्षयाय. ८. ऋजुत्वेन. ९. श्लक्ष्णमन्यय:. १०. दीर्घत्वेन प्रशस्तत्वा:. ११. पञ्चसंख्याका:. १२. क्षिप्रतर:. १३. कुत्सिता मुदम्. १४. समुद्रम्. पक्षे दीनं न. १५. चरमतनुर्जिनस्तस्य हस्त:.

प्रोच्चैर्निष्पाद्यतेऽमुं सयमिव वहता धार्यते वैजयन्ती
येनासौ युष्मदाधेर्वधकरणपटुर्बुद्धसक्तः करोऽस्तु ॥ २० ॥
श्रद्धालोर्यो विधत्ते विविधबुधधृतीरेधयन्बोधवृद्ध्या
धैर्यं धामर्द्धिमिद्धां धनमपनिधनं शुद्धबुद्धिं धरित्रीम् ।
व्याधिध्वंसं पुरंध्रीर्जितविबुधवधूर्धर्मवृद्धेः समृद्धिं
धर्मोक्तौ वः स धत्तां धियमधिकधृतिं प्रोद्धृतो बौद्धहस्तः ॥ २१ ॥
ज्येष्ठासक्तं सचित्रं गुरुमहिमपुनर्वस्वपोढात्मकं नो
नित्यं सत्कृत्तिकं यज्जनितवृषतुलं व्यक्तमीनं सकुम्भम् ।
व्योमेवाभाति किं तु प्रविरहितमलं शून्यवृत्त्यात्युदात्तं
छिन्द्यात्कृच्छ्राणि तद्वः सुमृदु करतलं निर्वृतेरीश्वरस्य ॥ २२ ॥
दारिद्र्याद्रेर्महेन्द्रप्रहरणसमतां यो विभेदे बिभर्ति
प्राकाश्ये विश्ववेश्मोदरविवरगतस्यार्थजातस्य दीपः ।
हस्तालम्बोऽवलम्बो गुरुतरनरकागाधकूपप्रपाते
पातात्पातात्स हस्तस्तमसि तततमे वो विनेतुस्त्रिलोक्याः ॥ २३ ॥
यः प्रोद्यद्विद्रुमद्युत्करुरुहमणिमन्मस्तकाङ्गुल्यहीन्द्रः
सत्सत्त्वोऽपारिजातः पुनरसुरतनुः साधुमुक्ताफलश्रीः ।
चक्रे हस्तः समुद्रो दशशतनयनेनोन्मुदा मूर्ध्नि मेरोः
कृच्छ्रोच्छ्रायं छिनत्तु प्रतिहतसुपमं वः स जेतुः सरस्य ॥ २४ ॥
सत्स्कन्धावद्धमूलार्वृजितभुजलतालग्नमम्लानरूपं
बिभ्रद्बन्धूककान्तिं करतलमचलं पल्लवभ्रान्तिभाग्भिः ।

---

१. जयपताका का मया सह स्पर्धत्येवंरूपा. २. बुद्धो जिनस्तत्संबन्धी. ३. धर्मोक्तौ धर्मकथने प्रोद्धृत ऊर्ध्वीकृतः. ४. ज्येष्ठेषु वृद्धेष्वेवोपदेशार्थमासक्तम्. ५. शङ्खचक्रादि चित्रसहितम्. ६. गुरुर्महिमा यस्य. ७. पुनःपुनरपि वसुना तेजसा अपोढात्मकं रहितात्मकं नो. ८. सती शोभना कृत्तिश्चर्म यस्य. ९. वृषतुलामीनकुम्भा रेखात्मकाः. १०. शून्यवृत्त्या अलमत्यर्थं प्रविरहितम्. व्योमपक्षे तु ज्येष्ठाचित्रागुरुपुनर्वसुकृत्तिकावृषतुलामीनकुम्भशब्दाः प्रसिद्धार्थाः. व्योम शून्यं भवति. ११. अस्खलितः. १२. रक्षतात्. १३. अपगतशत्रुसमूहः पारिजातरहितश्च. १४. असून्रातीत्यसुरा प्राणप्रदा तनुर्यस्य । पक्षे सुरारहितदेहः. १५. मुद्रासहितः सागरश्च. १६. उद्गतदर्पेण. १७. अवर्जिता सरला.

मौग्ध्यात्सारङ्गशावैर्वनगहनभुवि ध्यानवृत्तेर्विधातुः
सिद्धेर्लेलिह्यते यत्तदवतु पतनादापदन्तः सदा वः ॥ २९ ॥

इति श्रीजम्बूकविविरचिते जिनशतके जिनहस्तवर्णनं नाम द्वितीयः परिच्छेदः ।

---

मल्लक्ष्म्या क्षिप्तदीप्ति प्रलपदलिरवैर्वारिणीन्दीवरं वो
मङ्क्षु शक्त्या वियुक्तं सदलमपि जये वाञ्छतीत्युच्छलच्छ्रि ।
हर्षोत्कर्षात्प्रफुल्लं किमिदमिति जनैः कल्प्यतेऽनल्पधीभि-
र्यच्चक्षुर्वीक्ष्यमाणं क्षणमहितहतिं तत्तनोत्वाप्तवक्त्रम् ॥ १ ॥
भास्वान्भास्वानपि स्वैर्घृणिभिरनणुभिर्यत्तमोऽनुत्तमं नो
नेता नेतुं तनुत्वं तदतनिम मनो मोहयन्मानवानाम् ।
मुष्णद्धिष्ण्यं गुणानामगुणमपि मुखं खण्डितामूर्तिकीर्ति-
स्तथ्यं पथ्यं प्रथीयः प्रदिशतु दशनाभीशुभिः शोभितं वः ॥ २ ॥
यस्य स्यादन्तरात्मा कलितमलिनिमा चञ्चलश्च स्वभावा-
त्तुल्यद्धि स्पर्धयान्यं क्रमत इति सहीतीव धात्रा व्यधायि ।
मर्यादार्थं यदन्तर्निहितनयनयोः सेतुबन्धायमानो
नासावंशो जिनास्यं दिशतु शमशनैः शाश्वतं तद्भवद्भ्यः ॥ ३ ॥
सोत्कण्ठाः कण्ठपीठोल्लुठितजरठरुक्तारहाराभिरामा
बिभ्रत्योऽदभ्रमूर्तिस्तनभरमबलाः स्वर्भुवो याः समीयुः ।
ध्यानध्वंसं विधातुं विकृतिमकृत यत्प्रत्युत प्रेक्ष्यमाणं
तास्वेवास्यं जिनस्य प्रणुदतु तदयं वः स्वरूपश्रियैव ॥ ४ ॥
स्पष्टं जुष्टं ललाटं विकटतरमतिस्निग्धलम्बालकान्तैः
कान्तं शान्तं दशां शं दिशदनुकुरुते दृश्यमानाङ्कपङ्कम् ।
यस्योद्यत्पार्वणेणाङ्कनशकलमलं तद्भवद्भाग्यपुष्टि
द्वेष्टुर्दुष्टाष्टकर्मद्विप उपचिनुतादास्यमस्यत्तमांसि ॥ ५ ॥

---

१: सदल सपरिकरमपि. २. आप्तस्य जिनस्य मुखम्. ३. समर्थः. ४. अगुणं तमोगुणादिरहितमपि गुणानां सौन्दर्यादीनां धिष्ण्यम्. ५. खण्डिता अमूर्तः कामस्य कीर्तिर्येन तस्य जिनस्य. ६. अतिशयेन पृथु. ७. एव. ८. शं सुखम्. ९. शीघ्रम्. १०. स्वर्गोत्पन्नाः. ११. समागताः.

दर्पं कंदर्पशत्रोष्टसिति भगवता भ्रंशयित्वा यदाशं
क्रोधाद्वेधा विधायोद्धृतविततगुणं कार्मुकं तत्किमेतत् ।
आस्ते न्यस्तं लसद्भ्रूयुगलमिति नृभिर्भाव्यते यत्र वक्त्रं
तद्द्रष्टुर्विष्टपान्तर्गतनिखिलपदार्थानन्र्थं हताद्वः ॥ ६ ॥
यत्कान्त्या त्याजितश्रीः क्षितिपतिरिव सत्कोपपत्त्रोरुदण्डे-
राढ्योऽपि क्षीणदाढ्यों वसति वनभुवि व्रीडयेवाब्जखण्डः ।
तन्मौनीन्द्रं विनिद्रं स्फुरदधरदलं कण्ठनालोपलीनं
दृग्भृङ्गासङ्गि गुर्वीं ग्लपयतु विपदं सन्मुखं युष्मदीयाम् ॥ ७ ॥
शान्तं श्वेतांशुशोचिःशुचिदशनमशं स्वदृशां दृश्यमानं
विश्वक्लेशोपशान्ति दिशदतिविशदंश्लोकराशि प्रकाशम् ।
निःशेषश्रीनिशान्तं शरणमशरणे नाशिताशेषशङ्कं
दिश्याद्वः शोभिताशं शिवमुपशमिनामीशितुः शश्वदास्यम् ॥ ८ ॥
दुष्टारिष्टानि दृष्टेऽप्यकृतविकृतिकान्येव निर्नामकानि
क्षीयन्ते दक्षमक्ष्णां प्रविकसनकृति प्राणियूथस्य यत्र ।
नैशानीवांशुमालिन्यलिकुलमलिनान्यन्धकाराणि वन्धो-
रूर्ध्वाधोमध्यलोकाश्रितजनसमितेरास्यमस्त्वघं तत् ॥ ९ ॥
व्यालम्बालोलनीलालकजलदयुजो राजमानाद्भिमानी-
शुभ्रैर्दन्तैः सदन्तैर्वरविवरभृतः प्रस्फुरद्गण्डशैलात् ।
यस्माद्गौः शुद्धवर्णा प्रभवति सुमनोमानसं नन्दयन्ती
तज्जैनेन्द्रं हिमाद्रेरिव दिविजनदी वो नुदत्वास्यमेनः ॥ १० ॥
दुर्बोधो दुर्विधेयैः प्रवररदमणीन्धारयन्मध्यसंस्था-
नस्तश्रेष्ठौष्ठमुद्रो व्यसनशतशमप्रत्यलावाप्तिरुच्चैः ।

१. मुनीन्द्रसंबन्धि. २. न शमशं दुःखम्. ३. स्पष्टतरयशःसमूहम्. ४. दन्ता अग्रे निर्गताः पर्वतैकदेशा अपि. ५. सत्पर्यन्तैः. ६. विवरं मुखान्तरालं गुहाश्च. ७. गण्डावेव शैलाविति मुखपक्षे. ८. गङ्गा. ९. भाग्यहीनैः. १०. व्यसनशतशमे प्रत्यला समर्था अवाप्तिर्यस्य सः.

सुप्रापः प्रायशोऽस्मिञ्जिनवदननिधिर्बुद्धतत्त्वैः सुतत्त्वै-
स्तत्त्वार्थे सत्वरं वस्त्वरयतु स गुरुर्बोद्धुमध्यामरूपम् ॥ ११ ॥
किं बिम्बं पद्मबन्धोर्नहि दहनमहस्तन्मनाग्नेदमिन्दो-
स्तर्हि स्यात्सत्कलङ्कं तदपि न विकलं लाञ्छनेनैतदेवम्।
दृष्ट्वा द्रेर्दुर्वलस्य प्रमुदितहृदयास्तर्कयन्तेऽतिमुग्धा
वध्वो मूर्ध्न्यद्रिभर्तुर्यदजितलपनं वस्तदेनस्तृणेढु॥१२॥
मान्ये मान्येन कारि स्वदृगशुभतरात्रेतिकृष्णातिकृष्णा
चक्रे चक्रे दिशां यत्सिततरयशसि भ्रूलतारालतारा।
रक्षोरक्षालिनीवेत्यवहितविधिना यत्र पापात्रपापा-
दव्यादव्यापदास्यं तदमरणगुरोर्वः सदन्तं सदन्तम् ॥ १३ ॥
वक्षस्याधोक्षजे श्रीः परिवसति सदेतिप्रसिद्धिं वृथार्थी-
मत्यर्थं भावयन्तोऽभिलषितविभवावाप्तितः कल्पयन्ति।
साक्षाल्लक्ष्मीरिहास्तेऽनवरतमिति यद्दर्शने याचकौघा-
स्तद्वक्त्रं वैतरागं गुरुमदगहनध्वंसनाद्वो धिनोतु ॥ १४ ॥
श्रीमत्पौरंदरं दग्म्लिनमननवं वानमप्यन्यदीप्ति
प्रत्यक्षत्वेक्षणेन श्रवणपरिकरः स्वातिरक्तो बुधश्रीः।
स्वाभिर्या दीधितीभिः कुरुत इतितरामाचरन्नप्यचण्ड-
श्चण्डांशोः कर्म धर्माधिपलपनविधुर्वो विरुद्धं स वध्यात् ॥ १५ ॥
सद्दीर्णं सालकान्तं शिशिरयनतरच्छायमन्तर्द्विजानां
राज्यापूर्णं सदन्तच्छदलसदलिकं काननं वाननं वः।

१. प्रकटतरम्. २. दाहात्मकतेजोविशिष्टम्. ३. इन्द्रस्य. ४. अजितस्य जिनस्य लपनं मुखम्. ५. दिनस्तु. ६. कृष्णादप्यतिकृष्णा. ७. दिशां समूहे यदुच्चैस्ततरं यशो यस्य. ८. कुटिलकुन्तलानिका दृक्. ९. अरक्षा न विद्यते अन्या रक्षा यस्याः सा रक्षा. १०. अपरिहितेन पापा. ११. अपापमावहति प्रापयति तस्मात्. १२. नितराम्. १३. जिनस्य. १४. दन्तैः सहितम्. १५. शोभनप्रान्तम्. १६. म्लानमपि. १७. दर्शनं वीक्षणं तेन. १८. श्रवणौ कर्णौ श्रवणं च नक्षत्रम्. १९. शोभना अतिरक्तिः. २०. कुपालीभवति. २१. अतिशयेन. २२. मुखपक्षे पाणः चन्द्रः. २३. इन्द्राणी पक्षिणां च पद्मया. २४. इत्यर्थे वा.

संतापि सप्तसप्तेरिव विषमगतेरागसोऽतीव गुर्वी-
मुन्मूल्यान्मन्मथानुन्मथितमुनिगणप्रष्ठकण्ठस्थलस्थम् ॥ १६ ॥
यद्यप्यन्तर्न दत्ते स्थितिमयममदो नस्तथाप्येष सेव्यो
भव्यत्वात्सर्वदोर्व्यां बहिरपि निरतैः पूर्वसूक्तेरितीव ।
लग्नो रागो गरीयस्यधरवरमणौ यत्र चित्रातिचण्ड-
त्रासात्संसारतो द्राङ्मृतिजननुदस्त्रायतां वस्तदास्यम् ॥ १७ ॥
दैवान्मालिन्ययोगेऽप्यतिचपलतया योऽवदातानुयातः
पार्श्वस्थारक्तवर्णो भवति स लभते भूरिशोभां सुवृत्तः ।
स्थैर्यं लब्ध्वा समाधौ ध्रुवदिव युगलं तारयोर्लोचनान्त-
र्येनैवं राजते तन्मुखमुपशमयत्वार्हतं गर्हितं वः ॥ १८ ॥
बाहुश्रुत्यं दधद्भिर्बहुधवलगुणः संगतो गीयते य-
त्स्यादर्थानर्थदर्शीत्यवितथमिव तत्कर्तुमालक्ष्यतेऽक्ष्णोः ।
कर्णाभ्यर्णोपसर्पि द्वितयमुपवहद्द्राघिमाणं यदीयं
योगीशस्याननं तच्छकलयतु कलां काश्मलीं हेलया वः ॥ १९ ॥
राजीव त्वं निजर्ध्या जयसि बहुरजः सत्कथं कथ्यतां मा-
मृक्षेश क्षीयमाणस्त्वमपि किल मया स्पर्धसे सार्धमेवम् ।
सद्गन्धश्वासलुब्धभ्रमदलिपटलप्रोच्छलद्ध्राणतो य-
द्वक्तीव व्यक्तमेक्तान्स्नपयतु रजसा वस्तदर्हन्मुखाब्जम् ॥ २० ॥
यत्सौम्यत्वात्स्वकीयां क्षरदमृतरसां सौम्यतां न्यूनवृत्ति
व्यालोक्यालोकिताशः कृशतनुरविशत्स्वश्रियोऽन्तर्द्धिमिच्छुः ।
रा ब्रीडत्वादिवेन्दुर्मृडविकटजटाजूटरौद्राटवीं वो
यच्छत्वच्छिन्नवाञ्छं सुपममितंमृतेराननं तन्मनोहृत् ॥ २१ ॥
लावण्यार्णः प्रपूर्णं चलदृगनिमिषं राजहंसोपजीव्यं
भ्राम्यद्भ्रूयुग्मभङ्गं त्रिदशमुनिगणासेवनीयं प्रसन्नम् ।

१. पूर्वसंबन्धात्. २. अरुणत्व मानसो विकारश्च. ३. निकटस्था अनुरक्ता वर्णा ब्राह्मणादयो यस्य. ४. शब्दतः. ५. रजसा पापेनाक्तान् लिप्तान्. ६. शोभनम्. ७. गतमरणस्य जिनस्य.

सच्छन्दं मानसाह्वं सर इव तरसा मानसस्यातनोति
प्रह्लत्तिं वीक्षितं यत्तदरिविहतये वः शमीशास्यमस्तु ॥ २२ ॥
सेवां कर्तुं किमेतौ मिहिरहिमरुची पार्श्वयोरेतदात्त-
स्पर्श्रीलिप्साकुलाङ्गाविति मनसि सतां शेमुषी प्रादुरस्ति।
निर्वर्ण्याकीर्णदीप्तिप्रतिहततमसी कुण्डले गण्डलग्ने
यत्सत्कर्णापिनद्धे नयतु शिवपदं तन्मुनीन्द्राननं वः ॥ २३ ॥
अम्लानं मौलिमालोल्लसितकपिलरुग्धूलिलुब्धालिजालं
व्यालोलारालकालालकममलकलालाञ्छनं यद्विलोक्य।
लेखाली लालिताले प्रबलनलकुलोन्मूलिना शैलराजे
प्रह्वत्ना लीलया वो दलयतु कलिलं लोलदृक्तज्जिनास्यम् ॥ २४ ॥
यद्वन्नासत्ययुक्तः सुरवरदयिताख्यातिमांस्त्वं पवित्रो
गोभृद्गोत्रस्य हन्ता बलभिदहमपि त्वत्समानं तथैव।
तस्माद्दर्पावलेपं जहिहि हरिमितीवाहसत्सत्स्मितैर्य-
त्तद्वो द्वन्द्वानि विद्वद्वरगुरुवदनं सुप्रसन्नं पिनष्टु ॥ २५ ॥

इति श्रीजम्बूकविविरचिते जिनशतके जिनमुखवर्णनं नाम तृतीयः परिच्छेदः।

---

ब्राह्मी मेधाधिभर्तुः कृतरतिरसकृद्वैबुधानां विशुद्ध्या
गुर्वी भास्वत्सुवर्णा वनरुचिखचिता चारुचामीकराद्रेः।
चूडा वा रोचमाना दिवि दिवसपतेर्भानुसीमानमुच्चै-
रुल्लङ्घ्यालङ्घनीया वृहदवमवने वन्यवद्दीयतां वः ॥ १॥

---

१. परितोषम्. २. एतेन मुखेन आत्ता गृहीता या स्पर्धा: सूर्यचन्द्रमसोः सकलीया शोभा तस्या लब्धुमिच्छा तया आकुलमङ्गं ययोः. ३. विलोक्य. ४. अमन्दकलः पूर्णिमा चन्द्रस्तस्येवासमन्ताल्लाञ्छनम्. ५. देवपङ्क्तिः. ६. अलर्के स्फटिका. ७. इन्द्रेण. ८. मेरौ. ९. पविं वज्रं त्रायते पवित्रः. १०. गोत्राहरस्य कर्तन इति जिनपक्षे. ११. पलं संनहनार्थं कर्म. १२. सकलोपद्रवान्. १३. वाणी. १४. ब्रह्म परमपदं तस्याधिभर्ता जिनः. १५. देवसमूहानाम्. १६. अवने रक्षणे या रुचिः; मेरुचूडापक्षे तु वनस्य रुचिस्तया खचिता. १७. सूर्यस्य किरणसीमानम्. १८. महत्पापानां पापानां वने. १९. दावानलायमानम्.

इन्द्रैर्विद्राणनिद्रं श्रितविधि विबुधैः सार्थकं ऋक्षनाथैः
सिद्धैः साध्यार्थसिद्ध्यै धुतदिति दितिजैः साधुभिः साधितार्थम् ।
गन्धर्वैर्गीतगर्भं कृतकरमुकुलैः श्रूयमाणानणीयो
जैनी गौर्गौरवं वोऽतनुभुवनकुटीकोटरान्तः करोतु ॥ २ ॥
या मन्दारैरशोकैः प्रविकचसुमनःशोभितैर्भिक्षुवृक्षै-
स्तुङ्गैर्नीरागमानैः सततमुपचिता भारती वैतरागी ।
स्वच्छायाच्छिन्नतापा विहितशुभफलालंकृतारामलेखा-
तुल्या कल्याणमाल्यैर्बहुभिरिह तनूर्भूपयत्वाशु सा वः ॥ ३ ॥
यूथैर्या संयतानां सुदृढनियमनान्मोक्षमाकाङ्क्षमाणै-
र्गुप्तैः संसृत्यटव्याश्रयणगमनतः संश्रितत्वादितीह ।
कारागारानुकाराप्यवनततरतमा निर्भया भ्रष्टबन्धा
साधीयोधीधनद्धेरतिसमधिकतां सा क्रियात्सिद्धगीर्वः ॥ ४ ॥
संसारोदन्वदम्भस्यमितिमृतिमहोर्मिण्यगण्योद्धवौर्व-
द्युद्धीमे लोभकुम्भीनसविषमतले मज्जतो जन्तुराशीन् ।
प्रत्यप्रान्तप्रथिम्नि स्मरमकरवति त्राहृयजिह्मस्वरूपा
निर्व्याजं नाव्यते या यतिपतिगदिता सा हताद्वो द्विषन्तम् ॥५॥
नामीष्टं विष्टपान्तः प्रति चरमचरं प्राणिनं प्राणितव्या-
दन्यद्वस्त्वित्यवेत्य स्वमिव तदपि भो रक्षता क्षुद्रभावाः ।
भद्रं भोक्तुं विमुक्त्यां यदि मतिरिरिति याकर्ण्यते कर्णरन्ध्रैः
सा श्रीयोगीन्द्रगीर्वः प्रबलयतु बलं कालमल्लं विजेतुम् ॥ ६ ॥
द्रव्यादेशेन नित्यं यदितरदपि तत्पर्ययादेशतोऽस्मि-
न्वस्त्वेवं येकमेव प्रकटयति नयद्वन्द्वतो द्विप्रकारम् ।

१. साध्यस्यार्थस्य सिद्ध्यै धुता दितिः खण्डनं यत्र. २. मन्दं आर अरिसमूहो येषाम्. ३. नीरं पानीयं तस्यागमः प्राप्तिस्तेनानाः प्राणा येषां तैः; भिक्षुपक्षे तु रागमानाभ्यां रहितैः. ४. उपवनराजीसमाना. ५. संयतास्तपस्विनो बद्धाश्च. ६. अमितयो मृतयो मरणान्येव महान्तस्तरङ्गा यत्र. ७. नौरिवाचरति. ८. या वागस्मिञ्जगति एकमेव वस्तु द्विप्रकारं द्विभेदं प्रकटयति प्रतिपादयति । कुतः । नयद्वन्द्व नययुग्मं द्रव्यास्तिकनयः पर्यायास्तिकनयश्च तस्मात् । एवमित्यनेन प्रकारेण । यन्मृदादिवस्तु द्रव्यादेशनयापेक्षया नित्य तत्पर्ययादेशात इतरदनित्यम्.

कुग्राहोग्रग्रहास्यप्रपतिततनुभृत्स्तोममुन्मोचयन्ती
चेतोभूप्रच्युतिं वः सुमतियतिपुरोगस्य सा वाग्विधेयात् ॥ ७ ॥
निर्दोषा सन्निशीथाप्यवितथरचना सत्यहीनापि नित्यं
सद्भुक्तिर्मोक्षदापि श्रुतयममहिमाप्युन्नतासत्कृतान्ता ।
द्विष्टार्था सार्थकापि स्खलितपरमताप्युन्नतासत्तमाया-
मारोप्यात्सा पदव्यां प्रशमिपरिवृढव्याहृयलं वोऽविलम्बम् ॥ ८ ॥
सत्या सत्यानताङ्गे तनुमति भविका सर्वदा सर्वदाग-
स्तानेऽस्तानेकशर्मण्यपि विनिपतिते स्तूयमानायमाना ।
नाशं नाशङ्कितार्था भवतु कविशतैः पूरितार्शारिताशा
गौर्वो गौर्वामपङ्के मुनिपलपनभूर्वः सदावासदावा ॥ ९ ॥
वाचो वोऽर्चामचिन्त्याचलचरणरुचेश्चूचुरन्मा चिराया-
त्युच्चैस्ताश्चोरयन्त्यो रुचिमतिशुचयो नीचवाक्तारकाणाम् ।
याश्चण्डाश्चण्डवर्चोरुच इव निचितं चित्तभूध्वान्तचित्या
सच्चेतोम्भोजचक्रं प्रचुररुचिचितं कुर्वते चित्रचाराः ॥ १० ॥
श्रोतॄन्वृन्दारकादीन्प्रणिहितकरणानादराद्देशनायां
संसद्यासाद्य सद्यः [11]परिणमति वचोऽर्हन्मुखान्निर्गतं सत् ।
तेषां भाषाविशेषैर्विषमिव विषदान्द्रुविभागान्विभिन्ना-
न्स्वैः स्वैर्वर्णैः सुवर्णं यदनुगुणयतात्स्वश्रुतौ तन्मनो वः ॥ ११ ॥
या वारिक्षीरयोर्वा प्रकृतिपुरुषयोः श्लिष्टयोस्त्रोटयन्ती
संबन्धं निर्विबन्धं ललितपदगती रोमरामेव रम्या ।
सा वः शुक्लाभदेहा दहतु महदपि क्षुद्रपक्षद्रुमाणां
वृन्दं वृन्दारकादीश्वरसभसरसीभूषणा वाग्जिनस्य ॥ १२ ॥

१. निशीथो मन्त्रविशेषः. २. सती शोभना अहीना च. ३. असत् अविद्यमानः कृतान्तो यमो यस्याः; अन्यत्र सत्कृतान्ता शोभनसिद्धान्ता. ४. द्विष्टोऽर्थो द्रव्यादिर्येन. ५. सं ददातीति सर्वदा. ६. पापविस्तारे. ७. नामपट्टे मिथ्यादृष्टिस्वरूपे नाशमस्मानां गच्छन्ती. ८. अरितां शत्रुतां स्यति सा. ९. सदावासो मोक्षस्तं ददाति ते ... स्तानवति सा. १०. मदनान्धकारसमूहेन. ११. पर्यायान्तरमनुभवति. १२. उदन्त. १३. जडत्वात्. १४. कर्मजीवयोः. १५. मनोहरत्वेनैव.

गृभ्नुत्वात्तत्त्वगन्धाधिगमविषयतः संपतद्भिः समुद्भिः
सद्भिः साद्भिर्द्विरेफैरिव मधुररवैश्चारुपक्षैः सुदक्षैः ।
यत्प्राप्य प्राप्यते शं [1]स्वैरिनकरिमदाम्भोव[2]दाप्तं वचो व-
स्तात्क्लेशाश्लेषशोषोपशमकृतिविधिं प्रत्य[3]लंभूष्णु भूयात् ॥ १३ ॥
नानावर्णैर्विचित्रा रुचिरगुणशतैः कल्पितानल्पशोभा
शुद्धाधिक्यान्महार्घा हृदि मुदमधिकं संदधाना ग्रहीतुः ।
[4]शाटं वः सत्पटीवो[5]त्कैटकटुकफलाकार्यशीतस्य गौद्री-
क्संपर्कात्कुर्वती श्रीसुखमतितनुतात्सा [6]र्जितोत्सेकमूर्तेः ॥ १४ ॥
प्रोत्खातासंख्यदुःखाखिलजनसुखकृत्खण्डिताखण्डखेदं
खङ्गाभा मूर्खमुख्यप्रखलमुखरताशाखिशाखा [7]विलेखे ।
ख्याता वाग्लेखसंख्याप्रमुखशतमखाभ्यर्चिता खण्डशो वः
[8]सख्यं प्रे[9]ङ्खन्मनोभूविशिखमुखभिदः खण्डयत्वस्खलन्ती ॥ १५ ॥
वर्णैः पूर्णाप्य[10]वर्णा [11]कुंजनपरिचिताप्याप्तलोकैर्वि[12]नूता
साराप्युच्चै[13]रसारा [14]रतिसुखकृदपि प्रास्तकंदर्पदर्पा ।
या [15]संनिष्ठाप्यनिष्ठा प्रविदितजगतो [16]भारतीनां रतीनां
सा युष्माकं निमित्तं त्वरितमुपदधात्वित्यनेकप्रकारा ॥ १६ ॥
भद्रा द्रोणी[17] सं[18]मुद्रे द्रविणवरनिधिर्द्राग्धनायेऽपिधानः
स्वापस्त्वां[19]नूपपातापदि परिपततां [20]कूबरी दुर्गमार्गे ।
युद्धे साध्वायुधश्रीः शशिसमयशसां योनिरा[21]र्यार्यगीर्या
सा युष्माकं महाधिप्रथनविधुरताध्वस्तयेऽस्तु प्रशस्ता ॥ १७ ॥

---

१. इन्द्रगजदानोदकवत्. २ आप्तो जिनस्तस्येदमाप्तम्. ३. समर्थम्. ४. नाशम्. ५. उत्कटकटुकं फल यस्य तादृशं यदकार्यं दुष्कर्म तदेव शीतं तस्य. ६. जितगर्वा मूर्तिर्यस्य । शान्ताकृतेरित्यर्थः. ७. छेदने. ८. मोहरूपं प्रेम. ९. जिनस्य. १०. शुक्लादिवर्णरहिता. ११. भूमिस्थलोकैः. १२. अभिष्टुता. १३. सारो गमनं तद्रहिता । स्थिरेत्यर्थः. १४. रतिसुखं कृन्ततीति विरोधपरिहारः. १५. संनिष्पत्तिर्नाशरहिता च. १६. भारती वाणी ईना लक्ष्मीणां रतीनां च निमित्तं त्वरितमुपदधातु. १७. नौका. १८. धनाभिलाषेऽपिधानो मुद्रणरहितो द्रविणवरनिधिः. १९. निर्जलदेशगमनापदि स्वापः शोभनजलम्. २०. रथः. २१. आर्याणां तपस्विनामर्यः स्वामी जिनस्तस्य गीः.

भूमानं बिभ्रतोऽपि प्रकटयति झटित्योजसा स्वेन हानि
स्नेहस्योच्चैः पतङ्गप्रभृतितनुमतोऽवन्त्यनित्यत्वशून्या ।
यान्याद्दक्षेव साक्षात्कृतनयनपथातीतवस्तुस्वरूपा
दैपी वर्तिः कुवृत्तीरपहरतुतरामर्हतां वागसौ वः ॥ १८ ॥
ज्योतिर्मित्रं न यत्र प्रविचरति रुचिर्नैन्दवी न प्रकाश्यं
यद्भासां चित्रभानोरनणुमणिरुचां गोचरे यच्च नैव ।
वस्तु प्रत्यक्षयन्ती तदपि मुदमितैः प्राप्तरूपैर्नुता यां
सार्हद्भारत्यरत्या वियुततनुलतान्वः क्रियादक्रमेण ॥ १९ ॥
सालंकारां करोति श्रुतिमति विशदन्यायरत्नोद्धदश्रि
श्रीमद्भिर्धार्यमाणं गतमतिविभवैर्दुर्लभं भास्वराङ्गम् ।
सद्वृत्तोदात्तरूपं व्युपरतविकृतेर्यत्तुलां कुण्डलस्य
क्षिप्रं विभ्रक्रियाद्वो वचनमुपचितिं चिन्तितानां तदर्च्यम् ॥२०॥
नाश्रेयांसि श्रितानां न भयतरलता श्रूयते श्राद्धदेवा-
दश्रीणां नाश्रयोऽश्रु स्तुतिरपि न नवा विस्रंसा न श्रमो वः ।
नाविश्रम्भश्रुतिर्न श्रवणकटुवचो यत्र तत्स्थानमीयुः
श्रुत्वा यां श्रीजिनस्याश्रियमभिभवताद्बोरसौ स्राक् श्रुतीद्धा ॥२१॥
मिथ्यादृक्पाथसान्तर्भृतगुरुविपदावर्तगर्ते गरीयः-
सर्पत्कंदर्पसर्पं प्रचरितकुनयानेकनक्रादिचक्रम् ।
यत्प्राप्य प्रोत्तरन्ति प्रततमपि भवाम्भोनिधिं साधुबन्धं
पातात्पोतायमानं तदवमपतनाज्जैनचन्द्रं वचो वः ॥ २२ ॥
सोन्मुद्भिर्जन्मवद्भिः शिखिभिरिव समाकर्णिता निर्णयन्ती
क्लेशग्रीष्मोष्मशोषं स्वमहिमभवनात्संहरन्ती रजांसि ।
विस्फूर्जन्नीतिधारानिकरपतनतः प्रावृषा या समाना
मैनारेर्मीननामाप्यपनुदतु भवत्स्वाशु सा सूनृता वाक् ॥ २३ ॥

१. पण्डितैः. २. शीघ्रम् । विशदा न्याय्या नीतय एव रत्नानि. ३. जिनस्य. ४. घ-मात्. ५. जरा. ६. रक्षतात्. ७. पापपातात्. ८. अपनयन्ती. ९. स्वकीयमाहात्म्य-भावात्. १०. जिनस्य.

लक्ष्मीर्वा दुग्धसिन्धोर्धरणिधरवराज्जह्नुकन्येव मान्या
श्यामेशाच्चन्द्रिकेवाभिनवजलधरादम्भसः श्रीरिवोच्चैः ।
ध्वान्तारेरन्धोरहःश्रीरिव समुदभवद्भारती रत्यधीन्द्रं
द्रोग्धुर्या सा निधेयादधरितविबुधाधीशराज्ये पदे वः ॥ २४ ॥
नाक्षेमं क्षुद्रपक्षात्क्षणमपि लभते संभ्रमेणेह विभ्र-
त्कण्ठे निर्लोठ्य शाठ्यं कुदृशमसदृशोद्भासितां भ्रंशयन्तीम् ।
यां रक्षां वा विवेकी बहुविधविपदां भेदिकां दैन्यशून्या-
न्युष्मान्मान्याग्रगस्याननवनजशया वागसौ द्राग्विधेयात् ॥ २५ ॥

इति श्रीजम्बूगुरुविरचिते जिनशतके जिनवाग्वर्णनं नाम चतुर्थः परिच्छेदः ।

## समाप्तमिदं जिनशतकम् ।

---

श्रीपद्मानन्दकविप्रणीतं

# वैराग्यशतकम् ।

त्रैलोक्यं युगपत्करामुजलुठन्मुक्तावदालोकते
जन्तूनां निजया गिरा परिणमद्यः सूक्तमाभाषते ।
स श्रीमान्भगवान्विचित्रविधिभिर्देवासुरैरर्चितो
वीतत्रासविलासहासरभसः पायाज्जिनानां पतिः ॥ १ ॥
यैः क्षुण्णाः प्रसरद्विवेकपविना कोपादिभूमीभृतो
योगाभ्यासपरश्वधेन मथितो यैर्मोहधात्रीरुहः ।
बद्धः संयमसिद्धमन्त्रविधिना यैः प्रौढकामज्वर-
स्तान्मोक्षैकसुखानुषङ्गरसिकान्वन्दामहे योगिनः ॥ २ ॥
यैस्त्यक्ता किल शाकिनीवदसमप्रेमाञ्चिता प्रेयसी
लक्ष्मीः प्राणसमापि पन्नगवधूवत्प्रोज्झिता दूरतः ।

---

१. ध्वान्तशत्रोः. २. रत्यधीन्द्रं काम द्रोग्धुर्दुष्टुर्जिनात्. ३. इव. ४. जिनस्य. ५. मुखकमलस्था. ६. कवेरस्य देशकालौ न ज्ञायेते. एकमेव पुस्तकमस्य शतकस्य प्रायः शुद्धं पत्रचतुष्टयात्मकं संवेगिसाधुसत्तमश्रीशान्तिविजयमुनिभिरस्मभ्यं प्रहितं तदाधारेणैतन्मुद्रणं विहितम्. ७. वज्रेण.

मुक्तं चित्रगवाक्षराजिरुचिरं वल्मीकवन्मन्दिरं
निःसङ्गत्वविराजिताः क्षितितले नन्दन्तु ते साधवः ॥ ३ ॥
यः परवादे मूकः परनारीवक्त्रवीक्षणेऽप्यन्धः ।
पङ्गुः परधनहरणे स जयति लोके महापुरुषः ॥ ४ ॥
आक्रोशेन न दूयते न च चटुप्रोक्त्या समानन्द्यते
दुर्गन्धेन न बाध्यते न च सदामोदेन संप्रीयते ।
स्त्रीरूपेण न रज्यते न च मृतश्वानेन विद्विष्यते
माध्यस्थ्येन विराजितो विजयते कोऽप्येष योगीश्वरः ॥ ५ ॥
मित्रे नन्दति नैव नैव पिशुने वैरातुरो जायते
भोगे लुभ्यति नैव नैव तपसि क्लेशं समालम्बते ।
रत्ने रज्यति नैव नैव दृषदि प्रद्वेषमापद्यते
येषां शुद्धहृदां सदैव हृदयं ते योगिनो योगिनः ॥ ६ ॥
सौन्दर्यैकनिधेः कलाकुलविधेर्लावण्यपाथोनिधेः
पीनोत्तुङ्गपयोधरालसगतेः पातालकन्याकृतेः ।
कान्ताया नवयौवनाञ्चिततनोर्यैरुज्झितः संगमः
सम्यग्ज्ञानसगोचरे चरति किं तेषां हताशः स्मरः ॥ ७ ॥
शृङ्गारामृतसेकशाद्वलरुचिर्वक्रोक्तिपत्रान्विता
प्रोद्गच्छत्सुमनोभिपङ्क्तिसुभगा स्त्रीणां कथावल्लरी ।
यैर्ब्रह्मव्रतपावकेन परितो भस्मावशेषीकृता
किं तेषां विषमायुधः प्रकुरुते रोषप्रकर्षेऽपि रे ॥ ८ ॥
आताम्रायतलोचनाभिरनिशं संतर्ज्य संतर्ज्य च
क्षिप्तस्तीक्ष्णकटाक्षमार्गणगणो मत्ताङ्गनाभिर्भृशम् ।
तेषां किं नु विधास्यति प्रशमितप्रद्युम्नलीलात्मनां
येषां शुद्धविवेकवज्रफलकं पार्श्वे परिभ्राम्यति ॥ ९ ॥
अग्रे सा गजगामिनी प्रियतमा पृष्ठेऽपि सा दृश्यते
...धात्र्यां सा गगनेऽपि सा किमपरं सर्वत्र सा सर्वदा ।

१. नागकन्यातुल्यायाः.

आसीद्यावदनङ्गसंगतिरसस्तावत्तवेयं स्थितिः
संप्रत्यास्यपुरःसरामपि न तां द्रष्टासि कोऽयं लयः ॥ १० ॥
योगे पीनपयोधराञ्चिततनोर्विच्छेदने विस्मृतां
मानस्यावसरे चटूक्तिविधुरं दीनं मुखं बिभ्रताम् ।
विश्लेषप्रसरवह्निनानुसमयं दन्दह्यमानात्मनां
भ्रातः सर्वदशासु दुःखगहनं धिक्कामिनां जीवितम् ॥ ११ ॥
मध्ये स्वां कृशतां कुरङ्गकदृशो भ्रूनेत्रयोर्वक्रतां
कौटिल्यं चिकुरेषु रागमधरे मान्द्यं गतिप्रक्रमे ।
काठिन्यं कुचमण्डले तरलतामक्ष्णोर्निरीक्ष्य स्फुटं
वैराग्यं न भजन्ति मन्दमतयः कामातुरा ही नराः ॥ १२ ॥
पाण्डुत्वं गमितान्कचान्प्रतिहतां तारुण्यपुण्यश्रियं
चक्षुः क्षीणबलं कृतं श्रवणयोर्बाधिर्यमुत्पादितम् ।
स्थानभ्रंशमवापिताश्च जरया दन्तास्थिमांसत्वचः
पश्यन्तोऽपि जडा हहा हृदि सदा ध्यायन्ति तां प्रेयसीम् १३
अन्यायार्जितवित्तवत्कचिदपि भ्रष्टं समस्तै रदै-
स्तापक्रान्ततमालपत्रवदभूदङ्गं वलीभङ्गुरम् ।
केशेषु क्षणचन्द्रवद्धवलिमा व्यक्तं श्रितो यद्यपि
स्वैरं धावति मे तथापि हृदयं भोगेषु मुग्धं हहा ॥ १४ ॥
उद्गृणन्ति प्रपञ्चेन योषितो गद्गदां गिरम् ।
तामामनन्ति प्रेमोक्तिं कामग्रहिलचेतसः ॥ १५ ॥
यावद्दुष्टरसक्षयाय नितरां नाहारलौल्यं जितं
सिद्धान्तार्थमहौषधैर्निरुपमश्चूर्णो न जीर्णो हृदि ।
पीतं ज्ञानलवूदकं न विधिना तावत्स्मरोत्थो ज्वरः
शान्तिं याति न तात्त्विकीं हृदय हे शेषैरलं भेषजैः ॥ १६
शृङ्गारद्रुमनीरदे प्रसृमरक्रीडारसस्रोतसि
प्रद्युम्नप्रियबान्धवे चतुरवाङ्मुक्ताफलोदन्वति ।

तन्वीनेत्रचकोरपार्वणविधौ सौभाग्यलक्ष्मीनिधौ
धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने ॥ १७ ॥
सम्यक्परिहृता येन कामिनी गजगामिनी।
किं करिष्यति रुष्टोऽपि तस्य वीरवरः स्मरः ॥ १८ ॥
लज्जेयं प्रलयं प्रयाति झटिति ब्रह्मव्रतं भ्रश्यति
ज्ञानं संकुचति स्मरज्वरवशात्पश्यामि यावत्प्रियाम्।
यावत्तु स्मृतिमेति नारकगतेः पाकक्रमो भीषण-
स्तावत्तत्त्वनिरीक्षणात्प्रियतमाप्येषा विषौषायते ॥ १९ ॥
कारुण्येन हता वधव्यसनिता सत्येन दुर्वाच्यता
संतोषेण परार्थचौर्यपटुता शीलेन रागान्धता।
नैर्ग्रन्थ्येन परिग्रहग्रहिलता यैर्यौवनेऽपि स्फुटं
पृथ्वीयं सकलापि तैः सुकृतिभिर्मन्ये पवित्रीकृता ॥ २० ॥
यत्राब्जोऽपि(?) विचित्रमञ्जरिभरव्याजेन रोमाञ्चितो
दोलारूढविलासिनीविलसितं चैत्रे त्रिलोक्याद्भुतम्।
सिद्धान्तोपनिषन्निषण्णमनसां येषां मनः सर्वथा
तस्मिन्मन्मथबाधया न मथितं धन्यास्त एव ध्रुवम् ॥ २१ ॥
स्वाध्यायोत्तमगीतिसंगतिजुषः संतोषपुष्पाञ्चिताः
सम्यग्ज्ञानविलासमण्डपगताः सद्ध्यानशय्यां श्रिताः।
तत्त्वार्थप्रतिबोधदीपकलिकाः क्षान्त्यङ्गनासङ्गिनो
निर्वाणैकसुखाभिलाषिमनसो धन्या नयन्ते निशाम् ॥ २२ ॥
किं लोलाक्षि कटाक्षलम्पटतया किं स्तम्भजृम्भादिभिः
किं प्रत्यङ्गनिदर्शनोत्सुकतया किं प्रोल्लसच्चाटुभिः।
आत्मानं प्रतिबाधसे त्वमधुना व्यर्थं मदर्थं यतः
शुद्धध्यानमहारसायनरसे लीनं मदीयं मनः ॥ २३ ॥
सज्ज्ञानमूलशाली दर्शनशाखश्च येन वृत्ततरुः।
श्रद्धाजलेन सिक्तो मुक्तिफलं तस्य स ददाति ॥ २४ ॥

क्रोधाद्युग्रचतुष्कषायचरणो व्यामोहहस्तः सखे
रागद्वेषनिशातदीर्घदशनो दुर्वारमारोद्धुरः ।
सज्ज्ञानाङ्कुशकौशलेन स महामिथ्यात्वदुष्टद्विपो
नीतो येन वशं वशीकृतमिदं तेनैव विश्वत्रयम् ॥ २५ ॥
दृश्यन्ते बहवः कलासु कुशलास्ते च स्फुरत्कीर्तये
सर्वस्वं वितरन्ति ये तृणमिव क्षुद्रैरपि प्रार्थिताः ।
धीरास्तेऽपि च ये त्यजन्ति झटिति प्राणान्कृते स्वामिनो
द्वित्रास्ते तु नरा मनः समरसं येषां सुहृद्वैरिणोः ॥ २६ ॥
हृदयं सदयं यस्य भाषितं सत्यभूषितम् ।
कायः परहितोपायः कलिः कुर्वीत तस्य किम् ॥ २७ ॥
नास्त्यसद्भाषितं यस्य नास्ति भङ्गो रणाङ्गनात् ।
नास्तीति याचके नास्ति तेन रत्नवती क्षितिः ॥ २८ ॥
आनन्दाय न कस्य मन्मथकथा कस्य प्रिया न प्रिया
लक्ष्मीः कस्य न वल्लभा मनसि नो कस्याङ्गजः क्रीडति ।
ताम्बूलं न सुखाय कस्य न मतं कस्यात्रशीतोदकं
सर्वाशाद्रुमकर्तनैकपरशुर्मृत्युर्न चेत्स्याज्जनोः ॥ २९ ॥
भार्येयं मधुराकृतिर्मम मम प्रीत्यन्वितोऽयं सुतः
स्वर्णस्यैष महानिधिर्मम ममासौ बन्धुरो बान्धवः ।
रम्यं हर्म्यमिदं ममेत्थमनया व्यामोहितो मायया
मृत्युं पश्यति नैव दैवहतकः क्रुद्धं पुरश्चारिणम् ॥ ३० ॥
कष्टोपार्जितमत्र वित्तमखिलं द्यूते मया योजितं
विद्या कष्टतरं गुरोरधिगता व्यापारिता कुस्तुतौ ।
पारम्पर्यसमागता च विनयो वामेक्षणायां कृतः
सत्पात्रे किमहं करोमि विवशः कालेऽद्य नेदीयसि ॥ ३१ ।
आत्मा यद्विनियोजितो न विनये नोग्रं तपः प्रापितो
न क्षान्त्या समलंकृतः प्रतिकलं सत्येन न प्रीणितः ।

दुष्प्रापं मकराकरे करतलाद्रत्नं निमग्नं यथा
संसारेऽत्र तथा नरत्वमथ तत्प्राप्तं मया निर्मलम् ।
भ्रातः पश्य विमूढतां मम हहा नीतं यदेतन्मुधा
कामक्रोधकुबोधमत्सरकुधीमायामहामोहतः ॥ ४० ॥
येनेह क्षणभङ्गुरेण वपुषा क्लिन्नेन सर्वात्मना
सद्व्यापारवियोजितेन परमं निर्वाणमप्याप्यते ।
प्रीतिस्तेन हहा सखे प्रियतमावक्त्रेन्दुरागोद्भवा
क्रीता स्वल्पसुखाय मूढमनसा कोट्या मया काकिणी ॥४१॥
क्रीडाकारि परोपहासवचनं तुष्ट्यै परव्यंसनं
कान्ता काञ्चनसुन्दराङ्गलतिका कान्तेव पृथ्वीतले ।
भव्यो द्रव्यसमर्जने किल महारम्भोद्यमः किं तु रे
भेदच्छेदनताडनादिविधिना रौद्रो महारौरवः ॥ ४२ ॥
कंदर्पप्रसरप्रशान्तिविधये शीलं न संशीलितं
लोभोन्मूलनहेतवे स्वविभवो दत्तो न पात्रे मुदा ।
व्यामोहोन्मथनाय सद्गुरुगिरां तत्त्वं न चाङ्गीकृतं
दुष्प्रापो नृभवो मया हतधिया हा हारितो हारितः ॥ ४३ ॥
सौख्यं मित्रकलत्रपुत्रविभवभ्रंशादिभिर्भङ्गुरं
कासश्वासभगंदरादिभिरिदं व्याप्तं वपुर्व्याधिभिः ।
भ्रातस्तूर्णमुपैति संनिधिमसौ कालः करालाननः
कष्टं किं करवाण्यहं तदपि यच्चित्तस्य पापे रतिः ॥ ४४ ॥
संसारे गहनेऽत्र चित्रगतिषु भ्रान्त्यानया सर्वथा
रे रे जीवन सोऽस्ति कश्चन जगन्मध्ये प्रदेशो ध्रुवम् ।
यो नाप्तस्तव भूरिजन्ममरणैस्तत्किं न तेऽद्यापि ही
निर्वेदो हृदि विद्यते यदनिशं पापक्रियायां रतिः ॥ ४५ ॥
नो स्कन्धेन समुन्नतेन धरसे चारित्रगन्ध्या धुरं
पृष्ठेनोपचितेन नैव वहसे प्रोच्चैरहिंसाभरम् ।

तत्त्वं निन्दसि नैव कर्महतकं प्राप्ते कृतान्तक्षणे
दैवायैव ददासि जीव नितरां शापं विमूढोऽसि रे ॥ ३२ ॥
बालो यौवनसंपदा परिगतः क्षिप्रं क्षितौ लक्ष्यते
वृद्धत्वेन युवा जरापरिणतो व्यक्तं समालोक्यते ।
सोऽपि क्वापि गतः कृतान्तवशतो न ज्ञायते सर्वथा
पश्यैतद्यदि कौतुकं किमपरैस्तैरिन्द्रजालैः सखे ॥ ३३ ॥
द्वारं दन्तिमदप्रवाहनिवहैर्येषामभूत्पङ्किलं
आसाभाववशान्न संचरति यद्रङ्कोऽपि तेषां पुनः (?) ।
येऽभूवन्विमुखाः स्वकुक्षिभरणे तेषामकल्पादहो
यच्च श्रीरिह दृश्यतेऽतिविपुला तत्कर्मलीलायितम् ॥ ३४ ॥
नापत्यानि न वित्तानि न सौधानि भवन्त्यहो ।
मृत्युना नीयमानस्य पुण्यपापे परं पुरः ॥ ३५ ॥
ब्रूतेऽहंकृतिनिग्रहं मृदुतया पश्चात्करिष्याम्यहं
प्रोद्यन्मारविकारकन्दकदनं पञ्चेन्द्रियाणां जयात् ।
व्यामोहप्रसरावरोधनविधिं सद्ध्यानतो लीलया
नो जानाति हरिष्यतीह हतकः कालोऽन्तराले किल ॥ ३६ ॥
बद्धा येन दशाननेन नितरां खट्वैकदेशे जरा
द्रोणाद्रिश्च समुद्धृतो हनुमता येन स्वदोर्लीलया ।
श्रीरामेण च येन राक्षसपतिस्त्रैलोक्यवीरो हतः
सर्वे तेऽपि गताः क्षयं विधिवशात्कान्येषु तद्वोः कथा ॥३७॥
सर्वभक्षी कृतान्तोऽयं सत्यं लोके निगद्यते ।
रामदेवादयो धीराः सर्वे क्वाप्यन्यथा गताः ॥ ३८ ॥
मिथ्यात्वानुचरे विचित्रगतिभिः संचारितस्योद्भटै-
रत्युग्रभ्रममुद्गराहतिवशात्संमूर्छितस्यानिशम् ।
संसारेऽत्र नियन्त्रितस्य निगडैर्मायामयैश्चोरव-
न्मुक्तिः स्यान्मम सत्वरं कथमतः सद्वृत्तवित्तं विना ॥ ३९ ॥

दुष्प्रापं मकराकरे करतलाद्रत्नं निमग्नं यथा
संसारेऽत्र तथा नरत्वमथ तत्प्राप्तं मया निर्मलम् ।
भ्रातः पश्य विमूढतां मम हहा नीतं यदेतन्मुधा
कामक्रोधकुबोधमत्सरकुधीमायामहामोहतः ॥ ४० ॥
येनेह क्षणभङ्गुरेण वपुषा क्लिष्टेन सर्वात्मना
सद्याशरवियोजितेन परमं निर्वाणमप्याप्यते ।
प्रीतिस्तेन हहा सखे प्रियतमावक्त्रेन्दुरागोद्भवा
क्रीता स्वल्पसुखाय मूढमनसा कोट्या मया काकिणी ॥४१॥
क्रीडाकारि परोपहासवचनं तुष्टयै परव्यंसनं
कान्ता काञ्चनसुन्दराङ्गलतिका कान्तेव पृथ्वीतले ।
भव्यो द्रव्यसमर्जने किल महारम्भोद्यमः किं तु रे
भेदच्छेदनताडनादिविधिना रौद्रो महारौरवः ॥ ४२ ॥
कंदर्पप्रसरप्रशान्तिविधये शीलं न संशीलितं
लोभोन्मूलनहेतवे स्वविभवो दत्तो न पात्रे मुदा ।
व्यामोहोन्मथनाय सद्गुरुगिरां तत्त्वं न चाङ्गीकृतं
दुष्प्रापो नृभवो मया हतधिया हा हारितो हारितः ॥ ४३ ॥
सौख्यं मित्रकलत्रपुत्रविभवभ्रंशादिभिर्भङ्गुरं
कासश्वासभगंदरादिभिरिदं व्याप्तं वपुर्व्याधिभिः ।
भ्रातस्तूर्णमुपैति संनिभिमसौ कालः करालाननः
कष्टं किं करवाण्यहं तदपि यच्चित्तस्य पापे रतिः ॥ ४४ ॥
संसारे गहनेऽत्र चित्रगतिषु भ्रान्त्यानया सर्वथा
रे रे जीवन सोऽस्ति कश्चन जगन्मध्ये प्रदेशो ध्रुवम् ।
यो नासस्तव भूरिजन्ममरणैस्तत्किं न तेऽद्यापि ही
निर्वेदो हृदि विद्यते यदनिशं पापक्रियायां रतिः ॥ ४५ ॥
नो स्कन्धेन समुन्नतेन धरसे चारित्रगव्या धुरं
पृष्ठेनोपचितेन नैव वहसे प्रोच्चैरहिंसाभरम् ।

मिथ्या त्वन्निवयं (?) पदाहतिवशाद्धो गाहसे त्वं यत-
श्चेतस्त्वद्गतशङ्क साङ्कृपवन्निन्द्यं परिभ्राम्यसि ॥ ४६ ॥
प्राप्ते सत्कुलजन्ममानवभवे निर्दोपरत्नोपमे
नीरोगादिसमस्तवस्तुनिचये पुण्येन लब्धे सति ।
नोपात्तं किमपि प्रमादवशतस्तत्त्वं त्वया मुक्तये
रे जीवात्र ततोऽतिदुःखविपने संसारचक्रे भ्रमः ॥ ४७ ॥
क्रोधो न्यक्कृतिभाजनं न विहतो नीतो न मानः क्षयं
माया नैव हता हताश नितरां लोभो न संक्षोभितः ।
रे तीव्रोत्कटकूटचित्तवशग स्वान्त त्वया हारितं
हस्तप्राप्तं फलमाशु मानवभवश्रीकल्पवृक्षोद्भवम् ॥ ४८ ॥
बाल्ये मोहमहान्धकारगहने मग्नेन मूढात्मना
तारुण्ये तरुणीसमाहृतहृदा भोगैकसंगेच्छुना ।
वृद्धत्वेऽपि जराभिभूतकरणग्रामेण निःशक्तिना
मानुष्यं किल दैवतः कथमपि प्राप्तं हतं हा मया ॥ ४९ ॥
यस्मै त्वं लघु लङ्घसे जलनिधिं दुष्टाटवीं गाहसे
मित्रं वञ्चयसे विलुम्पसि निजं वाक्यक्रमं मुञ्चसि ।
तद्वित्तं यदि दृश्यते स्थिरतया कस्यापि पृथ्वीतले
रे रे चञ्चलचित्त वित्तहतक व्यावर्तितां (?) मे तदा ॥ ५० ॥
अज्ञानाद्रितटे क्वचित्क्वचिदपि प्रद्युम्नगर्तान्तरे
मायागुल्मतले क्वचित्क्वचिदहो निन्दानदीसंकटे ।
मोहव्याघ्रभयातुरं हरिणवत्संसारघोराटवी-
मध्ये धावति पश्य सत्वरतरं कष्टं मदीयं मनः ॥ ५१ ॥
सच्चारित्रपवित्रदारुरचितं शीलध्वजालंकृतं
गुर्वाज्ञागुणगुम्फनादृढतरं सद्बोधपोतं श्रितः ।
मोहग्राहभयंकरं तर महासंसारवारांनिधिं
यावन्न प्रतिभिद्यते स्तनतटाघातैः कुरङ्गीदृशाम् ॥ ५२ ॥

किं भस्मप्रतिलेपनेन वपुषो धूमस्य पानेन किं
वस्त्रत्यागजुगुप्सया किमनया किं वा त्रिदण्डाप्यहो ।
किं स्कन्धेन नतेन कम्बलभराज्जापस्य किं मालया
वामाक्षीमभिधावमानमनिशं चेतो न चेद्रक्षितम् ॥ ९३ ॥
रोद्धुं वालमृणालतन्तुभिरसौ मत्तेभमुज्जृम्भते
भेत्तुं वज्रमणीञ्शिरीषकुसुमप्रान्तेन संनह्यति ।
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुं वाञ्छति यः सतां पथि खलान्सूक्तैः सुधास्यन्दिभिः॥९४॥
मुक्त्वा दुर्मतिमेदिनीं गुरुगिरा संशील्य शीलाचलं
बद्ध्वा क्रोधपयोनिधिं कुटिलतालङ्कां क्षपित्वा क्षणात् ।
नित्वा मोहदशाननं निधनतामाराध्य वीरव्रतं
श्रीमद्राम इव द्युमुक्तिवनितायुक्तो भविष्याम्यहम् ॥ ९५ ॥
आहारैर्मधुरैर्मनोहरतरैर्हारैर्विहारैर्वरैः
केयूरैर्मणिरत्नचारुशिखरैर्दारैरुदारैश्च किम् ।
प्राणान्पद्मदलाग्रवारितरलाञ्ज्ञात्वा जवाज्जीव रे
दानं देहि विधेहि शीलतपसी निर्वेदमास्वादय ॥ ९६ ॥
ज्ञात्वा बुद्बुदभङ्गुरं धनमिदं दीपप्रकम्पं वपु-
स्तारुण्यं तरलेक्षणाक्षितरलं विद्युच्चलं दोर्बलम् ।
रे रे जीव गुरुप्रसादवशतः किंचिद्विधेहि द्रुतं
दानध्यानतपोविधानविषयं पुण्यं पवित्रोचितम् ॥ ९७ ॥
श्रीखण्डपादपेनेव कृतं स्वं जन्म निष्फलम् ।
जिह्मगानां द्विजिह्वानां संबन्धमनुरुन्धता ॥ ९८ ॥
किं तर्केण वितर्कितेन शतशो ज्ञातेन किं छन्दसा
किं पीतेन सुधारसेन बहुधा स्वाध्यायपाठेन किम् ।
अभ्यस्तेन च लक्षणेन किमहो ध्यानं न चेत्सर्वथा
लोकालोकविलोकनैककुशलज्ञाने हृदि ब्रह्मणः ॥ ९९ ॥

मां बाल्यादपि निर्निमित्तनिविडप्रोद्भूतसख्यश्रियं
दम्भारम्भ विहाय सत्वरतरं दूरान्तरं गम्यताम्।
पश्योन्मीलति मेऽधुना शुभवशाज्ज्ञानोष्णरश्मिप्रभा
प्रालेयोत्करवद्भवन्त(द्भतं त)मनया द्रक्ष्याम्यहं त्वां कथम्॥६०॥
कारुण्यान्न सुधारसोऽस्ति हृदय द्रोहान्न हालाहलं
वृत्तादस्ति न कल्पपादप इह क्रोधान्न दावानलः।
संतोषादपरोऽस्ति न प्रियसुहृल्लोभान्न चान्यो रिपु-
र्युक्तायुक्तमिदं मया निगदितं यद्रोचते तत्त्यज॥ ६१॥
औचित्यांशुकशालिनीं हृदय हे शीलाङ्गरागोज्ज्वलां
श्रद्धाध्यानविवेकमण्डनवतीं कारुण्यहाराङ्किताम्।
सद्बोधाञ्जनरञ्जिनीं परिलसच्चारित्रपत्राङ्कुरां
निर्वाणं यदि वाञ्छसीह परमक्षान्तिप्रियां तद्भज॥ ६२॥
यत्रार्तिर्न मतिभ्रमो न न रतिः ख्यातिर्न नैवोन्नति-
र्न व्याधिर्न धनं.......... न वधो ध्यानं न नाध्येषणा।
नो दास्यं न विलास.........वदनं हास्यं च लास्यं च नो
तत्सांसारिकपुण्यपापरहितं ध्येयं पदं धीधनाः॥ ६३॥
तावद्भानुकराः प्रकाशनपरा यक्षेश्वरोऽप्यर्थवा-
न्संपूर्णेन्दुमुखीप्रिया प्रियमहीमाधुर्यहृद्या च.....।
..........................................................
..........................................................॥ ६४॥
.......................................................... हृदये।
मन्त्ररहस्योद्गारी मन्त्रीव स दूरतस्त्याज्यः॥ ६५॥
धर्मोऽयं निहतः प्रमादवशतः प्राप्तेऽपि मानुष्यके
कार्पण्येन विडम्बितौ सति धने यैरर्थकामावपि।
अत्यन्तं चलचित्तनिग्रहपरैरप्याप्यते वा न वा
मोक्षः शाश्वतिकः प्रसादसदनं तेषां दवीयान्पुनः॥ ६६॥

आकाशेऽपि चिराय ति[ष्ठति] शिला मन्त्रेण तन्त्रेण वा
वाहुभ्यामपि तीर्यते जलनिधिर्वेधाः प्रसन्नो यदा ।
दृश्यन्ते ग्रहयोगतः सुरपथे प्राह्णेऽपि ताराः स्फुटं
हिंसायां पुनराविरस्ति नियतं गन्धोऽपि न श्रेयसः ॥ ६७ ॥

निशानां च दिनानां च यथा ज्योतिर्विभूषणम् ।
सतीनां च यतीनां च तथा शीलमखण्डितम् ॥ ६८ ॥

मायया राजते वेश्या शीलेन कुलबालिका ।
न्यायेन मेदिनीनाथः सदाचारतया यतिः ॥ ६९ ॥

यावद्व्याधिविबाधया विधुरतामङ्गं न संसेवते
यावच्चेन्द्रियपाटवं न हरति क्रूरा जरा राक्षसी ।
तावन्निष्कलनिश्चलामलपदं कर्मक्षयायाधुना
ध्येयं ध्यानविचक्षणैः स्फुटतरं हृत्पद्मसद्मोदरे ॥ ७० ॥

अज्ञानावृतचेतसो मम महाव्यामूढतां ........
कृत्वा धर्मधनं हृतं यदनिशं वाराणसीधूर्तवत् ।
युक्तं तद्विहितं त्वयेदमपि ते युक्तं भवेद्धि द्रुतं
मां पुण्यासगुरुप्रसादमधुना संत्यज्य निर्गच्छ रे ॥ ७१ ॥

तन्नो नागपतेर्भुजंगवनिताभोगोपचारैः परै-
स्तन्नो श्रीसविलाससंगमशतैः सौरैर्मुरारेः किल ।
तन्नो वज्रधरस्य देववनिताक्रीडारसैर्निर्भरै-
र्यत्सौख्यं वत वीतकाममनसां तत्त्वार्थतो योगिनाम् ॥ ७२ ॥

मध्यक्षामतया योषित्तपः क्षामतया यतिः ।
मुखक्षामतया चाश्वो राजते न तु भूषणैः ॥ ७३ ॥

तन्व्या श्रोत्ररसा[यनेन वचसा] सप्रेम संमापितः
सर्पत्कोपविपाकपाटलरुचा संवीक्षितश्चक्षुषा ।
सद्योगान्न तिलाग्रमात्रमपि यः संक्षोभितुं शक्यते
रागद्वेषविवर्जितो विजयते कोऽप्येष योगीश्वरः ॥ ७४ ॥

आताम्रायतलोचनातुरमिदं न्यक्कारवाङ्मन्दितं
बद्धभ्रूकुटिभालभीममधरप्रस्पन्ददुर्दर्शनम् ।
व्यालोलालकसंकुलं कृशतनोः कोपेऽपि कान्तं मुखं
पश्यन्ति स्मरविह्वलीकृतहृदो ही कामिनां मूढता ॥ ७५ ॥
कौशल्यं प्रविलीयते विकलता सर्वाङ्गमाक्षिप्यते
ज्ञानश्रीः प्रलयं प्रयाति कुमतिः प्रागल्भ्यमभ्यस्यति ।
धर्मोऽपि प्रपलायते कलयति स्थेमानमंहः परं
यस्माच्छोकवशात्कथं स विदुषां संसेवितुं युज्यते ॥ ७६ ॥
क कफार्तं मुखं नार्याः क पीयूषनिधिः शशी ।
आमनन्ति तयोरैक्यं कामिनो मन्दबुद्धयः ॥ ७७ ॥
पाशे कुरङ्गनिवहो न पतत्यविद्वा-
न्दाहात्मतामकलयञ्शलभः प्रदीपे ।
जानन्नहं पुनरमून्करिकर्णलोला-
न्भोगांस्त्यजामि न तथापि क एष मोहः ॥ ७८ ॥
ज्ञानमेव परं मित्रं काम एव परः परः ।
अहिंसैव परो धर्मो योषिदेव परा जरा ॥ ७९ ॥
धिक्कंदर्प जगत्त्रयीविजयिनो दोःस्थामविस्फूर्जितं
विद्वान्कः किल तावकीनमधुना व्यालोकतामाननम् ।
दृष्ट्वा यौवनमित्र·······भवान्तर्पञ्जराराक्षसी-
वक्रान्तःपतितं विमुञ्चति न यः कोदण्डकेलिक्रमम् ॥ ८० ॥
तृष्णावारितरङ्गभङ्गविलसत्कौटिल्यवल्लीरुह-
स्तिर्यक्प्रेक्षितवाक्प्रपञ्चकबरीपाशभ्रुवः पल्लवाः ।
यस्यां मान्ति न तुच्छके हृदि ततः स्थानं बहिः कुर्वते
कस्ताश्चञ्चलचक्षुषः कुशलधीः संसेवितुं वाञ्छति ॥ ८१ ॥
रे रे मोहहताश तावकमिदं धिक्पौरुषोज्जृम्भितं
विस्रब्धं भवसागरे किल भवान्संयम्य मां क्षिप्तवान् ।

संप्रत्याप्तगुरूपदेशफलकः पारं प्रयातोऽस्म्यहं
शौटीर्यं तव विद्यते यदधुना दोष्णोस्तदा दर्शय ॥ ८२ ॥
रे कंदर्प किमाततज्यमधुना धत्से धनुस्त्वं मुधा
किं भ्रूलास्यकलासु पक्ष्मलदृशः प्रागल्भ्यमभ्यस्यथ ।
वैराग्याम्बुजिनीप्रबोधनपटुः प्रध्वस्तदोषाकरः
खेलत्येष विवेकचण्डकिरणः कस्त्वादृशामुत्सवः ॥ ८३ ॥
अन्यं प्रियालापपथं नयन्ते किंचित्कटाक्षैरपरं स्पृशन्ति ।
अन्यं हृदा कंचन मन्त्रयन्ते धिग्योषितां चञ्चलचित्तवृत्तिम् ॥ ८४ ॥
याच्ञायै वचनक्रमं रचयतः पादौ परिभ्रान्तये
नेत्रे रोषकषायितानि वदनान्यालोकितुं स्वामिनाम् ।
धातश्चेन्न दयालुता तव हृदि स्थानं ववन्ध क्षणं
तत्किं हन्त परिश्रमोऽपि निकटीभूयं(?) न संपन्नवान् ॥८५॥
रक्षाकृते धनलवस्य विमूढचेता
लो[भाञ्जनः] किमपि संतनुते प्रयत्नम् ।
तल्लक्षकोटिभिरनाप्यमपीदमायुः
कालो निकृन्तति न तन्नु शङ्कतेऽपि ॥ ८६ ॥
बन्धो क्रोध विधेहि किंचिदपरं स्वस्याधिवासास्पदं
भ्रातर्मान भवानपि प्रचलतु त्वं देवि माये व्रज ।
हंहो लोभ सखे यथाभिलषितं गच्छ द्रुतं वश्यतां
नीतः शान्तरसस्य संप्रति लसद्वाचा गुरूणामहम् ॥ ८७ ॥
मनो न वैराग्यतरङ्गितं चेद्वृथा तदा दानतपःप्रयासः ।
लावण्यमङ्गे यदि नाङ्गनानां मुधा तदा विभ्रमवल्गितानि ॥ ८८॥
विश्वाः कलाः परिचिता यदि तास्ततः किं
तप्तं तपो यदि तदुग्रतरं ततः किम् ।
कीर्तिः कलङ्कविकला यदि सा ततः कि-
मन्तर्विवेककलिका यदि नोल्लास ॥ ८९ ॥

स्फूर्जल्लोभकरालवक्त्रकुहरो हुंकारगुञ्जारवः
कामक्रोधविलोललोचनयुगो मायानखश्रेणिभाक्।
स्वैरं यत्र स बम्भ्रमीति सततं मोहाह्वयः केसरी
तां संसारमहाटवीं प्रतिवसन्को नाम जन्तुः सुखी ॥ ९० ॥

एकः स वैवस्वत एव देवः शौटीर्यशाली च महाव्रती च।
पशौ च गीर्वाणपतौ च यस्य विभिन्नमुद्रस्य दृशः पतन्ति ॥९१॥

एतानि तानि मदनज्वलनेन्धनानि
दूरीकुरुष्व मयि वक्रविलोकितानि।
उन्मीलति स ललिताङ्गयधुना स एव
मन्मानसे शुचिविवेककलाविलासः ॥ ९२ ॥

प्रत्यक्षो नरकः स एष वसुधापीठे परायत्तते-
त्येवं पूत्कुरुते जनः प्रतिकलं सर्वोऽपि विद्वानिह।
तन्नारी (?) वशवर्तिनोऽपि विषयान्कण्डूतिकल्पानयं
रोमाञ्चाङ्कुरचर्चिताङ्गलतिकः किं नाम नैवोज्झति ॥ ९३ ॥

ता एवैताः कुवलयदृशः सैष कालो वसन्त-
स्ता एवान्तः शुचिवनभुवस्ते वयं ते वयस्याः।
किं तून्मूलः स खलु हृदये तत्त्वदीपप्रकाशो
येनेदानीं हसति हृदयं यौवनोन्मादलीलाः ॥ ९४ ॥

को देवो वीततमाः कः सुगुरुः शुद्धमार्गसंभाषी।
किं परमं विज्ञानं स्वकीयगुणदोषविज्ञानम् ॥ ९५ ॥

यत्कारुण्यहिरण्यजं न न च यत्सन्मार्गताम्रोद्भवं
नो यत्संयमलोहजन्म न च यत्संतोषमृत्स्नामयम्।
यद्योग्यं न तपोविधानदहनज्वालावलीतेजसां
सिद्धिं याति कथं नृधान्यनिकरस्तस्मिन्कुपात्रे श्रितः ॥ ९६ ॥

हे मोहाहत जीव हुं शृणु वचः श्रद्धास्ति चेत्कथ्यतां
प्राप्तं किंचन सत्फलं भवमहाटव्यां त्वया भ्राम्यता।

भ्रातर्नैव तथाविधं किमपि तन्निर्वाणदं तर्हि किं
शून्यं पश्यसि पङ्गुवन्ननु गतं नोपक्रमे तिष्ठति ॥ ९७ ॥
शौक्ल्ये हंसबकोटयोः सति समे यद्वद्गतावन्तरं
कार्ष्ण्ये कोकिलकाकयोः किल यथा भेदो भृशं भाषिते ।
पैत्ये हेमहरिद्रयोरपि यथा मूल्ये विभिन्नार्घता
मानुष्ये सदृशे तथार्यखलयोर्दूरं विभेदो गुणैः ॥ ९८ ॥
त्वद्दृष्टिपातनिहताः खलु तेऽन्य एव
धैर्यव्रतं सुतनु ये परिमार्जयन्ति ।
अन्ये त्वमी शुचिविवेकपवित्रचित्ता-
स्तत्किं विडम्बयसि मन्मथविभ्रमैः स्वम् ॥ ९९ ॥
संपत्स्यते मम कदाचन तद्दिनं किं
सद्ध्यानरूढमनसः सततं भवेयुः ।
आनन्दबिन्दुविशदानि सुधामयानि
यत्रेक्षितानि मयि मुक्तिमृगेक्षणायाः ॥ १०० ॥
ललितं सत्यसंयुक्तं सुव्यक्तं सततं मितम् ।
ये वदन्ति सदा तेषां स्वयं सिद्धैव भारती ॥ १०१ ॥
सिक्तः श्रीजिनवल्लभस्य सुगुरोः शान्तोपदेशामृतैः
श्रीमन्नागपुरे चकार सदनं श्रीनेमिनाथस्य यः ।
श्रेष्ठी श्रीधनदेव इत्यभिधया ख्यातश्च तस्याङ्गजः
पद्मानन्दशतं(इति) व्यधत्त सुधियामानन्दसंपत्तये ॥ १०२ ॥
संपूर्णेन्दुमुखीमुखे न च न च श्वेतांशुबिम्बोदये
श्रीखण्डद्रवलेपने न च न च द्राक्षारसास्वादने ।
आनन्दः स सखे न च क्वचिदसौ किं भूरिभिर्भाषितैः
पद्मानन्दशते श्रुते किल मया यः स्वादितः स्वेच्छया ॥ १०३ ॥

इति श्रीपद्मानन्दप्रणीतं वैराग्यशतकम् ।

---

## श्रीजिनप्रभसूरिविरचितः

# सिद्धान्तागमस्तवः ।

सावचूरिः ।

ध्यायन्ति श्रीविशेषाय गतावेशा लयेन यम् ।
स्तुतिद्वारा जयश्रीदः श्रीवीरगुरुगो रवः ॥

पुरा श्रीजिनप्रभसूरिभिः प्रतिदिनं नवस्तवनिर्माणपुरःसरं निरवद्याहारग्रहणाभिग्रहवद्भिः प्रत्यक्षपद्मावतीदेवीवचसामभ्युदयिनं श्रीतपागच्छं विभाव्य भगवतां श्रीसोमतिलकसूरीणां स्वशैक्षशिष्यादिपठनविलोकनाद्यर्थं यमकश्लेषचित्रच्छन्दोविशेषादिनवनवभङ्गीसुभगाः सप्तशतीमिताः स्तवा उपदीकृता निजनामाङ्किताः । तेष्वयं सर्वसिद्धान्तस्तवो बहूपयोगित्वाद्विव्रियते—

नत्वा गुरुभ्यः श्रुतदेवतायै सुधर्मणे च श्रुतभक्तिनुन्नः ।
निरुद्धनानावृजिनागमानां जिनागमानां स्तवनं तनोमि ॥ १ ॥

गुरुभ्यः श्रुतदेवतायै सरस्वत्यै सुधर्मणे च पञ्चमगणधराय नत्वा । त्रिषु नतिक्रिया । 'अभिप्रेयत्वाच्चतुर्थी' इति सूत्रेण सम्प्रदानाच्चतुर्थी । श्रुतभक्तिप्रेरितोऽहं निरुद्धा रुद्धा नाना अविरतिकषायादिभिर्बहुविधानां वृजिनानां पापानामागमाः प्रसरणानि यैस्तेषां जिनागमानां श्रीवीरसिद्धान्तानां स्तवनं तनोमि करोमि ॥

सामायिकादिकषडध्ययनस्वरूप-
मावश्यकं शिवरमावदनात्मदर्शम् ।
निर्युक्तिभाष्यवरचूर्णिविचित्रवृत्ति-
स्पष्टीकृतार्थनिवहं हृदये वहामि ॥ २ ॥

अवश्यकरणादावश्यकम् । सामायिकादिकानि सामायिक-चतुर्विंशतिस्तव-वन्दनकप्रतिक्रमण-कायोत्सर्ग-प्रत्याख्यानरूपाणि यानि षडध्ययनानि तत्स्वरूपम् । शिवरमाया (मोक्षलक्ष्म्याः) वदनात्मदर्शं दर्पणतुल्यम् । पुनः किंविशिष्टम् । निर्युक्तिः श्रीभद्रबाहुकृता एकत्रिंशच्छतप्रमाणा । भाष्यं सूत्रार्थप्रपञ्चनम् । वरावचूर्णिरष्टादशसहस्रप्रमाणा पूर्वर्षिविहिता । विचित्रवृत्तिरनुगतार्थकथनं द्वाविंशतिसहस्रप्रमाणम् । एताभिः स्पष्टीकृतोऽर्थनिवहो यस्य तथाविधं हृदये वहामि स्मरामि ॥

युक्तिमुक्तास्पातिनीरं प्रमेयोर्मिमहोदधिम् ।
विशेषावश्यकं स्तौमि महाभाष्यापराह्वयम् ॥ ३ ॥

---

१. स्तोत्रस्यास्यैकमेवाष्टपत्रात्मकं सटीकं पुस्तकं संवेगिसाधुवरश्रीशान्तिविजयमुनीनां सकाशादधिगतम्. तच्च नातिशुद्धं शतवर्षप्राचीनमिवानुमीयते. तस्याधोऽवचूर्ण्यनुरूपं विहितमस्ति.

युक्तय एव मुक्ता मौक्तिकानि तासां निष्पादकत्वात्स्वातिनीरम् । प्रमेयाः पदार्थास्त एवोर्मयः कल्लोलास्तेषां महोदधिम् । महाभाष्यमित्यपर आह्वयो यस्य तद्विशेषावश्यकं स्तौमि ॥

दशवैकालिकं मेरुमिव रोचिष्णुचूलिकम् ।
प्रीतिक्षेत्रं सुमनसां सत्कल्याणमयं स्तुमः ॥ ४ ॥

विकालेनापराह्नरूपेण निर्वृत्तानि वैकालिकानि दशाध्ययनानि यत्र तत् शय्यंभवसूरिकृतं दशवैकालिकं मेरुमिव रोचिष्णू चूलिके इह स्व:चूलिप:रूपे यत्र । पक्षे चत्वारिंशद्योजनमाना । सुमनसामुत्तमानां पक्षे देवानां प्रीतिस्थानम् । सत्कल्याणमयं श्रेयोमयं पक्षे सुवर्णमयं स्तुमः ॥

उद्धामुपोद्धातविकल्पकालभेदप्रभेदप्रतिभेदरूपाम् ।
मिताभिधानाममिताभिधेयां नौम्योघनिर्युक्तिममोघयुक्तिम् ॥ ५ ॥

उद्धां प्रशस्यां मिताभिधानां स्तोकशब्दाममिताभिधेयां बह्वर्थाममोघयुक्तिं सफलयुक्तिमोघनिर्युक्तिं नौमि स्तौमि । किंविशिष्टाम् । उपोद्धातः शास्त्रस्यादिस्तस्य विकल्पा द्वाराणि 'उद्देसे निद्देसे निग्गमे' इत्यादीनि षड्विंशतिः । तत्र विकल्परूपास्तस्य भेदा एकादश नामस्थापनाद्रव्यादयः 'दव्वे अद्धअहाउ अउवक्कमे इत्यादिगाथोक्तास्तेषु षष्ठभेदस्योपक्रमकालस्य प्रभेदौ सामाचार्युपक्रमकालः यथायुष्कोपक्रमकालश्च । तयोः प्रथमस्य त्रयः प्रतिभेदाः ओघसामाचारी इच्छाकारादिदशविधसामाचारी पदविभागसामाचारी च त्रिषु ओघः सामान्यं संक्षेपाभिधानरूपा सामाचारी तद्रूपा ओघनिर्युक्तिः श्रीभद्रबाहुस्वामिना नवमपूर्वात्तृतीयादाचाराभिधवस्तुनो विंशतितमप्राभृतान्निर्व्यूढा सांप्रतिकसाधूनां हितायास्मिन्काले स्थिरीकृता श्रीआवश्यकनिर्युक्तौ गणधरवादस्याग्रे संप्रति च सुखपाठाय पृथग्ग्रन्थरूपा विहितास्ति ताम् ॥

पिण्डविधिप्रतिपत्तावखण्डपाण्डित्यदानदुर्ललिताम् ।
ललितपदश्रुतिमिष्टामभिष्टुमः पिण्डनिर्युक्तिम् ॥ ६ ॥

पिण्डस्याहारस्य विधिर्दोषपरिहारत्वेन विशुद्धस्तज्ज्ञाने संपूर्णकौशल्यवितरणसक्तां ललितानां सुकोमलानां पदानां श्रुतिः श्रवणं तया मिष्टां(मृष्टां) मधुरां पिण्डनिर्युक्तिं वयमभिष्टुमः ॥

प्रवचननाटकनान्दी प्रपञ्चितज्ञानपञ्चकसतत्त्वा ।
अस्माकममन्दतमं कन्दलयतु नन्दिरानन्दम् ॥ ७ ॥

प्रवचनं जिनमतमेव नाटकं तत्र नान्दी द्वादशतूर्यनिर्घोषः । तन्मूलत्वान्नाटकस्य । प्रपञ्चितं प्रकटीकृतं ज्ञानपञ्चकस्य मतिश्रुतावधिमनःपर्ययकेवलज्ञानरूपस्य सतत्त्वं स्वरूपं यया सा नन्दिरस्माकममन्दतमं बहुतरमानन्दं कन्दलयतु वर्धयतु ॥

अनुयोगद्वाराणि द्वाराणीवापुनर्भवपुरस्य ।
जीयासुः श्रुतसौधाधिरोहसोपानरूपाणि ॥ ८ ॥

श्रुतमेव सौध गृहं तदरोहे सोपानरूपाणि अपुनर्भवपुरस्य मोक्षनगरस्य द्वारणीवानुयोगद्वाराणि जीयासुः ॥

अनवमनवमरससुधाह्लादिनीं षट्त्रिंशदुत्तराध्ययिनीम् ।
अर्चामि पञ्चचत्वारिंशतमृषिभाषितानि तथा ॥ ९ ॥

अनवमो रम्यो यो नवमो रसः शान्ताख्यः स एव सुधामृतं तस्य ह्लादिनीं नदीं षट्त्रिंशदान्युत्तराणि प्रधानान्यध्ययनानि [यस्यां] तामहमर्चयामि पूजयामि । तथा पञ्चचत्वारिंशतं श्रीनेमिपार्श्वश्रीवीरतीर्थवर्तिभिर्नारदादिभिः प्रणीतानध्ययनविशेषान् ॥

उच्चैस्तरोदञ्चितपञ्चचूडमाचारमाचारविचारचारु ।
महापरिज्ञास्थनभोगविद्यमाद्यं प्रपद्ये गमनं गजेन्द्रम् ॥ १० ॥

आचारविचारचारु योगानुष्ठानपूर्वं यथा स्यादेवम् आचारप्रतिपादकत्वादाचारा नामायमङ्गमहं प्रपद्ये श्रये । किंविशिष्टम् । उच्चैस्तराः शब्दार्थाभ्यामतिशायिन्य उदञ्चिताः प्रकटीकृता पञ्च चूडा येन तत् । उक्तशेषानुवादिनोऽधिकारविशेषाश्चूडासंज्ञाः । पुनः किंविशिष्टम् । महापरिज्ञानामाध्यायनं तत्रस्था आकाशगामिनीविद्या तस्य । तत एवोद्धृत्य श्रीवज्रस्वामिना प्रभावना कृता ॥

त्रिषष्टिसंयुक्तशतत्रयीमितप्रवाददर्पाद्रिविभेदह्लादिनीम् ।
द्वयश्रुतस्कन्धमयं शिवश्रिये कृतस्पृहः सूत्रकृदङ्गमाद्रिये ॥ ११ ॥

श्रुतस्कन्धद्वयरूपं सूत्रकृदङ्गं शिवश्रिये कृतस्पृहोऽहमाद्रिये आश्रयामि । किंविशिष्टम् । त्रिषष्ट्यधिकशतत्रयीमिता ये प्रवादिनः क्रियावादिप्रभृतयस्तेषां दर्पाद्रिविभेदे ह्लादिनीं वज्रसमम् ॥

स्थानाङ्गाय दशस्थानस्थापिताखिलवस्तुने ।
नमामि कामितफलप्रदानसुरशाखिने ॥ १२ ॥

कामितफलप्रदानसुरशाखिने तिष्ठन्ति प्रतिपाद्यजीवादयः पदार्था [येषु] इति स्थानान्यधिकारविशेषाः । तथाहि—'तनुइन्दा·················कम्म बन्धन्ति' इत्यादि । एवमेतेषु दशस्थानेषु स्थापितान्यखिलवस्तूनि यत्र तस्मै स्थानाङ्गायाहं नमामि । 'विवक्षातः कारकाणि भवन्ति' इति न्यायात्स्थानाङ्गायेति संप्रदानम् ॥

तत्तत्संख्याविशिष्टार्थप्ररूपणपरायणम् ।
संस्तुमः समवायाङ्गं समवायैः स्तुतं सताम् ॥ १३ ॥

तास्ता एकादिदशान्ताः संख्यास्ताभिर्विशिष्टा येऽर्थास्तेषां प्ररूपणे कथने तत्र परायणं तत्परं सतां समवायैः समूहैः स्तुतं समवायाङ्गं वयं स्तुमः ॥

या पट्त्रिंशत्सहस्रान्प्रतिविधिसजुषां बिभ्रती प्रश्नवाचां
चत्वारिंशच्छतेषु प्रथयति परितः श्रेणिमुद्देशकानाम् ।
रङ्गद्भङ्गोत्तरङ्गानयगमगहना दुर्विगाहा विवाह-
प्रज्ञप्ती पञ्चमाङ्गं जयति भगवती सा विचित्रार्थकोपः ॥ १४ ॥

या प्रतिविधिरुत्तरं तेन सहितानां प्रश्नवाचां पट्त्रिंशत्सहस्रान्बिभ्रती दधती या चत्वारिंशच्छतेष्वधिकारविशेषेषूद्देशकानां श्रेणिं परितः सर्वतः प्रथयति सा विवाहप्रज्ञप्ती नाम्नी पञ्चमाङ्गं रङ्गन्तो ये भङ्गा रचनाविशेषास्तैरुत्तरङ्गा उत्कल्लोला तया युक्तयां गमाः सदृशपाठास्तैर्गहना ग्रन्थिला अकुशलैर्दुर्विगाहा विचित्रार्थकोपो जयति । भगवतीति पूज्याभिधानम् ॥

कथानकानां यत्रार्धचतस्रः कोटयः स्थिताः ।
सोत्क्षिप्तादिज्ञातहृद्या ज्ञातधर्मकथाः श्रये ॥ १५ ॥

यत्रार्धचतस्रः कथानकानां कोटयः स्थिता सा ज्ञातधर्मकथा नाम षष्ठमङ्गमुत्क्षिप्तादिभिर्ज्ञातैर्दृष्टान्तैर्हृद्या श्रियेऽस्तु (श्रये) ॥

आनन्दादिश्रमणोपासकदशकेतिवृत्तसुभगार्थाः ।
विशदामुपासकदशा भावदृशं मम दिशन्तु सदा ॥ १६ ॥

आनन्दादयः श्रमणोपासकास्तेषां दशकं तस्येतिवृत्तानि चरितानि तैः सुभागार्थां उपासकदशा नाम सप्तमाङ्गं विशदां भावदृशं मम सदा दिशन्तु ॥

महर्षिमहासतीनां गौतमपद्मावतीपुरोगाणाम् ।
अधिकृतशिवान्तसुकृताः स्मरतोच्चैरन्तकृद्दशाः कृतिनः ॥ १७ ॥

गौतमपद्मावतीप्रमुखाणां महर्षीणां महासतीनामधिकृतानि प्रकटितानि शिवान्तानि सुकृतानि यासु ता अन्तकृद्दशा हे कृतिनः, उच्चैर्यूयं स्मरत ॥

गुणैर्यदध्ययनकलापकीर्तिता अनुत्तरा प्रशमिषु जालिमुख्यकाः ।
अनुत्तरश्रियमभजन्ननुत्तरोपपातिकोपपददशाः श्रयामि ताः ॥१८॥

यदध्ययनकलापे कीर्तिताः कथिताः प्रशमिषु ऋषिषु गुणैश्चारित्रादिभिरनुत्तराः प्रधानाः । जालिमुख्यका जालिर्नाम ऋषिः स एव मुख्यो येषां ते जालिमुख्यकाः । स्वार्थे कप्रत्ययः । अनुत्तराणि विजयादीनि पञ्चविमानानि तेषां श्रियमभजन् । अनुत्तरोपपातिकमित्युपपदं पूर्वपदं यासां ता अनुत्तरोपपातिकदशा अहं श्रयामि ॥

अङ्गुष्ठाद्यवतरदिष्टदेवतानां विद्यानां भवनमुदात्तवैभवानाम् ।
निर्णीताश्रयविधिसंवरस्वरूपा प्रश्नव्याकरणदशा दिशन्तु शं नः ॥१९॥

अङ्गुष्ठादिषु आदिशब्दाद्दीपजलादिष्ववतारोऽवतरणं तेन दिष्टाः कथिता देवता यासां तासामुदात्तवैभवानामुत्कृष्टमहिम्नां विद्यानां भवनं स्थानम् । आश्रवविधिः कर्मपुद्गलानां संवरस्तन्निरोधः । निर्णीतं तयोः स्वरूपं यासु ताः प्रश्नव्याकरणदशा दशमाङ्गं नोऽस्माकं शं सुखं दिशतु ॥

ज्ञातैर्मृगापुत्रसुबाहुवादिभिः शासद्विपाकं सुखदुःखकर्मणाम् ।
द्विः पङ्क्तिसंख्याध्ययनोपशोभितं श्रीमद्विपाकश्रुतमस्तु नः श्रिये ॥ २० ॥

मृगापुत्रसुबाहुवादिभिर्दृष्टान्तैः सुखदुःखकर्मणां विपाकं परिणामं शासच्छिक्षयत् । ज्ञापयदित्यर्थः । केषाम् । भव्यजीवानामिति गम्यम् । विंशत्यध्ययनालंकृतं श्रीमद्विपाकश्रुतमेकादशमङ्गं नः श्रियेऽस्तु । सुबाहुवादिभिरित्यत्र 'इवर्णादेः' इत्यनेन सूत्रेण परतो वत्वम् । एतान्यप्येकादशान्यङ्गानि श्रीसुधर्मस्वामिना रचितानि । अन्येषां गणभृतां पूर्वनिर्वृतत्वेन सर्वगणधरशिष्याणामेतद्वाचनाग्रहणात् । अत एवादौ श्रीसुधर्मा नमस्कृतः ॥

प्रणिधाय यत्प्रवृत्ता शास्त्रान्तरवर्णनातिदेशततिः ।
नमतोपपातिकं तत्प्रकटयदुपपादवैचित्रीम् ॥ २१ ॥

यत्प्रणिधाय स्मृत्वा शास्त्रान्तरेषु पदार्थवर्णनातिदेशनाततिः श्रेणिः प्रवृत्ताः । अतिदेशोऽन्यत्र विस्तरेण प्ररूपितस्य वस्तुनः संक्षेपेण कथनम् । तदुपपातिकमाचाराङ्गोपाङ्गं देवनारकाणामुपपाद उत्पादस्तस्य वैचित्रीं प्रकटयत् हे विद्वांसः, यूयं नमत । आचाराङ्गस्य शास्त्रपरिज्ञाध्ययनाख्ये द्वे शतके । सूत्रमिदं 'एवमेगे सिनोनायं भवइ' इत्यादि । अत्र सूत्रे यदौपपातिकत्वमात्मनो निर्दिष्टं तदत्र प्रपञ्च्यत इत्यर्थः । अङ्गस्योपस्थित उपाङ्गम् ॥

सूर्याभवैभवविभावनहृष्टतीर्थ-
प्रश्नादनन्तरमिनाननिर्गतेन ।
केशिप्रदेशिचरितेन विराजि राज-
प्रश्नीयमिद्धमुपपत्तिशतैर्महामि ॥ २२ ॥

सूर्याभदेवस्य वैभवमृद्धिस्तस्य विभावनेनेक्षणेन हृष्टं यत्तीर्थं प्रथमगणधरश्चतुर्विधः संघो वा तस्य प्रश्नात्पृच्छाया अनन्तरमिनस्य श्रीवीरस्याननं मुखं ततो निर्गतेन । केशी गणभृत् प्रदेशी च राजा तयोश्चरितेन विराजि शोभि । उपपत्तिशतैर्युक्तिशतैरिद्धं दीप्तं राजप्रश्नीयं सूत्रकृदुपाङ्गमहं महामि । प्रदेशी केशिना प्रतिबोधितो देवत्वमाप्य श्रीवीरं वन्दितुं समवसृतौ गतः तत्रात्यद्भुतं तस्य तेजो वीक्ष्य श्रीगौतमेन प्रश्नः कृतः कोऽयं देवोऽसौ किमित्ययमुत्पन्न इति ॥

जीवाजीवनिरूपिद्वेधाप्रतिपत्तिनवककमनीयम् ।
जीवाभिगमाध्ययनं ध्यायेमासुगमगमगहनम् ॥ २३ ॥

जीवाजीवनिरूपिण्यौ या द्वेधा द्विप्रकाराः प्रतिपत्तयोऽधिकारास्तासां नवकेन रम्यम् । असुगमा विषमा ये गमास्तैर्गहनं जीवाभिगमाध्ययनं स्थानाङ्गोपाङ्गं ध्यायेम । जीवानामुपलक्षणादजीवानामप्यभिगमो ज्ञानं यत्र तत् ॥

षट्त्रिंशता पदैर्जीवाजीवभावविभावनीम् ।
प्रज्ञापनां पनायामि श्यामार्यस्यामलं यशः ॥ २४ ॥

षट्त्रिंशता पदैरधिकारैर्जीवाजीवभावप्ररूपिकां प्रज्ञापनां समवायाङ्गोपाङ्गं पनायामि स्तौमि । श्यामार्यस्य कालिकाचार्यस्यामलं यशः । तत्र तदधिकारात् ॥

विवृताद्यद्वीपस्थितिजिनजनिमहचक्रिदिग्विजयविधये ।
भगवति जम्बूद्वीपप्रज्ञप्ते तुभ्यमस्तु नमः ॥ २५ ॥

हे भगवति, जम्बूद्वीपप्रज्ञप्ते, पञ्चमाङ्गोपाङ्ग·········विवृता प्रकटिता आद्यद्वीपस्य स्थितिर्जिनजन्ममहश्चक्रिणो दिग्विजयविधिश्च यया सा । तुभ्यं नमोऽस्तु ॥

प्रणमामि चन्द्रसूर्यप्रज्ञप्ती यमलजातके नव्ये ।
गुम्फवपुषेव नवरं नातिभिदार्थात्मनापि ययोः ॥ २६ ॥

चन्द्रसूर्यप्रज्ञप्ती चन्द्रसूर्यविचारप्रतिपादके यमलजातके सहजाते नवरं केवलं गुम्फवपुषैव गुम्फेनैव नव्ये भिन्नग्रन्थरूपे अहं प्रणमामि । ययोरर्थात्मनापि नातिभिदा भेदः । अपिशब्दाच्छब्दतोऽपि ॥

कालादिकुमाराणां महाहवारम्भसंभृतैर्दुरितैः ।
दर्शितनरकातिथ्या निरयावलिका विजेषीरन् ॥ २७ ॥

कालादिदशकुमाराणां चेटककोणिकवैरे महाहवारम्भसंभृतैर्महायुद्धारम्भोपार्जितैः पापैर्दर्शितं नरकातिथ्यं नरकभवप्राप्तिर्याभिस्ता निरयावलिका विजेषीरन्विजयन्ताम् । तत्र कालादिकुमाराणां वर्णनात् ॥

पद्मादयः कल्पवतंसभूयमुपेयिवांसः सुकृतैः शमीशाः ।
यत्रोदिताः श्रेणिकराजवंश्या उपास्महे कल्पवतंसिकास्ताः ॥ २८ ॥

श्रेणिकराजवंश्याः पद्मादयः शमीशा ऋषयः सुकृतैः कल्पवतंसभूयं देवत्वमुपेयिवांसः प्राप्ता यत्रोदिताः कथितास्ताः कल्पवतंसिका वयमुपास्महे । ············ ॥

चन्द्रसूर्यबहुपुत्रिकादिभिर्यत्र संयमविराधनाफलम् ।
भुज्यमानमगृणाद्गणाधिपः पुष्पिकाः शमभिपुष्पयन्तु नः ॥ २९ ॥

यत्र संयमविराधनायाः फलं चन्द्रसूर्यौ राजानौ पूर्वभवे गृहीतदीक्षौ बहुगुणविराधना- त्वा पूर्वभवे प्रव्रजिता……'अनुभावमगाद् ताः पुष्पिकाः शं सुखमभिपुष्णन्तु तुष्यन्तु। यत्र अन्येऽपिङ्गिनो महदासत्यागेन संयमनात्पुष्पिता वर्णिताः (?)॥

श्रीह्रीप्रभृतिदेवीनां चरित्रं यत्र सूत्रितम्।
ताः सन्तु मे प्रसादानुकूलिकाः पुष्पचूलिकाः॥ ३०॥

श्रीह्रीप्रभृतिदेवीनां चरित्रं परिवारादिस्वरूपं यत्र सूत्रितं कथितं ताः पुष्पचूलिका मे मम प्रसादानुकूलिकाः प्रसादतत्पराः सन्तु॥

वृष्णीनां निषधादीनां द्वादशानां यशःस्रजः।
पुष्णन्तु भक्तिनिष्ठानां दशां वृष्णिदशाः शुभाम्॥ ३१॥

निषधादीनां राज्ञां वृष्णीनामन्धक……वृष्णिदशा भक्तिपरायणानां शुभां दशा पुष्णन्तु॥

नन्द्यनुयोगद्वारयोः पूर्वं कथनादशोद्देशेन त्रयोदशप्रकीर्णकानि स्तौति—

वन्दे मरणसमाधिं प्रत्याख्याने महातुरोपपदे।
संस्तारचन्द्रवेध्यकभक्तपरिज्ञाचतुःशरणम्॥ ३२॥
वीरस्तवदेवेन्द्रस्तवगच्छाचारमपि च गणिविद्याम्।
द्वीपाब्धिप्रज्ञप्तिं तण्डुलवैतालिकं च नुमः॥ ३३॥

अहं वन्दे मरणसमाधिम्। प्रत्याख्याने महा इति आतुर इत्युपपदे ययोस्ते। महाप्रत्याख्यानमातुरप्रत्याख्यानं च। संस्तार-चन्द्रवेध्यक-भक्तपरिज्ञा-चतुःशरणानि संस्तारः। वीरस्तवं-देवेन्द्रस्तवं-गच्छाचारं गणिविद्यां द्वीपाब्धिप्रज्ञप्तिं तन्दुलवैतालिकं च वयं नुमः। सर्वेषां नामार्थाः पाक्षिकसूत्रावचूर्णौ सन्ति॥

शिवाध्वदीपायोद्घातानुद्घातारोपणात्मने।
चित्रोत्सर्गापवादाय निशीथाय नमोनमः॥ ३४॥

मोक्षमार्गदीपाय उद्घातो गुरुप्रायश्चित्तविशेषः। अनुद्घातस्तु तद्विपरीतः। लघ्वित्यर्थः। तयोरारोपणमुचितस्थाने प्रयोजनं तदात्मा स्वरूपं यस्य स तस्मै उद्घातानुद्घातारोपणात्मने। चित्रा विविधा उत्सर्गापवादा यत्र। उत्सर्गो मुख्यमार्गः। अपवादः कारणे प्रतिषिद्धसेवा। निशीथमर्धरात्रस्तद्वद्रहोभूतं यदध्ययनं तन्निशीथं तस्मै निशीथाचाराङ्गपञ्चमचूडायै नमोनमः॥

निर्युक्तिभाष्यप्रमुखैर्निबन्धैः सहस्रशाखीकृतवाच्यजातम्।
दशाश्रुतस्कन्धमनागमन्यैः परैः सकल्पव्यवहारमीडे॥ ३५॥

निर्युक्तिभाष्यप्रमुखैर्निबन्धैः सहस्रशाखीकृत विस्तारितं वाच्यजातं यत्र तं दशाश्रु-

यनानां श्रुतस्कन्धं दशाश्रुतस्कन्धं परैः परमतिभिरनात्तगन्धम्। कल्पः साध्वाचारस्तत्प्रतिपादको ग्रन्थोऽपि कल्पः। व्यवहारः प्रतीतार्थस्तत्प्रतिपादको ग्रन्थोऽपि व्यवहारः। ताभ्यां सह वर्तते यः स कल्पव्यवहारस्तमीडे स्तुवे॥

षट्सप्तपङ्क्तिविंशतिपड्गुणसप्तप्रकारकल्पानाम्।
विस्तारयिता कल्पितफलदः स्तात्पञ्चकल्पो नः॥ ३६॥

षट् सप्त पङ्क्तिर्दश विंशतिः षड्गुणसप्त द्विचत्वारिंशत् एतत्प्रकारा ये कल्पास्तेषां विस्तारयिता पञ्चकल्पो नोऽस्माकं कल्पितफलदो वाञ्छितफलप्रदः स्तात्॥

लेभे यद्व्यवहारेणाधुनान्त्येनापि मुख्यता।
तं जीतकल्पमाकल्पकल्पं तीर्थश्रियः श्रये॥ ३७॥

अन्त्येनापि यद्व्यवहारेण यदाचारेणाधुना मुख्यता लेभे। एतदाधारेणैव प्रायश्चित्तविधिप्रवृत्तेः। तं जीतकल्पं तीर्थश्रियः शासनरमाया आकल्पकल्पं वेषतुल्यं श्रये। व्यवहाराः पञ्च। आगमः श्रुतमाज्ञा धारणा जीतं चेति सन्ति। ·············· । एवं जीतव्यवहारोऽन्त्यः॥

अञ्चामि पञ्चघनवप्रमाणमाचाम्लसाध्यं कुमतैरबाध्यम्।
महानिशीथं महिमौषधीनां निशीथिनीशं शिववीथिभूतम्॥ ३८॥

पञ्चघनवतिः पञ्चचत्वारिंशत् तत्प्रमाणैराचाम्लैः (?) साध्यम्। कुमतैरबाध्यम्। महिमान ओषध्यस्तासां निशीथिनीशं चन्द्रम्। वृद्धिप्रापकत्वात्। मोक्षमार्गभूतं महानिशीथमञ्चामि पूजयामि॥

निर्युक्तिभाष्यवार्तिकसंग्रहणीचूर्णिटिप्पनकटीका।
सर्वेषामप्येषां चेतसि निवसन्तु नः सततम्॥ ३९॥

निर्युक्तिः सूत्रोक्तार्थभेदप्ररूपिका। भाष्यं सूत्रोक्तार्थप्रपञ्चकम्। वार्तिकमुक्तानुक्तदुरुक्तार्थानां चिन्ताकारि। संग्रहणी सूत्रार्थस्य संग्राहिका। चूर्णिरवचूर्णिः। टिप्पनकं विषमपदव्याख्या। टीका निरन्तरव्याख्या। एता एषां सर्वेषामपि पूर्वोक्तग्रन्थानां नश्चेतसि सततं निवसन्तु॥

परिकर्मसूत्रपूर्वानुयोगगतपूर्वचूलिकाभेदम्।
ध्यायामि दृष्टिवादं कालिकमुत्कालिकं श्रुतं चान्यत्॥ ४०॥

परिकर्म सप्तभेदम्। सूत्राणि द्वादशभेदानि। पूर्वानुयोगो द्विधा प्रथमानुयोगः कालानुयोगः। प्रथमे जिनचक्रिदशारचरितानि। काल्यानुयोगेऽर्थतो जिनैः शब्दतो गणधरैश्च पूर्वं रचितत्वात् पूर्वाणि चतुर्दशापि पूर्वगतम्। चूलिका उक्तशेषवाप्पा (?)। एते पञ्च भेदा यस्य तम्। दृष्टयो दर्शनानि तासां वदनं दृष्टिवादस्तं ध्यायामि। च पुनर-

न्यत्कालिकमगाढायोगसाध्यमुत्कालिकमनागाढायोगसाध्यं ध्यायामि । श्रुतं हि द्विधा— अङ्गप्रविष्टमनङ्गप्रविष्टं च । ......... ॥

यस्या भवन्त्यवितथा अद्याप्येकोनषोडशादेशाः ।
सा भगवती प्रसीदतु ममाङ्गविद्यानवद्यविधिसाध्या ॥ ४१ ॥

यस्या अद्याप्येकोनषोडश पञ्चदशादेशाः स्वप्नादिष्वतीतानागतवर्तमानकथनान्यवितथाः सत्या भवन्ति सा अङ्गविद्या भगवती अनवद्यविधिसाध्या मम प्रसीदतु ॥

वन्दे विशेषणवतीं संमतिनयचक्रवालतत्त्वार्थान् ।
ज्योतिष्करण्डसिद्धप्राभृतवसुदेवहिण्डींश्च ॥ ४२ ॥

विशेषणवती सप्त । एतान्ग्रन्थानहं वन्दे ॥

कर्मप्रकृतिप्रमुखाण्यपराण्यपि पूर्वसूरिचरितानि ।
समयसुधाम्बुधिपृषतान्परिचिनुमः प्रकरणानि चिरम् ॥ ४३ ॥

कर्मस्वरूपप्रतिपादको ग्रन्थः कर्मप्रकृतिः । तत्प्रमुखाण्यपराण्यप्यनुक्तानि पूर्वसूरिचरितानि प्रकरणानि चिरं परिचिनुमः सुपरिचितानि कुर्मः । सिद्धान्तोदधिबिन्दुमायाणि ॥

व्याकरणच्छन्दोलंकृतिनाटककाव्यतर्कगणितानि ।
सम्यग्दृष्टिपरिग्रहपूतं जयति श्रुतज्ञानम् ॥ ४४ ॥

व्याकरणादिकं मिथ्यादृग्भिः कृतमपि सम्यग्दृष्टयो देवास्तैः परिग्रहः स्वीकृतिस्तेन पूतं श्रुतज्ञानं जयति ॥

सर्वश्रुताभ्यन्तरगां कृतैनस्तिरस्कृतिं पञ्चनमस्कृतिं च ।
तीर्थप्रवृत्तेः प्रथमं निमित्तमाचार्यमन्त्रं च नमस्करोमि ॥ ४५ ॥

कृतपापतिरस्कारां सर्वसिद्धान्तमध्यगां पञ्चनमस्कृतिं पञ्चनमस्कारं शासनप्रवृत्तेः प्रथमं निमित्तमाचार्यमन्त्रं च नमस्करोमि ॥

इति भगवतः सिद्धान्तस्य प्रसिद्धफलप्रथां
गुणगणकथां कण्ठे कुर्याज्जिनप्रभवस्य यः ।
वितरतितरां तस्मै तोषाद्वरं श्रुतदेवता
स्पृहयति च सा मुक्तिश्रीस्तत्समागमनोत्सवम् ॥ ४६ ॥

इत्यमुना प्रकारेण भगवतः सिद्धान्तस्य जिनप्रभवस्य जिनप्रणीतस्य यः पुरुषो गुण............माहात्म्यादयस्तेषां गणः समूहस्तस्य कथां जल्पनमेतत्स्तवरूपां कण्ठे कुर्यात्पठति । कथंभूताम् । प्रसिद्धा सर्वविज्ञाता फलानां 'कुमारविहारे पट्टनगरे'

वृतं महापुण्डरीकं देवताधिष्ठितं सरस्यास्ते तच्च केनापि ग्रहीतुं न शक्यते । राज्ञोक्तं य एतदानयति तद्धर्ममहं प्रतिपद्य इति । यदा परतीर्थिकैरुपक्रमेणाप्यादातुं न शक्तं मन्त्रिणा जैनार्षिराकारितः । तेन च सचित्तजलास्पर्शिना (?) त्रिः प्रदक्षिणीकृत्य पालिस्थेनैव 'उप्पाहि पुण्डरीया' इत्यादि पुण्डरीकाध्ययनं पेठे । ततस्तत्पुण्डरीकमुत्प्लुत्य राज्ञोऽङ्के पपात । तदनु सपरिकरो राजा जैनोऽजनि ।' इत्यादीनां प्रथा विस्तारो यस्यास्तां प्रसिद्धफलप्रथाम् । तस्मै श्रुतदेवता वरं वितरति दत्ते । सा मुक्तिश्रीस्तत्समागमनोत्सवं स्पृहयति । अत्र पूर्वार्धे जिनप्रभवस्येति सिद्धान्तविशेषणेन कविरौद्धत्यपरिहाराय गुप्तं जिनप्रभेति स्वनामाभिहितवान् ॥

आदिगुप्ताभिधानस्य गुरोः पादप्रसादतः ।
पदविच्छेदरूपेयं विवृतिर्लिखिता मिता ॥

इति श्रीजिनप्रभविरचितः सावचूरिः सिद्धान्तागमस्तवः ।

## आत्मनिन्दाष्टकम् ।

श्रुत्वा श्रद्धाय सम्यक्छुभगुरुवचनं वेश्मवासं निरस्य
प्रव्रज्याथो पठित्वा बहुविधतपसा शोषयित्वा शरीरम् ।
धर्मध्यानाय यावत्प्रभवति समयस्तावदाकस्मिकीयं
प्राप्ता मोहस्य धाटी तडिदिव विषमा हा हताः कुत्र यामः ॥ १ ॥

एकेनापि महाव्रतेन यतिनः खण्डेन भग्नेन वा
दुर्गत्यां पततो न सोऽपि भगवानीष्टे स्वयं रक्षितुम् ।
हत्वा तान्यखिलानि दुष्टमनसो वर्तामहे ये वयं
तेषां दण्डपदं भविष्यति कियज्जानाति तत्केवली ॥ २ ॥

कट्यां चोलपटं तनौ सितपटं कृत्वा शिरोलुञ्चनं
स्कन्धे कम्बलिकां रजोहरणकं निक्षिप्य कक्षान्तरे ।
वक्त्रे वस्त्रमथो विधाय ददतः श्रीधर्मलाभाशिषं
वेषाडम्बरिणः स्वजीवनकृते विद्मो गतिं नात्मनः ॥ ३ ॥

भिक्षापुस्तकवस्त्रपात्रवसतिप्रावारलुब्धा यथा
नित्यं मुग्धजनप्रतारणकृते कष्टेन खिद्यामहे ।

१. पुस्तकेऽवचूरिकृतो नाम नोपालभ्यम्. २. एतदष्टकमस्मभ्यं बृहत्खरतरगच्छमण्डनायमानजङ्गमयुगप्रधानभट्टारकश्री १०६ श्रीपूज्यजिनमुक्तिसूरिभिः सांप्रतं जयपुरमलङ्कुर्वद्भिर्दत्तमास्ति. तत्र च पुस्तके कर्तुर्नाम नास्ति.

आत्मारामतया तथा क्षणमपि प्रोज्झ्य प्रमादद्विपं
स्वार्थाय प्रयतामहे यदि तदा सर्वार्थसिद्धिर्भवेत् ॥ ४ ॥
पाखण्डानि सहस्रशो जगृहिरे ग्रन्था भृशं पेठिरे
लोभाज्ञानवशात्तपांसि बहुधा मूढैश्चिरं तेपिरे ।
क्वापि क्वापि कथंचनापि गुरुभिर्भूत्वा मदो भेजिरे
कर्मक्लेशविनाशसंभवविमुख्या(मुखा)न्यद्यापि नो लेभिरे ॥ ५ ॥
किं भावी नारकोऽहं किमुत बहुभवी दूरभव्यो न भव्यः
किं वाहं कृष्णपक्षी किमचरमगुणस्थानकं(?)कर्मदोषात् ।
वह्निज्वालेव शिक्षा व्रतमपि विषवत्खड्गधारा तपस्या
स्वाध्यायः कर्णसूची यम इव विषमः संयमो यद्विभाति ॥ ६ ॥
वस्त्रं पात्रमुपाश्रयं बहुविधं भैक्षं चतुर्धौषधं
शय्यापुस्तकपुस्तकोपकरणं शिष्यं च शिक्षामपि ।
गृह्णीमः परकीयमेव सुतरामाजन्मवृद्धा वयं
यास्यामः कथमीदृशेन तपसा तेषां हहा निष्क्रयम् ॥ ७ ॥
अन्तर्मत्सरिणां बहिः शमवतां प्रच्छन्नपापात्मनां
नद्यम्भःकृतशुद्धिमद्यपवणिग्दुर्वासनाशात्मिनाम्(?) ।
पाखण्डव्रतधारिणां बकदृशां मिथ्यादृशामीदृशां
बद्धोऽहं धुरि तावदेव चरितैस्तन्मे हहा का गतिः ॥ ८ ॥
येषां दर्शनवन्दनप्रणमनस्पर्शप्रशंसादिना
मुच्यन्ते तमसा निशा इव सिते पक्षे प्रजास्तत्क्षणात् ।
तादृशो अपि सन्ति केऽपि मुनयस्तेषां नमस्कुर्महे
संविग्ना वयमात्मनिन्दनमिदं कुर्मः पुनर्बोधये ॥ ९ ॥
रागो मे स्फुरति क्षणं क्षणमथो वैराग्यमुज्जृम्भते
द्वेषो मां भजति क्षणं क्षणमथो मैत्री समालिङ्गति ।
दैन्यं पीडयति क्षणं क्षणमथो हर्षोऽपि मां बाधते
कोऽयेयं कृपणोऽकृपापरिवृतः(?) कार्यं हहा कर्मभिः ॥ १० ॥

इत्यात्मनिन्दाष्टकम् ।

श्रीजिनवल्लभसूरिविरचितं

समसंस्कृतप्राकृतं

## श्रीमहावीरस्वामिस्तोत्रम्[1] ।

भावारिवारणनिवारणदारुणोरु-
कण्ठीरवं मलयमन्दरसारधीरम् ।
वीरं नमामि कलिकालकलङ्कपङ्क-
संभारसंहरणतुङ्गतरङ्गतोयम् ॥ १ ॥
वाढं विसारिगरिमा महिमा तवेह
वुद्धो न देवगुरुणा न पुरंदरेण ।
तं कोऽवगन्तुमखिलं जडिमालयोऽह-
मिच्छामि किं तु तव देव गुणाणुमेव ॥ २ ॥
सन्तो गुणा गुणिगुरो तव हासहंस-
नीहारहारधवला वहुलीभवन्ति ।
ते सोमसूरहरिहीरविरञ्चिवुद्ध-
मायाविदेवनिवहेन मलीमसा वा ॥ ३ ॥
देवं भवन्तमवहाय दुरन्तमोह-
संछन्नवुद्धिमिहिरा इह भूरिकालम् ।
संसारनीरनिलये वहु संसरन्तो
विन्दन्ति जन्तुनिवहा नहि सिद्धिभावम् ॥ ४ ॥
सासूयसंगमसुरोरुसमृद्धदम्भ-
संरम्भसंतमससंचयचण्डभासम् ।
हिंसासरोरुहतमीरमणं चिरोढा-
हंकारकन्दलदलीकरणासिदण्डम् ॥ ५ ॥
वन्देऽहमिन्दुदलभालममन्दभद्द(?)-
संदोहमन्दिरवरं दरकन्दकोलम् ।

१. स्तोत्रस्यास्यैकमेव पुस्तकं संविग्नसाधुवरश्रीशान्तिविजयमुनिभिरस्मभ्यं दत्तम्. पुस्तकान्तरं टीका वा नोपलभ्येति क्वचित्क्वचित्संदेह वर्तते.

गम्भीरसंभवजरामरणोरुनीर-
संसारसागरतरीकरणिं च वीरम् ॥ ६ ॥ (युग्मम्)

उद्दामकामभरभङ्गुरमङ्गभङ्ग-
संसङ्गबन्धुरसुरोरुहभारखिन्नम् ।
देहं सलीलपरिरिङ्खणमञ्जुशिञ्जि-
मञ्जीरचारुचरणं सरसं वहन्ती ॥ ७ ॥

संगेयताललयचञ्चुरचारचारी-
संचारिणी करणबन्धकलासु सज्जा ।
उन्नालनीररुहकोमलबाहुवल्ली
भल्लीव विद्धबहुकामिकुरङ्गसंघा ॥ ८ ॥

हेलाविलोलमणिकुण्डललीढगल्ला
कङ्केल्लिपल्लवकरा वरकम्बुकण्ठी ।
केलीललामरमणी रमणीयहावा
नालं निहन्तुमिह ते विमलाभिसंधिम्॥९॥(विशेषकम्)

संचारिकिंनरगणारववेणुवीणा-
संरावभिन्नकलगेयरवाभिरामा ।
आकालभाविकुगुरूहकुधीकुदेव-
संबन्धबुद्धहरणी तव देव वाणी ॥ १० ॥

संदेहदावजलवाहमजीवजीव-
भावावभासतरणिं भवसिन्धुनावम् ।
आगामिकेवलरमातरुणीविवाहा
देवागमं तव नरा विमला महन्ति ॥ ११ ॥

देवा महापरिमलं तरलालिजाल-
झंकारहारि तव वीर सभासु भूरि ।
फुल्लारविन्दनवसुन्दरसिन्दुवार-
मन्दारकुन्दकपरं कुसुमं किरन्ति ॥ १२ ॥

निःसीमभीमभवसंभवरूढगूढ-
संमोहभूवलयदारणसारसीरम् ।
वीरं कुवासमलहारिसुवारिपूर-
मुत्तुङ्गमारकरिकेसरिणं नमामि ॥ १३ ॥
भिन्दन्तमन्तरणकारणमन्तरायं
संरुद्धरोगसमवायमलोभमायम् ।
उच्छिन्नमोहतिमिरावरणावसायं
वीरं नमामि नवहेमसमिद्धकायम् ॥ १४ ॥
वन्दारुवासवसुरासुरभासुरालं-
कारामलच्छविपरागसमुद्धराणि ।
सेवामि ते चरणवारिरुहाणि भूरि-
संदेहरेणुहरणोरुसमीर वीर ॥ १५ ॥
अच्चामि ते चरणतामरसालिलीला
संधायि पञ्चममहागणधारिवाणी (?) ।
संबन्धबुद्धिकरुणालयलिङ्गसिद्ध-
संधावलीदमिगणं चरणं चरन्तम् ॥ १६ ॥ (?)
उच्चण्डधारकरवालकरारिवार-
विच्छिन्नकुम्भगलनालकरालनागे ।
कुन्तासितोमरविभिन्नपरासुदेहे
कङ्कालसंकुलभयावहभूमिभागे ॥ १७ ॥
सावेगहुंकरणडामरमुण्डरुण्ड-
कीलाललालसविहंगकुलावरुद्धे ।
आबद्धबाणविसरे सहसा नुवन्तो
वीरं नरा रणभरेऽरिबलं जयन्ति ॥ १८ ॥(युगलकम्)
आसन्नसिद्धिकमलापरिरम्भलम्भ-
दम्भोलिपाणिमिव मोहगिरिं किरन्तम् ।

संपत्तिकारणममङ्गलमूलकीलं
सेवन्ति के न भगवन्तमवं हरन्तम् ॥ १९ ॥

आयासभङ्गडमरामयसंपराय-
चोरारिमारिविरहेण चिराय देव।
भूमण्डले सुनगरानिगमा (?) विहार-
चारेण ते परममुद्भवमामनन्ति ॥ २० ॥

निःसङ्ग निःसमर निःसम निःसहाय
नीराग नीरमण नीरस नीररंस।
हे वीर धीरिमनिवासनिरुद्धघोर-
संसारचार जय जीवसमूहबन्धो ॥ २१ ॥

उल्लासितारतरलामलहारिहारा
नारीगणा बहुविलासरसालसा मे।
संसारसंसरणसंभवभीनिमित्तं
चित्तं हरन्ति भण किं करवाणि देव ॥ २२ ॥

इच्छामहासलिलकामगुणालवालं
चिन्तादलं समलचित्तमहीसमुत्थम्।
संभोगफुल्लमिव मोहतरुं लसन्तं
हे वीरसिन्धुर समुद्धर मे समूलम् ॥ २३ ॥

संपन्नसिद्धिपुरसंगममङ्गलाय
मायोरुवारिरुहिणीवरकुञ्जराय।
वीराय ते चरमकेवलपुंगवाय
कामं नमोऽसमदयादमसत्तमाय ॥ २४ ॥

हे देव किंकरमिमं परिभावयेह
मज्जन्तमुद्धुरजवे भवसिन्धुपूरे।
उत्तारणाय कुरु वीर करावलम्बं
भूयोऽसमञ्जसनिरन्तरचारिणो मे ॥ २५ ॥

कुसमयतरुमालभङ्गसंहारवायो
कुनयकुवलयालीचूरणे(चूर्णने) मत्तनाग ।
तव गुणकणगुम्फे मे परीणाममित्थं
विमलमपरिहीणं हे महावीर पाहि ॥ २६ ॥

अनयनिबिडे पीडागाढे भयावहदुःसहे
विरहविरसे लज्जापुञ्जे रमे भवपञ्जरे ।
निरयकुहरंगामी हाहं न सिद्धिमहापुरी-
सरलसरणिं सेवे मूढो गिरं तव वीर हे ॥ २७ ॥

निरीहं गन्तारं परमभुवि मन्तारमखिलं
निहन्तारं हेलाकलिकलह.......... ।
भवन्तं नन्तारो नहि खलु निमज्जन्ति भवभी-
महापारावारे मरणभयकल्लोलकलिले ॥ २८ ॥

एवं सेवापरिहरहया (?) लोलचूलामणीद्ध-
च्छायालीढं खरकिरणभाभिन्नमम्भोरुहं वा ।
चित्तागारे चरणकमलं ते चिरं धारिणो मे
सिद्धावासं वहुभवभयारम्भरीणाय देहि ॥ २९ ॥

इत्थं ते समसंस्कृतस्तवमहं प्रस्तावयामासिवा-
नाशंसे जिनवीर नेन्द्रपदवीं न प्राज्यराज्यश्रियम् ।
लीलाभाञ्जि न वल्लभप्रणयिनीवृन्दानि किं त्वर्थये
नाथेदं प्रथय प्रसादविपदां दृष्टिं दयालो मयि ॥ ३० ॥

इति श्रीजिनवल्लभसूरिप्रणीतं समसंस्कृतप्राकृतं श्रीमहावीरस्वामिस्तोत्रम्।

---

१. जिनवल्लभेति ग्रन्थकर्तुर्नामापि.

## श्रीहेमचन्द्राचार्यविरचितं

अन्ययोगव्यवच्छेदिकाद्वात्रिंशिकाख्यं[1]

# श्रीमहावीरस्वामिस्तोत्रम् ।

अनन्तविज्ञानमतीतदोषमबाध्यसिद्धान्तममर्त्यपूज्यम् ।
श्रीवर्धमानं जिनमाप्तमुख्यं स्वयंभुवं स्तोतुमहं यतिष्ये ॥ १ ॥
अयं जनो नाथ तव स्तवाय गुणान्तरेभ्यः स्पृहयालुरेव ।
विगाहतां किं तु यथार्थवादमेकं परीक्षाविधिदुर्विदग्धः ॥ २ ॥
गुणेष्वसूयां दधतः परेऽमी मा शिश्रियन्नाम भवन्तमीशम् ।
तथापि संमील्य विलोचनानि विचारयन्तां नयवर्त्म सत्यम् ॥ ३ ॥
स्वतोऽनुवृत्तिव्यतिवृत्तिभाजो भावा न भावान्तरनेयरूपाः ।
परात्मतत्त्वादतथात्मतत्त्वा द्वयं वदन्तोऽकुशलाः स्खलन्ति ॥ ४ ॥
आदीपमाव्योम समस्वभावं स्याद्वादमुद्रानतिभेदिवस्तु ।
तन्नित्यमेवैकमनित्यमन्यदिति त्वदाज्ञाद्विषतां प्रलापाः ॥ ५ ॥
कर्तास्ति कश्चिज्जगतः स चैकः स सर्वगः स स्ववशः स नित्यः ।
इमाः कुहेवाकविडम्बनाः स्युस्तेषां न येषामनुशासकस्त्वम् ॥ ६ ॥
न धर्मधर्मित्वमतीव भेदे वृत्त्यास्ति चेन्न त्रितयं चकास्ति ।
इहेदमित्यस्ति मतिश्च वृत्तौ न गौणभावोऽपि च लोकबाधः ॥ ७ ॥
सतामपि स्यात्क्वचिदेव सत्ता चैतन्यमौपाधिकमात्मनोऽन्यत् ।
न संविदानन्दमयी च मुक्तिः सुसूत्रमासूत्रितमत्वदीयैः ॥ ८ ॥
यत्रैव यो दृष्टगुणः सतत्र कुम्भादिवन्निष्प्रतिपक्षमेतत् ।
तथापि देहाद्बहिरात्मतत्त्वमतत्त्ववादोपहताः पठन्ति ॥ ९ ॥
स्वयं विवादग्रहिले वितण्डा पाण्डित्यकण्डूलमुखे जनेऽस्मिन् ।
मायोपदेशात्परमर्म भिन्दन्नहो विरक्तो मुनिरन्यदीयः ॥ १० ॥

---

1. अस्या अन्ययोगव्यवच्छेदिकाद्वात्रिंशिकाया एकं कर्तृनामरहितटीकासमेतं नातिशुद्धं पुस्तकमग्रिमायाश्चायोगव्यवच्छेदिकाद्वात्रिंशिकाया मूलमात्रमेकमस्मभ्यं शान्तिविजयमुनिवरैरर्पितम्.

न धर्महेतुर्विहितापि हिंसा नोत्सृष्टमन्यार्थमपोद्यते न ।
स्वपुत्रघातान्नृपतित्वलिप्सासब्रह्मचारि स्फुरितं परेषाम् ॥ ११ ॥
स्वार्थावबोधक्षम एव बोधः प्रकाशते नार्थकथान्यथा तु ।
परे परेभ्यो भयतस्तथापि प्रपेदिरे ज्ञानमनात्मनिष्ठम् ॥ १२ ॥
माया सती चेद्द्वयतत्त्वसिद्धिरथासती हन्त कुतः प्रपञ्चः ।
मायैव चेदर्थसहा न तत्किं माता न वन्ध्या न भवत्परेषाम् ॥ १३ ॥
अनेकमेकात्मकमेव वाच्यं द्वयात्मकं वाचकमप्यवश्यम् ।
अतोऽन्यथा वाचकवाच्यक्लृप्तावतावकानां प्रतिभाप्रमादः ॥ १४ ॥
चिदर्थशून्या न जडा न बुद्धिः शब्दादि तन्मात्रजमम्बरादि ।
न बन्धमोक्षौ पुरुषस्य चेति कियज्जडैर्न ग्रथितं विरोधि ॥ १५ ॥
न तुल्यकालः फलहेतुभावो हेतौ विलीने न फलस्य भावः ।
न संविदद्वैतपथेऽर्थसंविद्विलूनशीर्णं सुगतेन्द्रजालम् ॥ १६ ॥
विना प्रमाणं परवन्न शून्यः स्वपक्षसिद्धेः पदमश्नुवीत ।
कुप्येत्कृतान्तः स्पृशते प्रमाणमहो सुदृष्टं त्वदसूयिदृष्टम् ॥ १७ ॥
कृतप्रणाशाकृतकर्मभोगभवप्रमोक्षस्मृतिभङ्गदोषान् ।
उपेक्ष्य साक्षात्क्षणभङ्गमिच्छन्नहो महासाहसिकः परस्ते ॥ १८ ॥
सा वासना सा क्षणसंततिश्च नाभेदभेदानुभयैर्घटेते ।
ततस्तटादर्शिशकुन्तपोतन्यायात्त्वदुक्तानि परे श्रयन्तु ॥ १९ ॥
विनानुमानेन पराभिसंधिमसंविदानस्य तु नास्तिकस्य ।
न सांप्रतं वक्तुमपि क्व चेष्टा क्व दृष्टमात्रं न हहा प्रमादः ॥ २० ॥
प्रतिक्षणोत्पादविनाशयोगि स्थिरैकमध्यक्षमपीक्षमाणः ।
जिन त्वदाज्ञामवमन्यते यः स वातकी नाथ पिशाचकी वा ॥ २१ ॥
अनन्तधर्मात्मकमेव तत्त्वमतोऽन्यथा सत्त्वमसूपपादम् ।
इति प्रमाणान्यपि ते कुवादिकुरङ्गसंत्रासनसिंहनादाः ॥ २२ ॥
अपर्ययं वस्तु समस्यमानमद्रव्यमेतच्च विविच्यमानम् ।
आदेशभेदोदितसप्तभङ्गमदीदृशस्त्वं बुधरूपवेद्यम् ॥ २३ ॥

उपाधिभेदोपहितं विरुद्धं नार्थेष्वसत्त्वं सदवाच्यते च।
इत्यप्रबुध्यैव विरोधभीता जडास्तदेकान्तहताः पतन्ति ॥ २४ ॥
स्यान्नाशि नित्यं सदृशं विरूपं वाच्यं न वाच्यं सदसत्तदेव।
विपश्चितां नाथ निपीततत्त्वसुधोद्गतोद्गारपरम्परेयम् ॥ २५ ॥
य एव दोषाः किल नित्यवादे विनाशवादेऽपि समास्त एव।
परस्परध्वंसिषु कण्टकेषु जयत्यधृष्यं जिनशासनं ते ॥ २६ ॥
नैकान्तवादे सुखदुःखभोगौ न पुण्यपापे न च बन्धमोक्षौ।
दुर्नीतिवादव्यसनासिनैवं परैर्विलुप्तं जगदप्यशेषम् ॥ २७ ॥
सदेव सत्स्यात्सदिति त्रिधार्थो मीयेत दुर्नीतिनयप्रमाणैः।
यथार्थदर्शी तु नयप्रमाणपथेन दुर्नीतिपथं त्वमास्यः ॥ २८ ॥
मुक्तोऽपि वाभ्येतु भवं भवो वा भवस्थशून्योऽस्तु मितात्मवादे।
षड्जीवकायं त्वमनन्तसंख्यमाख्यस्तथा नाथ यथा न दोषः ॥ २९ ॥
अन्योन्यपक्षप्रतिपक्षभावाद्यथा परे मत्सरिणः प्रवादाः।
नयानशेषानविशेषमिच्छन्नपक्षपाती समयस्तथा ते ॥ ३० ॥
वाग्वैभवं ते निखिलं विवेक्तुमाशास्महे चेन्महनीयमुख्य।
लङ्घेम जङ्घालतया समुद्रं वहेम चन्द्रद्युतिपानतृष्णाम् ॥ ३१ ॥

इदं तत्त्वातत्त्वव्यतिकरकरालेऽन्धतमसे
जगन्मायाकारैरिव हतपरैर्हा विनिहितम्।
तदुद्धर्तुं शक्तो नियतमविसंवादिवचन-
स्त्वमेवातस्त्रातस्त्वयि कृतसपर्याः कृतधियः ॥ ३२ ॥

इति श्रीहेमचन्द्रसूरिविरचितमन्ययोगव्यवच्छेदिकाद्वात्रिंशिकाख्य
श्रीमहावीरस्वामिस्तोत्रम्।

---

श्रीहेमचन्द्राचार्यविरचितं

अयोगव्यवच्छेदिकाद्वात्रिंशिकाख्यं

## श्रीमहावीरस्वामिस्तोत्रम्।

अगम्यमध्यात्मविदामवाच्यं वचस्विनामक्षवतां परोक्षम्।
श्रीवर्धमानाभिधमात्मरूपमहं स्तुतेर्गोचरमानयामि ॥ १ ॥

---

१. हेमचन्द्र इति ग्रन्थकर्तुर्नामापि.

स्तुतावशक्तिस्तव योगिनां न किं गुणानुरागस्तु ममापि निश्चलः ।
इदं विनिश्चित्य तव स्तवं वदन्न बालिशोऽप्येष जनोऽपराध्यति ॥ २ ॥
क्व सिद्धसेनस्तुतयो महार्था अशिक्षितालापकला क्व चैषा ।
तथापि यूथाधिपतेः पथस्थः स्खलद्गतिस्तस्य शिशुर्न शोच्यः ॥ ३ ॥
जिनेन्द्र यानेव विबाधसे स दुरन्तदोषान्विविधैरुपायैः ।
त एव चित्रं त्वदसूययेव कृताः कृतार्थाः परतीर्थनाथैः ॥ ४ ॥
यथास्थितं वस्तु दिशन्नधीश न तादृशं कौशलमाश्रितोऽसि ।
तुरंगशृङ्गाण्युपपादयद्भ्यो नमः परेभ्यो नवपण्डितेभ्यः ॥ ५ ॥
जगत्यनुध्यानबलेन शश्वत्कृतार्थयत्सु प्रसभं भवत्सु ।
किमाश्रितोऽन्यैः शरणं त्वदन्यः स्वमांसदानेन वृथा कृपालुः ॥ ६ ॥
स्वयं कुमार्गं लपतां नु नाम प्रलम्भमन्यानपि लम्भयन्ति ।
सुमार्गगं तद्विदमादिशन्तमसूययान्धा अवमन्वते च ॥ ७ ॥
प्रादेशिकेभ्यः परशासनेभ्यः पराजयो यत्तव शासनस्य ।
खद्योतपोतद्युतिडम्बरेभ्यो विडम्बनेयं हरिमण्डलस्य ॥ ८ ॥
शरण्य पुण्ये तव शासनेऽपि संदेग्धि यो विप्रतिपद्यते वा ।
स्वादौ स तथ्ये स्वहिते च पथ्ये संदेग्धि वा विप्रतिपद्यते वा ॥ ९ ॥
हिंसाद्यसत्कर्मपथोपदेशादसर्वविन्मूलतया प्रवृत्तेः ।
नृशंसदुर्बुद्धिपरिग्रहाच्च ब्रूमस्त्वदन्यागममप्रमाणम् ॥ १० ॥
हितोपदेशात्सकलज्ञक्लृप्तेर्मुमुक्षुसत्साधुपरिग्रहाच्च ।
पूर्वापरार्थेऽप्यविरोधसिद्धेस्त्वदागमा एव सतां प्रमाणम् ॥ ११ ॥
क्षिप्येत वान्यैः सदृशीक्रियेत वा तवाङ्घ्रिपीठे लुठनं सुरेशितुः ।
इदं यथावस्थितवस्तुदेशनं परैः कथंकारमपाकरिष्यते ॥ १२ ॥
तद्दुःखमाकालखलायितं वा पचेलिमं कर्म तवानुकूलम् ।
उपेक्षते यत्तव शासनार्थमयं जनो विप्रतिपद्यते वा ॥ १३ ॥
परः सहस्राः शरदस्तपांसि युगान्तरं योगमुपासतां वा ।
तथापि ते मार्गमनापतन्तो न मोक्ष्यमाणा अपि यान्ति मोक्षम् ॥ १४ ॥

अनाप्तजाड्यादिविनिर्मितित्वसंभावनासंभवविप्रलम्भाः ।
परोपदेशाः परमाप्तकॢप्तपथोपदेशे किमु संरभन्ते ॥ १५ ॥
यदार्जवादुक्तमयुक्तमन्यैस्तदन्यथाकारमकारि शिष्यैः ।
न विप्लवोऽयं तव शासनेऽभूदहो अधृष्या तव शासनश्रीः ॥ १६ ॥
देहाद्ययोगेन सदाशिवत्वं शरीरयोगादुपदेशकर्म ।
परस्परस्पर्धि कथं घटेत परोपकॢप्तेष्वधिदैवतेषु ॥ १७ ॥
प्रागेव देवान्तरसंश्रितानि रागादिरूपाण्यवमान्तराणि ।
न मोहजन्यां करुणामपीश समाधिमास्थाय युगाश्रितोऽसि (?) ॥१८॥
जगन्ति भिन्दन्तु सृजन्तु वा पुनर्यथातथा वा पतयः प्रवादिनाम् ।
त्वदेकनिष्ठे भगवान्भवक्षयक्षमोपदेशे तु परं तपस्विनः ॥ १९ ॥
वपुश्च पर्यङ्कशयं श्लथं च दृशौ च नासानियते स्थिरे च ।
न शिक्षितेयं परतीर्थनाथैर्जिनेन्द्र मुद्रापि तवान्यदास्ताम् ॥ २० ॥
यदीयसम्यक्त्ववलात्प्रतीमो भवादृशानां परमस्वभावम् ।
कुवासनापाशविनाशनाय नमोऽस्तु तस्मै तव शासनाय ॥ २१ ॥
अपक्षपातेन परीक्षमाणा द्वयं द्वयस्याप्रतिमं प्रतीमः ।
यथास्थितार्थप्रथनं तवैतदस्थाननिर्बन्धरसं परेषाम् ॥ २२ ॥
अनाद्यविद्योपनिषन्निषण्णैर्विशृङ्खलैश्चापलमाचरद्भिः ।
अमूढलक्ष्योऽपि पराक्रिये यत्त्वत्किंकरः किं करवाणि देव ॥ २३ ॥
विमुक्तवैरव्यसनानुबन्धाः श्रयन्ति यां शाश्वतवैरिणोऽपि ।
परैरगम्यां तव योगिनाथ तां देशनाभूमिमुपाश्रयेऽहम् ॥ २४ ॥
मदेन मानेन मनोभवेन क्रोधेन लोभेन च संमदेन ।
पराजितानां प्रसभं सुराणां वृथैव साम्राज्यरुजा परेषाम् ॥ २५ ॥
स्वकण्ठपीठे कठिनं कुठारं परे किरन्तः प्रलपन्तु किंचित् ।
मनीषिणां तु त्वयि वीतराग न रागमात्रेण मनोऽनुरक्तम् ॥ २६ ॥
सुनिश्चितं मत्सरिणो जनस्य न नाथ मुद्रामतिशेरते ते ।
माध्यस्थ्यमास्थाय परीक्षका ये मणौ च काचे च समानुबन्धाः ॥२७॥

इमां समक्षं प्रतिपक्षसाक्षिणामुदारघोषामवघोषणां ब्रुवे ।
न वीतरागात्परमस्ति दैवतं न चाप्यनेकान्तमृते नयस्थितिः ॥ २८ ॥
न श्रद्धयैव त्वयि पक्षपातो न द्वेषमात्रादरुचिः परेषु ।
यथावदाप्तत्वपरीक्षया तु त्वामेव वीर प्रभुमाश्रिताः स्मः ॥ २९ ॥
तमःस्पृशामप्रतिभासभाजं भवन्तमप्याशु विविन्दते याः ।
महेम चन्द्रांशुदृशा (?) वदातास्तास्तर्कपुण्या जगदीश वाचः ॥ ३० ॥
यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यया तया ।
वीतदोषकलुषः स चेद्भवानेक एव भगवन्नमोऽस्तु ते ॥ ३१ ॥

इदं श्रद्धामात्रं तदथ परनिन्दां मृदुधियो
विगाहन्तां हन्तः प्रकृतिपरवादव्यसनिनः ।
अरक्तद्विष्टानां जिनवर परीक्षाक्षमधिया-
मयं तत्त्वालोकस्तुतिमयमुपाधिं विधृतवान् ॥ ३२ ॥

इति श्रीहेमचन्द्रसूरिविरचितमयोगव्यवच्छेदिकाद्वात्रिंशिकाख्यं श्रीमद्वीरस्वामिस्तोत्रम् ।

---

## श्रीजिनप्रभसूरिविरचितः

## श्रीपार्श्वनाथस्तवः ।

का मे वामेयशक्तिर्भवतु तव गुणस्तोमलेशप्रशस्तौ
न स्यायस्यामधीशः सुरपतिसचिवस्यापि वाणीविलासः ।
माने वा वार्धिवारां कलयति क इव प्रौढिमारूढधारां
भक्तिव्यक्तिप्रयुक्तस्तदपि किमपि ते संस्तवं प्रस्तवीमि ॥ १ ॥
संसाराम्भोधिवेला निविडजडमतिध्वान्तविध्वंसहंसः
श्यामारयामाङ्गधामा (?) शठकमठतपोधर्मनिर्माथपाथः ।
स्फारस्फूर्जत्फणीन्द्र प्रगुणफणमणिज्योतिरुद्द्योतिताशा-
चक्रश्चक्रिध्वज त्वं जय जिन विजितद्रव्यभावारिवार ॥ २ ॥

---

१. पार्श्वनाथस्तवादिस्तोत्रपट्कं जिनप्रभसूरिप्रणीतमस्मभ्यं सूरतनगरवासिना केवल-भ्रातमजेन भगवान्दासश्रेष्ठिना प्रहितम्. पुस्तकान्तरं चास्य नोपलब्धमिति.

कन्नानम्राङ्गिचेतःशिखिकुलविलसत्ताण्डवाडम्बरश्री-
हेतुः प्रेङ्खन्नखालीरुचिररुचितडिद्दामनेत्राभिरामः ।
प्रीतिं फुल्लत्फणाभाग्मणिघृणिसुमनश्चापचित्रीकृतद्यौ-
र्देयास्त्वं देशनावाक्स्तनितसुखकरो मेघवन्मेऽघहन्तः ॥ ३ ॥
भिन्दंल्लोकप्रवाहप्रबलतरसरित्पूरमुच्चैर्वहन्तं
जन्तूनां चित्तभूमौ स जयति जगति त्वद्वचोवारिकान्तः ।
मुक्त्वा गाढं गृहीतानपि विनतजनान्यत्प्रवाहाद्भयार्तो
भूयस्तन्मध्यमेव प्रविशति झटिति क्रूरमोहावतारः ॥ ४ ॥
लौल्याल्लावण्यलक्ष्मीमधुरमधुरसं त्वन्मुखाम्भोरुहोत्थं
पायंपायं भरेण प्रणतभवभृतां नेत्रपुष्पंधयाल्यः ।
नूनं हर्षप्रकर्षोद्गतनयनपयःपूरदम्भेन दूरं
मिथ्यादृग्लोचनानामसुलभ भगवन्सद्य एवोद्गिरन्ति ॥ ५ ॥
निःस्यन्दानन्दकन्दः कलिमलकदलीकाण्डखण्डीकृतौ य-
त्कक्षाकौक्षेयकस्य क्षपितभवशतं नेत्रपीयूषसत्रम् ।
श्रेयःश्रीवल्लिहल्लीसकमलयमरुद्राम्यमारोग्यलक्ष्म्या-
दर्शः कंदर्पदर्पद्विजपतिपतनं दर्शनं तावकीनम् ॥ ६ ॥
विद्याविद्याधरीणां मणिमयमुकुरः क्रूरवैरारिजैत्रो
गात्रश्रीमैत्र्यपात्रीकृतरतिरमणः सच्चरित्रैः पवित्रः ।
सद्भोगाभोगभागी सुभगिमभवनं श्रीजिन श्रीद संप-
न्निःप्कम्पः संपनीपद्यत इह मनुजः साधु नत्वा जिन त्वा ॥ ७ ॥
देव्या[1] वाचोऽपि वाचामविषय दिविषन्मन्दिरद्वारसेवा-
हेवाकी सर्वनाकीश्वरमुकुटतटीघृष्टपादाम्बुजस्य ।
नेतश्चैतन्यशून्यः सकलकलयितुर्भुक्तिमात्रस्य दाता
भुक्तिं मुक्तिं च दातुः कथमिव भवतः कल्पवृक्षः सदृक्षः ॥ ८ ॥
चन्द्रः प्रैत्युदकाशयं[2] प्रतिफलत्येको न चार्थक्रिया-
कारीत्येष न चास्तवांस्तव पुनर्वृत्तं जयत्यद्भुतम् ।

१. सरस्वत्याः. २. प्रतिजलाशयम्.

एकस्त्वं प्रतिमानसं वससि यद्भव्यात्मनामेकदा
सर्वेषामथ च प्रयच्छसि फलं तेषां मनोवाञ्छितम् ॥ ९ ॥
यौष्माकीणगुणस्तुतिं विकिरती शुण्डामिवान्तर्गत-
प्रीतिं स्फीतिमतीमतीव सुरभिं दानाम्बुना बिभ्रती ।
त्रैलोक्यैकसुरद्रुम द्रुमवनानीवोन्मदा वासिता
युष्मद्भक्तिकरिलं भनक्ति भविनामेनांसि हृद्वासिता ॥ १० ॥
आधारे स्थिरतोज्झिते किल भवत्याधेयमप्यस्थिरं
सोऽयं ज्ञानपथस्तथापि किमपि स्वार्थैकनिष्ठो ध्रुवे ।
अश्रान्तं मम चञ्चलेऽपि मनसि स्वामिन्विधान स्थितिं
त्रैलोक्याधिप शक्तिभाजि यदि वा किं नोपपन्नं त्वयि ॥ ११ ॥
विश्वेश प्रसभं त्वदीययशसा व्यालुप्यमाने प्रभा-
सर्वस्वे जगदाक्रमैकपटुना नूनं द्विजानां पतिः ।
शङ्कां लाञ्छनकैतवात्प्रतिनिशं कुक्षिप्रदेशे क्षिप-
न्कोपाटोपवशादसावुदयते बिभ्रद्वपुर्लोहितम् ॥ १२ ॥
वक्रेण त्वमपाहरः शशधरस्याखण्डमूर्तेः श्रियं
व्याकोशस्य कुशेशयस्य सुषमासर्वस्वमप्यग्रहीः ।
यत्तुल्यव्यसनादपि स जहितो नैतौ विरोधं मिथ-
स्तेनाकारि समानशीलविपदां सख्यप्रवादो मृषा ॥ १३ ॥
पुष्टाङ्गं व्यवहारनिश्चयनयप्रोत्तुङ्गशृङ्गं शुभं
दानाद्यङ्घ्रिचतुष्टयं च विकसज्ज्ञानक्रियालोचनम् ।
नित्यच्छेकविवेकपुच्छलतिकं स्याद्वादपर्युल्लस-
त्पीनोच्चैः ककुदं कुतीर्थतृणभुक्सूते वृषं गौस्तव ॥ १४ ॥
आकण्ठं कमठाम्बुदोज्झितपयःपूरे निमग्नाङ्गक-
स्योत्फुल्लं मुखपङ्कजं तव पपौ या कौतुकोत्कर्षतः ।
नागस्त्रैणविलोचनालिपटली संख्याय धुर्येव तां (?)
धन्यानां गणनाक्षणे न खलु सा रेखान्यतः सर्पति ॥ १५ ॥

१. कीरणी.

वन्दारोः प्रियकोपितप्रणयिनीदृक्कोणशोणत्विपः
सान्द्रस्निग्धसमुच्छलत्क्रमनखश्रेणीमयूखास्तव ।
त्वद्वृत्तस्तुतिदूतिकाभिमुखितां पाणौ चिकीर्षोः शिव-
श्रीरामां नवपद्मरागमहितं बध्नन्तु मौलौ मम ॥ १६ ॥

एवं नृदेवमहितः सहितः प्रभाव-
भूत्या प्रभूततमया विनुतो मयायम् ।
पार्श्वप्रभुर्विमलचिन्मयचित्तसौध-
मुत्तंसयत्त्ववृजिनप्रभसूरिवर्ण्यः ॥ १७ ॥

इति श्रीजिनप्रभसूरिविरचितः पार्श्वनाथस्तवः ।

---

## श्रीजिनप्रभसूरिविरचितं
## गोतमस्तोत्रम् ।

श्रीमन्तं मगधेषु गोर्वर इति ग्रामोऽभिरामः श्रिया
तत्रोत्पन्नमसन्नचित्तमनिशं श्रीवीरसेवाविधौ ।
ज्योतिः संश्रयगौतमान्वयविपत्प्रद्योतनद्योमणिं
तापोत्तीर्णसुवर्णवर्णवपुषं भक्त्येन्द्रभूतिं स्तुवे ॥ १ ॥

के नाम नाभङ्गुरभाग्यसृष्टयै दृष्टयै सुराणां स्पृहयन्ति सन्तः ।
निमेषविघ्नोज्झितमाननेन्दुज्योत्स्नां मनोहत्य तवापिबद्या ॥ २ ॥
निर्जित्य नूनं निजरूपलक्ष्म्या तृणीकृतः पञ्चशरस्त्वया सः ।
इत्थं न चेत्तर्हि कुतस्त्रिनेत्रनेत्रानलस्तं सहसा ददाह ॥ ३ ॥
पीत्वा गिरं ते गलितामृतेच्छाः सुराश्चिरं चक्रुरभोज्यमिन्दुम् ।
सुधाह्रदे तत्र मुनीश मन्ये लक्ष्मच्छलाच्छैवलमीक्ष्यतेऽन्तः ॥ ४ ॥
सौभाग्यभङ्ग्यापि समाधिदाने प्रत्येति लोकः कथमेतदज्ञः ।
यत्त्वां समग्रा अपि लब्धिकान्ताः समालिलिङ्गुः समकालमेव ॥ ५ ॥
त्वत्पादपीठे विलुठन्त्यमर्त्यास्त्वद्देहभृत्याः किल कल्पवृक्षाः ।
तैरप्यमा हन्त तवोपमानोपमेयभावः कथमस्तु वस्तु ॥ ६ ॥

पदोर्नखाली तव रोहिणीयं मुदे न कस्याद्भुतकृच्चरित्रा ।
वन्दारुपुंसां वदनेन्दुरन्तः प्रविष्टबिम्बोऽपि शिवाय यस्याः ॥ ७ ॥
यत्केवलज्ञानमविद्यमानमथात्मनि स्थान्तिपदामदास्त्वम् (?) ।
लोकोत्तरत्वे ननु तावकानां दिङ्मात्रमेतच्चरिताद्भुतानाम् ॥ ८ ॥
भवद्गुणानां स्तुतयो गुणज्ञैर्विधीयमाना विबुधाधिपाद्यैः ।
स्तुत्यन्तरस्तोत्रकथागणस्य समाप्तये वृत्करणीभवन्ति ॥ ९ ॥ (?)
न रागवान्नो भजसेऽतिचारं नालम्बसे वक्रगतिं कदाचित् ।
पुरस्कृतेनोऽपि घनाय नासि तथापि पृथ्वीतनयोऽसि रूढः ॥ १० ॥
प्रभो महावीरमुपास्य सम्यक्त्वयार्जितं यज्ज्ञकलारहस्यम् ।
गृहे यतित्वेऽप्यभिरूपरत्नत्रयीजुषा कीर्तिरतानि तेन ॥ ११ ॥
त्वद्वाणिमाधुर्यजिता पलाय्य सितोपला काचघटीं विवेश ।
तत्रापि भीतिं दधती शलाकाव्याजेन जग्राह तृणं तु वक्त्रे ॥ १२ ॥
श्रीवीरसेवारसलालसत्वात्तद्बाधिनीं केवलबोधलक्ष्मीम् ।
अप्याय(ग)तामादरिणीं वरीतुं तृणाय मत्वा त्वमिमन्वमंस्थाः(?) १३
अपोढपङ्के कविभिर्निपेव्ये निरस्ततापे बहुभङ्गजाले ।
विभो भवद्वाङ्मुखगाङ्गपूरे दुर्वादिपूगास्तृणवत्तरन्ति ॥ १४ ॥
राकामये दिग्वलये समन्ताद्यशःशशाङ्केन ध्रुवं कृते ते ।
कुहूध्वनिः केवलमेव कण्ठदेशं पिकानां शरणीचकार ॥ १५ ॥
जगत्रयोद्भासि यशस्त्वैतत्क स्पर्धतां सार्धमनेन चन्द्रः ।
यस्यापरार्धेऽपि तृणस्य (?) नैव प्रभाप्रभावो लभतेऽवकाशम् ॥ १६ ॥
छत्रेन्दुपद्मादिपु रूढिमात्रं त्वन्नाम्नि तु श्रीर्वसतीति पुष्टिः ।
कुतोऽन्यथा तज्जपदीक्षितानां पुरःपुरो नृत्यति नित्यमृद्धिः ॥ १७ ॥
वसुभूतिसूतोऽपि कौतुकं वसुभूतेर्जनकः प्रणेमुपाम् ।
भगवन्नभवोऽपि वर्तसे कथमङ्गीकृतसर्वमङ्गलः ॥ १८ ॥
नाधः करोषि वृषमीश गणाधिपोऽपि
धत्से सदाशयमपाशमपि प्रचेताः ।

श्रीदोऽपि सुत्रितयमाल्यवासकेलि-
स्त्वं पावकोऽपि हरसे हरहेतिपातम् ॥ १९ ॥
यत्तपत्यपि कलौ जिन प्रभाचार्यमन्त्रमनुशीलतां स्फुरेत् ।
हेतुतात्र खलु तत्त्वदेकताध्यानपारमितयैव गृह्यते ॥ २० ॥
मयैवं दुर्दैवं शमयितुमलंभूष्णुमहिमा
स्तुतस्त्वं लेशेन श्रुतरथधुरागोतम गुरो ।
कुरूद्द्योतं क्लीवह्निपतिसुधागौ तमसि मे
प्रभो विद्यामन्त्रप्रभव भवते गोतम नमः ॥ २१ ॥

इति श्रीजिनप्रभाचार्यविरचित गोतमस्तोत्रम् ।

---

## श्रीजिनप्रभाचार्यविरचितः

## श्रीवीरस्तवः ।

कंसारिक्रमनिर्यदापगाधाराशुद्धविरादच्छदच्छविम् ।
छन्दोभिर्विविधैरधीरधीस्तोष्येऽहं चरमं जिनेश्वरम् ॥ १ ॥
त्रैलोक्यनेतस्तव दुर्नयालीनिर्नाशनं शासनमाश्रितो यः ।
तस्येन्द्रवज्रायुधमाविरस्ति दुष्कर्मशैलेन्द्रभिदाविधाने ॥ २ ॥
किमेकमाश्चर्यकरं न ते यत्पुष्पंधयोऽप्येष विशेषविज्ञः ।
त्यक्तोपजातिभ्रमणाभिलापस्त्वदङ्गसौगन्ध्यमनुप्रयाति ॥ ३ ॥
यः सृजत्यजरसौरभसारैरम्बुजैस्तव पदाम्बुजपूजाम् ।
प्रेत्य तस्य दिवि देवमृगाक्ष्यः स्वागतानि निगदन्ति सरागम् ॥४॥
वाजिवारणरथोद्धता भटैरुद्भटा सुभगभोगभङ्गिभृत् ।
राज्यऋद्धिरुपनंनमीति तं नंनमीति तव यः पदौ मुदा ॥ ५ ॥
नाकिनिकायकरप्रहतानां संप्रसरन्गगने मुरजानाम् ।
जन्ममहे तव कस्य न जज्ञे दत्तमदो धकधोंकृतिनादः ॥ ६ ॥
ये भक्त्यात्तभ्रमरविलसिता जाताः पादाम्बुरुहि तव विभो ।
तैः श्रेयश्रीमधुरमधुरसास्वादासादात्समजनि कृतिभिः ॥ ७ ॥

तत्त्वातत्त्वारोपलोपप्रवीणां प्रह्वप्राणित्राणसंस्थाधुरीणाम् ।
आज्ञां धत्ते मौलिना भव्यजन्तुश्रेणिः श्रद्धाशालिनी तावकीनाम् ॥८॥
वसुधाम सुधामय वक्त्रविधो तव भाषितमाद्रियते भुवि यः ।
स सुखानि सुखानिरिवोद्धमणीन्विभृते परितोऽटककीर्तिभरः ॥ ९ ॥
स्रग्विणी कुण्डलभ्राजिगण्डस्थला तारहारद्युतिद्योतिवक्षस्तटा ।
राजिराखण्डलानामखण्डादरा पादपीठेऽलुठत्तावके पावके ॥ १० ॥
क्षणादेव तेषां शिवश्रीभुजंग भयार्तं विवृद्धिं शुभं कर्म पुंसाम् ।
भवन्नाममन्त्रस्य वर्णानुपूर्वी रसज्ञाग्रवर्तिष्णुरापादिता यैः ॥ ११ ॥
द्रुतविलम्बितमध्यरवध्वनद्विविधतूर्यमनेकमणीमयम् ।
कुसुमवर्षचितं तव देशनावनितलं क इवैत्य न मोदते ॥ १२ ॥
मुकुरोज्ज्वले गणभृतां हृदये प्रमिताक्षरापि वत वाग्भवतः ।
अनियत्तया प्रतिपफाल जिन ध्वनितार्थतश्च जगदर्च्यधियाम् ॥ १३ ॥
जगत्प्रभो भक्तिभरादनुद्विजाद्विजातिवंशादपहृत्य कृत्यवित् ।
नरेन्द्रवंशस्थमचीकरच्छचीपतिर्भवन्तं हरिनैगमेषिणा (?) ॥ १४ ॥
वाचां ते निखिलनयाविरोधिनीनां दुर्बोधद्रुमदलने कुठारिकाणाम् ।
माहात्म्यं भुवनमनःप्रहर्षिणीनां निर्वक्तुं क इव यथावदस्तु शक्तः ॥१५॥

सिद्धार्थराजकुलनन्दनपारिजात
न भ्राम्यति क तव कीर्तिरपारिजात ।
वर्णेन दुग्धमधुरेण मनोजनाग-
सिंहोद्धता[1] स्थिरतया सुमनोजनाग ॥ १६ ॥

अतिमहति भवोर्मीमालिनीह भ्रमन्तो
जननमरणवीच्याघातदोदूयमानाः ।
कथमपि पृथुपुण्याः प्राणिनः प्राप्नुवन्ति
प्रवहणमिव केचिच्छासनं तावकीनम् ॥ १७ ॥

लवणिमतर्जितस्मरपुरंध्रिरूपदर्पा
घटितकटाक्षलक्षशरविद्धकामिमर्मा ।

१. वसन्ततिलकेति नामान्तरम्.

कनकमणीमयाभरणरश्मिरञ्जिताङ्गी
व्यजयत वाणिनी न भवतः समाधिमुद्राम् ॥ १८ ॥
प्रबोधं भव्याम्भोरुहवनमधीशाभिगमय-
न्हरन्मोहध्वान्तं परसमयताराः कवलयन्।
निविष्टः सिंहासन्यलममलभामण्डलयुतो
भवानाभाति सोदयशिखरिणीव द्युतिपतिः ॥ १९ ॥
अमित दमितस्रोतोमाद्यत्तुरंगमसंगम
त्रिदशहरिणीनेत्रा नेत्रत्रिभागविलोकितैः।
तव जिन मनः शेके कर्तुं मनागपि न स्वसा-
चलयितुमलं किं हेमाद्रिं युगान्तमहानलाः ॥ २० ॥
दारिद्र्यापत्परिभवजनुर्विस्रसामृत्युदुःखै-
रार्ताः के के न तव बलवद्देव सेवां प्रपन्नाः।
किं स्याद्दोषप्रशमनपटोरोषधस्योपयुक्तौ
मन्दाक्रान्ता जगति जनता दुःसहेनामयेन ॥ २१ ॥
शरदुदितनिशाकरांशुप्रभाजैत्रकीर्तिच्छटा-
धवलितनिखिलत्रिलोकीतलं श्रद्धयोपासते।
सरभसविनमत्सुराधीशचूडामणिज्योतिषा-
मरुणितपदपीठभूमीभिरेप्याच्छिवास्त्वां प्रभो ॥ २२ ॥
बिभ्राणो नखविक्रियां भयकरीं धूतोल्लसद्वालधी
रौद्रं शब्दमनीचकैः प्रकटयन्भूपोऽवनीपादतः।
त्वद्भक्त्या भृतकोऽप्यवाप्यनृपतां मांसादरं वर्धय-
न्धत्तेऽनेकपराजिदर्पदलने शार्दूलविक्रीडितम् ॥ २३ ॥
विद्यामन्त्रैर्न कार्यं सुरतरुभिरलं वित्तेन च सृतं
पर्याप्तं राज्यलक्ष्म्या कृतममरतया ह्यास्तां सुवदना।

१. आसनशब्दस्यासभादेश इति काशिका. २. वाताः. ३. महामालिकेति नामान्तरम्.

स्फूर्जत्वेका तु भक्तिस्तव मम मनसि ध्वस्ताखिलमला
कैवल्यश्रीर्यया स्यात्करतलनिलया साह्नाय भगवन् ॥ २४ ॥
श्रीवीरः सर्वदिकैः कनकलचितनूरोचिरुद्दीप्तदीपै-
र्मङ्गल्यः सोऽस्तु दीपोत्सव इव जगदानन्दसंदर्भकन्दः ।
सूक्तिर्जैनप्रभीयं मृदुविशदपदा स्रग्धराधीयमाना
भव्यानां भव्यभूत्यै भवतु भवतुदे भावनाभाविताानाम् ॥ २५ ॥

इति श्रीजिनप्रभसूरिविरचितो वीरस्तवः ।

## श्रीजिनप्रभसूरिविरचितः
## चतुर्विंशतिजिनस्तवः ।

कनककान्तिधनुःशतपञ्चकोच्छ्रितवृषाङ्कितदेहमुपास्महे ।
रतिपतेर्जयिनं प्रथमं जिनं नृवृषभं वृषभं वृषभञ्जिनः ॥ १ ॥
द्विरदलाञ्छित वाञ्छितदायक क्रमलुठत्रिदशासुरनायक ।
स्तुतिपरः पुरुषो भवति क्षिताविजित राजितरा जितराग ते ॥ २ ॥
तुरगलाञ्छन संभव संभवत्वहरिदं जिन यत्र रसादहम् ।
हृदि दधे भणितीर्गुणभूरुहां शमहिता महिता महि तावकीः ॥ ३ ॥
भवमहार्णवनिस्तरणेच्छया त्वमभिनन्दन देव निषेव्यसे ।
व्रतभृतां कुगतेः सरनिग्रहप्रसभया सभया सभयात्मना ॥ ४ ॥
त्रिभुवनामित कामितपूरणे सुरतरोरुपमामतिगामुकौ ।
तव विभो भजते भवतः क्रमावसुमते सुमते सुमतेर्दद ॥ ५ ॥
धरनृपात्मज पद्मजिनेश्वर त्वयि कृतप्रणयः क्रियते पतिः ।
रभसतः प्रथितार्थि·······तोपरमया रमयारमयान्वितः ॥ ६ ॥
प्रभुसुपार्श्व जगत्रितयाज्जनुःपवितकाशिपुरीक विलक्षण ।
सुकृतिनः कृतिनश्चरितं विदुः सुभवतो भवतो भवतोदनम् ॥ ७ ॥
कुनयकाननभञ्जनकुञ्जराः शशिरुचे महसेनसुत प्रभो ।
निखिलजीवनिकायदितोक्तिभिः शुभवदाभवदाभवदागमाः ॥ ८ ॥

युधि विजित्य मनोभवमग्रहीन्मकरमङ्कमिपाद्ध्वजसस्य यः ।
स्तुतजनाः सुविधिं कुदशां सुरस्तुतमसंतमसं तमसंस्तुतम् ॥ ९ ॥
दृढरथाङ्गजशीतल शीतलद्युतिकला विमला तव भारती ।
मनसि कस्य न हर्षसनाथतां जिन तता नततानततायिनी ॥ १० ॥
जयति गण्डकलक्ष्म तनुर्जिनः शशिमुखाम्बुजदृग्द्वशमोत्तरः ।
कनकदीप्तिरमर्पित हीरकस्तवरदो वरदो वरदोर्युगः ॥ ११ ॥
शुभमयी वसुपूज्यसुतप्रभो भुवननेत्रमहो महिषाङ्किता ।
तव तनुर्वितनोतु सुखं सतामरुचिरं रुचिरं रुचिरञ्जिता ॥ १२ ॥
सकलसत्त्वसरोजविकासने रविरुचिर्विमल त्रिजगत्पते ।
अपि शमं नयते तव गीर्जितामृतरसा तरसा तरसा तृपम् ॥ १३ ॥
निजयशोभरनिह्नुतजाह्नवीजलवलक्षितकीर्तिरनन्तजित् ।
दिशतु वः कुमतासुरनिग्रहे भृशमनःशमनः शमनश्वरम् ॥ १४ ॥
भव भयं तव धर्म धुनोतु वाक्श्रुतिपथातिथितां गमिता सती ।
किमु करोति न पित्तरजः शमं वरसिता रसिता रसिताजुषा ॥ १५ ॥
जयति शान्तिजिनः स जगन्ति या भटचमूर्युधि मोहमहीपतेः ।
रणकथामपि भक्तिभरेण ते स सहसा सहसा सहसामुचत् ॥ १६ ॥
अवति कुन्थुजिनाधिप राज्यमा हिमवतस्त्वयि चक्रहताहितम् ।
त्रिदिवतोऽप्यधिकाजनि ऋद्धिभिर्धनरसा नरसा न रसा न किम्॥१७॥
जगदधीश सुदर्शनभूमिपान्वयपयःसरिदीशशिखामणे ।
प्रणिदधेऽन्तिपदो विपदन्नता वनरता न रता नर तावकान् ॥ १८ ॥
हृदि नरस्तव मल्लिजिन स्मरन्नपि हि मूर्तिमुपैति महत्फलम् ।
निशमयन्समताकरुणाञ्चितां किमुदितामुदिता मुदितादरः ॥ १९ ॥
त्वयि न सुव्रत कच्छपलाञ्छनोऽञ्जनरुचिर्हरिवंशविभूषणः ।
शिवसुखाय तपः परशुच्छिता शुभवतो भवतो भवतो धियाम् ॥ २० ॥
विरतिवर्मतटावतिकुण्ठितस्मरशरः शरणीक्रियतां त्वया ।
गुणगणस्य नमिर्बुधवर्हणव्रजनभाजनभाजनभावभाक् ॥ २१ ॥

अनुमितं खलु नेमिविभो भवभ्रमणतो मयका यदियचिरम् ।
महितपाद भवान्भवतः कृपाभवनमावनमाननमालिका ॥ २२ ॥
कमठशासनपार्श्व शिवंकरे रमत एव मनः प्रियधर्मणाम् ।
अपि कुतीर्थ्यजनेन दुरात्मना तव मते वमतेऽवमतेजसः ॥ २३ ॥
त्रिजगदीक्षण केसरिलक्षण क्षणमपि प्रभुवीर मनोगिरौ ।
गुणगणान्मम मा स्म विरज्यतामुदयिता दयितादयि तावकात् ॥२४॥
च्युतजनुर्व्रतकेवलनिर्वृतिक्षणदिनाददतां मुदमार्हता ।
व्यरचि यैरुपयत्रिदशैर्दृशां नवसुधा वसुधावसुधामभिः ॥ २५ ॥
इति जिनप्रभवो मयकान्तिमक्रमगतैर्यमकावयवैर्नुताः ।
बलममी वितरन्तु धुरि स्थिताः शुभवतां भवतां भवतान्ति भित् ॥२६॥
सदुपदेशकरप्रसरक्षताखिलतमस्कतया तपनोपमाः ।
ददतु तीर्थकृतो मम निर्ममा शमरमामरमा मरमानिताः ॥ २७ ॥
जयति दुर्नयपङ्कजिनीवने हिमततिर्मतिकैरवकौमुदी ।
शमयितुं तिमिराणि जने महावृजिनभाजि नभाजिनभारती ॥ २८ ॥
करकृताम्रफला घृणती जिनप्रभवतीर्थमिभारिमधिष्ठिता ।
हरतु हेमरुचिः सुदृशां सुखव्युपरमं परमं परमम्बिका ॥ २९ ॥

इति श्रीजिनप्रभसूरिप्रणीतश्चतुर्विंशतिजिनस्तवः ।

---

## श्रीजिनप्रभसूरिविरचितः
## पार्श्वस्तवः ।

अधियदुपनमन्तो यात्रिकाः प्रीतिपात्रा
अविकलफलशालि प्राणितं मन्वते स्वम् ।
स जयति फलवर्धिस्था(स्था)नलक्ष्मावतार-
स्त्रिभुवनभवनश्रीदीपकः पार्श्वनाथः ॥ १ ॥
जिनविभुरविभाव्यं वैभवं भूरि बिभ्र-
द्भवतु भुजगभोगाभोगविभ्राजिमौलिः ।

शुमसुभगिमभङ्गीभाजनं भक्तिभाजा-
मभिमतफलकल्पानोकहः शोकहर्ता ॥ २ ॥
शरदुडुपरुचिश्रीगर्वसर्वस्वचौरै-
र्धवलितनिखिलाशामण्डलः कीर्तिपूरैः ।
दधदलिकुलनीलं भावितानं नताना-
मुपनयतु समृद्धीराश्वसावाश्वसेनिः ॥ ३ ॥
किमपि जिन विजेतुं दुःशकानां शकानां
महिम तलिनयन्त(?)स्त्वत्प्रभावस्य लेशाः ।
प्रसमरकलिकालक्षोणिपालप्रताप-
प्रतिहतिकृतहस्ताः स्वस्ति विस्तारयन्ति ॥ ४ ॥
सुहृदति रिपुवारः क्षीरति क्षारनीरं
तुहिनति दहनोऽहिः पद्मिनीनालति द्राक् ।
स्थलति जलधिरेणत्येणराजः करीन्द्रो
गवति भवति भक्ति बिभ्रतामीश पुंसाम् ॥ ५ ॥
नतशखमखचूडारत्नरोचिष्णुरोचिः
कवचितचरणाम्भोजाग्रजाग्रन्नखार्चिः ।
पुलकनिचुलिताङ्गैरुत्प्रमोदैर्न कैः कै-
रमृतपदसुखाय स्तूयसे भूयसे त्वम् ॥ ६ ॥
इदमिन तव चैत्यं चैत्यकल्लोचनानां
कलितकलिवितण्डं मण्डपाखण्डितश्रि ।
तुलितसुरविमानं मानवानाममानां
दिशति मुदमुदग्रस्तम्भपाञ्चालिकाभिः ॥ ७ ॥
तव चरणयुगेन सार्धनः कल्पवृक्षाः
क इति लपतु नेतुर्युक्तिरिक्तं खलोऽपि ।
दिवि विबुधगणानां त्वत्पुरो दास्यभाजां
दधति खलु सदा यद्गेहदासत्वमेते ॥ ८ ॥

तव तनुरुचिसालं नम्रमूर्धा जनोऽयं
प्रतिफलितमसक्तं स्वे ललाटे विचिन्त्य ।
मरकतदलनील ध्यानसिद्धिं व्यपोढ-
श्रममुपलभते ही लोभकृद्धेर्निदानम् ॥ ९ ॥

सकलकुशलसंपद्वीरुधां वारिवाहः
प्रचितदुरितकक्षप्रक्षये हव्यवाहः ।
कमठधरणपद्मापार्श्वयक्षैश्चिराय
त्वमचिरहितपार्श्वः पार्श्वतीर्थेश नन्द्याः ॥ १० ॥

सफलय फलवर्धीचैत्यलक्ष्मीवतंस
त्रिजगदभयदातर्मङ्क्षु नः काङ्क्षितानि ।
स्तवनमवनमेतच्चेतसस्तावकीनं
विलसतु रसनाग्रे चातुरीचञ्चुवाचाम् ॥ ११ ॥

नन्दर्तुज्वलनक्षपाकर(१३६९)मिते संवत्सरे वैक्रमे
राधस्याधिशिती त्रयोदशिबुधे संघेन सार्धं सुधीः ।
यात्रायै फलवर्धिकामुपगतः स्तोत्रं तवेदं प्रभो
श्रीमत्पार्श्व जिनप्रभो मुनिपतिः संसूत्रयामासिवान् ॥ १२ ॥

इति श्रीजिनप्रभसूरिविरचितः पार्श्वस्तवः ।

---

## जिनप्रभसूरिविरचितः
## श्रीवीरनिर्वाणकल्याणकस्तवः ।

श्रीसिद्धार्थनरेन्द्रवंश कमलाश्रृङ्गारचूडामणे-
र्भव्यानां दुरपोहमोहतिमिर प्रोज्जासनेऽहर्मणेः ।
कुर्वे किंचन काञ्चनोज्ज्वलरुचेर्निर्वाणकल्याणक-
स्तोत्रं गोत्रभिदर्चनीयचरणाम्भोजस्य वीरप्रभोः ॥ १ ॥

प्राप्य देवशरदां द्विसप्ततिं शीतगौ पवनदैवतर्क्षगे ।
तामुपायत रसेन (?) कार्तिकामावसी निशि शिवश्रियं भवान् ॥ २ ॥

हस्तिपालकनृपालपालिता पूर्ने पूरयतु मन्मनःशुचा।
यत्र दर्श इव चन्द्रमा भवानस्तमाप भवतापहापनः ॥ ३ ॥
ऊर्जदर्शनिशि दर्शिताद्धयास्तत्र पुर्यखिलवर्णजाः प्रजाः।
त्वन्महोदयमहीतयाधुनाप्युत्सवं विदधतेऽनुवत्सरम् ॥ ४ ॥
यैर्ध्वनिस्तव पपे श्रवःपुटैः षोडशप्रहरदेशनाविधौ।
तान्निवेश्य धुरि धन्यताजुषां रेखया न खलु सृप्यतेऽन्यतः ॥ ५ ॥
पुण्यपापफलपाकवर्णनामध्यमध्ययनपङ्क्ति युक्छतम्।
व्याकृथाः स्फुटमपृष्ट पट्कृतिव्याकृतीश्च परिषत्पुरस्तदा ॥ ६ ॥
जीवति त्वयि जिनेन्द्रभूतिना त्वत्प्रणामविधिभङ्गभीरुणा।
नूनमेप्यत न देव केवलज्ञानसंपदनुरागभागपि ॥ ७ ॥
यद्विधेयमुपदिश्य गौतमः प्रैषि भक्तिंभृदपि त्वयान्यतः।
रोगिणः कटुकजायुपानवज्ज्यायसेऽस्य चक्लृपे गुणाय तत् ॥ ८ ॥
त्वद्दिदृक्षवतरत्सुरावलीयानदेहमणिभूषणांशुभिः।
सा कुहूरजनिरस्ततामसा पूर्णिमानिशमुपाहसद्भुवम् ॥ ९ ॥
निर्वृते त्वयि विलोक्य विष्टपं ध्वान्तपूरपरिपूरितोदरम्।
रोदयन्त इव रोदसी प्रतिशुद्धरेण रुरुदुः पुरंदराः ॥ १० ॥
वह्निवायुजलदेश्वरैः सुरैस्तैलपर्णिककृताङ्गसंस्कृतेः।
भूतिमात्रमपि भूतिधाम ते येऽस्पृशन्बत न तान्रजोऽस्पृशत् ॥ ११ ॥
भक्तितो महितुमीश वासवास्तावकीनहनुसंग्रहं व्यधुः।
नूनमक्षविजयेन तावकानुग्रहेण हनुमत्त्वमिच्छवः ॥ १२ ॥
कुग्रहा न तव जातु शासनं वीर बाधितुमलंभविष्णवः।
एककः स खलु भस्मकग्रहो बाधते भवदुपेक्षितस्तदा ॥ १३ ॥
जग्मुषि त्वयि शिवं नराधिपास्तं क्षणं गृहिणीनबोधयन् (?)।
ये बभुः कुनयकाननप्लुपस्त्वल्लतापरिशिखिनः कणा इव ॥ १४ ॥
यन्न कश्चन मुनिस्त्वया समं मुक्तिमायदितरैर्जिनैरिव।
दुःषमासमयभावलिङ्गिनां व्याञ्जि तेन गुरुनिर्व्यपेक्षता ॥ १५ ॥

१. जायुरौषधम्. २. तैलपर्णिक चन्दनविशेषः.

प्रस्थिते त्वयि शिवाय तत्क्षणं संमुमूर्छुरधिपृथ्वि कुन्थवः ।
क्षुद्रजीव बहुलामतः परं सूचयन्त इव भाविनीं महीम् ॥ १६ ॥
यत्र यत्र चरणौ त्वयार्पितौ तत्तदास्पदमगादपापताम् ।
एकया पुनरपापया पुरा पापयाजनि सुरोक्तिनामतः ॥ १७ ॥
यत्र मुक्तिमगमः शमद्रुमावाप पापतुदि नार्कतापतत्।
प्रीतिभीतितनुकुञ्जभञ्जने नागनागकरणं करोतु नः ॥ १८ ॥
यः पठत्यशठधीस्तव वीर स्तोत्रमेतदवधानसमेतः ।
तत्र भावरिपुराजिरयश्रीभाजि न प्रभवति प्रव्लापि ॥ १९ ॥

इति श्रीजिनप्रभसूरिविरचितः श्रीवीरनिर्वाणकल्याणकस्तवः ।

---

## श्रीविमलप्रणीता

# प्रश्नोत्तररत्नमाला।

प्रणिपत्य वर्धमानं प्रश्नोत्तररत्नमालिकां वक्ष्ये ।
नागनरामरवन्द्यं देवं देवाधिपं वीरम् ॥ १ ॥
कः खलु नालंक्रियते दृष्टादृष्टार्थसाधनपटीयान् ।
कण्ठस्थितया विमलप्रश्नोत्तररत्नमालिकया ॥ २ ॥
भगवन्किमुपादेयं गुरुवचनं हेयमपि च किमकार्यम् ।
को गुरुरधिगततत्त्वः सत्त्वहिताभ्युद्यतः सततम् ॥ ३ ॥
त्वरितं किं कर्तव्यं विदुषा संसारसंततिच्छेदः ।
किं मोक्षतरोर्बीजं सम्यग्ज्ञानं क्रियासहितम् ॥ ४ ॥
किं पथ्यदनं धर्मः कः शुचिरिह यस्य मानसं शुद्धम् ।
कः पण्डितो विवेकी किं विषमवधीरिता गुरवः ॥ ५ ॥
किं संसारे सारं बहुशोऽपि विचिन्त्यमानमिदमेव ।
मनुजेषु दृष्टतत्त्वं स्वपरहितायोद्यतं जन्म ॥ ६ ॥

---

१. प्रश्नोत्तररत्नमालायाः पुस्तकद्वयमस्माभिरासादितम्. तत्र प्रथममेकपत्रात्मकं शुद्धं संवेगिसाधुश्रीशान्तिविजयमुनिभिर्दत्तं क-संज्ञकम्. द्वितीयं पत्रद्वयात्मकं शुद्धं भगवान्दासश्रेष्ठिना केवलदासात्मजेन सुरतनगरात्प्रहितं ख-संज्ञकं ज्ञेयम्. २. 'जिनवरेन्द्रं' क. ३. 'पद्धतिं' ख. ४. 'सततं' क.

मदिरेव मोहजनकः कः स्नेहः के च दस्यवो विषयाः।
का भववल्ली तृष्णा को वैरी नन्वनुद्योगः॥ ७॥
कस्माद्भयमिह मरणादन्धादपि को विशिष्यते रागी।
कः शूरो यो ललनालोचनबाणैर्न च व्यथितः॥ ८॥
पातुं कर्णाञ्जलिभिः किममृतमिव बुध्यते सदुपदेशः।
किं गुरुताया मूलं यदेतदप्रार्थनं नाम॥ ९॥
किं गहनं स्त्रीचरितं कश्चतुरो यो न खण्डितस्तेन।
किं दारिद्र्यमसंतोष एव किं लाघवं याच्ञा॥ १०॥
किं जीवितमनवद्यं किं जाड्यं पाटवेऽप्यनभ्यासः।
को जागर्ति विवेकी का निद्रा मूढता जन्तोः॥ ११॥
नलिनीदलगतजललवतरलं किं यौवनं धनमथायुः।
के शशधरकरनिकरानुकारिणः सज्जना एव॥ १२॥
को नरकः परवशता किं सौख्यं सर्वसङ्गविरतिर्या।
किं सत्यं भूतहितं किं प्रेयः प्राणिनामसवः॥ १३॥
किं दानमनाकाङ्क्षं किं मित्रं यन्निवर्तयति पापात्।
कोऽलंकारः शीलं किं वाचां मण्डनं सत्यम्॥ १४॥
किमनर्थफलं मानसमसंगतं का सुखावहा मैत्री।
सर्वव्यसनविनाशे को दक्षः सर्वथा त्यागः॥ १५॥
कोऽन्धो योऽकार्यरतः को बधिरो यः शृणोति न हितानि।
को मूको यः काले प्रियाणि वक्तुं न जानाति॥ १६॥
किं मरणं मूर्खत्वं किं चानर्घ्यं यदवसरे दत्तम्।
आ मरणात्कि शल्यं प्रच्छन्नं यत्कृतमकार्यम्॥ १७॥
कुत्र विधेयो यत्नो विद्याभ्यासे सदौषधे दाने।
अवधीरणा क्व कार्या खलपरयोषित्परधनेषु॥ १८॥
काहर्निशमनुचिन्त्या संसारासारता न च प्रमदा।
का प्रेयसी विधेया करुणा दाक्षिण्यमपि मैत्री॥ १९॥

कण्ठगतैरप्यसुभिः कस्यात्मा नो समर्प्यते जातु ।
मूर्खस्य विषादस्य च गर्वस्य तथा कृतघ्नस्य ॥ २० ॥

कः पूज्यः सद्वृत्तः कमधनमाचक्षते चलितवृत्तम् ।
केन जितं जगदेतत्सत्यतितिक्षावता पुंसा ॥ २१ ॥

कस्मै नमः सुरैरपि सुतरां क्रियते दयाप्रधानाय ।
कस्मादुद्विजितव्यं [1]संसारारण्यतः सुधिया ॥ २२ ॥

कस्य वशे प्राणिगणः सत्यप्रियभाषिणो विनीतस्य ।
क्व स्थातव्यं न्याय्ये पथि [2]दृष्टादृष्टलाभाय ॥ २३ ॥

विद्युद्विलसितचपलं किं दुर्जनसंगतं युवतयश्च ।
कुलशैलनिष्प्रकम्पाः के कलिकालेऽपि सत्पुरुषाः ॥ २४ ॥

किं शोच्यं कार्पण्यं सति विभवे किं प्रशस्यमौदार्यम् ।
तनुतरवित्तस्य तथा प्रभविष्णोर्यत्सहिष्णुत्वम् ॥ २५ ॥

चिन्तामणिरिव दुर्लभमिह किं कथयामि ननु चतुर्भद्रम् ।
किं तद्वदन्ति भूयो विधूततमसो विशेषेण ॥ २६ ॥

[3]दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
त्यागसहितं च वित्तं दुर्लभमेतच्चतुर्भद्रम् ॥ २७ ॥

इति कण्ठगता विमला प्रश्नोत्तररत्नमालिका येषाम् ।
ते मुक्ताभरणा अपि विभान्ति विद्वत्समाजेषु ॥ २८ ॥

[4]रचिता सितपटगुरुणा विमला विमलेन रत्नमालेव ।
प्रश्नोत्तरमालेयं कण्ठगता कं न भूषयति ॥ २९ ॥

इति श्रीविमलविरचिता प्रश्नोत्तररत्नमाला ।

---

१. 'संसारावासतः' क. २. 'दृष्टादृष्टार्थलाभाय' ख. ३. हितोपदेशेऽपीयमार्या समुद्धृतास्ति. ४. ख-पुस्तकेऽस्या आर्याया: स्थाने 'विवेकात्यक्तराज्येन राज्ञेयं रत्नमालिका । रचितामोघवर्षेण सुधियां सदलंकृतिः ॥' एतत्पद्यं वर्तते.

## महाकविश्रीधनपालप्रणीता
## ऋषभपञ्चाशिका।

जय जन्तुकप्पपायव चन्दायव रागपङ्कयवणस्स।
सयलमुणिगामगामणि तिलोअचूडामणि नमो ते ॥ १ ॥
[जय जन्तुकल्पपादप चन्द्रातप रागपङ्कजवनस्य।
सकलमुनिग्रामग्रामणीस्त्रिलोकचूडामणे नमस्ते ॥]
जय रोसजलणजलहर कुलहर वरनाणदंसणसिरीणम्।
मोहतिमिरोहदिणयर नयर गुणगणाण पउराणम् ॥ २ ॥
[जय रोषज्वलनजलधर कुलगृह वरज्ञानदर्शनश्रियोः।
मोहतिमिरौघदिनकर नगर गुणगणानां पौराणाम् ॥]
दिट्ठो कहँवि विहडिए गण्ठिम्मि कवाडसंपुडघणम्मि।
मोहन्धयारचारयगएण जिण दिणयरुव्व तुमम् ॥ ३ ॥
[दृष्टः कथमपि विघटिते ग्रन्थौ कपाटसंपुटघने।
मोहान्धकारचारकगतेन जिन दिनकर इव त्वम् ॥]
भविअकमलाणँ जिणरवि तुह दंसणपहरिसूससन्ताणम्।
दढवद्धा इव विहडन्ति मोहतमभमरचन्दाइं ॥ ४ ॥
[भव्यकमलानां जिनरवे त्वद्दर्शनप्रहर्षोच्छ्वसताम्।
दढबद्धा इव विघटन्ते मोहतमोभ्रमरवृन्दानि ॥]
लद्धत्तणाभिमाणो सव्वो सव्वट्ठसुरविमाणस्स।
एइँ नाह नाहिकुलगरघरावयारम्मुहे नट्ठो ॥ ५ ॥
[प्रधानत्वाभिमानः सर्वः सर्वार्थसुरविमानस्य।
त्वयि नाथ नाभिकुल····गृहावतारोन्मुखे नष्टः ॥]
एइँ चिन्तादुल्लहमुक्खसुक्खफलए अउव्वकप्पदुमे।
अवइन्ने कप्पतरू जयगुरु हित्था इव पउत्था ॥ ६ ॥

१. अस्या ऋषभपञ्चाशिकायाः सटीकं पुस्तकद्वयमस्माभिरधिगतम्. तत्र प्रथमं जीर्णतरं पत्रद्वयात्मकं संवेगिसाधुवरश्रीशान्तिविजयमुनिभिर्दत्तम्. द्वितीयं भगवान्दासश्रेष्ठिना सुरतनगरात्प्रहितं नवीनं नातिशुद्धं च. २. कारागारगतेन.

[त्वयि चिन्तादुर्लभमोक्षसुखफलदेऽपूर्वकल्पद्रुमे।
अवतीर्णे कल्पतरवो जगद्गुरो द्वीपस्था इव प्रोषिताः॥]
अरएणं तइएणं इमाइ ओसप्पिणीइ तुह जम्मे।
फुरिअं कणगमएणं व कालचक्किक्कपासम्मि॥ ७॥
[अरकेण तृतीयेणास्यामवसर्पिण्यां तव जन्मनि।
स्फुरितं कनकमयेनेव कालचक्रैकपार्श्वे॥]
जम्मि तुमं अहिसित्तो जत्थ य सिवसुक्खसंपयं पत्तो।
ते अट्ठावयसेला सीसामेला गिरिकुलस्स॥ ८॥
[यत्र त्वमभिषिक्तो यत्र च शिवसुखसंपदं प्राप्तः।
तावष्टापदशैलौ शीर्षापीडौ गिरिकुलस्य॥]
धन्ना सविम्हयं जेहिँ झत्ति कयरज्जमज्जणो हरिणा।
चिरधरिअनलिणपत्ताभिसेअसलिलेहिँ दिट्ठोसि॥ ९॥
[धन्याः सविस्मयं यैर्झगिति कृतराज्यमज्जनो हरिणा।
चिरधृतनलिनीपत्राभिषेकसलिलैर्दृष्टोऽसि॥]
दाविअविज्जासिप्पो वज्जरिआसेसलोअववहारो।
जाओसि जाण सामिअ पयाउ ताओ कयत्थाओ॥ १०॥
[दर्शितविद्याशिल्पो व्याकृताशेषलोकव्यवहारः।
जातोऽसि यासां स्वामी प्रजास्ताः कृतार्थाः॥]
बन्धुविहत्तवसुमई वच्छरमच्छिन्नदिन्नघणनिवहो।
जह तं तह को अन्नो निअमधुरं धीर पडिवन्नो॥ ११॥
[बन्धुविभक्तवसुमतीको वत्सरमच्छिन्नदत्तधननिवहः।
यथा त्वं तथा कोऽन्यो नियमधुरां धीर प्रतिपन्नः॥]
सोहसि पसाहिअंसो कज्जलकसिणाहिँ जयगुरु जडाहिं।
उवगूढविसज्जिअरायलच्छिबाहच्छडाहिं वा॥ १२॥
[शोभसे प्रसाधितांसः कज्जलकृष्णाभिर्जगद्गुरो जटाभिः।
उपगूढविसर्जितराजलक्ष्मीबाष्पच्छटाभिरिव॥]

उवसामिआ अणज्जा देसेसु तुए पवन्नमोणेण ।
अभणन्तच्चिअ कज्जं परस्स साहन्ति सप्पुरिसा ॥ १३ ॥
[उपशमिता अनार्या देशेषु त्वया प्रपन्नमौनेन ।
अभणन्त एव कार्यं परस्य साधयन्ति सत्पुरुषाः ॥]
मुणिणो वि तुहल्लीणा नमिविनमी खेअराहिवा जाया ।
गुरुआण चलणसेवा न निप्फला होइ कइयावि ॥ १४ ॥
[मुनेरपि तवालीनौ नमिविनमी खेचराधिपौ जातौ ।
गुरूणां चरणसेवा न निष्फला भवति कदाचनापि ॥]
भद्दं से सेअंसस्स जेण तवसोसिओ निराहारो ।
वरिसन्ते निव्वइओ मेहेण व वणदुमो तं सि ॥ १५ ॥
[भद्रं तस्य श्रेयसो येन तपःशोषितो निराहारः ।
वर्षान्ते निर्वापितो मेघेनेव वनद्रुमस्त्वमसि ॥]
उप्पन्नविमलनाणे तुमम्मि भुवणस्स विअलिओ मोहो ।
सेलुग्गयसूरे वासरम्मि गयणस्स व तमोहो ॥ १६ ॥
[उत्पन्नविमलज्ञाने त्वयि भुवनस्य विगलितो मोहः ।
सकलोद्गतसूर्ये वासरे गगनस्येव तमओघः ॥]
पूआवसरे सरिसो दिट्ठो चक्कस्स तं पि भरहेण ।
विसमा हु विसयतिह्वा गुरुआण वि कुणइ मइमोहम् ॥ १७ ॥
[पूजावसरे सदृशो दृष्टश्चक्रस्य त्वमपि भरतेन ।
विषमा खलु विषयतृष्णा गुरूणामपि करोति मतिमोहम् ॥]
पढमसमोसरणमुहे तुह केवलसुरवहूकउज्जोआ ।
जाया अग्गेइदिसा सेवासयमागयसिहि व्व ॥ १८ ॥
[प्रथमसमवसरणमुखे तव केवलसुरवधूकृतोद्योता ।
जाता आग्नेयी दिशा सेवास्वयमागतशिखीव ॥]
गहिअवयभङ्गमलिणो नूणं दूरोणएहिं मुहराओ ।
तइओ पढमुल्लअतावसेहिं तुह दंसणे पढमे ॥ १९ ॥

[गृहीतव्रतभङ्गमलिनो नूनं दूरावनतैर्मुखरागः ।
स्थगितः प्रथमोत्पन्नतापसैस्तव दर्शने प्रथमे ॥]

तेहिँ परिवेढिएण य वूढा तुमए खणं कुलवइस्स ।
सोहा विअडंसत्थलखोलन्तजडाकलावेण ॥ २० ॥

[तैः परिवेष्टितेन च व्यूढा त्वया क्षणं कुलपतेः ।
शोभा विकटांसस्थलप्रेङ्खज्जटाकलापेन ॥]

तुह रूवं पेच्छन्ता न हुन्ति जे नाह हरिसपडिहत्था ।
समणावि गयमणच्चिअ ते केवलिणो जइ न हुन्ति ॥ २१ ॥

[तव रूपं पश्यन्तो न भवन्ति ये नाथ हर्षपरिपूर्णाः ।
समनस्का अपि गतमनस्का इव ते केवलिनो यदि न भवन्ति ॥]

पत्तानि असामन्नं समुन्नइं जेहिँ देवया अन्ने ।
ते दिन्ति तुम्ह गुणसंकहासु हासं गुणा मज्झ ॥ २२ ॥

[प्राप्तान्यसामान्यां समुन्नतिं यैर्देवतान्यन्यानि ।
ते ददते तव गुणसंकथासु हासं गुणा मह्यम् ॥]

दोसरहिअस्स तुह जिण निन्दावसरम्मि भग्गपसराए ।
वायाइ वयणकुसला वि बालिसाहुन्ति मच्छरिणो ॥ २३ ॥

[दोषरहितस्य तव जिन निन्दावसरे भग्नप्रसरया ।
वाचा वचनकुशला अपि बालिशायन्ते मत्सरिणः ॥]

अणुरायपल्लविल्ले रइवल्लिफुरन्तहासकुसुमम्मि ।
तवताविओ वि न मणो सिङ्गारवणे तुहल्लीणो ॥ २४ ॥

[अनुरागपल्लववति रतिवल्लीस्फुरद्धासकुसुमे ।
तपस्तापितमपि न मनः शृङ्गारवने तव लीनम् ॥]

आणा जस्स विलइआ सीसे सेसव्व हरिहरेहिँ पि ।
सो वि तुह झाणजलणे मयणो मयणं विअ विलीणो ॥ २५ ॥

[आज्ञा यस्य विलम्बिता शीर्षे शेषेव हरिहराभ्यामपि ।
सोऽपि तव ध्यानज्वलने मदनो मदन इव विलीनः ॥]

पइँ नवरि निरभिमाणा जाया जयदप्पभञ्जणुत्ताणा ।
वम्महनरिन्दजोहा दिट्ठिच्छोहा मयच्छीणम् ॥ २६ ॥
[त्वयि केवलं निरभिमाना जाता जगद्दर्पभञ्जनोत्तानाः ।
मन्मथनरेन्द्रयोधा दृष्टिक्षोभा मृगाक्षीणाम् ॥]
विसमा रागद्देसा निन्ता तुरयव्व उप्पहेण मणम् ।
ठायन्ति धम्मसारिहि दिट्ठे तुह पवयणे नवरम् ॥ २७ ॥
[विषमौ रागद्वेषौ नयन्तौ तुरगाविवोत्पथेन मनः ।
तिष्ठतो धर्मसारथे दृष्टे तव प्रवचने निश्चितम् ॥]
पचलकसायचोरे सइसंनिहिआसि चक्कधणुरेहा ।
हुन्ति तुह चिअ चलणा सरणं भीआण भवरन्ने ॥ २८ ॥
[प्रत्यलकषायचोरे सदासांनिहितासि चक्रधनूरेखौ ।
भवतस्तवैव चरणौ शरणं भीतानां भवारण्ये ॥]
तुह समयसरब्भट्ठा भमन्ति सयलासु रुक्खजाईसु ।
सारणिजलं व जीवा ठाणट्ठाणेसु वज्झन्तो ॥ २९ ॥
[तव समयसरोभ्रष्टा भ्रमन्ति सकलासु रु(वृ)क्षजातिषु ।
सारणिजलमिव जीवा स्थानस्थानेषु बध्यमानाः ॥]
सलिलिव्व पवयणे तुह गहिए उड्ढं अहो विमुक्कम्मि ।
वच्चन्ति नाह कूवारहट्टघडिसंनिहा जीवा ॥ ३० ॥
[सलिल इव प्रवचने तव गृहीते ऊर्ध्वमधो विमुक्ते ।
व्रजन्ति नाथ कूपारघट्टघटीसंनिभा जीवाः ॥]
लीलाइ निन्ति सुक्खं अन्ने जह तित्थिआ तहा न तुमम् ।
तह वि तुह मग्गलग्गा मग्गन्ति बुहा सिवसुहाइं ॥ ३१ ॥
[लील्या नयन्ति सुखमन्ये यथा तीर्थिका तथा न त्वम् ।
तथापि तव मार्गलग्ना मृगयन्ते बुधाः शिवसुखानि ॥]
सारिव्व बन्धवहमरणभाइणो जिण ण हुन्ति पइ दिट्ठे ।
अक्खाहिँपि हीरन्ता जीवा संसारफलयम्मि ॥ ३२ ॥

[शारय इव बन्धवधमरणभागिनो जिन न भवन्ति त्वयि दृष्टे।
अक्षैरपि ह्रियमाणा जीवाः संसारफलके॥]
अवहीरिआ तए पहु निन्ति निओगिकसङ्कलाबद्धा।
कालमणन्तं सत्ता समं कयाहारनीहारा॥ ३३॥
[अवधीरितास्त्वया प्रभो नयन्ति निगोदे(योगे)कशृङ्खलाबद्धाः।
कालमनन्तं सत्त्वा समं कृताहारनीहाराः॥]
जेहिँ तविआणँ तवनिहि, जायइ परमा तुमम्मि पडिवत्ती।
दुक्खाइँ ताइँ मन्ने न हुन्ति कम्मं अहम्मस्स॥ ३४॥
[यैस्तापितानां तपोनिधे जायते परमा त्वयि प्रतिपत्तिः।
दुःखानि तानि मन्ये न भवन्ति कर्माधर्मस्य॥]
होही मोहच्छेडं तुह सेवाए धुवत्ति नन्दामि।
जं पुण न वन्दिअव्वो तत्थ तुमं तेण झिज्जामि॥ ३५॥
[भविष्यति मोहच्छेदस्तव सेवया ध्रुव इति नन्दामि।
यत्पुनर्न वन्दितव्यस्तत्र त्वं तेन क्षीये॥]
जा तुह सेवाविमुहस्स हन्तु मा ताउ मह समिद्धीओ।
अहियारसंपया इव पेरन्तविडम्बणफलाओ॥ ३६॥
[यास्तव सेवाविमुखस्य भवन्तु मा ता मम समृद्धयः।
अधिकारसंपद इव पर्यन्तविडम्बनफलाः॥]
भित्तूण तमं दीवो देव पयत्थे जणस्स पयडेइ।
तुह पुण विवरीयमिणं जइक्कदीवस्स निव्वडिअम्॥ ३७॥
[भित्त्वा तमो दीपो देव पदार्थाञ्जनस्य प्रकटयति।
तव पुनर्विपरीतमिदं जगदेकदीपस्य निर्वृत्तम्॥]
मिच्छत्तविसपसुत्ता सचेयणा जिण न हुन्ति किं जीवा।
कण्णम्मि कमइ जइ कित्तिअं पि तुह नामणमन्तस्स॥ ३८॥
[मिथ्यात्वविषप्रसुप्ताः सचेतना जिन न भवन्ति किं जीवाः।
कर्णयोः क्रामति यदि कियदपि त्वन्नामनमन्त्रस्य॥]

आयण्णिआ खणद्धं पि पइ थिरं ते करन्ति अणुराअम्।
परसमया तह वि मणं तुह समयज्ञाण न हरन्ति ॥ ३९ ॥
[आकर्णिताः क्षणार्धं त्वयि स्थिरं ते कुर्वन्त्यनुरागम्।
परसमयास्तथापि मनस्तव समयज्ञानां न हरन्ति ॥]
वाईहिँ परिग्गहिआ करन्ति विमुहं खणेण पडिवक्खम्।
तुज्झ नया नाह महागयव्व अन्नुन्नसंलग्गा ॥ ४० ॥
[वादि(जि)भिः परिगृहीताः कुर्वन्ति विमुखं क्षणेन प्रतिपक्षम्।
तव नया नाथ महागजा इवान्योन्यसंलग्नाः ॥]
पावन्ति जसं असमञ्जसा वि वयणेहिँ जेहिँ परसमया।
तुह समयमहोअहिणो ते मन्दा बिन्दुनिस्सन्दा ॥ ४१ ॥
[प्राप्नुवन्ति यशोऽसमञ्जसा अपि वचनैर्यैः परसमयाः।
तव समयमहोदधेस्तानि मन्दा विन्दुनिस्यन्दाः ॥]
पइ मुक्के पोअम्मिव जीवेहिँ भवन्नवम्मि पत्ताओ।
अणुवेलमावयामुहपडिएहिँ विडम्बणा विविहा ॥ ४२ ॥
[त्वयि मुक्ते पोत इव जीवैर्भवार्णवे प्राप्ताः।
अनुवेलमापदा(गा)मुखपतितैर्विडम्बना विविधाः ॥]
वुत्थं अपत्थिआगयमत्थमवन्तो मुहुत्तवसिएण।
छावट्ठीअयराइं निरन्तरं अप्पइट्ठाणे ॥ ४३ ॥
[उषितमप्रार्थितागतमत्स्यभवान्तर्मुहूर्तमुषितेन।
षट्षष्टिसागरोपमानि (?) निरन्तरमप्रतिष्ठाने ॥]
सीउह्ववासधारानिवायदुक्खं सुतिक्खमणुभूअम्।
तिरिअत्तणम्मि नाणावरणसमुच्छाइएणावि ॥ ४४ ॥
[शीतोष्णवर्षधारानिपातदुःखं सुतीक्ष्णमनुभूतम्।
तिर्यक्त्वेऽपि ज्ञानावरणसमवच्छादितेनापि ॥]
अन्तोनिक्खन्तेहिं पत्तेहिं पिअकलत्तपुत्तेहि।
सुन्ना मणुस्सभवणाडएसु निब्भाइआ अङ्का ॥ ४५ ॥

[अन्तेनिष्क्रान्तै प्रात्रैः(पात्रैः) प्रियकलत्रपुत्रैः।
शून्या मनुष्यभवनाटकेषु निभालिता अङ्काः॥]

दिट्ठा रिउरिद्धीओ आणाउ कया महड्डिअसुराणम्।
सहियावहीणदेवत्तणेसु दोगच्चसंतावा॥ ४६॥

[दृष्टा रिपुऋद्धय आज्ञा कृता महर्द्धिकसुराणाम्।
सोढावधहीनदेवत्वेषु दौर्गत्यसंतापौ॥]

सिञ्चन्तेण भववणं पल्लट्टा पल्लिआ रहट्टव्व।
घडिसंठाणोसप्पिणिओसप्पिणिपरिगया बहुसो॥ ४७॥

[सिञ्चता भववनं परिवर्ताः प्रेरिता अरघट्ट इव।
घटीसंस्थानावसर्पिण्युत्सर्पिणीपरिगता बहुशः॥]

भमिओ कालमणन्तं भवम्मि भीओ न नाह दुक्खाणम्।
दिट्ठे तुमम्मि संपइ जायं च भयं पलायं च॥ ४८॥

[भ्रान्तः कालमनन्तं भवे भीतो न नाथ दुःखानाम्।
दृष्टे त्वयि संप्रति जातं च भयं पलायितं च॥]

जइ वि कयत्थो जगगुरु मज्झत्थो जइ वि तह वि पत्थेमि।
दाविज्जसु अप्पाणं पुणो वि कइयावि अह्माणम्॥ ४९॥

[यद्यपि कृतार्थो जगद्गुरो मध्यस्थो यद्यपि तथापि प्रार्थये।
दर्शयेरात्मानं पुनरपि कदाचिदप्यस्माकम्॥]

इअ झाणग्गिपलीविअकम्मिन्धण बालबुद्धिणा वि मए।
भत्तीइ थुओ भवभयसमुद्दबोहित्थबोहिफलो॥ ५०॥

[इति ध्यानाग्निप्रदीपितकर्मेन्धन बालबुद्धिनापि मया।
भक्त्या स्तुतो भवभयसमुद्रयानपात्रबोधिफलः॥]

इति महाकविश्रीधनपालविरचिता ऋषभपञ्चाशिका।

---

## महाकविशोभनमुनिप्रणीता
# चतुर्विंशतिजिनस्तुतिः ।

टिप्पणसमेता ।

---

धनपालपण्डितबान्धवेन शोभनाभिधानेन मुनिचक्रवर्तिना विरचितानां प्रतिजिन चतुष्कभावात् षण्णवति(?)संख्यानां शोभनस्तुतीनामवचूरिः किंचिल्लिख्यते । तत्रादौ युगादिस्तुतिमाह—

भव्याम्भोजविबोधनैकतरणे विस्तारिकर्मावली-
रम्भासामज नाभिनन्दन महानष्टापदाभासुरैः ।
भक्त्या वन्दितपादपद्म विदुषां संपादय प्रोज्झिता-
रम्भासान जनाभिनन्दन महानष्टापदाभासुरैः ॥ १ ॥

हे नाभिनन्दन नाभिनरेन्द्रपुत्र, त्वं महानुत्सवान्विदुषां संपादयेति संबन्धः । भव्या एवाम्भोजानि कमलानि तेषां विबोधने एकोऽद्वितीयस्तरणिः सूर्यस्तस्य संबोधनं हे भव्याम्भोजविबोधनैकतरणे । सूर्यो यथा स्वगोसंभारैस्तमो विधूय पद्मखण्डानि विकासयत्येवं भगवानपि मिथ्यात्वादितमस्तोमं ध्वंसयित्वा निजगोसंभारैर्भव्यजन्तूनां बोधं विधत्ते । ननु भव्यानामेव स प्रबोधं विधत्ते न त्वभव्यानां तर्हि तस्य तद्बोधनेऽसामर्थ्यमायातमिति नैवम् । नहि भानवीया भानवो विश्वं विश्वमवभासयन्तोऽपि कौशिककुले आलोकमकुर्वाणा उपलम्भास्पदं स्युः । एवं भगवतो वाणी विश्वविश्वस्य प्रबोधविधायिन्यपि यदभव्यानां केषांचिन्निबिडकर्मनिगडनियन्त्रितानां प्रबोधाय न प्रभवति तर्हि तस्या न ह्यसामर्थ्यम् । किं तु तेषामेवाभाग्यं येषां ता न रोचयन्ते (सा न रोचते) । नहि जलदो जलं प्रयच्छन्नूषरक्षेत्रे तृणान्यनुत्पादयन्नुपालम्भसंभावनामर्हतीत्यलं विस्तरेण । विस्तारिणी विस्तारवती कर्मणां ज्ञानावरणादिभेदभिन्नानामावली माला सैव रम्भा कदली तस्याः प्रमर्दहेतुत्वात्सामजो हस्ती । तस्य संबोधनम् । हे नाभिनन्दन । तथा महत्यो नष्टा आपदा यस्य स महानष्टापद । संबोधनं वा । तथा आभासुरैः कान्तिसंभारेण समन्तादेदीप्यमानैरासुरैर्देवविशेषैर्भक्त्या आन्तर चित्तप्रतिबन्धेन हे वन्दितपादपद्म हे स्तुतचरणकमल । प्रोज्झिताः प्रकर्षेण त्यक्ता आरम्भाः सावद्यव्यापा

---

१. एतस्या जिनस्तुतेः पुस्तकत्रयमवचूरिसमेतं केवलदासात्मजेन भगवान्दासश्रेष्ठिनास्मदर्थं प्रहितम्. तत्र प्रथमं शुद्धं सुन्दरं पञ्चपत्रात्मकं १५०५ मिते विक्रमाब्दे लिखितम्. द्वितीयमपि तादृशमेवैकादशपत्रात्मकं १६१४ मिते विक्रमाब्दे लिखितम्. तृतीयं नातिशुद्धं त्रयोदशपत्रात्मकं १६१५ मिते विक्रमाब्दे लिखितमस्ति.

यत्र नालीके चन्द्रतुल्यरुचि भ्रामरी भ्रमरसंबन्धिनी आली श्रेणिर्गन्धाढ्यांजकल्कबिन्दूनदधत्पपौ । किंभूता । केसरेषु लालसा लम्पटा । समुदिता मिलिता । आशु शीघ्रम् । इभेषु मदलौल्यादासिता विश्रब्धा । तत्र नालीके क्रमौ निदधती श्रुतदेवता वः पातु । किंभूता । समुदिता सहर्षा । शुभ्रा शुक्ला छवियोता ताश्च ता अमर्यश्च ताभिः शोभिता । (सरला अलसा च) ॥

तमजितमभिनौमि यो विराजद्घनघनमेरुपरागमस्तकान्तम् ।
निजजननमहोत्सवेऽधितष्ठावनघनमेरु परागमस्तकान्तम् ॥ ५ ॥

यः स्वामी निजजन्मोत्सवेऽधितष्ठौ । किं कर्म । विराजद्भिर्घनैर्घनो निरन्तरः अथवा शोभमानाम्भसो घना यत्र स चासौ मेरुरागो मेरुपरमपर्वतस्तस्य शिखराग्रम् । किंभूतम् । अनघा नमेरवो देववृक्षविशेषास्तेषां रेणुर्यत्र तत्तथा । किंभूतं शिखराग्रम् । अस्तोऽस्तगिरिस्तद्वत्कान्तं कमनीयम् । अथवा जिनविशेषणम् । अस्ता कान्ता येन तम् ॥

स्तुत जिननिवहं तमर्तितप्ताध्वनदसुरामरवेण वस्तुवन्ति ।
यममरपतयः प्रगाय पार्श्वध्वनदसुरामरवेणव स्तुवन्ति ॥ ६ ॥

हे लोकाः । तं जिनवृन्दं स्तुत । यं जिनव्रजममरेन्द्राः स्तुवन्तीति संबन्धः । किं कृत्वा । अर्ती पीडया तप्तानां शैत्याधायकतया साक्षाद्ध्वनदो मार्गदः सुरामः सुष्ठु रमणीयो यो रवः शब्दस्तेन करणभूतेन । वस्तुवन्ति च्छन्दोजातिविशेषवन्ति गीतानि प्रगाय गीत्वा । किंभूताः । पार्श्वे समीपे ध्वनन्तोऽसुरामराणां वेणवो वंशा येषां ते तथा । 'वत्सये(?) लुग्वा' इति रेफस्य लुक् ॥

प्रवितर वसतिं त्रिलोकबन्धो गम नययोगततान्तिमे पदे हे ।
जिनमत विततापवर्गवीथीगमनययो गततान्ति मेऽपदेहे ॥ ७ ॥

अन्तिमे मोक्षलक्षणे पदे हे जिनमत । मे मम वासं देहि । हे गम हे सदृशपाठ, नया निगमादयस्तैर्योगः संबन्धस्तेन विस्तीर्ण विपुलशिवमार्गगमने ययो अश्व । 'ययुरश्वोऽश्वमेधीयः' इति वचनात् । 'तमोऽवग्लानौ' इति धातोस्तान्तिर्ग्लानिः । आपदित्यर्थः । गततान्ति अपगतग्लानि यथा स्यात् । किंभूते पदे अपदेहे देहमुक्ते ॥

सितशकुनिगताशु मानसीद्धात्ततिमिरंमदभा सुराजिताशम् ।
वितरतु दधती पविं क्षतोद्यत्ततिमिरं मदभासुराजिता शम् ॥ ८ ॥

हंसारूढा मानसी देवी पविं वज्रं दधती शं सुखं प्रवितरतु । पविं किंभूतम् । इद्धा दीप्ता आत्ता गृहीता ततिर्विस्तारो येन तत्तथा । इरंमदो जलदाग्निस्तद्वत्कान्तिर्यस्याः सा सुष्ठु शोभिता आशा दिशो येन । क्षतं विनष्टमुद्यद्दूरच्छत्तन विस्तीर्णं ध्वान्तं यस्मात्तत्तथा । देवी दर्पाङ्कुरैरपराभूता ॥

निर्भिन्नशत्रुभवभय शं भवकान्तारतार तार ममारम्।
वितर त्रातजगत्रय शंभव कान्तारतारतारममारम्॥ ९॥

हे निर्भिन्नशत्रुसंभूतभय, हे संसारकान्तारतारक, हे तार उज्ज्वल, अरं शीघ्रं मम शं सुखं देहि। हे रक्षितजगत्रय, शंभव जिन, योषित्सुरतेष्वरत अनासक्त, न रमत इत्यरमोऽरममाणोऽक्रीडन्मारः कामो यत्र॥

आश्रयतु तव प्रणतं विभया परमा रमारमानमदमरैः।
स्तुत रहित जिनकदम्बक विभयापरमार मारमानमदमरैः॥ १०॥

हे जिनकदम्बक जिनसमूह, रमा लक्ष्मीस्तव प्रणतं नरमाश्रयतु। किंभूता। विभया रोचिषा परमा प्रकृष्टा। अरं शीघ्रमानमन्तश्च ते सुराश्च तैः स्तुत वन्दित। हे विगतभय। हे न परान्मारयतीत्यपरमार। सर्वजन्तुरक्षक। हे रहित त्यक्त। कैः। कामममानमदमरणैः॥

जिनराज्या रचितं स्तादसमाननयानया नयायतमानम्।
शिवशर्मणे मतं दधदसमाननयानयानया यतमानम्॥ ११॥

जिनानां राज्या श्रेण्या रचितं अर्थस्य तदुक्तत्वात्कृतं मतं शासनं नोऽस्माकं शिवसुखाय स्तात् भूयात्। किंभूतया। असमे निरुपमे आननयाने मुखगमने यस्यास्तया नः इत्यत्र 'रोर्यः' इति रस्य यः। 'स्वरे वा' इति विकल्पत्वात्तस्यात्र न लुक्। आयतो विपुलो मानः पूजा प्रमाणं वा यस्य तत्तथा। दधत् धारयत्। कान्। असमाननयान् असदृशनयान्। किंभूतया जिनराज्या। अयानया अवाहनया। मतं किंभूतम्। यतमानं प्रयत्नं कुर्वाणम्॥

शृङ्खलभृत्कनकनिभा यातामसमानमानमानवमहिताम्।
श्रीवज्रशृङ्खलां कजयातामसमानमानमानवमहिताम्॥ १२॥

या देवी शृङ्खलाभरणभृत्सुवर्णवर्णा चास्ति तां श्रीवज्रशृङ्खलां वज्रशृङ्खलाभिधानामानम। किंभूताम्। असमानोऽसाधारणो मानः पूजा बोधो वा येषाम्। अथवा असदृशां अनमानी प्राणाहंकारी येषां ते असमानमानाः। ते च मानवाश्च तैर्महिता पूजिता ताम्। कजयातां पद्मगताम्। असमानं निरहंकारं यथा स्यात् एवमानम नमस्कुरु। अवमं पापं तन्न विद्यते येषां तेऽनवमास्तेभ्यो हिताम्॥

त्वमशुभान्यभिनन्दन नन्दितासुरवधूनयनः परमोदरः।
स्मरकरीन्द्रविदारणकेसरिन्सुरव धूनय नः परमोऽदरः॥ १३॥

हे अभिनन्दन जिन, त्वमशुभान्यशिवान्यकल्याणान्यपुण्यानि वा नोऽस्माकं धूनय कम्पय विनाशय। किंभूतः। नन्दिता असवः प्राणाः प्राणिनां येन। अथवा धर्मधर्मिणोः कथंचिदभेदादसुशब्देनासुमन्त एवोच्यन्ते। तथा न वधूषु नयने यस्य स तथा। यद्वा

नन्दितानि अमुरवशूनयनानि येन सः। तथा परेभ्यो मोदं राति ददाति यः। यद्वा पमुदरं यस्य। हे सुरव, जगदाह्लादिलाद्‌········। परमः प्रधानोऽदरो निर्भयः॥

जितवराः प्रयतध्वमितामया मम तमोहरणाय महारिणः।

प्रदधतो भुवि विश्वजनीनताममतमोहरणा यमहारिणः॥ १४॥

हे जिनवराः, मम तमोहरणायाज्ञानापगमाय यूयं प्रयतध्वं प्रयत्नं कुरुध्वम्। किंभूताः। इतामया गतरोगाः। पुनः किंभूताः। महान्ति अरीणि चक्राणि धर्मचक्रलक्षणानि येषां ते। किं कुर्वाणाः। दधानाः पृथिव्यां विश्वजनहितत्वम्। अमतावनभिप्रेतौ मोहहर्षौ येषां ते। यमहारिणो मृत्युहरणशीलाः। यद्वा यमानि महाव्रतानि तैर्मनोहराः॥

असुमतां मृतिजात्यहिताय यो जिनवरागम नो भवमायतम्।

प्रलघुतां नय निर्मथितोद्धताजिनवरागमनोभवमाय तम्॥ १५॥

यो भवोऽसुमतां मृतिजाती मरणजन्मनी ते एवाहितमपथ्यं तस्मै मरणजन्माहिताय स्यात्। हे जिनेन्द्रसिद्धान्त, नोऽस्माकं तं भवं संसारमायतं प्रलम्बं लघीयस्त्वं प्रापय। आजिः सङ्ग्रामः नवरागो द्रव्यार्दौ नूतनोऽभिलाषः। यद्वा उद्धताजा नवरागो यस्य तच्च तन्मनस्तत्र भवा या माया सा निराकृता येन। यद्वा मुक्तसङ्ग्रामनूतनरागकाममाय॥

विशिखशङ्खजुषा धनुषात्तसत्सुरभिया ततनुन्नमहारिणा।

परिगतां विशदामिह रोहिणीं सुरभियाततनुं नम हारिणा॥ १६॥

धनुषा मण्डितहस्तां रोहिणीं देवीं नम। किंभूतेन। शरशङ्खसहितेन। अत्ता ध्वस्ता सत्सुराणां प्रकृष्टदेवानां भीर्येन। ततः प्रसृता नुन्नाः प्रेरिता महान्तोऽरयो येन। परिगतां परिवारिताम्। विशदां शुक्लवर्णाम्। इहास्मिञ्जगति रोहिणीं रोहिण्यभिधानाम्। सुरभिर्गौस्तत्र याता प्राप्ता तनुर्यस्यास्तां देवीं नम प्रणिपत। धनुषा किंभूतेन। हारिणा मनोहरेण॥

मदमदनरहित नरहित सुमते सुमतेन कनकतारेतारे।

दम दमपालय पालय दरादरातिक्षतिक्षपातः पातः॥ १७॥

हे मदकामाभ्यां त्यक्त, हे नरेभ्यो हित, हे सुमतिजिन, दमदं प्रशमदं नर दराद्भिहलोकादिभेदभिन्नसाध्वसात्पालय रक्ष। हे सुमतेन सुसिद्धान्तस्वामिन्। यद्वा सुमतेन करणभूतेन। हे अपालय अपगतनिलय। हे कनकतार तपनीयोज्ज्वल। हे इतारे गतशत्रव। हे पातस्त्रायक। अरातिक्षतिः शत्रुभ्य उपमर्दः सैव रजनीसदृक्षपा रात्रिस्तस्याः॥

विधुतारा विधुताराः सदा सदाना जिना जिताघाताघाः।

तनुतापातनुतापा हितमाहितमानवनवविभवा विभवाः॥ १८॥

विधुतारा हे जिनाः, हितं तनुत कुरुत। विधुतमारमरीणां समूहोऽरणं वा अरो भ्रमणमर्थात्संसारो यैस्ते। तथा विधुश्चन्द्रस्तद्वदुज्ज्वलाः। सदानाः सत्यागाः। जितमघातं घातवर्जितमघं पापं यैस्ते। अपगतमहातापाः। आहितो विस्तीर्णो मानवानां नवविभवो नवः प्रत्यग्रो विभव ऐश्वर्यं यैस्ते। तथा विगतसंसाराः॥

मतिमति जिनराजि नराहितेहिते रुचितरुचि तमोहे मोहे।
मतमत नूनं नूनं स्मरासराधीरधीरसुमतः सुमतः॥ १९॥

जिनराजि सर्वेज्ञे, मतं त्वं स्मरेति संबन्धः। किंभूते। मतिमति सातिशयज्ञानयुक्ते। नराणामाहितं पूरितमीहितं वाञ्छितं येन तस्मिन्। रुचिता परेषां प्रमोदकारित्वादभीष्टा रुक्कान्तिर्यस्य तस्मिन्। तमोहे अज्ञानघातिनि। मोहे ममत्वमुक्ते। मतं किंभूतम्। तनु तुच्छमूनमपूर्णं च तनूनं न एवंविधमतनूनम्। नूनं निश्चितम्। न स्मरेणाधीरा धीर्यस्य सः। असुमतः प्राणिनः। जातावेकत्वम्। सुमतो रक्षाक्रियायां सुष्ठु अभिप्रेतः॥

नगदामानगदा मामहो महो राजिराजितरसा तरसा।
घनघनकाली काली वतावतादूनदूनसत्रासत्रा॥ २०॥

अहो इति संबोधने विस्मये वा। काली देवी मामवताद्रक्षतात्। किंभूता। नगदा 'दो अवच्छेदने' इति धातोः पर्वतभेत्री अमाना अप्रमाणा गदा प्रहरणविशेषो यस्याः सा। कान्तिराज्या राजिता शोभिता रसा भूमिर्यया सा। तरसा बलेन शीघ्रं वा। घनो मेघस्तद्वद्घनकाली प्रभूतकालवर्णा। वतेति विस्मये। ऊना अपूर्णाः। दूना विपक्षैः। सत्रासाः सभयास्तांस्त्रायते रक्षति या॥

पादद्वयी दलितपद्ममृदुः प्रमोद-
मुन्मुद्रतामरसदामलतान्तपात्री।
पाद्मप्रभी प्रविदधातु सतां वितीर्ण-
मुन्मुद्रतामरसदा मलतान्तपात्री॥ २१॥

पद्मप्रभसंबन्धिनी पादद्वयी प्रमोदं प्रविदधातु। किंभूता। दलितं विकसितं यदब्जं तद्वत्कोमला। उन्मुद्राणि विकसितानि तामरसदामानि कमलमाला लतान्तानि कुसुमानि तेषां पात्रीव पात्री भाजनम्। यद्वा उन्मुद्रतामरसदामान्येव लम्बत्वाल्लतास्तासामन्तपात्री समीपभाजनम्। सतां वितीर्णमुद्दत्तप्रीतिः। मुदि मुदा वा रता अमरसदा देवसभा यस्याः सा। मलेन कर्मणा तान्तान्ग्लानान्पातीति मलतान्तपात्री॥

सा मे मतिं वितनुताज्जिनपङ्क्तिरस्त-
मुद्रा गतामरसभासुरमध्यगाद्याम्।
रत्नांशुभिर्विदधती गगनान्तराल-
मुद्रागतामरसभासुरमध्यगाद्याम्॥ २२॥

सा जिनश्रेणी मम मतिं दद्यात्। अस्तमुद्रा मुक्तप्रमाणा। गता प्राप्ता अमरसभा देवपर्षयां जिनपङ्क्ति अध्यगात्प्राप्तवती। आयां प्रथमाम्। किंभूता। असुरमध्यगा असुरमध्ये गच्छतीति। किं कुर्वती। रत्नांशुभिर्भूषणमणिकान्तिभिर्गगनमध्ये उद्गतरागं यत्तामरसं पद्मं तद्वद्भासुरं कुर्वाणा॥

श्रान्तिच्छिदं जिनवरागममाश्रयार्थ-
मारामं मा नमं लसन्तमसंगमानाम्।
धामाग्रिमं भवसरित्पतिसेतुमस्त-
माराममानमलसंतमसं गमानाम्॥ २३॥

हे लोक, जिनेन्द्रागममानम। किंभूतम्। श्रमभेदकम्। आश्रयहेतोरारामभिवारामम्। लसन्तं शोभमानम्। केषाम्। असंगमानाम्। निःसङ्गानां मुनीनामित्यर्थः। अग्रिमं प्रकृष्टं धाम गृहम्। केषाम्। गमानां सदृशपाठानाम्। संसारसमुद्रसेतुम्। अस्ताः कामरोगाहंकारपापाज्ञानानि येन॥

गान्धारि वज्रमुसले जयतः समीर-
पातालसत्कुवलयावलिनीलभे ते।
कीर्तीः करप्रणयिनी तव ये निरुद्ध-
पातालसत्कुवलया बलिनी लभेते॥ २४॥

हे गान्धारि देवि, ते वज्रमुसले आयुधे जयतः। किंभूते। वातप्रेङ्खोलनेनाल्लसन्ती या कुवलयमाला तद्वन्नीला भा कान्तिर्ययोः। ये वज्रमुसले कीर्तीर्यशांसि लभेते। किंभूते। तव हस्तस्नेहले। बलिनी बलवती। कीर्तीः किंभूताः। निरुद्धमावृतं पातालं सत्पृथ्वीवलयं च याभिः॥

कृतनतिं कृतवान्यो जन्तुजातं निरस्त-
स्मरपरमदमायामानबाधायशस्तम्।
सुचिरमविचलत्वं चित्तवृत्तेः सुपार्श्वं
स्मर परमदमाया मानवाधाय शस्तम्॥ २५॥

यः स्वामी जन्तुजातं कृतप्रणामं विहितवान्। किंभूतम्। निरस्तानि कंदर्पवैरिमदमाया मानपीडायशांसि येन तत्। तं सुपार्श्वं देवं हे मानव, नर, त्वं स्मर। किं कृत्वा। निश्चलत्वमाधाय। कस्याः। चित्तवृत्तेर्मनोव्यापारस्य। सुचिरं प्रभूतकालम्। परमो दमो यस्याः। शस्तं शोभनम्॥

व्रजतु जिनततिः सा गोचरं चित्तवृत्तेः
सदमरसहिताया वोऽधिका मानवानाम्।

पदमुपरि दधाना वारिजानां व्यहार्षी-
त्सदमरसहिता या बोधिकामा नवानाम् ॥ २६ ॥

सा जिनानां ततिर्वो युष्माकं मनोवृत्तेर्गोचरं व्रजतु गच्छतु। किंभूतायाः। सह दमरसेन वर्तन्ते ये तेषां हितायाः। जिनततिः किंभूता। मानवानां नराणामधिका उत्कृष्टा। या जिनश्रेणिर्व्यहार्षीद्विहारं कृतवती। किंभूता। नवानां नवसंख्यानां नूतनानां वारिजानां स्वर्णकमलानामुपरिष्टात्पदं स्थापयन्ती। सद्देवयुक्ता। बोधिकामा स्वयमवाप्तबोधित्वात्परेषां बोधिधर्मप्राप्तिस्तत्र कामो यस्याः सा ॥

दिशदुपशमसौख्यं संयतानां सदैवो-
रु जिनमतमुदारं काममायामहारि।
जननमरणरीणान्वासयन्सिद्धवासे-
ऽरुजि नमत मुदारं काममायामहारि ॥ २७ ॥

हे जना जिनमतं नमत प्रणमत। किंभूतम्। उरु प्रौढं प्रशमसुखं ददत्। केषाम्। सयतानां मुनीनाम्। सदैव सर्वदा। उदारमुदात्तम्। काममत्यर्थमायामहारि दैर्घ्यशोभि। अरुजि रोगरहिते सिद्धवासे वासं कारयन्। कान्। जन्ममरणखिन्नान्। मुदा हर्षेण। अरं शीघ्रम्। काममाययोर्महारि महावैरिभूतम् ॥

दधति रविसपत्नं रत्नमाभास्तभास्व-
न्नवघनतरवारिं वा रणारावरीणाम्।
गतवति विकरत्यालीं महामानसीष्टा-
न्नव घनतरवारिं वारणारावरीणाम् ॥ २८ ॥

हे महामानसि देवि, इष्टानभिमतान्नरादीनव रक्ष। हे गतवति प्राप्तुषि। कस्मिन्वारणारौ सिंहे। हे दधति धारयन्ति। किम्। रत्नं मणिम्। किंभूतम्। रविसपत्नं रविप्रतिपक्षं प्रभाधिक्यात्। आभया कान्त्या अस्तो भास्वान्सूर्यो येन स चासौ नवो नूतनो घनो निबिडस्तरवारिः खड्गश्च तम्। वा समुच्चये। सिंहे किं कुर्वति। अरीणां वैरिणामालीं श्रेणिं विकिरति क्षिपति। किंभूतामालीम्। रणस्यारावेण रीणां क्षीणाम्। खड्गं किंभूतम्। घनतरवारिं सान्द्रतरपानीयम्। रत्नविशेषणं वा।

तुभ्यं चन्द्रप्रभ जिन नमस्तामसोज्जृम्भितानां
हाने कान्तानलसम दयावन्दितायासमान।
विद्वत्पङ्क्त्या प्रकटितपृथुस्पष्टदृष्टान्तहेतू-
हानेकान्तानलसमदया वन्दितायांसमान ॥२९ ॥

हे चन्द्रप्रभ जिन, हे दयावन्, तुभ्यं नमोऽस्तु। तमःसमन्धिविस्फूर्जितानां हाने

त्यागे मनोहरवद्विसमान। दितौ छिन्नावायासमानौ येन। तुभ्यं किंभूताय। विद्वत्पङ्क्त्या वन्दिताय। प्रकटिताः पृथवो विततः स्पष्टा दृष्टान्ता निदर्शनानि हेतवः कारणानि ऊहो वितर्कः अनेकान्तः स्याद्वादो येन तत्संबोधनम्। विद्वत्पङ्क्त्या किंभूतया। न वि- द्येते अलसमदौ तन्द्राहंकारौ यस्यास्तया। हे असमान निरुपमान॥

जीयाद्राजिर्जिनेनितजननज्यानिहानिर्जिनानां
सत्यागारं जयदमितरुक्सारविन्दावतारम्।
भव्योद्धृत्या भुवि कृतवती या वहद्धर्मचक्रं
सत्यागा रञ्जयदमितरुक् सा रविं दावतारम्॥ ३०॥

जिनानां राजिर्जयतात्। किंभूता। विहितजराजन्मक्षया। सत्यस्यागारं गृहम्। ज- यदमभ्युदयावहम्। इतरुग्गतरोगा। सारविन्दा सहारविन्दैः पद्मधस्तनैः पूजाकमलै- र्वर्तते या। या भव्योद्धृत्या भव्यानामुद्धतिर्भवोत्तारुरूपा तया हेतुभूतया भुवि पृथिव्या- मवतारं कृतवती। या धर्मचक्रमवहदुवाह। सत्यागा सदाना। धर्मचक्रं कथंभूतम्। र- ञ्जयद्रक्तीकुर्वत्। रविं सूर्यम्। दावतारम् दावोज्ज्वलम्। अमिता अप्रमाणा रुक्कान्तिर्यस्य॥

सिद्धान्तस्तादहितहतयेऽख्यापयद्यं जिनेन्द्रः
सद्राजीवः स कविधिषणापादनेऽकोपमानः।
दक्षः साक्षाच्छ्रवणचुलुकैर्यं च मोदाद्विहाय-
सद्राजीवः सकविधिषणापादनेकोपमानः॥ ३१॥

स सिद्धान्तो वो युष्माकमहितक्षयाय भूयात्। यं सिद्धान्त सन्ति शोभनानि कर्म- ठानि यस्य स जिनेन्द्रः प्रधानकमलोऽख्यापयदूचिवान्। कवयः शास्त्रज्ञास्तेषां बुद्धिज- नने दक्षो विचक्षणः। न विद्येते कोपमानौ यस्य यत्र वा। विहायःसदो देवास्तेषा राजी श्रेणिः कर्णचुलुकैः श्रोत्राञ्जलिभिर्मोदाद्धर्षाय च सिद्धान्तमपात् पीतवती। श्रेणी किंभूता। सह कविधिषणाभ्यां शुक्रगुरुभ्यां वर्तते या। अनेकानि चन्द्रसमुदादीन्युपमा- नानि यस्याः। प्रथमान्तविशेषणानि जिनस्यागमस्य वा योज्यानि 'सद्राजीव' इति मुक्त्वा॥

वज्राङ्कुश्यङ्कुशकुलिशभृत्त्वं विधत्स्व प्रयत्नं
स्वायत्यागे तनुमदवने हेमताराऽतिमत्ते।
अध्यारूढे शशधरकरश्वेतभासि द्विपेन्द्रे
स्वायत्यागेऽतनुमदवने हेऽमताराऽतिमत्ते॥ ३२॥

हे वज्राङ्कुशि देवि, तनुमदवने जन्तुरक्षणे प्रयत्नं विधेहि। हे सृणिवज्रधारिणि। स्वायत्यागे शोभन आयोऽर्थागमो दानं च यस्याः। त्वं कथंभूता। हेमतारा कनको-

ज्ज्वला। हे अध्यारूढे। क। द्विपेन्द्रे। किंभूते। अतिमत्ते मदोद्धते। चन्द्रकरा इव श्वेता भा यस्य तस्मिन्। स्वायत्या निजायामेन अगे पर्वत इव। अतनु प्रचुरं मदवनं मदवारि यस्य तस्मिन्। अरातिर्वैरी सोऽस्यास्तीत्यरातिमान् तस्य भावोऽरातिमत्ता सा न मता यस्यास्तस्याः संबोधनम्॥

तवाभिवृद्धिं सुविधिर्विधेयात्स भासुरालीनतपा दयावन्।
यो योगिपङ्क्त्या प्रणतो नभःसत्सभासुरालीनतपादयावन्॥ ३३॥

स सुविधिर्जिनो हे दयावन् जन, तव समृद्धिं क्रियात्। भासुरं घोरमालीनमाश्रितं तपोऽनशनादिरूपं यस्य सः। यःस्वामी अवन्रक्षन् योगिवृन्देन प्रकर्षेण नतः। योगिपङ्क्त्या कथंभूतया। नभःसदो देवास्तेषां सभा पर्षत् असुरावली असुरश्रेणिश्च ताभ्यां नतौ पादौ यस्यास्तया॥

या जन्तुजाताय हितानि राजी सारा जिनानामलपद्मनालम्।
दिश्यान्मुदं पादयुगं दधाना साराजिनानामलपद्ममालम्॥ ३४॥

या सारा श्रेष्ठा जिनाना ततिर्जन्तुजाताय हितानि अलपत् गदितवती सा मम अलमत्यर्थं मुदं प्रीतिं दिश्याद्दयात्। कथंभूता। पादयुगं धारयन्ती। राजिनी राजनशीलाः नाना बहुविधाः अमलाः पद्ममाला यस्य तत्पादयुगम्॥

जिनेन्द्र भङ्गैः प्रसभं गभीराशु भारती शस्यतमस्तवेन।
निर्नाशयन्ती मम शर्म दिश्यात् शुभारतीशस्य तमस्तवेन॥ ३५॥

हे जिनेन्द्र, तव भारती मम शर्म सुखं देयात्। किंभूता। भङ्गैरर्थविकल्पैर्गंभीरा तथा आशु शीघ्रं तमोऽज्ञान निर्नाशयन्ती। केन। शस्यतमश्चारुतमो यस्तवस्तेन हेतुभूतेन शुभा प्रकृष्टा। तव कीदृशस्य। अरतीशस्याकामस्य। हे इन स्वामिन्॥

दिश्यात्तवाशु ज्वलनायुधाल्पमध्या सिता कं प्रवरालकस्य।
अस्तेन्दुरास्यस्य रुचोरुपृष्ठमध्यासिताकम्प्रवरालकस्य॥ ३६॥

तव ज्वलनायुधा देवी कं सुखं दिश्यात्करोतु। किंभूता। अल्पं तुच्छं मध्यं मध्यभागो यस्याः सा। कृशोदरीत्यर्थः। सिता शुभ्रा। प्रवरालकस्य प्रवरकुन्तलस्य। अस्तेन्दुर्न्यक्कृतमृगाङ्का। कया। आस्यस्य मुखस्य रुचा कान्त्या। उरु विस्तीर्णं पृष्ठमध्यासिताध्यारूढा। कस्य। अकम्प्रः स्थिरो यो वरालको देववाहनविशेषस्तस्य॥

जयति शीतलतीर्थकृतः सदा चलनतामरसं सदलं घनम्।
नवकमम्बुरुहां पथि संस्पृशच्चलनतामरसंसदलङ्घनम्॥ ३७॥

शीतलतीर्थकरस्य चलनतामरसं पादपद्मं जगति। किंभूतम्। अम्बुरुहां कमलानां नवकं पथि मार्गे संस्पृशत्। नवकं किंभूतम्। सदलं सपत्रम्। घनं सारम्। चलनतामरसं

किंभूतम्। चला नता च अमराणां सभा यस्य तत्। नास्ति लङ्घनमधःकरणं कुतोऽप्यस्य तदलङ्घनम्॥

स्मर जिनान्परितुन्नजरारजोजननतानवतोदयमानतः।

परमनिर्वृतिशर्मकृतो यतो जन नतानवतोऽद्वयमानतः॥ ३८॥

हे जन, भव्यलोक, अतोऽस्मात्कारणाज्जिनान् स्मर। किंविशिष्टान्। परितुन्ना परिक्षिप्ता जरा वयोहानिरूपा, रजः कर्म, जननं जन्म, तनोर्दुर्बलस्य भावस्तानवं कार्श्यं, तोदो बाधा, यमो मृत्युर्यैस्तान्। यतः कारणात् परममुक्तिसुखकर्तॄन्। नहि जिनस्मरणमन्तरेण जन्तोस्तात्त्विकी सिद्धिः। नतान् जन्तूनवतो रक्षतः। अद्वयं शरीरान्तरानिरपेक्षं यथा स्यात्तथा आनतः प्रणतः सन् त्वम्॥

जयति कल्पितकल्पतरूपमं मतमसारतरागमदारिणा।

प्रथितमत्र जिनेन मनीषिणामतमसा रतरागमदारिणा॥ ३९॥

जिनेन मनीषिणा गणभृता प्रथितं प्रोक्तं मतं जयति। किंभूतम्। कल्पिता समर्पिता सकलमनोरथपूरणात्कल्पतरुणा उपमा साम्यं यस्य तत्। असारतरान्मिथ्यारूपानागमान् दृणातीत्येवंशील। जिनविशेषणमिदम्। पुनः किंभूतेन। अतमसा अज्ञानरहितेन। रते मैथुने रागो रतरागः। मदश्च आत्माद्युत्थोऽभिनिवेशः। यद्वा रतं मैथुनं, रागो द्रव्याद्यभिलाषः, मदः पूर्वोक्त एव, तेषामरिणा वैरिणा॥

घनरुचिर्जयताद्भुवि मानवी गुरुतरा विहतामरसंगता।

कृतकराब्जवरे फलपत्रभागुरुतराविहतामरसं गता॥ ४०॥

मानवी देवी जयतात्। किंभूता। घना सान्द्रा रुचिः कान्तिर्यस्याः सा। गुरुतरा अतिमहान्तोऽविहता अपरिक्षता येऽमरास्तैः संगता सहिता। अब्जवरे प्रधानायुधे कृतपाणिः। फलपत्रे भजते फलपत्रभाक्। तरोर्विशेषणमेतत्। स चासौ उरुतरश्च विशालद्रुमश्च तत्र। तामरसं पद्मं गता प्राप्ता॥

कुसुमधनुषा यस्मादन्यं न मोहवशं व्यधुः

कमलसदृशां गीतारावा बलादयि तापितम्।

प्रणमततमां द्राक् श्रेयांसं न चाहृत यन्मनः

कमलसदृशाङ्गी तारा चाबला दयितापि तम्॥ ४१॥

अलसदृशामलसेक्षणानां स्त्रीणां नृणां वा गीतारावा गीतध्वनयो यस्माज्जिनात्कमन्यं जनं मोहवशवर्तिनं न व्यधुः। अपि तु सर्वमप्यकार्षुः। किंविशिष्टम्। बलात्प्रसभम्। अयि संबोधने। तापितं पीडितम्। केन। कुसुमधनुषा कामेन। हे जना, तं श्रेयांसं प्रणमततमाम्। द्राक् शीघ्रम्। अबला स्त्री दयितापि कान्तापि यन्मनो यन्मा-

१. 'मानसी' इति पुस्तकान्तरे पाठः.

नस च नाहृत नाक्षिप्तवती । किंभूता । कमलसदृश कोमलत्वादङ्गं यस्याः सा कमलसदृशाङ्गी । तारा मनोहरा । वा समुच्चये ॥

जिनवरततिर्जीवालीनामकारणवत्सला-
समदमहितामारादिष्टा समानवराजया ।
नमदमृतभुक्पङ्क्त्या नूता तनोतु मतिं ममा-
समदमहितामारादिष्टा समानवराजया ॥ ४२ ॥

जिनेन्द्राजिर्मम मतिं ददातु । किंभूता । प्राणिगणाना निनिमित्तवत्सला । असमो दमो येषा निरुपमदमस्य वा हिताभिप्रेता । अमारा अकामा अमरणा वा । आदिष्टो दत्तोऽसमानोऽपूर्वो वरो वाञ्छितार्थप्राप्तिर्यया सा । अजया अपरिभूता । यद्वा न जायते इत्यजा तया नमन्तो नम्रा येऽमृतभुजो देवास्तेषा पङ्क्त्या नूता स्तुता । मतिं किंभूताम् । असमदैर्निरहंकारैर्महिता पूजिताम् । आरान् शीघ्रमिष्टा पूजिता अभिमता वा । देवपङ्क्त्या किंभूतया, सह मानवराजैर्नरेन्द्रैर्वर्तते या तया ॥

भवजलनिधिभ्राम्यज्जन्तुव्रजायतपोत हे
तनु मतिमता सन्नाशानां सदा नरसंपदम् ।
समभिलषतामर्हन्नाथागमानतभूपति
तनुमति मता सन्नाशाना सदानरस पदम् ॥ ४३ ॥

हे संसारार्णवभ्रमज्जन्तुजातविपुलयानपात्र जिनेन्द्रसमय मतिमता पुरुषाणा नरसंपदं मानवर्द्धिं समभिलषता वाञ्छता सह दाने रसेन वर्तते सदानरस पद तनु विधेहि । इति सटङ्कः (?) । नरसंपद किंभूताम् । तनुमति प्राणिनि मतामभीष्टामभिमताम् । किंविशिष्टानाम् । सन्ना क्षीणा आशा मनोरथा येषाम् । नरसंपद किंभूताम् । आनता भूपतयो यस्या सा ताम् । सन् विद्यमानो नाशो मरण येषा ते । अल्पायुषामित्यर्थः ॥

धृतपविफलाक्षालीघण्टैः करैः कृतबोधित
प्रजयतिमहा कालीमर्त्याधिपपङ्कजराजिभिः ।
निजतनुलतामध्यासीना दधत्यपरिक्षता
प्रजयति महाकाली मर्त्याधिप कजराजिभिः ॥ ४४ ॥

महाकाली देवी प्रजयति प्रकर्षेण वैरिजयेन सर्वोत्कृष्टा वर्तते । करैर्हस्तैरुपलक्षिता । किंभूतैः । धृता वज्र फल-जपमाला-घण्टा यैस्ते तथा । देवी किंभूता । बोधिता प्रजा लोको यैस्ते बोधितप्रजास्ते च ते यतयश्च साधव । तत कृतो बोधितप्रजयतीना महः पूजा उत्सवो वा यया सा । ता कालीं श्यामा दधती धारयन्ती । काम् । स्ववपुर्लताम् । किंभूताम् । अपरिक्षतामदूषिताम् । के । आत पीडा, आधिर्मानसी व्यथा,

पङ्ककर्दमः कालुष्यं, जरा विरसता, आजिः प्रधनं तैः। पुनः किंभूताम्, अध्यासीनाम्, कम्। मर्त्याधिपं पुरुषप्रकाण्डम्। करैः किंविशिष्टैः। कजं पद्मं तद्वद्राजिभी राजनशीलैः॥

पूज्य श्रीवासुपूज्यावृजिन जिनपते नूतनादित्यकान्ते-
ऽमायासंसारवासावन वर तरसाली नवालानबाहो।
आनम्रा त्रायतां श्रीप्रभवभवभयाद्बिभ्रती भक्तिभाजा-
मायासं सारवासावनवरतरसालीनवालानबाहो॥ ४५॥

हे पूजनीय, हे श्रीवासुपूज्य, हे अवृजिन, हे जिनपते, भक्तिभाजां जनानामाली श्रेणिस्त्वया त्रायतां रक्षताम्। नूतनो विभातसमये उद्गच्छन् य आदित्यस्तद्वद्रक्ता कान्तिर्यस्य तस्य संबोधनम्। हे अमाय अदम्भ। हे असंसारवास, मुक्तौ प्राप्तत्वात्। हे अवन रक्षक, हे वर प्रधान। केन। तरसा बलेन वेगेन वा। यद्वा मायासंसारवासाभ्यां सकाशादवति रक्षतीति। नवालानवद्बाहू भुजौ यस्य तस्य संबोधनम्। आली किंभूता। आनम्रा कृतप्रणामा। कस्मात्त्रायताम्। श्रीप्रभवः कामस्तद्भवं यद्भयं तस्मात्। हे श्रीभव लक्ष्मीसमुत्पत्तिस्थानेति पृथग्जिनामन्त्रणं वा। आली किं कुर्वाणा। दधती। कम्। आयासं दुःखं श्रमं वा। सारवा प्रारब्धस्तुतित्वात्सशब्दा। असौ प्रत्यक्षा। अनवरतमजस्रं रसायां पृथिव्यां लीना वालाः केशा यस्याः सा। एतेन भक्त्याधिक्यं सूचितम्। नवा कतिपयदिनप्राप्तबोधिः अस्मदादिवत्। अहो इत्यामन्त्रणे॥

पूतो यत्पादपांशुः शिरसि सुरततेराचरच्चूर्णशोभां
या तापत्रासमाना प्रतिमदमवतीहार ताराजयन्ती।
कीर्तेः कान्त्या ततिः सा प्रविकिरतुतरां जैनराजी रजस्ते
यातापत्रासमानाप्रतिमदमवती हारतारा जयन्ती॥ ४६॥

पूतः पवित्रो यत्पादपांशुश्चरणरेणुः सुरसमूहस्य मस्तके चूर्णशोभां वासक्षोदलक्ष्मीं प्राप्तवान्। या ततिस्तापत्रा तापभेत्री। असमाना गुणैरनन्यसदृशी। प्रतिमदं प्रतिगतमदं निर्मदमवति रक्षति। इह अरता अप्रतिबद्धा। राजयन्ती शोभां लम्भयन्ती। सा तती रजः कर्म ते तव प्रविकिरतु क्षपयतु। किंविशिष्टा। जिनराजानामियं जैनराजी तीर्थकरसंबन्धिनी। अप्रतिमो दमो यस्याः सा अप्रतिमदमवती। याता गता आपद्विपत्, त्रासस्त्वाकस्मिकं भयं, मानो गर्वो यस्याः सा। कीर्तेः कान्त्या जयन्ती अभिभवन्ती। काः। हारताराः मुक्तावलीनक्षत्राणि॥

नित्यं हेतूपपत्तिप्रतिहतकुमतप्रोद्धतध्वान्तबन्धा-
पायायासाद्यमानामदन तव सुधासारहृद्या हितानि।
वाणी निर्वाणमार्गप्रणयिपरिगता तीर्थनाथ क्रियान्मे
पापायासाद्यमानामदनत वसुधासार हृद्याहितानि॥ ४७॥

नित्यं सर्वदा हे तीर्थनाथ, तव वाणी मम हितानि क्रियात् । कथंभूता, हेतवो वस्तुगमकलिङ्गानि । उपपत्तयो युक्तयः । यद्वा हेतूनामुपपत्तयस्ताभिर्विध्वस्तः कुशासनप्रोद्दामतमोग्रन्थिर्यया । अपगता अपाया अनर्था यस्याः सा । आसाद्यमाना प्राप्यमाणा । अपापैरासाद्यमाना वा । हे अमदन अकाम । सुधाया अमृतस्यासारो वेगवान्वर्षस्तद्वन्मनोहरा । श्रूयमाणामृतमिव हृदयंगमेत्यर्थः । मोक्षपथप्रेहलैः स्वीकृता । न विद्यते पापं चायासश्चादिर्येषां ते पापायासादयस्ते च तेऽमानाश्च । मदाश्च नरास्तैर्वन्दित । हे वसुधासार पृथिव्युत्कृष्ट । आहितानि स्थापितानि । क्व । हृदि मनसि ॥

रक्षःक्षुद्रग्रहादिप्रतिहतिशमनी वाहितश्वेतभास्व-
त्सन्नालीका सदा सापरिकरमुदिता साक्षमाला भवन्तम् ।
शुभ्रा श्रीशान्तिदेवी जगति जनयतात्कुण्डिका भाति यस्याः
सन्नालीका सदाप्ता परिकरमुदिता सा क्षमालाभवन्तम् ॥ ४८ ॥

श्रीशान्तिदेवी भवन्तं त्वां क्षमा उपशमस्तस्या लाभः सोऽस्यास्तीति तं क्षमालाभवन्तं क्रियात् । कीदृशा । रक्षांसि पलादाः, क्षुद्राः शाकिनीप्रमुखाः, ग्रहाः शनैश्चरादयः । आदिशब्दाद्भूपालव्यालादयः । तेभ्यः प्रतिहतिरुपघातस्तस्याः शमनी नाशिका । वाहितं वाहनीकृतं श्वेतं सितं भास्वद्दीप्यमानं सत् शोभनं नालीकं कमलं यया सा । सतां साधूनामाप्ता अविप्रतारिका । सापरिकरं जटामण्डलं तेन मुदिता प्रीता । सन्नं क्षीणमलीकमसत्यं यस्याः सा । सहाक्षमालया जपमालया वर्तते । इदं देव्याः कुण्डिकाया वा विशेषणम् । यस्या देव्याः कुण्डिका कमण्डलुर्भाति । कथंभूता । करं हस्तं परि लक्षीकृत्य उदिता उदयं प्राप्ता ॥

अपापदमलं घनं शमितमानमामो हितं
नतामरसभासुरं विमलमालयामोदितम् ।
अपापदमलङ्घनं शमितमानमामो हितं
न तामरसभासुरं विमलमालयामोदितम् ॥ ४९ ॥

विमलं जिनं वयमानयामः । पापं ददातीति पापदः । न पापदमपापदम् । पुण्यप्रदमित्यर्थः । अलमत्यर्थम् । यद्वा अपापो यो दम उपशमस्तं लातीति अपापदमलम् । घनं निश्छिद्रं अशेषमलक्षयोत्थं श सुखमित प्राप्तम् । हित प्राणिगणस्य । नता नम्रीभूता अमरसभा देवपर्षदसुराश्च यस्य । विमला या माला पुष्पस्रक् तयामोदितं सुरभीकृतम् । अपगता आपदो यस्मात्तम् । अलङ्घनं केनाप्यपराभूतम् । शमितो मानो येन तम् । आमोहितं न मोहेन समन्तान्न वशीकृतम् । तामरसं कमलं तद्वद्भासुरं दीप्यमानम् । (विमलं निर्दोषम्) । आलये गृहविषये । अमोदितमहृष्टम् ॥

सदानवसुराजिता असमरा जिना भीरदाः
क्रियासु रुचितासु ते सकलभा रतीरायताः।
सदानवसुराजिता असमराजिनाभीरदा
क्रियासुरुचितासु ते सकलभारतीरा यताः॥ ९०॥

ते जिनास्ते तव आयता विपुला रतीर्मुदः क्रियासु कर्तव्येषु क्रियासुर्ददयासुः। किंभूतासु। रुचितासु इष्टासु। उचितासु योग्यासु। पुण्यरूपास्वित्यर्थः। जिनाः किंविशिष्टाः। सदानवैः सासुरैः सुरैरुपसर्गादिभिरजिताः। असमरा अरणाः। भियं भीतिं रदन्ति भिन्दन्तीति भीरदाः। 'रद विलेखने'। सकलाः सदोषाः संसारकृत्यरूपा ये भारास्तेषां पर्यन्ते स्थितत्वात्तीराः। यद्वा असदोषा भारतीरीरयन्ति रान्ति वा। यताः प्रयत्नवन्तः। सदानं सत्यागं यद्वसु सुवर्णं तेन राजिताः शोभिताः। असमाः शोभमानाश्च नाभीरदा येषां ते। सकला समस्ता भा दीप्तिर्येषां येषु वा। यद्वा सह कलभया रुचिररुचा वर्तन्ते॥

सदा यतिगुरोरहो नमत मानवैरञ्चितं
मतं वरदमेनसा रहितमायताभावतः।
सदायति गुरोरहो न मतमानवैरं चितं
मतं वरदमेन सारहितमायता भावतः॥ ९१॥

अहो लोकाः, यतिगुरोः सर्वज्ञस्य भावतो भक्त्या मतं शासनं नमत। सदा सर्वकालम्। कथंभूतम्। मानवैर्मानुषैरञ्चितं पूजितम्। वरमभीष्टार्थं ददाति वरदम्। एनसा पापेन रहितं त्यक्तम्। यतिगुरोः किंभूतस्य। आयताभावतः आयता विपुला भा अस्यास्तीति मतुप्। मतं किंभूतम्। सदायति सती शोभना आयतिरागामिकालः प्रभुता वा यस्य तत्। गुरोरर्हतो रहो रहस्यभूतम्। न मतेऽभीष्टे मानवैरे यस्य। चितं व्याप्तम्। केन। वरदमेन प्रधानोपशमेन। किंभूतेन। आयता आगच्छता। मतं कथंभूतम्। मत सर्वस्याभिप्रेतम्। सार च तद्धित च। यद्वा सारं हित यस्मिन्॥

प्रभाजि तनुतामलं परमचापला रोहिणी
सुधावसुरभीमना मयि सभाक्षमालेहितम्।
प्रभाजितनुतामलं परमचापलारोहिणी
सुधावसुरभीमनामयिसभा क्षमाले हितम्॥ ९२॥

रोहिणी देवी मयि विषये ईहितममलमनवद्यं हितं शुभोदर्कं तनुता कुरुताम्। मयि कथंभूते। प्रभाजि प्रकर्षेण भजत इति तच्छीले। अलमत्यर्थम्। परं प्रकृष्टम्। देवी किंविशिष्टा। अचापला चापल्यमुक्ता। सुधा प्रासादलेपनद्रव्यं तद्वद्वसु तेजो यस्याः। यद्वा अमृतमेव द्रव्यं यस्याः। न भीर्भयं मनसि यस्याः सा अभीमनाः। सभा सक्रा-

न्तिका अक्षमाला यस्याः । प्रभाजितैस्तेजश्छित्तिरस्कृतैर्नुता स्तुता । परमं चापं धनुर्लातीति । आरोहणशीला । काम् । सुष्ठु धावतीति सुधावा सुवेगा या सुरभी गौस्ताम् । अनामयनी नीरोगा सभा यस्याः सा । क्षमां ढार्तांति क्षमाले मयि ॥

सकलधौतसहासनमेरवस्तव दिशन्त्वभिषेकजलप्लवाः ।
मतमनन्तजितः स्नपितोल्लसत्सकलधौतसहासनमेरवः ॥ ५३ ॥

सकलाः समस्ता धौताः क्षालिताः सहासाः सविकासा न मेरवो वृक्षविशेषा यैस्ते । मतमभिप्रेतम् । हे अनन्तजिन । चतुर्दशस्य तीर्थकृतो द्वे नाम्नी अनन्तोऽनन्तजिच्च । सहासनेन स्नानपीठेन असनैर्वा वृक्षविशेषैर्वर्तते ततः स्नपितः स्नानं कारितः उल्लसञ्शोभमानः सकलधौतः सहेमा सहासनो मेरुर्यैस्ते । यद्वा सकलधौतं ससुवर्णं सहं समर्थं दृढमासनं यस्मिन् । ततः स्नपित उल्लसन् सकलधौतसहासनमेरुर्यैस्ते । हे अनन्तजित्, तव स्नानजलप्रवाहा मतं हितं दिशन्त्विति संबन्धः ॥

मम रतामरसेवित ते क्षणप्रद निहन्तु जिनेन्द्रकदम्बक ।
वरद पादयुगं गतमज्ञताममरतामरसे विततेक्षण ॥ ५४ ॥

हे जिनेन्द्रपटल, ते तव पादयुगं ममाज्ञतां जाड्यं निहन्तु । रताः सक्तचित्ता येऽमरास्तैः सेवित । हे क्षणप्रद उत्सवदायक । वर ददातीति वरद । पादयुगं किंभूतम् । गतं प्राप्तम् । क्व । अमरतामरसे सुरकृतनवकमलेषु । जातित्वादेकवचनम् । वितते विस्तीर्णे लोचने यस्य तस्य संबोधनम् ॥

परमतापदमानसजन्मनःप्रियपदं भवतो भवतोऽवतात् ।
जिनपतेर्मतमस्तजगत्त्रयीपरमतापदमानसजन्मनः ॥ ५५ ॥

हे भव्यलोकाः, जिनेन्द्रमतं भवतो युष्मान् भवतः संसाराव् अवताद्रक्षताम् । किंविशिष्टम् । परमतानां बौद्धादिशासनानामापदां हेतुत्वादापद्व्यसनम् । अमानान्यसंख्यानि सजन्ति संबध्यमानानि मनःप्रियाणि चित्तप्रीतिकराणि पदानि स्याद्यन्तानि यस्मिंस्तत् । जिनपतेः कथंभूतस्य । अस्तो ध्वस्तो जगत्त्रय्याः परमतापदो महासंतापकारी मानसजन्मा कामो येन तस्य ॥

रसितमुच्चतुरङ्गमनायकं दिशतु काञ्चनकान्तिरिताच्युता ।
धृतधनुःफलकासिशरा करे रसितमुच्चतुरं गमनाय कम् ॥ ५६ ॥

अच्युता अलुप्ता देवी कं सुखं देयात् । कथंभूता । इता प्राप्ता । कम् । उच्चतुरङ्गमनायकं तुङ्गाश्वप्रकाण्डम् । किंविशिष्टम् । रसितं शब्दायमानम् । डल्यापत्येन चतुरं दक्षम् । असितं नीलवर्णम् । यद्वा रतितं मुत्प्रमोदो यस्य स चासौ चतुरश्च तम् । गमनाय गत्यर्थम् । देवी कथंभूता । काञ्चनवत्कान्तिर्यस्याः सा । करैः शर्यधृता चापावरणसङ्गखाणा यया सा ॥

नमः श्रीधर्म निष्कर्मोदयाय महितायते।
मर्त्यामरेन्द्रनागेन्द्रैर्दयायमहिताय ते॥ ९७॥

हे धर्मनाथ जिन, ते तुभ्यं नमोऽस्तु। कथंभूताय। निर्गतः कर्मोदयो मलोत्पादो यस्य स तस्मै निर्गतकर्मोदयाय। महिता पूजिता आयतिरुत्तरकालः प्रभुता वा यस्य। यद्वा महिता आसमन्तादयतयः साधवो यस्य तत्संबोधनम्। कैर्मर्त्यामरेन्द्रनागेन्द्रैर्मर्त्याश्चामराश्च तेषामिन्द्रा नागेन्द्राश्च। नागेन्द्रस्योपलक्षणात्पातालवासिदेवैः। दया च यमाश्च व्रतानि तेषां हिताय ते तुभ्यम्॥

जीयाज्जिनौघो ध्वान्तान्तं ततान लसमानया।
भामण्डलत्विषा यः स ततानलसमानया॥ ९८॥

स जिनौघो जीयात्। भामण्डलकान्त्या यो ध्वान्तध्वंसं ततानाकृत। किंभूतया। ततो विपुलो योऽनलो वह्निस्तत्सदृशया लसमानया वर्धमानया॥

भारति द्राग्जिनेन्द्राणां नवनौ रक्षतारिके।
संसाराम्भोनिधावसानवनौ रक्ष तारिके॥ ९९॥

हे जिनवराणां वाणि, अस्मानवनौ पृथिव्यां रक्ष। किंविशिष्टा। नवा प्रत्यग्रा नौर्मे-द्विनी(?) संबोधनं वा। कस्मिन्। संसाराम्भोनिधौ भवसागरे। अक्षतानुपहता अरयः शत्रवः कं जलं यत्र। हे तारिके निर्वाहिके॥

केकिस्था वः क्रियाच्छक्तिकरा लाभानयाचिता।
प्रज्ञप्तिर्नूतनाम्भोजकरालाभा नयाचिता॥ १००॥

प्रज्ञप्तिर्देवी वो युष्माकमयाचिता अप्रार्थिता लाभान् दद्यात्। किंभूता। केकिनि मयूरे तिष्ठतीति केकिस्था। शक्तिः प्रहरणविशेषः करे यस्याः। नवकमलवत्कराला अत्युल्बणा भा यस्याः सा नयेन नीत्या आचिता व्याप्ता॥

राजन्त्या नवपद्मरागरुचिरैः पादैर्जिताष्टापदा-
द्रेऽकोपद्रुत जातरूपविभया तन्वार्य धीर क्षमाम्।
बिभ्रत्यामरसेव्यया जिनपते श्रीशान्तिनाथास्मरो-
द्रेकोपद्रुत जातरूप विभयातन्वार्यधी रक्ष माम्॥ १०१॥

हे श्रीशान्तिदेव, मां रक्ष पालय। जितोऽष्टापदाद्रिर्मेरुर्येन तस्य संबोधनम्। कया। तन्वा शरीरेण। किंभूतया। पादैश्चरणै राजन्त्या शोभमानया। किंभूतैः। नवपद्मरागो नूतनकमलरक्तता तद्वद्रुचिरैश्चारुभिः। हे अकोप अक्रोध। पुनस्तन्वा किंभूतया। द्रुत-मुत्तप्तं यज्जातरूपं तपनीयं तद्वद्विभा कान्तिर्यस्यास्तया। हे अर्य स्वामिन्। हे धीर प-रीषहाद्यक्षोभ्य। तन्वा किं कुर्वत्या। क्षमां क्षान्तिं बिभ्रत्या धारयन्त्या। अमरसेव्यया

देवसेवनीयया । हे अस्मरोद्रेकोपद्रुत न कामवेगपीडित । जातं प्रादुर्भूतं विश्वातिशायि रूपं सौन्दर्यं यस्य । हे विभय गतभय । अतनुरुक्शा आर्या प्रशस्या धीर्यस्य तस्य संबोधनम् । त्वमित्यस्यानुक्तस्यापि रक्षेति क्रिययोपलब्धस्य विशेषणं वा । अत्र तनोर्मेरुणा श्लेषः । सोऽपि पद्मरागमणिमयैः पादैर्मूले राजते स्वर्णवर्णश्च । क्ष्मां भुवं बिभर्ति । अमरसेव्यश्च स्यात् ॥

ते जीयासुरविद्विषो जिनवृषा मालां दधाना रजो-
राज्या मेदुरपारिजातसुमनःसंतानकान्तां चिताः ।
कीर्त्या कुन्दसमत्विषेषदपि ये न प्राप्तलोकत्रयी-
राज्या मेदुरपारिजातसुमनःसंतानकान्ताञ्चिताः ॥ ९२ ॥

ते जिनोत्तमा जयन्तु । ये प्राप्तत्रैलोक्यैश्वर्या अपि ईषदपि न मेदुर्मदं चक्रुरिति संबन्धः । किंविशिष्टाः । अविद्विषः शत्रुरहिताः । माला स्रजं धारयन्तः । मालां किंभूताम् । रजोराज्या परागपूरेण मेदुरा पारिजातकुसुमानि संतानकानि सतानककुसुमानि च तेषामन्ता अवयवा यस्यां ताम् । चिता व्याप्ताः । कया। कीर्त्या । कथंभूतया । कुन्दपुष्पोज्ज्वलया । अपारिजाता अपगतवैरिवृन्दा ये सुमनःसंताना विद्वत्समूहा देवसमूहा वा तेषां कान्ताः शिरःप्रान्ता प्रणामपराः स्त्रियो वा तैरञ्चिताः पूजिताः ॥

जैनेन्द्रं मतमातनोतु सततं सम्यग्दृशां सद्गुणा-
लीलामं गमहारि भिन्नमदनं तापापहृद्यामरम् ।
दुर्निर्भेदनिरन्तरान्तरतमोनिर्नाशि पर्युल्लस-
ल्लीलभङ्गमहारिभिन्नमदनन्तापापहृद्यामरम् ॥ ९३ ॥

जैनेन्द्रं जिनेन्द्रप्रोक्तं मतं सद्गुणश्रेणिलाभं सम्यग्दृष्टीनां वितनोतु । किंविशिष्टम् । गमाः सदृशपाठास्तैर्हारि मनोहरम् । भिन्नो विदीर्णो मदनोऽनङ्गो येन । तापं संसारभ्रमणजमपहरतीति । यामानि व्रतानि रातीति । दुर्निर्भेदं दुःखभेद्यं निरन्तरं निर्विवरमान्तरमन्तर्भवं तमो मोहं निर्नाशयतीत्येवंशीलम् । पर्युल्लसल्लीलान्प्रोद्यद्विलासान् अभङ्गानजेयान् महारीन्महावैरिणो भिनत्तीति । नमन्तोऽनन्ता अप्रमाणाः अपापहृद्या अमरा यस्य ॥

दण्डच्छत्रकमण्डलूनि कलयन्स ब्रह्मशान्तिः क्रिया-
त्संत्यज्यानि शमी क्षणेन शमिनो मुक्ताक्षमाली हितम् ।
तप्ताष्टापदपिण्डपिङ्गलरुचिर्योऽधारयन्मूढतां
संत्यज्यानिशमीक्षणेन शमिनो मुक्ताक्षमालीहितम् ॥ ९४ ॥

स ब्रह्मशान्तिनामा यक्षः शं सुखं कुरुतात् । किं कुर्वन् । दण्डच्छत्रकमण्डलूनि क-

त्यमुद्वहन्। किंभूतानि। सन्ति शोभनानि। अर्घ्याणि अर्हाणि। शमी प्रशमवान्। क्षणेन वेगेन। मुक्ताक्षमाला अस्यास्तीति। ततस्वर्णपिण्डपीतरुचिः। यो यक्षः कस्यापि शमिनो मुनेरनिशं निरन्तरमीक्षणेन विलोकनेनाङ्गतां मूढतां संत्यज्य हितं रूपितिमुखमधारयत्। हितं किंभूतम्। मुक्ता अक्षमा यैस्ते मुनयस्तेषामाली श्रेणिस्तस्या ईहितं चेष्टितम्॥

भवतु मम मनः श्रीकुन्थुनाथाय तस्मा-

यमितशमितमोहायामितापाय हृद्यः।

सकलभरतभर्ताभूज्जिनोऽप्यक्षपाशा-

यमितशमितमोहयामितापायहृद्यः॥ ६५॥

तस्मै श्रीकुन्थुनाथाय जिनाय नमोऽस्तु। अमितः शमितो मोहस्यायामितापो दीर्घदवथुर्येन तस्मै। यः स्वामी हृद्यो हृदयहारी। संपूर्णभरतक्षेत्राधिपश्चक्रवर्ती जिनोऽप्यभूत्। किंभूतः। अमितानपायान्हरतीति। तस्मै किंभूताय। अक्षपाशा इन्द्रियरज्जवस्तैर्यमिता अबद्धा ये शमिनो मुनयस्तेषां तमोहायाज्ञानघातिने॥

सकलजिनपतिभ्यः पावनेभ्यो नमः स-

न्नयनरवरदेभ्यः सारवादस्तुतेभ्यः।

समधिगतनुतिभ्यो देववृन्दाद्गरीयो-

नयनरवरदेभ्यः सारवादस्तु तेभ्यः॥ ६६॥

तेभ्यः सर्वजिनेन्द्रेभ्यो नमोऽस्तु। किंभूतेभ्यः। पावनेभ्यः पवित्रताजनकेभ्यः। सन्तः शोभमाना नयनानि लोचनानि रवो देशनाध्वनिः रदा दन्ताश्च येषां तेभ्यः। सारोऽर्थप्रधानो वाद उक्तिर्येषां तैः स्तुताः। यद्वा सारश्चासौ वादश्च तेन स्तुता तेभ्यः। समधिगता प्राप्ता नुतिर्यैस्तेभ्यः। कस्माद्देववृन्दात्। किंविशिष्टात्। सारवात् प्रस्तुतस्तुतिकात्। गरीयांसो गरिष्ठा नया नीतयो येषु ते च ते नराश्च तेषां वरदेभ्यः। इत्थंभूतेभ्यो जिनेभ्यो नमोऽस्तु भवतु॥

स्मरत विगतमुद्रं जैनचन्द्रं चकास-

त्कविपदगमभङ्गं हेतुदन्तं कृतान्तम्।

द्विरदमिव समुद्यद्दानमार्गं धुतार्घ-

कविपदगमभङ्गं हे तुदन्तं कृतान्तम्॥ ६७॥

हे लोकाः, जिनचन्द्रसंबन्धिनं कृतान्तं सिद्धान्तं यूयं स्मरत। हस्तिनमिव। किंभूतम्। विगतमुद्रं गतप्रमाणम्। चकासन्तः शोभमानाः कविपदानि कविगोगान्द्राः गमा भङ्गाश्च यस्मिन्। हेतुदन्तं हेतव एव दन्तो विपक्षभेदकत्वादिशानो यस्य

तम् । कृतान्तं यमम् । तुदन्तं व्यथमानम् । समुद्यन्समुल्लसन्दानमार्गो ज्ञानादीनां वितरणक्रमो यस्मिन् । अघैकविपदः पापैकविपद एवागा वृक्षास्ते धुता येन । अमङ्गमजेयम् । अत्र द्विरदेन श्लेषः । सोऽप्यपेतमर्यादः । तस्यापि पदगमनभङ्गाः शोभन्ते । दानमार्गो मदप्रवाहश्च स्यात् । स च कृतविनाशं च तुदति ॥

प्रचलदचिररोचिश्चारुगात्रे समुद्य-
त्सदसिफलकरामेऽभीमहासेऽरिभीते ।
सपदि पुरुपदत्ते ते भवन्तु प्रसादाः
सदसि फलकरा मेऽभीमहासेरिभीते ॥ ६८ ॥

हे पुरुपदत्ते, ते तव प्रसादाः सदसि सभायां फलकराः कार्यसिद्धिकारिणो भवन्तु मे मम । प्रचलन्ती स्फुरन्ती या विद्युत्तद्वच्चारु गात्रं यस्याः सा तस्याः संबोधनम् । विद्यद्द्वयामसिफलकाभ्यां खड्गखेटकाभ्यां रामा रमणीया तस्याः संबोधनम् । अभीमोऽरौद्रो हासो हसनं यस्याः । अरिभ्यो भीर्भयं तस्या ईतिभूते । अभीर्निर्भया या महासेरिभी प्रौढमहिषी तामिता गता तस्याः संबोधनम् ॥

व्यमुचच्चक्रवर्तिलक्ष्मीमिह तृणमिव यः क्षणेन तं
सन्नमदमरमानसंसारमनेकपराजितामरम् ।
द्रुतकलधौतकान्तमानमतानन्दितभूरिभक्तिभा-
क्संसन्नदमरमानसं सारमनेकपराजितामरम् ॥ ६९ ॥

यश्चक्रवर्तिलक्ष्मीं क्षणेन वेगेन तृणवदत्याक्षीत् तं अरं अरनामानं जिनं हे जनाः, आनमत । किंभूतम् । सन्ना क्षीणा मदमरणमानसंसारा यस्य तम् । लक्ष्मीं किंभूताम् । अनेकपा गजास्तै राजितां शोभिताम् । जिनं किंभूतम् । द्रुतं विलीनं यत्सुवर्णं तद्वत्कान्तं कमनीयम् । आनन्दितं भूरिभक्तिभाजां सनमतां प्रणामकारकाणाममराणां मानसं चित्तं येन । तथा सारं श्रेष्ठम् । दिग्विजयादिप्रक्रमेऽनेके बहवः पराजिता अमरा मागधादिदेवा येन तम् । यद्वा लक्ष्मीं कथंभूताम् । अनेकैः परैरजिताम् । अरं शीघ्रम् ॥

स्तौति समन्ततः स समवसरणभूमौ यं सुरावलिः
सकलकलाकलापकलितापमदारुणकरमपापदम् ।
तं जिनराजविसरमुद्भासितजन्मजरं नमाम्यहं
सकलकला कलापकलितापमदारुणकरमपापदम् ॥ ७० ॥

सुरेन्द्रश्रेणी यं जिनेन्द्रव्यूहं स्तौति । समन्ततः सर्वतः । स्मेत्यतीतार्थकम् । समवसरणभूमौ । किंभूता । सकलाः समस्ताः कला विज्ञानानि तासां कलापेन समूहेन कलिता सहिता । अपमदा अपगतमदा । सह कलकलेन कोलाहलेन वर्तते । कला मं-

धुरा। तं जिनेन्द्रविसरमहं नमामि। किंविशिष्टम्। अरुणावारक्तौ करौ हस्तौ यस्य। अपगता आपदो यस्मात्तम्। विनाशितजन्मजरम्। अपकलिताप्रमपरगवक्रदर्पहठवन्तम्। अदारुणमरोद्रं करोतीति तम्। अपापं पुण्यं ददातीति तम्॥

भीममहाभवाब्धिभवभीतिविभेदि परास्तविस्फुर-
त्परमतमोहमानमतनूनमलं घनमव्रवतेऽहितम्।
जिनपतिमतमपारमर्त्यामरनिर्वृतिशर्मकारणं
परमतमोहमानमतनूनमलङ्घनमघवतेहितम्॥ ७१॥

भीषणमहासंसारसमुद्रोत्थभयविदारकम्। परास्ताः परिक्षिप्ता विस्फुरन्तः परमतमोहमाना येन। यद्वा मोहादज्ञानान्मानो मिथ्याभिनिवेशः। परमतानां मोहमानौ वा। तनु तुच्छमूनमपूर्णं च न। अलमत्यर्थं घनं निबिडं प्रमेयगाढम्। अव्रवते पापिने अहितं न श्रेयस्कारि। अपाराण्यपर्यन्तानि मर्त्यानाममराणां निर्वाणस्य शर्माणि तेषां कारणम्। परमं तमो हन्ति। यद्वा परमेतमा ऊहा यस्मिन्। आनमत प्रणमत। नूनं निश्चितम्। न लङ्घनमभिभवो यस्य स चासौ मघवा च तेन सामर्थ्यादच्युतनाथेन ईहितमभिलषितम्॥

यात्र विचित्रवर्णविनतात्मजपृष्ठमधिष्ठिता हुता-
त्समतनुभागविकृतधीरसमदवैरिव धामहारिभिः।
तडिदिव भाति सांध्यघनमूर्धनि चक्रधरास्तु सा मुदे-
ऽसमतनुभा गवि कृतधीरसमदवैरिवधा महारिभिः॥ ७२॥

अरा एषां सन्तीत्यरीणि चक्राणि। महान्ति च तान्यरीणि च तैर्महारिभिर्महाचक्रैः यात्र जगति चक्रधरा देवी अप्रतिचक्रा देवी भाति शोभते। कथंभूता। विचित्रवर्णगरुडपृष्ठमधिरूढा। हुतमत्तीति हुताद्वह्निस्तत्तुल्यां तनुं भजते। अविकृता अविकारिणी धीर्यस्याः सा। महारिभिः किंभूतैः। असमानदवानलैरिव। धाम तेजस्तेन हारिभिर्मनोहरैः। यथा विद्युत्सन्ध्याभ्रमेघमस्तके भाति तद्वत्। सा देवी मुदेऽस्तु भवतु। समा च तनुश्च समतनुः न समतनुरसमतनुः एवंविधा भा यस्याः। गवि पृथिव्यां स्वर्गे वा कृतो धीराणां समदानां वैरिणां वधो यया॥

नुदंस्तनुं प्रवितर मल्लिनाथ मे प्रियंगुरोचिररुचिरोचितां वरम्।
विडम्बयन्वररुचिमण्डलोज्ज्वलः प्रिये गुरोऽचिररुचिरोचिताम्बरम्॥ ७३॥

नुदन् क्षिपन्। तनुं शरीरम्। प्रियंगुः श्यामो वृक्षविशेषस्तद्वद्रोचिर्यस्य। तनुं कथंभूताम्। रुचिरा उचितां च न एवंविधाम्। रुचिमण्डलं भामण्डलं तेनोज्ज्वलकान्तः। अचिररुच्या रोचितं विद्युच्छोभितमम्बरमाकाशं विडम्बयन्। हे मल्ले (मल्लि-

नाथ) हे गुरो, अरुचिरोचितां तनुं नुदन् प्रियंगुवर्णः भामण्डलशोभितः विद्युत्सहितमाकाशं पराभवन् मम वरं प्रवितर ॥

जवाद्गतं जगदवतो वपुर्व्यथाकदम्बकैरवशतपत्रसं पदम् ।
जिनोत्तमान्स्तुत दधतः स्रजं स्फुरत्कदम्बकैरवशतपत्रसंपदम् ॥ ७४ ॥

जवाद्वेगाज्जगद्विश्वमवतो रक्षतो जिनोत्तमान् हे भव्यजनाः, स्तुत नुत । जगत्किंविशिष्टम् । पदं स्थानं नरकादिलक्षणं गतं प्राप्तम् । पदं किंभूतम् । वपुः पीडोत्पीडैरवशाः परतन्त्रास्तपन्तस्तापमनुभवन्तस्त्रसाः प्राणिनो यत्र तत् । जिनोत्तमान्कथंभूतान् । स्रजं पुष्पमालां दधतः । मालां कथंभूताम् । स्फुरन्ती कदम्बानां कैरवाणां शतपत्राणां च संपद्यत्र ॥

स संपदं दिशतु जिनोत्तमागमः शमावहन्नतनुतमोहरोऽदिते ।
स चित्तभूः क्षत इह येन यस्तपःशमा वहन्नतनुत मोहरोदिते ॥ ७५ ॥

स जिनेन्द्रागमः संपदं दद्यात् । कथंभूतः । शं सुखमावहन्कुर्वन् अतनु प्रौढं तमो हरतीति । यद्वा अतनुतमानूहान् राति ददातीति । स चित्तभूः कामो येन क्षतो हतः । यः कंदर्पस्तपःशमौ अहन् जघान । अदिते अखण्डिते मोहश्च रोदितं च मोहरोदिते च योऽतनुताप्रथयत् ॥

द्विपं गतो ह्रदि रमतां दमश्रिया प्रभाति मे चकितहरिद्विपं नगे ।
वटाह्वये कृतवसतिश्च यक्षराट् प्रभातिमेचकितहरिद्विपन्नगे ॥ ७६ ॥

यक्षराट् कपर्दिनामा मम मनसि रमतां परिक्रीडताम् । हृदि कथंभूते । उपशमलक्ष्म्या प्रभाति प्रकर्षेण शोभमाने । यक्षराट् किंविशिष्टः । चकितस्त्रस्तो हरिद्विप ऐरावणो यस्मात्त द्विपं वारणं गतः प्राप्तः । विपन्नगे विगतसर्पे नगे वृक्षे वटाभिधाने कृता वसतिरालयो येन । प्रभया कान्त्या अतिमेचकिता श्यामलीकृता हरितो दिशो येन सः ॥

जिनमुनिसुव्रतः समवताज्जनतावनतः
समुदितमानवा धनमलोभवतो भवतः ।
अवनिविकीर्णमादिपत यस्य निरस्तमनः-
समुदितमानबाधनमलो भवतो भवतः ॥ ७७ ॥

जिनमुनिसुव्रतो भवतो युष्मान् भवतः संसारात्समवतात्संरक्षतु । कथंभूतः । जनतया जनसमूहेनावनतः । समुदिताः सहर्षा ये मानवा मनुष्या अवनिविकीर्णे भूमौ राशीकृतं धनं कनकादिकं यस्यालोभवतोऽलोभिनो भवतः सतः । दीक्षां महीतुकामस्येत्यर्थः । आदिपताददत । जिनः कथंभूतः । निरस्ता अपकीर्णा मनःसमुदिता हृदि समुत्पन्ना संहता वा मानो बाधनं पीडा मलः कर्म च येन ॥

प्रणमत तं जिनव्रजमपारविसारिरजो
दलकमलाननां महिमधाम भयासमरुक्।
यमतितरां सुरेन्द्रवरयोषिदिलामिलनो-
दलकमला ननाम हिमधामभया समरुक्॥ ७८॥

प्रणमत नमत तं जिनव्रजमर्हत्सन्दोहम्। कथंभूतम्। भयासं भयक्षयकारकम्। सुरेन्द्रवरयोषिदिन्द्राणी यं ननाम अनंसीत्। कथंभूता। अपाराण्यपर्यन्तानि प्रसरणशीलानि रजांसि दलानि च यस्य तच्च तत्कमलं च तद्वत्सुगन्धमाननं मुखं यस्याः। महिम्नो धाम गृहम्। जिनव्रजविशेषणमेतत्। हिमधामा चन्द्रस्तस्य भया कान्त्या समाना रुग्रुचिर्यस्याः सा। इलामिलनेन क्षितिघट्टनेन उद्गतोऽलकेषु केशेषु मलो यस्याः सा॥

त्वमवनताञ्जिनोत्तमकृतान्त भवाद्विदुषो-
ऽव सदनुमानसंगमन यातततमोदयितः।
शिवसुखसाधकं स्वभिदधत्सुधियां चरणं
वसदनु मानसं गमनयातत मोदयितः॥ ७९॥

हे जिनोत्तमसमय, त्वमवनतान् प्रणमतो विदुषोऽव रक्ष भवात्संसारात्। सत् शोभमानं विद्यमानं वा अनुमानस्य प्रमाणस्य संगमन सगतिर्यस्य तस्य संबोधनम्। त्वं किंविशिष्टः। यातं तमो येभ्यस्ते यातमसो मुनयस्तेषां दयितोऽभीष्टः। मोक्षसुखप्रापकं चरणं चारित्रं स्वभिदधत्स्वाख्यन्। किंभूतम्। सुधियां मानसमनु लक्ष्यीकृत्य वसत्तिष्ठत्। हे गमनयातत गमा सदृशपाठाः नयाश्च नैगमादयस्तैरातत विस्तीर्ण। हे मोदयितः प्रमोदकारक॥

अधिगतगोधिका कनकरुक्तव गौर्युचिता-
ङ्कमलकराजि तामरसभास्वतुलोपकृतम्।
मृगमदपत्रभङ्गतिलकैर्वदनं दधती
कमलकरा जितामरसभास्तु लोपकृतम्॥ ८०॥

गौरी देवी तव लोपकृतं विनाशकारकमस्यतु क्षिपतु। किंभूता। अधिगता प्राप्ता गोधिका देववाहनविशेषो यया सा। कनकवद्रुग्दीप्तिर्यस्य। वदनं मुखं दधती। किंभूतम्। मृगमदस्य कस्तूरिकाया ये पत्रभङ्गाः पत्रच्छेदास्तैरुपलक्षिता ये तिलकास्तैरुचिता योग्या अङ्का लाञ्छनानि यस्य तदुचिताङ्कम्। अलकैश्चिकुरै राजते इत्येवंशीलमलकराजि तामरसभासि। अतुलमुपकृतं स्वकान्तिसंविभागादिना उपकारो यस्य तत्। कमले करे यस्याः कमलवद्वा करौ यस्याः सा। जिता निष्प्रभीकृता रूपेणाप्सरःप्रभृत्यादिभिरमराणां सभा यया सा॥

स्फुरद्विद्युत्कान्ते प्रविकिर वितन्वन्ति सततं
ममायासं चारो दितमद नमेऽघानि लपितः।
नमद्भव्यश्रेणीभवभयभिदां हृद्यवचसा-
ममायासंचारोदितमदनमेघानिल पितः॥ ८१॥

हे नमे नमिजिन, ममायासं वितन्वन्ति अघानि पापानि प्रविकिर निरस्य। स्फुरन्ती या विद्युत् तद्वत्कान्तिर्यस्य तस्य संबोधनम्। हे चारो दर्शनीय। हे दितमद छिन्नमद। हे लपितः वादक। केषाम्। हृद्यवचसाम्। कथंभूतानाम्। नमद्भव्यश्रेणीभवभयभिदाम्। मायाया दम्भस्य संचारो यस्य स नैवंविधस्तस्य संबोधनम्। उदित उदयं प्राप्तो मदनः काम एव मेघो जीमूतस्तस्य संहारकत्वादनिलो वात इव तस्य संबोधनम्। हे पितः जनक इव हितकारक॥

नखांशुश्रेणीभिः कपिशितनमन्नाकिमुकुटः
सदा नोदी नानामयमलमदारेरित तमः।
प्रचक्रे विश्वं यः स जयति जिनाधीशनिवहः
सदा नो दीनानामयमलमदारेरिततमः॥ ८२॥

यो विश्वं इततमो गतमोहं प्रचक्रे स जिनेन्द्रसमूहो जयति। कथंभूतः। नखांशुश्रेणीभिर्नखमयूखसंततिभिः कपिशितनमन्नाकिमुकुटः पीतीकृतनमद्देवकिरीटः। सदा शश्वत् नोदी प्रेरणशीलः। कस्य। नाना अनेकरूपा आमयाश्च मलाश्च मदाश्च। समाहारद्वन्द्वः। तदेवारिस्तस्य। सदानो दानसहितः। दीनानां कृपणानाम्। अयमेषः। अलमतिमात्रम्। अतिशयेन दारैः कलत्रैरीरितो धैर्याच्चालितो दारेरिततमः। न एवंविधः अदारेरिततमः॥

जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधो
गुरुर्वाहोऽपातापदवनगरीयानसुमतः।
कृतान्तस्त्रासीष्ट स्फुटविकटहेतुप्रमितिभा-
गुरुर्वाहो पाता पदवनगरीयानसुमतः॥ ८३॥

कृतान्तः सिद्धान्तोऽसुमतः प्राणिनस्त्रासीष्ट रक्षतात्। कस्मात्। जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधः। व्यालः सर्पः। रुजो जलोदरादिरोगाः। बन्धनं कारानिरोधादि। युत्सङ्ग्रामः। जलादीनां सकाशादित्यर्थः। किंभूतः। गुरुर्महान्। वाहोऽश्वः। न विद्यते पातश्च्यवनं आपद्विपत् अघ पाप च यस्यां सा चासौ नगरी च युक्त्या मुक्तिरेव तस्या याने गमने सुष्ठु मतोऽभिप्रेतः। स्फुटा अविसंवादिन्यो विकटा विस्तृता हेतुप्रमितयः हेतवः प्रमाणानि च भजते यः स्फुटविकटहेतुप्रमितिभाक्। उरुर्विशालः।

वाग्वदथकारार्थे । अहो इत्यामन्त्रणे । पाता त्रायकः । पदघनगरीयान् पदघनोऽभ्र-निबिडः गरीयांश्च महत्त्वयुक्तः । यद्वा पदेषु वाक्यावयवेषु घनश्च गरीयांश्च ॥

विपक्षव्यूहं वो दलयतु गदाक्षावलिधरा-
समा नालीकालीविशदचलना नालिकवरम् ।
समध्यासीनाम्भोभृतघननिभाम्भोधितनया-
समानाली काली विशदचलनानालिकवरम् ॥ ८४ ॥

काली देवी वो युष्माकं विपक्षव्यूहं प्रतीपपटलं दलयतु पिनष्टु । किंविशिष्टा । गदा आयुधविशेषः अक्षावलिरक्षमाला च ते धरतीति । असमा रूपैश्वर्यादिना अनन्यतदृक् । नालीकानां कमलानामाली श्रेणी तद्वद्विशदौ निर्मलौ चलनौ पादौ यस्याः सा । नालिकवरं प्रधानकमलं समध्यासीना अधिरोहन्ती अधिरूढा वा । अम्भोभृतः पयःपूर्णो यो घनो मेघस्तस्य निभा कृष्णवर्णत्वात्समा । अम्भोधितनयासमाना लक्ष्मीतुल्या आल्यः सख्यो यस्याः । विशन्तो लीयमाना अचलाः स्थिरा नाना बहुविधा येऽलयो भ्रमरास्तैः कबरं मिश्रम् । खचितमित्यर्थः । इदं नालिकवरस्य विशेषणम् ॥

चिक्षेपोर्जितराजकं रणमुखे यो लक्षसंख्यं क्षणा-
दक्षामं जन भासमानमहसं राजीमतीतापदम् ।
तं नेमिं नम नम्रनिर्वृतिकरं चक्रे यदूनां च यो
दक्षामञ्जनभासमानमहसं राजीमतीतापदम् ॥ ८५ ॥

यो नेमिजिनो लक्षसंख्यं लक्ष्यमाणमूर्जितराजकं बलवद्राजवृन्दं रणमुखे चिक्षेप ब-भञ्ज । क्षणाद्वेगेन । राजकं किंभूतम् । अक्षाममुपचितम् । हे जन, तं नेमिं नम । किंभूतम् । भासमानं कान्तिकरम्येन दीप्यमानं जनैर्भासमानं वा । अहसं हास्यमुक्तम् । राजीमत्या राजकन्यायाः प्रव्रज्याग्रहणेन मनोरथविफलीकरणात्तापदम् पश्चात्तु मुक्तिसुखप्रदम् । नम्राणां निर्वृतिं मुक्तिं सुखं वा करोतीति । यश्च स्वामी यदूनां यादवानां दक्षां राजीं श्रेणिं अतीता अतिक्रान्ता आपदो यया सा तामतीतापदं चक्रे कृतवान् । नेमिं किंभूतम् । अञ्जनस्य भया कान्त्या समानं तुल्यं महस्तेजो यस्य ॥

प्राव्राजीज्जितराजका रज इव ज्यायोऽपि राज्यं जवा-
द्या संसारमहोदधावपि हिता शास्त्री विहायोदितम् ।
यस्याः सर्वत एव सा हरतु नो राजी जिनानां भवा-
यासं सारमहो दधत् पिहिताशास्त्रीविहायोऽदितम् ॥ ८६ ॥

या उदितमुदयं प्राप्त ज्यायोऽपि अतिप्रौढमपि राज्यं रज इव विहाय प्राव्राजीत् प्र-व्रज्यामग्रहीत् । किंभूता । जितं राजकं राजसमूहो यया सा । संसारमहोदधौ भवम-

द्दार्णवेऽपि हिता सुखकारिणी । शास्त्री शिक्षयित्री । यस्याश्च सर्वतः सर्वासु दिक्षु सारमहो सारतेजो दधाव प्रससार । किंभूतम् । पिहिता आच्छादिता आशास्त्रियो दिग्वनिता विहाय आकाशं च येन । तत् । अदितमखण्डितम् । सा जिनानां राजी भवायासं संसारक्लेशं नोऽस्माकं हरतु ॥

कुर्वाणाणुपदार्थदर्शनवशाद्भास्वत्प्रभायास्त्रपा-
मानत्या जनकृत्तमोहरत मे शस्तादरिद्रोहिका ।
अक्षोभ्या तव भारती जिनपते प्रोन्मादिनां वादिनां
मानत्याजनकृत्तमोहरतमेश स्तादरिद्रोहिका ॥ ८७ ॥

हे जिनपते, तव भारती वाणी मे, मम अरिद्रोहिका बाह्याभ्यन्तरशत्रुजयकारिणी स्ताद्भूयात् । किंविशिष्टा । अणवः सूक्ष्माः पदार्था जीवाजीवादयस्तेषां दर्शनवशात्प्रकाशनात् भास्वत्प्रभायाः सूर्यकान्तेस्त्रपां लज्जां कुर्वाणा । आनत्या प्रणामेन हेतुभूतया जनानां कृत्तश्छिन्नो मोहो रतं च येन तस्य संबोधनम् । शस्ता प्रकृष्टा । अदरिद्रा आढ्या उद्दामस्तर्को यस्याः सा अदरिद्रोहिका । अक्षोभ्या अपराभवनीया । प्रोन्मादिनां दर्पवतां परवादिनां मानस्याहंकारस्य त्याजनं मोक्षणं करोतीति । अतिशयेन तमो हरतीति तमोहरतमा । हे ईश नेतः ॥

हस्तालम्बितचूतलुम्बिलतिका यस्या जनोऽभ्यागम-
द्विश्वासेविततात्रपादपरतां वाचा रिपुत्रासकृत् ।
सा भूतिं वितनोतु नोऽर्जुनरुचिः सिंहेऽधिरूढोल्लस-
द्विश्वासे विततास्रपादपरताम्बा चारिपुत्रासकृत् ॥ ८८ ॥

यस्या अम्बाया जनो लोको विश्वेन जगता सेवितयोस्ताम्रयो रक्तयोः पादयोश्चरणयोः परतां तदेकशरणतामभ्यागमज्जगाम साम्बा नोऽस्माकं भूतिं संपदं वितनोतु । किंभूता । हस्ते आलम्बिता चूतलुम्बिरेव लतिका यया सा । वाचा वाण्या रिपूणां त्रास करोतीति । अर्जुनं काञ्चनं तद्वद्रुचिः कान्तिर्यस्याः सा । सिंहे कण्ठीरवेऽधिरूढा आसीना । उल्लसन् प्रसरन् विश्वासो यस्मात्स्य वा । विततो विपुलो य आम्रपादपश्चूतवृक्षस्तत्र रता । चारिणौ विहरणशीलौ पुत्रौ यस्याः सा । असकृन्निरन्तरम् ॥

मालामालानबाहुर्दधददधदरं यामुदारा मुदारा-
लीनालीनामिहाली मधुरमधुरसां सूचितोमाचितो मा ।
पातात्पातात्स पार्श्वो रुचिररुचिरदो देवराजीवराजी-
पत्रापत्रा यदीया तनुरतनुरवो नन्दको नोदको नो ॥ ८९ ॥

मा मां पातात् नरकादिपतनात्पातादक्षतात् । स पार्श्वस्त्रयोविंशो जिनः । किंवि-

शिष्टः। मालां स्रजं दधत् दधानः। यां मालामलीनां भ्रमराणामाली पङ्क्ती उदारा प्रचुरा मुदा हर्षेण आरात् अन्तिके अरमत्यर्थं लीना श्लिष्टा सती अदधदधीतवती। किंभूताम्। मधुरो मधुर्मकरन्दरसो यस्याः सा ताम्। पार्श्वः किंभूतः। आलानवद्बाहू यस्य सः। सुष्ठु उचिता या उमा कीर्तिस्तया चितो व्याप्तः। रुचिररुचयो रम्यकान्तयो रदा दन्ता यस्य सः। तथा यस्येयं यदीया तनुः शरीरं आपत्त्रा विपदो रक्षिता। किंभूता। देवानां संबन्धिनी या राजीवराजी स्वर्णाम्बुजश्रेणी सैव पत्रं वाहनं यस्याः सा। पार्श्वः किंभूतः। अतनुर्योजनप्रमाणभूमौ श्रूयमाणत्वात्प्रौढो रवो देशनाध्वनिर्यस्य सः। नन्दकः समृद्धिजनकः नन्दयिता वा। नोदको नो प्रेरको न भवतीत्यर्थः॥

राजी राजीववक्त्रा तरलतरलसत्केतुरङ्गत्तुरङ्ग-
व्यालव्यालग्नयोधाचितरचितरणे भीतिहृद्यातिहृद्या।
सारा साराज्जिनानाममलममलमतेर्बोधिका माधिकामा-
द्व्याद्व्याधिकालाननजननजरात्रासमानासमाना॥ ९०॥

राजी श्रेणी राजीववत्कमलवद्वक्त्रं यस्याः सा। तथा तरलतरलसत्केतवः कम्प्रविराजमानध्वजा रङ्गतां चलतां तुरङ्गाणां व्यालानां दुष्टदन्तिनां व्यालग्ना अभियाताः कृताधिरोहणा वा ये योधाः सुभटास्तैराचित आकीर्णो रचितः कृतश्च यो रणः संग्रामस्तत्र या भीतिर्भयं तां हरतीति सा। या अतिहृद्या अत्यन्तहृदयंगमा। सारा उत्कृष्टा। सा यच्छब्दनिर्दिष्टा। आराद्दूरादन्तिकाद्वा। जिनानां सर्वज्ञानाम्। अत्यमत्यर्थं। अमला मतिर्यस्य तस्य बोधिका बोधजनका। मा माम् अधिको यो आमो रोगस्तस्मात् यद्वा आधिश्च कामश्च तस्मात्। व्याधिश्च कालाननं यममुखं मरणं च जननं च जरा च त्रासश्च मानश्च न विद्यन्ते व्याध्यादयो यस्या सा। असमाना गुणैरसदृशा। या जिनानां राजी रणे भीतिहृत्सा अव्यादिति संबन्धः॥

सद्योऽसद्योगभिद्वागमलगमलया जैनराजीनराजी-
नूता नूतार्थधात्रीह ततहततमःपातकापातकामा।
शास्त्री शास्त्री नराणां हृदयहृदयशोरोधिकाबाधिका वा-
देया देयान्मुदं ते मनुजमनुजरां त्याजयन्ती जयन्ती॥ ९१॥

जिनराजानां संबन्धिनी जैनराजी वाग्वाणी ते तुभ्यं मुदं देयात्। किंविशिष्टा। सद्यः शीघ्रं असन्तो ये योगा मनोवाक्कायव्यापारास्तान् भिनत्तीति सा। अमलानां गमानां लयो यत्र सा। इना इन्द्राः सूर्या वा तेषां राज्या नूता स्तुता। नूतानर्थान् दधातीति सा। इह पृथिव्याम्। ततं विपुलं हतं ध्वस्तं तमोऽज्ञानं पातकं पाप्मा यत्र सा। अपातः पतनरहितः कामश्च यया। यद्वा पृथग्विशेषणम् न विद्येते पातकामौ यस्याः सा। शास्त्री शास्त्रसंबन्धिनी। नराणां शास्त्री शासिका। यद्वा शास्त्रीणामीश

स्वामिनी। स्त्रियो नार्यो नरा मर्त्यास्तेषां हृदयं हरतीति। अयशो रुणद्धीति। न बाधते इत्यबाधिका। वा समुच्चये। आदेया ग्राह्या। मनुजं मानवमनु लक्ष्यीकृत्य जरां विस्रसां त्याजयन्ती विनाशयन्ती। जयन्ती केनाप्यपरिभूतत्वात्॥

याता या तारतेजाः सदसि सदसिभृत्कालकान्तालकान्ता-
पारिं पारिन्द्रराजं सुरवसुरवधूपूजितारं जितारम्।
सा त्रासात्रायतां त्वामविषमविषभृद्भूषणाभीषणा भी-
हीनाहीनाग्र्यपत्नी कुवलयवलयश्यामदेहामदेहा॥ ९२॥

याता प्राप्ता देवी। तारमुज्ज्वलं तेजो यस्याः सा। सदसि सभायाम्। सन्तं शोभनमसिं बिभर्ति सा। कालाः कृष्णाः कान्ता रुचिरा अलकानामन्ताः प्रान्ता यस्याः सा। अपगता अरयो यस्मात् तमपारिं पारिन्द्रराजमजगरेन्द्रम्। सुरवाः सुशब्दा या सुरवध्वो देवकान्तास्ताभिः पूजिता। अरं शीघ्रं जितमारमरिसमूहो येन। सा यच्छब्दादिष्टा त्रासाद्भयात्रायतां रक्षताम्। त्वां भवन्तम्। अविषमाः सौम्या विषभृतः सर्पा भूषणं यस्याः सा। तथा अभीषणा अरौद्राकारा भिया भयेन हीना त्यक्ता। अहीनो नागपतिस्तस्याग्र्या प्रधाना पत्नी अग्र्यमहिषी। चिरोद्देत्यर्थः। कुवलयानां वलयसमूहस्तद्वच्छ्यामो देहो यस्याः सा। अमदा मदरहिता ईहा चेष्टा यस्याः सा। या सदसि पारिन्द्रराजं प्राप्ता सा अहीनाग्र्यपत्नी त्रासात्रायतामिति संबन्धः॥

नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितांह्रे धरित्रीकृतावन वरतम संगमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितामोहिताक्षो भवान्।
मम वितरतु वीर निर्वाणशर्माणि जातावतारो धराधीशसिद्धार्थधाम्नि क्षमालंकृता-
वनवरतमसङ्गमोदारतारोदितानङ्गनार्याव लीलापदे हे क्षितामो हिताक्षो-भवान्॥ ९३॥

नमताममराणां शिरोरुहेभ्यः केशेभ्यः स्रस्ताः सामोदानां निर्निद्राणां विकसितानां मन्दाराणां या मालास्तासां रजसा परागेण रञ्जितांह्रे पाटलितचरण। धरित्र्या भुवः कृतावन विहितरक्षण। वरतम प्रधानतम। संगमनाम्नो देवस्य संबन्धिनी उदारा तारा उदितानङ्गा उद्गतस्मरा अथवा वरतमः संगमः समागमो यस्याः सा वरतमसंगमा उदारतारा अदीनकनीनिका उदितानङ्गा उद्गतस्मरा या नार्यावली नारीणां पङ्क्तिस्तस्या लापेन जल्पितेन देहेन ईक्षितेन च न मोहितानि अक्षाणि इन्द्रियाणि यस्य स भवान् त्वम् मम वितरतु हे वीर जिन। निर्वाणशर्माणि मोक्षसुखानि। जातावतारोऽवतीर्णः। उत्पन्न इत्यर्थः। धराधीशः क्षितिपतिर्यः सिद्धार्थस्तस्य धाम्नि गृहे। कथंभूते। क्षमालंकृतौ भुवोऽलंकारभूते। अनवरतमजस्रम्। हे असङ्गमोद सङ्गमोदाभ्यां रहित। यद्वा

सहायो मोदः स नास्ति यस्यासौ असहमोदः । स्वतन्त्रसुख इत्यर्थः । हे अरत अनासक्त । हे अरोदित रोदनहीन । शोकरहितेत्यर्थः । हे अनङ्ग अङ्गरहित । हे आर्यांव आर्यान्नवति यस्तदामन्त्रणम् । धाम्नि कथंभूते । लीलानां विलासानां पदे स्थाने । हे इत्यामन्त्रणे । भवान् कथंभूतः । क्षितामः क्षपितरोगः । हे हित हितकारिन् । पुनः कथंभूतः । अक्षोभवान् न भयान्वितः । हे वीर, भवान्मम निर्वाणशर्माणि वितरिवेति संबन्धः ॥

समवसरणमत्र यस्याः स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिसालत्रयी-
सदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभागुर्वराराट् परेताहितारोचितम् ।
प्रवितरतु समीहितं सार्हतां संहतिर्भक्तिभाजां भवाम्भोधिसंभ्रान्तभव्या-
वलीसेविता-
सदवनमदशोकपृथ्वीक्षणप्रा यशोभातपत्रप्रभागुर्वराराट्परेताहितारोचितम् ॥

समवसरणं धर्मदेशनास्थानं यस्याः अत्र अस्मिन् अराराट् भृशमराजत सा अर्हतां संहतिर्भक्तिभाजां समीहितं वितरतु । समवसरणं कथंभूतम् । स्फुरत् केतुर्धर्मध्वजश्चक्रं धर्मचक्रं आनको देवदुन्दुभिः अनेकपद्मानि सुरकृतकमलानि इन्दुरुक्चामराणि चन्द्रावदातप्रकीर्णकानि उत्सर्पिणी सालत्रयी प्राकारत्रयं प्रधानावनमदशोकद्रुमः पृथिव्युत्सवभूतच्छायातपत्रत्रयं तस्य प्रभा कान्तिस्तया गुरु महार्हम् । पुनः किंभूतम् । परेता अपगता अहिताः शत्रवो येषां तैरारोचितं शोभितम् । अथ वा परा प्रधाना इताहिता गतशत्रुरित्यर्हतां संहतेर्विशेषणे । आरोचितं शोभितम् । संहतिः कथंभूता । भवाम्भोधौ संसारसमुद्रे संभ्रान्ता आकुलीभूता या भव्यावली तया सेविता । पुनः कथंभूता । सदवना सोपतापा च मदशोकाभ्यां पृथ्वी वितता च या न भवति । ईक्षणानि चक्षूंषि ज्ञानानि वा प्राति पूरयति सा । यशसा भातानि शोभितानि पत्राणि वाहनानि प्रभजन्ते ये उर्वराराजः पृथ्वीपतयः परेताः पिशाचा अहयो नागास्तारा ज्योतिष्कास्तेषामुचितं योग्यम् । समवसरणविशेषणमिदम् ॥

परमततिमिरोग्रभानुप्रभा भूरिभङ्गैर्गभीरा भृशं विश्ववर्ये निकाय्ये वितीर्यात्तरा-
महति मतिमते हि ते शास्यमानस्य वासं सदा तन्वतीतापदानन्दधानस्य
सामानिनः ।
जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनोत्तारनौर्भारतीतीर्थकृत्
महसि मतिमतेहितेशस्य मानस्य वा संसदातन्वती तापदानं दधानस्य सा
मानि नः ॥ ९१ ॥

हे तीर्थकृत्, ते तव मते शासने भारती विश्ववर्ये निकाय्ये वासमाश्रयम् । मोक्षमित्यर्थः । वितीर्यात्तरामिति सवन्धः । भारती कथंभूता । परशासनध्वान्तसूर्यसमा । भूरिभङ्गैरर्थविकल्पैर्गभीरा । निकाय्ये कथंभूते । अहतिमति अविद्यमानहनने । मते शासने आधारभूते । यद्वा अहति अविद्यमानघातम् । एतद्वासस्य विशेषणम् । अतिमते अतिशयेनाभिप्रेते । हि स्फुटम् । ते तव । शस्यमानस्य स्तूयमानस्य । सदा नित्यम् । अतनवो बहुतरा अतीता आपदो यस्य तस्यामन्त्रणं अतन्वतीतापत् । आनन्दधानस्य प्रमोदस्थानस्य । सा इत्थंभूता । अमानिनो निरहंकारस्य । नौस्तरणिः । महति विस्तीर्णे । हे हित प्रियकारिन् । यद्वा मतिमता मनीषिणा ईहिता । ईशस्य स्वामिनः । वा इवार्थे भिन्नक्रमश्च । मानस्य पूजाया· संसद् वा सभेव । तापदानं संतापखण्डनमातन्वती । सामानि प्रियाणि दधानस्य । नोऽस्माकम् ॥

सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहे
परमवसुतराङ्गजा रावसन्नाशितारातिभाराजिते भासिनी हारतारा बलक्षेमदा।
क्षणरुचिरुचिरोरुचञ्चत्सटासंकटोत्कृष्टकण्ठोद्धटे संस्थिते भव्यलोकं त्वमम्बाम्बिके

परमव सुतरां गजारावसन्ना शितारातिभा राजिते भासिनीहारतारावलक्षेऽमदा ॥ ९६ ॥

हे सवेगनतदेववधूजनस्तनपीठीषु लुठतां तारहाराणां स्फुरद्रश्मिभिः सारे कर्बुरे क्रमाम्भोरुहे चरणकमले यस्यास्तस्याः संबोधनम् । परमवसुतराङ्गजा अतिशयेन परमवसू परमतेजसौ अङ्गजौ पुत्रौ यस्याः सा । रावेण ध्वनिना सम्यग् नाशितोऽदर्शनं नीतो अरातिभारः शत्रुवर्गो यया सा । अजिते ऽपराभूते । भासिनी भासनशीला । हारतारा हारोज्ज्वला । बलं क्षेमं च ददाति या । सिंहे कथंभूते । क्षणरुचिरुचिराभिर्विद्युद्दीप्तिभिरिव रुचिराभिः उर्वीभिः चञ्चन्तीभिः सटाभिः संकट उत्कृष्टो यः कण्ठस्तेनोद्धटे । हे अम्ब मातः । हे अम्बिके देवि । परमुत्कृष्टमव रक्ष । सुतरामत्यर्थम् । गजारौ सिंहे । असन्ना अखिन्ना । संस्थिता । शितस्य तनूकृतस्य आरस्येव पित्तलस्येव अतिशयेन भा यस्याः सा । राजिते भ्राजिते । भासमानहिमनक्षत्रधवले । अमदा मदरहिता । हे अम्बिके सिंहे संस्थिते सुतरां त्वं भव्यलोकमवेति सवन्धः ॥

इति श्रीमहाकविशोभनमुनिप्रणीता सावचूरिश्चतुर्विंशतिजिनस्तुतिः ।

---

# KÂVYAMÂLÂ.

A collection of old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhâṇas, Prahasanas, Chhandas, Alankâras &c.

PART VIII.

EDITED BY

PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRṆAYA SÂGARA" PRESS.

BOMBAY.

1891.

*Price 1 Rupee.*

# KÂVYAMÂLÂ.

A collection of old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhânas, Prahasanas, Chhandas, Alankâras &c.

PART VIII.

EDITED BY

PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRNAYA SÂGARA" PRESS.

BOMBAY.

1891.

*Price 1 Rupee.*

॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

---

अष्टमो गुच्छकः ।

---

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितः ।

---

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधि[illegible]
प्राकाश्यं नीतः ।

---

१८९१

---



---

मूल्यमेको रूप्यकः ।

॥ श्रीः ॥

# काव्यमाला।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः।

## अष्टमो गुच्छकः।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितः।

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः।

१८९१



मूल्यमेको रूप्यकः।

# काव्यमाला।

## श्रीकूरनारायणकविप्रणीतं[1]

## सुदर्शनशतकम्।

संटीकम्।

रङ्गेशविज्ञप्तिकरामयस्य चकार चक्रेश्वनुतिं निवृत्तये।
समाश्रयेऽहं वरपूरणीं यस्तं कूरनारायणनामिनं मुनिम्॥

सौदर्शन्युज्जिहाना दिशि विदिशि तिरस्कृत्य सावित्रमर्चि-
र्बाह्याबाह्यान्धकारक्षतजगदगदंकारभूम्ना स्वधाम्ना।
दोःखर्जूदूरगर्जद्विबुधरिपुवधूकण्ठवैकल्यकल्पा
ज्वाला जाज्वल्यमाना वितरतु भवतां वीप्सयाभीप्सितानि॥ १॥

बाह्याबाह्यान्धकारक्षतजगदगदंकारभूम्ना बाह्यश्चाबाह्यश्च बाह्याबाह्यौ। बाह्याबाह्यौ तावन्धकारौ च बाह्याबाह्यान्धकारौ। बाह्यान्धकारो बाह्येषु स्रक्चन्दनादिषु विषयेषु भोग्यताभ्रान्तिः। 'संसारसर्पदष्टानां भोग्याः स्रक्चन्दनादयः। मोहेन मधुरायन्ते निसर्गानिम्बसंनिभाः॥' इत्युक्तत्वात्। ज्ञानशक्त्यादिकल्याणगुणविभूषिते सकलजगदन्तर्यामित्वेनाबाह्यविषये श्रीरङ्गनायके निर्गुणत्वादिभ्रान्तिरबाह्यान्धकारः। अथवा विशृङ्खलविजृम्भमाणतमःपटलो बाह्यान्धकारः। अज्ञानान्यथाज्ञानविपरीतज्ञानादिरबाह्यान्धकारः। द्वन्द्वान्ते श्रूयमाणोऽन्धकारशब्दः प्रत्येकमभिसंबध्यते। तेन तमसा क्षतं नष्टं यज्जगत्। नष्टप्रवृत्ति नष्टेष्टसाधनप्रवृत्ति वेत्यर्थः। तादृशस्य जगतो भुवनस्यागदंकारश्चिकित्सको भूमा बाहुल्यं यस्य तत्तेन। अथवा चिकित्सकस्य भूमा बाहुल्यमिव बाहुल्यं यस्य तत्तेन स्वधाम्ना निरर्गलविनिर्गलत्स्वतेजःपटलेन सावित्रं सवितृसंबन्धि अ-

1. अस्य कवेर्देशकालौ न ज्ञायेते. भाति चायं कश्चन विशिष्टाद्वैतमतानुयायी द्रविडः. शतकस्यास्यैकं मूलपुस्तक जयपुरमहाराजाश्रितैर्नैयवरथीकृष्णशर्मभिर्दत्तम्. अपरमेकं मूलपुस्तकं टीकापुस्तकं च जयपुरवर्तिबुद्धिविवर्धिनीसभायाः संपादकेन दीक्षागुरूपनामकलक्ष्मीनारायणस्वामिसूनुना श्यामसुन्दरपण्डितेन समर्पितम्. मूलमात्रमेतस्य शतकस्य स्तोत्ररत्नावल्यामनतिशुद्धं मुद्रितमिति सटीकस्यास्य मुद्रणे वयं पुनः प्रवृत्ताः स्मः. तत्र टीकापुस्तके तत्प्रणेतुर्नाम नास्ति.

# अनुक्रमणिका ।


| विषयः । | पृष्ठम् । |
|---|---|
| १. श्रीकूरनारायणकविप्रणीतं सुदर्शनशतकम्, सटीकम् .... | १ |
| २. श्रीविश्वेश्वरपण्डितप्रणीतं कवीन्द्रकर्णाभरणम्, सटीकम् .... | ९१ |
| ३. प्रबोधसुधाकरः .... .... .... .... .... .... | १०९ |
| ४. श्रीजह्लणप्रणीतो मुग्धोपदेशः .... .... .... .... | १२५ |
| ५. श्रीविश्वेश्वरपण्डितप्रणीतं रोमावलीशतकम् .... .... .... | १३५ |
| ६. वेदान्ताचार्यश्रीवेङ्कटनाथप्रणीता सुभाषितनीवी .... .... | १६१ |

# काव्यमाला ।

श्रीकूरनारायणकविप्रणीतं[1]

## सुदर्शनशतकम् ।

सटीकम् ।

रङ्गेशविज्ञप्तिकराभयस्य चकार चक्रेशनुतिं निवृत्तये ।
समाश्रयेऽहं वरपूर्णी यस्तं कूरनारायणनामिनं मुनिम् ॥

सौदर्शन्युज्जिहाना दिशि विदिशि तिरस्कृत्य सावित्रमर्चि-
र्बाह्याबाह्यान्धकारक्षतजगदगदंकारभूम्ना स्वधाम्ना ।
दोःखर्जूदूरगर्जद्विबुधरिपुवधूकण्ठवैकल्यकल्पा
ज्वाला जाज्वल्यमाना वितरतु भवतां वीप्सयाभीप्सितानि ॥ १ ॥

बाह्याबाह्यान्धकारक्षतजगदगदंकारभूम्ना बाह्यश्चाबाह्यश्च बाह्याबाह्यौ । बाह्याबाह्यौ तावन्धकारौ च बाह्याबाह्यान्धकारौ । बाह्यान्धकारो बाह्येषु स्रक्चन्दनादिषु विषयेषु भोग्यताभ्रान्तिः । 'संसारसर्पदष्टानां भोग्याः स्रक्चन्दनादयः । मोहेन मधुरायन्ते निसर्गान्निम्बसंनिभाः ॥' इत्युक्तत्वात् । ज्ञानशक्त्यादिकल्याणगुणविभूषिते सकलजगदन्तर्यामित्वेनाबाह्यविषये श्रीरङ्गनायके निर्गुणत्वादिभ्रान्तिरबाह्यान्धकारः । अथवा विशृङ्खलविजृम्भमाणतमःपटलो बाह्यान्धकारः । अज्ञानान्यथाज्ञानविपरीतज्ञानादिरबाह्यान्धकारः । द्वन्द्वान्ते श्रूयमाणोऽन्धकारशब्दः प्रत्येकमभिसंबध्यते । तेन तमसा क्षतं नष्टं यज्जगत् । नष्टप्रवृत्ति नष्टेष्टसाधनप्रवृत्ति वेत्यर्थः । तादृशस्य जगतो भुवनस्यागदंकारश्चिकित्सको भूमा बाहुल्यं यस्य तत्तेन । अथवा चिकित्सकस्य भूमा बाहुल्यमिव बाहुल्यं यस्य तत्तेन स्वधाम्ना निरर्गलविनिर्गलत्स्वतेजःपटलेन सावित्रं सवितृसंबन्धि अ-

---

१. अस्य कवेर्देशकालौ न ज्ञायेते. भाति चायं कश्चन विशिष्टाद्वैतमतानुयायी द्रविडः. शतकस्यास्यैकं मूलपुस्तकं जयपुरमहाराजाश्रितैर्वैद्यवरश्रीकृष्णशर्मभिर्दत्तम्. अपरमेकं मूलपुस्तकं टीकापुस्तकं च जयपुरवर्तिबुद्धिविवर्धिनीसभायाः सभापदकेन दीक्षागुरूपनामकलक्ष्मीनारायणस्वामिसूनुना श्यामसुन्दरपण्डितेन समर्पितम्. मूलमात्रमेतस्य शतकस्य स्तोत्ररत्नावल्यामनतिशुद्धं मुद्रितमिति सटीकस्यास्य मुद्रणे वयं पुनः प्रवृत्ताः स्मः. तत्र टीकापुस्तके तत्प्रणेतुर्नाम नास्ति.

# अनुक्रमणिका ।

| विषयः । | पृष्ठ । |
|---|---|
| १. श्रीकूरनारायणकविप्रणीतं सुदर्शनशतकम्, सटीकम् .... | १ |
| २. श्रीविश्वेश्वरपण्डितप्रणीतं कवीन्द्रकर्णाभरणम्, सटीकम् .... | ५१ |
| ३. प्रबोधसुधाकरः .... .... .... .... .... .... | १०९ |
| ४. श्रीजह्लणप्रणीतो मुग्धोपदेशः .... .... .... .... | १२५ |
| ५. श्रीविश्वेश्वरपण्डितप्रणीतं रोमावलीशतकम् .... .... .... | १३५ |
| ६. वेदान्ताचार्यश्रीवेङ्कटनाथप्रणीता सुभाषितनीवी .... .... | १५१ |

# काव्यमाला।

## श्रीकूरनारायणकविप्रणीतं[1]

## सुदर्शनशतकम्।

सटीकम्।

रङ्गेशविज्ञप्तिकरामयस्य चकार चक्रेशनुतिं निवृत्तये।
समाश्रयेऽहं वरपूर्णीं यस्तं कूरनारायणनामिनं मुनिम्॥

सौदर्शन्युज्जिहाना दिशि विदिशि तिरस्कृत्य सावित्रमर्चि-
र्बाह्याबाह्यान्धकारक्षतजगदगदंकारभूम्ना स्वधाम्ना।
दोःखर्जूदूरगर्जद्विबुधरिपुवधूकण्ठवैकल्यकल्पा
ज्वाला जाज्वल्यमाना वितरतु भवतां वीप्सयाभीप्सितानि॥ १॥

बाह्याबाह्यान्धकारक्षतजगदगदंकारभूम्ना बाह्यश्चाबाह्यश्च बाह्याबाह्यौ। बाह्याबाह्यौ तावन्धकारौ च बाह्याबाह्यान्धकारौ। बाह्यान्धकारो बाह्येषु स्रक्चन्दनादिषु विषयेषु भोग्यताभ्रान्तिः। 'संसारसर्पदष्टानां भोग्याः स्रक्चन्दनादयः। मोहेन मधुरायन्ते निसर्गान्निम्बसंनिभाः॥' इत्युक्तत्वात्। ज्ञानशक्त्यादिकल्याणगुणविभूषिते सकलजगदन्तर्यामित्वेनाबाह्यविषये श्रीरङ्गनायके निर्गुणत्वादिभ्रान्तिरबाह्यान्धकारः। अथवा विश्वद्दलविजृम्भमाणतमःपटलो बाह्यान्धकारः। अज्ञानान्यथाज्ञानविपरीतज्ञानादिरबाह्यान्धकारः। द्वन्द्वान्ते श्रूयमाणोऽन्धकारशब्दः प्रत्येकमभिसंबध्यते। तेन तमसा क्षतं नष्टं यज्जगत्। नष्टप्रवृत्ति नष्टेष्टसाधनप्रवृत्ति वेत्यर्थः। तादृशस्य जगतो भुवनस्यागदंकारश्चिकित्सको भूमा बाहुल्यं यस्य तत्तेन। अथवा चिकित्सकस्य भूमा बाहुल्यमिव बाहुल्यं यस्य तत्तेन स्वधाम्ना निरर्गलविनिर्गलत्स्वतेजःपटलेन सावित्रं सवितृसंबन्धि अ-

1. अस्य कवेर्देशकालौ न ज्ञायेते. भाति चायं कश्चन विशिष्टाद्वैतमतानुयायी द्रविडः. शतकस्यास्यैकं मूलपुस्तकं जयपुरमहाराजाश्रितैर्वैद्यवरश्रीकृष्णशर्मभिर्दत्तम्. अपरमेकं मूलपुस्तकं टीकापुस्तकं च जयपुरवर्तिबुद्धिविवर्धिनीसभायाः संपादकेन दीक्षागुरूपनामकलक्ष्मीनारायणस्वामिसूनुना श्यामसुन्दरपण्डितेन समर्पितम्. मूलमात्रमेतस्य शतकस्य स्तोत्ररत्नावल्यामनतिशुद्धं मुद्रितमिति सटीकस्यास्य मुद्रणे वयं पुनः प्रवृत्ताः स्मः. तत्र टीकापुस्तके तत्प्रणेतुर्नाम नास्ति.

र्चिस्तेजांसि तिरस्कृत्य आच्छिद्य । मद्दत्कृतेनेत्यर्थः (?) । दिशि विदिशि सर्वासु दिक्षु । चतुर्दशभुवनेष्वित्यर्थः । उज्जिहाना उदयमाना । दोःखर्जूदूरगर्जद्विबुधारिपृथुकण्ठैककल्पकल्पा दोषां भुजानां खर्जूः कण्डूतिस्तया दूरमत्यर्थं गर्जन्तः सिंहनादं कुर्वन्तो विबुधारिपवस्त्रिदशकण्टकास्तेषां वध्वो महिष्यस्तासां कण्ठा ग्रीवास्तेषां कैवल्यं मङ्गलसूत्रादिराहित्यं तस्मिन्कल्पा सज्जा संनद्धा । प्रचण्डभुजदण्डकण्डूलतया प्रलयसमयजलधरघोरघोषाटोपलोपकृद्गर्जनतर्जनादिकारणचणनिर्जरद्विषद्वधूवैधव्यविधानसंनद्धेत्यर्थः । अत एव जाज्वल्यमाना अप्रतिहतवृत्त्या प्रकाशमाना । सौदर्शनी सुदर्शनसंबन्धिनी ज्वाला भवतामभीप्सितान्यभीष्टार्थान् वीप्सया पौनःपुन्येन वितरतु ददातु दद्यात् । एतेनाश्रितानामिष्टानिष्टप्राप्तिहरणनिपुणेत्युक्तम् ॥

प्रत्युद्यातं मयूखैर्नभसि दिनकृतः प्रत्तसेवं प्रभाभि-
र्भूमौ सौमेरवीभिर्दिवि वरिवसितं दीप्तिभिर्देवधाम्नाम् ।
भूयसे भूतये वः स्फुरतु सकलदिग्भ्रान्तसान्द्रस्फुलिङ्गं
चाक्रं जाग्रत्प्रतापं त्रिभुवनविजयव्यग्रमुग्रं महस्तत् ॥ २ ॥

सौमेरवीभिरमरगिरिसंबन्धिनीभिः प्रभाभिर्द्युतिभिर्भूमौ विश्वंभरायां प्रत्तसेवं प्रकृतसेवं कृतपरिचर्यम् । 'अच उपसर्गात्तः' इति तत्वे दकारलोपः । अमरगिरिपरिसरचरितमित्यर्थः । दिनकृतः सूर्यस्य मयूखैः किरणैर्नभस्याकाशे प्रत्युद्यातं प्रत्यागत्य परिपूजितम् । प्रभाकरप्रभाविर्भावसंभावितमित्यर्थः । देवधाम्नाममरसौधानां नक्षत्राणां वा दीप्तिभिः प्रभाभिर्दिवि स्वर्गलोके वरिवसितमुपासितम् । सुरवरनिकरकनकमयसदनरचिररुचिचयपरिचरितमित्यर्थः । नक्षत्रप्रभासेवितमिति वार्थः । सकलदिग्भ्रान्तसान्द्रस्फुलिङ्गं सर्वासु दिक्षु भ्रान्ताः सान्द्रा निबिडाः स्फुलिङ्गाः कृशानुकणा यस्य तत् । सकलदिगन्तरालबम्भ्रम्यमाणनीरन्ध्रकरालाग्निकणमिति यावत् । त्रिभुवनविजयव्यग्रं त्रयाणां भुवनानां विजये व्यग्रं ससंभ्रमम् । त्रिभुवनविजयव्यासङ्गनिर्जितत्रिभुवनान्तराऽवर्तमानपरिपन्थिपरम्परमित्यर्थः । जाग्रत्प्रतापमतिस्फुरत्प्रतापदहनम् । प्रतिदिशं प्रज्वलमानप्रतापप्रवृत्तिप्रकृष्टमित्यर्थः । उग्रं प्रतिभटभयंकरम् । चाक्रं चक्रस्येदं चक्रात्मकंपन्थि तत्प्रसिद्धं महस्तेजो वो युष्माकं भूयसे बहुतराय भूतये भूयात् । 'बहोर्लोपो भू च बहोः' इति ॥

पूर्णे पूरैः सुधानां सुमहति लसतः सोमबिम्बालवाले
बाहाशाखावरुद्धक्षितिगगनदिवश्चक्रराजद्रुमस्य ।
ज्योतिश्छद्मा प्रवालः प्रकटितसुमनःसंपदुत्तंसलक्ष्मीं
पुष्णन्नाशामुखेषु प्रदिशतु भवतां सप्रकर्षं प्रहर्षम् ॥ ३ ॥

सुधानां पूरैरमृतरसप्रवाहैः पूर्णे तस्मिन् । मधुरतरसुधारसप्रवाहप्रचुरपरिपूरित

यावत् । सुमहति महत्तरेऽपरिच्छिन्नवैभवे सोमबिम्बालवाले शिशिरकरमण्डलमेवालवालं तस्मिन् लसतो विराजमानस्य । बाहाशाखावरुद्धक्षितिगगनदिवः बाहा भुजा एव शाखा विटपास्ताभिरवरुद्धा आक्रान्ताः क्षितिर्धरित्री गगनमन्तरिक्षं द्यौः स्वर्गश्च क्षितिगगनद्यावः बाहाशाखावरुद्धाः क्षितिगगनद्यावो येन सः । तस्य चक्रराजद्रुमस्य सुदर्शनकल्पद्रुमस्य ज्योतिश्छद्मा ज्योतिस्तेजश्छद्म व्याजो यस्य तथोक्तः प्रवालः किसलयः । ज्योतिर्नामकं किसलयमित्यर्थः । प्रकटितसुमनःसंपत् प्रकटिता प्रचुरीकृता सुमनसां पुष्पाणामाशामुखेषु दिङ्मुखेषूत्तंसलक्ष्मीं कर्णाभरणशोभां पुष्णन् बहुलयन् । सपादयन्नित्यर्थः । भवतां युष्माकं सप्रकर्षं प्रहर्षम् । निरतिशयानन्दमित्यर्थः । प्रदिशतु दद्यात् । मधुरतररससुधारसपरिवाहपरिपूर्णमहत्तरसुधाकरालवाललसत्सुदर्शनकल्पद्रुज्योतिःप्रवालः सुमनःसंपत्समृद्धो दिङ्मण्डलमण्डनायितः सन्भवतां निष्प्रतीपं प्रमोदं प्रदद्यादित्यर्थः ॥

आरादारात्सहस्राद्विसरति विमतक्षेपदक्षाद्यदक्षा-
न्नाभेर्भास्वत्सनाभेर्निजविभवपरिच्छिन्नभूमेश्च नेमेः ।
आम्नायैरेककण्ठैः स्तुतमहिम महो माधवीयस्य हेते-
स्तद्वो दिक्ष्वेधमानं चतसृषु चतुरः पुष्यतात्पूरुषार्थान् ॥ ४ ॥

सहस्रात्सहस्रसंख्यासंख्येयात् । आरादरसमूहात् । समूहार्थे पञ् । 'अचो ञ्णिति' इति वृद्धिः । विमतक्षेपदक्षात् । शत्रुनिरसनसमर्थादित्यर्थः । अक्षात्सुदर्शनावयवविशेषात् । भास्वत्सनाभेर्भास्वतः सूर्यस्य सनाभिर्बन्धुस्तस्य नाभेः पिण्डिकायाः । भास्वत्सनाभिमध्यप्रदेशादित्यर्थः । निजविभवपरिच्छिन्नभूमेः निजः स्वकीयो विभवो विस्तारस्तेन परिच्छिन्ना परिमिता भूमिर्यया सा तस्या नेमेः प्रधेश्च सकाशात् संजातं यन्महः आरादन्तिके दूरे च । सर्वत्रेत्यर्थः । विसरति व्याप्नोति । एककण्ठैरविसंवादिभिराम्नायैः स्तुतमहिम स्तुतो वर्णितो महिमा यस्य तत् । अथवा वेदैरेकः कण्ठो यस्मिन्कर्मणि तदविद्यमानविरोधवस्तु स्तुतमहिम । चतसृषु प्राच्यवाच्यादिषु दिक्षु दिशास्वेधमानं वर्धमानं माधवीयस्य श्रीरङ्गसंबन्धिनो हेतेरायुधस्य चक्रस्य तन्महश्चतुरः पुरुषार्थान्धर्मार्थकाममोक्षान्पुष्यतात्पुष्णातु ॥

श्यामं धामप्रकृत्या क्वचन भगवतः क्वापि बभ्रु प्रकृत्या
शुभ्रं शेषस्य भासा क्वचन मणिरुचा क्वापि तस्यैव रक्तम् ।
नीलं श्रीनेत्रकान्त्या क्वचिदपि मिथुनस्यादिमस्येव मिश्रां
व्यातन्वानं विनानाश्रियमुपचिनुतात्कर्म वश्चक्रभानम् ॥ ५ ॥

श्यामया श्यामम् । क्वापि प्रकृत्या बभ्रु स्वभावतः पिङ्गलवर्णम् । क्वचन शेषस्यामृतफेनपटलपाण्डुरविग्रहस्यानन्तस्य भासा प्रभया शुभ्रं धवलम् । क्वापि तस्यैव शेषस्यैव मणिरुचा शिरोभागस्थितपद्मरागप्रभापटलेन रक्तं जपाकुसुमलोहितम् । क्वचिदपि भ्रमितनेत्रकान्त्या अञ्जनरञ्जितयोर्नीलोत्पलदलरमणीययोः श्रीरङ्गनायिकानयनयोः प्रभया नीलं कृष्णं च । मिथुनस्यादिमस्य सर्धाकस्य श्रीरङ्गनाथस्य चित्रां नानावर्णां वितानश्रियमुल्लोचशोभां व्यातन्वानं कुर्वाणमिव स्थितं चक्रभानं सुदर्शनतेजो वः शर्म उपचिनुतात्सपरयतु प्रचुरयतु ॥

शंसन्त्युन्मेषमुच्छोषितपरमहसो भास्वतः कैटभारे-
रिन्धे संध्येव नक्तंचरविलयकरी या जगद्वन्दनीया ।
बन्धूकच्छायबन्धुच्छविघटितघनच्छेदमेदस्विनी सा
राथाङ्गी रश्मिभङ्गी प्रणुदतु भवतां प्रत्यहोत्थानमेनः ॥ ६ ॥

उच्छोषितपरमहस उच्छोषितं चुलुकितं अथवा उच्छोषितं शुष्कीकृतं परेषां चन्द्रादिग्रहाणां महस्तेजो येन स तस्य भास्वतः सूर्यस्योन्मेषमुदयं शंसन्ती संध्येव । उच्छोषितपरमहसः कवलितप्रत्यर्थिप्रतापस्य कैटभारेः श्रीरङ्गनाथकस्योन्मेषमभ्युत्थानघटकत्वं शंसन्ती ब्रुवाणा । नक्तंचरविलयकरी राक्षसविनाशकरी । संध्यापक्षे समानम् । जगद्वन्दनीया निखिलभुवनोपास्या राथाङ्गी सुदर्शनसंबन्धिनी रश्मिभङ्गी ज्वालापरिपाटी संध्येव इन्धे प्रकाशते । बन्धूकच्छायबन्धुच्छविघटितघनच्छेदमेदस्विनी बन्धूकानां बन्धुजीवकुसुमानां छाया कान्तिस्तया बन्धुर्मित्रं छविस्तया घटितो युक्तो घनच्छेदो मेघखण्डस्तद्वन्मेदुरा । प्रवृद्धेत्यर्थः । संध्यापक्षेऽपि समानम् । सा ज्वाला भवतां प्रत्यहोत्थानं प्रतिदिनभवमेनः पापं प्रणुदतु ॥

साम्यं धूम्याप्रकृत्या प्रकटयति नभस्तारकाजालकानि
स्फौलिङ्गीं यान्ति कान्तिं दिशति यदुदये मेरुरङ्गारशङ्काम् ।
अग्निर्मर्शार्चिरैक्यं भजति दिननिशावल्लभौ दुर्लभौ
ज्वालावर्तीविव स्वः प्रहरणपतिजं धाम वल्लाद्धिनोतु ॥ ७ ॥

यदुदये यस्य ज्वालाचक्रस्योदये नभोऽन्तरिक्षं धूम्याप्रकृत्या धूमसमूहरूपतया । 'पाशादिभ्यो यः' इति यप्रत्ययः । पाशादिराकृतिगणः । 'ग्रामता जनता धूम्या' इत्यमरः । साम्यं सादृश्यं प्रकटयति विशदयति । धूमसमूहसदृशमिति साम्यं भजतीत्यर्थः । तारकाजालकानि तारकाणां जालानि समूहास्त एव जालकानि । स्वार्थे कप्रत्ययः । अथवा कोरकावस्थितत्वाज्जालकानीत्युच्यन्ते । कोरकावस्थितानि नक्षत्राणीत्यर्थः । स्फौलिङ्गीं स्फुलिङ्गसंबन्धिनीं कान्तिं शोभां यान्ति गच्छन्ति । मेरुः स्वर्णाचलोऽङ्गारशङ्कामयमङ्गार इति संदेहं दिशति ददाति । अग्निरनलो मर्मार्चिर्विलीनमरुत्व एव

ज्वालान्तःपातित्वं भजति प्राप्नोति । दिननिशावल्लभौ दिनं च निशा च दिननिशे तयोर्वल्लभौ रविशशी दुर्लभाभौ अभिभूतप्रकाशौ सन्तौ ज्वालावर्ताविव ज्वालाम्भसां भ्रमिप्रकाराविव स्तो भवतस्तत्ताद्दशप्रभावं प्रहरणपतिजमायुधराजसंजातं धाम तेजो वो युष्मान्धिनोत्वानन्दयतु । प्रीणात्वित्यर्थः ॥

दृष्टेऽधिव्योम चक्रे विकचनवजपासंनिकाशे सकाशं
स्वर्भानुर्भानुरेष स्फुटमिति कलयन्नागतो वेगतोऽस्य ।
निष्टप्तो यैर्निवृत्तो विधुमिव सहसा स्प्रष्टुमद्यापि नेष्टे
घर्मांशुं ते घटन्तामहितविहतये भानवो भास्वरा वः ॥ ८ ॥

व्योम्नि इत्यधिव्योम । विभक्त्यर्थेऽव्ययीभावः । विकचनवजपासंनिकाशे विकसितनवजपाकुसुमसमूहमेचके (!) सुदर्शनपुरुषे दृष्टे विलोकिते सति स्वर्भानू राहुर्दृष्टिविषयो ह्येष स्फुटं व्यक्तं यथा भवति तथा भानुः सूर्योऽयमिति कलयन्निश्चिन्वानः अस्यामुष्य सकाशं समीपं वेगतो रयादागतो यैर्भानुभिर्निष्टप्तो नितरां तप्तो भानुकृतसतापमसहमानो निवृत्तः परावृत्तः सन्नद्यापीदानीमपि तद्भयाद्धर्मांशुमुष्णकिरणं विधुमिव चन्द्रमिव सहसा शीघ्रं स्प्रष्टुं स्पर्शं कर्तुं नेष्टे न समर्थस्ते भास्वरा विद्योतमाना भानवः किरणा अहितविहतये शत्रुविनाशाय घटन्तां चेष्टन्तां कल्पन्ताम् ॥

· देवं हेमाद्रितुङ्गं पृथुभुजशिखरं बिभ्रतीं मध्यदेशे
नाभिद्वीपाभिरामामरविपिनवतीं शेषशीर्षासनस्थाम् ।
नेमिं पर्यायभूमिं दिनकरकिरणादृष्टसीमः परीत्य
प्रीत्यै वश्चक्रवालाचल इव विलसन्नस्तु दिव्यास्त्ररश्मिः ॥ ९ ॥

पृथुभुजशिखरं पृथवः । मांसला इत्यर्थः । ते च ते भुजाश्च त एव शिखराणि शृङ्गाणि यस्य सः । हेमाद्रिः स्वर्णाद्रिस्तद्वत्तुङ्गमुन्नतं देवं सुदर्शनपुरुषं मध्यदेशे बिभ्रतीं दधतीम् । नाभिद्वीपाभिरामां नाभिः पिण्डिका सैव द्वीपस्तेनाभिरामां रमणीयाम् । अराण्येव विपिनान्यस्याः सन्तीत्यरविपिनवतीम् । शेषशीर्षासनस्थां शेषशिरःसिंहासनासीनाम् । पर्यायभूमिं वसुंधरापरतनुं नेमिं प्रधिं परीत्य परित आवृत्य दिनकरकिरणादृष्टसीमस्तरणिकिरणाविषयप्रदेशश्चक्रवालाचल इव लोकालोकपर्वत इव विलसन्प्रकाशमानश्चक्रवालसदृशो दिव्यास्त्ररश्मिर्वो युष्माकं प्रीत्यै सुखायास्तु भवतु ॥

एकं लोकस्य चक्षुर्द्विविधमपनुदत्कर्म नम्रत्रिनेत्रं
दात्रर्थानां चतुर्णां गमयदरिगणं पञ्चतां षड्गुणाढ्यम् ।
सप्तार्चिःशोधिताष्टापदनवकिरणश्रेणिरज्यद्दशाशं
पर्यस्याद्वः शताङ्गावयवपरिवृढज्योतिरीतीः सहस्रम् ॥ १० ॥

लोकस्य भुवनस्यैकं मुख्यम् । प्रधानभूतमित्यर्थः । चक्षुर्लोचनम् । 'चक्षुर्देवानामुत मर्त्यानाम्' इति श्रुत्युक्तत्वात् । द्विविधं द्विप्रकारं कर्म पुण्यपापरूपं कर्मापनुदन्निर्गलयत् । विनाशयदित्यर्थः । नम्रत्रिनेत्रं नतत्रिनेत्रः शिवो यस्य तत् । चतुर्णामर्थानां धर्मार्थकाममोक्षाणां दातृ दायकम् । अरिगणं शत्रुनिकरं पञ्चतां मृतिं गमयत्प्रापयत् । षड्गुणाढ्यं ज्ञानशक्त्यादिकल्याणगुणप्रसिद्धम् । सप्ताश्वैरसप्तिभिस्तेन शोषितं तापितं विलीनम् । द्रवीभूतमिति यावत् । तच्च तदष्टापदं च काञ्चनं तद्वन्नवकिरणश्रेणिस्तया रज्यन्त्यस्ताम्रा भवन्त्यो दश आशा दिशो यस्य तत् । शताङ्गावयवपरिवृढज्योतिः शताङ्गो रथः । 'शताङ्गः स्यन्दनो रथः' इत्यमरः । तस्यावयवपरिवृढश्चक्रप्रमुखस्तस्य ज्योतिर्महो वः सहस्रमीतीरसंख्या ईतीः पर्यवस्यादपनुदतु ॥

उच्चण्डे यच्छिखण्डे निबिडयति नभःक्रोडमक्रोऽटति धा-
मभ्यस्य प्रौढतापग्लपितवपुरपो बिभ्रतीरभ्रपङ्क्तीः ।
धत्ते शुष्यत्सुधोत्सो विधुरपमधुनः क्षौद्रकोपस्य साम्यं
रक्षन्त्वक्षप्रमोस्ते रचितसुचरितव्युष्टयो घृष्णयो वः ॥ ११ ॥

उच्चण्डेऽत्यन्तकराले । शत्रूनुद्दिश्य क्रूर इत्यर्थः । यच्छिखण्डे येषां घृणीनां शिखण्डे शिखाप्रदेशे नभःक्रोडमाकाशमध्यं निबिडयति व्याप्नुवति सत्यर्कः प्रभाकरः प्रौढतापग्लपितवपुः प्रौढतापेन ग्लपितं ग्लापितं वपुर्यस्य स ग्लपितवपुः सन्नपो बिभ्रतीर्दधतीरभ्रपङ्क्तीर्मेघपरम्परा अभ्यस्य पौनःपुन्येन संसेव्य धामाकाशमटति गच्छति । आकाशं प्राप्य परिभ्रमतीत्यर्थः । विधुश्चन्द्रः शुष्यत्सुधोत्सः शुष्यन्सुधाया उत्सः प्रवाहो यस्य । 'उत्सः प्रस्रवणं वारिप्रवाहः' इत्यमरः । शुष्कीभवन्सुधाप्रवाहो यस्य स अपमधुर्निर्गतमाक्षिकस्य क्षौद्रकोपस्य क्षौद्रपटलस्य साम्यं सादृश्यं धत्ते प्राप्नोति । अक्षप्रमोरक्षराजस्य सुदर्शनपुरुषस्य ते तादृशा रचितसुचरितव्युष्टयो रचिताः कृताः सच्चरित्राणां व्युष्टयः समृद्धयो यैस्ते । 'व्युष्टिः फले समृद्धौ च' इत्यमरः । घृष्णयः किरणा वो युष्मात्रक्षन्तु ॥

पद्मौघो दीर्घिकाम्भस्यवनिधरतटे गैरिकाम्बुप्रपातः
सिन्दूरं कुञ्जराणां दिशि दिशि गगने सांध्यमेघप्रबन्धः ।
पारावारे प्रवालो वनभुवि च तथा प्रेक्ष्यमाणः प्रसूनैः
साधिष्ठं वः प्रमोदं जनयतु दनुजद्वेषिणस्त्वैपराशिः ॥ १२ ॥

दीर्घिकाम्भसि वापिकास्वच्छतरतोये पद्मौघो रक्तकमलषण्डः किम् । अवनिधरतटे पर्वतानां स्फटिकमयतटे गैरिकाम्बुप्रपातो धातुजलप्रपातः किम् । दिशि दिशि प्राच्यादिदिक्षु कुञ्जराणां सिन्दूरं दिक्करिकुम्भस्थलालंकारभूतसिन्दूरपरागः किम् । गगने वियति सांध्यमेघप्रबन्धः संध्यासंबन्धिजलधरपटलः किम् । पारावारे समुद्रे प्रवालो विद्रुम

देवैरासेव्यमानो दनुजभटभुजादण्डदर्पोष्मतप्तै-
राशारोधोतिलङ्घी लुठदुडुपटलीलक्ष्यडिण्डीरपिण्डः ।
रिङ्गज्ज्वालातरङ्गत्रुटितरिपुतरुव्रातपातोग्रमार्ग-
श्चाक्रो वः शोचिरोघः शमयतु दुरितापह्नवं दाववह्निम् ॥ १७ ॥

दनुजभटभुजादण्डदर्पोष्मतप्तैः दनुजभटा राक्षसवीरास्तेषां भुजा एव दण्डास्तेषां दर्पो गर्वस्तस्मात्संजातमूष्म तेन तप्तास्तैर्देवैरासेव्यमानः । उष्णतप्ता जलप्रवाहं प्रविशन्ति । आशारोधोतिलङ्घी आशा दिशस्ता एव रोधांसि तटान्यतिलङ्घयितुं शीलमस्यास्तीत्यतिलङ्घी । लुठदुडुपटलीलक्ष्यडिण्डीरपिण्डः लुठन्ती परिवर्तमाना उडूनां नक्षत्राणां पटली समूहः सैव लक्ष्यं व्याजो यस्य स एव डिण्डीरपिण्डः उडुपटलीव्याजडिण्डीरपिण्डः फेनकवलो यस्य सः । रिङ्गज्ज्वालातरङ्गत्रुटितरिपुतरुव्रातपातोग्रमार्गः । ज्वाला एव तरङ्गाः रिङ्गन्तश्चलन्तश्च ते ज्वालातरङ्गाश्च तैस्त्रुटितास्ते च रिपुतरवः शत्रुवृक्षास्तेषां व्रातः समूहस्तस्य पातः पतनं तेनोग्रो भयंकरो मार्गो यस्य सः । चाक्रः सुदर्शनसंबन्धी शोचिरोघस्तेजःप्रवाहः । 'ओघो वृन्देऽम्भसां रये' इत्यमरः । वो युष्माकं दुरितापह्नवं दुरितं पापमपह्नव आवरणमाच्छादनं यस्मिन्स तं दाववह्निं दावानलं शमयतु निर्वापयतु । दुरितशब्दाभिहितं दावदहनं विनाशयत्वित्यर्थः ॥

भ्राम्यन्ती संश्रितानां भ्रमशमनकरी छन्नसूर्यप्रकाशा
सूर्यालोकानुरूपा रिपुहृदयतमस्कारिणी निस्तमस्का ।
धारासंपातिनी च प्रकटितदहना दीप्तिरब्रेशितुर्वे-
श्चित्रा भद्राय विद्रावितविमतजना जायतामायताय ॥ १८ ॥

भ्राम्यन्ती स्वयं भ्रमणानि कुर्वती संश्रितानामाश्रितानां भ्रमशमनकरी । भ्रान्तिनाशिनीत्यर्थः । स्वयं भ्रमन्त्यप्याश्रितभ्रान्तिं निवारयतीति चित्रम् । छन्नसूर्यप्रकाशा आच्छादितः सूर्यस्य प्रकाशः प्रभा यया सा । सूर्यालोकानुरूपा सूरिजनप्रकाशनदर्शनयोरनुरूपा । 'आलोकौ दर्शनोद्द्योतौ' इत्यमरः । रिपुहृदयतमस्कारिणी शत्रुहृदयविमोहिनी । निस्तमस्का स्वयं ज्योतीरूपा । धारासंपातिनी प्रकटितदहना आसारवत्यपि प्रकटितपावका । विद्रावितविमतजना पलायिताः शत्रुजना यया सा । प्रधावितशत्रुपरम्परेत्यर्थः । अब्रेशितुश्चक्रराजस्य चित्रा अद्भुता दीप्तिः प्रभावः आयताय दीर्घाय भद्राय मङ्गलाय जायतां प्रादुर्भवतु ॥

निन्ये वन्येव काशी दवशिखिजटिलज्योतिषा येन दाहं
कृत्या वृत्या विलिल्ये शलभसुलभया यत्र चित्रप्रभावे ।
रुद्रोऽप्यद्रेर्दुहित्रा सह गहनगुहां यद्भयादभ्ययासी-
द्दिश्याद्दिश्वार्चितो वः स शुभमनिभृतं शौरिहेतिप्रतापः ॥ १९ ॥

दवशिखिजटिलज्योतिषा दवदहनवज्जटिलानि जटावन्ति । दीर्घतराणीत्यर्थः । ज्योतींषि यस्य स तेन येन प्रतापेन काशी वाराणसी वन्येव वनसमूह इव दाहं भस्मता निन्ये नीता । चित्रप्रभावे आश्चर्यमहत्त्वे यस्मिन्प्रतापे कृत्या काचन देवता । 'कृत्या क्रियादेवतयोः' इत्यमरः । शलभसुलभया शलभैर्लब्धु शक्यया वृत्या वर्तनेन विलिल्ये । कृत्या सुदर्शनज्वालया शलभन्यायेन विलीना बभूवेत्यर्थः । रुद्रः सकललोकसंहारकः शिवोऽप्यद्रिदुहित्रा भवान्या सार्धं यद्भयात्सुदर्शनप्रतापभयाद्गहनगुहां दुरभिभवगह्वरमभ्ययासीदविशत् । विश्वार्चितो जगत्पूजितः शौरिहेतिप्रतापः श्रीरङ्गनायककरकिसलयालंकरणावरणविभ्रमो वः शुभं कल्याणमनिभृतं प्रस्फुटं यथा स्यात्तथा दिश्याद्दद्यात् । अथवा शुभविशेषणमनिभृतपदम् ॥

उद्यन्बिम्बादुदारान्नयनहिमजलं मार्जयन्निर्जरीणा-

मज्ञानध्वान्तमूर्छाकरजनिरजनीभञ्जनव्यञ्जिताध्वा ।

न्यक्कुर्वाणो ग्रहाणां स्फुरणमपहरन्नार्चिषः पावकीया-

श्चक्रेशार्कप्रकाशो दिशतु दश दिशो व्यश्नुवानं यशो वः ॥ २० ॥

उदारादत्यन्तविशालाद्बिम्बादुद्यन्प्रादुर्भवन् निर्जरीणां देवाङ्गनानां नयनहिमजलं मार्जयन्निष्कासयन् । तुहिनगिरिपरिसरविचरदमरयुवतिनिकरनयनकुवलयाविलतामपहरन्निति । अज्ञानध्वान्तमूर्छाकरजनिरजनीभञ्जनव्यञ्जिताध्वा । अज्ञानं च ध्वान्तं चाज्ञानध्वान्ते ताभ्यां जायमानां मूर्छां करोतीति मूर्छाकरस्तच्च तज्जनितमथ तदेव रजनी च तस्या भञ्जनं नाशनं तेन व्यञ्जितः प्रकटितोऽध्वा येन सः । अज्ञानजनिभञ्जनेन सूर्यातिशयो विहितः । ग्रहाणां स्फुरणमुत्तेजनं न्यक्कुर्वाण आच्छादयन् । पावकीया आग्नेया अर्चिषः प्रभा अपहरन्मुष्णन् । ईदृशश्चक्रेशार्कप्रकाशो वो दशदिशो व्यश्नुवानं दशदिशावरणं यशः प्रदिशतु ॥

वर्गस्य स्वर्गधाम्नामपि दनुजनुषां विग्रहं निग्रहीतुं

दातुं सद्योबलानां श्रियमतिशयिनीं पत्रभङ्गानुवृत्त्या ।

योक्तुं देदीप्यते या युगपदपि पुरो भूतिमय्या प्रकृत्या

सा वो नुद्यादविद्यां द्युतिरमृतरसस्यन्दिनी स्यान्दनाङ्गी ॥ २१ ॥

स्वर्गधाम्नां देवानां वर्गस्य वृन्दस्य दनुजनुषां दानवानां वर्गस्यापि विग्रहं विरोधं शरीरं च निग्रहीतुं निराकर्तुं शमयितुमित्यर्थः । नाशयितुं प्राणैर्वियोजयितुमित्यर्थः । दानववर्गस्य बलानां सैन्यानां पत्रभङ्गानुवृत्त्या वाहनभङ्गानुरूप्यां अतिशयिनीं प्रकृष्टां श्रियं सम्पदं दातुं खण्डयितुं विनाशयितुमित्यर्थः । दाधातोस्तुमुन् । सद्यस्तत्क्षणमेव । स्वर्गधाम्नां वर्गस्याबलानां स्त्रीणां पत्रभङ्गानुवृत्त्या मकरिकापत्रवल्लीविरचनानुरूप्यां अतिशयिनीं श्रियं शोभां दातुं वितरितुम् । दानववर्गस्य पुरो नगराणि भूतिमय्या

भस्मप्रचुरया प्रकृत्या शरीरेण स्वभावेन वा योक्तुं योजयितुम् । देववर्गस्य पुरः पत्तनानि भूतिमय्या ऐश्वर्यप्रचुरया प्रकृत्या स्वभावेन योक्तुं च या स्यान्दनाङ्गी द्युतिश्चाक्री द्युतिर्दैदीप्यते प्रकाशत इत्यर्थः । अमृतरसस्यन्दिनी मोक्षानन्दं दुहाना सा वोऽविद्यामज्ञानं नुद्याचिष्कासयतु ॥

दाहं दाहं सपत्नान्समरभुवि लसद्भसना वर्त्मना या-
न्क्रव्यादप्रेतभूताद्यभिलषितपुषा प्रीतकापालिकेन ।
कङ्कालैः कालधौतं गिरिमिव कुरुते या स्वकीर्तेर्विहर्तुं
घृष्णिः सांदृष्टिकं वः सकलमुपनयत्वायुधाग्रेसरस्य ॥ २२ ॥

समरभुवि संगररङ्गे सपत्नाञ्शत्रून्दाहं दाहं दग्ध्वा दग्ध्वा लसद्भस्मना, लसद्भिसरद्भस्म भसितं यत्र तत् तेन । क्रव्यादप्रेतभूताद्यभिलषितपुषा प्रेतादिवाञ्छितपोषकेण । प्रीतास्तुष्टाः कापालिका यत्र तेन वर्त्मना मार्गेण यान् गच्छन् यो घृष्णिः स्वकीर्तेर्विहर्तुं यशःसंचाराय कङ्कालैरस्थिविशेषैः कालधौतं स्वर्णकृतं गिरिमिव कुरुते । 'कालकूटं गिरिं' इति वा पाठः । आयुधाग्रेसरस्य चक्रस्य स घृष्णिर्ज्वाला वः सकलं सांदृष्टिकं सद्यःकालिकं फलमुपनयतु प्रापयतु ॥

दग्धानां दानवानां सभसितनिचयरस्थिभिः सर्वशुभ्रां
पृथ्वीं कृत्वापि भूयो नवरुधिरझरीकौतुकं कौणपेभ्यः ।
कुर्वाणं बाष्पपूरैः कुचतटघुसृणक्षालनैस्तद्वधूनां
पापं पापच्यमानं शमयतु भवतामस्त्रराजस्य तेजः ॥ २३ ॥

दग्धानां दाहं प्रापितानां दानवानां सभसितनिचयैर्भस्मसमूहसहितैरस्थिभिः करणभूतैरतिविस्तृतां वसुधां सर्वशुभ्रां कृत्वा भूयः पुनरपि तद्वधूनां दानवीनां कुचतटघुसृणक्षालनैः कुचतटेष्वनुलिप्तकुङ्कुमरसस्य क्षालनं येषां तैः । प्रक्षालितकुचविन्यस्तकुङ्कुमद्रवैरित्यर्थः । बाष्पपूरैरश्रुप्रवाहैः । 'क्षालनात्' इति वा पाठः । कुचतटघुसृणक्षालनं बाष्पपूराणां नवरुधिरझरीसाम्यहेतुः । कौणपेभ्यः पिशाचेभ्यो नवरुधिरझरीकौतुकं नूतनरक्तप्रवाहकुतूहलं कुर्वाणं विदधत् अस्त्रराजस्य चक्रस्य तेजः पापच्यमानं परितः परिपक्वं पापं शमयतु ॥

मा गान्मोपं ललाटानल इति मदनद्वेषिणा ध्यायतेव
स्रष्ट्रा प्रोन्निद्रवासाम्बुजदलपटलप्लोषमुत्पश्यतेव ।
वज्राग्निर्मा स नाशं व्रजदिति चकितेनेव शक्रेण वद्धैः
स्तोत्रैरस्त्रेश्वरस्य द्यतु दुरितशतं द्योतमाना द्युतिर्वः ॥ २४ ॥

(इति ज्वालावर्णनम्)

ललाटानलो मस्तकनेत्रवह्निर्मोष्मपह्नुति मा गादिति ध्यायतेव मदनद्वेषिणा रुद्रेण, प्रोन्निद्रबालाम्बुजदलपटलक्षेपं बालायाम्बुजं बालाम्बुजं विकसितबालपद्मदलसमूहदाहमुत्पश्यता विचारयतेव स्रष्टा विधात्रा, वज्राग्निः कुलिशानलो नाशं मा स्म भजादिति चकितेनेव शक्रेणेन्द्रेण षड्गुनिबन्धनरूपेण प्रथितैः स्तोत्रैर्योतमाना प्रकाशमाना भवेश्वरस्य चक्रपुंलो द्युतिर्वो दुरितानि धतु खण्डयतु ॥ इति चक्रज्वालावर्णनम् ॥

शस्त्राखं शात्रवाणां शलभकुलमिव ज्वालया लेलिहाना
घोषैः स्वैः क्षोभयन्ती विघटितभगवद्योगनिद्रान्समुद्रान् ।
व्यूढोरःप्रौढचारत्रुटितपटुरटत्कीकसक्षुण्णदैत्या
नेमिः सौदर्शनी वः श्रियमतिशयिनीं दाशतादा शताब्दम् ॥२५॥

शात्रवाणां रिपूणां शस्त्राखं शस्त्राण्यमन्त्रकाणि अस्त्राणि समन्त्रकाणि शस्त्रार्थं शलभकुलमिव शलभसमूहमिव ज्वालया परितः परिवृत्त्या घूर्णमानया प्रभापरम्परया लेलिहाना आस्वादयन्ती । दग्धीकुर्वतीत्यर्थः । स्वैर्घोषैः स्वीयैरारावैर्विघटितभगवद्योगनिद्रान् विघटिता विघ्निता भगवतो विष्णोर्योगनिद्रा स्वात्मानुभूतिर्यैस्तान्समुद्रान् क्षोभयन्ती आविलयन्ती । भगवदपचारासहिष्णुत्वेन प्रक्षोभितप्रत्ययसमयजलधरघोषेण विलोडयन्तीत्यर्थः । व्यूढेति । व्यूढेषु विशालेषु उरःसु भुजान्तरेषु प्रौढः क्रूरतरश्चारः परिभ्रमणं······येयनचतुरसंचारस्तेन त्रुटितान्यत एव पटु स्फुटं यथा भवति तथा रटन्ति ध्वनन्ति कीकसान्यस्थीनि येषां ते व्यूढोरःप्रौढचारत्रुटितपटुरटत्कीकसाः अत एव क्षुण्णाः क्षोदं प्रापिता दैत्या यया सा । अथवा भञ्जनसंजातचिटचिटायमानपटुरटत्कीकसाः क्षुण्णा दैत्या यया सा सौदर्शनी सुदर्शनचक्रसंबन्धिनी नेमिः प्रधिर्वोऽतिशयिनीमतिशयवतीं श्रियं आ शताब्दं यावद्ब्रह्मस्वरूपं दाशताद्दद्यात् । शताब्दशब्दो ब्रह्मवाचकतया वार्तिककारेणोक्तः—'सत्य ज्ञानमयानन्दमनन्तं परमाद्भुतम् । शताब्दसंज्ञकं—' इति । अथवा आ शताब्दं शतवर्षपर्यन्तम् । यावज्जीवमित्यर्थः । 'दाश्र दाने' इति धातोर्दाशतादिति ॥

धारा चक्रस्य तारागणकपिशघृणिद्योतितद्युप्रचारा
पारावाराम्बुपूरक्वथनपिशुनितोत्तालपातालयात्रा ।
गोत्राद्रिस्फोटशब्दप्रकटितवसुधामण्डलीचण्डयाना
पन्थानं वः प्रदिश्यात्प्रशमनकुशला पाप्मनामात्मनीनम् ॥ २६ ॥

तारागणकपिशघृणिद्योतितद्युप्रचारा तारागणानां कपिशाः पिङ्गलवर्णा घृणयः किरणास्तैर्द्योतितः स्फुटीकृतो दिवि प्रचारः संचारो यस्याः सा । यद्वा ('तारागणकणकपिशघृणिद्योतित—' इति पाठे) तारागणा एव कणा लेशास्तेषां वितनवः समूहास्तान्निर्द्योतितो द्युप्रचारो यस्याः सा । विलीनप्रकाशतया तारागणाः कणा इव म्लायमाना न प्रदीप्यन्ते । तस्य-

नेमेर्दिवि निर्गलप्रचारः प्रकाशितः । पारावाराम्बुपूरक्कथनपिशुनितोत्तालपातालयात्रा पारावारः समुद्रस्तस्याम्बुपूरो जलसमृद्धिस्तस्याः क्कथनेन संजातस्तोकस्तोकायमानध्वनितेन पिशुनिता सूचिता उत्ताला निरङ्कुशा पातालमुद्दिश्य प्रवृत्ता यात्रा गमनं यस्याः सा । गोत्राद्रिस्फोटशब्दप्रकटितवसुधामण्डलीचण्डयाना गोत्राद्रिः कुलाचलस्तस्य स्फोटः स्फुटनसंजातशब्दस्तेन प्रकटितं वसुधामण्डलीचण्डं सर्वजगद्भयंकरं यानं गमनं यस्याः सा । पाप्मनां पापानां प्रशमनकुशला ध्वंसनपटीयसी चक्रस्य धारा नेमिरात्मनीनमात्महितं पन्थानं मार्गं प्रदिश्यादितरतु ॥

यात्रा या त्रातलोका प्रकटितवरुणत्रासमुद्रे समुद्रे
सत्त्वासत्त्वासहोष्मा कृतसगरुदगस्पन्ददानाददाना ।
हानिं हा निन्दितानां जगति परिषदां दानवीनां नवीनां
चक्रे चक्रेशनेमिः शममुपहरतात्सप्रभावप्रभा वः ॥ २७ ॥

त्रातलोका त्राता रक्षिता लोका भुवनानि यया सा । प्रकटितवरुणत्रासमुद्रे प्रकटिता व्यञ्जिता वरुणस्य पश्चिमदिगीश्वरस्य त्रासो भयमेव मुद्रा भयप्रकाशकावस्थाविशेषो येन स तस्मिन्समुद्रे यात्रा गमनान्यादनाना स्वीकुर्वती । सत्त्वासत्त्वासहोष्मा जन्त्वजन्त्वसह्यप्रतापा । कृतसगरुदगस्पन्ददाना सगरुतः सपक्षाश्च तेऽगाः पर्वताश्च तेषां स्पन्दं चलनं तस्य दानं वितरणं कृतं सगरुदगस्पन्ददानं यया सा नेमिर्जगति लोके निन्दितानां निन्दाविषयत्वेन सत्पुरुषपरिषत्परित्यक्तानां दानवीनां दानवसंबन्धिनीनां परिषदां समूहानां नवीनां नूतनां हानिं विचित्रनाशं चक्रे चकार । हा खेदे चाद्भुते च । अविवर्गस्य वधेऽपि विचित्रतादर्शनेन खेदो जायते । विचित्रदर्शनमेवाश्चर्यनिमित्तम् । सप्रभावा प्रभावयुक्ता प्रभा यस्याः सा चक्रेशनेमिश्चक्रप्रधिर्वः शममात्मगुणसंपत्तिमुपहरतात्संपादयतु । समर्पयत्वित्यर्थः ॥

यत्रामित्रान्दिधक्षौ प्रविशति बलिनो धाम निःसीमधाम्नि
प्रस्तापस्तापशीर्णैः प्रगुणितसिकतो मौक्तिकैः शौक्तिकेयैः ।
राशिर्वारामपारां प्रकटयति पुनर्वैरिदाराश्रुपूरै-
र्वृद्धिं निर्याति निर्यापयतु स दुरितान्यस्त्रराजप्रधिर्वः ॥ २८ ॥

निःसीमधाम्नि निरवधिकतेजसि यस्मिन्प्रधौ अमित्रान्रिपुभूतान्पातालवासिनो दैत्यादीन्दिधक्षौ दग्धुमिच्छौ बलिनो धाम रसातलं प्रविशति सति प्रस्तापः प्रपीताम्बुपूरः । समासान्तप्रत्ययः । शौक्तिकेयैः शुक्तिकासंजातैः मौक्तिकैर्मुक्ताफलैः प्रगुणितसिकतः प्रगुणीकृतसिकतः वारांराशिः समुद्रः प्रधौ तत्रत्यान्दानवान्निर्दग्ध्वा पुनर्निर्याति गच्छति सति वैरिदाराश्रुपूरैर्भर्तृमरणजनितशत्रुस्त्रीनेत्रजलैः पुनरपारां निःसीमां वृद्धिं प्रकटयति प्रकाशयति सोऽस्त्रराजप्रधिर्वो दुरितानि निर्यापयतु । निष्कासयत्वित्यर्थः ॥

कक्षातौल्येन कद्रूतनयफणमणीन्कल्यदीपस्य युञ्ज-
न्पातालान्तः प्रतापी निखिलमपि तमः स्वेन धाम्ना निगीर्य।
दैतेयप्रेयसीनां वमति हृदि हतप्रेयसां भूयसां य-
श्चक्राग्रीयाग्रदेशो दहतु विलसितं भूयसामंहसां वः॥ २९॥

यश्चक्रप्रधिः पातालान्तःप्रतापी पातालमध्यदेशप्रतपनशीलः स्वेन धाम्ना स्वकीयेन तेजसा निखिलमपि तमो निगीर्य गिलित्वा। निर्मूलयित्वेत्यर्थः। अपिशब्दात्पूर्वं पातालस्थरत्नौषधिकान्तिभिस्तत्र तत्र स्थित तमो निरस्त न तु निखिलमित्यर्थः। कद्रूतनयफणमणीन् फणिफणास्थितमणीन् कल्यदीपस्य (प्राभातिकदीपस्य) कक्ष्यातौल्येन दीपशिखासादृश्येन युञ्जन् योजयन् प्रापयन् हतप्रेयसां हतप्रियाणां दैतेयप्रेयसीनामसुरसुन्दरीणां हृदि मानसे वमति प्रथम निगीर्ण तमः पुनरुद्गिरति असौ चक्राग्रीयाग्रदेशश्चक्रश्रेष्ठाग्रदेशः प्रधिर्वो भूयसामंहसां पापानां विलसित निःसंकुचितं संचारं बहु यथा भवति तथा दहतु भस्मीकरोतु। निर्मूलयत्वित्यर्थः॥

कृष्णाम्भोदस्य भूषा कृतनयननयव्याहतिर्भार्गवस्य
प्राप्तामावेदयन्ती प्रतिभटसुदृशामुद्धतां बाष्पवृष्टिम्।
निष्टप्ताष्टापदश्रीः सममरचमूगर्जितैरुज्जिहाना
कीर्तिं वः केतकीभिः प्रथयतु सदृशीं चञ्चला चक्रधारा॥ ३०॥

कृष्णाम्भोदः श्रीरङ्गनाथजलधरस्तस्य भूषा भूषणम् भार्गवस्य शुक्रस्य परशुरामस्य च कृता नयननयव्याहतिर्यया सा प्रतिभटसुदृशां शत्रुसुन्दरीणां बाष्पवृष्टिमश्रुवृष्टिं प्राप्तामासन्नामावेदयन्ती निष्टप्ताष्टापदश्रीस्तप्तकाञ्चनस्य श्रीः शोभेव शोभा यस्याः सा अमरचमूगर्जितैर्देवसेनाकृतसिंहनादैः समं सार्धमुज्जिहाना स्फुरन्ती चक्रधारा सुदर्शननेमिरतिचपला केतकीभिः केतकीकुसुमैः सदृशीं वः कीर्तिं प्रथयतु प्रकटयतु। चञ्चला विद्युदपि नीलनीरदभूषा निखिलजननयनमुकुलकारित्वाद्भार्गवनयननयमपि मुकुलयति स्फुरणेन महतीं वृष्टिं सूचयति तप्तकाञ्चनकमनीया च स्तनितैः संस्फुरति च॥

वप्राणां भेदिनीं यः परिणतिमखिलश्लाघनीयां दधानः
क्षुण्णां नक्षत्रमालां दिशि दिशि विकिरन्विद्युता तुल्यकक्षः।
निर्याणेनोत्कटेन प्रकटयति नवं दानवारिप्रकर्षं
चक्राधीशस्य भद्रो वशयतु भवतां स प्रधिश्चित्तवृत्तिम्॥ ३१॥

वप्राणां प्राकाराणाम्। वप्रघटितशरीराणां प्रत्यागम्य स्थितानां शत्रूणामित्यर्थः। भेदिनीं भेदयित्रीमखिलश्लाघनीयां परिणतिं परमपुरुषरूपतां विहाय आच्छाद्य चक्राकाररूपताप्राप्तिपरिणतिं दधानः। यद्वा अखिलश्लाघ्यामुद्धतानामरातीनां भेदिनीं परितो न-

श्रतां दधानश्चक्रप्रधिः परितो नम्र एव स्थितः । लोके महानेव नम्रश्चेत् श्लाघ्यतरो भवति अनम्रान्नम्रयति च । क्षुण्णां चूर्णितां नक्षत्रमालां नक्षत्रपङ्क्तिं दिशि दिशि विकिरन् तत्र तत्र विक्षिपन् विद्युता तडिता तुल्यकक्षास्तुल्यद्वारस्तडित्तुल्यन्यायः । तडित्सदृश इत्यर्थः । अथवा तडिता तुल्या कक्ष्या नेमेश्चलत्प्रदेशो यस्य स यः प्रधिरुत्कटेन निरतिशयवेगेन निर्याणेन गमनेन नवं दानवारिप्रकर्षं श्रीरङ्गेशस्याघटमानघटकत्वं अथवा देवप्रकर्षं प्रकटयति व्यक्तीकरोति चक्राधीशस्य स भद्रः कल्याणः प्रधिर्भवतां चित्तवृत्तिं चेतसो निरङ्कुशव्यापारं वशयतु । भद्रो गजश्च कूटतटविपाटनपटीयसीमखिलश्लाघ्यां परिणतिं तिर्यग्दन्तप्रहृतिं दधानः औद्धत्येन चूर्णितां सप्तविंशतिमौक्तिकविरचितहारविशेषरूपां नक्षत्रमालां सर्वत्र विकिरन् तडित्समानबन्धनरज्जुरुत्कटेन स्थूलतरेण निर्याणेनापाङ्गदेशेन नूतनं दानवारिप्रकर्षं मदजलातिशयं प्रकटयति चित्तवृत्तिं वशाधीनां करोति चक्रेशस्य महाराजस्य सकाशे तिष्ठति ॥

नाकौकःशत्रुजत्रुत्रुटनविघटितस्कन्धनीरन्ध्रनिर्य-
न्नव्यक्रव्यास्रहव्यग्रसनरसलसज्ज्वालजिह्वालवह्निम् ।
यं दृष्ट्वा सांयुगीनं पुनरपि विदधत्याशिषो वीर्यवृद्ध्यै
गीर्वाणा निर्वृणाना वितरतु स जयं विष्णुहेतिप्रधिर्वः ॥ ३२ ॥

पूर्वार्धमेकं पदम् । नाकः स्वर्ग ओकः स्थानं येषां देवानां तेषां शत्रवोऽसुरास्तेषां जत्रूण्यङ्गविशेषास्तेषां त्रुटनं छेद इत्यर्थः। तेन विघटिता वियोजिता विरूपिताश्च ते स्कन्धाश्च तेभ्यो नीरन्ध्रनिर्यत् निरर्गलविनिर्गच्छत् । नव्यं क्रव्यास्रं मांसशोणित तदेव हव्यं हवनयोग्यं द्रव्यं तस्य ग्रसनं भक्षणं तस्मिन् रसो रागः । प्रीतिरित्यर्थः । तेन लसन्तोऽहमहमिकया नृत्यन्तस्ते च ते ज्वालाश्च त एव जिह्वा अस्य सन्तीति तथा लसज्ज्वालजिह्वालो वह्निर्यस्य स तं सांयुगीनं सयुगे साधुं यं प्रधिं दृष्ट्वा निर्वृणानाः प्रहृष्टा गीर्वाणाः पुनरपि वीर्यवृद्ध्यै स्वतः प्रवृद्धस्य चक्रप्रधेः स्वभक्त्यतिशयेन पीनःपुन्येन वीर्यसमृद्धये आशिषः सद्यः फलनाशीर्वादान्विदधति कुर्वन्ति स तादृशो विष्णुहेतिप्रधिर्भवतां विजयं वितरतु ॥

धन्वाध्वन्यस्य धारासलिलमिव धनं दुर्गतस्येव दृष्टि-
र्जात्यन्धस्येव पङ्गोः पदविहृतिरिव प्रीणनी प्रेमभाजाम् ।
पत्युर्मायाः क्रियायां प्रकटपरिणतिर्विश्वरक्षाक्षमायां
मायामायामिनीं वस्त्रुटयतु महती नेमिरब्जेश्वरस्य ॥ ३३ ॥

धन्वनि मरुभूमावध्वन्यस्य अध्वगस्य धारासलिलं प्रवाहजलमिव अथवा वर्षज्जलधराविनिर्गलत्सलिलपटलमिव, दुर्गतस्य दरिद्रस्य धनं निधिजातमिव, जात्यन्धस्य दृष्टिर्धिशददर्शनमिव, पङ्गोः पदविहृतिः पदन्यास इव, प्रेमभाजां भक्तानां प्रीणनी प्रीति-

जननी । आनन्दकरीत्यर्थः । विश्वरक्षक्षमायां सकलजनरक्षणपटीयस्यां मायया क्रियायां प्रकृतिं विशदीकृत्य संजातक्रियायां बहुस्यां प्रजायेय इति संजातो भगवतः संकल्पविशेषः मायाः पत्युः श्रीरहेशस्य प्रकटपरिणतिर्व्यक्तपरिणामः । ईश्वराकारेण परिणमतीत्यर्थः । ईश्वरपरिणामदशा सती महती महत्तरा अद्धाधिपस्य चक्रेशस्य नेमिर्वे आयामिनीं दीर्घामविच्छिन्नामविद्यां त्रुटयतु विच्छेदयतु ॥

त्राणं या विष्टपानां वितरति च यया कल्पते कामपूर्ति-
र्न स्थातुं यत्पुरस्तात्प्रभवति कलयाप्यौषधीनामधीशः ।
उन्मेषो याति यस्या न समयनियतिं सा श्रियं वः प्रदेया-
न्यक्कृत्य द्योतमाना त्रिपुरहरदृशं नेमिरद्वेश्वरस्य ॥ ३४ ॥

या चक्रनेमिर्जगतां त्राणं ददाति । अनुक्तसमुच्चयार्थश्चकारो जननसंहारावाकर्षति । तथा सति नेमिदर्पत्यादि ददातीत्यर्थः । यया कामपूर्तिश्च कल्प्यते समर्थ्यते । चकारात्स्वर्गादि । त्रिपुरहरदृशा तु कामसंहार एव समर्थितो न तु कामपूरणादि । यत्पुरस्तान्नेमेः पुरोभागे चन्द्रः कलयाप्यल्पकालेनापि यद्वा षोडशांशेनापि स्थातुं न प्रभवति । हरलोचनसमीपे चन्द्रः कलया स्थातुं प्रभवति । यस्यानेमे उन्मेषो विजृम्भणं समयनियतिं अस्मिन्नेव काले विजृम्भते नान्यस्मिन्निति कालनियतिं न याति । नेमिविजृम्भणस्याकालकाल्यत्वात् । हरनयनं तु संहारकाल एव विजृम्भते नान्यस्मिन् । तत्त्रिपुरहरदृशं न्यक्कृत्य द्योतमाना चक्रनेमिर्वः श्रियं प्रदद्यात् ॥

नक्षत्रक्षोदभूतिप्रकरविकिरणश्वेतिताशावकाशा
जीर्णैः पर्णैरिव द्यां जलधरपटलैश्चूर्णितैरूर्णुवाना ।
आजावाजानवाजानतरिपुजनतारण्यमावर्तमाना
नेमिर्वात्येव चाक्री प्रणुदतु भवतां संहतं पापतूलम् ॥ ३५ ॥

नक्षत्रक्षोदभूतिप्रकरविकिरणश्वेतिताशावकाशा स्वीयधाराघोरविघटनक्षुण्णानां नक्षत्राणां क्षोदश्चूर्णं स एव भूतिस्तस्याः प्रकरः समूहस्तस्य विकिरणं विक्षेपस्तेन श्वेतिता धवलीकृता आशावकाशा दिगन्तरालानि यया सा । जीर्णैः पर्णैरिव गलद्भिः पाण्डुरैः पुराणैः पत्रैरिव चूर्णितैर्वेगाद् शकलितैर्जलधरपटलैर्व्योमाकाशमूर्णुवाना । आच्छादयन्तीत्यर्थः । वात्या च विक्रियासरम्भोत्क्षिप्तैर्निरर्गलगलद्दलैराकाशमावृणुते । आजौ रणाङ्गणे आजानवाजेन आजन्मसिद्धेन वाजेन वेगेन आनता प्रह्वीकृता रिपुजनता शत्रुसमूहः सैवारण्यं विपिनं तदुद्दिश्य आवर्तमाना । 'अरण्यमावर्तयन्ती' इति पाठे अरण्यं भ्रमयन्ती । चाक्री नेमिर्वात्येव चक्राकारचङ्क्रमणसमीरणसमूह इव । वातमण्डली वेति यावत् । भवतां संहतं संघीभूतं पापतूलं प्रणुदतु ॥

क्षिप्त्वा नेपथ्यशाटीमिव जलदघटां जिष्णुकोदण्डचित्रां
तारापुञ्जं प्रसूनाञ्जलिमिव विपुले व्योमरङ्गे विकीर्य ।

निर्वेदग्लानिचिन्ताप्रभृतिपरवशानन्तरा दानवेन्द्रा-
न्नृत्यन्नानालयाढ्यं नट इव तनुतां शर्म चक्रप्रधिर्वः ॥ ३६ ॥

जिष्णुकोदण्डचित्रामिन्द्रधनुर्वेन्नानावर्णा जलदघटां कादम्बिनीं नेपथ्यशाटीमिव नाट्यमण्डपविस्तारितविचित्रजवनिकामिव क्षिप्त्वा निरस्य । आकाशरङ्गस्थलं पटीक्षेपेण प्रविश्येत्यर्थः । विपुले विशाले व्योमरङ्गे आकाशरङ्गस्थले तारापुञ्जं नक्षत्रसमूहं प्रसूनाञ्जलिमिव पात्रप्रवेशसमयसमर्पणीयपुष्पाञ्जलिमिव विकीर्य विक्षिप्य निर्वेदग्लानिशङ्काप्रभृतिपरवशानन्तरा दानवेन्द्रान् निर्वेदो विषादः । ग्लानिर्म्लानिः । वैवर्ण्यमित्यर्थः । चिन्ता विचारः । एतदादिभिर्भावैः परवशान्विवशान् दानवेन्द्रान् अन्तरा मध्ये । अन्तरायोगे दानवेन्द्रानिति द्वितीया । तत्र दानवेन्द्राणां मध्य इत्यर्थः । नानालयाढ्यं शिरःकृन्तनमध्यलुण्ठनबाहुखण्डनवक्षःकुट्टनचरणनिरसनप्रमुखानेकसहारैः प्रसिद्धं यथा भवति तथा नट इव नृत्यन् बहुधा विलसन् चक्रप्रधिः शर्म तनुतां बहुलयतु । नटोऽपि पटीक्षेपेण रङ्गं प्रविश्य पुष्पाञ्जलिं विकीर्य निर्वेदग्लानिचिन्ताप्रभृतिभावानासाद्य शृङ्गारादिरसविलसत्सामाजिकमध्ये नानालयाढ्यं नृत्यति ॥

दौर्गत्यप्रौढतापप्रतिभटविभवा वित्तधाराः सृजन्ती
गर्जन्ती चीत्क्रियाभिर्ज्वलदनलशिखोद्दामसौदामनीका ।
अव्यात्क्रव्याद्वधूटीनयनजलभरैर्दिक्षु नव्याननाव्या-
न्पुष्पन्ती सिन्धुपूरान्रथचरणपतेर्नेमिकादम्बिनी वः ॥ ३७ ॥

दौर्गत्यप्रौढतापप्रतिभटविभवा दौर्गत्येन दारिद्र्येण संजातः प्रौढतापो निरतिशयदुःखं तस्य प्रतिभटो विनाशको विभवः समृद्धिर्यासां ताः वित्तधारा धनधान्यादिवृष्टीर्मुञ्चन्ती सृजन्ती चीत्क्रियाभिर्ध्वनिविशेषैर्गर्जन्ती स्तनितानि कुर्वतीत्यर्थः । ज्वलदनलशिखोद्दामसौदामनीका । ज्वलन्त्यः स्फुरन्त्यश्च ता अनलशिखा अग्निज्वालाश्च ता एवोद्दामसौदामन्यो विजृम्भमाणविद्युल्लता यस्याः सा । क्रव्याद्वधूटीनयनजलभरैः स्वभर्तृप्राणापहारदुःखितराक्षसमहिषीबाष्पसमृद्धिभिर्नव्यान्नवीनान् अनाव्यान् नौभिस्तारयितुमयोग्यान्सिन्धुपूरान्नदीप्रवाहान् दिक्षु सर्वाशासु पुष्पन्ती, प्रवर्धयन्ती रथचरणपतेः सुदर्शनस्य नेमिकादम्बिनी प्रधिपयोदपङ्क्तिर्वो युष्मानव्यात् ॥

संदोहं दानवानामजस्रमजमिवालभ्य जाज्वल्यमाने
वह्नावह्नाय जुह्वत्रिदशपरिषदे स्वस्वभागप्रदायी ।
स्तोत्रैर्ब्रह्मादिगीतैर्मुखरपरिसरं श्लाघ्यशस्त्रप्रयोगं
प्राप्तः सङ्ग्रामसत्रं प्रधिरसुरारिपोः प्रार्थितं प्रस्तुतां वः ॥ ३८ ॥

(इति नेमिवर्णनम्)

ब्रह्मादिगीतैर्ब्रह्मोद्गात्रप्रभृतिभिः स्तोत्रैर्मन्त्रविशेषैर्ब्रह्मरुद्रादिदेववर्गप्रणीतैर्नानास्तोत्रैर्मुस्वरपरिसरं शब्दितपर्यन्तभूमिं श्लाघ्यशस्त्रप्रयोग शस्त्राणां प्रयोगः साधन श्लाघयितु योग्यः शस्त्रप्रयोगो यस्य तत् संग्रामसत्रं युद्धयागं प्राप्तः अजस्रमजामिव च्छागसमूहमिव दानवानां संदोहमालभ्य विशस्य जाज्वल्यमाने नैरन्तर्येण प्रकाशमाने वहावहाय शीघ्रं जुह्वत्, हवन विदधत् त्रिदशपरिषदे देवसमूहाय स्वस्वभागप्रदायी स्वस्वांशदाता । स्वव्यापारेण दैत्यवृन्द निहत्य तच्छरीराणि स्वानलज्वालयादहनदग्धानि दैत्यशरीराणि प्रीतिहेतोर्देवपरिषदे अयं भवच्छत्रुरयं भवच्छत्रुरिति प्रदर्शयतीत्यर्थः । असुररिपोश्चक्रस्य प्रधिर्नेमिर्वः प्रार्थितं प्रस्नुताम् । 'स्नु प्रस्रवणे' । प्रददात्वित्यर्थः ॥ इति नेमिवर्णनम् ॥

उत्पातालातकल्पान्यसुरपरिषदामाहवप्रार्थिनीना-
मध्वानध्वावबोधक्षपणचणतमःक्षेपदीपोपमानि ।
त्रैलोक्यागारभारोद्वहनसहमणिस्तम्भसंपत्सखानि
त्रायन्तामन्तिमायां विपदि सपदि वोऽराणि सौदर्शनानि ॥ ३९ ॥

आहवप्रार्थिनीनां युद्धमहोत्सुकानामसुरपरिषदां दैत्यवृन्दानां उत्पातालातकल्पानि दैत्यनाशकालोद्भूतोल्मुकतुल्यानि । अध्वेति । अध्वा चानध्वा चाध्वानध्वानौ तयोरवबोधः । अयं मार्गोऽयममार्ग इति मार्गामार्गज्ञानं तस्य क्षपणचण निरसनसमर्थं तच्च तत्तमश्च तस्य क्षेपः प्रध्वंसस्तस्मिन्दीपैरुपमान सादृश्य येषां तानि । त्रैलोक्येति । त्रैलोक्यमेवागार मन्दिर तस्य भारो गौरव तस्योद्वहनं तत्सहन्ते इति सहास्ते च मणिस्तम्भास्तेषां संपत्समृद्धिस्तस्याः सखायः । एवभूतानि सौदर्शनान्यराणि वोऽन्तिमायां विपदि निरतिशयापदि मरणे वा सपदि सद्यस्त्रायन्तां रक्षन्तु ॥

ज्वालाजालप्रवालस्तबकितशिरसो नाभिमावालयन्त्यः
सिक्ता रक्ताम्बुपूरैः शकलितवपुषां शात्रवानीकिनीनाम् ।
चक्राक्रीडप्ररूढा भुजगशयभुजोपघ्ननिघ्नप्रचाराः
पुष्प्यन्त्यः कीर्तिपुष्पाण्यरकनकलताः प्रीतये वः प्रथन्ताम् ॥ ४० ॥

चक्राक्रीडप्ररूढाः चक्रमेवाक्रीड उद्यान तस्मिन्प्ररूढा जाताः नाभिपिण्डिकामावालयन्त्य आलवाल कुर्वत्यः शकलितवपुषां खण्डितशरीराणां शात्रवानीकिनीनां शत्रुसेनानां रक्ताम्बुपूरैं रुधिरप्रवाहैः सिक्ता अभ्युक्षिताः । भुजगेति । भुजगशयः श्रीरङ्गेशस्तस्य भुजो वामेतरः करः स एवोपघ्न आश्रयदण्डस्तस्य निघ्नोऽधीनः प्रचारः संचारो यासां ताः । ज्वालेति । ज्वालाजालान्येव प्रवालानि तैः स्तबकितानि सजातस्तबकानि शिरांस्यग्राणि यासां ताः । कीर्तिपुष्पाणि पुष्प्यन्त्यो विकासयन्त्यः । 'पुष्प विकसने' इति धातुः शत्रन्तः । अरकनकलता अराण्येव स्वर्णलता वः प्रीतये प्रथन्तां प्रवर्धन्ताम् ॥

ज्वालाजालाब्धिमुद्रं क्षितिवलयमिवाबिभ्रती नेमिचक्रं
नागेन्द्रस्येव नाभेः फणपरिषदिव प्रौढरत्नप्रकाशा ।
दत्तां वो दिव्यहेतेर्मतिमरविततिः ख्यातसाहस्रसंख्या
संख्यावत्संघचित्तश्रवणहरगुणस्यन्दिसंदर्भगर्भाम् ॥ ४१ ॥

अनेनाराणां शेषफणामण्डलसाधर्म्यं प्रतिपाद्यते । ज्वालाजालाब्धिमुद्रं ज्वालाजालान्येवाब्धयः समुद्रास्त एव मुद्रा सीमचिह्नं यस्य तत् नेमिचक्रं पृथ्वीवलयमिवाबिभ्रती दधती । शेषफणाश्च समुद्रपरिवृतं भूमण्डलं बिभ्रति । नागेन्द्रस्येव नाभेः पिण्डिकायाः । नाभिः कुण्डलितनागेन्द्र इव स्थित इत्यर्थः । फणपरिषदिव फणसमूह इव स्थिता । ख्यातसाहस्रसंख्या ख्याता प्रसिद्धा साहस्रं सहस्रं सख्या यस्याः सा । फणाश्च सहस्रसंख्याः सुदर्शनाराणि सहस्रसंख्याकानि । किं च प्रौढरत्नप्रकाशा प्रौढः प्रसिद्धो रत्नानां प्रकाशो यस्याः सा । दिव्यहेतेश्चक्रस्यारविततिर्वो युष्माकं संख्यावत्संघचेतःश्रवणहरगुणस्यन्दिसंदर्भगर्भां संख्यावत्समूहः पण्डितसमूहस्तस्य चित्तं श्रवणं च हरन्ति आनन्दयन्तीति चित्तश्रवणहरास्ते च ते गुणाश्चार्थगुणाश्चित्तहराः शब्दगुणाः श्रवणहरास्तान् स्यन्दते इति स्यन्दी स चासौ संदर्भोऽर्थप्रथनं शब्दप्रथनं च स एव गर्भे यस्याः सा तां मतिं दत्तां दिश्यात् । रसिकजनश्रवणमनोहरगुणसुधास्यन्दसंदोहसुन्दरां मतिं वितरत्वित्यर्थः ॥

ब्रह्मेशोपक्रमाणां बहुविधविमतक्षोदसंमोदितानां
सेवायै देवतानां दनुजकुलरिपोः पिण्डिकाद्यङ्गभाजाम् ।
तत्तद्धामान्तसीमाविभजनविधये मानदण्डायमाना
भूमानं भूयसां वो दिशतु दशशती भास्वराणामराणाम् ॥ ४२ ॥

बहुविधविमतक्षोदसंमोदितानां बहुविधशत्रुनिहननेन संमोदिता हर्षं प्रापितास्तासाम् । तत एव दनुजकुलरिपोः सुदर्शनस्य सेवायै पिण्डिकाद्यङ्गभाजां नाभिप्रभृत्यङ्गानि भजन्तीति पिण्डिकाद्यङ्गभाजस्तासाम् । ब्रह्मेशोपक्रमाणां देवतानां तत्तद्धामान्तसीमाविभजनविधये एतदवधिकं चतुर्मुखस्थानमेतदवधिकं पञ्चमुखस्थानमेतत्सीमाकमिन्द्रस्थानमिति तत्तद्देवस्थानसीमानिर्णयायेत्यर्थः । मानदण्डायमाना मानदण्डवत्स्थिता भास्वराणामराणां दशशती सहस्रं वो भूमानं महत्त्वम् । आधिक्यमिति यावत् । दिशतु । निरतिशयमहिमानं ददात्वित्यर्थः ॥

ज्वालाकल्लोलमालानिबिडपरिसरां नेमिवेलां दधाने
पूर्वेणाक्रान्तमध्ये भुवनमयहविर्भोजिना पूरुषेण ।
प्रस्फूर्जत्प्राज्यरत्ने रथपदजलधावेधमानैः स्फुलिङ्गै-
र्भद्रं वो विद्रुमाणां श्रियमरविततिर्विस्तृणाना विधत्ताम् ॥ ४३ ॥

ज्वालाकल्लोलमालानिबिडपरिसरां ज्वाला एव तरङ्गास्तासां माला: पङ्क्तयस्ताभिर्निबिडो नीरन्ध्रः परिसरः संनिहितप्रदेशो यस्याः सा ताम् । नेमिवेलां समुद्रोद्वेलनवारकसेतुर्नेमिरेव वेला नेमिवेला तां दधाने । भुवनमयद्दविर्भोजिना जगन्मयं जलमयं वा हविर्भुङ् इति तथाभूतेन पुरुषेण सुदर्शनेन भगवता वा आक्रान्तमध्येऽधिष्ठितमध्यभागे । प्रस्फूर्जताज्ज्वल्ले प्रकाशमानप्रकृष्टमणौ रथपदजलधौ सुदर्शनसमुद्रे अरावितातिः एधमानैरुत्तरोत्तरं वर्धमानैः स्फुलिङ्गैर्विद्रुमाणां प्रवालखण्डानां श्रियं शोभां विलक्षणानां विस्तारयन्ती सती वो भद्रं विधत्तां करोतु ॥

नासीरस्वैरभग्नप्रतिभटरुधिरासारधारावसेका-
नेकान्तस्मेरपद्मप्रकरसहचरच्छायया प्राप्य नाम्या ।
मुक्तानीवाङ्कुराणि स्फुरदनलशिखादर्शितप्राक्प्रवाला-
न्यव्याघातेन भव्यं प्रददतु भवतां दिव्यहेतेरराणि ॥ ४४ ॥

नासीराः सेनाग्रधाविनस्त एव स्वैरभग्ना यथेष्टं पलायिताः प्रतिभटाः प्रत्यर्थिभटास्तेषां रुधिरवृष्टिधाराभिः संजाता अवसेकास्तान् प्राप्य । एकान्तेति । एकान्तविकसितपद्माकरस्य सहचरो बन्धुश्छाया कान्तिर्यस्याः सा तया नाभ्या मुक्तानि त्यक्तानि । प्रसूतानीत्यर्थः । अङ्कुराणीव । शोणितवर्षधारावसिक्तनाभ्यालवालस्थितबीजसंभूताङ्कुराणीवावस्थितानि । स्फुरदिति । प्रकाशमानाभिर्ज्वालाभिः प्रकटितानि प्रथमपत्राणि किसलयानि येषां तानि दिव्यहेतेरराणि वोऽव्याघातेन निष्प्रत्यूहेन भव्यं प्रददतु दिशन्तु ॥

दावोल्कामण्डलीव द्रुमगणगहने वाडवस्येव वह्ने-
र्ज्वालावृद्धिर्महाब्धौ प्रचयसि तमसि प्रातरर्कप्रभेव ।
चक्रे या दानवानां हयकरटिघटासंकटे जाघटीति
प्राज्यं सा वः प्रदेयात्पदमरपरिषत्पद्मनाभायुधस्य ॥ ४५ ॥

या सुदर्शनारपरिषद्द्रुमगणगहने द्रुमवृन्दैर्गहने दुष्प्रवेशे वने दावोल्कामण्डली दावाग्निज्वालासमूह इव महाब्धौ वाडवस्य ज्वालावृद्धिरिव प्रचयसि तमसि प्रातरर्कप्रभेव प्रातःप्रवर्धमानसूर्यप्रभेव हयकरटिघटासंकटे तुरगगजघटाभिः सबाधे दानवानां समूहे जाघटीति चेष्टते । 'रारटीति' वा पाठः । पद्मनाभायुधस्य सा तादृशी अरपरिषद्दर्शनकरी वः प्राज्यमुत्कृष्टं पदं दृष्टादृष्टस्वरूपं निरतिशयमैश्वर्यं देयात् । पल्लवितकोरकितकुसुमितफलितवल्लीकामल्लिकाजालवेष्टितसल्लकीभल्लातकीतालतमालसालप्रमुखनानाविधतरुखण्डे जृम्भमाणदहनकरालज्वालाजालमिव, दिव्यरत्नोज्ज्वलसप्तार्णवसलिलभारसंरम्भनिपुणवडवानलदुर्द्युतित (?), प्रभापटलमिव परिणततिमिरपटले प्रभातप्रभाकरप्रभेव, रथतुरगकरटिभटसंकीर्णदानवसैन्ये चेष्टमाना अरविततिर्भवतां महत्तरपदं देयादित्यर्थः ॥

तापाद्दैत्यप्रतापातपसमुपचितात्त्रायमाणं त्रिलोकीं
लोलैर्ज्वालाकलापैः प्रकटयदभितश्छिन्नपट्टाञ्चलानि ।
छत्राकारं शलाका इव कनककृताः शौरिदोर्दण्डलग्नं
भूयासुर्भूषयन्त्यो रथचरणमरस्फूर्तयः कीर्तये वः ॥ ४६ ॥

दैत्यप्रतापातपसमुपचितात्प्रत्यर्थिजनस्यान्तःसंतापकृत्तेजः स एवातपस्तेन समुचिता-त्संवर्धितात् । संपादितादिति यावत् । तापात् त्रिलोकीं त्रायमाणम् । अभितो लोलैर्ज्वा-लाकलापैश्छिन्नपट्टाञ्चलानि आतपत्रं परीत्य प्रलम्बमानसूक्ष्मपट्टाञ्चलानि प्रकटयत् शौरि-दोर्दण्डलग्नं रङ्गेशभुजसंसक्तं छत्राकारं रथचरणं सुदर्शनं भूषयन्त्योऽलंकुर्वत्यः । कनक-कृताः स्वर्णरचिताः शलाकाः कर्णिका इव प्रतीयमाना अरस्फूर्तयोऽरविजृम्भणानि वः कीर्तये भूयासुः ॥

नाभीशालानिखातां नहनसमुचितां वैरिलक्ष्मीवशानां
संयद्वारीहृतानां समनुविदधती काञ्चनालानपङ्क्तिम् ।
राज्या च प्राज्यदैत्यव्रजविजयमहोत्तम्भितानां भुजानां
तुल्या चक्रारमाला तुलयतु भवतां तूलवच्छत्रुलोकम् ॥ ४७ ॥

संयद्वारीहृतानां संयद्युद्धमेव वारी गजग्रहणाय कृतस्तृणाच्छादितो गर्तस्तया हृतानां वैरिलक्ष्मीवशानां प्रतीपभूपानां लक्ष्म्यः संपद एव वशाः करिण्यस्तासां नहनसमुचितां बन्धनस्य समुचितां नाभीशालानिखातां पिण्डिका एव शाला तस्यां निखातां दृढतरं कीलितां काञ्चनालानपङ्क्तिं आलानानि गजबन्धनस्तम्भास्तेषां पङ्क्तिः कनकेन विरचिता सा चालानपङ्क्तिश्च तां समनुविदधती सम्यगनुकुर्वाणा । प्राज्यदैत्यव्रजविजयमहोत्तम्भितानां बहुलतरदैत्यनिकरविजयोत्सवेनोत्तम्भितानामुद्धृतानां भुजानां राज्या पङ्क्त्या च तुल्या च-क्रारमाला सुदर्शनारश्रेणी भवतां वैरिसमूहं तूलवत्तुलयतु उत्क्षिप्य निर्मूलयतु ॥

आ नेमेश्चक्रवालात्त्विष इव विततः पिण्डिकाचण्डदीप्ते-
र्दीप्ता दीपा इवाराद्गहनरणतमोगाहिनः पूरुषस्य ।
शाणे रेखायितानां रथचरणमये शत्रुशौण्डीर्यहेम्नां
रेखाः प्रत्यग्रलग्ना इव भुवनमरश्रेणयः प्रीणयन्तु ॥ ४८ ॥

आ नेमेश्चक्रवालात् प्रधेरेव लोकालोकपर्वतात् । आनेमिसन्नकलोकालोकपर्यन्तमि-त्यर्थः । परीत्य वृत्ता नेमिश्चक्रवालाचल इव तिष्ठति । अभिविधावाङ् । त्विष इव वि-ततः । चक्रवालपर्यन्तं व्याप्ताः पिण्डिकाचण्डदीप्तेर्नाभिसन्नकसूर्यस्य त्विष इव मयूखा इव । तेजस्वितया नाभिः सूर्यमण्डलमिव तिष्ठति । गहनरणतमोगाहिनो दुष्प्रवेशसंगरतमी-प्रवेशिनः पुरुषस्य सुदर्शनस्यारात्समीपे तिमिरपटलविघटनार्थं प्रदीप्ता दीपा इव रथचरण-

मये शाणे चक्रसंज्ञके निकषोपले । स्वार्थे मयट्प्रत्ययः । रेखायितानां रेखाकाराकारितं यथा भवति तथा संघटितानां शत्रुशौण्डीर्यहेम्नां प्रत्यर्थिमदकाञ्चनानां प्रत्यमलप्रमाः प्रत्यग्रसंसक्ता रेखा इव स्थिता अरश्रेणयः पञ्चीभूतान्यराणि भुवनं प्रीणयन्त्वानन्दयन्त्वित्यर्थः। अरश्रेण्यास्तरणिकिरणसादृश्यकथनेन निखिलभुवनव्यापित्वपरिशुद्धत्वे प्रत्यपादिषाताम्। दीपसादृश्यकथनेन तमोनिवर्तकत्वं मङ्गलाकारत्वं च प्रतिपादितम् । काञ्चनरेखातुल्यताकथनेन रमणीयत्वमार्जवं च प्रतिपादितं भवति । पिण्डिकाचण्डकिरणमारभ्य नेमिचक्रवालाचलपर्यन्तं व्याप्ताः किरणा इव भुवनं व्याप्ताः परिशुद्धाश्च घोरतरसमरनिकुरुम्बसंचारिसुदर्शनपुरुषं परीत्य प्रकाशमानाः करदीपिका इव तिमिरनिरासका मङ्गलाकाराश्च चक्रराजशाणोपरिघृष्यमाणाः कनकरेखा इव ऋजवो रमणीयतराश्चारश्रेणयः सकलभुवनप्रीतये भवन्त्वित्यर्थः ॥

दीप्तैरर्चिप्ररोहैर्दलवति विधृते बाहुनालेन विष्णो-
रुद्यत्प्रद्योतनाभं प्रथयति पुरुषं कर्णिकावर्णिकायाम् ।
चूडालं वेदमौलिं कलयति कमले चक्रनाम्नोपलक्ष्ये
लक्ष्मीं स्फारामराणि प्रतिविदधतु वः केसरश्रीकराणि ॥ ४९ ॥

दीप्तैः प्रकाशमानैरर्चिप्ररोहैर्ज्वालानां प्ररोहैर्वर्तुलतया जायमानैर्दलवति पत्रवति । कुण्डलितज्वालाकलापस्य पद्मदलसाम्यं विद्यते । विष्णोः श्रीरङ्गिणो बाहुनालेन विधृते संकलिते उद्यत्प्रद्योतनाभं आविर्भवद्भास्करस्याभेवाभा यस्य स तम् । उद्यन्मार्तण्डमण्डलच्छायमित्यर्थः । पुरुषं सुदर्शनपुरुषं कर्णिकावर्णिकायां वर्णमाकारो वर्णिका तस्यां विषये कर्णिकास्वरूपविषय इति यावत् । प्रथयति प्रकटयति । चूडालं चूडा शिखा अस्यास्तीति चूडालस्तम् । वेदमौलिं श्रुतिशिरोभागम् । वेदान्तमिति यावत् । कलयति ख्यापयति । चक्रनाम्ना सुदर्शननाम्ना उपलक्ष्ये उपलक्षितुं योग्ये । अवधेये इति यावत् । कमले केसरश्रीकराणि किंजल्कशोभाकराणि अराणि वः स्फारामत्युज्ज्वलां श्रियं प्रतिविदधतु कुर्वन्तु । चक्रनामकमलस्य कुण्डलितज्वालाखण्डमेव दलानि कुरुम्ब श्रीरङ्गिदक्षिणभुजदण्ड एव नालः चक्रमध्यप्रदेश एव प्रभातप्रभाकरदेशः सुदर्शनपुरुषः कर्णिकावदातः परिमलकर्णिकालेव वर्णितसुदर्शनपुरुषं परीत्य प्रकाशमानान्यराण्येव केसराणि । एतादृशे चक्रराजस्याराणि भवतां लक्ष्मीं प्रदिशन्तु ॥

धातुस्यन्दैरमन्दैः कलुषितवपुषो निर्झराम्भःप्रपाता-
नर्चिष्पत्या स्वमूर्त्या रथचरणगिरेर्नेमिनाभीतटस्य ।
व्याकुर्वाणारपङ्क्तिर्वितरतु विभुताविस्तृतिं वित्तकोटी-
कोटीरच्छत्रपीठीकटककरिघटाचामरस्रग्विणीं वः ॥ ५० ॥

(इत्यरवर्णनम्)

नेमिनाभीतटस्य नेमिश्च नाभी च नेमिनाभ्यौ ते एव तटे यस्य स तस्य रथचरणगिरेः सुदर्शनाद्रेः अरपद्धिरमन्दैरनल्पैर्धातुस्यन्दैर्गैरिकरससोतोभिः कलुषितवपुषः कलुषितं वपुर्येषां तान् शोणीकृताकारान् निर्झराम्भःप्रपातान् निर्झरजलप्रवाहास्तान् अर्चिष्मत्या दीप्तिमत्या जपाकुसुमनिकाशप्रकाशयेत्यर्थः । स्वमूर्त्या स्वाकारेण व्याकुर्वाणा विवृण्वाना । विस्तृणाना इति यावत् । वित्तकोटीति । कनककोटीकोटीरश्वेतातपत्ररत्नसिंहासनरत्नवलयकरिवृन्दचामरप्रसूनमालिकारमणीयां विभुतातिस्तृतिं वैभवातिशयं वो वितरतु । पृथुतरप्रधिपिण्डिकासानुरमणीयरथचरणवसुंधराधरधुरंधरस्यारत्रेतातिर्धातुनिःस्यन्दसंदोहसबन्धकलुषिताकारनिर्झरजलप्रवाहान् पद्माकरप्रभापटलरमणीयस्वमूर्त्या विस्पष्टयन्ती सती कनककाहलकलाशिखा (? मुक्ताछत्रचामरपीठिकाकाञ्चनभृङ्गारकिरीटकेयूरकण्ठिकाकुण्डलत्रिसरहाराहिता ?) ङ्गुलीयककनकोज्ज्वलकाञ्चीनूपुरतुरंगगजसुरततरुणीसकाशपरिचारिकाप्रमुखानेकवस्तुनिष्कलां लक्ष्मीं विस्तारयत्वित्यर्थः ॥

ऐक्येन द्वादशानामशिशिरमहसां दर्शयन्ती प्रवृत्ति
दत्तः स्वर्लोकलक्ष्म्यास्तिलक इव मुखे पद्मरागद्रवेण ।
देयाद्दैतेयदर्पक्षतिकरणरणप्रीणिताम्भोजनाभि-
र्नाभिर्नाभित्वमुर्व्याः सुरपतिविभवस्पर्शि सौदर्शनी वः ॥ ९१ ॥

द्वादशानामशिशिरमहसां सूर्याणामैक्येन । मेलनेनेत्यर्थः । संजातां वि(प्र)वृत्तिं निखिलतेजःपदार्थाभिभवनिरतिशयविजृम्भणं दर्शयन्ती ज्ञापयन्ती । दैतेयेति । दैत्याहंकारविनाशकरणं रणं तेन प्रीणितोऽम्भोजनाभिः श्रीरङ्गो यया सा तथा । प्रत्यर्थिप्राणसंहारचतुरसमरसंचारकोलाहलानन्दितनन्दगोपनन्दन इत्यर्थः । स्वर्लोकलक्ष्म्या मुखे पद्मरागद्रवेण माणिक्यसंघर्षणसंजातनिष्यन्दनेन । दत्तो रचितस्तिलक इव । सुदर्शनराजकृतप्रत्यर्थिनिरसनसंजनितहर्षोत्कर्षेण स्वर्लक्ष्मीरलंकृतेति व्यज्यते । सौदर्शनी नाभिः सुरपतिविभवस्पर्शि इन्द्रविभवं स्पृशतीति तथा । देवेन्द्रवैभवोपममित्यर्थः । उर्व्या नाभित्वं पृथ्वीनायकत्वं वो युष्माकं देयात् । स्वकीयप्रभापटलवलितद्वादशादित्यतेजःसच्छायसमक्षप्रतिपक्षरक्षःसंक्षयदक्षतासंमोदितदामोदरनिर्मूलितप्रतिपक्षपक्षलक्ष्मीरमणीयतया स्वर्लोकलक्ष्मीमुखकमलश्रृङ्गारहेतुभूतपद्मरागद्रवविरचितवर्तुलतिलक इव प्रकाशमाना सौदर्शनी पिण्डिका विलक्षितमहेन्द्रवैभवं क्षमानायकत्वं वितरत्वित्यर्थः ॥

शष्पश्यामे शताङ्गक्षितिभृति तरलैरुत्तरङ्गे तुरङ्गै-
स्त्वङ्गन्मातङ्गनक्रे कुपितभटमुखच्छायमुग्धप्रवाले ।
अस्तोकं प्राश्नुवाना प्रतिभटजलधौ पाटवं वाडवस्य
श्रेयो वः संविधत्तां श्रितदुरितहरा श्रीधरास्त्रस्य नाभिः ॥ ९२ ॥

शस्त्रैर्मण्डलाग्रखड्गैः श्यामे नीले शताङ्गक्षितिभृति शताङ्गानि रथा एव पर्वता यस्य स तस्मिन्। तरलैः। अशनिनिकरवच्चबलैरित्यर्थः। तुरगैरश्वपरम्पराभिरुत्तरङ्ग उद्गतास्तरङ्गाः कल्लोला यस्य स तस्मिन्। त्वङ्गन्मातङ्गनक्रे चलन्तो मातङ्गा एव नक्रा ग्राहा यस्य तस्मिन्। कुपितेति। कुपिताः प्रतिबलकलकलाकर्णनेन क्रुद्धा भटा वीरभटास्तेषां मुखानि तेषां छाया मुखच्छायं तदेव मुग्धानि रमणीयानि प्रवालानि विद्रुमाणि यस्य स तस्मिन् प्रतिभटजलधौ शत्रुसेनासागरे वाडवस्यास्तोकमनल्पं पाटवं कौशलं प्राप्नुवाना विस्तारयन्ती। प्रतिभटबलं शोषयन्तीति यावत्। छिन्दुरितदरा श्रीधराब्जस्य नाभिर्वः श्रेयो भद्रं संविधत्तां करोतु। उत्क्षिप्तखड्गसञ्चारश्यामले रथपर्वते त्वङ्गत्तुरङ्गसप्लुततरङ्गावलीमङ्गले रौद्रे गजस्फुटितोपनक्रराजविराजिते (?) कुद्धत्याधिसरक्तमुखसौभाग्यविद्रुमे प्रतीपसेनाकूपारे वडवानलपाटवं प्राप्नुवाना अब्जराजस्य नाभिराश्रितभूति (?) भद्राणि सान्द्रयतु॥

ज्वालाचूडालकालानलचलनसमाडम्बरा सांपरायं
यासावासाद्य माद्यत्सुरभटसुभुजास्फोटकोलाहलाढ्यम्।
दैत्यारण्यं दहन्ती विरचयति यशोभूतिशुभ्रां धरित्रीं
सा वश्चक्रस्य नक्रस्यदमृदितगजत्रायिणी नाभिरव्यात्॥ १३॥

यासौ नाभिर्माद्यत्सुरभटसुभुजास्फोटकोलाहलाढ्यं चक्रराजसचारचातुरीनिर्मूलितशत्रुमण्डलीसदर्शनेन माद्यन्त उन्मत्तकविजृम्भणमेदुराः सुरभटास्तेषां भुजानामास्फोटः करपत्रभुजशिखरेण यद्बद्धप्रकोष्ठबाहोर्मध्ये वीरप्रदेशस्यास्फोटनेन सञ्जनितः कुलिशघोषसमासशब्दस्तस्य कोलाहलो विजृम्भणं तेनाढ्यं युद्धमासाद्य। ज्वालेति। चूडा यस्यास्तीति चूडालः। ज्वालाभिश्चूडालः स चासौ कालानलश्च तस्य चलनं घोरान्तरसञ्चारस्तेन सदृश आडम्बर आस्फोटो यस्याः सा। दैत्यारण्यं दहन्ती सती धरित्रीं यशोभूतिशुभ्रां रक्षःकाननदहनजनितकीर्तिवैभवेन धवलां विरचयति। नक्रस्यदमृदितगजत्रायिणी नक्रस्य ग्राहस्य स्यदो वेगस्तेन मृदितो निष्पीडितः स चासौ गजश्च तं त्रायते इति गजत्रायिणी सा चक्रस्य नाभिर्वोऽव्यात्। चक्रविभ्रमसदर्शनसंजनितदुर्वारखर्वगर्वपर्वतारूढसुपर्वसुभटभुजास्फोटनसञ्जातघोरघोषाटोपभयंकरसमरङ्गमासाद्य ज्वालाजटिलप्रलयसमयपावकप्रतापप्रतिनिनदासुरवरनिकरनिपीडितदैत्यविपिनविलसद्दहनचतुरः स्वाभाविकस्वकीययशोविभवधवलितवसुधाचक्रनक्रविक्रमाक्रान्तनिर्विक्रमगजेन्द्ररक्षणनिपुणव्यापारचक्रनाभिर्वो युष्मान्रक्षत्वित्यर्थः॥

विन्दन्ती सांध्यमर्चिर्विदलितवपुषः प्रत्यनीकस्य रक्तैः
स्फायन्नक्षत्रराशिर्दिशि दिशि कणशः कीकसैः कीर्यमाणैः।
नाकौकःपक्ष्मलाक्षीनवमदहसितच्छायया चन्द्रपादा-
न्याधाक्षी विस्तृणाना रचयतु कुशलं पिण्डिकायामिनी वः॥ १४॥

विदलितवपुषो बहुविधप्रहारजर्जरीकृतशरीरस्य प्रसनीकस्य प्रतिपन्थिबलस्य रक्तैः प्रहारवशान्निर्गलद्रुधिरधाराभिः सांध्यमांचः । विकसितजपाकुसुमनिकाशप्रकारमित्यर्थः । विन्दन्ती प्राप्नुवन्ती दिशि दिशि सर्वासु दिक्षु कणशः कीर्यमाणैः शकलीकृत्य प्रक्षिप्यमाणैः कीकसैरस्थिभिः स्फायन्नक्षत्रराशिः प्रकाशमानो नक्षत्रराशिर्यस्याः सा । नाकौक इति । स्वर्लोकवासिविलासिनीनां नवमदेन पौनःपुन्येन मदिरास्वादनसंजातनवमदेन हसितानि निःशङ्कनिःसरद्दीर्घहासास्तेषां छाया कान्तिस्तया धवलिमतया चन्द्रपादानमृतकिरणकिरणान् विस्तृणाना शश्वद्दी पिण्डिकायामिनी नाभिरात्रिर्वः कुशलं रचयतु । निशितखङ्गशत्रुशरीरखण्डननिरन्तरनिःसरद्रक्तधारापरम्पराप्रकटितसंध्यारागसामग्री स्वकीयविविधविहारखण्डितकीकसनिकुरुम्बप्रत्यक्षितनक्षत्रसमुन्मेषा विजृम्भितमधुरसास्वादनसंजातसमुल्लासविवशविबुधवधूनिःशङ्कहासकोलाहलप्रदर्शितशशिकरनिकरा चाक्री पिण्डिकायामिनी भवतां भद्रं करोत्वित्यर्थः ॥

निःसीमं निःसृताया भुजधरणिधराघाटतः कैटभारे-
राशाकूलंकषर्द्धेरहितबलमहाम्भोधिमासादयन्त्याः ।
चक्रज्वालापगायाश्चलदरलहरीमालिकादन्तुराया
बिभ्रत्यावर्तभावं भ्रमयतु भुवने पिण्डिका वः प्रशस्तिम् ॥ ९९ ॥

कैटभारे रङ्गिणो भुजधरणिधराघाटतः भुज एव धरणिधरः पर्वतस्तस्याघाट आभोगः । विशालतेति यावत् । तस्मान्निःसीमं निःसृताया निरर्गलविनिर्गलिताया आशाकूलंकषर्द्धेः आशा दिश एव कूलानि तटानि कष्यन्ते संघर्ष्यन्ते यया सा आशाकूलंकषा तादृशी ऋद्धिर्यस्याः चलदरलहरीमालिकादन्तुरायाः चलन्ति च यान्यराणि तान्येव लहर्यस्तासां मालिकाभिर्दन्तुरा निम्नोन्नता तस्याः अहितबलमहाम्भोधिमासादयन्त्याः प्रत्यर्थिसेनार्णवं प्रविशन्त्याश्चक्रज्वालापगायाः सुदर्शनप्रभास्रवन्त्या आवर्तभावं बिभ्रती आवर्तत्वं दधाना पिण्डिका वः प्रशस्तिं प्रख्यातिं भुवने भ्रमयतु प्रसरयतु । मुरहरकरशिखरिशिखरपरिसरतः प्रवहन्त्याः सकलदिक्कूलकषविजृम्भमाणरमणीयतायाः तुङ्गतरतरङ्गपरम्परादन्तुरितोत्सङ्गायाः परबलजलधिमध्यं प्रविशन्त्याः सुदर्शनज्वालाकल्लोलिन्या आवर्तत्वं दधाना पिण्डिका भवतां सकलभुवनव्यापिनीं कीर्तिं तनोत्वित्यर्थः ॥

पाणौ कृत्वाहवाग्रे प्रतिभटविजयोपार्जितां वीरलक्ष्मी-
मानीतायास्ततोऽस्याः स्वसविधमसुरद्वेषिणा पूरुषेण ।
प्रासादं वासहेतोर्विरचितमरुणै रश्मिभिः सूचयन्ती
नाभिर्वो निर्मिमीतां रथचरणपतेर्निर्वृतिं निर्विघाताम् ॥ १६ ॥

प्रतिभटानां विजयेनोपार्जितां वीरलक्ष्मीमाहवाग्रे युद्धवेदिकायां पाणौ कृत्वा । शत्रुजयलब्धवीरलक्ष्मीं कान्ता रणवेदिकायामेवोद्वहन्ति नेतारः । ततः स्वसमीपमानीताया

अस्या वीरश्रियो वासहेतोर्दैत्यद्वेषिणा पूरुषेण सुदर्शनेन कर्त्रा 'अरणेः' किरणैर्निर्मितं प्रासादं सूचयन्ती । पिण्डिका प्रासादवत्स्थितेति यावत् । रथचरणपतेर्नाभिर्वो निष्प्रत्यूहा निर्वृतिम् । ब्रह्मानन्दमित्यर्थः । उत्पादयतु । प्रत्यर्थिराजपरम्पराविजयसमागतवीरलक्ष्मीं परिणीय तस्याः स्वसमीप एव निवासार्थं दनुजकुलविलयनकरव्यापारेण सुदर्शनपूरुषेण विलसन्निपुणैः किरणैर्निर्मिताभिर्नवहर्म्यवद्विराजमाना चक्रपिण्डिका भवतामप्रतिममानन्दं संपादयत्वित्यर्थः ॥

डिण्डीरापाण्डुगण्डैररियुवतिमुखैः पिण्डिका कृष्णहेते-

रुच्चण्डाश्रुप्रवर्षैरुपरततिलकैरुक्तशौण्डीर्यचर्या ।

द्वित्रग्रामाधिपत्यद्रुहिणमदमषीदूषिताक्षक्षमाभृ-

त्सेवाहेवाकपाकं शमयतु भवतां कर्म शर्मप्रतीपम् ॥ ९७ ॥

डिण्डीरापाण्डुगण्डैः फेनपाण्डुरगण्डैः । उच्चण्डाश्रुप्रवर्षैः । उच्चण्डानि धाराला‍नि । अत्युत्कटानीति यावत् । अश्रुवर्षाणि येषां तैः । उपरततिलकैः प्रमृष्टतिलकैः । अरियुवतिमुखैः उक्तशौण्डीर्यचर्या भाषिता मदस्य वृत्तिर्यस्याः सा कृष्णहेतेः पिण्डिका । द्वित्रेति । द्वित्रग्रामाधिपत्येन सजातो द्रुहिणमदः सकलजगन्नायकोऽहमित्यहंकारः स एव मषी तया दूषितान्यन्धीकृतान्यक्षाणि इन्द्रियाणि येषां तेषां क्षमाभृतां सेवा यथेष्टविनियोज्यत्वं तस्यां हेवाक औत्सुक्यं स एव पाकः परिपाकः परिणामो यस्य तत् शर्मप्रतीपं सुखविरोधिकर्म शमयतु । 'अनञ्जनविलोचनैरकलिताल[?]कालंकृतैरनाहतकपोलकैरकृतकाटितप्रभाविभ्रमैः । अचुम्बितदरस्मितैर्गततललाटिकाचन्दनैः समृद्धगलदश्रुभिः प्रतिमहीपकान्तामुखैः ॥' सूचितपराक्रमप्रतिभटविदाहिका प्रचण्डतरपिण्डिका कतिपयजनाधिपत्यमात्रेणाहं ब्रह्मेति मत्वा यः कश्चिदुरात्मा स्वसमीपगतमपि पूज्यं न पश्यति न शृणोति श्रोतव्यमेवं प्रकारेण मदान्धस्य तस्य सेवाहेवाकपाकं मुखपरम्परापरिपन्थिक्रियाकलापं निर्मूलयत्वित्यर्थः ॥

पर्याप्तामुन्नतिं या प्रथयति कमलं या तिरोभाव्य भाति

स्रष्टुः स्रष्टेर्दैवीयः कुवलयमहितं या बिभर्ति स्वरूपम् ।

भूम्ना स्वेनान्तरिक्षं कवलयति च या सा विचित्रा विधत्तां

दैतेयाराविनाभिर्द्रविणपतिपदद्वेषिणीं संपदं वः ॥ ९८ ॥

नाभिः पर्याप्ता परिपूर्णाम् । निरतिशयामिति यावत् । उन्नतिमौपत्यं प्रथयति । निरतिशयातिशयप्रदानचातुर्यं प्रख्यापयतीत्यर्थः । या कमलं विकसितपद्मं तिरोभाव्य भाति प्रकाशते । स्वसौन्दर्येण कमलादप्यरमणीयेत्यर्थः । या स्रष्टुर्ब्रह्मणः स्रष्टेर्दैवीयो दूरतम कुवलयमहितं भूवलयपूजितं नाभीमण्डलसाम्यत्वान्द्भूमण्डलं नाभीमण्डलाकाराकारितं सन्दे भवति तस्मादेव भूमण्डले नाभिमण्डलं पूजितं भवति । स्वरूपं बिभर्ति या स्वेन भूम्ना महले-

नान्तरिक्षं कवलयति परिमेययति । अल्पयतीति यावत् । सा विचित्रा नानाप्रकारा दैतेयारातिनाभिर्द्रविणप्रतिपदद्वेषिणीं कुबेरसंपल्लङ्घिनीं संपदं विधत्ताम् । अनेन पद्येन पिण्डिकाया उन्नतत्वरमणीयत्वाद्यत्ववर्तुलत्वमहत्त्ववत्त्वं प्रतिपादितं भवति ॥

वाणीवाङ्गैश्चतुर्भिः सदसि सुमनसां द्योतमानस्वरूपा
वाह्लन्तस्था मुरारेरभिमतमखिलं श्रीरिव स्पर्शयन्ती ।
दुर्गेवोग्राकृतिर्या त्रिभुवनजननस्थेमसंहारधुर्या
मर्यादालङ्घनं वः क्षपयतु महती हेतिवर्यस्य नाभिः ॥ ९९ ॥

वाणीव वाग्देवतेव चतुर्भिरङ्गैर्नेम्यरनाभ्यक्षैः । ज्वालाया नेम्यन्तःपातित्वात् । वाग्देवताङ्गानि परा पश्यन्ती मध्यमा वैखरीत्येवमाकारेण 'चत्वारि वाक्परिमितापदानि' इति श्रुतिसिद्धध्वनिवर्णपदवाक्यरूपाणि तैरङ्गैरवयवैः सुमनसां देवानां विदुषां च सदसि द्योतमानस्वरूपा सा श्रीरिव मुरारेर्वाह्लन्तस्था करकिसलयगर्भसिंहासनस्था अखिलमभिमतमभ्यर्थितार्थप्रपञ्चं स्पर्शयन्ती । ददतीत्यर्थः । दुर्गेव पार्वतीवोग्राकृतिर्नाभिस्त्रिभुवनजननस्थेमसंहारधुर्या भुवनत्रयजननस्थितिसंहृतिसमर्था प्रकाशते । अयमर्थः—अङ्गैर्द्योतमानस्वरूपेत्यनेन वाणी उत्पत्तिशक्तिरित्यवगन्तव्या । अभिमतार्थान् प्रदाय रक्षतीत्यनेन श्रीः स्थितिशक्तिः । उग्राकृतिरित्यनेन दुर्गा संहृतिशक्तिरित्यवगन्तव्या । एवंप्रकारेण प्रतिनियतव्यापारशक्तियोगात्प्रतिनियतघटपादिकर्तृभ्यो वाणीश्रीदुर्गाभ्योऽपि जननस्थेमसंहारधुर्येत्यनेन सुदर्शननाभिरेवाधिकेत्यवगन्तव्यम् । सा हेतिवर्यस्य नाभिर्मर्यादालङ्घनं निरुपाधिकशेषत्वमात्मनां मर्यादा तस्या अतिक्रमणं स्वातन्त्र्याभिमान क्षपयतु ॥

स्रग्भिः संतानजाभिर्मधुरमधुरसस्यन्दसंदोहिनीभिः
पाटीरैः प्रौढचन्द्रातपचयसुषमालोपनैर्लेपनैश्च ।
धूपैः कालागुरूणामपि सुरसुदृशो विस्रमर्चासु यस्या
गन्धं रुन्धन्ति सा वश्चिरमसुरभिदो नाभिरव्यादभव्यात् ॥ ६० ॥

सुरसुदृशो देवरमण्यो यस्या नाभ्या विस्रमशुभगन्धं खण्डितदनुजशरीरशोणितमांसवसाबन्धसंजातदुर्गन्धमर्चासु पूजासु क्रियमाणासु सतीषु संतानजाभिः पारिजातप्रसूनरचिताभिर्मधुरमधुरसस्यन्दसंदोहिनीभिः मधुरः स्वादुश्चासौ मधुरसः पुष्परसस्तस्य स्यन्दो निःस्यन्दस्तस्य संदोहः समृद्धिरासां सजामस्तीति संदोहिनीभिः । बहलगलदमलमधुरतरकुसुमरसरुचिराभिरिति यावत् । स्रग्भिः प्रौढचन्द्रातपचयसुषमालोपनैः पूर्णचन्द्रज्योत्स्नाचयसुषमां लुम्पन्ति लोपनास्तैः पार्वणचन्द्रचन्द्रिकारमणीयतासहारिभिरित्यर्थः । पाटीरैश्चन्दनसदृग्भिर्लेपनैः । चर्चाभिरिति यावत् । कालागुरूणां कालागुरुप्रभृत्यनेकसुगन्धिद्रव्यसमेतनविरचितधूपैश्च रुन्धन्ति तिरोभावयन्ति असुरभिदो नाभिर्वश्चिरमभव्यात् चिरतनादमङ्गलात् । जननमरणादित्यर्थः । अव्यात् । चञ्चरीकचञ्चुपुटप्रस्फुटसमञ्चितसौकुमार्यसचर्यनिर-

व्यस्तस्कन्धं विशीर्णप्रसवपरिकरं प्रत्तपत्रोपमर्दं
संयद्वर्षासु तर्षातुरखगपरिपत्पीतरक्तोदकासु ।
अक्षं रक्षस्तरूणामशनिवदशनैः प्रापतन्मूर्ध्नि मूर्ध्नि
स्तादस्त्राधीशितुर्वः स्तबकितयशसे द्वेषिणां प्लोषणाय ॥ ६३ ॥

तर्षातुरखगपरिपत्पीतरक्तोदकासु तृष्णापीडितपक्षिसमूहपीतरक्तोदकासु संयद्वर्षासु युद्धवर्षसमयेषु रक्षस्तरूणां मूर्ध्नि मूर्ध्नि अशनिवद्दम्भोलिरिव व्यस्तस्कन्धं व्यस्ता भग्नाः स्कन्धाः शाखाश्छिन्नाः कण्ठाश्च यस्मिन् कर्मणि तत् । विशीर्णप्रसवपरिकरं विशीर्णा नष्टाः प्रसवाः पुष्पाणि फलानि च तेषां परिकराः समुदायाः विशीर्णाः शकलीकृताः प्रसवा गर्भपाताः परिकराः परिवारा यस्मिन्कर्मणि तत् । प्रत्तपत्रोपमर्दं प्रत्तो दत्तः पत्राणां पर्णानां वाहनानामुपमर्दो विनाशो यस्मिन्कर्मणि तत् । एतानि त्रीण्यपि पतनक्रियाविशेषणानि । अशनैः शीघ्रमापतत् अस्त्राधीशस्याक्षं स्तबकितयशसे । अनेन कीर्तिप्रसूनोत्पत्तिहेतुर्दोहदविशेषो ध्वन्यते । द्वेषिणां प्लोषणाय शत्रूणां दहनाय स्तात्स्याद्भूयात् ॥

दीक्षां सङ्ग्रामसत्रे महति कृतवतो दीप्तिभिः संहताभि-
र्जिह्वाले सप्तजिह्वे दनुजकुलहविर्जुह्वतो नेमिजुह्वा ।
वैकुण्ठास्त्रस्य कुण्डं महदिव विलसत्पिण्डिकावेदिमध्ये
दिश्याद्दिव्यर्द्धिदेश्यं पदमिह महतामक्षतोन्मेषमक्षम् ॥ ६४ ॥

महति सर्वोत्तरे सङ्ग्रामसत्रे युद्धयागे दीक्षां कुर्वतो दीक्षितस्य सतः संहताभिः संघीभूताभिर्दीप्तिभिर्जिह्वाले जिह्वावति सप्तजिह्वे वह्नौ दनुजकुलमेव हविर्हव्यं नेमिजुह्वा प्रधिरेव जुहूः स्रुग्विशेषस्तया जुह्वतस्त्यजतः । प्रक्षिपत इति यावत् । वैकुण्ठास्त्रस्य चक्रस्य पिण्डिका वेदिमध्ये नाभिवेदिकामध्यप्रदेशे महद्गम्भीरं कुण्डमिव विलसद्रमणीयम् अक्षतोन्मेषं अक्षतः प्रवृद्ध उन्मेषो विकासो यस्य तदक्षं भवतामिह लोके दिव्यर्द्धि देश्यं स्वर्गसभूतविभूतिकल्पं पदं दिश्यात् ॥

तुङ्गाद्दोरद्रिशृङ्गाद्दनुजविजयिनः स्पष्टदानोद्यमानां
शत्रुस्तम्बेरमाणां शिरसि निपततः स्रस्तमुक्तास्थिपुञ्जे ।
रक्तैरभ्यक्तमूर्तेर्विदलनगलितैर्व्यक्तवीरायितर्द्धे-
र्हर्यक्षस्यारिभङ्गं जनयतु जगतामीडितं क्रीडितं वः ॥ ६५ ॥

दनुजविजयिनः श्रीरङ्गिणस्तुङ्गादुन्नतात् । उद्गारादित्यर्थः । दोरद्रिशृङ्गाद्बाहुपर्वतशिखरात् । अग्रप्रदेशादित्यर्थः । तस्मात्स्पष्टदानोद्यमानां स्पष्टो दानस्य मदजलस्योद्यम उद्यो येषां गजानां स्पष्टो दाने खण्डने उद्यम उद्योगविशेषो येषां शत्रूणां तेषां शत्रुस्तम्बेरमाणां प्रतीपमहीपद्विपानां स्रस्तमुक्तास्थिपुञ्जे मुक्तावद्धवलान्यस्थीनि तेषां पुञ्जः समूहः

सस्ता विगलिता मुक्तास्थिपुञ्जा यस्मात् तस्मिन् शिरसि निपततः विदलनगलितैर्विदल-नेन शत्रुशिरःकपोलविपाटनेन गलितैर्नैरन्तर्येण निःसृते रक्तैः शोणितैरभ्यक्तमूर्तेर्लिप्तविग्रहस्य व्यक्तवीरायितर्द्धेः वीरायिता वीरवदाचरिता सा चासौ ऋद्धिश्चेति । व्यक्ता वीरायितर्द्धिर्यस्य स तस्य हर्यक्षस्य हरिः सुदर्शनं . श्रीरद्विसंकल्पाकारकारित्वाद्धरिरित्युच्यते । तस्य हर्यक्षस्य सिंहस्य च जगतामीडित जगद्भिः स्तूयमानं क्रीडितं क्रीडाविनोदो वोऽरिभङ्गं जनयतु ॥

उन्मीलत्पद्मरागं कटकमिव धृतं बाहुना यन्मुरारे-
र्दीप्तान्रश्मीन्दधानं नयनमिव यदुत्तारकं विष्टपस्य ।
चक्रेशार्कस्य यद्वा परिधिरभिदधद्दैत्यहत्यामिव द्रा-
गक्षं पक्षे पतित्वा परिघटयतु वस्तद्धृढिष्ठां प्रतिष्ठाम् ॥ ६६ ॥

दीप्तान् रश्मीन् प्रकाशमानान् किरणान् दधानं सयदक्षं मुरारेर्बाहुना दक्षिणभुजदण्डेनोन्मीलत्पद्मरागं उन्मीलन्तो देदीप्यमानाः पद्मरागाः शोणमणयो यस्मिंस्तत् शिलातलपार्श्वप्रदेशप्रद्योतमानरागा अर्धरागाः पार्श्वद्वयप्रकाशमानरागाः पूर्वापरभागयोः प्रदीप्तप्ररूढरागाः प्ररूढरागाः पूर्णरागाः एवं प्रकारेण चतुर्विधाः पद्मरागमणयः । प्ररूढरागपद्मरागकीलितकटकमिव धृतमाकलितम् । यदक्षं दीप्तान् रश्मीन्दधानं सत् उत्तारकमुन्नतकनीनिकं उत्तारयतीत्युत्तारकं रक्षकं च विष्टपस्य भुवनस्य नयनमिव नेत्रमिव निरपायोपायमिति । यदक्षं दैत्यहत्यामभिदधद्ब्रुवाणं चक्रेशार्कस्य चक्रप्रभुचण्डकिरणस्य परिधिर्वा परिवेष इव तदक्ष पक्षे पतित्वा युष्मत्पक्षपाती भवद्वो युष्माकं द्रढिष्ठां दृढतराम् । शाश्वतीमिति यावत् । प्रतिष्ठां दृष्टादृष्टैश्वर्यसमृद्धितयावस्थानं द्राक् शीघ्रं परिघटयतु संयोजयतु ॥

क्रीडत्प्राक्रोडदंष्ट्राहतिदलितहिरण्याक्षवक्षःकपाट-
प्रादुर्भूतप्रभूतक्षतजसमुदितारुण्यमुद्रं समुद्रम् ।
उन्मीलत्किंशुकाभैरुपहसदमितैरंशुभिः संशयघ्नी-
मक्षं चक्रस्य दत्तामघशतशमनं दाशुषीं शेमुषीं वः ॥ ६७ ॥

प्रागाद्यश्चासौ क्रोडो वराहश्च । क्रीडंश्चासौ प्राक्क्रोडश्च । क्रीडत्प्राक्क्रोडविग्रह इत्यर्थः तस्य दंष्ट्रा तया हतयः कुट्टनानि ताभिर्दलितं विदारितं हिरण्याक्षस्यासुरस्य वक्षो भुजान्तरालमेव कपाटं तच्च हिरण्याक्षवक्षःकपाटं च तस्मात्प्रादुर्भूतं निर्गतं निर्गलितं प्रभूतं सान्द्रं क्षतजं तेन समुदितं सजातमारुण्यं शोणिमा तदेव मुद्रा चिह्नं यस्य तं समुद्रम् उन्मीलत्किंशुकाभैर्विलसत्पलाशकुसुमसकाशैरमितैरनन्तैरंशुभिः किरणैरुपहसत् । चक्रस्याक्षं कर्तृ अघशतशमनं दाशुषीं प्रदात्रीं संशयघ्नीं सद्योऽनर्थधारणशालिन इत्यादि घ्नीं तां शेमुषीं मनीषां दत्तां दिशतु ॥

पद्मोल्लासप्रदं यज्जनयति जगतीमेधमानप्रबोधां
यस्य च्छायासमाना लसति परिसरे रोहिणी तारकाग्र्या ।
नानाहेत्युन्नतत्वं प्रकटयति च यत्प्राप्तकृष्णप्रयाणं
त्रेधा भिन्नस्य धाम्नः समुदय इव यत्पातु वश्चाक्रमक्षम् ॥ ६८ ॥

यदक्षरमहस्कराख्यमहश्च पद्मोल्लासप्रदं पद्मा श्रीरङ्गनायिका तस्या उल्लास आनन्दस्तज्ज-नितपारवश्यं पद्मानि कमलानि तेषामुल्लासो विकासस्तं प्रददातीति पद्मोल्लासप्रद सज्जगतीं लोकमेधमानप्रबोधामेधमानः प्रबोधः प्रज्ञा यस्याः सा तां जनयति प्रादुर्भावयति । सू-र्यस्य प्रकाशरूपत्वाच्च सुदर्शनस्य ज्ञानतेजसोदुत्पत्तिस्थानत्वात् । उदयति रवौ चक्रे च सर्वे प्रवर्धमानप्रबोधा भवन्ति । यस्याक्षस्य चन्द्राख्यतेजसश्च रोहिणी तारकाग्र्या आरुण्येन रोहिणीनक्षत्रश्रेष्ठा । अथवा रोहिणी अरुणा । 'रोहिणी वसुदेवस्य पत्न्यां नक्षत्रशोणयोः' इति निघण्टुः । यद्वा तारकेण प्रणवेन श्रेष्ठा । अक्षमध्ये प्रणवः प्रणवमध्ये देवः । तस्मा-त्प्रणवसंबन्धित्वेन श्रेष्ठा । यद्वा तारकाग्र्या प्रणवानन्तरं तमःशब्दवाच्याहंकाराद्यनिष्टजातं निरस्य पारतन्त्र्यादि प्रापयन्तीत्यर्थः । अत एवासमानं निःसमानं छाया कान्तिः परिसरे समीपे लसति । चन्द्रपक्षे तु तारकाग्र्या नक्षत्रश्रेष्ठा रोहिणी चन्द्रभार्या छायासमाना सूर्य-भार्यासदृशी । अथवा रोहिणीनक्षत्राग्रप्रदेशवर्तिनी असमानच्छाया निरुपमचन्द्रिका परि-सरे लसति। यदक्षं कृशानुश्च कृष्णस्य प्रयाणं प्राप्त कृष्णस्य प्रणायं येन तत्तादृशं सत् नाना हेत्युन्नतत्वं शार्ङ्गाद्यायुधेभ्य उन्नतत्वम् । कृशानुपक्षे तु प्राप्तं नीलप्राय वर्त्म येन तत् । त-स्मादेव कृष्णवर्त्मेत्युच्यते । नानाविधाभिर्हेतिभिर्ज्वालाभिरुन्नतं प्रकटयति । एवं त्रेधा-भिन्नस्य धाम्नस्तेजसः समुदय इव स्थितं चाक्रमक्षं वः पातु ॥

शोचिर्भिः पद्मरागद्रवसमसुषमैः शोभमानावकाशं
प्रत्यग्राशोकरागप्रतिभटवपुषा भूषितं पूरुषेण ।
अन्तः स्वच्छन्दमग्नोत्थितभृगुतनयं क्षत्रियाणां हताना-
मारब्धं शोणितौघैः सर इव भवतो दिव्यहेत्यक्षमव्यात् ॥ ६९ ॥

पद्मरागद्रवसमसुषमैः पद्मरागघर्षणसंजातरसेन सदृशी निरतिशया शोभा येषां तानि तैः शोचिर्भिः शोभमानावकाशं विमानमध्यप्रदेशं तत् प्रत्यग्राशोकरागप्रतिभटवपुषा विकसद-शोककुसुमसंकाशविग्रहेणेत्यर्थः । पुरुषेण सुदर्शनपुरुषेण भूषितमलंकृतम् । अधिष्ठितमि-त्यर्थः । तथावस्थितम् । किमिव । हतानां क्षत्रियाणां शोणितौघैरारब्धम् । अन्तःस्वच्छ-न्दमग्नोत्थितभृगुतनयं अन्तःसरोमध्ये स्वच्छन्दमग्नः स्वेच्छामग्नो मज्जनानन्तरमुत्थितो भृगुतनयो यस्मिंस्तत्सर इव स्थितं दिव्यहेत्यक्षं भवतो युष्मानव्यात् । शोणमणिद्रवसपक्ष-प्रभाव्याप्तान्तरावकाशं परिहसितविकसदशोककुसुमरागारुणतरविग्रहेण पुरुषेणाधिष्ठितं स-त्तदानीं खण्डितराजकण्ठोपकण्ठधमनीमुखनिरन्तरपातरुधिरप्रवाहविरचितं लीलानिर्ममो-त्थितभृगुतनयसरोवरमिव स्थितमक्षं युष्मान्यात्वित्यर्थः ॥

शुभ्रैरभ्रैरदभ्रैः शरदि तत इतो व्योम विभ्राजमानं
प्रातस्त्यादित्यरोचिस्ततमिव भवतः पातु राथाङ्गमक्षम् ॥ ७२ ॥

मध्येऽक्षप्रदेशे यद्वासस्य कृतावस्थस्य चक्राध्यक्षस्य नखभुवा पादाब्जनखजातेन वीध्रेण विमलेन धाम्ना तेजसा विद्वान्संमिश्रान्परिहसितजपापुष्पकोशान् । वर्णीकृतजपाकुसुमगर्भरागानित्यर्थः । प्रकाशान्बिभ्रद्धरत् शुभ्रैरदभ्रैर्बहुलैर्मेघैरितस्ततो विद्धं संपृक्तं प्रातस्त्यादित्यरोचिस्ततं प्रातःकालीनरविकरव्याप्तं विभ्राजमानं व्योमेव स्थितं रथाङ्गमक्षं भवतः पातु । स्वकीयावस्थानविभूषितं चक्राक्षमध्यप्रदेशस्थपुरुषस्य चरणनखचन्द्रसान्द्रचन्द्रिकोन्मुद्रितान् विकसितजपाप्रसूनगर्भदलरागसोदरान् किरणान्दधानं तदानीं शारदनीरदपटलपरिच्छिन्नमुग्धरविकिरणरञ्जितगगनतलमिव स्थितं प्रकाशमानं रथाङ्गावयवभूतमक्षं युष्मान्रक्षत्वित्यर्थः ॥

श्रीवाणीवाङ्मृडान्यो विदधति भजनं शक्तयो यस्य दिक्षु
प्राह व्यूहं यदाद्यं प्रथममपि गुणं भारती पाञ्चरात्री ।
घोरां शान्तां च मूर्तिं प्रथयति पुरुषः प्राक्तनः प्रार्थनाभि-
र्भक्तानां यस्य मध्ये दिशतु तदनघामक्षमध्यक्षतां वः ॥ ७३ ॥

पाञ्चरात्री पञ्चरात्रसंबन्धिनी भारती कर्त्री यदक्षं कर्म आद्यं व्यूहं वासुदेवसंकर्षणप्रद्युम्नानिरुद्धव्यूहरूपं प्रथममपि गुणं ज्ञानाख्यं गुणं आह । श्रीवाणीवाङ्मृडान्य एता वासुदेवादीनां शक्तयो दिक्षु प्राच्यादिषु स्थिताः सत्यो यस्य वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभूतस्याक्षस्य भजनं सेवां विदधति कुर्वन्ति । अक्षस्य प्रथमगुणत्वं च कुत्रेत्याशङ्कमानं प्रति लिख्यते—'वासुदेवादिकं चक्रं व्यूहं प्राथमिकं विदुः । उभयोरपि तादात्म्यं ब्रह्मसंकल्पमात्रतः ॥ अजडं स्वात्मसंबोधि निःसङ्गं सर्वगाहनम् । ज्ञानं नाम गुणं प्राहुः प्रथमं गुणचिन्तकाः ॥ स्वरूपं ब्रह्मणस्तच्च गुणश्च परिकीर्तितः । जगत्प्रकृतिभावो यः सा शक्तिः परिगीयते ॥ कर्तृत्वं नाम यत्तस्य स्वातन्त्र्यपरिबृंहितम् । ऐश्वर्यं नाम तत्प्रोक्तं गुणतत्त्वार्थचिन्तकैः ॥ श्रमहानिस्तु या तस्य सततं कुर्वतो जगत् । बलं नाम गुणस्तस्य कथितं गुणचिन्तकैः ॥ तस्योपादानभावेन विकारविरहो हि यः । वीर्यं नाम गुणः सोऽयमच्युतत्वापराह्वयः ॥ सहकार्यनपेक्षा या तत्तेजः समुदाहृतम् । एते शक्त्यादयः षड् गुणा ज्ञानस्य कीर्तिताः ॥ ज्ञानमेव परं रूपं ब्रह्मणः परमात्मनः । तदा तु चक्रमित्याहुर्ब्रह्मयाथात्म्यवेदिनः ॥' इत्यहिर्बुध्न्यसंहितायामुक्तस्याक्षस्य मध्यस्थितः प्राक्तनपुरुष आदिपुरुषो भक्तानां प्रार्थनाभिर्घोरां शान्तां च मूर्तिं प्रथयति । अस्यायमर्थः—यदा भक्ताः शत्रुनिरसनं प्रार्थयन्ते तदा शत्रूनुद्दिश्योग्रविग्रहो भवति । यदेष्टप्राप्तिमाहन्ते तदा प्रसन्नविग्रहो भवति । तदक्षं वो निर्दोषामध्यक्षतामाधिपत्यं दिशतु ॥

रक्षःपक्षेण रक्षन्सततममरगणं लक्ष्यैवलक्ष्यमाजौ
लक्ष्मीमक्षीयमाणां बलमथनभुजे वज्रशिक्षानपेक्षे ।

मत्तानामिन्द्रियाणां कृतविषयमहाकाननक्रीडनानां
सृष्टं चक्रेश्वरेण ग्रहणधिषणया वारिवद्वारणानाम् ।
गम्भीरं यन्त्रगर्तं कमपि कृतधियो मन्वते यत्प्रदेया-
दस्थूलां संविदं वस्त्रिजगदभिमतस्थूललक्षं तदक्षम् ॥ ७० ॥

कृतधियो निश्चितबुद्धयः यदक्षं कर्म कृतविषयमहाकाननक्रीडनानां महत्तरेष्वरण्येषु क्रीडनानि विनोदाः कृतानि महाकाननक्रीडनानि यैस्तेषां मत्तानां मदधारादूषितानां वारणानां ग्रहणधिषणया जिघृक्षया चक्रेश्वरेण महाराजेन सृष्टं वारिवत् । 'वारी तु गजबन्धनी' इत्यमरः । कृतविषयमहाकाननक्रीडनानां शब्दादिविषयेषु क्रीडनानि विषयक्रीडनानि । कृतानि विषयक्रीडनानि यैस्तेषां मत्तानामसद्विषयव्यापृतनियमनबुद्ध्या चक्रेश्वरेण विरचित गम्भीरं निम्नं कमपि गर्तं यन्त्रकूपमिति मन्वते विचारयन्ति । त्रिजगदभिमतस्थूललक्षं त्रिजगतामभिमतार्थान्विषयीकृत्य वदान्यं तदक्षं वोऽस्थूलां सूक्ष्मां संविदं प्रदेयाद्दिश्यात् । नीरन्ध्रविपिनविहरमाणमत्तमातङ्गग्रहणाय महाराजविरचितवारिवद्विषयादिविश्रृङ्खलविहारपरायणकरणनिकरानियमननिरन्तररथपथविरचितयन्त्रगर्तमिति शिक्षितबुद्धिभिर्निश्चीयमान त्रिभुवनाभिमतार्थप्रदानदीक्षितमक्षं भवतामुभयविभूतिसाक्षात्करणसमर्थां प्रमां प्रदद्यादित्यर्थः ॥

प्राणादीन्संनियम्य प्रणिहितमनसां योगिनामन्तरङ्गे
तुङ्गं संकोच्य रूपं विरचितदहराकाशकृच्छ्रासिकेन ।
प्राप्तं यत्पूरुषेण स्वमहिमसदृशं धाम कामप्रदं वो
भूयात्तद्भूर्भुवःस्वस्त्रयवरिवसितं पुष्कराक्षायुधाक्षम् ॥ ७१ ॥

प्राणादीन्संनियम्य योगतन्त्रोक्तप्रकारेण निरुध्य प्रणिहितमनसामात्मनि नियतचित्तानां योगिनामन्तरङ्गे हृदये तुङ्गमुन्नत रूप गर्भगह्वरैकदेशस्थितनिखिलब्रह्माण्डजातं दिव्यमाङ्गलविग्रहं संकोच्याणूकृत्य विरचितदहराकाशकृच्छ्रासिकेन विरचिता दहराकाशे कृच्छ्रेण निर्बन्धेनासिकावस्थानं येन स तेन पुरुषेण स्वमहिमसदृशं स्ववैभवोपपन्नं धाम स्थान यदक्ष प्राप्त प्रापि । परमाणौ मेरुगिरिस्थितिरिव दहराकाशावस्थानेन संजनितपरिश्रमपरिहरणाय विश्रामयोग्यं चक्राक्षमध्यासितमित्यर्थः । भूर्भुवःस्वस्त्रयवरिवसित लोकत्रयपूजितं पुष्कराक्षायुधाक्षं व. कामप्रदं भूयात् । प्राणादिसमीरणसमाजं संनिरुध्य वशीकृतस्वान्तानां हृदयेषु स्वकीयविग्रहसंकोचपूर्वक सूक्ष्मतरदहराकाशमध्यवर्तिना पुरुषेण सूक्ष्मकस्थलावस्थितिजनितक्लेशापनोदायाधिष्ठित निखिलभुवनपूजितं पद्माक्षायुधाक्षं युष्मदभिलषितप्रदं भूयादित्यर्थः ॥

विद्वान्वीध्रेण धाम्ना चरणनखभुवा बद्धवासस्य मध्ये
चक्राध्यक्षस्य विभ्रत्परिहसितजपापुष्पकोपान्प्रकाशान् ।

व्यापिनी कथ्यते । यत्तत्त्वबोधो यत्स्वरूपविषयप्रमितिर्निश्चितमतिभिर्नारदाद्यैरपि कर्तुं न शक्यः सोऽस्त्रराजो वो दुस्तरां दैवीं दैवकृतां मानुषीं मनुष्यकृतां च विपदं क्षिपतु । 'वाणी च पाञ्चरात्री य कथयति वासुदेवसंकल्पम् । विभवेषु यस्य शक्ती रामप्रमुखास्त्रसंश्रयिणी ॥ संशक्यते न बोद्धुं यत्तत्त्वं नारदाद्यैश्च । दैवीं च मानुषीं च क्षिपतु स वथक्रनायको विपदम् ॥' इत्यर्थः ॥

रूढस्ताराल्वाले रुचिरदलचयः श्यामलैः शस्त्रजालै-
ज्वालाभिः सप्रवालः प्रकटितकुसुमो बद्धसंघैः स्फुलिङ्गैः ।
प्राप्तानां पादमूलं प्रकृतिमधुरया छायया तापहृद्वो
दत्तामुद्दोःप्रकाण्डः फलमभिलषितं विष्णुसंकल्पवृक्षः ॥ ७७ ॥

ताराल्वाले प्रणवरूपालवाले रूढः प्रादुर्भूतः । श्यामलैः शस्त्रजालैः कुन्तशार्ङ्गकृपाणाद्यायुधवृन्दे रुचिरदलचयः रुचिरो दलानां पर्णानां चयः समूहो यस्य सः । ज्वालाभिररुणकिरणविलासैः सप्रवालः सकिसलयः । बद्धसंघैर्बद्धो नद्धः संघः समूहो यैस्तैः स्फुलिङ्गैः पुङ्खानुपुङ्खं निःसरद्भिः कृशानुकणैः प्रकटितकुसुमः । उद्दोःप्रकाण्ड उद्दामानि दोष्येव प्रकाण्डाः स्कन्धा यस्य सः । पादमूलं चरणाब्जसमीपं प्राप्तानां वृक्षस्य पादस्थानीयं मूलं प्राप्तानां प्रकृतिमधुरया स्वभावरमणीयया छायया कान्त्या अनातपेन तापहृत् सांसारिकतापं सूर्यकिरणतापं च हरतीति तापहृत् । विष्णुसंकल्पवृक्षः श्रीरङ्गिसंकल्पभूतकल्पवृक्षो वो युष्माकमभिलषितं दत्ताम् ॥

धाम्नामैरंमदानां निचयमिव चिरस्थायिनां द्वादशानां
मार्तण्डानां समूहं मह इव बहुलं रत्नभासामिवर्द्धिम् ।
अर्चिःसंघातमेकीकृतमिव शिखिनां वाडवाग्रेसराणां
शङ्कन्ते यस्य रूपं स भवतु भवतां तेजसे चक्रराजः ॥ ७८ ॥

यस्य पुरुषस्य रूपं विग्रहं चिरस्थायिनामैरंमदानां वैद्युतानां धाम्नां निचयमिव समूहमिव । द्वादशानां मार्तण्डानां चण्डकिरणानां समूहं समूहाकृतं महस्तेज इव रत्नभासां पद्मरागमणिप्रभासमूहानां बहुलां महत्तरां समृद्धिमिव वाडवाग्रेसराणां वाडवानलादप्यधिकद्युतीनां शिखिनामेकीकृतमर्चिःसंघातमिव शङ्कन्ते विकल्पयन्ति स चक्रराजो भवतां तेजसे सकलजगद्व्याप्तप्रकाशाय भवतु ॥

उग्रंपश्याक्षमुद्यद्भ्रुकुटि समुकुटं कुण्डलस्पष्टदंष्ट्रं
चण्डास्त्रैर्बाहुदण्डैर्लसदनलसमश्मश्रुमलक्ष्योरुकाण्डम् ।
प्रत्यालीढस्थपादं प्रथयतु भवतां पालनव्यग्रमग्रे
चक्रेशोऽकालकालेरितभटचिकटाटोपलोपाय रूपम् ॥ ७९ ॥

निक्षिप्य क्षिप्रमध्यक्षयति जगति यद्दक्षतां दिव्यहेते-
रक्षामामक्षमां वः क्षपयतु भवतामक्षजिल्लक्षमक्षम् ॥ ७४ ॥

(इत्यक्षवर्णनम्)

यदक्ष कर्तृ आजौ रणे रक्षः पक्षेण रक्षसां यः पक्षस्तेन शत निहतं लक्ष्यं वैलक्ष्य लक्ष्यं वैलक्ष्य मीडा यस्य तममरगण रक्षत् । वज्रशिक्षानपेक्षे बलमथनभुजे अक्षीयमाणा प्रवर्धमानां लक्ष्मीमैश्वर्यं क्षिप्र निक्षिप्य निधाय दक्षता स्वकीयसामर्थ्यम् । अघटनाघटकालमित्यर्थः । जगति लोके अध्यक्षयत्यपरोक्षयति । अक्षजिल्लक्ष्य जितेन्द्रियसनकादिलक्ष्य दिव्यहेतेस्तदक्ष भवतामक्षामां महत्तरा नामक्षान्तिम् । असहनतामिति यावत् । क्षपयतु निर्मूलयतु । रणक्षितिविचक्षणराक्षसपरिक्षतसंलक्षितवैलक्ष्यसहस्राक्षपक्षसंरक्षणदीक्षितं जिताक्षचित्तलक्ष्यमनपेक्षितवज्रशिक्षसुराध्यक्षवक्षसक्षयां लक्ष्मीं क्षिप्रं निक्षिप्य स्वदक्षतां दिक्षु प्रत्यक्षयदक्षं भवदक्षामामक्षमां क्षपयत्वित्यर्थः ॥ इत्यक्षवर्णनम् ।

ज्योतिश्चूडालमौलिस्त्रिनयनवदनः षोडशोत्तुङ्गबाहुः
प्रत्यालीढेन तिष्ठन्प्रणवशशधराधारषट्कोणवर्ती ।
निःसीमेन स्वधाम्ना निखिलमपि जगत्क्षेमवन्निर्मिमाणो
भूयात्सौदर्शनो वः प्रतिभटपरुषः पूरुषः पौरुषाय ॥ ७५ ॥

ज्योतिश्चूडालमौलिर्ज्वालाभिरूर्ध्वाग्रजटावान्मौलिर्यस्य सः । त्रिनयनवदनः । षोडशोत्तुङ्गबाहुः । प्रत्यालीढेनावस्थानविशेषेण तिष्ठन्नवतिष्ठमानः । प्रणवेति । तारचन्द्रावाधारौ यस्य षट्कोणचक्रस्य तत्तथा तत्र वर्तत इति षट्कोणवर्ती । निःसीमेन निरवधिकेन स्ववैभवेन निखिलमपि जगत् क्षेमवद्वर्धमानकुशल निर्मिमाणः कुर्वाणः । प्रतिभटपरुष प्रतिपक्षभयंकर इत्यर्थः । सौदर्शनः पुरुषश्चक्रमध्यवर्ती पुमान् भवतां पौरुषाय पुंस्त्वाय भूयात् ॥

वाणी पौराणिकी यं प्रथयति महितं प्रेक्षणं कैटभारेः
शक्तिर्यस्येषुदंष्ट्रानखपरशुमुखव्यापिनी तद्विभूत्याम् ।
कर्तुं यत्तत्त्वबोधो न निशितमतिभिर्नारदाद्यैश्च शक्यो
दैवीं वो मानुषीं च क्षिपतु स विपदं दुस्तरामस्त्रराजः ॥ ७६ ॥

पौराणिकी वाणी य पुरुष कैटभारेः परवासुदेवस्य महित प्रलयप्रकाशितविलीनासकलजगत्सृष्टिकारणतया देवतिर्यङ्मनुष्यस्थावररूपेण चातुर्विध्य प्राप्तैस्तैन जातैः पूजितम् उपकर्तृत्वेनोपकारस्मृतिविभवावतारं इषुदंष्ट्रानखपरशुमुखव्यापिनी रघुनाथायुधभूतबाणमुख वराहदंष्ट्रामुख नृसिंहनखमुख भार्गवपरशुमुख व्याप्तु शीलमस्या अस्तीति व्यापिनी । भवतीति शेषः । इषुदंष्ट्रानखपरशुमुखायुधजातं व्याप्नोति वा । यद्वा यस्य शक्तिस्तदायुधभुव-

ब्रह्मरुद्रादयस्तेषां परिषदा सेवितं दैवतं सुदर्शनपुरुषो वो युष्माकमस्तोकायानल्पाय धाम्ने तेजसे स्तात् । पीतकेशः पीतशत्रुशोणितः । उदाराक्षचक्रः उत्करुणकटाक्षामृतधारासमाप्लावितसमाश्रितजनः । अधरीकृतचन्द्रमण्डलयन्त्रः स्वकीयविग्रहप्रभापटलावर्षीणितचन्द्रमण्डलः । स्वकीयघोरघोषाश्चितशत्रुदलनः प्रणवाङ्कमण्डलः । प्रहरणमण्डितभुजमण्डलः कृशानुज्वालावलीविलासोपलालितमुखः । विषमलोचनः शत्रुनिरसनार्थं निःसमानस्वमोचनः । सुरवरनिकरपरिचरितपदसरसीरुहः सुदर्शनपुरुषो भवतां निरतिशयतेजसे भूयात् ॥

चित्राकारैः स्वचारैर्मितसकलजगज्जागरूकप्रतापो
मन्त्रं तन्त्रानुरूपं मनसि कलयतो मानयन्नात्मगुह्यान् ।
पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयो धाम षण्णां गुणानां
लक्ष्मीं राजासनस्थो वितरतु भवतां पूरुषश्चक्रवर्ती ॥ ८२ ॥

चित्राकारैः पेषणभस्मीकरणखण्डनलुण्ठनकुट्टनादिभेदेन नानाप्रकारा आकाराः स्वरूपाणि येषु ते तैः । स्वचारैः स्वपरिभ्रमणैर्मितसकलजगत् परिच्छिन्ननिखिलभुवनः । जागरूकप्रतापो निस्तन्द्रप्रभावः । यद्वैकं पदम् । परिच्छिन्ननिखिलभुवने जागरूकः प्रतापो यस्य सः । मन्त्रं सौदर्शनं मनुं तन्त्रानुरूपं प्रयोगसिद्धान्तानुरूपं मनसाकलयत आवर्तयत 'आत्मगुह्यान् आत्मनि स्वविषये रहस्यान् । 'मन्त्रं यत्नेन गोपयेत्' इत्युक्तत्वात् । आत्मभक्तानित्यर्थः । मानयन्संभावयन् । उपलालयन्नित्यर्थः । पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयः पञ्चाङ्गन्याससंपत्त्या निर्वर्तितो रिपूणां विजयो येन सः । सुदर्शनषडक्षरेण रिपुविजये प्रस्तुते सति पञ्चाङ्गन्यासः कर्तव्यः रिपुसंहारे तु प्रस्तुते षडङ्गन्यासः कर्तव्य इति मन्त्रानुसंधानक्रमः । यद्वा पञ्चाङ्गानि ज्वालानेम्यरनाभ्यक्षाणि । नेम्यन्तर्भूता ज्वाला पृथगङ्गत्वेनोपचर्यते । तेषां स्फूर्त्या निर्वर्तितो रिपुविजयो येन सः । षण्णां गुणानां ज्ञानबलैश्वर्यवीर्यशक्तितेजसां धाम स्थानम् । राजासनस्थश्चन्द्रमण्डलमासनीकृत्य स्थितः । चक्रवर्ती सुदर्शनमध्यवर्ती पुरुषो भवतां लक्ष्मीं वितरतु । चित्राकारैः कापालिकादिरूपभेदेन नानारूपैः स्वचारैः स्वगूढपुरुषैर्मितसकलजगत् निखिलभुवनस्फुरत्प्रतापः । मन्त्रं गुप्तवादम् । तन्त्रानुरूपं यत्नानुगुणम् । 'तन्त्रं प्रधाने परिच्छेदे' इत्यमरः । मनसि कलयतो हृदयेव विचारयतः । आत्मगुह्यान् स्वकीयरहस्यपुरुषान्मानयन् । पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयः । कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, विनिपातप्रतीकारः, देशकालविभागः, कार्यसिद्धिश्चेति पञ्चाङ्गानि । तेषां स्फूर्त्या निष्पादितः शत्रुविजयो यस्य सः । षण्णां गुणानां संधिविग्रहयानासनद्वैधीभावसंश्रयाणां धाम स्थानम् । राजासनस्थो भद्रासनस्थः । 'नृपासनं यत्तद्भद्रासनं सिंहासनं च तत्' इत्यमरः । स चक्रवर्ती पूरुषो महाराजो भवतां लक्ष्मीं ददातु ॥

अक्षावृत्ताभ्रमालान्यरविवरलुठच्चन्द्रचण्डद्युतीनि
ज्वालाजालावलीदस्फुरदुडुपटलीपाण्डुदिङ्मण्डलानि ।

चक्रेशः सुदर्शनराजः उग्रपश्यतीत्युग्रंपश्यानि अक्षीणि विलोचनानि यस्य तत् । उद्यद्भ्रुकुटि उद्यन्ती भ्रुकुटी भ्रूभङ्गो यस्य तत् । सप्तमुकुटं मुकुटयुक्तम् । कुण्डलि कुण्डले अस्य स्त इति कुण्डलि । स्पष्टे दंष्ट्रे यस्य तत् । चण्डाश्चण्डानि शत्रुखण्डनपण्डितानि अस्त्राणि येषां तैर्दोर्दण्डैर्लसद्रमणीयम् । अनलसमक्षौमलक्ष्योरुकाण्डं ज्वालावर्णेन क्षौमेन प्रत्यक्षप्रतीतिविषयावूरुकाण्डौ यस्य तत् । प्रत्यालीढस्थपादं प्रत्यालीढगतौ तिष्ठत इति प्रत्यालीढस्थौ पादौ यस्य तत् । पातुमव्यग्रं जगद्रक्षणे ससंभ्रमम् । रूपं स्वकीयमाकारम् । अकालकालेरितभटविकटाटोपलोपाय अकालेऽनवसरे कालेन यमेन ईरिताः प्रेरिताश्च ते भटाश्च तेषां विकटाटोप उद्भटव्यापारकोलाहलस्तस्य लोपो नाशस्तस्मै भवतामग्रे पुरस्तात्प्रथयतु प्रकाशयतु ॥

चक्रं कुन्तं कृपाणं परशुहुतवहावङ्कुशं दण्डशक्ती
शङ्खं कोदण्डपाशौ हलमुसलगदावज्रशूलांश्च हेतीन् ।
दोर्भिः सव्यापसव्यैर्दधदतुलबलस्तम्भितारातिदर्पै-
र्व्यूहस्तेजोभिमानी नरकविजयिनो जृम्भतां संपदे वः ॥ ८० ॥

चक्रादिषोडशायुधानि अतुलबलस्तम्भितारातिदर्पैः निःसीमबलेन स्तम्भितो विनाशितो अरातिदर्पः प्रत्यर्थिपराक्रमो यैस्तानि तैः सव्यापसव्यैर्वामदक्षिणैर्दोर्भिर्भुजैर्दधत् नरकविजयिनस्तेजोभिमानी कृत्स्नं तेजो मदीयमिति योऽभिमनुते स तेजोभिमानी व्यूहोऽवतारविशेषो वः संपदे ऐश्वर्याय विजृम्भतां परिस्फुरतु ॥

पीतं केशे रिपोरप्यसृजि रथपथे(दे) संश्रितेऽप्युत्कटाक्षं
चन्द्राधःकारि यन्त्रे वपुषि न दलने मण्डले न सराङ्कम् ।
हस्ते चक्रे च हेतिस्तबकितमसमं लोचने मोचने च
स्तादस्तोकाय धाम्ने सुरवरपरिषत्सेवितं दैवतं वः ॥ ८१ ॥

पीतं केशे रिपोरप्यसृजि चिकुरनिचये शत्रुशोणितविषये च पीतं पीतवर्णं कृतपानं च । पीतवासा इतिवत् । रथपदे(दे) चक्रे संश्रिते समाश्रितविषये च उत्कटाक्षं उत्कटमतिगम्भीरमक्षं यस्य तत् । उत् उन्नता उदारा उत्कटाः कटाक्षा यस्य तत् । यन्त्रे वपुषि च सौदर्शनयन्त्रे विग्रहे च चन्द्राधःकारि चन्द्रमधःकरोतीति चन्द्राधःकारि । यन्त्रे चन्द्रमण्डलं विलिख्य तन्मध्ये प्रणवं निरवद्य तदुपरि पुनः प्रतिष्ठाप्य इति चन्द्राधःकारित्वम् । मनोहरतया स्वप्रभया चन्द्रं निस्तेजस्कं करोतीति चन्द्राधःकारि । दलने मण्डले च शत्रुनिरसने सुदर्शनबिम्बे च सराङ्कं सरो विजयाह्लादजनितनिर्घोषोऽङ्कश्चिह्नं यस्य तत् । सरः प्रणवोऽङ्कश्चिह्नं यस्य तत् । हस्ते चक्रे च हेतिस्तबकितं हेतिभिः स्तबकितं संजातस्तबकं हेतिभिर्वह्निज्वालाभिः स्तबकितं च । लोचने मोचने च नेत्रे शत्रुनिरसने चासमं विषमम् । अशुभमित्यर्थः । असदृशं च । सुरवरपरिषत्सेवितं सुरवर-

ब्रह्मरुद्रादयस्तेषां परिषदा सेवितं दैवत सुदर्शनपुरुषो वो युष्माकमस्तोकायानल्पाय धाम्ने तेजसे स्तात्। पीतकेशः पीतशत्रुशोणितः। उदाराक्षचक्रः उदकरुणकटाक्षामृतधारासमाप्लावितसमाश्रितजनः। अधरीकृतचन्द्रमण्डलयन्त्रः स्वकीयविग्रहप्रभापटलावर्जितचन्द्रमण्डलः। स्वकीयघोरघोषाश्चितशत्रुदलनः प्रणवाङ्कमण्डलः। प्रहरणमण्डितभुजमण्डलः कृशानुज्वालावलीविलासोपलालितमुखः। विषमलोचनः शत्रुनिरसनार्थं निःसमानस्वमोचनः। सुरवरनिकरपरिचरितपदसरसीरुहः सुदर्शनपुरुषो भवतां निरतिशयतेजसे भूयात्॥

चित्राकारैः स्वचारैर्मितसकलजगज्जागरूकप्रतापो

मन्त्रं तन्त्रानुरूपं मनसि कलयतो मानयन्नात्मगुह्यान्।

पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयो धाम षण्णां गुणानां

लक्ष्मीं राजासनस्थो वितरतु भवतां पूरुषश्चक्रवर्ती॥ ८२॥

चित्राकारैः पेषणभस्मीकरणखण्डनलुण्ठनकुट्टनादिभेदेन नानाप्रकारा आकाराः स्वरूपाणि येषु ते तैः। स्वचारैः स्वपरिभ्रमणैर्मितसकलजगत् परिच्छिन्ननिखिलभुवनः। जागरूकप्रतापो निस्तन्द्रप्रभावः। यद्वैकं पदम्। परिच्छिन्ननिखिलभुवने जागरूकः प्रतापो यस्य सः। मन्त्रं सौदर्शनं मनुं तन्त्रानुरूपं प्रयोगसिद्धान्तानुरूपं मनसाकलयत आवर्तयत 'आत्मगुह्यान् आत्मनि स्वविषये रहस्यान्। 'मन्त्रं यत्नेन गोपयेत्' इत्युक्तत्वात्। आत्मभक्तानित्यर्थः। मानयन्संभावयन्। उपलालयन्नित्यर्थः। पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयः पञ्चाङ्गन्यासस्फूर्त्या निर्वर्तितो रिपूणां विजयो येन सः। सुदर्शनषडक्षरेण रिपुविजये प्रस्तुते सति पञ्चाङ्गन्यासः कर्तव्यः रिपुसंहारे तु प्रस्तुते षडङ्गन्यासः कर्तव्य इति मन्त्रानुसंधानक्रमः। यद्वा पञ्चाङ्गानि ज्वालानेम्यरनाभ्यक्षाणि। नेम्यन्तर्भूता ज्वाला पृथगङ्गत्वेनोपचर्यते। तेषां स्फूर्त्या निर्वर्तितो रिपुविजयो येन सः। षण्णां गुणानां ज्ञानबलैश्वर्यवीर्यशक्तितेजसां धाम स्थानम्। राजासनस्थश्चन्द्रमण्डलमासनीकृत्य स्थितः। चक्रवर्ती सुदर्शनमध्यवर्ती पुरुषो भवतां लक्ष्मीं वितरतु। चित्राकारैः कापालिकादिरूपभेदेन नानारूपैः स्वचारैः स्वगूढपुरुषैर्मितसकलजगत् निखिलभुवनस्फुरत्प्रतापः। मन्त्रं गुप्तवादम्। तन्त्रानुरूपं बलानुगुणम्। 'तन्त्रं प्रधाने परिच्छेदे' इत्यमरः। मनसि कलयतो हृद्येव विचारयतः। आत्मगुह्यान् स्वकीयरहस्यपुरुषान्मानयन्। पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयः। कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, विनिपातप्रतीकारः, देशकालविभागः, कार्यसिद्धिश्चेति पञ्चाङ्गानि। तेषां स्फूर्त्या निष्पादितः शत्रुविजयो यस्य सः। षण्णां गुणानां संधिविग्रहयानासनद्वैधीभावसंश्रयाणां धाम स्थानम्। राजासनस्थो भद्रासनस्थः। 'नृपासनं यत्तद्भद्रासनं सिंहासनं च तत्' इत्यमरः। स चक्रवर्ती पूरुषो महाराजो भवतां लक्ष्मीं ददातु॥

चक्रेशः सुदर्शनराजः उग्रपश्यतीत्युग्रपश्यानि अक्षीणि विलोचनानि यस्य तत्। उद्य-द्भ्रुकुटि उद्यन्ती भ्रुकुटी भ्रूभङ्गो यस्य तत्। समुकुटं मुकुटयुक्तम्। कुण्डलि कुण्डले अस्य स्त इति कुण्डलि। स्पष्टे दंष्ट्रे यस्य तत्। चण्डास्त्रैश्चण्डानि शत्रुखण्डनपण्डितानि अस्त्राणि येषां तैर्बाहुदण्डैर्लसद्रमणीयम्। अनलसमक्षौमलक्ष्योरुकाण्डं ज्वालावर्णेन क्षौमेन प्रत्यक्षप्रतीतिविषयावूरुकाण्डौ यस्य तत्। प्रत्यालीढस्थपादं प्रत्यालीढगतौ तिष्ठत इति प्रत्यालीढस्थौ पादौ यस्य तत्। पालनव्यग्रं जगद्रक्षणे ससंभ्रमम्। रूपं स्वकीयमाकारम्। अकालकालेरितभटविकटाटोपलोपाय अकालेऽनवसरे कालेन यमेन ईरिताः प्रेरिताश्च ते भटाश्च तेषां विकटाटोपः उद्भटव्यापारकोलाहलस्तस्य लोपो नाशस्तस्मै भवतामग्रे पुरस्तात्प्रथयतु प्रकाशयतु॥

चक्रं कुन्तं कृपाणं परशुहुतवहावङ्कुशं दण्डशक्ती
शङ्खं कोदण्डपाशौ हलमुसलगदावज्रशूलांश्च हेतीन्।
दोर्भिः सव्यापसव्यैर्दधदतुलबलस्तम्भितारातिदर्पै-
र्व्यूहस्तेजोभिमानी नरकविजयिनो जृम्भतां संपदे वः॥ ८०॥

चक्रादिषोडशायुधानि अतुलबलस्तम्भितारातिदर्पैः निःसीमबलेन स्तम्भितो विनाशितो अरातिदर्पः प्रत्यर्थिपराक्रमो यैस्तानि तैः सव्यापसव्यैर्वामदक्षिणैर्दोर्भिर्भुजैर्दधत् नरकवि-जयिनस्तेजोभिमानी कृत्स्नं तेजो मदीयमिति योऽभिमनुते स तेजोभिमानी व्यूहोऽवतार-विशेषो वः संपदे ऐश्वर्याय विजृम्भतां परिस्फुरतु॥

पीतं केशे रिपोरप्यसृजि रथपथे(दे) संश्रितेऽप्युत्कटाक्षं
चन्द्राधःकारि यन्त्रे वपुषि च दलने मण्डले च स्वराङ्कम्।
हस्ते चक्रे च हेतिस्तबकितमसमं लोचने मोचने च
स्तादस्तोकाय धाम्ने सुरवरपरिषत्सेवितं दैवतं वः॥ ८१॥

पीतं केशे रिपोरप्यसृजि चिकुरनिचये शत्रुशोणितविषये च पीतं पीतवर्णं कृतपानं च। पीता गावः इतिवत्। रथपथे(दे) चक्रे संश्रिते समाश्रितविषये च उत्कटाक्षं उत्कटमतिगम्भीरमक्षं यस्य तत्। उत् उन्नता उदारा उत्कटाः कटाक्षा यस्य तत्। यन्त्रे वपुषि च सौदर्शनयन्त्रे विग्रहे च चन्द्राधःकारि चन्द्रमधःकरोतीति चन्द्राधःकारि। प्र-थमं चन्द्रमण्डलं विलिख्य तन्मध्ये प्रणवं विरचय्य तदुपरि पुरुषः प्रतिष्ठाप्य इति चन्द्रा-धःकारित्वम्। मनोहरतया स्वप्रभया चन्द्रं निस्तेजस्कं करोतीति चन्द्राधःकारि। दलने मण्डले च शत्रुनिरसने सुदर्शनबिम्बे च स्वराङ्कं स्वरो विजयाह्लादजनितनिर्घोषोऽङ्को लाञ्छनं यस्य तत्। स्वरः प्रणवोऽङ्कश्चिह्नं यस्य तत्। हस्ते चक्रे च हेतिस्तबकितं हेतिभिः शस्त्रैः संजातस्तबकं हेतिभिर्वह्निज्वालाभिः स्तबकितं च। लोचने मोचने च नेत्रे शत्रुनिरासार्थं स्वमोचने चासमं विषमम्। अयुग्ममित्यर्थः। असदृशं च। सुरवरपरिषत्सेवितं सुरवरा

ब्रह्मरुद्रादयस्तेषां परिषदा सेवितं दैवतं सुदर्शनपुरुषो वो युष्माकमस्तोकायानल्पाय धाम्ने तेजसे स्तात् । पीतकेशः पीतशत्रुशोणितः । उदाराक्षचक्रः उत्करुणकटाक्षामृतधारासमाप्लावितसमाश्रितजनः । अधरीकृतचन्द्रमण्डलयन्त्रः स्वकीयत्रिग्रहप्रभापटलावधीरितचन्द्रमण्डलः । स्वकीयघोरघोषान्वितशत्रुदलनः प्रणवाङ्कमण्डलः । प्रहरणमण्डितभुजमण्डलः कृशानुज्वालावलीविलासोपलालितमुखः । विषमलोचनः शत्रुनिरसनार्थं निःसमानस्वमोचनः । सुरवरनिकरपरिचरितपदसरसीरुहः सुदर्शनपुरुषो भवतां निरतिशयतेजसे भूयात् ॥

चित्राकारैः स्वचारैर्मितसकलजगज्जागरूकप्रतापो
मन्त्रं तन्त्रानुरूपं मनसि कलयतो मानयन्नात्मगुह्यान् ।
पश्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयो धाम षण्णां गुणानां
लक्ष्मीं राजासनस्थो वितरतु भवतां पूरुषश्चक्रवर्ती ॥ ८२ ॥

चित्राकारैः पेषणभस्मीकरणखण्डनलुण्ठनकुट्टनादिभेदेन नानाप्रकारा आकाराः स्वरूपाणि येषु ते तैः । स्वचारैः स्वपरिभ्रमणैर्मितसकलजगत् परिच्छिन्ननिखिलभुवनः । जागरूकप्रतापो निस्तन्द्रप्रभावः । यद्वैकं पदम् । परिच्छिन्ननिखिलभुवने जागरूकः प्रतापो यस्य सः । मन्त्रं सौदर्शनं मनुं तन्त्रानुरूप प्रयोगसिद्धान्तानुरूपं मनसाकलयत आवर्तयत आत्मगुह्यान् आत्मनि स्वविषये रहस्यान् । 'मन्त्र यत्नेन गोपयेत्' इत्युक्तत्वात् । आत्मभक्तानित्यर्थः । मानयन्संभावयन् । उपलालयन्नित्यर्थः । पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयः पञ्चाङ्गन्याससपर्यया निर्वर्तितो रिपूणां विजयो येन सः । सुदर्शनषडक्षरेण रिपुविजये प्रस्तुते सति पञ्चाङ्गन्यासः कर्तव्यः रिपुसंहारे तु प्रस्तुते षडङ्गन्यासः कर्तव्य इति मन्त्रानुसंधानक्रमः । यद्वा पञ्चाङ्गानि ज्वालानेम्यरनाभ्यक्षाणि । नेम्यन्तर्भूता ज्वाला पृथगङ्गत्वेनोपचर्यते । तेषां स्फूर्त्या निर्वर्तितो रिपुविजयो येन सः । षण्णां गुणानां ज्ञानबलैश्वर्यवीर्यशक्तितेजसां धाम स्थानम् । राजासनस्थश्चन्द्रमण्डलमासनीकृत्य स्थितः । चक्रवर्ती सुदर्शनमध्यवर्ती पुरुषो भवतां लक्ष्मीं वितरतु । चित्राकारैः कापालिकादिरूपभेदेन नानारूपैः स्वचारैः स्वगूढपुरुषैर्मितसकलजगत् निखिलभुवनस्फुरत्प्रतापः । मन्त्रं गुप्तवादम् । तन्त्रानुरूप यत्नानुगुणम् । 'तन्त्रं प्रधाने परिच्छदे' इत्यमरः । मनसि कलयतो हृदयेव विचारयतः । आत्मगुह्यान् स्वकीयरहस्यपुरुषान्मानयन् । पञ्चाङ्गस्फूर्तिनिर्वर्तितरिपुविजयः । कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, विनिपातप्रतीकारः, देशकालविभागः, कार्यसिद्धिश्चेति पञ्चाङ्गानि । तेषां स्फूर्त्या निष्पादितः शत्रुविजयो यस्य सः । षण्णां गुणानां संधिविग्रहयानासनद्वैधीभावसंश्रयाणां धाम स्थानम् । राजासनस्थो भद्रासनस्थः । 'नृपासनं यत्तद्भद्रासनं सिंहासनं च तत्' इत्यमरः । स चक्रवर्ती पूरुषो महाराजो भवतां लक्ष्मीं ददातु ॥

चक्रान्ताक्रान्तचक्राचलचलितमहीचक्रवालार्तशेषा-

ण्यस्त्रग्रामाग्रिमस्य प्रददतु भवतां प्रार्थितं प्रस्थितानि ॥ ८३ ॥

अक्षावृत्ताभ्रमालानि अक्षे आवृत्ता पौनःपुन्येन कृतावर्ता अभ्रमाला मेघपङ्क्तिर्येषां तानि। यद्वा अक्षेणाक्रान्ता मेघपङ्क्तिर्येषां तानि। अरेति। अरविवरेषु लुठन्तौ परिवर्तमानौ चन्द्रचण्डद्युती निशाकरदिवाकरौ येषां तानि । ज्वालेति। ज्वालाजालैरवलीढा आस्वादिता। स्पृष्टेत्यर्थः। अत एव स्फुरन्ती शीर्यन्ती उडुपटली नक्षत्रवृन्दं तया पाण्डु धवलं दिङ्मण्डलं येषां तानि। चक्रेति। चक्रस्यान्तः प्रधिस्तेनाक्रान्तः क्षुण्णश्चक्राचलश्चक्रवालाद्रिस्तेन चलितं कम्पितं महीचक्रवालं भूमण्डलं तेनार्तः पीडितः शेषोऽनन्तो येषां तानि। अस्त्रग्रामाग्रिमस्य प्रस्थितानि प्रयाणानि भवतां प्रार्थितं प्रददतु ॥

शूलं त्यक्तात्मशीलं सृणिरणुकघृणिः पट्टिशः स्पष्टसादः

शक्तिः शालीनशक्तिः कुलिशमकुशलं कुण्ठधारः कुठारः।

दण्डश्चण्डत्वशून्यो भवति तनु धनुर्यत्पुरस्तात्स वस्ता-

द्ब्रह्मास्त्राशेषास्त्रवर्गो रथचरणपतिः कर्मणे शार्मणाय ॥ ८४ ॥

यत्पुरस्तात् यस्य पुरुषस्य पुरस्तात् पुरतः शूलं त्यक्तात्मशीलं त्यक्तमात्मशीलं शत्रुसंहारनैपुण्यरूपस्वभावो येन तत्। सृणिरङ्कुशः अणुकघृणिः अणुका नष्टा घृणयो यस्य सः। पट्टिश आयुधविशेषः स्पष्टसादः स्पष्टो व्यक्तः सादो विशरणं यस्य सः। शक्तिः शालीनशक्तिः शालीना अधृष्टा शक्तिर्यस्याः सा। 'स्यादधृष्टस्तु शालीनः' इत्यमरः। कुलिशं वज्रमकुशलम्। कुठारः कुण्ठधारः। दण्डः प्रचण्डत्वशून्यः प्रचण्डत्वेन कार्येण शून्यो विनाकृतः। धनुश्चापं तनु क्षीणं भवति। ब्रह्मास्त्राशेषास्त्रवर्गो रथचरणपतिर्वः शार्मणाय शर्मणो ब्रह्मानन्दस्य साधनं शार्मणं तस्मै कर्मणे स्तात् ॥

क्षुण्णाजानेयवृन्दं क्षुभितरथगणं सन्नसांनाह्ययूथं

क्ष्वेलासंरम्भहेलाकलकलविगलत्पूर्वगीर्वाणगर्वम्।

कुर्वाणः सांपरायं रथचरणपतिः स्थेयसीं वः प्रशस्ति

दुग्धां दुग्धाब्धिभासं भयविवशसुनासीरनासीरवर्ती ॥ ८५ ॥

भयविवशसुनासीरनासीरवर्ती। हे इन्द्र, भयं मा गाः अहमेव सर्वासुरान्भस्मीकरिष्य इति वदन् युद्धसन्नद्धः पुरत एव धावतीत्यर्थः। रथचरणपतिः। क्षुण्णाजानेयवृन्दं क्षुण्ण आजानेयाना (अश्वविशेषाणा) वृन्दः समूहो यस्मिन्कर्मणि तत्। क्षुभितरथगणं क्षुभितो जर्जरीकृतः स्यन्दनसमूहो यस्मिन्कर्मणि तत्। सन्नसांनाह्ययूथं सन्नं विशीर्णं सनद्धाना यूथं यस्मिन्कर्मणि तत्। क्ष्वेलेति। क्ष्वेला विजयनिमित्तकोल्लासजनितसिंहनादास्तासां संरम्भाः सम्भ्रमाश्च एव हेला रथेन रथभञ्जनं हयेन हयताडनमित्येवमादिकाः क्रीडास्तासां कलकलाः कोलाहलाश्च

तैविंगलद्विर्गलन्पूर्वगीर्वाणानां दैत्यानां गर्वो यस्मिन्कर्मणि तत् सांगरागं युद्धं कुर्वाणो रथचरणपतिर्वः स्थेयसीं स्थिरतरां दुग्धाब्धिभासं क्षीराब्धिनिभां प्रशस्तिं कीर्तिं दुग्धां पूरयतु ॥

दुह्यद्दोःशालिमालिप्रहरणरभसोत्तानिते वैनतेये
विद्राति द्राक्प्रयुक्तः प्रधनभुवि परावर्तमानेन भर्त्रा ।
निर्जित्य प्रत्यनीकं निरवधिकचरद्धास्तिकाश्वीयरथ्यं
पथ्यं विश्वस्य दाश्वान्प्रथयतु भवतो हेतिरिन्द्रानुजस्य ॥ ८६ ॥

दुह्यद्दोःशालिमालिप्रहरणरभसोत्तानिते दुह्यन्ती शत्रुनिरसनसमर्थे च ते च दोर्षी भुजौ ताभ्यां शाली रमणीयः स चासौ माली च । अथ दुह्यंश्चासौ दोःशाली माली च तस्य प्रहरणानि गदाताडनानि तेषां रभसो रयस्तेनोत्तानिते विमुखीकृते वैनतेये द्राक् शीघ्रं विद्राति पलायमाने प्रधावति सति प्रधनभुवि युद्धभूमौ परावर्तमानेन प्रतिपक्षाभिमुखं प्रतिनिर्वर्तमानेन भर्त्रा प्रयुक्तः । निरवधिकचरद्धास्तिकाश्वीयरथ्यं हास्तिकं हस्तिवृन्दं अश्वीयमश्ववृन्दं रथ्या रथवृन्दं निरवधिकं निःसङ्ख्याश्चरन्तो हास्तिकाश्वीयरथ्या यस्य तत् । प्रत्यनीकं प्रत्यर्थिसैन्यं निर्जित्य विश्वस्य पथ्यं हितं दाश्वान् प्रददान इन्द्रानुजस्य हेतिर्भवतो युष्मान्प्रथयतु प्रख्यापयतु ॥

नन्दिन्यानन्दशून्ये गलति गणपतौ व्याकुले बाहुलेये
चण्डे चाकित्यकुण्ठे प्रमथपरिषदि प्राप्तवत्यां प्रमाथम् ।
उच्छिद्याजौ बलिष्ठं बलिजभुजवनं यो ददावादिभिक्षो-
र्भिक्षां तत्प्राणरूपां स भवदकुशलं कृष्णहेतिः क्षिणोतु ॥ ८७ ॥

आजौ युद्धे नन्दिनि रुद्रप्रमथविशेषे आनन्दशून्ये आनन्दरहिते सति । सदा सुस्थितोऽपि नन्दी सुदर्शनभयान्नित्यं दुःखी बभूवेत्यर्थः । गणपतौ गजानने भयाद्गलति विद्राति सति । बाहुलेये स्कन्दे व्याकुले इतिकर्तव्यतामूढे सति । चण्डनामधेयप्रमथे च चाकित्यकुण्ठे भयमुकुलिते सति । प्रमथपरिषदि रुद्रभक्तसमूहे प्रमाथमेवंप्रकारेण विलोडनं प्राप्तवत्यां सत्यां बलिष्ठं बलवत्तरं बलिजभुजवनं बाणासुरबाहुकाननमाच्छिद्य लुत्वा । बिल्लेति धातुः । आदिभिक्षोर्भिक्षुकाणामाद्यस्य कापालिकस्य तत्प्राणरूपां बाणासुरप्राणस्वरूपां भिक्षां यः कृष्णहेतिर्ददौ वितनार स भवदकुशलं भावत्कामङ्गलं क्षिणोतु नाशयतु ॥

रक्तौघाभ्यक्तमुक्ताफललुलितलसद्दीप्तिवृद्धौ महाब्धौ
संध्यासंबन्धताराजलधरशबलाकाशनीकाशकान्तौ ।
गम्भीरारम्भमम्भश्चरमसुरकुलं येदविघ्नं विनिघ्न-
ज्ञिर्विघ्नं वः प्रसूतां व्यपगतविपदं संपदं चक्रराजः ॥ ८८ ॥

रक्तौघाभ्यक्तमुक्ताफललुलितलसद्दीप्तिवृद्धौ समुद्रे असुरदारकराक्षसभुजावानन्तर-

निर्यद्रक्तधाराभिरभ्यक्तानि प्लावितवया रञ्जितानि मुक्ताफलानि तैर्लुलिता सवलिता लल-द्वीचिर्वृद्धिश्चलत्तरङ्गसमृद्धिर्यस्य तस्मिन् । संध्येति । संध्यायाः संबन्धात् तारा नक्षत्राणि जलधरा मेघाश्च तैः शवलः नैल्यशोणिम्नां सांकर्येण सजातवर्णः शवलश्चासावाकाशश्च तेन निकाशा कान्तिर्यस्य स तस्मिन्महाब्धौ रक्ताक्तमुक्ताफलानां रङ्गपरम्परासङ्कुलतरङ्गे संध्यारागरञ्जिततारागणमेघलेखापरम्परासमन्वितवियत्तलसंकाशप्रकाश इत्यर्थः । अम्भश्चरं जलचराकारितं अत एव गम्भीरारम्भं कार्यानुमेयोद्योगं वेदविघ्नं श्रुतिप्रत्यूहम् । वेदापहा-रचतुरमित्यर्थः । अथवा 'वेगनिघ्न' इति पाठः । वेगायत्तम् । असुरकुलं निर्विघ्नं यथा स्यात्तथा निघ्नन्निर्मूलयश्चक्रराजो व्यपगतविपदं निरस्तसमस्तविपत्परम्परां संपदं प्रसूताम् ॥

काशीविप्लोषचैद्यक्षपणधरणिजध्वंससूर्यापिधान-
ग्राहद्वेधात्वमालित्रुटनमुखकथावस्तुसत्कीर्तिगाथाः ।
गीयन्ते किंनरीभिः कनकगिरिगुहागेहिनीभिर्यदीया
देयाद्दैतेयवैरी स सकलभुवनश्लाघनीयां श्रियं वः ॥ ८९ ॥

काश्या विप्लोषो दाहः । चैद्यक्षपणं शिशुपालशिरःकृन्तनम् । धरणिजध्वंसो नरका-सुरनिरसनम् । सूर्यापिधानं सैन्धववधाय रव्याच्छादनम् । ग्राहद्वेधात्वं नक्रशरीरविपाट-नम् । मालित्रुटनं मालिराक्षसभञ्जनम् । मुखमादिर्यासां ताः । तथा ताश्च ताः कथाश्चा-ख्यानानि च ता एव वस्तून्यर्थानि यासां गाथानां ता यदीया यस्य चक्रपुरुषस्य संबन्धिन्यः कीर्तिगाथाः कीर्तिविषयगीतयः कनकगिरिगुहागेहिनीभिः किंनरीभिर्गीयन्ते । स दैतेयवैरी सुदर्शनपुरुषो वः सकलभुवनश्लाघनीयां समस्तजगत्पूज्यां श्रियं संपदं देयात् ॥

नानावर्णान्विकृण्वन्विरचितभुवनानुग्रहान्विग्रहान्य-
श्चक्रेष्वष्टासु मृष्टासुरवरतरुणीकण्ठकस्तूरिकेषु ।
आतारादर्णमालावधिषु वसति यः पूरुषो वः स देया-
द्ध्यैरुद्भूतसत्त्वैरुपहितमवहिर्ध्वान्तमध्वान्तवर्ती ॥ ९० ॥

यः पुरुषो मृष्टासुरवरतरुणीकण्ठकस्तूरिकेषु मृष्टा मार्जिता हिरण्याक्षाद्यसुरवरतरुणी-कण्ठकस्तूरिका यैस्तानि तेषु । आतारादर्णमालावधिषु तारः प्रणवस्तमारभ्य आतारात् अर्णमाला अक्षरपङ्क्तिः । मातृकेत्यर्थः । सा अवधिर्येषां तानि तेषु । अष्टसु चक्रेषु प्रथ-मचक्रं प्रणवमन्त्रकम् । अष्टमं चक्रं मातृकामन्त्रकम् । अथवा प्रतिचक्रमन्तस्तारवेष्टितं बहिर्मातृकावेष्टितं च । तारानुतारावेष्टितम् । तस्मादष्टापि चक्राणि आतारार्णमालावधीनि ।
अष्टानां चक्राणामप्याद्दिर्गुण्यसहितोक्तावस्थानक्रमः किंचिल्लिख्यते—पञ्चारं प्रणवमन्त्रकं ब्रह्मसंज्ञकमक्षीकृतप्रथमचक्रम् । चतुरं विष्णुचक्रमक्षीकृतद्वितीयचक्रम् । षडरं नारा-यणचक्रमक्षीकृततृतीयचक्रम् । अष्टारं वासुदेवचक्रमक्षीकृतचतुर्थचक्रम् । द्वादशारम-च्युतचक्रमक्षीकृतपञ्चमचक्रम् । षोडशारं नरसिंहचक्रमक्षीकृतषष्ठचक्रम् । शतारं सुद-

र्शनचक्रमक्षीकृतसप्तमचक्रम् । सहस्रारं मातृकाचक्रमक्षीकृताष्टमचक्रम् । अनेन प्रकारेणावस्थितेष्वष्टसु चक्रेषु नानावर्णा नीलपीतादिवर्णा येषां विग्रहाणां तान् विरचितभुवनानुग्रहान् विग्रहान् मूर्तिभेदान्विजृम्भन् निदर्शयन् वसतीति । अष्टचक्रस्थितपुरुषवर्णविग्रहभेदोऽहिर्बुध्न्यसंहितायाम्—'सोमसूर्यदहनप्रभोज्ज्वलं चक्रमेतदुदितं महामुने । वाङ्मय सकलमन्त्रसंमित शब्दनन्दमखिलं यदुन्नतम् ॥ ब्रह्मचक्रमुदितं यदान्तरं केवलं सकलधीप्रदं मुने । विष्णुचक्रमुदितं यदद्भुतं व्याप्तिकान्तिमतिविक्रमप्रदम् ॥ यत्तृतीयमुदित महाद्भुतं चक्रमुज्ज्वलयशोर्थद तु तत् । यत्तु चक्रमुदितं तुरीयकं मोक्षदं मुनिगणोदित मुने ॥ पञ्चमं विजयदायि कीर्तितं षष्ठमुग्रमपमृत्युनाशनम् ॥ ब्रह्मवर्चससंविधायिसप्तमं संपदर्थविजयार्थमष्टमम् ॥ एकशोऽस्यश इदं गदितं फलं ते चक्राष्टके सकलयोगिमुनीन्द्रवन्द्ये । वर्षायुतैर्बहुभिरप्यखिलात्मकस्य शक्त्या न विस्तृतिरमुष्य मया विधातुम् ॥ मन्त्राक्षरग्रथितभागविभेदपूर्वं मन्त्री यजेत विधिवन्मनुदेवतास्ताः ॥ आकारशक्तिपरिवारविभूषणास्त्रवीर्यप्रभावविजयैश्च विचिन्तयेत्ताः ॥ आद्यं निरञ्जनमशेषजगत्प्रसूतिं त्राणप्रसादि नियमाद्यदनुग्रहस्थम् । संपूर्णशक्तिमतरङ्गमहार्णवाभं ध्यायेद्धरिं प्रणवगोचरमादिचक्रे ॥ श्वेतं प्रसन्नवदनं कमलायताक्षं पीताम्बरं पृथुलवक्षसमात्मयोनिम् । पीनोरुदीर्घभुजवृन्दधृतारिशङ्खकौमोदकीसरसिजं खलु विष्णुचक्रे ॥ श्यामं किरीटिनमुदारचतुर्भुजस्थकौमोदकीकमलवारिजचक्रम् । नारायणं नयननन्दनमादिदेवं ध्यायेच्छ्रिया सह तृतीयपदस्थचक्रे ॥ कुन्देन्दुगौरमरविन्ददलायताक्षं शुद्धाक्षमालममलोद्यतबोधमन्त्रम् बाहुद्वये विधृतचक्रविशुद्धशङ्खं तं वासुदेवमवधेहि तुरीयचक्रे ॥ शङ्खारिपङ्कजगदाङ्कुशशार्ङ्गसीरसौनन्दकान्दधतमष्टभिरुग्रहस्तैः । तार्क्ष्यस्थितं रजतशैलनिभं पुराणं संचिन्तयेदजितचक्रगतं पुमांसम् ॥ क्रूरोग्रवक्त्रनखकोटिनिकृत्तदैत्यवक्षस्थलोच्छलितशोणितदिग्धदेहम् । घोरप्रकाशनयनत्रयदुर्निरीक्ष्यं षष्ठे विचिन्तय मुने नरसिंहमीशम् ॥ सोमाग्निसूर्यकिरणोद्गमपुञ्जकुञ्जमध्यस्थितं विधृतपद्मगदादिशङ्खम् । छन्दःस्थित भुवनकारणमप्रमेयं श्रीशं विचिन्तय मुने पुरुषं पुराणम् ॥ गोक्षीरशङ्ख हिमदीधितिदेवसिन्धुकुन्दप्रभाविमलपङ्कजशङ्खहस्ता । स्मेरप्रसन्नवदना कमलायताक्षी ध्येया स्वचक्रभवनोपरिमातृकाख्या ॥' इति । यः पुरुषोऽध्वान्तवर्ती । वाङ्मनसयोरविषय इत्यर्थः । अथवा ध्वान्तसंज्ञाज्ञानरहितयोगिहृत्पद्ममासीन इत्यर्थः । स व उद्धूतसर्वरुद्धूतानि प्रकम्पितानि । प्रापितनरकाणीति यावत् । सत्त्वानि जन्तुसमूहानि यैः । अथवोद्धूतसर्वविनाशितसत्त्वगुणैः । व्यध्वैः कुमार्गैः । अवैदिकमार्गैरिति यावत् । उपहितं विनिहितम् । संपादितमिति यावत् । अयद्विध्वान्तमन्तस्तिमिरम् । दृष्टा दृष्टहानिकरमज्ञानमित्यर्थः ॥

द्वात्रिंशत्षोडशाष्टप्रभृतिपृथुभुजस्फूर्तिभिर्मूर्तिभेदैः
काले चक्रषट्के प्रकटितविभवः पञ्चकृत्यानुरूपम् ।
अर्थानामर्थितानामहरहरखिलं निर्विलम्बैर्विलम्बैः
कुर्वाणो भक्तवर्गं कुशलिनमवतादायुधग्रामणीर्वः ॥ ९१ ॥

अभिव्यक्तसौन्दर्ये । एतद्यन्त्रमध्यस्थितस्य सुदर्शनपुरुषस्य रक्तवर्णत्वेन रक्ताम्बरत्वेन रक्तकेशत्वेन रक्तनयत्वेन च कोणार्णसरोजषट्कं कपिशगुणं भवति । किं चैतद्यन्त्रं कुङ्कुमागरुधातुचन्दनरसकल्प्यं तस्मादपि च कोणादि त्रिषट्कं कपिशगुणं भवति । किं च मन्त्रवाच्यसुदर्शनस्वामिरूपत्वेन तद्वाचकवर्णानां वर्णाधारत्वेन कोणानां च कोणसंबन्धित्वेन सरोजानां च कपिशगुणत्वं युक्तम् । श्रीवाणीपूर्विकाभिः । पूर्विकाशब्देन वाग् मृडानी च गृह्यते । विलसत आनन्दपरवशान् । अथवा शक्तिभिरुपलक्षितान् । विकसत आश्रितरक्षणोन्मुखान् । केशवादीन् द्वादशमूर्तीर्दधति वहति वासुदेवाद्युद्देशेन समष्टिभूतवासुदेवादीनां व्यष्टिभूतस्य केशवादित्रिकचतुष्टयस्य वासुदेवादिसमष्टिभूतश्रीवाणीवाङ्मृडानीनां व्यष्टिभूताः श्रीवाणीवाङ्मृडान्यः शक्तयः वासुदेवव्यष्टिभूतकेशवनारायणमाधवानां वासुदेवशक्तिः श्रीव्यष्टिभूतास्तिस्रः श्रियः प्रत्येकं शक्तयः सङ्कर्षणव्यष्टिभूतगोविन्दविष्णुमधुसूदनानां संकर्षणशक्तिव्यष्टयस्तिस्रो वाण्यः प्रत्येकं शक्तयः । प्रद्युम्नव्यष्टिभूतत्रिविक्रमवामनश्रीधराणां समष्टिशक्तिव्यष्टयतिस्रो वाचः प्रत्येकं शक्तयः । अनिरुद्धव्यष्टिभूतहृषीकेशपद्मनाभदामोदराणामनिरुद्धशक्तिव्यष्टिभूतास्तिस्रो मृडान्यः प्रत्येक शक्तयः । एवंप्रकारेण श्रीवाणीवाङ्मृडानीयुक्तान् केशवादीन्दधति । तारान्ते तारः प्रणवोऽन्तश्चरमसीमा यस्य यन्त्रस्य तस्मिन् । भूपुरादौ भूपुरं चतुष्कोणभूबिम्बमादौ बाह्ये यस्य यन्त्रस्य तत्तस्मिन् । अथवा साधकाः प्रथमभूपुरमधिश्रित्य पश्चात्सर्वलक्षणोपेतं वासमण्डपमधिगत्य तदनन्तरं षट्सरोजानि क्रमेण संसेव्य ततः षडराणि प्रविश्य पश्चात्तद्गतमन्त्राक्षराण्यनुसंधाय ततः सुधाकरबिम्बं संपूज्य तदनन्तरं सुदर्शनगर्भ तारमादाय सुखिनो भवन्ति तस्मायस्य यन्त्रस्य भूपुरमाद्यं तारोऽन्ते तस्मिन् रथचरणगदाशार्ङ्गखड्गाङ्किताशे रथचरणादिभिरङ्किता आशाः प्राच्यादिदिशो यस्य यन्त्रस्य तस्मिन् । तन्त्रोदिते सुदर्शनप्रतिपादकतन्त्रोदिते यन्त्रे कृतपदं विरचितस्थानं लक्ष्मीसखस्य श्रीरङ्गिणो लक्ष्म असाधारणधर्मः स्फुरतु संनिधत्ताम् ॥

दंष्ट्राकान्त्या कडारे कपटकिटितनोः कैटभारेरधस्ता-
दूर्ध्वे हास्येन विद्धे नरहरिवपुषो मण्डले वासवीये ।
प्राक्प्रत्यक्सांध्यसान्द्रच्छविभरभरिते व्योम्नि विद्योतमानो
दैतेयोत्पातशंसी रविरिव रहयत्वस्त्रराजो रुजं वः ॥ ९३ ॥

अधस्तात् पूर्वश्लोकोक्तयन्त्रस्याधोभागे । भूप्रदेश इत्यर्थः । कपटकिटीतनोः कुहनावराहमूर्तेः कैटभारे रङ्गिणो दंष्ट्राकान्त्या दन्तकान्त्या कडारे कपिलवर्णे ऊर्ध्वं आकाशे नरहरिवपुषो नृसिंहविग्रहस्य रङ्गिणो हासेन विद्धे धवले वासवीये माहेन्द्रमण्डले विद्धे यन्त्रे स्थितः सन् प्राक्प्रत्यक्सांध्यसान्द्रच्छविभरभरिते प्राक् च प्रत्यक् च प्राक्प्रत्यञ्चौ तयोः सन्ध्ययोः संबन्धिनी प्राक्प्रत्यक्सांध्या सान्द्रा निबिडा चासौ छविश्च तस्या भरोऽतिशयस्तेन भरिते व्योम्न्याकाशे दैतेयोत्पातशंसी दैतेयानामुत्पातः प्रणाशस्तं शसितुं शील-

द्वात्रिंशद्भुजाश्च षोडशभुजाश्चाष्टौ भुजाश्च द्वात्रिंशत्षोडशाष्टभुजाः प्रभृतयो येषां ते। पृथवो मांसला दीर्घाश्च ते भुजा बाहवश्च तेषां स्फूर्तयो विजृम्भणानि येषां मूर्तिभेदानां ते तैर्मूर्तिभेदैर्विग्रहविशेषैः कालाद्यैर्नाभित्रयसयुक्तं नेमिषट्कविराजित अरपञ्चकान्वितं कालचक्रमाद्यं येषां चक्राणां तस्मिन् चक्रषट्के अरं पुरुषचक्र त्रिंशदर प्रकृतिचक्रम् एकादशारं महच्चक्रम् अष्टारमहंकारचक्रम् चतुर्विंशत्यरं पुरुनेमिकं जगच्चक्रम् कालपुरुषप्रकृतिमहदहंकारजगत्सज्ञकानां चक्राणां षट्कं तस्मिन् कालचक्रमध्ये स्थितः पुरुषो द्वात्रिंशद्भुजः । पुरुषचक्रमध्यवर्ती पुमान् षोडशभुजः । प्रकृतिचक्रमध्यवर्ती पुरुषोऽष्टभुजः । महच्चक्रमध्यालंकारभूतः पुरुषः षड्भुजः । अहंकारमध्यवर्ती पुमान् चतुर्भुजः । विश्वचक्रमध्यवर्ती पुमान् द्विभुजः । तदुक्तम्—'ततश्चक्रमय सर्वं जगत्स्थावरजङ्गमम् । चक्रात्मानमनाद्यन्तं कालं प्रथमतः शृणु ॥ त्रिनाभियुक्त षण्नेमि पञ्चारं चक्रमव्ययम् । संवत्सरात्मा यत्तत्कालचक्रमिति स्मृतम् ॥ तद्वशे वर्तते नित्य चेतनाचेतनात्मकम् । परिवर्तयते देवस्त्वेतचक्ररूपधृत् ॥ अर तत्पुरुषं चक्रं पुरुषो येन धार्यते । चक्र त्रिंशदरं प्रोक्त शक्ति सा येन धार्यते ॥ चक्रमेकादशार तु बुद्धिः सा येन धार्यते । अष्टार तन्महच्चक्रमहंकारस्य धारकम् ॥ अव्यक्तादिविशेषान्तैः स्वरूपैरपरैर्वृतम् । चतुर्विंशतिसख्यातैः पुरुषात्मकनेमि यत् ॥ जगच्चक्रमिति ख्यातं तच्च प्रेरयते स्वयम् । एतत्स्वरूप कालादिचक्रषट्के पञ्चकृत्यानुरूपम् । पञ्चकृत्यानि उत्पत्तिस्थितिसंहारनिग्रहोग्ररूपाणि । तेषामनुरूप यथा भवति तथा प्रकटितविभवः प्रसिद्धमहिमा । प्रख्यातपराक्रम इत्यर्थः । पञ्चकृत्यलक्षणमहिर्बुध्न्यसंहितायामुक्तम्—'अराणि पञ्चकृत्यानि शक्तेस्तस्याः प्रकल्पयेत् । तिरोभाव सृष्टिं चैव स्थितिं संहृत्यनुग्रहौ ॥' इति कालचक्रषट्कम् । इदं वा भवति—'षडर कालचक्र तस्य कालो येन धार्यते । एकारं वैयत चक्र द्व्यरं तद्वायुधारकम् । त्र्यरं तैजसमाख्यातमाप्य चतुररं मुने ॥ पञ्चारं पार्थिव चक्रं पृथिवी येन धार्यते ॥' षडरं कालचक्रम् । एकद्वित्रिचतु.पञ्चाराणि आकाशादि पञ्चचक्राणि संभूय कालादिचक्रषट्कम् । तस्मिन्पञ्चकृत्यानुरूप प्रकटिताविभवः । अर्थिताना भक्तजनप्रार्थितानां पुरुषार्थानां निर्विलम्बैरपगतकालक्षेपैर्विलम्बैः प्रदानैः । 'लबि अवस्रसने' इति धातोर्विपूर्वत्वादौचित्याच्च प्रदानार्थता । अखिलभक्तवर्गमहरहः कुशलिन कुर्वाण आयुधग्रामणीर्वो युष्मान् अवताद्रक्षतु । अनेन पद्येन जगदुत्पत्त्यादि सामर्थ्यं प्रतिपाद्यते ॥

कोणैरर्णैः सरोजैरपि कपिशगुणैः षड्भिरुद्भिन्नशोभे
श्रीवाणीपूर्विकाभिर्दधति विलसतः शक्तिभिः केशवादीन् ।
तारान्ते भूपुरादौ रथचरणगदाशार्ङ्गखड्गाङ्किताशे
यन्त्रे तन्त्रोदिते वः स्फुरतु कृतपदं लक्ष्म लक्ष्मीसखस्य ॥ ९२ ॥

कोणैरित्येतत्पद्यमारभ्य गायत्र्यर्णारचक्र इत्यन्तं चतुःश्लोक्या सुदर्शनयन्त्रविशेषः कथ्यते । षड्भिः कपिशगुणैः पिशङ्गवर्णैः कोणैः अर्णैरक्षरैः सरोजैः पद्मैरपि उद्भिन्नशोभे

अभिव्यक्तसौन्दर्यं । एतद्यन्त्रमध्यस्थितस्य सुदर्शनपुरुषस्य रक्तवर्णत्वेन रक्ताम्बरत्वेन रक्तकेशत्वेन रक्तनयनत्वेन च कोणार्णसरोजषट्कं कपिशगुणं भवति । किं चैतद्यन्त्रं कुङ्कुमागरुधातुचन्दनरसकल्प्यं तस्मादपि च कोणादि त्रिषट्कं कपिशगुणं भवति । किं च मन्त्रवाच्यसुदर्शनस्याभिरूपत्वेन तद्वाचकवर्णानां वर्णाधारत्वेन कोणानां च कोणसंबन्धित्वेन सरोजानां च कपिशगुणत्वं युक्तम् । श्रीवाणीपूर्विकाभिः । पूर्विकाशब्देन वाग् मृडानी च गृह्यते । विलसत आनन्दपरवशान् । अथवा शक्तिभिरुपलक्षितान् । विकसत आश्रितरक्षणोन्मुखान् । केशवादीन् द्वादशमूर्तीर्दधाति वहति वासुदेवोद्देशेन समष्टिभूतवासुदेवादीनां व्यष्टिभूतस्य केशवादित्रिकचतुष्टयस्य वासुदेवादिसमष्टिभूतश्रीवाणीवाङ्मृडानीनां व्यष्टिभूताः श्रीवाणीवाङ्मृडान्यः शक्तयः वासुदेवव्यष्टिभूतकेशवनारायणमाधवानां वासुदेवशक्तिः श्रीव्यष्टिभूतास्तिस्रः श्रियः प्रत्येकं शक्तयः संकर्षणव्यष्टिभूतगोविन्दविष्णुमधुसूदनानां संकर्षणशक्तिव्यष्टयस्तिस्रो वाण्यः प्रत्येकं शक्तयः । प्रद्युम्नव्यष्टिभूतत्रिविक्रमवामनश्रीधराणां समष्टिशक्तिव्यष्टयतिस्रो वाचः प्रत्येकं शक्तयः । अनिरुद्धव्यष्टिभूतहृषीकेशपद्मनाभदामोदराणामनिरुद्धशक्तिव्यष्टिभूतास्तिस्रो मृडान्यः प्रत्येकं शक्तयः । एवंप्रकारेण श्रीवाणीवाङ्मृडानीयुक्तान् केशवादीन्दधाति । तारान्ते तारः प्रणवोऽन्तश्चरमसीमा यस्य यन्त्रस्य तस्मिन् । भूपुरादौ भूपुरं चतुष्कोणभूबिम्बमादौ बाह्ये यस्य यन्त्रस्य तत्तस्मिन् । अथवा साधकाः प्रथमभूपुरमधिश्रित्य पश्चात्सर्वलक्षणोपेत वासमण्डपमधिगत्य तदनन्तरं षट्सरोजानि क्रमेण ससेव्य ततः षडराणि प्रविश्य पश्चात्तद्गतमन्त्राक्षराण्यनुसंधाय ततः सुधाकरबिम्बं संपूज्य तदनन्तरं सुदर्शनगर्भं तारमादाय सुखिनो भवन्ति तस्मात्तस्य यन्त्रस्य भूपुरमाद्यं तारोऽन्ते तस्मिन् रथचरणगदाशार्ङ्गखड्गाङ्किताशे रथचरणादिभिरङ्किता आशाः प्राच्यादिदिशो यस्य यन्त्रस्य तस्मिन् । तन्त्रोदिते सुदर्शनप्रतिपादकतन्त्रोदिते यन्त्रे कृतपदं विरचितस्थानं लक्ष्मीसखस्य श्रीरङ्गिणो धाम असाधारणधर्मः स्फुरतु संनिधत्ताम् ॥

दंष्ट्राकान्त्या कडारे कपटकिटितनोः कैटभारेरधस्ता-

दूर्ध्वे हासेन विद्धे नरहरिवपुषो मण्डले वासवीये ।

प्राक्प्रत्यक्सांध्यसान्द्रच्छविभरभरिते व्योम्नि विद्योतमानो

दैतेयोत्पातशंसी रविरिव रहयत्वस्त्रराजो रुजं वः ॥ ९३ ॥

अधस्तात् पूर्वश्लोकोक्तयन्त्रस्याधोभागे । भूप्रदेश इत्यर्थः । कपटकिटितनोः कुहनावराहमूर्तेः कैटभारे रङ्गिणो दंष्ट्राकान्त्या दन्तकान्त्या कडारे कपिलवर्णे ऊर्ध्वे आकाशे नरहरिवपुषो नृसिंहविग्रहस्य रङ्गिणो हासेन विद्धे धवले वासवीये माहेन्द्रमण्डले विद्धे यन्त्रे स्थितः सन् प्राक्प्रत्यक्सांध्यसान्द्रच्छविभरभरिते प्राक् च प्रत्यक् च प्राक्प्रत्यञ्चौ तयोः संध्ययोः संबन्धिनी प्राक्प्रत्यक्सांध्या सान्द्रा निबिडा चासौ छविश्च तस्या भरोऽतिशयस्तेन भरिते व्योम्न्याकाशे दैतेयोत्पातशंसी दैतेयानामुत्पातः प्रणाशस्तं शंसितुं शील-

मस्यास्तीति दैतेयोत्पातशंसी रविरिव द्योतमानः प्रकाशमानोऽङ्गराजो वो रुजं दृष्टादृष्टप्रतिबन्धव्यथां रहयतु विनाशयतु । अस्य यन्त्रस्याहिर्बुध्न्यसंहितोक्तविन्यासक्रमः किंचित्कथ्यते—सज्जितपट्टे चन्द्रमण्डलं विलिख्य तन्मध्ये प्रणवं निधाय तदुदरे रक्तवर्णं पिङ्गलाक्षं पिङ्गकेशं भूतपाशाङ्कुशपद्ममुसलचापशङ्खगदाचक्रभुजाष्टकविराजितं सुदर्शनपुरुषं प्रतिष्ठाप्य तच्चरणतरुणाम्बुजसमीपे साधकनामधेयं विलिख्य सुदर्शनं भगवन्तमलंकृत्य सुधाकरबिम्बपर्यन्ते षडरं चक्रमुद्धृत्य प्राच्यादिषट्कोणेषु षडक्षरसुदर्शनमनुषडक्षराणि क्रमेण कल्पयेत् । कोणान्तरेषु प्राच्यादिक्रमेण चक्रायेत्याद्यङ्गमन्त्रविन्यासं कृत्वा षट्कोणचक्राद्बहिश्चतुर्दलपद्मं विरचय्य चतुर्दलेषु सबिन्दुकं वर्म च षड्भिर्विलिख्य दलान्तरेष्वन्तः स्थानानि विलिख्य चतुर्दलप्रथमपद्माद्बहिः षोडशकेसरमष्टदलं द्वितीयपद्मं विन्यस्य केसरेषु षोडशस्वरान्विलिख्याष्टसु दलेषु सुदर्शनाष्टाक्षरं निक्षिप्य तस्मादष्टदलाद्द्वितीयपद्माद्बहिर्द्वात्रिंशत्केसरं षोडशदलं तृतीयसरोजं समालिख्य कादिसान्तानि द्वात्रिंशदक्षराणि केसरेषु क्रमेण निधाय षोडशदलेषु जितं ते इत्यादि षोडशार्णं वैष्णवमन्त्रमारचय्य तस्मात्षोडशदलात्तृतीयपद्माद्बहिर्द्वात्रिंशत्केसरे द्वात्रिंशद्दलं चतुर्थसरोजं विन्यस्य द्वात्रिंशत्केसरेष्वानुष्टुभं वाराहं मनुं निधाय द्वात्रिंशद्दलेष्वानुष्टुभं नारसिंहं मन्त्रं विलिख्य तस्मात्तुरीयतोयजाद्बहिश्चतुःषष्टिदलं पद्मं विधाय तद्दलेषु चतुःषष्टिवर्णं नारसिंहं मनुं विनिधाय तस्माच्चतुःषष्टिदलात्पञ्चमपद्माद्बहिरष्टदलं सरोजं विन्यस्य तद्दलेष्वष्टाक्षरतारसिंहमन्त्रं विलिख्य तद्बाह्ये वज्रायुधालंकृतं वासवमण्डलं विन्यस्य वासवमण्डलोपरि प्राच्यादिदिशासु वासवबीजं साधकनामसमन्वितं विलिख्य मण्डलस्य चतुर्षु कोणेष्वन्तःस्थानानि विलिख्य कोणाभ्यन्तरालेषु पुनस्तद्बीजं विन्यस्य तद्वासवमण्डलं परितः प्रातिलोम्येन सर्वान् विलिख्य तदुपरि ककारादिसकारान्तं प्रातिलोम्येन द्वात्रिंशद्वर्णविन्यासं कृत्वा तदुपरि साधकनामान्वितपद(?)मित्याद्यन्तयुगं परितः कृत्वा तदुपरि पाशेन तदनन्तरमङ्कुशेन च वेष्टयित्वा बाह्यसंपुटितचतुष्कोणं भूपुरं कृत्वा भूपुरप्रान्ते प्राच्यादिशक्तियुक्ताः केशवादिमूर्तीर्विन्यस्य केशवाय नमः साधकं रक्ष रक्ष इति सान्तमुद्धृत्य तदनन्तरं क्ष्मिति प्राच्यादिचतुर्दिक्षु प्रादक्षिण्येन विन्यस्य ईशानादिकोणेषु प्रातिलोम्येन विलिखितं तदनन्तरं पाशेनाङ्कुशेन च वेष्टयित्वा सर्वमेतत्प्राणप्रतिष्ठामन्त्रवेष्टितं कुर्यात्। अथ प्राणप्रतिष्ठामन्त्रः 'ॐ ह्रीं ॐ ह्रां यरलवशषसहह्रा अमुष्य प्राणा अमुष्य जीव इह स्थितः अमुष्य सर्वेन्द्रियाणि पृथिव्यप्तेजोवाय्वाकाशशब्दस्पर्शरूपरसगन्धचक्षुःश्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थमनोबुद्धिजीवानन्दरसानन्दसत्त्वरजस्तमोभिरिहैवागत्य चिरं तिष्ठन्तु स्वाहा । प्रतिष्ठितस्य यन्त्रस्य प्रागादिचतुर्दिक्षु यन्त्रपालकं शङ्खचक्रवराभयमुद्रितचतुर्बाहुधरं विष्णुमाग्नेयकोणे शङ्खचक्रशङ्खाभयमुद्रितचतुर्बाहुधरं हृषीकेशं नैर्ऋत्यकोणे शङ्खचक्रहलाभयलाञ्छितचतुर्बाहुधरं हृषीकेशं वायव्यकोणे शङ्खचक्रमुसलाभयाङ्कितचतुर्बाहुधरं हृषीकेशमीशानकोणे शङ्खचक्रशूलाभयलाञ्छितचतुर्बाहुधरं हृषीकेशं त्रिकोणादिप्रादक्षिण्येन शङ्खचक्रदण्डाभयशङ्खचक्रकुन्ताभयशङ्खचक्रशक्त्यभयशङ्खचक्रपाशाभयशङ्ख-

क्राङ्कुशाभयशङ्खचक्रवज्राभयशङ्खचक्रपरश्वभयशङ्खचक्रशतमुखानलभयमुद्रितचतुर्बाहुधरं ज-नार्दनाष्टकं तत्परिवारांश्च विन्यस्य शङ्खचक्रधरं वराहरूपिणं सर्वेश्वरं यन्त्रस्याधोभागे स्थितं संस्मृत्य यन्त्रस्योर्ध्वभागे नरसिंहं संस्मृत्य प्राग्भागज्वालामध्यस्थितं चक्रं दक्षिण-भागे ज्वालागतां गदां पश्चिमभागे ज्वालान्तःस्थं शार्ङ्गं चोदग्भागे ज्वालान्तर्गतं खड्गं च संस्मृत्य एवंप्रकारेण यन्त्रे पूर्णे सति एतद्यन्त्रं समभ्यर्च्य साधकाः सुखिनो भवन्ति । उक्तार्थे पाञ्चरात्रीं संमतिं संपादयामः—'विस्तरेणास्य यन्त्रस्य संस्थानं लक्षणं तथा । श्रोतुमिच्छामि भगवंस्तन्ममाचक्ष्व पृच्छतः ॥ अहिर्बुध्न्य उवाच—विस्तरेण प्रवक्ष्यामि स्व-रूपं लक्षणं तथा । अस्य यन्त्रस्य देवर्षे तन्मे कथयतः शृणु ॥ रजतेन सुवर्णेन लोहैर्वा शिलयाथवा । यथाधिकारं यन्त्रस्य कुर्यादर्चां तु साधकः ॥ कुङ्कुमागुरुकर्पूरधातुचन्दनजै रसैः । सुवर्णसूच्या यदि वा यन्त्रं तत्कारयेत्पटे ॥ चन्द्रमण्डलमध्ये तु तारं कुर्यात्समा-हितः । तस्य मध्ये लिखेद्देवं रक्तवर्णं सुदर्शनम् ॥ पिङ्गाक्षं पिङ्गकेशाढ्यं रक्ताम्बरधरं वि-भुम् । युक्तं षोडशभिर्हस्तैरष्टभिर्वा महाद्युतिम् ॥ पाशाङ्कुशाब्जमुसलधनुःशङ्खगदादिभिः । भीषणैरायुधवरैरुपेतं जयिनां वरम् ॥ तद्विष्णोः परमं रूपं नित्यं तैजसविग्रहम् । दंष्ट्रानि-ष्ठ्यूतसप्तार्चिर्ज्वालापल्लववितानम् ॥ भूषणैर्भूषितं चित्रैर्भीषणं रोमहर्षणम् । स्वतेजसा ज-गत्सर्वं पूरयन्तं महाबलम् ॥ निर्भिद्यमानदैतेयशोणिताशनलम्पटम् । उद्यत्प्रद्योतनशत-प्रख्यं विख्यातपौरुषम् ॥ मनस्तत्त्वेन सततं संश्रितं वेगवत्तया । नारायणकराम्भोजसे-वारसविशारदम् ॥ जपेन विष्णुचिन्तायाः परमं मार्गदर्शकम् । स्मृत्यैव स्वानुरक्तानां दृ-ष्टादृष्टार्थसाधकम् ॥ स्वभक्तप्रत्यनीकानां मारणं सुरपूजितम् । संस्तूयमानचरितं सिद्धग-न्धर्वदानवैः ॥ भक्तार्तिभञ्जनपरं शरण्यं शरणार्थिनाम् । नित्यनिःसीमनिर्दोषकल्याणगुण-सागरम् ॥ एवंभूतं तमालिख्य सदानन्दं सुदर्शनम् । तत्पादपद्मपर्यन्ते साधकं नाम वि-न्यसेत् ॥ इन्दुबिम्बस्य पर्यन्ते षट्कोणं चक्रमालिखेत् । आग्नेयममितप्रख्यममोघं सर्वसा-धकम् ॥ प्राच्यादिषु च कोणेषु षड्वर्णान्विन्यसेन्मनोः । षट्सु कोणान्तरालेषु षडङ्गमन्त्रा-न्यसेत्क्रमात् ॥ अस्माद्बहिस्तथा पद्मं चतुर्दलसमन्वितम् । सबिन्दुपद्मषट्कस्य दलेष्वेषु क्रमान्न्यसेत् ॥ दलान्तरालेष्वन्तःस्थान्विन्यसेत्साधकस्तथा । बाह्ये तस्याष्टपत्राब्जमन्तः षोडशकेसरम् ॥ केसरेषु क्रमादस्य विलिखेत्षोडशस्वरान् । अष्टाक्षरं महामन्त्रं दलेष्वस्य समालिखेत् ॥ द्वात्रिंशत्केसरं चास्य बहिः षोडशपत्रकम् । ककारादि सकारान्तं केसरेष्वस्य चालिखेत् ॥ दलेष्वस्य लिखेन्मन्त्रं षोडशार्णं तु वैष्णवम् । द्वात्रिंशत्केसरदलं बाह्ये तस्य समालिखेत् ॥ केसरेष्वस्य पद्मस्य प्राच्यादिषु यथाक्रमम् । मन्त्रमानुष्टुभं सम्यग्वाराहं वि-लिखेत्परम् ॥ द्वात्रिंशतिदलेष्वस्य नारसिंहं क्रमाल्लिखेत् । आनुष्टुभं महामन्त्रममोघं सर्वसा-धकम् ॥ तस्य बाह्ये लिखेत्पद्मं चतुःषष्टिदलैर्युतम् । पातालं नारसिंहाख्यं दलेष्वस्य न्यसे-न्मनुम् ॥ पुनश्च पद्मं विन्यस्य दलैरष्टभिरावृतम् । अष्टाक्षरं नारसिंहं तद्दलेषु समालिखेत् ॥ तद्बाह्ये मण्डलं कुर्यान्माहेन्द्रं वज्रभूषितम् । जाज्वल्यमानं स्वेनैव सर्वालंकारमण्डितम् ॥ तस्य बाह्ये महादिक्षु प्रागादिषु यथाक्रमम् । तद्बीजं विन्यसेद्धीमानिजनाम्ना समन्वितम् ॥

बहिः कोणेषु च चतुर्षु तथान्तःस्थान्प्रकल्पयेत् । कोणाभ्यन्तरमार्गेषु तद्बीजं विन्यसेत्पुनः ॥ परितः सस्वरान्सर्वान्प्रातिलोम्येन चालिखेत् । सकारादि ककारान्तं विन्यसेत्परितस्तथा ॥ विदर्भितं स्वनाम्नैव परितोऽन्त्ययुगं न्यसेत् । पाशेन वेष्टयेदेतदङ्कुशेन तथा पुनः ॥ पुटितं भूपुरं तस्य बाह्ये कुर्यादतन्द्रितः । केशवादीन्मूर्तिमतः समन्तादस्य विन्यसेत् ॥ तप्तजाम्बूनदप्रख्यं पुण्डरीकायतेक्षणम् । अपारकरुणं पद्मशङ्खचक्रगदाधरम् ॥ पीताम्बरधरं देवं वनमालाविभूषितम् । हारकेयूरकटककुण्डलैरुपशोभितम् ॥ चतुर्बाहुमुदाराङ्गं प्रसन्नवदनं विभुम् । प्रागादि विन्यसेद्देवं केशवं क्लेशनाशनम् ॥ शङ्खचक्रगदापद्मधरं नीलाम्बुदच्छविम् । सर्वालंकारसंयुक्तं कुर्यान्नारायणं ततः ॥ कौमोदकीचक्रशङ्खपद्मधारिणमव्ययम् । देवमिन्दीवरश्यामं माधवं भावयेत्ततः ॥ चक्रं कौमोदकीं पद्मं शङ्खराजविराजितम् । इन्दुबिम्बनिभं कुर्याद्गोविन्दममितौजसम् ॥ गदाब्जशङ्खचक्राढ्यभूषितं भूषणैर्युतम् । विष्णुं विश्वपतिं कुर्यात्पद्मकिञ्जल्कसंनिभम् ॥ चक्रशङ्खाम्बुजगदाधारिणं करुणानिधिम् । रक्तपद्मदलप्रख्यं भावयेन्मधुसूदनम् ॥ पद्मकौमोदकीचक्रशङ्खसेवितमीश्वरम् । उज्ज्वलत्पावकप्रख्यं तत्कुर्वीत त्रिविक्रमम् ॥ शङ्खचक्रगदापद्मधरं परमभूषितम् । तरुणादित्यसंकाशं वामनं भावयेत्ततः ॥ पद्मचक्रगदाशङ्खधरं सद्गुणसागरम् । पुण्डरीकनिभं देवं श्रीधरं परिकल्पयेत् । गदासुदर्शनयुते पद्मशङ्खे च बिभ्रतम् । विद्युत्प्रभं हृषीकेशं कुर्वीत कमलेक्षणम् ॥ शङ्खपद्मे तथा चक्रगदे बिभ्राणमुज्ज्वलम् । सहस्रादित्यसंकाशं पद्मनाभं तु कारयेत् ॥ पद्मशङ्खगदाचक्रधरं बन्धूकसंनिभम् । भक्त्यैकसुलभं देवं दामोदरमथो न्यसेत् ॥ एवं क्रमेण न्यस्यैतानेषां नामानि विन्यसेत् । नमोन्तान्यमुकं रक्ष रक्षेति च समन्ततः ॥ यंशं रंषं तथा लंस वंहं चेति द्वयद्वयम् । प्राच्यादिषु महादिक्षु प्रादक्षिण्येन विन्यसेत् ॥ यशं रषं तथा लस वह चेति युगयुगम् । ईशानादिषु कोणेषु विन्यसेदप्रदक्षिणम् ॥ पाशेन तु समावेष्ट्य चाङ्कुशेनापि वेष्टयेत् । सर्वमेतत्सजीवेन लेखामनुभिरावृतम् ॥ प्राच्यादिषु चतुर्दिक्षु विन्यसेद्विष्णुमव्ययम् । चक्रकौमोदकीशार्ङ्गखड्गयुक्तं यथाक्रमम् ॥ साधारणं च सर्वेषां शङ्खचक्रवरायुधौ । आग्नेयादिषु कोणेषु हृषीकेशं ततो न्यसेत् ॥ शङ्खं हलं च मुसलं शूलं तेषु च धारयेत् । त्रिकोणेष्वष्टसु तथा जनार्दनमथो न्यसेत् ॥ दण्डं कुन्तं तथा शक्तिं पाशमङ्कुशमेव च । वज्रं तथैव परशुं तथा शतमुखानलम् ॥ करेष्वमोघमेतानि विलिखेत्तु यथाक्रमम् ॥ प्रत्येकपरिवारांस्तु तेषां पार्श्वे तु विन्यसेत् । वराहरूपिणं देवं शङ्खचक्रधरं वरम् । भूमौ च सहितं भूम्या संस्मरेत्पुरुषोत्तमम् ॥ अम्बरे नारसिंहं तु चिन्तयेदमितौजसम् । भीषणं घटितानेकभूषणं दारितासुरम् ॥ प्राच्यां दिशि महाज्वालागतं चक्रं स्मरेत्पुनः । दक्षिणस्यां दिशि तथा स्मरेज्ज्वालागतां गदाम् ॥ प्रतीच्यां शार्ङ्गमत्युग्रं ज्वालामध्यगतं स्मरेत् । उत्तरस्यां दिशि तथा स्मरेत्खड्गं सुदारुणम् ॥' इति ॥

कोणे क्वापि स्थितोऽपि त्रिभुवनविततश्चन्द्रधामापि रूक्षो

रुक्मच्छायोऽपि कृष्णाकृतिरनलमयोऽप्याश्रितत्राणकारी ।

धारासारोऽपि दीप्तो दिनकररुचिरोऽप्युल्लसत्तारकश्री-
श्चक्रेशश्चित्रभूमा वितरतु विमतत्रासनं शासनं वः ॥ ९४ ॥

क्वापि कोणे स्थितोऽपि यन्त्रैकदेशे निवसन्नपि त्रिभुवनविततः त्रिभुवनेषु 'चरणं पवित्रं विततं पुराणम्' इति श्रुत्युक्तत्वेन प्रसिद्धः । क्वचित्कोणे स्थितस्य त्रिभुवनव्याप्तत्वं विरुद्धम् । रुक्मच्छायोऽपि सुवर्णकान्तिरपि कृष्णाकृतिः श्रीरङ्गराजाकृतिः । सुवर्णवर्णस्य नीलवर्णत्वं विरुद्धम् । अनलमयोऽप्याश्रयाशस्वरूपोऽपि आश्रितत्राणकारी भक्तरक्षाविधायी । आश्रयाशस्य स्वाश्रितरक्षणं विरुद्धम् । धारासारोऽपि धारायां कोट्यां सारोऽपि निशितोऽपि दीप्तः प्रज्वलितः । वर्षधाराविशेषस्य दीप्तत्वं विरुद्धम् । दिनकररुचिरोऽपि सूर्यप्रकाशोऽप्युल्लसत्तारकश्रीः प्रस्फुरत्प्रणवलक्ष्मीः । सूर्यतेजस उल्लसन्नक्षत्रलक्ष्मीत्वं विरुद्धम् । चित्रभूमा नानाप्रकारेण विरुद्धधर्माश्रयत्वप्रतीतेराश्चर्यमहिमा चक्रेशो वो युष्माकं विमतत्रासनं प्रत्यर्थिभयंकरं शासनमाज्ञां वितरतु प्रदिशतु । अनेन श्लोकेन यन्त्रमध्यस्थितपुरुषस्वरूप न्यरूपि ॥

शुक्लः शक्र स्तवस्ते सह दहन कलां काल तेऽयं न कालः
किं वो रक्षांसि रक्षा तव फलतु पते यादसां पादसेवा ।
वायो हृद्योऽसि भर्तुस्त्यज धनद मदं सेव्यतां त्र्यम्बकेति
प्राहुर्यद्यन्त्रपालाः स दनुजविजयी हन्तु तन्द्रालुतां वः ॥ ९५ ॥

हे शक्र देवेन्द्र, ते स्तवः स्तोत्रं शुक्लः शब्दार्थगुणादिसर्वलक्षणसंपन्नतया निरतिशयभक्तियोगात्मतया च कृतं स्तोत्रं निर्मलम् । हे दहन पावक, कलामल्पकालं सह तिष्ठ पश्चाद्भवतः सेवावसरो भविष्यति । हे काल, ते तवायं न कालः नावसरः । हे रक्षांसि वो भवतां रक्षा किम् । सर्वशक्तेरस्य भवत्कृतरक्षया किं प्रयोजनमित्यर्थः । हे यादसांपते वरुण, तव पादसेवा भवत्कर्तृका भगवच्चरणारविन्दसेवा फलतु । भवत्कृतसेवया भगवान्प्रसन्नो भूयादित्यर्थः । हे वायो भर्तुर्नायकस्य हृद्योऽसि हृदयंगमोऽसि । हे धनद कुबेर, मदं दुरहंकारं त्यज । हे त्र्यम्बक त्रिलोचन, चक्रेश्वरः सेव्यताम् । इत्यनेन प्रकारेण यद्यन्त्रपाला यस्य भगवतो यन्त्रं पालयन्तीति यन्त्रपाला प्राहुः स दनुजविजयी वस्तन्द्रालुतां जाड्यं हन्तु । अनेन प्रकारेणैतयन्त्रमध्यस्थितपुरुषचरणसेवोत्सुकदिक्पालनिवहदेशनकृतो यन्त्रपालव्यापारः कथ्यते ॥

गायत्र्यर्णारचक्रे प्रथममनुसखस्मेरपत्रारविन्दे
बिम्बं वह्नेस्त्रिकोणं वहति जयिजयाद्यष्टशक्तौ निपण्णा ।
शोकं वोऽशोकमूले पदसविधलसद्धीमभीमाक्षभीमा
पुंसो दिव्यास्त्रधामा पुरुषहरिमयी मूर्तिरस्त्वत्यपूर्वा ॥ ९६ ॥

गायत्र्यर्णारचक्र इत्येतत्समारभ्य यस्मिन्विन्यस्य इत्याद्यवधिकचतुःश्लोक्यां सुदर्शनमहिमा व्यस्तारि । प्रथममनुसखस्मेरपत्रारविन्दे प्रथमश्चासौ मनुर्मन्त्रश्च प्रथममनुर्वासुदेवमन्त्रः। वासुदेवमन्त्रस्य प्रथमत्वं प्रथमव्यूहप्राथमिकवासुदेवप्रतिपादकत्वेन । प्रथममनोर्द्वादशाक्षरस्य सखानि मित्राणि स्मेराणि विकसितानि च प्रथममनुसखस्मेरपत्राणि यस्यारविन्दस्य। तत्पत्राणां प्रथममनुसखत्वं द्वादशसंख्यावत्तया वासुदेवद्वादशाक्षरमन्त्रवर्णगर्भत्वाच्च । प्रथममनुसखस्मेरपत्रारविन्द यस्मिंश्चक्रे तत्तस्मिन् । वह्नेस्त्रिकोणं बिम्बं वहति कमलकर्णिकास्थाने वह्नेर्मण्डलं दधाति । जयिजयाद्यष्टशक्तौ जयिनी च जया च जयिजये शक्ती आदिर्यासां ता जयिजयादयः । आदिशब्दग्राह्याः शक्तयो मोहिनीह्लादितामायापराजितासिद्धयः । जयिजयाद्योऽष्टौ शक्तयो यस्मिन् गायत्र्यर्णारचक्रे गायत्र्या वर्णानि चतुर्विंशत्यक्षराणि तान्ये वाराणि यस्य तद्गायत्र्यर्णारम् । अथवा गायत्र्यर्णाश्चतुर्विंशतिसंख्याकान्यक्षराणि यस्य चक्रस्य तद्गायत्र्यर्णार तच्चक्र च तस्मिन् । अशोकमूले अशोकनामकवृक्षमूलभागे निषण्णा समासीना । पदसविधलसद्भीमभीमाक्षभीमा । पदसविधे चरणसमीपे लसन्तौ प्रकाशमानौ भीमौ भयकरौ भीमाक्षसंज्ञकौ पुरुषौ ताभ्यां भीमात्युग्रा । दिव्यास्त्रधामा दिव्यास्त्रं चक्र धाम स्थान यस्याः सा । पुरुषहरिमयी नरसिंहमयी । अपूर्वा अभिनवा पुंसो मूर्तिर्विग्रहे वः शोक दुःखमस्य तु क्षिपतु । आचार्यप्रसादेन किंचिदवगतः सुदर्शननारसिंहयन्त्रचक्रोद्धारक्रमः कथ्यते—यन्त्रापराह्नमध्ये गायत्रीवर्णसंख्याक्षरसंबन्धरमणीय नेमित्रेष्टित चक्र विलिख्य चक्रमध्ये द्वादशदलं कमलं विरचय्य दलेषु द्वादशाक्षरवासुदेवमन्त्राक्षराणि निक्षिप्य तत्कमलकर्णिकास्थाने त्रिकोणमाग्नेयमण्डलं विलिख्य तत्प्रान्ते चाशोकशाखिं निधाय तन्मूले समासीन परिकलितचतुश्चक्रचतुर्भुजविराजितं योगपट्टपरिवेष्टितदिव्यां कालानलसकाशं नृसिंह प्रतिष्ठाप्य तच्चरणसमीपे भयकरविग्रहौ भीमाक्षसंज्ञकौ पुरुषं विलिख्य चक्रस्य प्राग्भागे जया चाग्नेये मोहिनीं याम्ये विजयां च नैरृते ह्लादिनीं च पश्चादजितां वायव्ये मायां चोदग्भागेऽपराजितां च ईशाने सिद्धिं संस्मृत्य साधकः पूर्णकामो भवेत् । उक्तार्थेऽहिर्बुध्न्यसंहितामुदाहरामः—'अपराह्नेऽथ यन्त्रस्य मध्ये चक्राह्व स्थितम् । चतुर्विंशत्यर चक्र सुनेमि रुचिराकृतिम् ॥ गायत्रीवर्णसंख्याकान्यराण्यक्षरवन्ति च । मध्ये चक्र न्यसेत्पद्मं युक्तं द्वादशभिर्दलैः ॥ दलेषु तेषु विलिखेद्वासुदेवमनुं बुधः चक्राब्जकर्णिकास्थाने न्यसेदाग्नेयमण्डलम् ॥ तन्मध्ये योगपट्टेन पिनद्धाङ्गं सनातनम् । नारसिंह चतुर्बाहुं चतुश्चक्रधर परम् ॥ समासीनमशोकस्य मूले कालानलद्युतिम् । सर्वाभरणसंयुक्त भक्तसर्वार्तिहारिणम् ॥ अपरासंख्यकल्याणगुणपूर्णमहार्णवम् । भक्तानुकम्पिन नित्यं सर्वलोकैकनायकम् ॥ एवं विलिख्य तत्पादपर्यन्ते चिन्तयेद्बुधौ । तदाज्ञाकारिणौ भीमौ नीलनीरदविग्रहौ ॥ उद्यमकायौ भीमाक्षौ भीमायुधधरौ वरौ । दंष्ट्रा करालवदनौ विन्यस्त वृत्तलोचनौ ॥ चिन्तयेदथ चक्रस्य समन्ताद्दृष्टयोषितः । ऊर्ध्वमावद्धकेशाढ्यास्तत्प्राप्तयौवनाः ॥ सर्वालंकारसंयुक्ता द्विभुजा माल्यधारिणः । प्राच्यां दिशि जयां देवीं विजयां कृष्णरूपिणीम् ॥ रक्तवर्णां तदा देवीं नैर्ऋत्यां ह्लादिनीं तथा । अजिता पीतवर्णा

प्रतीच्यां संस्मरेत्परम् ॥ एवमेतन्महायन्त्रं महापातकनाशनम् । आयुरारोग्यधनदं पुत्रमित्रकलत्रपम् ॥ सर्वविघ्नोपशमनं सर्वदुष्टनिवारणम् । यो यदिच्छंल्लिखेद्यन्त्रं तत्तदस्य प्रयच्छति ॥ मणिविद्रुममुक्ताद्यं कुर्याद्यन्त्रं हिरण्मयम् । राजा चेद्राज्यमाप्नोति निष्कण्टकमनामयम् ॥ भूर्जपत्रे लिखित्वा तु कुङ्कुमैश्चन्दनेन तु । यो मर्त्यः शिरसा धत्ते तस्य स्यात्सर्वमीप्सितम् ॥ पिशाचोरगरक्षांसि क्षिप्रं नश्यन्ति तत्र वै । शिलाप्रतिष्ठां यः कुर्यादेतस्य जगतीतले । सर्वान्कामानिहावाप्य विष्णुलोके महीयते । लोहैर्वा रजतेनाथ यः कुर्यात्प्रतिमां बुधः । त्रिवर्गफलमाप्नोति निर्वाणमचिरात्पुनः ॥ कर्पणादिप्रतिष्ठान्तं कुर्यादायतनं च यः । स प्राप्नोति चतुर्दश्यां पुण्याँल्लोकाननुत्तमान् ॥ भयागमे च सङ्ग्रामे वादे वा यः स्मरेदिदम् । विजयस्तस्य हस्तस्थो नात्र कार्या विचारणा ॥ अर्चयेद्यस्त्रिसंध्यं वै यन्त्रमेतदनुत्तमम् । तापत्रयविनिर्मुक्तो विष्णुलोके महीयते ॥' इत्यादि ॥

पाश्चात्याशोकपुष्पप्रकरनिपतितैः प्राप्तरागं परागैः
संध्यारोचिः सगन्धैः स्वपदशशधरं प्रेक्ष्य तारानुपक्तम् ।
पद्मानाबद्धकोपानिव सुरनिवहैरञ्जलीन्कल्पमानां-
श्चक्राधीशोऽभिनन्दन्प्रदिशतु सदृशामुत्तमश्लोकतां वः ॥ ९७ ॥

पाश्चात्याशोकपुष्पप्रकरनिपतितैः पश्चाद्भागे स्थितः पाश्चात्यः स चासावशोकश्च तस्य पुष्पाणि तेषां प्रकराः समूहास्तेभ्यो निपतितास्तैः संध्यारोचिःसगन्धैः संध्याया रोचिस्तेजः । आरुण्यमिति यावत् । तस्याः सगन्धा मित्राणि । समाना इत्यर्थः । परागैः कुसुमरेणुभिः प्राप्तरागं समधिकशोणिमानम् । तारानुपक्तं प्रणवसंसक्तम् । स्वपदशशधरं स्वयोः सुदर्शननरसिंहयोः पदं निवासस्थानं शशधरं चन्द्रमण्डलं प्रेक्ष्य आबद्धकोपानिवबद्धमुकुलान्पद्मान्पद्ममुकुलानिव स्थितान् । सुरनिवहैर्देवसमूहैः कल्प्यमानानञ्जलीन् संघटितकरपल्लवानभिनन्दन् सतुष्यन् । श्लाघयन्नित्यर्थः । चक्राधीशो वो युष्माकं सदृशामुत्तमश्लोकतां उत्तमः श्लोको यस्य स तस्य भावस्तत्ता ताम् । 'पद्ये यशसि च श्लोकः' इत्यमरः । प्रदिशतु प्रदद्यात् । नरसिंहाधिष्ठितापरभागे विकसिताशोकप्रसूनप्रकरपरागविराजिततया सायं संध्यारागरञ्जितसुदर्शनपुरुषाधिष्ठितपूर्वभागे ताराविलासोपलालिततया नक्षत्रनिकरपरिचितमिव स्थितं शशधरबिम्बमवलोक्य सुरवरनिकरकरकमलानि नतमुद्रामुकुलितानि भवन्ति । अनेन श्लोकेन सुदर्शननारसिंहयन्त्रराजस्य ब्रह्मादिसेवितत्वं प्रतिपादितम् ॥

रक्ताशोकस्य वेदस्य च निहितपदं प्राप्तशाखस्य मूले
चक्रैरस्त्रैस्तदाद्यैरपि महितचतुर्द्विश्चतुर्बाहुदण्डम् ।
आसीनं भासमानं स्थितमपि भयतस्त्रायतां तत्त्वमेकं
पश्चात्पूर्वत्र भागे स्फुटतरहरितामानुषं जानुपाद्यैः ॥ ९८ ॥

प्राप्तशाखस्य कुसुमितविटपविलासविराजितस्य रक्ताशोकस्य मूले मूलभागे प्राप्तशाखस्य

बहुविधशाखोपशाखोपलक्षितवैभवस्य वेदस्य मूले 'यो वेदादौ स्वरः प्रोक्तः' इति सकलवेदमूलतया श्रुतिप्रसिद्धे प्रणवे विहितं पदं स्थानं येन तत्। चक्रैश्चतुर्भिः सुदर्शनैस्तदाद्यैस्तत्सुदर्शनमाद्य येषां तानि तैरस्त्रैः पाशाङ्कुशाब्जमुसलैर्धनुःशङ्खगदारूपैरायुधैरपि महितचतुर्द्विश्चतुर्बाहुदण्डम् महिताः पूजिताश्चत्वारो बाहुदण्डा द्विचतुर्बाहुदण्डा यस्य तत्। पश्चाद्भागेऽपरभागे पूर्वत्र पूर्वस्मिन्प्रदेशे स्फुटतरहरितामानुष हरेः सिंहस्य भावो हरिता मनुष्यभावो मानुषं हरिता च मानुषं च हरितामानुषे स्फुटतरे हरितामानुषे यस्य तत्। आसीनस्थित पुरोभागे समुत्थितं तद्भासमान प्रकाशमानमेकं तत्त्वं वो युष्मान् जानुभात् जनुषो जन्मन उद्भूतं जानुषं तस्माद्भयात्त्रायतां रक्षतु। अनेन श्लोकेन यन्त्रापरार्धस्थितनृसिंहस्वरूपं पुरोभागस्थितसुदर्शनपुरुषस्वरूपं च तयोरैक्यं च प्रतिपादितम्॥

प्राणे दत्तप्रयाणे मुषितदिशि दृशि त्यक्तसारे शरीरे
मत्यां व्यामोहवत्यां सतमसि मनसि व्याहृते व्याहृते च।
चक्रान्तर्वर्ति मृत्युप्रतिभयमुभयाकारचित्रं पवित्रं
तेजस्तत्तिष्ठतां वस्त्रिदशकुलधनं त्र्यक्षणं तीक्ष्णदंष्ट्रम्॥ ९९॥

प्राणे प्राणवायौ दत्तप्रयाणे प्राप्तनिर्गमे निष्क्रमणोन्मुखे सति दृशि नयनेन्द्रिये मुषितदृशि मुषिता अपहृता दृग्दर्शनं यस्याः सा तस्यामपगतविषयग्रहणसामर्थ्यायां सत्याम्। अत्यन्तपरवश इत्यर्थः। मत्यां व्यामोहवत्यां भ्रान्तिमत्याम्। मनसि स्वान्ते सतमसि अन्धकारेण विलीने सति। मृत्युप्रतिभयं मृत्योर्भयकरम्। 'भयकरं प्रतिभयम्' इत्यमरः। उभयाकारचित्रं नराकारेण सिंहाकारेण च चित्रमाश्चर्यम्। त्रिदशकुलधन त्रिदशकुलस्य देवसमूहस्यापद्धनम्। त्र्यक्षण त्रिलोचनम्। तीक्ष्णदंष्ट्र निशितदंष्ट्राग्रम्। चक्रान्तर्वर्ति चक्रमध्यसंचारि। पवित्र 'चरण पवित्र' इति श्रुतिसिद्ध पवित्रसंज्ञकम्। तत्प्रसिद्ध तेजो वो युष्मभ्यं तिष्ठता स्वरूपं प्रकाशयतु। 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम्। अनेन श्लोकेन तद्यन्त्रमध्यवर्तिपुरुषः सर्वास्वापदासु प्राणिना रक्षक इत्युक्तं भवति॥

यस्मिन्विन्यस्य भारं विजयिनि भवतां जङ्गमस्थावराणां
लक्ष्मीनारायणाख्यं मिथुनमनुभवत्यत्युदारान्विहारान्।
आरोग्यं भूतिमायुः कृतमिह बहुना यद्यदास्थापदं व-
स्तत्तत्सद्यः समस्तं दिशतु स पुरुषो दिव्यहेत्यक्षवर्ती॥ १००॥

लक्ष्मीनारायणाख्य लक्ष्मीश्च नारायणश्च लक्ष्मीनारायण लक्ष्मीनारायणमित्याख्या संज्ञा यस्य तन्मिथुनमाद्य दयत (?) भवता भवद्भूतभविष्यतां जङ्गमस्थावराणां चराचरात्मरूपेणावस्थितानाम्। 'जगतां जङ्गमस्थावराणा' इति पाठे चरस्थिरात्मरूपेणावस्थितानां जगतामित्यर्थः। रक्षाशिक्षाद्यनेकप्रकारभिन्न भारं विजयिन्यप्रतिहतपराक्रमे यस्मिन्सुदर्शनपुरुषे विन्यस्य निक्षिप्य अत्युदारान्निरतिशयानन्दप्रदान् विहारान्विनोदप्रपञ्चाननुभवति

अभिमतकर्मारम्भसमये विघ्नविघातार्थमाचरितमभीष्टदेवतानमस्कारं शिष्यशिक्षार्थं निबध्ननेव प्रतिजानीते—

हितहेतोर्महयित्वा हरिहरहेरम्बमिहिरहैमवतीः।
विश्वेश्वरो वितनुते कवीन्द्रकर्णाभरणमेतत्॥ १॥

हितेति॥ 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति हेतोरिति पञ्चमी षष्ठी वा। हितार्थमित्यर्थः। हितं चात्र प्रारिप्सितसमाप्तिर्विघ्ननाशो वा। 'मह पूजायाम्'। 'सर्वमङ्गलमङ्गल्यं वरेण्यमनघं शुचिम्। नारायणं नमस्कृत्य सर्वकर्माणि कारयेत्॥' इति वामनपुराणम्। 'अर्थः शम्भुः शिवा वाणी' इति लिङ्गपुराणम्। 'आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा। महागणपतेश्चैव कुर्वन्सिद्धिमवाप्नुयात्॥' इति याज्ञवल्क्यः। अन्यत्स्पष्टम्॥

स्वग्रन्थस्य पूर्वग्रन्थैर्गतार्थत्वमभ्युपगम्याह—

विहिता महामहिमभिर्विद्यन्ते यद्यपि निबन्धाः।
तदपि परिप्लवतायाः परिपाकोऽयं ममोदेति॥ २॥

विहिता इति॥ महामहिमभिर्विदग्धमुखमण्डनकारादिभिः। तथा च महानुभावकृतग्रन्थानां महत्त्वमर्थसिद्धमित्यर्थः। परिप्लवतां चापल्यम्। 'पारिप्लवपरिप्लवे' इत्यमरः। परिपाकः फलम्। तथा च चापलात्प्रवृत्तौ न पर्यनुयोगयोग्य इत्यर्थः॥

वस्तुतो न गतार्थत्वमित्याह—

यदभिहितं बहु महितं पूर्वाचार्यैर्विचार्यैव।
अनुकुर्वन्किंचित्तद्बहुविद्भिर्नाहमुपहास्यः॥ ३॥

---

नाम्नि नगरे वर्तत इति पर्वतीयेभ्यः श्रूयते. ग्रन्थाश्चानेन बहवः प्रणीताः, तन्मध्येऽस्मदवगतास्त्वेते—(१) अलंकारकौस्तुभः सटीकः, (२) अलंकारमुक्तावली, (३) आर्यासप्तशती सटीका, (४) कवीन्द्रकर्णाभरणं सटीकम्, (५) काव्यतिलकम्, (६) काव्यरत्नम्, (७) तर्ककुतूहलम्, (८) दीधितिप्रवेशः, (९) नवमालिका नाटिका, (१०) नैषधीयकाव्यटीका, (११) मन्दारमञ्जरी कथा गद्यनिबद्धा, (१२) रसचन्द्रिका, (१३) रसमञ्जरीटीका, (१४) रोमावलीशतकम्, (१५) लक्ष्मीविलासः, (१६) वक्षोजशतकम्, (१७) शृङ्गारमञ्जरी सट्टकम्, (१८) षड्ऋतुवर्णनम्, (१९) सिद्धान्तसुधानिधिः, (२०) होलिकाशतकम्, (२१) केचन तान्त्रिकग्रन्थाः. तत्र कवीन्द्रकर्णाभरणं विदग्धमुखमण्डनानुसारि ततोऽपि चमत्कारि च. अस्य पुस्तकद्वयमस्माभिरासादितम्. एकमस्मत्परममहाराजाश्रितसार्वभौमपण्डितलक्ष्मणदत्तपन्तसकाशात्पण्डितशिवदत्तशर्मभिः परारिवर्षे समानीतमासीत्, अपरं चाधुना पञ्जाबदेशान्तर्वर्ति'भटिण्ड'नगराधीश'सर् सर्दार अत्तरसिंह साहेब के. सी. आय्. ई.' इत्येतेर्लुधियानानगरस्थस्वकीयपुस्तकालयादर्पितम्. एतत्पुस्तकद्वयमपि शुद्धमनतिप्राचीनं चास्मन्मुद्रणाधारतां गतमिति शिवम्

यदिति ॥ बहु इति क्रियाविशेषणम् । तच्चाभिधानस्य प्रशंसायां वा । बहुभिर्महितं पूजितमिति वा । न च 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तप्रत्यये 'क्तस्य च वर्तमाने' इति षष्ठीप्रसङ्गात्तृतीयैव दुर्लभा, षष्ठ्यां च 'क्तेन च पूजायाम्' इति समासनिषेधापत्तिरिति वाच्यम् । भूते क्तप्रत्ययव्याख्यानात् । शेषषष्ठीसमासो वा इत्यन्यत्र विस्तरः । किंचिदिति । क्वचिन्न्यूनं क्वचिदतिरिक्तमित्यर्थः । तथा च संक्षेपविकासाभ्यां किंचिदंशावच्छिन्नाभ्यां न गतार्थत्वमित्यर्थः ॥

मन्दबुद्धिभिरनादरेऽप्यस्य न मम हानिरित्याह—

**एतच्चेदनुगृह्यते सहृदयैः शुद्धप्रकाशोदयै-**
**स्तत्स्यादेतदुपेक्षकैरपि खलैर्नावद्यमुच्छृङ्खलैः ।**
**शुभ्रांशोः शशिशेखरेण शकलं नीतं सदुत्तंसतां**
**किं स्वप्नेऽपि विधुंतुदेन कवलीकर्तुं कदाचित्पार्यते ॥ ४ ॥**

एतदिति ॥ अनुगृह्यते उपादेयत्वप्रकारकज्ञानविशेष्यं क्रियते । सुहृदयैः सदसद्विवेचनसमर्थैः । तत्राभार्थमेवाह—शुद्धेति । शुद्धः संशयविपर्ययरहितः प्रकाशस्य तत्तच्छास्त्रप्रतिपाद्यार्थस्य उदयो ज्ञानं येषां तैरित्यर्थः ॥ प्रकाश्यते प्रतिपाद्यते इति प्रकाशस्तत्प्रतिपाद्योऽर्थः । कर्मणि घञो व्याख्यानात् । उदय उत्कृष्टं ज्ञानम्, उत्कर्षश्च तदनुकूलतर्कान्तरविषयकत्वम् । तेन शुद्धपदेन न गतार्थत्वम् । अत एव खलानां तद्राहित्यसूचनाय उच्छृङ्खलैरित्युक्तम् ॥

वक्ष्यमाणजातीरुद्दिशति—

**व्यस्तं समस्तं द्विः पूर्वं विशिष्टं च परस्परम् ।**
**एकालापं प्रभिन्नं च भेद्यभेदकमूर्जितम् ॥ ५ ॥**
**सालंकारसकौतुकपृष्टोत्तरपृष्टपूर्वकप्रश्नम् ।**
**भग्नादिमध्यचरमोत्तरं कथितनिह्नुतिर्विषमम् ॥ ६ ॥**
**वृत्तं नामाख्यातं तार्कं सौत्रं च शाब्दशास्त्रीये ।**
**वर्णाद्वाक्याच्छ्लोकादर्धात्पादात्तथोत्तरं परतः ॥ ७ ॥**
**चक्राम्बुजकाकपदं गोमूत्री सर्वतोभद्रम् ।**
**भवति गतप्रत्यागतमधिकापचिताक्षरं च शृङ्खलया ॥ ८ ॥**
**अथ नागपाशचित्रे प्रहेलिका हृद्यमथ गूढम् ।**
**स्तुतिनिन्दा च द्व्यर्थकमपह्नुतिर्बिन्दुमद्द्युतम् ॥ ९ ॥**
**मात्राबिन्दुविसर्गाक्षरस्थितिव्यञ्जनच्युतकम् ।**
**च्युतदत्ताक्षरमित्यपि जातय इभवाणसंमिताः प्रोक्ताः ॥ १० ॥**

व्यस्तमिति ॥ व्यस्तं समस्तं चेति द्वौ भेदौ । द्विः पूर्वं द्विर्व्यस्तं द्विःसमस्तं चेत्यर्थः । परस्परं विदिष्टं चेति । व्यस्तसमस्तं समस्तव्यस्तं द्विर्व्यस्तसमस्तं द्विःसमस्तव्यस्तं चेति भावः । ऊर्जितमेव केचिदोजस्विनमाहुः । सालंकारेति समाहारद्वन्द्वः । पृष्टपूर्वकप्रश्नः पृष्टप्रश्नः भग्नोत्तरं आद्युत्तरं मध्योत्तरं अन्त्योत्तरं चेत्यर्थः । कथितानिह्नुतिः कथितापह्नुतिः । वृत्तं वृत्तनामकम् । वर्णोत्तरं वाक्योत्तरं श्लोकोत्तरमर्धोत्तरं पादोत्तरं चेत्यर्थः । चक्रादयो बन्धभेदाः । अधिकेति । वर्धमानाक्षरं हीयमानाक्षरं चेत्यर्थः ॥ शृङ्खलासाहित्यं च जातिविभागत्वेन । शृङ्खलापि जात्यन्तरमित्यर्थः । नागपाशः, चित्रम्, प्रहेलिका । अन्यत्सुगमम् । मात्राच्युतकम्, बिन्दुच्युतकम्, विसर्गच्युतकम्, अक्षरच्युतकम्, स्थानच्युतकम्, व्यञ्जनच्युतकं चेति षड्भेदाः । अत्र इमा अष्टौ बाणाः पञ्च इति 'अङ्कानां वामतो गतिः' इति न्यायेन विपरीतन्यासेनाष्टपञ्चाशत्संख्यालाभः ॥ इति वृत्तजात्युद्देशः ॥

व्यस्तसमस्तजात्योर्लक्षणमाह—

व्यस्तं स्यात्प्रश्नानां यदुत्तरं पदविभागमात्रेण ।
समुदायेन यदुत्तरमिदं समस्तं विदुर्विबुधाः ॥ ११ ॥

येषां प्रश्नानां किंचित्पदविभागेनैवोत्तरं भवति तद्व्यस्तं नाम । व्यस्तसमस्ते व्यभिचारवारणाय मात्रपदम् ॥ यत्पुनः समुदायेनैवोत्तरं तत्समस्तम् ॥ समस्तव्यस्तवारणायैवंकारः । द्विर्व्यस्तादिःसमस्तयोस्त्वेतद्भेदतया नोभयत्राप्यतिव्याप्तिः । प्रश्नोत्तरत्वेऽथ प्रसङ्गनिरूपणादुभयत्रापि व्यस्तादिव्यवहारः ॥

तत्र व्यस्तजातिमुदाहरति—

धात्वादेः षस्य को वा स्यादविहीनः कया हरिः ।
महीयोऽपि किमाहन्ति तस्य नामानुकीर्तितम् ॥

सोमयागः ।

'धात्वादेः षस्य को वादेशः' इति प्रश्ने 'सः' इत्युत्तरम् । 'धात्वादेः षः सः' इति वचनात् ॥ 'विष्णुः कया हीनो नास्ति' इति प्रश्ने 'मया' लक्ष्म्या इति ॥ विष्णुनाम कीर्तितमन्त्र महत्तरमपि किं नाशयति' इति प्रश्ने 'आगः' इति । पापमित्यर्थः ॥

अनङ्ग कुत्र भवेत्सस्तुगन्धं कां संश्रितं विदुः ।
अभिनन्दन्ति कीदृक्षं जना धर्मपरायणाः ॥

समस्तजातिमुदाहरति—

फाल्गुनेन समुपेत्य शिखण्डी कुत्र ताण्डवमखण्डितमाधात् ।
पाप्मना क जनितेन जयोऽगाद्वभ्रुवाहननिरूपितभङ्गम् ॥

गाङ्गेयसंगरे ।

फाल्गुने मासि शिखण्डिनो मयूरस्य नृत्यवर्णनाद्विरोधः । अर्जुनद्रुपदपुत्रयोर्विवक्षितत्वात्तत्परिहारः । शिखण्डिनः स्त्रीपूर्वत्वात्तत्र भीष्मेण बाणानामप्रेरणात्तद्व्यवहितेनार्जुनेन भीष्मो हत इति स्पष्टम् । तत्रैव तज्जनितपातकवशाद्वसूनां शापेन गङ्गाशापेन च बभ्रुवाहननाम्ना तत्पुत्रेणाश्वमेधहयरक्षायां स हत इत्यश्वमेधपर्वणि स्पष्टं श्रीमहाभारते ॥

तं ब्रूहि यत्र निःशङ्का हंसा अपि सयोषितः ।
सहस्रपत्रयुक्तेऽपि किं च भङ्गोऽस्ति सर्वदा ॥

पद्माकरः ।

हंसानां सन्न्यस्तानां योषित्साहित्याद्विरोधः । पक्षिणामुपादानात्परिहारः । पत्रभङ्गशब्दयोर्वाहनपराजयपरत्वाभिप्रायेण विरोधः । दलतरङ्गपरत्वेन परिहारः । उभयत्रापि समस्तं वाक्यमेकार्थकमेवोत्तरमिति लक्षणसमन्वयः ॥ इति समस्तजातिः ॥

द्विर्व्यस्तद्विःसमस्तयोर्लक्षणमाह—

द्विर्व्यस्तं यत्तत्पदभङ्गविभेदाद्द्विधोत्तरं भवति ।
स्याद्द्विःसमस्तमेतत्समस्तपदमुत्तरद्वितयम् ॥ १२ ॥

यद्विनानुपूर्वीकपदच्छेदेन नानोत्तरं भवति तद्द्विर्व्यस्तम् । यत्त्वखण्डमेव समासपदमवान्तरभङ्गेन तथा भवति तद्द्विःसमस्तमित्यर्थः । अत्राप्यवान्तरभेदस्यावश्यकत्वात् ॥

द्विर्व्यस्तमुदाहरति—

किं कुर्वन्ति तरुण्यो विलासभरमन्थरास्तरुणान् ।
का कुमुदबान्धवान्तर्विकसति सुरभौ समेते का ॥

मदयन्तिकालता ।

कि कुर्वन्तीति ॥ 'मदयन्ति' इत्युत्तरम् ॥ 'चन्द्रस्याभ्यन्तरे का' इत्यत्र 'कालता' इति । कलङ्कस्य श्यामत्वात् ॥ 'वसन्ते का विकसति' इत्यत्र 'मदयन्तिका नाम लता' इति॥

भुजंगमकुलं कीदृक् रन्तुकामः पराशरः ।
कां वा विस्तारयामास कुचयोः का बिभर्ति काम् ॥

विलासिनीहारलताम् ।

भुजगमेति ॥ 'भुजंगमकुलं कीदृक्' इत्यत्र 'विलासि' इति । बिले रन्ध्रे आस्ते तिष्ठतीति भावः । 'सुषिरं विवरं बिलम्' इत्यमरः ॥ सत्यवत्या सह यमुनायां रिरंसू रन्तुकामः

परासरो व्यवधानाय नीहारलताम् अवश्यायपरम्परां व्यतनोत् ॥ विलासिनी स्त्री कुचयोर्मध्ये हारलता मुक्तावली दधातीत्यर्थः ॥ 'हारो मुक्तावली' इत्यमरः ।

इति द्विर्व्यस्तजातिः ॥

द्विःसमस्तजातिमुदाहरति—

कामुककदम्बसङ्घटपूर्णेन्दुनिशीथिनीभौमाः ।
वाच्याः कथं चकासति काञ्चनकलशाश्च कीदृक्षाः ॥
कामिनीपयोधराकाराः ।

कामुकेति ॥ कामुकः 'कामि' इति, कदम्बो 'नीप' इति, सङ्घटो 'योध' इति, पूर्णचन्द्ररात्री 'राका' इति, भौम 'आर' इति एकः समस्तपदच्छेदः ॥ काञ्चनकलशाः कीदृक्षाः । कामिनी तरुणी तस्याः पयोधरौ तदाकारा इति द्वितीयः ॥

तरुणप्रथमलकारादेशाशनजातयः कथं वाच्याः ।
विकसितसरोजततयो मनांसि मदयन्ति कीदृश्यः ॥
युवतिवदनाकृतयः ।

तरुणो 'युव' इति वाच्यः । लकारस्य प्रथम आदेशः 'तिप्' इति । प्रथमपुरुषैकवचनस्य तिबित्याकारकत्वात् 'लस्य' इत्यधिकारे तिप्तस्झीत्यादीनामादेशानां विधानात् अशनम् 'अदन' इति । जातिः 'आकृतिः' इति । यद्यपि 'व्यक्त्याकृतिजातयस्तु पदार्थः' इति न्यायसूत्रे आकृतिपदं संस्थानविशेषार्थकम्, तथापि 'आकृतिस्तु क्रियार्थत्वात्' इति जैमिनिसूत्राभिप्रायेणेदम् ॥ 'युवतेर्वदनं मुखं तदाकृतयः' इति द्वितीयसमस्तपदच्छेदः ॥

इति द्विःसमस्तजातिः ॥

व्यस्तसमस्तद्विर्व्यस्तसमस्तजातिलक्षणमाह—

द्वेधा यदुत्तरं स्याद्व्यस्तसमस्तं तु तत्प्रोक्तम् ।
स्याद्द्विर्व्यस्तसमस्तं व्यस्तं तत्रैव च द्वेधा ॥ १३ ॥

यदादावेकवारं व्यस्तं सत् द्वितीयवारं तु समस्तं सदुत्तरं भवति तद्व्यस्तसमस्तम् ॥ यत्र व्यस्तमेव वारद्वयं समस्तं स्वरूपानुसारं भवति तद् द्विर्व्यस्तसमस्तम् इत्युक्तम् ॥ द्वेधेति समस्तस्य पृथगुक्तत्वात् ॥ द्वित्वमुपलक्षणं त्रिचतुरादेरपि संभवात् ॥

व्यस्तसमस्तमुदाहरति—

पदं किं प्रतिपक्षार्थं छेदकमर्थकं च किम् ।
ग्रीष्मे मरौ भवेत्कीदृक्षा स्थिरा का वधूः प्रिया ॥
मादूरपयोधरा ।

पदमिति ॥ प्रतिषेधार्थकं पद 'मा' इति। 'मास्म मालं च वारणे'। छेदकर्तृवाचि पदं 'लूः' इति। 'लूञ् छेदने' इत्यस्य क्विप्। ग्रीष्मे सरो 'अपयः' जलहीनम्। स्थिरा स्थैर्यवती 'धरा' भूमिः। इति व्यस्तपदविभागः॥ मालूरं बिल्वफलं तद्वत् पयोधरौ स्तनौ यस्यास्तादृशी वधूः प्रिया भवति ॥ इति समस्तपदविभागः॥ 'बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि' इत्यमरः। तस्य फलं मालूरम्। 'फले लुक्' ॥

साहित्यार्थपदं किं संबोध्यः करभसंबन्धी ।
कोऽन्यविषयापहारी प्रसरन्ति वसन्तसमये काः ॥

सहकारभवधूलयः ।

'सह' इति पदं साहित्यार्थकम्। 'कारभ' इति करभसंबन्धिसंबुद्धिः। वधूः स्त्री तस्यां लय आसक्तिविशेषः अन्यविषयापहारी। इति व्यस्तपदविभागः॥ सहकारेभ्य आम्रेभ्यो भवा जाता धूलयः परागा वसन्ते विस्तीर्यन्ते ॥ इति समस्तपदविभागः॥

इति व्यस्तसमस्तजातिः ॥

द्विर्व्यस्तसमस्तमुदाहरति—

संबोधय त्रिनयनं भवनं च विष्णुः
को वा भवस्य स कया वनपूर्वयाप्तः ।
स्यात्तत्त्ववित्कथमथासुरहाभिधेयः
को दंदहीति विरहे वरवर्णिनीश्च ॥

मालयाशुगः ।

संबोधयेति ॥ 'म' इति शिवस्य, 'आलय' इति भवनस्य संबुद्धिः। 'मः शिवे मा रमायां च' इति ॥ 'विष्णुर्भवस्य कः' इत्यत्र 'आशुगः' इत्युत्तरम्। त्रिपुरवधे तस्य बाणभूतत्वात्। 'विष्णुं शरोत्तमं कृत्वा' इति महाभारतोक्तेः। इत्येको व्यस्तपदच्छेदः ॥ 'विष्णुर्वनपूर्वया कया प्राप्तः' इत्यत्र 'मालया' इत्युत्तरम्। वनमालया सगतः इत्यर्थः॥ तत्त्वज्ञः पुरुषः अशुक् शोकरहितः। असुरहा विष्णुः कथं वाच्यः इत्यत्र 'अः' इति। 'अकारो वासुदेवः स्यात्' इति नानार्थः। इति द्वितीयो व्यस्तपदच्छेदः॥ प्रियवियोगे मालयो मलयसंबन्धी आशुगः पवनो दंदहीति पीडयति ॥ इति समस्तपदच्छेदः॥

वैदेहः समबोधयद्वद कथं गार्ग्यं विहीनो भवे-
त्केनादादिगणोऽतिपातकरुचिः स्यात्केन मुक्तो जनः ।
मेधाविन् शिशुदुःखदुःभभुरवीन्संबोधयस्व स्वयं
केनेयं सदृशी विभाति गगने धाराधराणां ततिः ॥

बालाकेशपाशेन ।

वैदेहो जनको गार्ग्यं 'बालाकि' इति संबोधयामास । 'दृप्तबालाकिर्हानूचानो गार्ग्य आस' इति प्रक्रमे 'क्वैष तदाबालाके पुरुषोऽशयिष्ट' इति बृहदारण्यकश्रुतेः ॥ अदादिगणपठितो धातुः 'शया' विहीनो भवति । 'अदिप्रभृतिभ्यः शपः' इति शपो लुग्विधानात् ॥ अत्यन्तपापरतिः पुरुषः 'शेन' सुखेन मुक्तो भवति । पापस्य दुःखजनकत्वात् ॥ इत्येको व्यस्तपदच्छेदः ॥ शिशोः संबोधनं 'बाल' इति । दुःखस्य 'अक' इति । कुत्सितस्य प्रभोः 'ईशपाश' इति । 'याप्ये पाशप्' । सूर्यस्य 'इन' इति । इति द्वितीयो व्यस्तपदच्छेदः ॥ नूतना मेघलेखा बालया युवतेः केशपाशेन कुन्तलकलापेन सदृशी विभाति ॥ इति समस्तपदच्छेदः ॥

इति द्विर्व्यस्तसमस्तजातिः ॥

द्विःसमस्तव्यस्तद्विःसमस्तद्विर्व्यस्तलक्षणमाह—

द्वौ वारौ यत्समासेन व्यासेन सकृदुत्तरम् ।
तद्द्विःसमस्तव्यस्तं स्याद्व्यासावृत्त्या परा भिदा ॥ १४ ॥

यद् वारद्वयं समस्तम् एकवारं च व्यस्तं सत् उत्तरं भवति तद् द्विःसमस्तव्यस्तमित्यर्थः । अत्रैव यदि व्यस्तमपि वारद्वयमुत्तरं तदा तद् द्विःसमस्तद्विर्व्यस्तमपि भवितुमर्हतीत्यर्थः ॥ प्राचीनैरनुक्तावपि न्यायसाम्येन दुरपह्नवत्वात् । न च द्विर्व्यस्तसमस्तयोरेवात्र समावेश इति वाच्यम् । द्विःसमस्तस्य व्यस्तस्य च समाहारेण द्विःसमस्तव्यस्तभेदस्यापि गतार्थत्वप्रसङ्गात् । विच्छित्तिवैलक्षण्यस्य च साम्यात् ॥

द्विःसमस्तव्यस्तमुदाहरति—

कीदृक्चन्द्रोदयो यूनां वधूबिम्बाधरः कथम् ।
शिशिरापगमे किं वा वाच्यं सहृदयोचितम् ॥

मधुरजनिमदनीयः ।

मधोर्वसन्तस्य रजनी रमणीयः । मधुरो रसविशेषशाली जनिमदनीयः स्वभावान्मादनकः इति कर्मधारयः । इति द्वौ समस्तपदच्छेदौ ॥ मदनीयः कामसबन्धी सखा मधुः सन्तोऽजनि जातः । इत्येको व्यस्तपदच्छेदः ॥

कीदृशा मत्तमातङ्गाः कीदृश्यो द्यूतभूमयः ।
कथं न पाण्डवो ज्येष्ठः कथं मुग्धापयोधराः ॥

श्रितविदुरोदरदृश्याः ।

दैत्यकाशा मुग्धास्तनाः । किंचिदुन्नतिमत्वाल्लज्जया वृतत्वेन कदाचिदपि प्रियेण दर्शनाच ॥ श्लेको व्यस्तपदभङ्गः ॥

इति द्विःसमस्तव्यस्तजातिः ॥

द्विःसमस्तद्विर्व्यस्तमुदाहरति—

मधौ परभृता कीदृक्कौशल्या वद कीदृशी ।
कीदृग्वराङ्गनादृष्टिः कीदृशी क्षुन्दी शरत् ॥

सुतरामानन्दितारा ।

मधाविति ॥ वसन्ते परभृता कोकिला सुतो जनितो रामानन्दी श्रीमनोहरस्तारो व्यक्तशब्दो यया तादृशी भवति । सुतेन रामेण आनन्दिता रावणादिवधेन तोषिता आरा देवा यस्यास्तादृशी कौशल्या भवति । इति द्वौ समस्तपदच्छेदौ । सुतराम् अत्यर्थमानन्दिनी आनन्दयुक्ता आनन्दजनिका वा तारा अक्षिकनीनिका यस्यास्तादृशी युवतिदृग्भवति ॥ क्षुद्रनदी सुतरा सुखेन तरीतुं शक्या भवति शरच मा लक्ष्मीस्तयानन्दिन्य उल्लासशीलास्तारा नक्षत्राणि यत्र तादृग्भवति ॥ इति द्वौ व्यस्तपदच्छेदौ ॥

कीदृक्तनुर्वरतनोर्भवभूतिराह
किं नाटकं न कवयोऽभिदधुर्मधौ काम् ।
साध्वी कियत्त्वनिति का कुरुते हरिं किं
कां वा स तिष्ठति महद्गहनं च कीदृक् ॥

मालतीमाधवम् ।

मालतीपुष्पस्य मां लक्ष्मीं धुनोति अवहेलयति तादृशं मालतीमाधवं कामिनीगात्रम् । 'धूञ् कम्पने' 'क्वचिदपि'[1] इत्यप्रत्ययः । मालतीमाधवसंज्ञं नाटकं भवभूतिः कविः कृतवान् । इति द्वौ समस्तपदच्छेदौ । मालतीं जातिं वसन्ते कवयो न वर्णयन्ति 'नियमाच जात्यादेः' इति कल्पलतायाम् । आधवं पतिजीवनपर्यन्तं पतिव्रता जीवति । मा लक्ष्मीविष्णुम् अलति भूषयति । सोऽपि ईं लक्ष्मीं भूषयति ॥ आ समन्तात् धवा वृक्षविशेषा यत्र तादृशं महावनं भवति । इति द्वौ व्यस्तपदच्छेदौ ॥

इति द्विःसमस्तद्विर्व्यस्तजातिः ॥

एकालापकलक्षणमाह—

**प्रतिभासो भवेद्यत्र सहसैवार्थयोर्द्वयोः ।**
**तदेकालापकं प्राहुर्द्विःसमस्तभिदान्तरम् ॥ १८ ॥**

१. 'अकर्तरि च कारके' इत्युक्तेः कर्तर्यप्राप्त्या चिन्त्यमेतत्. तस्मात्पचाद्यजन्तेन समासः कार्यः.

यत्रैकस्मिन्समस्ते पदे स्पष्टमेवार्थद्वयं प्रतीयते तदेकालापकम् ॥ नन्वेतत्तेनैव गतार्थमत आह—द्विःसमस्तेति। तद्विशेष एवायं भेदः। अर्थस्य सहसा प्रतीत्यप्रतीतिभ्यामेव वैलक्षण्यस्योक्तत्वादित्यर्थः ॥

उदाहरति—

कीदृग्बभूव वैदेहीविवाहे भृगुनन्दनः।
कामिन्याः क्रीडमानायाः कीदृशः कन्दुकः करे ॥

रामास्तनाकारः।

रामेण दाशरथिना अस्तः प्रतिषिद्धो नाकारः स्वर्गगमनं यस्य तादृक्। तदीयवैष्णवधनुरारोपणेन जामदग्न्यस्य स्वर्गतेर्निषेधात् ॥ 'ऋ गतौ' इत्यस्य भावे घञि आर इति रूपम्। रामायास्तरुण्याः स्तनाकृतिः कन्दुको भवति। इति द्वौ समस्तपदच्छेदौ।

इत्येकालापकम् ॥

प्रभिन्नकमाह—

सति शब्दार्थयोर्भेदे वचनस्य सुपां तथा।
लिङ्गस्य च भिदा यत्र तद्वदन्ति प्रभिन्नकम् ॥ १६ ॥

यत्र शब्दार्थयोर्भिन्नत्वे सति विभक्तिवचनलिङ्गानां भेदस्तत्प्रभिन्नकमित्यर्थः ॥

तत्र शब्दार्थवचनभिन्नमुदाहरति—

माद्यत्परभृता साम्यं कुत्र वा कलयन्ति काः।
मधुरोऽप्यभिधानेन मनसा कीदृशः खलः ॥

गिरिसारसदृशः।

माद्यदिति ॥ सारसं कमलं तत्तुल्या दृशो यासाम्। यद्वा सारसः पक्षिविशेषः तस्येवार्द्रा दृशौ यासां ता इत्यर्थः। गिरि वाण्या मत्तकोकिलासाम्यं धारयन्ति। इति व्यस्तपदच्छेदः ॥ मधुरवचनोऽपि दुर्जनो मनसा गिरिसारस्य लोहस्य सदृशो भवति काठिन्यात्। इति समस्तपदच्छेदः ॥ दृश इत्यादौ प्रथमाया बहुवचनान्तम्। सदृश इत्येकवचनान्तमिति भेदः ॥

मुहुरार्तजनरुजाकृत्पृच्छति कः संपदां क्षयकृत्।
पद्माकरा जलधरावसानसमये भवन्ति कीदृक्षाः ॥

बहुधार्तराष्ट्रशकुनयः।

बहुधा वारंवारं आर्तान्दीनान् राष्ट्र तत्स्थाञ्जनांश्च रुजति तनूकरोति इति बहुधार्तराष्ट्रः। 'रुजो तनूकरणे'। 'भावधोत्सर्गे' इति कल्पद्रुमः। तस्य संबुद्धिः ॥ दुर्जनो शकुनय इत्यर्थः। इति व्यस्तपदच्छेदः ॥ बहवो धार्तराष्ट्राः शकुनयो हंसविशेषा येषु ताद्

शरदि तडागा भवन्ति। इति समस्तपदच्छेदः॥ कुनय इत्येकवचनान्तम्। शकुनय इति बहुवचनान्तम्॥

इति वचनभिन्नम्॥

प्रजा राजन्वती कीदृग्दैत्यसेना हरेः कथम्।
कान्वायुवद्विदुर्द्रौण्यादयो निशि कथं क्रुधा॥

सुस्वापविजितारयः।

शोभनं स्वं द्रव्यं यस्मात्तादृक् सुराजा प्रजा भवति॥ दैत्यसेना हरेरिन्द्रस्य पविना वज्रेण जिता भवति। 'कुलिशं भिदुरं पविः' इत्यमरः॥ अरं शीघ्रं यान्ति गच्छन्ति तानरयः शीघ्रगतीन्वायुसदृशानाहुः। 'या प्रापणे' क्विप्। द्वितीयाबहुवचने 'आतो धातोः' इत्याकारलोपः। इति व्यस्तपदच्छेदः॥ द्रौणिकृपकृतवर्माणः सुस्वापे निद्रायां विजिता अरयो धृष्टद्युम्नादयो यैस्तादृशा इति सौप्तिकपर्वणि स्पष्टम्॥ 'सुविनिदुर्भ्यः सुपि—' इति कृतसंप्रसारणस्य सुषेर्निर्देशान्न षत्वम्॥ इति समस्तपदच्छेदः॥ अरय इति प्रथमान्तं द्वितीयान्तं चेति भेदः॥

कीदृक्कुरङ्गनयना मनसिजमाहूय नृपः क्व सक्तः स्यात्।
सैनापत्यमवाप्य द्रुह्यति कस्मै पुरा स्कन्दः॥

वराङ्गीतनुजनये।

वराङ्गी रम्यदेहा वधूर्भवति। तनुज अङ्गजेति कामसंबुद्धिः॥ राजा नये नीतौ सक्तो भवेत्। इति व्यस्तपदच्छेदः। वराङ्गयास्तनुतः शरीराजनिर्यस्य स तस्मै वराङ्गीतनुजनये गुहो द्रुह्यति। वराङ्गीवज्राङ्गौ तारकासुरस्य मातापितरौ इति स्पष्टं मत्स्यपुराणे। इति समस्तपदच्छेदः॥ नय इति सप्तमी। जनय इति चतुर्थी॥

इति विभक्तिभिन्नम्॥

का वदान्यस्य संबुद्धिः किं वायोरपि चञ्चलम्।
बालोऽपि भरतः प्रोक्तः कीदृशः काश्यपाश्रमे॥

सर्वदमनः।

सर्वं बहु ददातीति सर्वद इति दातृसंबुद्धिः॥ मनो वातापेक्षयापि चञ्चलम्॥ इति व्यस्तच्छेदः॥ काश्यपस्य कण्वस्याश्रमे बालकोऽपि भरतः सर्वान्दमयतीति सर्वदमनतया प्रोक्त इत्यादिपर्वणि स्पष्टम्। इति समस्तच्छेदः॥ मन इति क्लीबम्। दमन इति पुलिङ्गम्॥

के गजभेदाः कृपणाः किमवन्ति वदन्त्यरिकुलं किम्।
किं नाविक आदत्तेऽस्पृहयत्सत्या विरुध्य कां कस्मै॥

मन्दारायमारमातरम्।

गजविशेषा मन्दा मन्दसंज्ञाः। 'भद्रो मन्दो मृगश्चेति विज्ञेयास्त्रिविधा गजाः' इति हलायुधः॥ कदर्या राय द्रव्यम् अवन्ति रक्षन्ति दानाद्यभावात्। अरीणां समूह आरम्। नाविक आतर गृह्णाति। 'आतरस्तरपण्यं स्यात्' इत्यमरः। सत्या सत्यभामा मारस्य प्रद्युम्नस्य मातरं रुक्मिणीं विरुध्य स्पर्धयित्वा मन्दाराय पारिजाताय स्पृहयामास। आतामिति पुलिङ्गम्, मातरमिति स्त्रीलिङ्गम्॥

इति लिङ्गभिन्नम्॥

नन्दनचैत्ररथे कथमाह्वय सलिलं च शैलं च।
को लोकश्रयणीयः केभ्यः स्पृहयन्ति रसवन्तः॥
दिव्यतरुणीपयोधरेभ्यः।

दिव्या अमानुषास्तरवो वृक्षा ययोस्ते दिव्यतरुणी इन्द्रधनदयोरुद्याने। पय इति उदकस्य, धर इति पर्वतस्य संबुद्धिः। इभ्यो लोकानां सेव्यः 'इभ्य आढ्यो धनी स्वामी' इत्यमरः। दिव्यानां रम्याणां तरुणीनां पयोधरेभ्यः स्तनेभ्यो रसिका स्पृहयन्ति। 'स्पृहेरीप्सितः' इति (सम्प्रदानत्वे) चतुर्थी॥ इभ्य इति प्रथमैकवचनम्, पयोधरेभ्य इति चतुर्थीबहुवचनम्॥

का शीधुपसंबुद्धिर्मणिपूर्वा कायते वरवधूनाम्।
कासां ततिर्घनभवा कामाहुः कामिनीमनघवेद्याम्॥
मधुरतमालापाम्।

मधुनि मद्ये रत इति मधुरतसंबुद्धिः॥ मणिपूर्वा माला मणिमाला दन्तव्रणविशेषः वधूनां बिम्बोष्ठे विभाति। 'मणिमाला स्मृता हारे स्त्रीणां दन्तक्षतान्तरे' इति विश्वः। अपां जलानां ततिः पङ्क्तिर्मेघजन्या। मधुरतम आलापो यस्यास्तादृशीं प्रियं अनघवेद्यां मनस्विनीं रागादानन्दां वदन्ति। 'आह्लादसंपादिनीं दक्षां वीरसूं प्रियवादिनीम्। लज्जान्वितां सत्यवतीं भार्यां प्राहुः श्रियः॥' इति याज्ञवल्क्योक्तेः॥ 'अपाम्' इति षष्ठीबहुवचनान्तम्, 'मधुरतमालापाम्' इति द्वितीयैकवचनान्तम्॥

इति वचनविभक्तिभिन्नम्॥

मदनमिव रतिः प्रियं मृगाक्षी स च परिगृह्णाति तां सतीमिवेदम्।
बकुलसुमनसः कथं हसन्त्यः किमभिदधाति वधूः प्रियं भजन्तम्॥
कामिन्यास्तनुरभयः।

सन् यासि गच्छसि तदनर्हम् इति नायिकयोत्तरं दत्तम् ॥ सुरभय इति स्त्रीलिङ्गे प्रथमाबहुवचनान्तम्, अभय इति पुलिङ्गे प्रथमैकवचनान्तम् ॥

किं संभोगास्पदं यूनोः कीदृशो नृपतिर्जयी ।
उमैकपर्णापर्णाश्च संबन्धिन्यः कथं वद ॥

मिथः स्वसारः ।

मिथो रहः कामिनोः संभोगस्थानम् । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः ॥ स्वत एव सारो बलवान् नृपो विजयी । दुर्बलस्य पराश्रयादिप्रसङ्गात् । उमैकपर्णापर्णाश्च हिमवत्कन्यात्वात् परस्परं स्वसारो भगिन्यो भवन्ति । स्वसार इति स्वसृशब्दस्य स्त्रीलिङ्गस्य प्रथमाबहुवचनान्तम्, सारशब्दस्य पुलिङ्गस्यैकवचनान्तमिति ॥

इति शब्दार्थलिंङ्गवचनभिन्नम् ॥

को ध्रुव उत्पत्तिमतां साधकतममुच्यते किं वा ।
किं चक्रविरहहारकममृतं लघु कीदृशश्च गिरः ॥

अन्तःकरणमुषः ।

अन्यानां भावानाम् अन्तो विनाशो ध्रुव आवश्यकः । साधकतम कारक करणमित्युच्यते । 'साधकतम करणम्' इत्युक्तेः ॥ उषः प्रातःकालः चक्रवाकवियोगहृत् । 'उषः-प्रत्युषसी अपि' इत्यमरः । अन्तःकरणं हृदयं मुष्णाति चोरयति । स्वासक्त करोतीति यावत् । 'मुष स्तेये' । क्विबन्तस्य पञ्चम्येकवचनान्तं स्त्रीलिङ्गम्, उष इति क्लीबे प्रथमैकवचनान्तम् ॥

द्यौः प्रातःकालिकी कीदृग्भवति प्रवणं कथम् ।
चक्रवाकाः किमिच्छन्ति पिकानां सुरभिः कथम् ॥

विभावितमहः ।

विगतानि भानि नक्षत्राणि यस्यास्तादृशी द्यौः प्रभाते भवति । 'प्रवणं क्रमनिम्नोर्व्याम्' इत्यमरः । अद्भिर्जलैरितम् अवितम् । चक्रा अहर्दिनम् इच्छन्ति संभोगसमयत्वात् । वसन्तः पिकानां विभावितो मह उत्सवो येन तथा महहेतुत्वात् ॥ अहरिति क्लीबैकवचन द्वितीयायाम्, मह इति पुलिङ्गैकवचनं प्रथमायाम् ॥

इति शब्दार्थलिङ्गविभक्तिभिन्नम् ॥

किं कुरुते रविरुद्यन्भवमाह्वय पापिनां रतिः केव ।
सूर्मी कस्य प्रतिमा दिवसाः शरदश्च कीदृक्षाः ॥

तमालोपमविहायसः ।

उदयन् सूर्यः तमाया रात्रेर्लोपं करोति । ओ इति शिवसंबुद्धिः उशब्दस्य शिववाच-

गजविशेषा मन्दा मन्दसंज्ञाः । 'भद्रो मन्दो मृगश्चेति विशेषास्त्रिविधा गजाः' इति हलायुधः ॥ कदर्या रायं द्रव्यम् अवन्ति रक्षन्ति दानाद्यभावात् । अरीणां समूह आरम् । नाविकः आतरं गृह्णाति । 'आतरस्तरपण्यं स्यात्' इत्यमरः । सत्या सत्यभामा मारस्य प्रद्युम्नस्य मातरं रुक्मिणीं विरुध्य स्पर्धयित्वा मन्दाराय पारिजाताय स्पृहयामास । आतरमिति पुंलिङ्गम्, मातरमिति स्त्रीलिङ्गम् ॥

इति लिङ्गभिन्नम् ॥

नन्दनचैत्ररथे कथमाह्वय सलिलं च शैलं च ।
को लोकश्रयणीयः केभ्यः स्पृहयन्ति रसवन्तः ॥

दिव्यतरुणीपयोधरेभ्यः ।

दिव्या अमानुषास्तरवो वृक्षा ययोस्ते दिव्यतरुणी इन्द्रधनदयोरुद्याने । पय इति जलस्य, धर इति पर्वतस्य संबुद्धिः । इभ्यो लोकानां सेव्यः 'इभ्य आढ्यो धनी स्वामी' इत्यमरः । दिव्यानां रम्याणां तरुणीनां पयोधरेभ्यः स्तनेभ्यो रसिकाः स्पृहयन्ति । 'स्पृहेरीप्सितः' इति (सम्प्रदानत्वे) चतुर्थी ॥ इभ्य इति प्रथमैकवचनम्, पयोधरेभ्य इति चतुर्थीबहुवचनम् ॥

का शीधुपसंबुद्धिर्मणिपूर्वा काधरे वरवधूनाम् ।
कासां ततिर्घनभवा कामाहुः कामिनीमनधिवेद्याम् ॥

मधुरतमालापाम् ।

मधुनि मद्ये रत इति सुरापसंबुद्धिः ॥ मणिपूर्वा माला मणिमाला दन्तव्रणविशेषलक्षणानां बिम्बोष्ठे विभाति । 'मणिमाला स्मृता हारे स्त्रीणां दन्तक्षतान्तरे' इति विश्वः । अपां जलानां ततिः पङ्क्तिर्मेघजन्या । मधुरतम आलापो यस्यास्तादृशीं स्त्रियं अनधिवेद्यामपत्नीविवाहानर्हां वदन्ति । 'आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् । त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥' इति याज्ञवल्क्योक्तेः ॥ 'अपाम्' इति षष्ठीबहुवचनान्तम्, 'मधुरतमालापाम्' इति द्वितीयैकवचनान्तम् ॥

इति वचनविभक्तिभिन्नम् ॥

मदनमिव रतिः प्रियं मृगाक्षी स च परिपृच्छति तां सतीमिवेदम् ।
बकुलसुमनसः कथं हसन्त्यः किमभिदधाति वधूः प्रियं व्रजन्तम् ॥

कामिन्यास्त्वसुरभयः ।

कामिनि विलासे इति संबुद्धिः । आशामर्थान् त्वदीयं तद्वत् सुरभयः सुगन्धयो बकुलानां सुमनसो भवन्ति इति नायकेनोत्तरं दत्तम् । 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः ॥ हे स्वामिन् असुर्यंपश्यानामियम्‌स्माकम् अभ्यो मदपेक्षया येहमहन वा प्रमक वद्धयं तद्वत्

सन् यासि गच्छसि तदनर्हम् इति नायिकयोत्तरं दत्तम् ॥ सुरभय इति स्त्रीलिङ्गे प्रथमाबहुवचनान्तम्, अभय इति पुलिङ्गे प्रथमैकवचनान्तम् ॥

किं संभोगास्पदं यूनोः कीदृशो नृपतिर्जयी ।
उमैकपर्णापर्णाश्च संबन्धिन्यः कथं वद ॥

मिथः स्वसारः ।

मिथो रहः कामिनोः संभोगस्थानम् । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः ॥ स्वत एव सारो बलवान् नृपो विजयी । दुर्बलस्य पराश्रयादिप्रसङ्गात् । उमैकपर्णापर्णाश्च हिमवत्कन्यात्वात् परस्पर स्वसारो भगिन्यो भवन्ति । स्वसार इति स्वसृशब्दस्य स्त्रीलिङ्गस्य प्रथमाबहुवचनान्तम्, सारशब्दस्य पुलिङ्गस्यैकवचनान्तमिति ॥

इति शब्दार्थलिङ्गवचनभिन्नम् ॥

को ध्रुव उत्पत्तिमतां साधकतममुच्यते किं वा ।
किं चक्रविरहहारकमम्तं लघु कीदृशश्च गिरः ॥

अन्तःकरणमुषः ।

अन्यानां भावानाम् अन्तो विनाशो ध्रुव आवश्यकः । साधकतम कारक करणमित्युच्यते । 'साधकतम करणम्' इत्युक्तः ॥ उषः प्रातःकालः चक्रवाकवियोगहृत् । 'उषःप्रत्युषसी अपि' इत्यमरः । अन्तःकरणं हृदयं मुष्णाति चोरयति । स्वासक्त करोतीति यावत् । 'मुष स्तेये' । क्विबन्तस्य पञ्चम्येकवचनान्तं स्त्रीलिङ्गम्, उष इति क्लीबे प्रथमैकवचनान्तम् ॥

द्यौः प्रातःकालिकी कीदृग्भवति प्रवणं कथम् ।
चक्रवाकाः किमिच्छन्ति पिकानां सुरभिः कथम् ॥

विभावितमहः ।

विगतानि भानि नक्षत्राणि यस्यास्तादृशी द्यौः प्रभाते भवति । 'प्रवणं क्रमनिम्नोर्व्याम्' इत्यमरः । अद्भिर्जलैरितम् अवितम् । चक्रा अहर्दिनम् इच्छन्ति संभोगसमयत्वात्। वसन्तः पिकानां विभावितो मह उत्सवो येन तथा मदहेतुत्वात् ॥ अहरिति क्लीबैकवचनं द्वितीयायाम्, मह इति पुलिङ्गैकवचनं प्रथमायाम् ॥

इति शब्दार्थलिङ्गविभक्तिभिन्नम् ॥

किं कुरुते रविरुद्यन्भवमाह्वय पापिनां रतिः क्व ।
सूर्मी कस्य प्रतिमा दिवसाः शरदश्च कीदृक्षाः ॥

तमालोपमविहायसः ।

उदयन् सूर्यः तमाया रात्रेर्लोपं करोति । ओ इति शिवसंबुद्धिः उशब्दस्य शिववाच-

शब्दभेदो भिन्नानुपूर्वीकशब्दबोध्यद्वितीयार्थत्वम् । तेनार्थभेदाभावार्थस्थले शब्दभेदाङ्गी-कारेऽपि न क्षतिः । व्यस्तादेरेवावान्तरभेदो लिङ्गादिभेद इत्यर्थः ॥

इति श्रीविश्वेश्वरपण्डितविरचिते कवीन्द्रकर्णाभरणे प्रथमः परिच्छेदः ।

---

## द्वितीयः परिच्छेदः ।

भेद्यभेदकजातिं लक्षयति—

पदच्छेदेन यत्र स्याद्विशेषणविशेष्ययोः ।
निर्देशस्तद्वदन्तीह विद्वांसो भेद्यभेदकम् ॥ १ ॥

यत्र पदभङ्गेन विशेषणं विशेष्यं च निर्दिश्यते तद्भेद्यभेदकमित्युक्तम् ।

उदाहरति—

कोकिलाकुलितः कीदृक्सहकारमहीरुहः ।
पीयते वरवर्णिन्याः सरसं वल्लभेन का ॥

मधुराधरपालिः ।

मधुराधौ चैत्रवैशाखौ 'मधुश्चैत्रवसन्तयोः' 'वैशाखे माधवो राधः' इत्यमरः । तत्र र-पन्ति शब्दायन्ते रपा अलयो भ्रमरा यत्र । 'रप-लप'-धातू शब्दार्थौ । मधुररसा का-मिन्या अधरपालिः प्रियेण पीयते । पालिशब्दः स्वरूपार्थः । कपोलपालिः कपोलोत्सङ्ग इति क्षीरस्वामी ॥

चकास्ति मत्तकाशिन्याः कीदृगाननपङ्कजम् ।
प्रभातसमये भाति कीदृशं सरसीषु किम् ॥

समदालिकमलम् ।

अलं अतिशयेन समदं कस्तूरीसहितं तत्तिलकशालि अलिकं ललाटं यत्र तादृशं यु-तिमुखं शोभते । 'मदो रेतसि कस्तूर्याम्' इति विश्वः । अतिशयश्च शिल्पविशेषस्वरूपः । मदा मत्ता अलयो भ्रमरा यत्र तादृशं कमलं तडागेषु भाति । फुल्लत्वात् । अत्र श्लोके व्यस्तजातिः । पूर्वश्लोके समस्तव्यस्तजातिरिति विशेषः ॥

इति भेद्यभेदकजातिः ॥

ऊर्जितजातिं लक्षयति—

प्रश्नवाक्यं भवेद्यत्र लघ्वक्षरकमुत्तरम् ।
तदूर्जितमिति प्रोक्तमूर्जस्वीत्यपरैरिदम् ॥ २ ॥

उदाहरति—

सामानाधिकरण्यमञ्चति विधोः का धूर्जटेर्मूर्धनि
स्वर्धुन्याथ विधुंतुदोऽपि विबुधाभासो व्यधात्किं सुधाम् ।

कंदर्पोदितदर्पयौवनजवादन्धायमाना वधूः
कीदृक्कूजति सव्रणं प्रणयिना बिम्बाधरे चुम्बिते ॥

कलापिवत्।

विधोश्चन्द्रस्य कला धूर्जटेरीश्वरस्य शिरसि स्वर्धुन्या गङ्गया सह सामानाधिकरण्यमेकाधिकरणवृत्तित्वं प्राप्नोति गङ्गाचन्द्रकलयोरेकस्मिंस्तत्र वृत्तेः ॥ विबुधाभासो मायया देवरूपो राहुः सुधां पीयूषं अपिबत् पीतवान्। अतिविजृम्भमाणतारुण्या नारी दन्तक्षतपूर्वकं कामुकेनाधरचुम्बने कृते सति कलापिवत् मयूरेण तुल्यं कूजति सीत्करोति। तदुक्तं कामशास्त्रे—'मुञ्च पीडय गृहाण जीवय त्राहि हा धिगिति सीत्कृतं विदुः। तच्च लावककपोतकोकिलाहंसकेकिसदृशं रतक्रमैः ॥'

कामोद्रेचकमेचकीकृतदिशो वृन्दैर्वृता विद्युता-
मत्यूर्जस्खलगर्जिताः प्रसुवते किं नाम धाराधराः।
कस्याकथ्यत शब्दशासनकृता शक्तिः सवर्णग्रहे
तारुण्यान्वितया सरोरुहदृशा यानेन को निर्जितः ॥

वारणः।

कामस्योद्रेचका उद्दीपका मेचकीकृता नीलीकृता दिशो यैः। ततो द्वयोः कर्मधारयः। एवंविधा मेघा वार् जलं जनयन्ति। 'आपः स्त्रीभूम्नि वार्वारि' इत्यमरः। वारिशब्दस्याद्यर्थो वाःशब्दः क्लीबे तेन 'स्वमोर्नपुंसकात्' इति द्वितीयैकवचनस्य लुक् ॥ शब्दशास्त्रकारेण पाणिनिना 'अणः' 'अण्' इति प्रत्याहारस्य शक्तिरुक्ता 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्युक्तत्वात्। यौवनालसया कान्तया यानेन गमनेन वारणो हस्ती जितस्तिरस्कृतः ॥

इत्यूर्जितजातिः ॥

सालंकारजातिं लक्षयति—

अलंकारवता यत्तु वाक्येन परिपृच्छ्यते।
तदुत्तरं बहुविदः सालंकारं प्रचक्षते ॥ २ ॥

उदाहरति—

कस्माद्वोदयति त्वदीयवदनामोदि प्रिये पङ्कजं
किं वा संवृणते तवैव कबरीभारानुकारा घनाः।
त्वद्बिम्बाधरवन्नितान्तमधुरं संस्वाद्यमानं मुदा
किं तावद्विपयान्तराच्च हृदयं व्यावर्तयेत्कामिनाम् ॥

कादम्बरम्।

प्रियामुखसजातीयसौरभं कमलं कात् उदकात् उत्पद्यते। प्रियाकेशपाशसदृशा मेघा अम्बरं आकाशं छादयन्ति । कादम्बरं मद्यविशेषः । 'कादम्बरं तु दध्यग्रे मद्यभेदे च सीधुनि' इति विश्वः । प्रियाबिम्बोष्ठवन्मधुरं सेव्यमानं सत् विषयान्तराद्रसिकानां मानसं व्यावर्तयति स्वविषयकस्पृहोत्पत्तिहेतुत्वात् । अत्र प्रतीपालंकार उपमेयस्य मुखादेरुपमानकत्वकल्पनात् ॥

स्थायिन्यामचिरं क्व वा वरतनोस्तादात्म्यमिच्छामहे
तत्कण्ठं धृतसिन्दुवारमुकुलं मुक्ताफलानां कथम् ।
सर्वस्वं रतिजीवितप्रणयिनस्तद्वारवाहागम-
प्रायं कीदृशमम्बुजोपमदृशो दृश्यैकसारं मुखम् ॥

रुचिरतमालकम् ।

अचिरं तिष्ठन्त्यां रुचि । विद्युतीत्यर्थः । सिन्दुवारकोरकालंकृतं नायिकाकण्ठं मौक्तिकानां रता मालिका यत्र तादृशं पश्यामः । मालाशब्दस्य सम्बन्धिशब्दत्वान्मुक्ताफलसाकाङ्क्षत्वेऽपि समासः देवदत्तस्य गुरुपुत्र इतिवत् । रुचिरा तमाला यत्र । समासान्तः कप्रत्ययः । पक्षे रुचिरतमा अतिरम्या अलकाश्चूर्णकुन्तला यत्रेत्यर्थः । तादात्म्यमिति रूपकालंकारः । अभेदस्य विशेषतया प्रतीतेः नायिकातादात्म्यस्य तदन्यत्रानुपपत्त्या विद्युति तदभेदाभिधानान्निदर्शनालंकारः । एवं सिन्दुवारमुकुलधारणान्मौक्तिकमालाधारणोक्तावपि बोध्यम् । सादृश्यपर्यवसानात् । तृतीये तूपमा ॥

इति सालंकारजातिः ॥

सकौतुकजातिं लक्षयति—

वृत्तेन लघुना पृष्टं द्विरुक्तबहुलाक्षरम् ।
सकौतुकमितीच्छन्ति तद्बोधनधुरंधराः ॥ ४ ॥

स्पष्टार्थम् ।

उदाहरति—

कां भूपोऽवति कीदृक्सामततिः क्व क्रिया खलमनः किम् ।
का सत्सरणिः कीदृक्पिकी हिमे पार्थसेना च ॥

गाङ्गेयाहन्यमानमदवारणा ।

राजा गां भूमिं अवति पालयति । साम्नां ततिर्गेया गानार्हा भवति । 'गीतिषु सामाख्या' इति जैमिनिसूत्रात् । क्रिया विहितकर्माणि विशेषविध्यभावे अहनि दिने प्रवर्तते । 'अहनि च कर्म साकल्यम्' इति जैमिनिसूत्रात् । क्षुद्राणां हृदयम् अमानम् अभिमानहीनम् । अदवा वनरहिता सरणिः सुगमा चौरादिभयाभावात् । हेमन्ते कोकिला अरणा

अशब्दा भवति। वसन्ते तत्कूजनस्यातिरम्यत्ववर्णनात्। गाङ्गेयेन भीष्मेण आहन्यमाना-स्ताड्यमाना मदवारणा मत्तवारणा यत्र तादृशी युधिष्ठिरसेना इत्यर्थः॥

किमिच्छन्ति बुधाः खं किं किं कुराज्यं जयत्यरीन्।
केन किं मधुवृत्तिः स्याद्वसन्ते कीदृशं वनम्॥

मलयमरुदावलितरसालम्।

विवेकिनो मे शिवे लयम् इच्छन्ति। मुक्तिमिति यावत्। सुखान्तराणां दुःखसंवलित-त्वेनानुपादेयत्वात्। खमाकाशं न रुणद्धि अरुत् गतिरोधकं नास्ति काठिन्याभावात्। कुराज्यम् आ समन्तात् वलयः करा यत्र तद् बहुकरं भवति। तरसा बलेन शत्रूनभिन-वन्ति जयन्ति वीराः। अलीनां समूह आलं तन्मधुमात्रजीवनं भवति। मलयमरुता द-क्षिणानिलेन आवलिता वेष्टिता रसाला आम्रा यत्र तादृशं मधावुपवनं भवति॥

इति सकौतुकजातिः॥

पृष्टोत्तरजातिं लक्षयति—

स्यात्प्रश्नोत्तरयोर्यत्र वर्णश्रुत्यैकरूपता।
तत्पृष्टोत्तरमित्याहुर्जगदुत्तरबुद्धयः॥ ५॥

वर्णश्रुत्यैकरूपत्वम्। अर्थेन ऐकरूप्ये प्रश्नोत्तरभावानुपपत्तेः॥

उदाहरति—

कोविदो निधिराख्यातः कोपकृष्टो भवेत्पुमान्।
इति प्रश्नेऽनुरूपं यदुत्तरं तदुदीर्यताम्॥

विदो ज्ञानस्य निधिः कः इति प्रश्ने कोविदः पण्डित इत्येवोत्तरम्। अपकृष्टो हीन-क इति प्रश्ने कोपकृष्ट इति। क्रोधापीन इत्यर्थः॥

किम्पाकं प्राप्य वैरस्यं फलमाकलयत्यलम्।
ब्रूहि काञ्चनमालां च कां धत्ते सस्पृहं जनः॥

पाकं प्राप्य किं फलं विरसं भवति इत्यत्र किम्पाकम् इत्युत्तरम्। इन्द्रवारुणीफलस्य परिणामे तिक्तत्वात्। 'द्विहीनं प्रसवे सर्वम्' इति क्लीबत्वम्॥ कांचन कामपि लोको-त्तरां कां मालां जनो लोकः सस्पृहं स्पृहापूर्वकं धत्ते इत्यत्र काञ्चनमाला सुवर्णमाला-मिति षष्ठीसमासः॥

इति पृष्टोत्तरसमजातिः॥

पृष्टप्रश्नजातिं लक्षयति—

यत्प्रश्नश्चोत्तरं च स्याद्विभिन्नमतियोगिकम्।
जगदुत्कृष्टमतिभिः पृष्टप्रश्नं तदुच्यते॥ ६॥

किंचिदुत्तरापेक्षया प्रश्नः किंचित्प्रश्नापेक्षयोत्तरं च यद्भवति तत्पृष्टप्रश्नम्॥

उदाहरति—

अनिरुद्धरतेत्यस्मिन्नुत्तरे प्रश्न उच्यताम् ।
किंपचानेप्सिता केति प्रश्ने चोत्तरमुच्यताम् ॥

कोपावृत्तिः ।

उषाया बाणपुत्र्या वृत्तिः का इत्युत्तरे 'अनिरुद्धरता' इति प्रश्नः । कृपणस्याभिमता का इति प्रश्ने कोपावृत्तिः इत्युत्तरम् । कोपस्य द्रव्यसंचयस्य आवृत्तिः पौनःपुन्यं इत्यर्थः ॥

अन्तरतमोऽन्तगत इत्युत्तरयोग्यं वद प्रश्नम् ।
सुरभिसमयेतिसौरभशिखरगतो ब्रूहि कूजति कः ॥

कोकिलः ।

अकि अक्प्रत्याहारे इति निर्धारणसप्तमी लो लकारस्य संबन्धी क इति प्रश्ने अन्तगतोऽन्तरतमः इत्युत्तरम् । अक्प्रत्याहारे लकारस्य चरमत्वात् । स्थानेन स एव लकारस्यान्तरतम इत्यर्थः । वसन्ते आम्रविटपारूढः कः कूजति इति प्रश्ने च कोकिलः परभृत इत्युत्तरम् ॥

इति पृष्टप्रश्नजातिः ॥

भग्नोत्तराद्युत्तरयोर्मध्यान्तोत्तरयोस्तथा ।
स्पष्टं निगदमात्रेण स्वरूपमिति बुध्यताम् ॥ ७ ॥

उदाहरति—

ज्ञायन्ते कुत्र विद्वांसस्तदाभासाश्च कथ्यताम् ।
कीदृग्वीरकुलं हन्ति रिपून्सदसि धीनिधे ॥

पण्डिताः पण्डितंमन्याश्च कुत्र विविच्यन्ते इति प्रश्ने सदसि विद्वत्सभायामित्युत्तरम् । कीदृशं वीरकुलं रिपून् हन्ति इत्यत्र सदसि विद्यमानखड्गमिति ॥

गोकुले क्रीडता भङ्गः कस्याक्रियत चक्रिणा ।
खरादयो विनेशुस्ते प्रेषां प्राप्य कुतोऽनसः ॥

गोकुले विहरता श्रीकृष्णेन अनसः शकटस्य भङ्गः कृतः । अनसः छिन्ननासायाः सूर्पणखायाः सकाशात् प्रेषां प्रेरणां प्राप्य खरादयो नष्टाः । रामेण हता इत्यर्थः ॥

प्रहितः कीदृग्विहितो जगाम रामेण मारुतिर्लङ्काम् ।
रज्ज्वादिव्यतिरेकैस्तोयं न प्राप्यते कस्मात् ॥

रामेण प्रहितः प्रेषितः । पक्षे प्रहितः कूपात् 'पुंस्येवान्धुः प्रहिः कूपः' इत्यमरः । अत्र प्रेषणादिगतं प्रहितः इति पदमुत्तरभिन्नायुत्तरत्वम् । एवमग्रे मध्योत्तरादावपि योज्यम् ।

कुरवः कीदृक्परभृततरुणस्त्वयि भाति जल्पन्त्याम् ।
भीमं प्राप्य विलीनाः सहोदराः के शतं ब्रूहि ॥

कुत्सितो रवो यस्य कुरवः सः । त्वदालापापेक्षयापकृष्टत्वेन भासमानत्वात् । कुरवो दुर्योधनादयः । 'कुरुनादिभ्यो ण्यः' 'तद्राजस्य—' इति बहुषु लुक् ।

इत्याद्युत्तरजातिः ॥

कीदृशं विभ्रति स्वान्तं विबुधा वद विद्युतम् ।
कां वा कनकलेखाभां कलयन्ति बलाहकाः ॥

विदा ज्ञानेन युतं विद्युतम् । उत्कृष्टज्ञानवदित्यर्थः । पक्षे विद्युतं तडितमित्यर्थः । मध्यस्याद्यन्तवर्णापेक्षयासत्त्वात्पूर्वार्धस्यान्त्यभागः श्लोकमध्यत्वेन विवक्षणीयः । उत्तरार्धभागापेक्षया प्रथमोपस्थितत्वात् ॥

पुमानहठवृत्तिर्यः कीदृग्बालवधूमतः ।
कुतोऽनुमिन्वते व्याप्तिवेदिनो जातवेदसम् ॥

बालाया वध्वा अहठवृत्तिः पुरुषो मत इष्टः । 'विश्रब्धायाः स्त्रियाः काले कार्यमर्निरीक्षणम् । अन्यथा क्रियमाणं तत्तदुद्वेगाय जायते ॥' इति कामशास्त्रोक्तेः । व्याप्तिपक्षधर्मताया अप्युपलक्षणम् । अठत्वाद्बहुलाद् धूमतो धूमात् ॥

इति मध्योत्तरजातिः ॥

जनमेजयेन जुहवांचभूविरे जातवेदसि मखे के ।
प्रभुरपि कीदृग्जेतुं नैवोत्सहते महीमहयः ॥

अहयः सर्पाः, पक्षे अश्वहीनः । 'यस्याश्वालस्य मेदिनी' इत्युक्तेः ॥

स्पृहयन्तः कमप्यर्थं निवसन्ति वनेषु के ।
पथि द्रुमो घनच्छायः कथं पान्थेषु तापसाः ॥

तापसास्तपस्विनः । तापं स्यति नाशयति तापसाः । 'घोऽन्तकर्मणि' क्विप् ॥

इत्यन्तोत्तरजातिः ॥

कथितापह्नुतिं लक्षयति—

यत्रेतरवाक्यार्थान्वययोग्यार्थकपदेनोक्तम् ।
भात्युत्तरं न सहसा सा कथितापह्नुतिः कथिता ॥ ८ ॥

सुगमम् ॥

उदाहरति—

श्वसितं धृतमिदमधरं किं विदधद्विधुवदनयेदम् ।
दुरितवतां का वृत्तिर्विजयित्वं मनसिजस्य कथम् ॥

अधरं किं विदधत् श्वसितं धृतम् इति प्रश्नः, विधुवदनया नायिकया इत्यर्थप्रतीतेरुत्तरानवभासः । विधुवत् कम्पयत् इत्युत्तरं क्लेशगम्यम् । दुरितवतां का श्रुतिः । इत्यत्र 'अनया नीतिहीना' इत्युत्तरम् । कामस्य विजयित्वं कथम् इत्यत्र 'इदम्' इत्युत्तरम् । लक्ष्मीखण्डकमित्यर्थः । 'सकामासक्तचित्तानां कान्तामुखविलोकने । गलन्ति गलिताश्रूणां यौवनेन सह श्रियः ॥' इति नीतिशास्त्रोक्तेः ॥

पापात्का क्रियते सद्भिरुदीरयत भीरवः ।
आकाशस्य गुणः को वा वीरेभ्यः के च बिभ्यति ॥

पापात् सद्भिर्भीर्भयं क्रियते ॥ रवः शब्दो गगनगुणः ॥ वीरेभ्यो भीरवः कातरास्त्रसन्ति ॥

इति कथितापह्नुतिः ॥

विषमजातिं लक्षयति—

भङ्गे दुरूहता स्याद्यत्र तदाचक्षते विषमम् ।
तद्वृचनामकं स्यात्प्रश्ने यत्रोत्तरं वृत्तम् ॥ ९ ॥

उदाहरति—

कीदृक्कृतं दैत्यकुलं केशवेनेति कथ्यताम् ।
कमारुह्य पिकः कान्ते पुष्पानेहसि कूजति ॥

रसातलमतम् ।

रसातले मतम् इच्छा यस्य ॥ पक्षे अतं तकाररहितं रसातलशब्द रसालम् इति यावत् ॥ रसातलशब्दोपस्थितौ पुनरर्थबोधो बोध्यः ॥

शिथिलैरलकैर्बध्वा किमाकलयतीह किम् ।
आचार्येभ्योऽपि पितरं कीदृशं धार्मिका विदुः ॥

मालिन्यमलिकम् ।

अलिकं ललाटम्, अलकैर्मालिन्यं प्राप्नोति ॥ पक्षे अलिकं लिकारहीनम् मालिन्यपदे लिकारत्यागे मान्यमित्यर्थः । 'उपाध्यायान्दशाचार्य आचार्याणां शतं पिता । सहस्रं तु पितॄन्माता गौरवेणातिरिच्यते ॥' इति वचनात् ॥

कूजावान्स्यादारामः कः प्राप्ता का स्यात्सत्यज्ञानम् ।
आदानार्थे धातुः कः स्यान्माभ्यां गाभ्यां छन्दः किं स्यात् ॥

विद्युन्माला ।

विभिः पक्षिभिर्द्योतते विद्युत् ॥ प्रपूर्वा मा सत्यज्ञानम् । प्रमाशब्दस्य यथार्थवाचि-

कीदृग्जनमनो निन्द्यं गौरीमातरमाह्वय ।
परिरिप्सुः प्रियतमो विधुमुख्या व्यधायि किम् ॥

अनुमेने ।

न विद्यते नुः शिवो यत्र तद् अनु तद्विषयकभक्तिहीनं मनो निन्द्यम् ॥ 'मेने' इति हिमाचलभार्यासंबुद्धिः ॥ आलिङ्गितुमिच्छन् कान्तः प्रियो नायिकया सुन्दर्या दयितया अनुमेने अनुमतः सम्यग् गृहीतः । तत्प्रतिकूलाननुष्ठानात् ॥ कर्मणि लिट् ॥

इति लिट् ॥

दयोदयार्द्रैरपि दीनवृन्दैर्विधीयते का वद कुत्र वीरैः ।
वधूकुचौ काञ्चनकुम्भतुल्यौ करेण कान्तेन कथं विधेयौ ॥

अनुभावितारौ ।

अरौ वैरिणि अनुभाविता प्रभावत्वम् । तत्र दयाया अनर्हत्वात् ॥ पक्षे अनुभावितारौ प्रत्यक्षविषयौ करिष्येते कर्मणि लुट् 'स्यसिच्सीयुट्तासिषु–' इति चिण्वद्भावः ॥

कान्तेन दत्तावधिरम्बुजाक्षी संतप्यते कीदृशि नाम तस्मिन् ।
प्रोत्साहितो जाम्बवदादिभिर्वा किमब्धिमुद्दिश्य जगौ हनूमान् ॥

विलङ्घिताहे ।

विलङ्घितम् अहरवधिदिनं येन तादृशे कान्ते सति संतप्यते 'राजाहःसखिभ्यष्टच्' । अवधिदिने नायकानागमने तस्या दुःखोदयात् ॥ पक्षे विलङ्घिताहे विलङ्घयिष्यामि ॥ लुडात्मनेपद उत्तमपुरुषैकवचने रूपम् ॥

इति लुट् ॥

कथं मनोभू रम्भोरुभुवनेषु विजृम्भते ।
किं वदन्ति नटं वीक्ष्य भूमिकाग्रहणक्षमम् ॥

अनुकरिष्यति ।

अनुकाः कामुका रिषयो मुनयो यत्र । (रेफादिरपि) 'विद्याविदग्धमतयो रिषयः' इति प्रयोगादिति चन्द्रिकायाम् । 'स्याद्यो रिषिरित्यपि' इति द्विरूपकोषश्च । इति अत्यन्तमिति कामुकविशेषणम् ॥ पक्षे अनुकार्यम् रामादि अनुकरिष्यति । इति लृट् ॥

विपश्चितां संसदि जायते को गमिः क्व वा छत्वविधौ प्रयुक्तः ।
सद्यः समासाद्य रसेन सज्ज्वा वीणा विधेया वद किं प्रवीणैः ॥

वादयिष्यन्ते ।

विद्वत्सदसि वादो जायते ॥ छत्वविधायकसूत्रे गमिधातुः इषेरन्ते प्रयुक्तः 'इषुगमि-

यर्मां छः' इति सूत्रे 'इणु' इत्युत्तरं गमेः प्रयोगात् । अत्र धातुनिर्देश इगन्तस्य प्रयोग इति विशेषः । 'लोपः शाकल्यस्य' इति लोपोभावापक्षे यकारः श्रूयते ॥ पक्षे 'यादरि-ध्यन्ते' इति कर्मणि लट् स्पष्टः ॥

इति लट् ॥

वनं भवति कीदृक्षं दीप्ते दवद्रुमूर्नासि ।
किं ब्रवीति प्रतिबलबलं वीरो विलोकयन् ॥

अतितृणहानि ।

अत्यन्तं तृणानां हानिर्नाशो यत्र तथा ॥ पक्षे अत्यन्तं तृणहानि मारयाणि । 'दह हिंसायाम्' इत्यस्य लोडुत्तमैकवचने रूपम् ॥

त्वं मनोभवसमानरूपया कां कया वितनुषे वशंवदाम् ।
तद्भुजौ कमलनालकोमलौ किं त्वदङ्गपरिरम्भविभ्रमम् ॥

तन्वाताम् ।

कामतुल्यया तन्वा त्वं तां वशयसि ॥ मृणालरम्यो तस्या भुजौ त्वदश्लेषं तन्वातां कुर्वाताम् इति लोट्प्रथमपुरुषद्विवचने रूपम् ॥

इति लोट् ॥

वद विद्वन्कथं भाति दिने कुमुदबान्धवः ।
अतिवृष्टौ किमकरोदभि गोवर्धनं हरिः ॥

अविभः ।

नास्ति विभा यस्य अविभः ॥ पक्षे अविभः धृतवान् 'डुभृञ् धारणपोषणयोः' लङि प्रथमपुरुषैकवचने रूपम् ॥

को वा वल्मीकपर्यायो वद खेदेऽद्भुतेऽव्ययम् ।
आकर्ण्यापि हितं वाक्यं कथं वव्रृतिरे खलाः ॥

नाकुर्वत ।

'वामलूरश्च नाकुश्च वल्मीकं पुनपुंसकम्' इत्यमरः ॥ 'पताामन्त्रणसंतोषखेदानुकम्पा-स्मरे' इति विश्वः ॥ पक्षे नाकुर्वत न गृहीतवन्तः । लङ्प्रथमपुरुषबहुवचने रूपम् ॥

इति लङ् ॥

मध्यं कथं मृगदृशोऽधरमाद्ययासां तादात्म्यतोऽध्यवसितं त्वमलक्तकेन ।
आसाद्य तत्परहसं सरसौ युवानौ चित्ते कथं कलयतः परिरम्भणादि ॥

तनुयाव ।

नायिकावलम्बं तनु कृशम् ॥ अलक्तकतादात्म्याध्यवसितसाधरस्य 'याव' इति संबुद्धिः । 'यावोऽलक्तो द्रुमामयः' इत्यमरः ॥ 'परेणानधिगम्य हि यद्रहो वहितसवत् । ततं च तद्-हृश्येति तत्तसरहसं विदुः' इति वोपदेवः ॥ 'अन्ववतप्तादहृतः' इत्यकारः समासान्तः ॥ तनुयाव आलिङ्गनादि कुर्यात । 'तनु विस्तारे' विधि लिङ् उत्तमपुरुषद्विवचने रूपम् ॥

दरिद्रमवनं कीदृगनर्हं जेतुमाह्वय ।
नवावतीर्णतारुण्यां वधूं कान्तः किमिच्छति ॥

अवस्वजेय ।

अवसु द्रव्यहीनम् ॥ अजेय जेतुमनर्ह । 'क्षय्यजय्यौ शक्यार्थे' इति शक्यार्थे यान्तादेशनिपातनादनर्हमित्युक्तम् । 'अर्हे कृत्यतृचश्च' इत्यर्हार्थे यत् ॥ पक्षे अवस्वजेय आलिङ्गेयम् । लिङुत्तमैकवचने रूपम् ॥

इति लिङ् ॥

कस्माद्धूर्जटिचापात्त्रिपुरवधे निरगमद्धरिः कीदृक् ।
शृण्वत्स्वन्तेवासिषु शास्त्रार्थं च व्यधुः किमाचार्याः ॥

अगादिषुः ।

अगात् पर्वतरूपात् रुद्रचापात् इषुर्बाणरूपः सन् हरिर्निर्जगाम ॥ पक्षे अगादिषुः उक्तवन्तः इति लुङि प्रथमपुरुषबहुवचने रूपम् ॥

नाटकश्रीर्न कीदृक्स्यात्कथं विरहवाञ्जनः ।
केशवेन कृतौ विद्विन्कथं च मधुकैटभौ ॥

अमारिषाताम् ।

अमारिषा सूत्रधाररहिता नाटकश्रीर्न स्यात् । 'सूत्रधारस्तु मारिषः' इत्यमरः । नान्द्यास्तत्रावश्यकत्वात्, तस्याश्च सूत्रधारपाठ्यत्वात् । तदुक्तम्—'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये । सूत्रधारः पठेदेनां मध्यमं स्वरमाश्रितः' ॥ आ अत्यन्तं ताम्यतीत्याताम् । 'तमु ग्लानौ' क्विप् 'अनुनासिकस्य क्विझलोः' इति दीर्घः ॥ पक्षे अमारिषातां हतौ । कर्मणि लुङ्प्रथमपुरुषद्विवचने रूपम् ॥

इति लुङ् ॥

उपस्थितमपि प्राज्ञैः किं कार्यं खलसंगतम् ।
यदि त्वं रहसि प्राप्स्यः किं व्यधास्यः प्रियामुखम् ॥

अपास्यम् ।

अपास्यं त्याज्यम् । ण्यत्प्रत्ययः ॥ यद्यहं रहसि प्रियामुखं प्राप्स्यं तदा अपास्यम् आ-

स्यादद्रक्ष्यम् । 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति लृङ् । इहापि प्रश्नभावमुखो मम प्रियामुखदर्शनाभाव इत्यर्थः ॥

कुत्र कृत्वा मनस्तार्क्ष्यं ययाचे विनता सुधाम् ।
अकरिष्यः किमात्मानं यद्यद्रक्ष्यः प्रियं प्रिये ॥

अदास्ये ।

अदास्ये दास्यभावे मनः कृत्वा विनता गरुडं सुतं ययाचे 'दुह्याच्पच्दण्ड्रुधि-' इति भाष्योक्तेर्द्विकर्मकत्वम् ॥ यद्यहं प्रियम् अद्राक्षं तदात्मानम् अदास्ये । दाञो लृङि उत्तमैकवचने रूपम् ॥ तथा च प्रियदर्शनाभावप्रयुक्तो मत्कर्तृकस्वात्मसमर्पणाभाव इत्यर्थः ॥ अत्र सर्वत्र लकारेषु पदद्वय श्लेषभेदेनोदाहृतम् ॥ लेट् लकारस्तु च्छान्दसत्वान्नोदाहृत इत्यवसेयम् ॥

इति नानाख्यातजातिः ॥

तार्कादिजातिं लक्षयति—

तार्किकी सा भवेत्तार्कं सौत्रं सूत्रमयोत्तरम् ।
शाब्दं तु शब्दसंज्ञोत्थं शास्त्रीयं शास्त्रविकृतम् ॥ ११ ॥

उदाहरति—

कीदृक्शैलान्तरं न स्यान्निशि व्योम्नि विभाति किम् ।
अभावे ग्राहकं मानं किं वा तौतातिता विदुः ॥

अनुपलम्भम् ।

पर्वतान्तरम् अनुपलं पाषाणान्तराभाववत् भवति ॥ रात्रौ च नक्षत्रं भाति । 'अनुपलम्भात्मकमभावत्वं प्रमाणं घटाद्यभावग्राहकम्, न त्विन्द्रियं संनिकर्षाभावात्' इति भाट्टा वदन्ति ॥

माता कुपुत्रं कुरु मा स्म किं के भजन्ति भीता न जनाः प्रियाः के ।
के नाम ते येऽभ्युपयन्ति बुद्ध्याकारानुमेयं बहिरर्थजातम् ॥

सौत्रान्तिकाः ।

जननी कुत्सितं पुत्रं मा स्म सूत् मा जनयतु ॥ तत्र च 'भजन्ति न' इति छित्वा छेदः । भजन्ते इति पाठः, नं ज्ञानं गरुडं भीता भजन्ते ॥ किन्तु द्विषन्तः अर्थान्तरं च भजन्ति ॥ ज्ञानानां घटाद्याकारकत्वानुपपत्त्या घटादिरनुमेयः इति सौत्रान्तिकानां मतम् । साकारवादित्वात् ॥

इति तार्कजातिः ॥

दृष्टप्रियप्रतिकृतिं तच्चाक्षुषविरहितं किमाह सखी ।
सूत्राणि वद कथं वा कृष्णद्वैपायनस्य मुनेः ॥
शब्दादेव प्रमितोऽनुकृतेस्तस्य च समाकर्षात् ।
दर्शयति चोत्तराच्चेदाविर्भूतस्वरूपस्तु ॥

शब्दादेव शब्दमात्रेण त्वया स ज्ञातः । तस्यानुकृतेः प्रतिमायाः समाकर्षादानयनाच्च प्रमितः । चित्रे दृष्ट इत्यर्थः । 'श्रवणं तु भवेद्दूतद्विजवन्दिसखीमुखात् । इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम् ॥' इति दर्पणः । साक्षाद्दर्शनं कदा स्यादत आह—दर्शयति चेति । आविर्भूतं संनिकृष्टं स्वरूपं यस्य तादृशस्तु यदि दर्शयति । स्वात्मानमिति शेषः । चकारः 'तर्हि' इत्यर्थे । उत्तरात् । त्वदीयमुत्तरमाकर्ण्येत्यर्थः । 'शास्त्राणि चेत्प्रमाणं स्युः' इतिवदसंदेहे संदेहः । तथा चातः परं त्वदीयवचनमात्राकाङ्क्षी तदाकर्णनोत्तरमेव भवदीयचाक्षुषविषयो भविष्यतीति भावः ॥ 'शब्दादेव प्रमितः' इति सूत्रस्य 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इति वाक्यं ब्रह्मपरम् । 'ईशानो भूतभव्यस्य' इति शब्दादित्यर्थः ॥ 'अनुकृतेस्तस्य च' इति सूत्रस्य 'न तत्र सूर्यो भाति न चन्द्रतारकम्, नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' ॥ इत्यत्र 'भारूपः सत्यसंकल्पः' इति श्रुत्यन्तरप्रसिद्धेन ब्रह्मणो भावेन सूर्यादीनां भानमुपपाद्यम् ॥ ननु अनुमानस्य सजातीयविषयकत्वात्तद्बलेन सूर्यादीनां भासकमप्रसिद्धं तेजोन्तरकल्पनमित्यर्थः ॥ 'समाकर्षात्' इति सूत्रस्य 'सदेव सौम्येदमग्र आसीत्' इत्यत्र सतः कारणत्वमुक्तम् 'असद्वा इदमग्र आसीत्' इत्यत्र त्वसतः इति विरोधशङ्कायाम् 'असदेवेदमग्र आसीत्' इत्यनन्तरम् 'तत्सदसदासीत्' इत्यसतः समाकर्षणादेकस्यैव सत्त्वासत्त्वोभयविरोधादनभिव्यक्त्यपेक्षयैवासत्त्वोक्तिरित्यादिरर्थः ॥ 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इति सूत्रस्य 'य एषोऽक्षिणि दृश्यते स्वप्नेन हीयमानश्चरति' इत्यादि प्राजापत्यवाक्यरूपादुत्तराद्दहरो जीव एवेति चेत् मैवम् । यतोऽयमवस्थावासनाविर्भूतब्रह्मतादशायामत्र वाक्ये तात्पर्यत उक्तः अतो दहरवाक्यं ब्रह्मपरमेवेत्यर्थः ॥ बुद्धौ ज्ञाने सद्वियमान स्वानुरागविषय इति यावत् ॥

स्वाभिमतेन प्रणयेऽनुपजनिते वा क्षते किं स्यात् ।
पृच्छत्यन्तर्वाणिः पाणिनिसूत्राणि कीदृंशि ॥
पूर्वत्रासिद्धं वावसान आदेः परस्य वा यौ तौ ।
सत्सस्युरसंबुद्धावुपसर्गस्यायतौ चरति ॥

प्रशस्तः सखा सत्सुरसम् 'अप्राख्यायामुरसः' इति समासान्तः पूर्वत्र पूर्वम् अवसाने अन्ते वा असिद्धं सत् स्वविषयकानुरागहीनं भग्नानुरागं वा इति यावत् ॥ आदेः पूर्वकालीनस्य परस्योत्तरकालीनस्य वा उपसर्गस्य दुःखस्य आयतौ दीर्घौ तावनुभूयमानौ आयौ लाभौ चरति करोति ॥ स्वाभीप्सितस्यालाभे पूर्वमेव दुःखं भवति विच्छेदे तु तत्संगमो-

त्तरमिति भावः ॥ तथा च प्रणयभङ्गो न भवति तथा वर्तितव्यमिति सुहृदाचरिता रीतिरिति तात्पर्यम् ॥ 'पूर्वत्रासिद्धम्' इत्यस्य सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा इत्यर्थः ॥ 'वावसाने' इत्यस्य अवसाने झलां चरो वा स्युः ॥ 'आदेः परस्य' इत्यस्य परस्य यद्विहितं तत्तस्यादेर्बोध्यम् ॥ 'वा यौ' इत्यस्य ल्युप्रत्यये परे अजेर्वीभावो वा स्यात् ॥ 'तौ सत्' इत्यस्य शतृशानचौ तत्संज्ञौ स्तः ॥ 'सख्युरसंबुद्धौ' इत्यस्य सखिशब्दात्परं संबुद्धिभिन्नं सर्वनामस्थानं णित्कार्यकृत् स्यात् ॥ 'उपसर्गस्यायतौ' इत्यस्य अये धातौ परे उपसर्गरेफस्य लत्वं स्यात् ॥ 'चरति' इत्यस्य तेन चरतीत्यर्थे ठक्प्रत्ययो भवतीत्यर्थः ॥

इति सौत्रजातिः ॥

सर्वादेरस्ति का संज्ञा किं प्रसङ्गार्थकं पदम् ।
स्वादीनां वचनानां च पञ्चानां नाम कथ्यताम् ॥

सर्वनामस्थानम् ।

सर्वादीनां सर्वनामसंज्ञा 'सर्वादीनि सर्वनामानि' इति सूत्रात् ॥ स्थानपदं प्रसङ्गार्थम् 'स्थानेऽन्तरतमः' इत्यादौ तथा व्याख्यानात् 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इति दर्शनात् ॥ सु औ जस् अम् औट् इति पञ्चानां सर्वनामस्थानसंज्ञा 'सुडनपुंसकस्य' इति सूत्रेण तद्विधानात् ॥ अत्र व्यस्ते समस्ते च शब्दसंज्ञेति बोध्यम् ॥

प्रतिषेधविकल्पे किं किं शसादौ हलादिके ।
किमजादौ च का क्षुद्ररीतिः किं वद सद्व्रतम् ॥

विभाषापदम्भम् ।

प्रतिषेधविकल्पार्थकं विभाषापदं 'नवेति विभाषा' इति सूत्रात् ॥ शसादौ हलादिविभक्तौ परतः पदसंज्ञा ॥ तत्रैवाजादौ भसंज्ञा ॥ 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायाः 'यचि भम्' इति भसंज्ञायाश्च विधानात् । अचि भत्वविधाने चार्थात्पदसंज्ञाया हलादौ परतः पर्यवसानात् । 'आ कडारादेका संज्ञा' इति वचनात् ॥ क्षुद्ररीतिः—विरुद्धा भा यस्यास्तथा पूर्वापरैकवाक्यत्वाभावात् ॥ अपगतो दम्भो धर्मच्छद्मो यत्र तादृक् सतां व्रतमित्यर्थः ॥

इति शाब्दजातिः ॥

दह्यमानं वनं कीदृक्क प्रशंसन्ति तार्किकम् ।
विशिष्टधीहेतुतया बुधैः किमनुमीयते ॥

निर्विकल्पकम् ।

निर्गता वयः पक्षिणो यस्मात् ॥ कल्पकं युक्त्युद्भावनसमर्थम् ॥ विशिष्टज्ञानहेतुतया निर्विकल्पकं ज्ञानमनुमीयते 'गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यम्, विशिष्टज्ञानत्वाद् इ-त्यादीति ज्ञानवदित्यर्थः ॥

भूमिः का राजवासार्हा वाद्यं वीणादिकं च किम्।
कां नाडीं मनसि प्राप्ते सुषुप्तिर्जायते दशा॥

पुरीततम्।

पुरी नगरी राजस्थित्यर्हा॥ 'ततं वीणादिकं वाद्यम्' इत्यमरः॥ पुरीतत्संज्ञां नाडीं मनसि प्राप्ते सुषुप्त्यवस्था 'प्रत्यवसृत्य पुरीतति शेते' इति बृहदारण्यकश्रुतेः॥

इति शाखजातिः॥

किमव्ययादौ पठितं दुःसहा का विवस्वतः।
धर्मेऽस्त्यधिकृतिः कस्य को वैरी चन्द्रसूर्ययोः॥

स्वर्भानुः।

अव्ययादौ स्वःपदं पठितम्। 'स्वरादिनिपातमव्ययम्' इति सूत्रात्॥ सूर्यस्य भा दुःसहा॥ नृशब्दस्य ङसि 'ऋत उत्' इत्युकारैकादेशे कृते रपरत्वे 'रात्सस्य' इति सलोपे विसर्गे च 'नुः' इति रूपम्। मनुष्यस्य धर्मेऽधिकारः 'मनुष्याणां च धर्मः' इति पराशरोक्तेः॥ 'तमस्तु राहुः स्वर्भानुः' इत्यमरः॥

का कामधुक्प्रिया का वा विष्णोर्विश्वं बिभर्ति का।
विघ्नानामधिपः कश्च प्रणामात्सर्वकामदः॥

गौरीभूः।

गौर्धेनुः॥ ई लक्ष्मीः॥ भूर्भूमिः॥ गौरीतो भवतीति गौरीभूः—'विनायकः कर्मविघ्नसिद्ध्यर्थे विनियोजितः। गणानामधिपत्ये च रुद्रेण ब्रह्मणा तथा। विष्णुना ऋषिभिर्देवैर्विनियुक्तो गणेश्वरः॥' इति याज्ञवल्क्यः॥

इति वर्णोत्तरजातिः॥

हरिणा किं कृता दैत्याः कः कामस्य सखा ऋतुः।
रात्रिमात्रविकासिन्यस्तारा अन्यत्र किं व्यधुः।

अहन्यन्तमधुः।

अहन्यन्त हताः लङि प्रथमबहुवचने रूपम्॥ मधुर्वसन्तः॥ अहनि दिने अन्तं नाशम् अधुर्धृतवत्यः सूर्यतेजोभिभूतानां दर्शनाभावात्॥

किमकृत सुरभौ पिकोऽर्थ्यमानो भवति कथं बहुदः किमम्बुयानम्।
स्पृहयति तरुणीजनश्च कस्मै नवमुदरं किमु निर्यतीमकार्षीः॥

अरौत्समुत्तरीये॥

पिको वसन्ते अरौत् चुकूज। 'रु शब्दे'। लङ्। 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः॥

याच्यमानो दाता समुद् प्रीतियुक्तो भवति ॥ तरी नौर्जलयानम् ॥ ई लक्ष्मीं याति प्राप्नोति ईयाः तस्मै ईये । 'आतो धातोः' इत्याकारलोपः । रम्यायेत्यर्थः ॥ निर्गच्छन्तीं नवोढाम् उत्तरीये प्रावारे अभ्यस्तम् अहं रुद्धवान् । 'रुधिर् आवरणे' लुङुत्तमैकवचने रूपम् ॥

इति वाक्योत्तरजातिः ॥

इति श्रीविश्वेश्वरपण्डितविरचिते कवीन्द्रकर्णाभरणे द्वितीयः परिच्छेदः ।

---

तृतीयः परिच्छेदः ।

*श्लोकोत्तरादिजातिं लक्षयति—*

श्लोकोत्तरं तदाहुः श्लोको यत्रोत्तरं भवति ।
अर्धं वा पादो वा यत्र तु खण्डोत्तरं तत्स्यात् ॥ १ ॥

*लक्षणं स्पष्टार्थम् ॥*

*उदाहरति—*

ईशं किं विदधे श्रुतं च हरिणा किं पारिजातः कृतः
कानन्ता मदनस्य काः सुमनसः साँन्क विधत्ते धनम् ।
तान्तं किं मतुबर्थके क विबुधा पापं व्रतैः किं कृतं
को विष्णोः शयनं चिरं कथमभूद्भीष्मः प्रसादात्पितुः ॥
कुर्वे किं विबुधान्किमस्ति गगने शारद्वतं चाह्वय
स्यात्को नाम विभागवान्पुरिपोरामन्त्रणं कथ्यताम् ।
किं वा सामनि वृष्टिकामनिधनं संकीर्तितं सौभरे
हृत्कीदृक्सुकृते सतां भगवती कात्यायनी स्तूयताम् ॥
महाबाह्लारिगीर्वाणारातिभङ्गविचक्षणे ।
सिन्धुराननमातस्त्वं कृपयानुग्रहीष्यसि ॥

ईशं मद पृच्छ ॥ श्रुतमधीतम् अत्र दक्ष । यतः—'ब्रह्महत्यासमं ज्ञेयमधीतस्य निपातनम्' इति स्मृतेः ॥ हरिणा पारिजातः स्वर्गाद् अहारि अपहृतः ॥ गीर्वाणी अनन्ता ॥ पुष्पाणि कामस्य बाणाः ॥ साधुधनं राति ददाति ॥ तकारान्तं मत्वर्थे परे भं नभस्वत् 'तसौ मत्वर्थे' इति वचनात् ॥ विबुधा देवा यदि सुरभौ स्वर्गे वा भवन्ति ॥ [illegible] व्रतादिभिः पापं चक्षणे नाशितम् । 'क्षणु हिंसायाम्' कर्मणि लिट् ॥ विष्णोः शेषः शयनस्थानम् ॥ भीष्मः पितृप्रसादात् चिरम् आत जीवितवान् ॥ विबुधान् नम वन्दस्व ॥ गगने भवस्त्वत् अनन्तत्वम् अस्ति । 'तसु उपक्षये' भावे क्विप् नञ्समासो भावे त्वः ॥ कपोत शारद्वतबुद्धिः ॥ धाम् गच्छन् विभागवान्स्यात् । कर्मणो निर्लो-

त्वात् ॥ उमेति शिवसंबुद्धिः ॥ 'हीम्' इति सौभरे सामनि वृष्टिकामस्य निधनम् 'हीमिति वृष्टिकामाय कुर्यात्' इति तत्र श्रुतेः। अनुकार्यानुकरणयोरभेदविवक्षायां विभक्तेरनुत्पत्तिः॥ साधूनां मनः पुण्ये यसि प्रयत्नवत् स्यात् । 'यसु प्रयत्ने' 'घञर्थे कः' । ततो त्वमर्थीय इन् ॥ वाहारिर्महिषः स चासौ गीर्वाणारातिर्देवशत्रुश्चेति कर्मधारयः । महांश्चासौ स चेति पुनः कर्मधारयः । तस्य भङ्गे विचक्षणे विदग्धे इति सबुद्धिः सिन्धुराननमातर्गजमुखस्य मातर्देवि त्वं कृपया दययानुग्रहीष्यसि । मामिति शेषः । इति गौरीस्तुतिः श्लोकार्थः ॥

अब्जं किं मधुना तत्कामिर्जनितं भटस्य कोऽभिमतः ।
कैर्ह्रियते हृदयं किं मलिनं चन्द्रस्य केक्षुसंबुद्धिः ॥
कासूत पुरूरवसं वीराः कैर्विजयिनो जनेष्टाः के ।
संबोधय वरुणं हरिमुपसर्गं वद धियः प्रशंसाः कैः ॥
संबोधय रतिरमणं काः श्रोत्रादीश्वरस्य समभूवन् ।
कुमुदं कीदृगशोभं नभस्यमासस्य कीदृशा दिवसाः ॥
उन्नमद्भी रणोदारैरन्तरिक्षविलासिभिः ।
महावारिधरव्यूहैरतिश्यामदिशोनिशम् ॥

'मधुना अब्जं किम्' इति प्रश्ने 'नुन्नम्' इत्युत्तरम् । आर्द्रमित्यर्थः । 'तिमितं स्तिमितं समुन्नं मुन्नं च' इत्यमरः ॥ 'कमलं कामिर्जनितम्' इत्यत्र 'अद्भिः' इति । 'अद्भ्यो जातमब्जम्' इति व्युत्पत्तेः ॥ 'वीरस्य कः प्रियः' इत्यत्र 'रणो युद्धम्' इति ॥ 'हृदयं कैर्ह्रियते' इत्यत्र 'दारैः स्त्रीभिः' इति ॥ 'चन्द्रस्य किं मलिनम्' इत्यत्र 'अन्तर्मध्यम्' इति ॥ 'इक्षो' इतीक्षुसंबुद्धिः ॥ इला पुरुरवसमुत्पादयामास ॥ वीरा असिभिः खड्गैर्विजयिनः ॥ महा उत्सवा जनानामिष्टाः ॥ व इति वरुणसबुद्धिः । 'वं प्रचेतसि जानीयात्' इति विश्वः ॥ 'अरिधर चक्रधर' इति विष्णुसंबुद्धिः ॥ 'वि' इत्युपसर्गः ॥ ऊहैस्तर्कैर्बुद्धयः श्लाघ्या भवन्ति ॥ रतिः श्यामा वधूर्यस्य रतिश्यामेति कामसबुद्धिः ॥ दिशः परमेश्वरस्य श्रोत्रादुत्पन्नाः । अनिशं निशारहितं कुमुदं शोभाहीनं भवति ॥ 'नभस्यमासो भाद्रपदस्तस्य दिवसाः कीदृशाः' इत्यत्र श्लोक एवोत्तरम्—उन्नमद्भिर्वर्धमानैः रणेन शब्देन उदारैर्महद्भिः 'रो रि' इति रेफलोपे 'ढ्रलोपे पूर्वस्य दीर्घो णः' इति दीर्घः ॥ अन्तरिक्ष आकाशे विलासिभिर्विहरणशीलैर्महतां वारिधराणां व्यूहैः समूहैः अनिशमविच्छेदेन अतिश्यामा नीलतमा दिशो येषु तादृशा इत्यर्थः ॥

इति श्लोकोत्तरम् ॥

का नो निर्विषया रविः क्व सहसि स्वामी कथं स्यादस-
न्कामास्त्रं किमु दृक्कथं वरतनोर्यण्स्यादिकः कुत्र वा ।

वक्तव्या रजनी कथं भवति को मन्त्रोऽर्थतः पादवा-
न्कः कान्ताकुचवद्गजस्य समरो रामायणे कीदृशः ॥

मालिनीतनयोदाराजिह्मगानितमर्कटः ।

मा ज्ञान विषयहीना न भवति । विषयनिरूप्यत्वनियमात् ॥ सदनि मार्गशीर्षे सूर्यः अलिनि वृश्चिकराशौ तिष्ठति ॥ इतनयो गतनीतिः प्रभुर्निन्द्यः ॥ दाराः स्त्रियः कामस्य शस्त्र विजयहेतुत्वात् ॥ युवतिर्दीर्घजिह्मगा वक्रा ॥ अचि परे इको यण् यस्मात् 'इको यणचि' इति वचनात् रात्रिपर्यायस्तमाशब्दः ॥ अर्थतः पादवान्मन्त्र ऋक् । 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' इति जैमिनिसूत्रात् । 'तमा ऋक्' इत्यत्र गुणे तमर्क्' इति रूपम् ॥ गजस्य कटः कुम्भः स्त्रीकुचतुल्यः ॥ 'तमर्क् कटः' इत्यत्र 'झरो झरि सवर्णे' इति कलोपः ॥ मर्कटपक्षे द्वित्वं वा । मालिन्यास्तनयोऽतिकायसंज्ञो रावणपुत्रस्तस्माज्जिह्मगैः सर्पैरानिता व्याप्ता मर्कटा वानरा यत्र तादृशो रामायणसंग्रामः । 'तनयं विद्धि मालिन्यास्त्वतिकायेति यं विदुः' इति लङ्काकाण्डम् ॥

किं कृत्वा पिशुनान्सुखं वहति किं रामः कुतो वा जग-
त्प्रोदेतीत्युदितो हरिः किमवदत्कीदृग्वियोगे वधूः ।
कात्युल्लासवती मतिर्भवति वा मोक्षाभिलाषी कथं
कीदृक्त्वावसिते निदाघसमये कुत्राम्बुदो दृश्यते ॥

विहायसीरमद्भापतिमातुरभूककुप् ।

दुर्जनान् विहाय त्यक्त्वा सुखं भवति ॥ बलदेवः सीरं हलं धारयति ॥ 'जगत् कस्मादुद्भवति' इति पृष्टे ईश्वरो 'मत्, मत्तः सकाशात्' इति वदति ॥ जन्यानां समुत्पत्तौ च हेतुत्वात् ॥ विरहिणी वधूः अभा कान्तिहीना ॥ 'प्रज्ञा नवनवोल्लासशालिनी प्रतिभा मता' ॥ सुरभूः स्वर्गः तस्यां कं सुखं तत्र कुप्यतीति सुरभूककुप् । तद्विहरस्कराणामना-वानिलार्थः ॥ ग्रीष्मावसाने च 'मेघज्योतिरिरम्मदः' इत्यमरः । इरंमदो विद्युत् तस्य भाः कान्त्या प्रतिभासुरा शोभमाना भूर्भूमिः ककुभो दिशश्च येन तादृशो मेघो विहायसि आकाशे दृश्यते इति योज्यम् ॥

वारुणी अमधुरा तिक्ता भवति । 'लुपि युक्तवद्व्यक्तिवचने' इति स्त्रीत्वम् ॥ बहुभिर्भार्वैर्हावैश्च मधुरा रम्या वधूर्भवति ॥ आर्यापादोऽयम् ॥

मायाविनः का संवुद्धिर्देवात्प्रीतात्किमिष्यते ।
लवणाकरमाहुः किं कामी किं प्राह कामिनीम् ॥

निभालयवरोरुमाम् ।

निभस्य व्याजस्यालय आश्रयेति मायाविसंबुद्धिः ॥ संतुष्टद्देवाद् वर इष्यते ॥ 'रुमा स्याल्लवणाकरः' ॥ 'हे वरोरु मां निभालय पश्य' इति कामिनीं प्रति कामिन उक्तिः । वरोरु इत्यत्र 'संज्ञापूर्वको विधिरनित्यः' इति गुणाभावः । 'वरोरु ते वरो दत्तः' इति कादम्बर्याम् ॥

इति पादोत्तरम् ॥

चक्रबन्धं लक्षयति—

द्विचरणविरचितचतुरमरान्तवर्णोत्तरोक्तनाभ्यर्णम् ।
आरान्तवर्णमिलितोत्तरार्धनेमि प्रदक्षिणं चक्रम् ॥ २ ॥

अनुष्टुभि उद्धारो यथा—नाभौ श्लोकाद्यवर्णं लिखित्वा तदुत्तरवर्णं त्रयं पूर्वारे लिखित्वा तदुत्तरं नाभिमध्यवर्णं वाचयित्वा पष्ठसप्तमाष्टमान् उत्तरस्मिन्नारे लिखित्वा पूर्वारान्तवर्णं लिखेत् । एवमेव द्वितीयपादं पश्चिमदक्षिणयोररयोर्लिखेत् । यस्मिन्नरप्रान्ते पूर्वार्धं समाप्तं तदुत्तरं दक्षिणावर्तेन नेम्यां उत्तरार्धप्रथमवर्णत्रयं लिखित्वा पूर्वारान्तवर्णं चतुर्थं कृत्वा तदुत्तरं पञ्चमषष्ठसप्तमांल्लिखित्वा उत्तरारान्तवर्णं तृतीयपादाष्टमं कृत्वा तदुत्तरं चतुर्थपादाद्यक्षरत्रयं लिखित्वा द्वितीयपादचतुर्थाक्षरं पश्चिमारान्तस्थं चतुर्थपादचतुर्थवर्णं कृत्वा तदुत्तरं पञ्चमषष्ठसप्तमवर्णांल्लिखित्वा द्वितीयपादान्त्यवर्णं चतुर्थपादान्त्यं कुर्यात् ॥ एवमन्यत्राप्यूह्यम् ॥

चक्रप्रश्नमुदाहरति—

धात्रीमाह्वय किं द्विधातुयुगलं लोकस्य केषु स्पृहा
किं कुर्युर्विबुधा खलत्वमपि तत्साकाङ्क्षमाहुश्च कम् ।
पुष्पं चाह्वय किं निषेधवचनं कीदृग्रवेर्मण्डलं
किं वाटः प्रतिषेधकं क ऋगुणः सिंहः कमालम्बते ॥
किं कुर्मः सुकृते द्विजद्विडपि कः कुण्डप्रभेदेऽस्ति का
कीदृक्षं खलसौहृदं स्पृहयति प्रायेण कस्मै वधूः ।
कीदृक्षी घनशर्वरी समुचितं कस्मै विधातुं नमः
कीदृक्क्रूरकुलव्रतं वद गुणश्रेणि त्वमेणीदृशः ॥

सुधाधारानुमाधुर्यं सुमनोभासुमार्दवम्।
स्तनश्रीराश्रिताहार्यं प्रियायाभासतेनवम्॥

'सु' इति मातृसंबुद्धिः। सूशब्दे तु 'अम्बार्थनद्योर्ह्रस्वः'॥ 'धेट् पाने' 'डुधाञ् धारणपोषणयोः' इति द्वयं 'धा धा' इति 'दाधा घ्वदाप्' इति सूत्रे धा इति द्वयोरुपादानात्॥ रासु द्रव्येषु टीकस्येच्छा। 'अर्थरैविभवा अपि' इत्यमरः। 'रायो हलि' इत्यात्वम्॥ विबुधाः खलत्वम् माधुर्मा धारयेयुः। 'माङि लुङ्'॥ यं यच्छब्दं तच्छब्दताकाङ्क्षं माहुः। यच्छब्दानुकरणे अनुकार्यानुकरणयोर्भेदविवक्षायामनुकरणस्यानुकार्येणार्थवत्त्वात्प्रातिपदिकसंज्ञायां तदाद्यत्वे च यमिति यच्छब्दपरं बोध्यम्॥ 'सुम' इति पुष्पसंबुद्धिः॥ 'नो' इति पदं निषेधार्थकम्॥ भा प्रभा सूते भासु 'सत्सू—' इति क्विप् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वः॥ 'मा' इति अट आटश्च निषेधकम् 'न माङ्योगे' इति निषेधात्॥ ऋकारस्य 'अर्' इति गुणः 'उरण्रपरः' इति सूत्रैकवाक्यतया ऋकारस्य गुणे विधीयमाने 'अर्' इत्यस्य प्रवृत्तेः॥ 'प्रसङ्गावस्थायामेव रपरत्वम्' इति सिद्धान्तात्॥ ठिहो दव वनम् आश्रयते। 'दवदावौ वनानले' इत्यमरः॥ मुक्ते स्व वर्तध्वम्। अस्तेर्लोटि मध्यमपुरुषबहुवचने रूपम्॥ न धीर्गतधीको द्विजद्विट्। 'गतश्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकान्। गतश्रीश्च गतायुश्च ब्राह्मणान्द्वेष्टि भारत॥' इत्युक्तेः॥ कुण्डभेदे राश्रिता त्रिकोणमालि। रपदस्याग्निवाचकत्वादग्निपदेन त्रित्वस्योपादानात्। अश्रिः कोणः॥ स्तनलौहदन्महार्यं कल्पिन हार्यमस्थिरं वा॥ वधूः प्रियाय स्पृहयति॥ वर्षारजनिः अभा नक्षत्रहीना॥ सुव्रतं सते सज्जनाय अनवं रक्षाहीनम्। अवधातोर्घञर्थे कः। यद्वा नवः स्तुतिः 'णु स्तुतौ' इत्यस्मादप्। तद्रहितमित्यर्थः॥ नायिकावर्णनश्लोकार्थः—प्रियाया माधुर्यं सुधाधारानु भासते अमृतमुद्राभमित्यर्थः॥ मार्दवं मृदोर्भावः 'इगन्ताच्च लघुपूर्वात्' इत्यण्॥ सुमनसां पुष्पाणां मालतीनां वा भासु। भासत इत्यस्यानुषङ्गः॥ स्तनलक्ष्मीरहार्यं पर्वतमाश्रिता। सर्वत्र निदर्शनालंकारः॥ 'अहार्यधरपर्वताः' इत्यमरः। नव विजातीयमिति माधुर्ये मार्दवे च विशेषणम्॥

इति चक्रबन्धजातिः॥

पद्मबन्धजातिं लक्षयति—

प्रत्येकं वर्णद्वयघटिताष्टदलं भवेत्पद्मम्।
प्रत्येकोत्तरवाक्यं प्रथमोदितकर्णिकावर्णम्॥ २॥

उदाहरति—

का आर्याद्धरिरस्ति दैत्यहृदि का प्राप्ते वदान्योऽर्थिनः
कीदृक्षा जन उत्तमो भवति कः कीदृक्शुचौ सूर्यभा।

स्यात्कीदृग्जननी दशास्यनगरी कस्मिन्गिरौ वर्तते
तीरे तावदपारवारविषये पाथोनिधेः कीदृशी॥
हंसं कीदृशमाहुराह सुविनिर्दुर्भ्यः परं कं मुनि-
र्मूर्धन्यं सुकृतं नरं चरति कं कीरं विदुः कीदृशम् ।
गान्धारीपितरं कमाकलयसे किं रेवतीमानसं
का योगिन्यपि चाविवेश जनकं विद्या गुरुभ्यः कथम् ॥

सुरभीः सुरायः सुतपाः सुवेले ।
सुपिसं सुखगं सुबलं सुलभा ॥

हरिः सुरभीर्गा आवीदरक्षत् ॥ दैत्यहृदि सुरसंबन्धिनी भीरस्ति वैरित्वात् ॥ दातरि मिलिते सति अर्थिनः शोभना रायो येषां ते सुरायो भवन्ति । आढ्या इति यावत् । उत्तमो जनः शोभनो रायो दानं यस्य तादृशो भवति 'रा दाने' इत्यस्माद्भावे घञ् । 'आतो युक् चिण्कृतोः' इति युक् । यद्वा कर्मणि घञ् । उत्तमवस्तुदाता इत्यर्थः ॥ शुचावाषाढे सूर्यप्रभा सुतपा सुतरां तपस्तापो यस्याम् । घञर्थे कः । सुतरां तपतीत्यच्प्रत्ययो वा ॥ सुतं पुत्रं पातीति सुतपा तादृशी जननी स्यात् ॥ लङ्का सुवेले त्रिकूटाचलेऽस्ति । 'पारावारे परार्वाची तीरे पात्रं तदन्तरम्' इत्यमरः । शोभना वेला समुद्रमर्यादा यत्र तादृशे । तटद्वयेऽपि मर्यादासत्त्वात् ॥ सुष्ठु पेसति गच्छतीति सुपीस्तं सुपिसम् । रम्यगतित्वात् ॥ पाणिनिमुनिः सु वि नि दुर् एभ्यः उपसर्गेभ्यः परस्य सुपेः कृतसंप्रसारणस्य स्वपधातोः सकारं मूर्धन्यमाहेति विपरिणामः- 'सुविनिदुर्भ्यः सुपिसूतिसमाः' इति षत्वविधानात् ॥ पुण्यं स्वाश्रयपुरुषं सुखगं सुखप्राप्तं करोति । शुकं शोभनं खगं पक्षिणं प्राहुः ॥ गान्धार्याः पितरं सुबलसंज्ञं वेद्मि । रेवत्याश्चित्तं शोभनो रागविषयो बलो यत्र तादृशं स्यात् ॥ सुलभासंज्ञा योगिनी जनकम् आविवेशेति मोक्षधर्मे स्पष्टम् । विद्या गुरुसकाशात्सुलभा सुप्रापेत्यर्थः ॥

इति पद्मबन्धजातिः ॥

काकपदजातिं गोमूत्रिकाजातिं च लक्षयति—

त्रितयान्वयि पार्ष्ण्यक्षरयुगं त्रिशाखं तु काकपदम् ।
मिलितसमविषमवर्णा गोमूत्री विलिखितोर्ध्वाधः ॥ ४ ॥

काकपदजातिमुदाहरति—

तर्केषु व्यदधामहं किमु कुतः कान्वीक्ष्य मीमांसकां-
स्तत्तद्भावविपर्ययः कथमयं पश्यस्यलीन्कीदृशान् ।

तादृशां इन्द्रस्य मतिः दिवं स्वर्गम् आप लेभे। रजेरिन्द्रत्वं प्रतिज्ञाय तेन दैत्यान्घातयित्वा ततोऽहं रजेः पुत्रोऽस्मीत्युक्त्वा इन्द्रेणात्मपदं लब्धम् इति हरिवंशे स्पष्टम्—'रजेः पञ्चशतं पुत्रान्हत्वा चेन्द्रोऽलभत्पदम्' ॥ थं पदं शकाररेफयोरन्तराले अकारदाने 'शरः' इति भवति ॥ अमा तिथिश्चन्द्रहीना ॥ हृदयं यां लक्ष्म्याम् अस्ति। इंशब्दस्य सप्तम्येकवचने रूपम् ॥ कृष्णौ वासुदेवार्जुनौ शत्रूणाम् असौ क्षेपकौ। 'असु क्षेपणे' इत्यस्य अस्यतं इत्यर्थौ। नाशकौ इति यावत्। अस्यतेः पचाद्यच् ॥ लशब्दो लघुपर्यायः भशब्द आदिगुरुर्भगणार्थः। तच्चोपलक्षणं गणान्तराणाम्। समाहारद्वन्द्वः। तज्ज्ञानेन छन्दसां ज्ञानात् ॥ अथ विरहिणीवाक्यार्थः—माद्यन्तो मत्ताः परभृताः कोकिलास्तेषामालापेन कमनीया मनोहरा अतिसौरभा आम्रवृक्षा यस्मिन् एतादृशे अद्य वसन्तदिने मारेण कामेन जिता अभिभूता असौ अहं तापो ज्वरः श्रमः खेदस्तयोर्मायां तद्रूपां मायां वा लभे। प्राप्नोमीत्यर्थः॥

इति गोमूत्रीजातिः ॥

सर्वतोभद्रजातिं लक्षयति—

**एकेन द्वाभ्यां वा सर्वैर्वा सर्वदिग्गतैर्वर्णैः।**
**यत्रोत्तराणि दुष्करमिदमुदितं सर्वतोभद्रम् ॥ ९ ॥**

उदाहरति—

कः शब्दः काव्यकर्तुः क जगदनुगतं कः क्षरत्यर्थधातुः
क स्याद्रेफस्य लोपः प्रतिकृतिविषयः कुत्र कः प्रत्ययः स्यात्।
कोः कः स्यादक्षशब्देऽभिमुखय विहगं कीदृशौ कंसकृष्णौ
केन स्याद्वा तरीतर्यपि च लुकि शपः कौ च गत्यर्थधातू ॥
क स्याच्छब्दः खगेति प्रसवमय इषुः कस्य कोऽस्य च्वियोगे
कस्यापृक्तस्य लोपः प्रभवति क ऋतः कश्च शब्दार्थधातुः।
वदितो काह्वय त्वं कमविमकि मतौ कौ तुरीयद्वितीयौ
को वोकारस्य यण् दिक्कथमनुपहिता पुण्यतोया सरित्का ॥

कावेरी।

काव्यं करोतीति काव् 'तत्करोति—' इति ण्यन्ताद्विच् यकारस्य वयोगान्तलोप इत्यत्र विस्तरः ॥ ए विष्णौ जगदनुस्यूतम्। 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते' इति स्मरणात् ॥ री इति धातुः क्षरत्यर्थे। 'रीङ् स्रवणे' इति पाठात् ॥ रि रेफे परे रेफस्य लोपः 'रो रि' इति सूत्रात् ॥ प्रतिकृतौ इवे स्वार्थे कः। 'इवे प्रतिकृतौ ॥' इति सूत्रात् ॥ अक्षशब्दे परे कुशब्दस्य 'का' आदेशः। 'का पथ्यक्षयोः' इति सूत्रात् ॥ वे इति पक्षिसंबुद्धिः ॥ कृष्णकंसौ अरी वैरिणौ ॥ तरी-

कीदृक्षः पुरुषोऽतिनीतिनिपुणैः कुत्र व्यवस्थाप्यते
किं जन्यो वद यो युधिष्ठिरसदोवृत्तिविशेषो महान् ॥
समवायतः समयकृतः समयाहितः ।

मीमांसकान् समवायात् यतो गच्छतस्तदनङ्गीकारिणो वीक्ष्य त्वं तर्केषु समवाः संमुखम् अगाः । युक्तिभिः समवायपदार्थं स्थापितवानित्यर्थः ॥ आवृत्त्या चैतदर्थलाभः ॥ 'तत्तद्भावानां सुखदुःखादीनां विपर्ययः कथम्' इत्यत्र 'समयेन कृत' इत्युत्तरम् ॥ सम तुल्यं यकृत् कालखण्डं येषां तादृशान्बालवर्णान् पश्यामि । 'कालखण्डयकृती तु समे इमे' इत्यमरः ॥ हित आप्तः पुरुषो नीतिज्ञैः समया समीपे स्थाप्यते । यो युधिष्ठिरसभावृत्तिर्महान्विशेषः स मयेन दानवविशेषेण आहितो जनितः । सभापर्वणीदं स्पष्टम् ॥

इति काकपदजातिः ॥

गोमूत्रीजातिमुदाहरति—

अन्तस्थाः परतः कुतो जगदिदं कीदृक्सता कीदृशा
भाव्यं मौनिनमाह्वय प्रियतमं का किं विधत्तेऽङ्गना ।
संबुद्धिः क गुहस्य वा जनकता किं युष्मदस्मन्ङसे-
र्वर्गाद्यक्षरतो भवन्ति वद के वर्णाः परे पञ्चमे ॥
धीरिन्द्रस्य जितस्य दानवगणैः कीदृग्दिवं किं व्यधा-
द्विन्यस्तान्तरकारकं भवति वा किं वर्णमिष्वर्थकम् ।
कानिन्दुस्तिथिरस्ति च क हृदयं कृष्णौ कथं भूभृतां
छन्दोधीर्भवति श्रुते क सुरभौ ब्रूते वियुक्ता च किम् ॥
मायत्परभृतालापकमनीयातिसौरभे ।
अद्यमारजिता तापश्रममायामसौलभे ॥

अन्तस्था यरलवा माद् मकारात् परतो भवन्ति ॥ जगत्सर्वं यद् गमनशीलम् । नश्वरमिति यावत् ॥ साधुना परान्बिभर्ति पालयति परभृत् तादृशेन भाव्यम् ॥ अद्यारजनहीनेति मौनिसंबुद्धिः ॥ कमनी कामुकी स्त्री प्रियं याति ॥ सौ प्रथमैकवचने संबुद्धिरुक्ता । 'एकवचनं संबुद्धिः' इति वचनात् ॥ रो वह्निः भं चेति समाहारद्वन्द्वः । अभिरूपितद्वर्गुंदजनकत्वात् ॥ युष्मदस्मदोः परस्य ङसेः 'अत्' इत्यादेशः । 'पञ्चम्या अत्' इति सूत्रात् ॥ वर्गेषु आद्यान्यक्षराणि चत्वारि कादीनि तेभ्यः पञ्चमे ङकारादौ वर्णे परे ङ ञ ण न मकारादिभ्यः परतो यमाख्यास्ता वर्णा भवन्ति । यथा—पलिक्क्नीः चख्ख्नतुः अग्ग्निः घ्घ्नन्ति । तथा धीदमजिमस्यागार्थस्य सूत्रम्—'अनन्त्यस्यान्त्ययोगे मध्ये यमः पूर्वस्य गुणः' इति ॥ गुणोऽवयव इत्यर्थः ॥ राजिर्नृपविशेषः तानः पितृत्वेन विशः रक्ष्यत्वेन

तादृशी इन्द्रस्य मतिः दिवं स्वर्गम् आप लेभे । रजेरिन्द्रत्वं प्रतिज्ञाय तेन दैत्यान्घातयित्वा ततोऽहं रजेः पुत्रोऽस्मीत्युक्त्वा इन्द्रेणात्मपदं लब्धम् इति हरिवंशे स्पष्टम्—'रजेः पञ्चशतं पुत्रान्हत्वा चेन्द्रोऽलभत्पदम्' ॥ श्रं पदं शकाररेफयोरन्तराले अकारदाने 'शरः' इति भवति ॥ अमा तिथिश्चन्द्रहीना ॥ हृदयं यां लक्ष्म्याम् अस्ति । ईशब्दस्य सप्तम्येकवचने रूपम् ॥ कृष्णौ वासुदेवार्जुनौ राज्ञाम् असौ क्षेपकौ । 'असु क्षेपणे' इत्यस्य अस्यंत इत्यसौ । नाशकौ इति यावत् । अस्यतेः पचाद्यच् ॥ लशब्दो लघुपर्यायः भशब्द आदिगुरुर्भगणार्थः । तच्चोपलक्षणं गणान्तराणाम् । समाहारद्वन्द्वः । तज्ज्ञानेन छन्दसां ज्ञानात् ॥ अथ विरहिणीवाक्यार्थः—माद्यन्तो मत्ताः परभृताः कोकिलास्तेषामालापेन कमनीया मनोहरा अतिसौरभा आम्रवृक्षा यस्मिन् एतादृशे अद्य वसन्तदिने मारेण कामेन जिता अभिभूता असौ अहं तापो ज्वरः श्रमः खेदस्तयोर्मायां तद्रूपां मायां वा लभे । प्राप्नोमीत्यर्थः ॥

इति गोमूत्रीजातिः ॥

सर्वतोभद्रजातिं लक्षयति—

**एकेन द्वाभ्यां वा सर्वैर्वा सर्वदिग्गतैर्वर्णैः ।**
**यत्रोत्तराणि दुष्करमिदमुदितं सर्वतोभद्रम् ॥ ९ ॥**

उदाहरति—

कः शब्दः काव्यकर्तुः क्व जगदनुगतं कः क्षरत्यर्थधातुः
क्व स्याद्रेफस्य लोपः प्रतिकृतिविषयः कुत्र कः प्रत्ययः स्यात् ।
कोः कः स्यादक्षशब्देऽभिमुखय विहगं कीदृशौ कंसकृष्णौ
केन स्याद्वा तरीतर्यपि च लुकि शपः कौ च गत्यर्थधातू ॥
क स्याच्छब्दः खगेति प्रसवमय इपुः कस्य कोऽस्य च्विवयोगे
कस्याप्रक्तस्य लोपः प्रभवति क ऋतः कश्च शब्दार्थधातुः ।
वदिक्षी काद्वय त्वं कमविमकि मतौ कौ तुरीयद्वितीयौ
को वोकारस्य यण् दिक्कथमनुपहिता पुण्यतोया सरित्का ॥

कावेरी ।

काव्यं करोतीति काव् 'तत्करोति–' इति ण्यन्ताद्विच् यकारस्य संयोगान्तलोप इत्यन्यत्र विस्तरः ॥ ए विष्णौ जगदनुस्यूतम् । 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते' इति स्मरणात् ॥ री इति धातुः क्षरत्यर्थे । 'रीङ् क्षरणे' इति पाठात् ॥ रि रेफे परे रेफस्य लोपः 'रो रि' इति सूत्रात् ॥ प्रतिकृतौ इवे इवार्थे कः । 'इवे प्रतिकृतौ ॥' इति सूत्रात् ॥ अक्षशब्दे परे कुशब्दस्य 'का' आदेशः । 'का पथ्यक्षयोः' इति सूत्रात् ॥ वे इति पक्षिसंबुद्धिः ॥ कृष्णकंसौ अरी वैरिणौ ॥ तरी-

पङ्क्तिर्मथौ हसति किंप्रतियोगिकेयं
का भासते विजयभाजि सदैव पुंसि ।

तारवी ।

तरूणामियं तारवी वृक्षप्रतियोगिका पङ्क्तिः ॥ वीरता वीरत्वम् ॥

विद्वन्कया कुशलवौ समसाविपातां
वर्णेन कोभयविधेन सदृग्भवान्या ॥

सीतया ।

सीतया जानक्या कुशलवाख्यौ पुत्रौ प्रसूतौ ॥ अक्षरेण रूपेण च सा भवानीतुल्या या अनभी उमापदवाच्यत्वान्नीलवर्णत्वाच्च । 'अतसी स्यादुमा क्षुमा' इत्यमरः ॥

कथय सखे किमवस्था शंवरभवने रतिरवात्सीत् ।
प्रियया व्यथते च कथं भवति क तरीतुकामो वा ॥

विमदना ।

कामवियुक्ता रतिः शंवरगृहे अवात्सीत् वसति स्म ॥ मध्याक्षरद्वयत्यागे 'विना' इति पदम् । तद्विपरीत्ये 'नावि' इति सिद्धम् ॥ प्रियया दयितया कथं व्यथते विगतमदो ना पुरुषः नपुंसकत्वात् ॥ तरीतुकामो मुमुक्षुर्वा विमदना विगतमदो ना पुरुषः ॥

कीदृशी दयितादेहवीरुत्कोन्मादकारिणी ।
केषु वा सत्सु पुरुषो दुर्विधो नाभिधीयते ॥

सुकुमारा ।

सुकुमारा कोमलस्पर्शा ॥ मध्याक्षरद्वयत्यागे 'सुरा' इति ॥ तद्विपरीत्ये 'रासु' इति पदं सिद्धम् । द्रव्येषु इत्यर्थः ॥

इति गतप्रत्यागतजातिः ॥

वर्धमानाक्षरहीयमानाक्षरजाती लक्षयति—

आदौ मध्येऽन्ते वा यत्रैकद्वित्रवर्णानाम् ।
वृद्धिर्वा हानिर्वा तद्भेदद्वयमनुगतार्थम् ॥ ७ ॥

पूर्वपूर्ववर्णसहितेनोत्तरवर्णेन यदुत्तरं तद्वर्धमानाक्षरम् ॥ पूर्वपूर्ववर्णं विहाय तदुत्तरवर्णेन यदुत्तरं तद्धीयमानाक्षरमित्यर्थः ॥

वीतिहोत्रभवः को वा भोज्या का सदधिः कटुः ।
मधुपैः किं वरवधूवदनाभं निपीयते ॥

राजीवम् ।

'राः स्मृतः स्वर्णवित्तयोः' इति विश्वः ॥ 'अग्नेरपत्यं प्रथमं हिरण्यम्' इति श्रुतिः ॥ राजी कटुरसा दध्ना सह भुज्यते ॥ राजीवं पद्मम् ॥ उत्तरोत्तरं वर्णवृद्धिः स्पष्टैव ॥

किं वा पदं विकल्पार्थे बालासंबोधनं वद।
मथद्भिरब्धिं विबुधैः को नेत्रं मन्दरे कृतः॥

वासुकिः।

विकल्पार्थकं वापदम् ॥ 'वासु' इति बालासंबुद्धिः। 'बाला वासूः' इत्यमरः ॥ वासुकिः सर्पभेदः ॥ 'मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्' इति पुराणम् ॥

विद्ययास्ति सह कोऽत्र विरोधी का मुनेरपि मनो मदयन्ति।
दिङ्मुखः स भृशमीर्ष्यति कस्मै काव्यमाहुरमृतप्रतिमं किम्॥

रामायणम्।

रा द्रव्यम् ॥ रामाः स्त्रियः ॥ रामाय दाशरथये ॥ रामायणं वाल्मीकिकाव्यम् ॥

संबोधय सुखं गीतिः कीदृशी बर्हमाह्वय।
चतुर्भिरेकवाक्यत्वं प्राप्तैः श्लोकैः किमुच्यते॥

कलापकम्।

'क' इति सुखसंबुद्धिः ॥ गीतिः कलाविशेषः ॥ 'कलाप' इति बर्हसंबुद्धिः ॥ श्लोकचतुष्टयस्यैकवाक्यत्वे काव्येषु 'कलापकम्' इति प्रसिद्धिः ॥

मनुष्यस्य सखे तावत्संबुद्धिरभिधीयताम्।
द्वौ वर्णावादितो दत्त्वा बलिमच्छलयच्च कः॥

वामनः।

नृशब्दस्य 'ह्रस्वस्य गुणः' इति गुणे कृते 'नः' इति संबुद्धिः ॥ वामनो बलिं वञ्चितवान् इति प्रसिद्धम् ॥

गिरीशेन जिगीषुः कः प्रसह्य निरदह्यत।
आद्यवर्णोत्तरं वर्णौ द्वौ दत्त्वा तमसूत कः॥

मधुसूदनः।

मदनो हरेण दग्धः ॥ मकारोत्तरं 'धुसू' इति वर्णद्वये दत्ते 'मधुसूदनः' इति शब्दः ॥ तद्वाच्यो नारायणो मदनं प्रद्युम्नं सुतमुत्पादितवान् ॥

ब्राह्मणेन समागम्य प्राज्ञाः किमनुयुञ्जते।
वर्णद्वयविवृद्ध्यान्ते लवः किं नाकरोद्वने॥

कुशलङ्घनम्।

---

१. 'रावणः' इत्यपि पाठः.

'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम्' इति मनुः । तदुत्तरं 'धनम्' इति वर्णद्वये दत्ते 'कुशलङ्घनम्' इति शब्दः । कुशस्य स्वज्येष्ठभ्रातुर्लङ्घनम् अवमानं नाकार्षीत् तदनुकूलत्वादिति भावः ॥

अन्धकारविरुद्धा का चक्षुषः सहकारिणी ।
वर्णावाद्यन्ततो दत्त्वा तज्जन्मसमयश्च कः ॥

प्रभातम् ।

सहकारित्वं चक्षुःकार्ये चाक्षुषज्ञाने निमित्तत्वात् । अन्धकारविरुद्धत्वम् अन्धकारस्यालोकाभावरूपत्वात् । आलोकस्य तत्प्रतियोगित्वात् ॥ अन्धकारस्य द्रव्यान्तरत्वपक्षेऽपि विरोधसत्त्वात् ॥ भाशब्दस्य आदावन्ते च वर्णद्वये दत्ते प्रभातम् । तच्च प्रभाजन्मसमयः ॥ विशिष्टतेजसो दिन एव सत्त्वात् ॥

इति वर्धमानाक्षरजातिः ॥

हीयमानाक्षरजातिमुदाहरति—

पुरत्रयजिघांसायां धनुर्बुद्धिः क्व धूर्जटेः ।
शरणं कुत्र काङ्क्षन्ति नीचस्यामन्त्रणं कथम् ॥

मन्दरे ।

त्रिपुरवधे मन्दराचले हरस्य चापबुद्धिरजायत ॥ दरे भये जना लोकास्त्रातारमिच्छन्ति ॥ 'हीनसंबोधने तु रे' इति कोशः ॥ अत्र यथोत्तरं वर्णहानिः स्पष्टा ॥

कस्मादवस्थावैषम्यं जाता मन्दोदरी कुतः ।
हितमाधित्समानस्तु सज्जनः कीदृशो भवेत् ॥

समयतः ।

समयतः कालेन अवस्थानां वैषम्यं 'विशेषः कालिकोऽवस्था' इत्यमरः ॥ मन्दोदरी रावणभार्या मयतो मयदानवाज्जाता ॥ हितार्थी पुरुषो यतो वचनादिषु संयतः स्यात् ॥ 'वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम्' इति स्मृतेः ॥

सुपर्वणां क्व सर्वेषां सेनापत्यमवस्थितम् ।
शब्दस्य कुत्र वृत्तिः स्यादाद्यवर्णद्वयं विना ॥

विशाखे ।

विशाखे स्कन्दे । आद्यवर्णद्वयत्यागे खे आकाशे ॥

गोभूम्यादिप्रदानेषु प्राज्ञाः किं दक्षिणां विदुः ।
कं प्रेरयन्ति राजानो रहस्यानि बुभुत्सवः ॥

चामीकरम् ।

चामीकरं सुवर्णम् । 'सर्वेषामेव दानानां सुवर्णं दक्षिणेष्यते' इति स्मृतेः ॥ मध्याक्षरद्वयत्यागे चारं प्रेषयन्ति ॥

राजराज नलिन्याः किं भीमोऽहार्षीत्प्रियेरितः ।
कुत्रैकाचस्तृतीयादिरुदात्तान्त्याक्षरैर्विना ॥

सौगन्धिकम् ।

द्रौपद्या प्रेरितो भीमः कुबेरपुष्करिणीतः सौगन्धिकं पुष्पमहार्षीत् इति वनपर्वणि स्पष्टम् ॥ अन्त्याक्षरत्रयत्यागे सौ सुप्रत्यये परे य एकाच् ततः परा तृतीयादिविभक्तिरुदात्ता भवति 'सावेकाचस्तृतीयादिर्विभक्तिः' इति सूत्रात् ॥ साविति प्रथमैकवचनस्य ग्रहणमिति केचित् ॥ सप्तमीबहुवचनस्येत्यन्ये ॥

अश्वमेधहयपालनोद्यतं को जघान जनकं रणाङ्गणे ।
किं कया स्वहृदयं करोति वा स्त्री विना प्रथममन्त्यमक्षरम् ॥

बभ्रुवाहनः ।

बभ्रुवाहनसंज्ञोऽर्जुनस्य पुत्रश्चित्राङ्गदायां शेषकन्यायामुत्पन्नः । तेनार्जुनो हत इति महाभारतेऽश्वमेधपर्वणि स्पष्टम् ॥ पक्षे प्रथमान्त्योभयाक्षरत्यागेन 'भ्रुवा-आह' इति पदमवशिष्टम् । कामिनी सुचतुरा सविभ्रमया भ्रुवा स्वमभिप्रायमनुरागं स्वानुरक्ताय 'त्वयैव मयैव कर्तव्यम्' इति भ्रुवा आह सूचयति लक्षयतीत्यर्थः ॥

इति हीयमानाक्षरजातिः ॥

शृङ्खलाजातिं लक्षयति—

पूर्वान्तिमचरमादिमवर्णोपादानहानाभ्याम् ।
स्याच्छृङ्खला भवेत्सा क्वचिदेकान्तरितभावेऽपि ॥ ८ ॥

उदाहरति—

आमन्त्रयस्व धनुरल्पमनेहसं च
जानक्यसौस्कमथ कः सुरभिः सरस्य ।
कीदृक्तथोक्षसु जनादरणीयताभा-
क्सन्तश्च किं विजहति प्रतिभानशालिन् ॥

चापलबन्धुर्यः ।

'चाप' इति धनुषः, पल इति अल्पकालस्य संबुद्धिः ॥ सीता लवम् असौ उत्सारयामास ॥ सुरभिर्वसन्तः कामस्य बन्धुः सुहृत् ॥ धुर्यो धूर्वहनसमर्थ उक्षा जनोपादेयः ॥ चापलस्य चञ्चलताया बन्धुर्गणयो यस्त सन्तस्त्यजन्ति ॥

संबुद्धिं वद दुर्वहस्य मदनो युक्तः कया भार्यया
कौ शस्तौ मतिमन्धनव्यसनयोः पीतं च संबोधय।
किं तन्वन्ति पिका वसन्तसमये लोकोत्तरोल्लासया
मेधाविन्नविरुद्धया च निगमैः किं वा कया प्राप्यते॥

भारत्यागौरवम्।

'भार' इति दुर्वहसंबुद्धिः॥ रत्या भार्यया युक्तः कन्दर्पः॥ धनस्य दानं त्यागः, व्यसनस्य निद्रादेः त्यागः परिहारः॥ 'गौर' इति पीतसंबुद्धिः॥ रवं शब्दं कुर्वन्ति॥ लोकोत्तरया वेदाविरुद्धया च भारत्या सरस्वत्या गौरवम् उत्कर्षः प्राप्यते। तथा च स्मृतिः—'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥'

इति शृङ्खलाजातिः॥

का भासतेऽतिदयिता नलकूबरस्य
दृष्ट्वा विशिष्टगुणमाहुरमत्सराः किम्।
पश्यन्ति नेह पुरुषाः क्षयभाजि कस्यां
का प्राप्यते रयवता भरतस्थितिः का॥

रम्भाविहिता।

रम्भा नामाप्सरा नलकूबरस्य प्रिया इत्युत्तरकाण्डे स्पष्टम्॥ उत्कृष्टगुणं पुरुषं दृष्ट्वा मत्सरहीना भाहि शोभस्व इत्याहुरभिनन्दनार्थम्॥ गवि चक्षुरिन्द्रिये क्षीणे रूपं न पश्यन्ति साधनाभावात्॥ विता पक्षित्वं वेगवता प्राप्यते तत्साहश्यात्॥ रङ्गे नाट्यभूमौ भाविहितम् इष्टं यस्याम्। नाट्यप्रयोगेण भरतानां नटानामुत्कर्षात्॥ अत्रैकान्तरत्वं स्पष्टम्॥

ज्यायोगं वहति शरः क मोक्षकाले
कीदृक्षं भवति रजो वलैरुदस्तम्।
कीदृग्वा हरति वधूर्मनः क वद्धैः
सारथ्यं न भवति कीदृशे स्तने श्रीः॥

पुंनखेवारिते।

मोक्षसमये बाणः पुङ्खावच्छेदेन ज्यासंयोगं प्राप्नोति॥ अश्वादिभिरुत्थापितं रजः खम् आकाशम् ईर्ते गच्छति तत्खेऽन्तरिक्षे ईरि भवति॥ नवा युवतिर्वधूर्मनोहरा। वाते अभिसारार्थं तद्दुर्गमने हेतुत्वात्॥ पुंसः पुरुषस्य नखे निषिद्धे- सति स्तने श्रीः शोभा न भवति। नायकनखव्रणाङ्कितस्यैव तस्य शोभोदयात्॥

इत्येकान्तरितशृङ्खलाजातिः॥

नागपाशं लक्षयति—

अनुलोमविलोमाभ्यां मिश्रितैर्मध्यगाक्षरैः ।
वाच्यते मध्यमारभ्य नागपाशोऽयमुच्यते ॥ ९ ॥

उदाहरति—

कया विना यौवनमस्ति वन्ध्यं स्नानावतीर्णा दयिता कथं स्यात् ।
सविभ्रमावेल्लितया दृशा वा वधूः प्रियं पश्यति कीदृशाक्षैः ॥

कालसारसदृशा ।

आद्यवर्णद्वयं त्यक्त्वा सारसदृशा कमलनेत्रया विना तारुण्यं व्यर्थम् ॥ अन्त्यवर्णद्वयं त्यक्त्वा विपरीतवाचने 'सरसालका' इति भवति । सरसा आर्द्रा अलका यस्याः ॥ कालसारः कृष्णमृगः तद्दृष्टितुल्यया दृशा पश्यति इत्यर्थः ॥ अत्र सारस-सरसापदयोर्नागपाशाकारत्वं स्पष्टम् ॥

प्रियतम सदृशं स्यात्केशपाशेन किं मे
भवति भवनभूमिर्भोगिनां भव्यकृत्का ।
प्रसरति विहितायां कैश्च पाञ्चालिकायां
विततिरिह हि कस्यां शीघ्रमेवाभिधेहि ॥

कारुभीरुचामरम् ।

हे भीरु, चामरं तव केशकलापेन तुल्यम् इत्याद्यवर्णद्वयत्यागेन चामरपर्यन्तमर्थः । अन्त्यवर्णद्वयत्यागेन विपरीतवाचने 'चारुभीरुका' इति चारवो रम्या भीरुकाः कामिन्यो यत्रेति समासान्तः कप्प्रत्ययः ॥ कारुभिः शिल्पिभिर्निर्मितायां पाञ्चालिकायां पुत्रिकायाम् अरं शीघ्रं रुचां कान्तीनां विततिरुदेति ॥ पूर्वं व्यस्तसमस्तम् । इदं समस्तव्यस्तमिति विशेषः ॥

भाषाभेदादर्थभेदे चित्रमित्यभिधीयते ।
तदैक्ये त्वर्थभेदो यः स न युक्तो विभाजकः ॥ १० ॥

भाषाभेदो भाषाविभाजकोपाधिर्यः संस्कृतत्वादिस्तदवच्छिन्नप्रतियोगिताकः । अन्यथा संस्कृतघटोभयभेदस्य संस्कृतेऽपि सत्त्वादतिप्रसङ्गात् ॥ नन्वेकस्यामपि भाषाया पदच्छेदेनार्थद्वयप्रतीतावपि चित्रव्यवहारो विदग्धमुखमण्डनादौ दृष्ट इत्यत आह—तदैक्ये इति ॥ भाषायामभिन्नाया योऽर्थभेदः स तु चित्रविरूपभेदघटको न भवति पूर्वोक्तभेदानां चित्र एवान्तर्भावापत्तेः एतभिर्मुक्तभेदान्तरविलयप्रसङ्गादित्यर्थः ॥

दुर्योधनादीन्विसृजेत्युदीरितो गन्धर्वराजः किमवोचदर्जुनम् ।
पिये पउत्थम्मि सहीहि पुच्छिदे वरांगणाये भण किं भणिज्जई ॥

अहमुज्झामि ।

घोषयात्रायां चित्ररथेन गन्धर्वेण दुर्योधनादयो बद्ध्वा गृहीताः, ततोऽर्जुनेन मोचिता इत्यारण्यके पर्वणि स्पष्टम् ॥ अहमुज्झामि त्यजामि इति चित्ररथस्यार्जुनं प्रत्युक्तिः ॥ प्रिये प्रस्थिते सखीभिः पृष्ट्या वराङ्गनया भण किं भण्यते ॥ हे सखि, अहमसौ मुज्झामि मुह्यामि तद्विरहवेदनयेत्यर्थः ॥

कः पिकदयितः कीदृङ्नगरं कीदृग्मृगेषु शबरकुलम् ।
सहिआहि किं कहिज्जइ अज्जाभमरेहि अनुसरिज्जन्ती ॥

माकन्दोट्टमुत्तंसेहि ।

माकन्द आम्रतरुः पिकप्रियः ॥ 'स्यादट्ट' क्षौममस्त्रियाम्' इत्यमरः । अट्टेन अट्टे वा मुत्वेऽत्र रम्यत्वात् । तं सं बन्धम् ईहते तसेहि 'तसि बन्धने' बन्धेच्छावदित्यर्थः ॥ सखीभिः किं कथ्यते । 'अज्जा नवयुवत्याम्' इति देशी । 'भ्रमरैरनुस्रियमाणा नववधूः सखीभिः किं कथ्यते' इति प्रश्ने 'मा नीलोत्पलमुत्तंसय' इति । कदोट्टं नीलोत्पले देशी । तदवतंसीकरणे तन्मधुलुब्धा भ्रमरास्त्वामायासयन्ति ॥ तत्परित्यागे तु सुस्था भविष्यसि इत्यर्थः ॥

उक्तौ जातिविशेषाणामशेषाणां क्षमेत कः ।
यत्नेहाभिहितं स्यात्तन्महामतिभिरूह्यताम् ॥ ११ ॥

इति श्रीविश्वेश्वरपण्डितविरचिते कवीन्द्रकर्णाभरणे तृतीयः परिच्छेदः ।

---

चतुर्थः परिच्छेदः ।

श्लेषे सति विशेष्यस्यानभिधानं प्रहेलिका ।
अर्थे श्लिष्टे भवत्यार्थी शब्दे शाब्दीति कथ्यते ॥ १ ॥

श्लेष इति शब्दार्थोभयश्लेषपरम् ॥

अप्यन्यतो जिगमिषन्प्रसभं निरुद्धो
रागातिभूमिविभवेन विभाव्यमानः ।
एणीदृशा गुरुजनस्य समक्षमेव
सव्रीडयैव परितः परिरभ्यते कः ॥

रक्तोत्तरासङ्गः ।

प्रावारोऽङ्गात्पतितः सन् समाकृष्यते । रागातिशयेन गुरुषु पश्यत्सु लज्जया क्षिप्यते च अङ्गावरकत्वात् प्रसभनिरोधकत्वादिकं नायकसाधारणमिति नायकानिष्टत्वेन चमत्का-

रका ये धर्माः प्रसिद्धास्तद्रूपत्वमुखेनोत्तरीयप्रतीतिरिति । आर्थीयम् ॥ न च रागेति श्लेषत्वाच्छब्दशक्तिमूलकत्वमप्यत्रेति वाच्यम् । उत्कटेच्छापूर्वकदर्शनस्य रागत्वादिविशेषणार्थतया रागपदेनोभयत्रापीच्छाया एव विवक्षिततया आरुण्यस्याविवक्षितत्वात् । आरुण्यस्य प्रकृतानुपयोगित्वात् । 'द्वौ प्रावारोत्तरासङ्गौ' इत्यमरः ॥

किसलयललितां मलिनामलिनामावलिभिरुल्लसन्मुकुलाम् ।
कामवलोक्य विलोचनमपसरति न जातु सरसानाम् ॥

कान्ताम् ।

किसलयादिपदानां मुख्यवृत्त्या लतान्वितार्थत्वात् अधरादौ तेषां साध्यवसानवृत्त्यैव प्रवृत्तिः । अतो लतायां सिद्धानामर्थानां स्पष्टत्वम् तात्पर्यविषयतया मुख्यस्य कान्तारूपस्यार्थस्य गोप्यत्वमिति बोध्यम् ॥

विविक्तरूपा सुतरामसूर्यपश्या प्रिया संपदि या बभूव ।
वीर त्वदीयद्विपतामिदानीं सैव प्रिया भाति दधत्यसुका ॥

सुन्दरी ।

विविक्तत्वरम्यत्वे निर्जनत्व च सूर्यदर्शनराहित्यं गुप्तत्वम् । सूर्यकिरणसंयोगाभावाच्च दधती आधारभूता असुका सुशब्दरहिता दरीति यावत् ॥

वनान्तवृत्तिरपि सन्यः सदालयमध्यगः ।
अन्त्यस्पर्शादियुक्तोऽपि यः स्पृश्यः सोऽभिधीयताम् ॥

मलयपवनः ।

वनान्तवृत्तेरालयमध्यगत्व विरुद्धम् । 'मलयपवन' इति शब्दस्य वनशब्दान्तर्गतत्वात्, लयशब्दस्य मध्यगत्वाच्च तत्परिहारः ॥ अन्त्यश्चण्डालादिः तत्स्पर्शिनः स्पर्शायोग्यत्वमिति विरोधः । अन्त्यस्पर्शो मकारः 'कादयो मावसानाः स्पर्शाः' इत्युक्तेः । तद्वाहित्त्व स्पर्शनप्रत्यक्षविषयत्वं चेति तत्परिहारः ॥

इति शाब्दीजातिः ॥

गुणे कृते बिभ्रति येऽत्र वृद्धिं भागस्य हारेण भजन्ति नाशम् ।
गतिं लभन्ते विपरीतरूपां के द्विर्वधात्सत्कृतिमाश्रयन्ति ॥

अङ्काः ।

गुणनेन अङ्कानां वृद्धिः, भागहरणे हानिः, वामतो गतिः, द्विगुणनं कृतिः 'समद्विघातः कृतिरुच्यते' इत्युक्तेः ॥ 'गुणविधौ वृद्धिः, ताडनादिवृत्तौ सत्कारः' इति विरोधः । 'भागहरणे हानिर्विपरीता' इत्यत्रार्थशक्तिमूलकत्वम् ॥

---

१. 'वृत्तिं भागाभ्युपेताश्च' इति पाठः.

योधान्तरस्थोऽपि न मुक्तभीरुः परादिमान्त्योऽपि सुहृत्समेतः ।
कुम्भस्य जेतापि न वानरेन्द्रो भवेत्कठोरोऽपि मनोहरः कः ॥

पयोधरः ।

वीरान्तरस्थः कातरसङ्गः वैरिभिरायन्तयुक्तस्य मित्रयोगः । कुम्भकर्णपुत्रजेतुः सुग्रीवत्वाभाव इति विरोधः ॥ पयोधरशब्दो मध्यवृत्तिः पकार आदौ रेफोऽन्ते कलससाम्यं चेत्यत्र शब्दमूलकत्वम् । कठोरोऽपीत्यत्रार्थशक्तिमूलकत्वम् ॥

इति शब्दार्थोभयप्रहेलिका ॥

हृद्यगूढजातिं लक्षयति—

कालादिर्व्यज्यते यत्र हृद्यं तदभिधीयते ।
तद्गूढं यत्र नाभाति सहसार्थो विवक्षितः ॥ २ ॥

हृद्यजातिमुदाहरति—

गुरुसदसि सरसिजस्रजमभिमृशति करेण दयिततमे ।
सिन्दूरबिन्दुसुन्दरमलिकतलं पाणिना वधूः पिदधे ॥

नायिकासंयोगाभिप्रायेण तदभेदाध्यवसितकमलमालाभिमर्शः । तत्र मुखकुचकरकमलसंयोगः कदा मे भावी इति नायकाभिप्रायः ॥ ततस्तत्संदेहनिवृत्तये सूर्यास्तमयसमयः संकेतकाल इति मनसिकृत्य यथोक्तभालतलतिरोधानमिति नायिकाभिप्रायः ॥ गुरुसदसीति शब्दप्रश्नानर्हत्वम् ॥

बिम्बाधरभुवि यावकधावनसमयप्रसक्तसीत्काराम् ।
प्रातरवलोक्य बालां सपदि सपत्नीभिरुद्विग्नम् ॥

'रागेकलिङ्गमधरे किल गूढकं स्यात्' इति कामशास्त्रादस्फुटदन्तक्षतदर्शनानर्हत्वेऽपि प्रातर्मुखप्रक्षालनसमयेऽलक्तसंयोगेन क्षतपीडोल्लासेन सीत्कारोदयदर्शनेन तदनुमित्या तस्यां प्रियानुरागमनुमाय सपत्नीनां वैमनस्यमिति भावः ॥

आलीभिर्मधुसंनिधिमवधार्यारामदोहदव्याजात् ।
आर्द्रतरचन्दनागुरुधूपध्वजजो विधीयते धूमः ॥

वसन्तागममवधार्य नायिका सुतरां मा व्यथिष्टेत्याशयेन सखीभिरारामे दोहदच्छलेन धूपो दत्तः । धूमातिशयलाभाय आर्द्रतरेति ॥ तथा च धूमावृततया पल्लवादीनां कोकिलादीनां च दर्शनं मास्तु धूमव्यथया कोकिलानामुपवनाद्गमनेन तत्कूजितश्रवणमपि मास्तु । ततश्च लिङ्गज्ञानाभावाद्वसन्तागमनानुमाने पूर्वापेक्षयाधिका विरहव्यथा मा भूदिति भावः ॥

विदधत्यवधीरितापराधे दयिते मानंनिबन्धनानुयोगम् ।
कुलिशाङ्कुरदिग्धपद्मरागाभरणेन सरकैतवात्तमार्चत् ॥

अवधीरितापराधे स्वापराधानहींकारिणि । निवन्धने हेतुः । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । हीरकप्रत्युप्तपद्मरागाभरणदानेन नायिकान्तरदन्तव्रणविशिष्टाधरत्वं नायकस्योक्तम् ॥

इति हृद्यजातिः ॥

गूढजातिमुदाहरति—

गन्धसमवायिवहतद्विलक्षणस्पर्शशब्दगुणपूज्याः ।
साजात्येऽन्यस्पर्शौ यत्तनवः सोऽवताद्भवतः ॥

गन्धसमवायिवहौ क्रमेण पृथिवीवायू । तयोरनुष्णाशीतस्पर्शतया तद्विलक्षणशीतोष्णस्पर्शवत्त्वेन जलतेजसी उक्ते शब्दगुणमाकाशम् शब्दपूज्यो यजमानः सर्वजीवात्मा मीमांसकानां शब्दस्यैव देवतात्वात् । एकजातीयत्वे सति भिन्नस्पर्शौ इति सूर्याचन्द्रौ तेजस्त्वेन साजात्यात् उष्णशीतस्पर्शवत्त्वाच्च । यद्यपि तेजस्त्वाचन्द्रस्याप्युष्णस्पर्शवत्वं तथापि जलावयवस्पर्शेन तदभिभवाल्लोकदृष्ट्यैवमुक्तम् ॥ तस्मादष्टमूर्तित्वादीश्वरस्य लाभः ॥

स्वजनकजन्याभावोपजनकजननीयपुरनिहन्तृसखः ।
यं तनयं समजनयत्तद्वलितनयैर्जगद्विजितम् ॥

स्वस्य जनकं निमित्तं तत्प्रतियोगिको जन्याभावो ध्वंसः । तस्योपजनको वह्निः आश्रयाशत्वात् तन्निमित्तेन्धनदाहहेतुत्वं तस्य जननीयं हिरण्यं तस्य पुरं हिरण्यपुरं निवातकवचसंज्ञानां दैत्यानामावासः तस्य निहन्तार्जुनः तत्सखः कृष्णः स कामं पुत्रमजनयत् । तस्य चलितनयैर्बाणैरित्यर्थः । अत्र कामरूपोऽर्थो गूढः ॥

गोधुक्सख्यङ्डुक्षद्रुद्वन्द्वध्रुग्घतिच्छिदघ्न्यानाम् ।
योऽजर्धद्विड्ढक्त्वं पप्वप्किध्वे न तं कस्मात् ॥

गोदुहः सख्यश्वः सखायो यस्य, उक्षा अरिष्टवृषभः द्रुद्वन्द्वं यमलार्जुनसंज्ञं तं द्रुह्यतीति उक्षद्रुद्वन्द्वध्रुक् । अघ्न्यानां गवां हतिच्छिद् रक्षकः । द्विषः शत्रून्दहति तस्य भावो द्विड्ढक्त्वम् अजर्धत् आचकाङ्क्ष । 'गृधु अभिकाङ्क्षायाम्' यङ्लुकि लङ् प्रथमपुरुषैकवचने रूपम् । तं श्रीकृष्णं कस्माद् न पप्वप्किध्वे न गता नाश्रिता इति यावत् ॥ आपन्नान्प्रत्युक्तिः । 'ष्वष्क गतौ' इत्यस्य लिटि मध्यमपुरुषबहुवचने रूपम् ॥

पातातुराणां बोधैक्यमयो धुर्यासिसूः सताम् ।
दलितैनःसमुदयः पातु वो मधुसूदनः ॥

आतुराणाम् आपद्गतानां पाता बोधो ज्ञानं तदभिन्नः वेदान्तिमते नित्यज्ञानरूपत्वात् सतां सत्त्वेन भासमानानां धुरि अग्रे आसिः प्रासिस्तां सूते इत्यासिसूः व्यावहारिकसत्तावत्प्रपञ्चापेक्षया अधिकसत्तावत्त्वात् ब्रह्मसत्तायाः पारमार्थिकत्वात् । 'प्राणा वै सत्यं तेषामेष एव सत्यः' इति श्रुतेः ॥ अत्र चतुर्थपादघटकवर्णाः पूर्वपादत्रये स्थिता इति बोध्यम् ॥

जन्मादिका दशा यस्मात्तिस्रोऽस्य स्मयवर्जिताः ।
रम्यः शास्ता सदा नः स जयति स्मरशासनः ॥

अस्य प्रपञ्चस्य जन्मस्थितिभङ्गरूपास्तिस्रो दशा यस्माद्भवन्ति । तथा च ब्रह्मस्वरूप इत्यर्थः । 'जन्माद्यस्य यतः' इति वेदान्तसूत्रम् ॥ स्मयोऽहंकारः । अविद्येति यावत् । तद्वर्जितो नित्यशुद्धबुद्धस्वभावत्वात् । आविद्यकजीवस्यैव तद्विकारसंबन्धात् । उपाधेः प्रतितिबिम्बपक्षपातित्वात् इति वेदान्तिनः ॥ रम्य आनन्दमयत्वात् नोऽस्माकं सदा नित्यं शास्ता प्रेरकः । 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः' इत्यादिश्रुतेः ॥ अत्रापि पूर्ववत्पादगूढत्वम् ॥

हरित्प्राचेतसी भाति जपाकुसुमपाटला ।
पाकशासनदिश्येषा दृश्यते तमसां ततिः ॥

वरुणदिशः पाटलत्वेन स्वस्योपपत्तिविषयकानुरागवत्त्वं द्योतितम् ॥ उत्तरार्धे सख्युक्त्या अभिसारार्हं नीलनिचोलादिग्रहणं व्यञ्जितम् ॥

अनिमिषनयना वनिता पन्थानं पश्यति प्रियतमस्य ।
कालयति मिलितमलिकुलमालिजनः केतकव्यजनैः ॥

अवधिदिने प्रियागमनमार्गं पश्यन्त्यां नायिकायां प्रतिबन्धवशात्तदनागमनेऽस्या अत्याहितं स्यादित्याशङ्कया केतकपत्रैरेव तन्मुखसंबन्धिभ्रमरवारणं कृतम् । परिजनस्य तथैवाचरितुमर्हत्वात् । केतकेन तत्करणं तु तत्परागैर्नायिकानेत्रसंवरणे मार्गदर्शनाभावात्प्रियानागमननिश्चयो माभूत् ॥ आगमने तु अस्माभिरेव निवेदयिष्यते इत्याशयः ॥ अर्थगूढम् ॥

ईशानोऽसि पशूनां निहंसि यन्नं पुराणि निर्दहसि ।
भूत्या भृशमवलिप्तो भव तदपि त्वं गुरुर्जगताम् ॥

पशूनां संसारिणाम् 'यथा ह वै बहवः पशवो मनुष्यं भुनक्त्युवेवनैकः पुरुषो देवान्भुनक्ति' इति श्रुतेः । यज्ञ दक्षस्य, पुराणि त्रीणि पुराणि प्रलये त्रिविष्टपं वा, भूतिर्भसितं 'भूतिर्भस्मनि संपदि' इत्यमरः ॥ निन्दाप्रतीतिः स्पष्टा ॥ व्याजस्तुतिरलंकारोऽयम् ॥

करविन्यासाद्विजितद्विजेन्द्रमानो गृहीतसकलश्रीः ।
धात्रीलाघवहेतुर्दाशार्होऽवतु जगन्नाथः ॥

गरुडेन विष्णुसमुद्वहनादभिमाने कृते स्वकरन्यासेन भगवता तदहंकारभङ्गः कृत इति उद्योगपर्वणि मातलिकन्यावरान्वेषणे स्पष्टम् ॥ गृहीता सकलस्य सकला वा श्रीर्येन । 'पुंनाम्नि भगवान्विष्णुः स्त्रीनाम्नि कमलालया' इति विष्णुपुराणात् । 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्' इति भगवदुक्तेश्च ॥ धात्री भूमि-

स्तल्लाघवहेतुः तद्वारावतारकत्वात् ॥ पक्षे—म्राह्मणात्करग्रहणं सकलश्रीहारकत्वं मादृग्ला-घवकरत्वं च निन्द्यते हेतव इत्यर्थः ॥

इति स्तुतिनिन्दाजातिः ॥

मानभारमवलम्ब्य पुरा या ग्रन्थिभिर्निबिडिता किल तस्थौ।
प्रेयसीक्षणपथं गतमात्रे सोल्लसत्सखि नीविरहं च ॥

ग्रन्थयो नीविविन्यासविशेषाः ॥ पक्षे—मानजन्या मनोवृत्तिविशेषाः ॥ तस्थाविति लिटि प्रथमोत्तमपुरुषयोरेकवचने तुल्यं रूपम् ॥ एवम् 'उल्लास' इत्यत्रापि बोध्यम् ॥ उल्लासः शैथिल्यम्, पक्षे—प्रसादः ॥

गरयति वलयादीनिन्द्रियार्थांश्च सर्वा-
न्दवयति हिमरश्मिं जीविताशां च सद्यः।
नयनमपि मुहूर्तं वर्षयत्यञ्जसा यं
दयिततमवियोगः स्मेरपङ्केरुहाक्ष्याः ॥

गुरुनिवाचरति गरयति दुर्वहत्वात्। पक्षे—गरवत्करोति विषयान्तरोपभुक्तावप्रवृत्तेः॥ दवयति वनाग्निवत्करोति। पक्षे—दूरी करोति। 'णाविष्ठवत्प्रातिपदिकस्य' इत्यतिदेशाद्गुरु-दूरशब्दयोरुक्तं रूपम् ॥ नेत्रं वर्षयति अश्रुपातात्। मुहूर्तं वर्षवत्करोति दुरतिवाह्यत्वात्॥

इति अर्थजातिः ॥

आकुलयति कुचमुकुलं चुम्बति बिम्बाधरं दृशौ स्पृशति।
दयिततमः किमधिगतो नहि सहचरि विभ्रमन्भ्रमरः ॥

कुचाकुलीकरणादीनां नायकधर्मत्वं स्पष्टम्। कमलकोषादिभ्रमान्मधुकरजन्यत्वम् ॥

परमार्थभावरम्यदृगशेषदृश्येष्वनादरं वहति।
किं मिलिता नवयुवतिर्नहि रीतिस्त्वौपनिषदानाम् ॥

परमार्थो नारोपितो नायकनिष्ठो भावोऽनुरागः तेन रम्या दृगस्याः। एतेन कान्तादृष्टि-रुक्ता ॥ दृश्येषु चन्द्रादिष्वनादरः तदधिकगुणवत्त्वात् ॥ औपनिषदा वेदान्तिनः। परमार्थ-भावः पारमार्थिकी सत्ता तेन रम्या दृक् ब्रह्म यत्र। दृश्या घटादयः पदार्थास्तत्रानादरः स्वातन्त्र्येण सत्ता विरहः। व्यावहारिकसत्ताभ्युपगमात्। अधिष्ठानभूतचित्सत्तयैवान्यत्र सत्ताप्रतीतिरित्यर्थः ॥

इत्यपह्नुतिजातिः ॥

बिन्दुमतीं लक्षयति—

बिन्दूनेव हलां स्थाने स्वरान्मक्तिविवल्लिखेत्।
तद्बिन्दुमदिति प्राहुरन्ये बिन्दुमतीति च ॥ ३ ॥

विन्दुमत्या ज्ञानोपायदर्शनमात्रार्थमुपन्यासः । सर्वश्लोकसाधारण्येनाविशेषात् ॥

[illegible] ।

[illegible] ॥

सौभाग्यभवनभूमिर्विशुद्धबोधैकशेवधिर्जयति ।

तुहिनमहीधरदुहिता जनयित्री जन्यमात्रस्य ॥

इति विन्दुमतीजातिः ॥

गुप्तजाति लक्षयति—

**क्रियाकारकसंबन्धसमासवचनादिकम् ।**

**न भासाकाङ्क्षितमपि यत्र तद्गुप्तमुच्यते ॥ ४ ॥**

उदाहरति—

कपोलतलमुज्ज्वलं त्वदलका यदानीलय-

न्मृगाङ्कमुखि मेचका नवनवं तदानीं पुनः ।

तव श्रवणभूषणप्रणयशालिनीलोपलो-

च्छलत्किरणमञ्जरीशवलिताननश्रीरिति ॥

मेचकाः श्यामला अलका इति प्रतीतिः । मे मम कर्णभूषणनीलकिरणाङ्कमुखश्रीरिति अचका अभासयाः इति तात्पर्यम् ॥ चकास्तेर्लङि मध्यमपुरुषैकवचने रूपम् ॥ 'मृगाङ्कमुखि' इत्यस्यामन्त्रितत्वादविद्यमानवद्भावेऽपि अनीलयन्निरस्मात्परत्वमाश्रित्य 'मे' इत्यादेशः॥

चेलाञ्चलेन वक्षोजौ तिरोधानगतावपि ।

वत मन्दितमन्दाक्षं सुभ्रु विभ्रमवैभवम् ॥

न तिरोऽधा नाच्छादितवत्यसि । गतौ गमनसमये । विभ्रमस्य वैभवमुद्रेकः । 'चित्त-स्यानवस्थान शृङ्गाराद्विभ्रमो मतः' इति भरतः ॥

इति क्रियागुप्तम् ॥

वाले मकरकेतोस्त्वां महेपुरतिरूपिणीम् ।

पश्यतस्तस्य हृदयमदयं सादयत्यलम् ॥

'महेषुधिः अनन्तरूपवती त्वाम्' इति च्छेदः ॥ सादयति पीडयति ॥ 'महेषुरतिरूपिणीम्' इति प्रतीतेर्गुप्तत्वम् ॥

उपैति सुरभिः सेरसहकारादिशोभिनः ।

प्रेयोविरहदूनानामनूनां तन्वते रुजम् ॥

सहकारादिभिः शोभित इति प्रतीतिः ॥ स्मेराः सहकारा यासु तादृश्यो दिशः अभितः समन्तादिति तात्पर्यम् ॥

इति कर्तृगुप्तम् ॥

वनितासूनसमये सुभग त्वद्विनाकृता ।
जहाति हन्यमानेयमनन्यजशिलीमुखैः ॥

सूनसमये वसन्ते इति प्रतीतिः । 'वसन्तः पुष्पसमयः' इत्यमरः ॥ असमये असून् प्राणान् जहातीति तात्पर्यम् । 'कुसुमेषुरनन्यजः' इत्यमरः । अनेन दशमदशाया जातता- यस्त्व वर्णितम् ॥

तारकाकुन्दमुकुलकदम्बककराम्बिताम् ।
भासाजिततमालाभां तमांसि विदधुस्तमाम् ॥

विदधुस्तमाम् अत्यन्त विदधुरिति प्रतीतिः । तमां रात्रिम् इति तात्पर्यम् ॥

इति कर्मगुप्तम् ॥

विजृम्भतेऽसौ सुरभौ कोकिलस्याशुचारुता ।
मन्त्रेणाथर्वणेनेव प्रतापः पुष्पधन्वनः ॥

आशु शीघ्रं कोकिलस्य चारुतेति प्रतीतिः । अशुचा शोकरहितया उल्लासयुक्तयेति यावत् । रुता शब्देनेति तात्पर्यम् 'रु शब्दे' इत्यस्माद्भावे क्विप् ॥

यां गीतिं तव वदनात्सुतनु पिबामः सुधामधुराम् ।
मघवापि न तां त्रिदिवे लभते हाहापि वशगेन ॥

'हाहा' इत्यव्ययमिति प्रतीतिः । गन्धर्वविशेषेणेति तात्पर्यम् । हाहाशब्दस्य तृतीयैकवचने तथैव रूपात् ॥

इति करणगुप्तम् ॥

मह्यापि वारवनिता मदनोदन्वत्यनन्तरायेऽसौ ।
लावण्यशालिनमपि स्वात्मानमशङ्कमर्पयति ॥

'अन्तरायेण रहिते अनन्तराये' इति सप्तम्यन्तं 'मदनोदन्वति' इत्यस्य विशेषणमिति प्रतीतिः । अनन्तो भूयान् रा द्रव्यं यस्य सोऽनन्तराः तस्मै अनन्तराये महद्रव्याय पुरुषाय स्वात्मानं ददातीति तात्पर्यम् ॥

बाले निदाघमध्याह्ने ब्रध्नदीधितिदग्धया ।
स्पृहा गजतया तेने महासरसयातपे ॥

'महासरसया' इति तृतीयान्तमिति प्रतीतिः । महासरसे तडागाय स्पृहा तेने इति तात्पर्यम् । 'स्पृहेरीप्सितः' इति सम्प्रदानसंज्ञा ॥ 'लोपः शाकल्यस्य' इति पक्षे यकारलोपाभावः ॥

इति सम्प्रदानगुप्तम् ॥

दयिते मदनायासवशंवदपदस्पृशः ।
वद वारयसि प्रेम्णा किमिति स्तिमितादृशम् ॥

मदनायासः कामश्रम इति प्रतीतिः । 'अनायासेन अप्रयत्नेन त्वद्वशीभूतात् मत्' इति तात्पर्यम् । 'मत्' इति पञ्चम्येकवचने रूपम् । 'वारणार्थानामीप्सितः' इत्यपादानत्वम् ॥

प्ररूढप्रौढतारुण्या या मन्मथमदालसाः ।
कथं नुरुचितं तासां भवेत्सातिशयं प्रियम् ॥

'नु' इति निपातः, 'रुचितम्' इति प्रतीतिः । 'नुः' इति नृशब्दस्य पञ्चम्येकवचने रूपम् । नुर्मनुष्यात्सातिशयं प्रियं किं स्यादिति तात्पर्यम् ॥

इत्यपादानगुप्तम् ॥

भवति प्रोषितवति प्रियेऽस्या वल्लवद्भुजः ।
असावपि गता प्रीतिः का वार्ता विषयान्तरे ॥

प्रिये इष्टे भवति त्वयि प्रोषितवतीत्यन्वयः । 'असौ' इति अदस्शब्दस्य प्रथमान्तं प्रीतिविशेषणमिति प्रतीतिः । 'असौ प्राणेऽपि प्रीतिर्गता' इति तात्पर्यम् ॥

तिरस्कुर्वाणया गर्वं रूपरूप्यं रतेरपि ।
न्यस्तं प्रणयसर्वस्वं प्रिययायतनेत्रया ॥

रूपादागतं रूपरूप्यम् । हेतौ रूप्यः । रूपजन्यमित्यर्थः । प्रियया इति तृतीयान्तमिति प्रतीतिः । 'प्रिये दयिते न्यस्तम्' इति तात्पर्यम् । 'लोपः शाकल्यस्य' इति यलोपाभावपक्षे रूपम् ॥

इत्यधिकरणगुप्तम् ॥

प्रेयान्दवीयान्रुचिरो रतीशः शिलीमुखा दुर्विषहा नितान्तम् ।
पिकाश्च कूजन्ति निकाममेते तथैव जीवस्त्वदपीति चित्रम् ॥

'रतीशः' इति प्रथमान्ततया प्रतीतिः । रतीश्शब्दस्य षष्ठ्येकवचने रतिपतेः शिलीमुखाः दुःसहाः इति तात्पर्यम् ॥

पश्य नव्याप्टतः कान्त स्मार्या रेणुततिर्यया ।
मलयानिलधूताम्रजोराजिरुदीयते ॥

व्यापृतो विषयान्तरासक्तः स्मार्याः स्मरणीयाः इति प्रतीतिः । स्मार्याः स्मरसंबन्धिन्याः पृतः पृतनायाः सेनाया इति तात्पर्यम् । 'मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः' इति पृतनाशब्दस्य पृदादेशः ॥

इति संबन्धगुप्तम् ॥

त्वय्यसाधारणस्नेहो देवरेणदृशो मम ।
त्वं तु जायाभयप्राया नायासं तनुषे मृषा ॥

'देवरेण' इति तृतीयान्तमिति प्रतीतिः । देवृशब्दस्य संबोधने 'ह्रस्वस्य गुणः' इति गुणे कृते 'देवर्' इति तात्पर्यम् । 'स्वामिनो देवृदेवरौ' इत्यमरः ॥ 'एणदृशो मम' इति भेदान्वयः ॥

त्वां प्रेक्ष्य नरसामान्यं वहति प्रणयं वधूः ।
तव साधारणी तत्र वृत्तिरित्यतिकौतुकम् ॥

नरसामान्यं पुरुषान्तरसाधारणमिति प्रतीतिः । 'नर्' इति मनुष्यसंबुद्धौ असाधारणप्रणयमिति तात्पर्यम् । नृशब्दस्य संबुद्धौ 'नर्' इति रूपम् ॥

इत्यामन्त्रितगुप्तम् ॥

अयं वहति हे तन्वि सुरभिर्मलयो मरुत् ।
रोलम्बानां कदम्बेन यो भाति तमसावृतः ॥

'तमसा' इति पृथक्पदम् इति प्रतीतिः ॥ 'ओजःसहोम्भस्तमसस्तृतीयायाः' इति समासेऽप्यलुक् । 'तमसावृतः' इति समासे तात्पर्यम् ॥

धनायावैभवं प्राप्य सखे किं बहु खिद्यसे ।
मौक्तिकानि गृहे पद्मरागाभ्यामावृतानि ते ॥

'अवैभवमसामर्थ्यं प्राप्य धनाय धनार्थम्' इति प्रतीतिः ॥ धनाया धनेच्छा तस्या वैभवमिति तात्पर्यम् । 'अशनायोदन्यधनाया–' इति क्यजन्तादकारः प्रत्ययः ।

इति समासगुप्तम् ॥

स्मरतापच्छिदमिदंबिम्बाधरसुधारसम् ।
समिद्धं दधतो धर्मं धयन्त्यभ्यधिके बुधाः ॥

'इदम्' इति पृथक् क्लीबमिति प्रतीतिः ॥ अस्या बिम्बाधर इदंबिम्बाधर इति तात्पर्यम् ॥

कमनीयं मधुसमयो मधुरतमः प्रियतमो दूरे ।
मदयति हृदयं मदनः को वेद विजृम्भितानि विधेः ॥

'कमनीयं रमणीयमिति क्लीबे रूपमिति प्रतीतिः ॥ 'इयं कमनी कामुका' इति तात्पर्यम् । 'कमनः कामुकोऽभिकः' इत्यमरः ॥

इति लिङ्गगुप्तम् ॥

विभ्रमसंभवभूमिः स्पृहणीया गुणगणैरगणनीयैः ।
मानिन्यस्तुंकारं धिनोति मदनोत्सवे दधती ॥

'मानिन्यः कामिन्य इति बहुवचनान्तमिति प्रतीतिः । 'मानिनी' इत्येकवचने तात्पर्यम् मदनोत्सवे अस्तुंकारम् अनुमतिं दधतीत्यन्वयः । 'अस्तुंकारोऽभ्युपगमः' इत्यमरः ॥

इति सुब्वचनगुप्तम् ॥

जनानां संचारत्यजि पथि निशीथेऽथ नभस-
स्तमिस्रव्यामिश्रे नदति मुदिरे मेदुरतमे ।
प्रियं स्वप्राणानामभिसिसरिषिर्षां नैव विभयां-
बभूवुस्ताः सख्योऽप्यहह सहजाहर्यति यतः ॥

'हर्यति' इत्येकवचनान्तमिति प्रतीतिः । सह नायिकया सार्धं जाहर्यति (कुटिलं) गच्छति इति 'हर्य गतौ' इत्यस्य यङ्लुकि बहुवचने रूपम् ॥

इति तिङ्वचनगुप्तम् ॥

च्युतजातिं लक्षयति—

यत्र त्यागेन मात्रादेरन्योऽप्यर्थः प्रतीयते ।
तत्तत्संज्ञमनासन्नं स्थानच्युतकमुच्यते ॥ ९ ॥

मात्रादीत्यादिपदं बिन्दुविसर्गवर्णव्यञ्जनपरम् । अनासन्नम् आसत्तिरहितम् । यथा— 'गिरिर्भुक्तममिमान्देवदत्तेन' इत्यादि ॥

उदाहरति—

मुक्तात्मकमतिस्वच्छं तारनायकभूषितम् ।
हारं धन्याः प्रपश्यन्ति कान्ताहृदयसंगतम् ॥

मुक्तात्मकं मौक्तिकघटितत्वात् तारेण शुद्धेन नायकेन मध्यमणिना । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति विश्वः ॥ 'हारम्' इत्यत्र दीर्घत्यागे 'हरम्' इत्यर्थः । हरस्येदं हारमपि मुक्तात्मकं परमात्मस्वरूपत्वात् । तारनायकेन चन्द्रेण भूषितम् ॥

बिभ्रते सुरभितां सुकुमारस्पर्शमाकलयते मधुराय ।
स्पार्शनेन हरते परितापं सारसाय बहवः स्पृहयन्ति ॥

'सारसाय' इत्यत्र दीर्घत्यागे 'सरसाय' सहृदयायेत्यर्थः ॥

इति मात्राच्युतकम् ॥

विशिष्टद्रव्यघटितं दोषान्तगमनोचितम् ।
सेव्यमानं महारुग्भिरङ्गदं तन्वि रोचते ॥

विशिष्टेन द्रव्येण रत्नादिरूपेण ॥ दोषा बाहुः । 'दोर्दोषा च भुजो बाहुः' इत्यभिधानात् ॥ महारुग्भिर्महाकान्तिभिरिति कर्मधारयः ॥ अङ्गदपदे बिन्दुत्यागे अगदमौषधमि-

---

१. 'अभिसिसिरियन्तीं' इति पुस्तकान्तरपाठः.

त्यर्थः। तत्र द्रव्यं पारदादि। दोषा वातादयः। महारुग्भिरिति बहुव्रीहिः। महारोगयु-क्तैरित्यर्थः॥

रजनीरमणस्तदङ्गजान्तरवृत्त्या गणनीयतां गतः।
सखि कुञ्ज इव स्वसंगमाद्बुधमप्यन्यथयन्विभाव्यते॥

रजनीरमणो जारः तद्विषयकोऽङ्गजः कामः तयोरन्तरवृत्त्या तदनुरोधेन गणनीयतामा-दरणीयत्वं प्राप्तः स्वसंयोगेन बुधमप्यन्यथाकुर्वन् उद्दीपकत्वात्॥ कुञ्जपदे बिन्दुत्यागे कुजो भौम इत्यर्थः। रजनीरमणश्चन्द्र एतस्याङ्गजः पुत्रो बुधः तयोरन्तरे गम्यः। सोम-भौमबुधेत्यादिक्रमेण ग्रहाणां गणनीयत्वात्। स्वसंयोगाद्बुधमप्यन्यथाकुर्वन्। बुधस्य भौम-योगे पापग्रहत्वोक्तेः। 'क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः' इति ज्योतिषोक्तेः॥

इति बिन्दुच्युतकम्॥

पयोदसमये जाते प्रचलाः कीरराजयः।
पश्याधुना विदधते स्वपक्षैर्हरिता दिशः॥

वर्षासमयापगमे प्रचला उल्लासविशेषयुक्ताः कीरराजयः शुकपङ्क्तयः स्वपक्षैर्दिशो हरि-द्वर्णा विदधते कुर्वन्ति॥ प्रचला इत्यत्र विसर्गलोपे प्रचलाकी मयूर इत्यर्थः। 'प्रचलाकी मयूरः स्यात्कलापी बर्हिणः शिखी' इति हलायुधः॥ अजातेऽनपगते इति च्छेदः॥ यो मयूरो वर्षासु राज स इदानीं शरदि स्वपक्षैर्गलितैरिति ज्ञेयम्। 'विदधते' इति 'दध धा-रणे' इति भ्वादिकस्य रूपम्। तुल्यमन्यत्॥

कलाः पित्रनिशाभर्तुरिव कान्ते विधुंतुदः।
विभाति केशपाशस्ते कुन्दकुड्मलगुम्फितः॥

राहुकेशपाशयोरुपमानोपमेयभावः। कलानां कुन्दमुकुलानां च बिम्बप्रतिबिम्बभावः॥ 'कलाः' इत्यत्र विसर्गत्यागे कलाश्चिन्मयस्येत्यर्थः। 'तत्र तस्येव' इति वतिप्रत्ययः। निशाभर्तुश्चन्द्रस्य समीपवर्ती राहुरिवेत्युपमान्तरम्। अन्यत्र सहोदरत्वादिविशेषणो-पादानम्॥

इति विसर्गच्युतकम्॥

प्रतिपक्षरतानेकविधरागप्रियेक्षणा।
वियोगिनीमनोबाधामादधाति शिखण्डिता॥

सर्वपक्षव्याप्तिविविधवर्णैः प्रियं दर्शनं यस्या एतादृशी शिखण्डिता मयूरत्वं विरहिणीनां मनोबाधां करोति। मयूरप्रत्यक्षमाक्षेपलभ्यम्॥ 'शि' इत्यक्षरत्यागे 'खण्डिता' नायिकावि-शेषः वियोगिनीति तद्विशेषणम्। प्रतिपक्षस्य सपत्न्या रतेन संभोगेन बहुविधा रागाः कु-ङ्कुमादिवर्णा यत्र तादृशे प्रिये ईक्षणं यस्याः। 'अन्यनायिकासंभोगचिह्नाङ्कितप्रियसङ्गा खण्डिता' इत्यर्थः॥

यौवनाभ्युदयोद्भूतगुणातिशयशालिना ।
प्रियेऽवयवभेदेन जितस्तव चकोरकः ॥

अवयवभेदो नेत्रम् । अतिशयो विस्तारचाञ्चल्यादिः ॥ चकारत्यागेन कोरकः कुड्मलः अवयवभेदः स्तनः । अतिशयः पीनोच्चत्वरूपः ॥

इति वर्णच्युतकम् ॥

द्रव्यं पञ्चविधं जातिं चतुर्विंशतिधा विदुः ।
गुणं द्विधा च नवधा कर्म काणादपुंगवाः ॥

'द्रव्यं पञ्चविधम्' इत्यादिरयोग्योऽर्थः ॥ 'द्रव्यं नवधा, गुणं चतुर्विंशतिधा, कर्म पञ्चधा, जातिं द्विधा' इति विवक्षितोऽन्वयः ॥

स्नेहो विहायसो गन्धो जलस्य धरणेः सुखम् ।
शब्दो जीवस्य विबुधैर्विशेषगुण उच्यते ॥

स्नेहो जलस्य, शब्दो विहायसः, गन्धो धरणेः, सुखं जीवस्य, विशेषगुण इत्यन्वये तात्पर्यम् ॥

इति स्थानच्युतकम् ॥

अङ्गभूसहजोदारमेघनादविभीषणः ।
वेलायामकलङ्कायां श्रावणोऽयं विजृम्भते ॥

अकलङ्कायां दोषहीनायां वेलायां श्रावणो मासः अङ्गभूः कामः तस्य सहजः सहोदरस्तद्व्यभिचारहीन इति यावत् ॥ उदारो महान् यो मेघानां नादस्तेन विभीषणो भयंकरः वियोगिजनदुःसहत्वात् ॥ श्रावणपदे शकारत्यागे रावण इत्यर्थः ॥ वेलायां समुद्रतीरे आयामो विस्तारो यस्यास्तादृश्यां लङ्कायामित्यन्वयः ॥ अङ्गभूः पुत्रः सहजो भ्राता तद्रूपौ उदारौ श्लाघ्यौ मेघनादविभीषणौ यस्य । मेघनादपिता विभीषणभ्राता चेत्यर्थः ॥

हृदयाभीष्टहृदयवीतिहोत्रविहारिणी ।
श्वसनं सहते नेयं चन्दनामोदमेदुरम् ॥

श्वसनपदे शकारत्यागे वसन इत्यर्थः ॥ मलयानिलस्य मदनोद्दीपकत्वात्तद्वसस्य कार्श्याच्च दुःसहत्वादित्यर्थः ॥

इति व्यञ्जनच्युतकम् ॥

च्युतदत्ताक्षरजातिं लक्षयति—

समुद्धृताक्षरं किंचित्तस्थानेऽन्यतदर्पणात् ।
यत्रार्थान्तरमाभाति च्युतदत्ताक्षरं तु तत् ॥ ६ ॥

पूर्वत्र त्यागमात्रमिह तु त्यागो वर्णान्तरदानं चेति विशेषः ॥

## प्रबोधसुधाकरः ।

नित्यानन्दैकरसं सच्चिन्मात्रं स्वयं ज्योतिः ।
पुरुषोत्तममजमीशं वन्दे श्रीयादवाधीशम् ॥ १ ॥
यं वर्णयितुं साक्षाच्छ्रुतिरपि मूकेव मौनमावहति ।
सोऽस्माकं मनुजानां किं वाचां गोचरो भवति ॥ २ ॥
यद्यप्येवं विदितं तथापि परिभाषितो भवेदेव ।
अध्यात्मशास्त्रसाराद्धरिचिन्तनकीर्तनाभ्यासात् ॥ ३ ॥
क्लृप्तैर्बहुभिरुपायैरभ्यासज्ञानभक्त्याद्यैः ।
पुंसो विना विरागं मुक्तेरधिकारिता न स्यात् ॥ ४ ॥
वैराग्यमात्मबोधो भक्तिश्चेति त्रयं गदितम् ।
मुक्तेः साधनमादौ तत्र विरागो वितृष्णता प्रोक्ता ॥ ५ ॥
सा चाहंममताभ्यां प्रच्छन्ना सर्वदेहेषु ।
तत्राहन्ता देहे ममता भार्यादिविषयेषु ॥ ६ ॥
देहः किमात्मकोऽयं कः संबन्धोऽस्य वा विषयैः ।
एवं विचार्यमाणेऽहन्ता ममता निवर्तेत ॥ ७ ॥
स्त्रीपुंसोः संयोगात्संपाते शुक्रशोणितयोः ।
प्रविशञ्जीवः शनकैः स्वकर्मणा गर्भमालभते ॥ ८ ॥
मातृगुरूदरदर्यां कफमूत्रपुरीषपूर्णायाम् ।
जठराग्निज्वालाभिर्नवमासं पच्यते जन्तुः ॥ ९ ॥
दैवात्प्रसूतिसमये शिशुस्तिरश्चीनतां यदा याति ।
शस्त्रैर्विखण्ड्य स तदा बहिरिह निष्कास्यतेऽतिबलात् ॥१०॥
अथवा यन्त्रच्छिद्राद्यदा तु निःसार्यते प्रबलैः ।
प्रसवसमीरैश्च तदा यः क्लेशः सोऽप्यनिर्वाच्यः ॥ ११ ॥

---

१. ग्रन्थकर्तुर्नाम नोपलब्धम्, अत एवास्य देशकालावप्यनिश्चितावेव. एकमेवास्य पुस्तकं काश्मीरमहाराजाश्रितज्योतिर्विद्वरश्रीदयारामपण्डितप्रवरैः प्रहितमस्ति, तदाधारेणैवैतन्मुद्रणमकारीति भद्रम्.

उदाहरति—

सदाधनंजयालीकयुतो जगति गोगतिः ।
विदितासमबाणारिः पुरारिरवतात्तराम् ॥

सदा नित्य धनजयो वह्निर्यत्र तादृशेन अलीकेन युतः गोगतिः वृषवाहनत्वात् ॥ विदितः ख्यातोऽसमबाणः कामस्तस्य वैरीति शिवपक्षेऽर्थः ॥ पुरारिपदे पकारत्यागे तत्स्थाने मकारदाने च मुरारिर्विष्णुरित्यर्थः ॥ धनंजयोऽर्जुनस्तस्यालीकं विषमं तस्मायुतः पृथग्भूतस्तत्सखत्वात् 'यु मिश्रणामिश्रणयोः' इत्युक्तेः । गोगतिर्भूभारापहारकत्वात् । ख्यातोऽसमो निरुपमो बाणो दैत्यविशेषस्तस्यारिरित्यर्थः ॥

शंबरारातिविजयी वाहिनीदयितालिकः ।
वामदेवो विजयते सतारापतिलक्ष्मणः ॥

शंबरारातिः कामः तस्य विजेता । वाहिनी नदी तद्दयितम् अलिकं ललाटं यस्य गङ्गालङ्कृतमस्तकत्वात् । तारापतिरूपेण लक्ष्मणेन चिह्नेन सहितः । इन्दुमौलित्वात् ॥ वामदेवपदे आद्यवकारत्यागे तत्स्थाने रेफदाने च रामदेवः श्रीराम इत्यर्थः ॥ शं वं वज्रं राति वैरिभ्यो ददाति शंवर इन्द्रस्तस्यारातिः अर्थाद्रावणस्तस्य विजयी । वाहिनीदयिते समुद्रे आलिः सेतुर्यस्य । तारापतिः सुग्रीवः, लक्ष्मणः सौमित्रिस्ताभ्यां सहितः ॥ तत्रैव ककारदाने कामदेव इत्यर्थः ॥ शंबररूपस्यारातेर्विजयी तद्वधकर्तृत्वात् । वाहिनीसेनारूपा दयिताना स्त्रीणामालिर्यस्य तत्सहायेन जगद्विजेतृत्वात् । चन्द्ररूपेण लक्ष्मणेन चिह्नेन सहितः तस्य कामोद्दीपकत्वात् ॥

इति च्युतदत्ताक्षरजातिः ॥

श्रीमन्महीमहिततत्तदसीमधीम-
न्मूर्धन्यताकलितसंगतधन्यताकः ।
लक्ष्मीधरो यमुदसूत मुदं प्रसूतां
विश्वेश्वरस्य कृतिरस्य चिरस्य लोके ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणविद्वद्धुरंधरश्रीविश्वेश्वरकृतौ कवीन्द्रकर्णाभरणे स्वोपज्ञव्याख्यासहिते चतुर्थः परिच्छेदः समाप्तः ॥

समाप्तोऽयं ग्रन्थः ।

---

१. 'ललन' इति पुस्तकान्तरपाठः.

## प्रबोधसुधाकरः[1] ।

नित्यानन्दैकरसं सच्चिन्मात्रं स्वयं ज्योतिः ।
पुरुषोत्तममजमीशं वन्दे श्रीयादवाधीशम् ॥ १ ॥
यं वर्णयितुं साक्षाच्छ्रुतिरपि मूकेव मौनमावहति ।
सोऽस्माकं मनुजानां किं वाचां गोचरो भवति ॥ २ ॥
यद्यप्येवं विदितं तथापि परिभाषितो भवेदेव ।
अध्यात्मशास्त्रसाराद्धरिचिन्तनकीर्तनाभ्यासात् ॥ ३ ॥
क्लृप्तैर्बहुभिरुपायैरभ्यासज्ञानभक्त्याद्यैः ।
पुंसो विना विरागं मुक्तेरधिकारिता न स्यात् ॥ ४ ॥
वैराग्यमात्मबोधो भक्तिश्चेति त्रयं गदितम् ।
मुक्तेः साधनमादौ तत्र विरागो वितृष्णता प्रोक्ता ॥ ५ ॥
सा चाहंममताभ्यां प्रच्छन्ना सर्वदेहेषु ।
तत्राहन्ता देहे ममता भार्यादिविषयेषु ॥ ६ ॥
देहः किमात्मकोऽयं कः संबन्धोऽस्य वा विषयैः ।
एवं विचार्यमाणेऽहन्ता ममता निवर्तेत ॥ ७ ॥
स्त्रीपुंसोः संयोगात्संपाते शुक्रशोणितयोः ।
प्रविशञ्जीवः शनैः स्वकर्मणा गर्भमालभते ॥ ८ ॥
मातृगुरूदरदर्यां कफमूत्रपुरीषपूर्णायाम् ।
जठराग्निज्वालाभिर्नवमासं पच्यते जन्तुः ॥ ९ ॥
दैवात्प्रसूतिसमये शिशुस्तिरश्चीनतां यदा याति ।
शस्त्रैर्विखण्ड्य स तदा बहिरिह निष्कास्यतेऽतिबलात् ॥ १० ॥
अथवा यन्त्रच्छिद्राद्यदा तु निःसार्यते प्रबलैः ।
प्रसवसमीरैश्च तदा यः क्लेशः सोऽप्यनिर्वाच्यः ॥ ११ ॥

---

१. ग्रन्थकर्तुर्नाम नोपलब्धम्, अत एवास्य देशकालावप्यनिश्चितावेव. एकमेवास्य पुस्तकं काश्मीरमहाराजाश्रितज्योतिर्विद्वरश्रीदयारामपण्डितप्रवरैः प्रहितमास्ति, तदाधारेणैवैतन्मुद्रणमकारीति भद्रम्.

आधिव्याधिवियोगात्मीयविपत्कलहदीर्घदारिद्यैः।
जन्मानन्तरमपि यः क्लेशः किं शक्यते वक्तुम् ॥ १२ ॥
नरपशुविहंगतिर्यग्योनीनां चतुरशीतिलक्षाणाम्।
कर्मनिबद्धो जीवः परिभ्रमन्यातना भुङ्क्ते ॥ १३ ॥
चरमस्तत्र नृदेहस्तत्राजन्मान्वयोत्पत्तिः।
स्वकुलाचारविचारः श्रुतिप्रचारश्च तत्रापि ॥ १४ ॥
आत्मानात्मविवेको देहस्य विनाशिताज्ञानम्।
एवं सति स्वमायुः प्राज्ञैरपि नीयते मिथ्या ॥ १५ ॥
आयुःक्षणलवमात्रं न लभ्यते हेमकोटिभिः क्वापि।
तच्चेद्गच्छति सर्वं मृषा ततः काधिका हानिः ॥ १६ ॥
नरदेहातिक्रमणात्प्राप्तौ पश्वादिदेहानाम्।
स्वतनोरप्यज्ञाने परमार्थस्यात्र का वार्ता ॥ १७ ॥
सततं प्रवाह्यमानैर्वृषभैरश्वैः खरैर्गजैर्महिषैः।
हा कष्टं क्षुत्क्षामैर्भ्रान्तैर्नो शक्यते वक्तुम् ॥ १८ ॥
रुधिरत्रिधातुमज्जामेदोमांसास्थिसंहतिर्देहः।
स बहिस्त्वचा पिनद्धस्तस्मान्नो भक्ष्यते काकैः ॥ १९ ॥
नासाग्राद्वदनाद्वा कफं मलं पायुतो विसृजन्।
स्वयमेवैति जुगुप्सामन्तः प्रसृतं च नो वेत्ति ॥ २० ॥
पथि पतितमस्थि दृष्ट्वा स्पर्शभयादन्यमार्गतो याति।
नो पश्यति निजदेहं चास्थिसहस्रावृतं परितः ॥ २१ ॥
केशावधि नखराग्रादिदमन्तः पूतिगन्धसंपूर्णम्।
बहिरपि जानंश्चन्दनकर्पूराद्यैर्विलेपयति ॥ २२ ॥
यत्नादस्य पिधत्ते स्वाभाविकदोषसंघातम्।
औपाधिकगुणनिवहं प्रकाशयन्श्लाघते मूढः ॥ २३ ॥
क्षतमुत्पन्नं देहे यदि न प्रक्षाल्यते त्रिदिनम्।
तत्रोत्पतन्ति बहवः क्रिमयो दुर्गन्धिसंकीर्णाः ॥ २४ ॥

यो देहः सुप्तोऽभूत्सपुष्पशय्योपशोभिते तल्पे ।
संप्रति स रज्जुकाष्ठैर्नियन्त्रितः क्षिप्यते वह्नौ ॥ २५ ॥
सिंहासनोपविष्टं यद्दृष्ट्वा मुदमवाप लोकोऽयम् ।
तं कालाकृष्टतनुं विलोक्य नेत्रं निमीलयति ॥ २६ ॥
एवंविधमतिमलिनं देहं यत्सत्तया चलति ।
तं विस्मृत्य परेशं वहन्त्यहन्तामनित्येऽस्मिन् ॥ २७ ॥
कासौ सच्चिद्रूपः क्व मांसरुधिरास्थिनिर्मितो देहः ।
इति यो लज्जति(?) धीमानितरशरीरं स किं मनुते ॥ २८ ॥

इति देहनिन्दाप्रकरणम् ॥ १ ॥

मूढः कुरुते विषयजकर्दमसंमार्जनं मिथ्या ।
दुरदृष्टवृष्टिभिरिदं देहं गेहं पतत्येव ॥ २९ ॥
भार्यारूपविहीना मनसः खेदाय जायते पुंसाम् ।
अत्यन्तं रूपवती सा परपुरुषैर्वशीक्रियते ॥ ३० ॥
यः कश्चित्परपुरुषो मित्रं भृत्योऽथवा भिक्षुः ।
पश्यति हि साभिलाषं विवक्षितोदाररूपवतीम् ॥ ३१ ॥
यं कंचित्पुरुषवरं स्वभर्तुरतिसुन्दरं दृष्ट्वा ।
मृगयति किं न मृगाक्षी मनसैव परस्त्रियं पुरुषः ॥ ३२ ॥
एवं सुरूपनार्या भर्ता कोपात्प्रतिक्षणं क्षीणः ।
नो लभते सुखलेशं बलिमिव बलिभुग्बहुष्वेकः ॥ ३३ ॥
वनिता नितान्तमज्ञा स्वाज्ञामुल्लङ्घ्य वर्तते यदि सा ।
शत्रोरप्यधिकतरा पराभिलाषिण्यसौ किमुत ॥ ३४ ॥
लोको नापुत्रस्यास्तीति श्रुत्वास्य कः प्रभाषितो लोकः ।
मुक्तिः संसरणं वा तदन्यलोकोऽथवा नाद्यः ॥ ३५ ॥
सर्वेऽपि पुत्रभाजस्तन्मुक्तौ संसृतिर्भवति ।

---

१. 'विकीर्णहरिचन्दनद्रविणि यत्र लीलालसा निपेतुरलिचञ्चलाश्चतुरकामिनीदृष्टयः । तदेतदुपरिभ्रमन्निबिडगृध्रजालं जनैर्लुठत्कृमि कलेवरं पिहितनासिकैर्वीक्ष्यते ॥' इति प्राचीनं पद्यमनुहरति.

श्रवणादयोऽप्युपाया मृषा भवेयुस्तृतीयेऽपि ॥ ३६ ॥
तत्राप्युपायसत्त्वाद्द्वितीयपक्षेऽप्यपुत्रस्य।
पुत्रेष्ट्यादिकयागप्रवृत्तये वेदवादोऽयम् ॥ ३७ ॥
नानाशरीरकष्टैर्धनव्ययैः साध्यते पुत्रः।
उत्पन्नमात्रपुत्रे जीवितचिन्ता गरीयसी तस्य ॥ ३८ ॥
जीवन्नपि किं मूर्खः प्राज्ञः किं वा सुशीलभाग्भविता।
जारश्चौरः पिशुनः पतितो द्यूतप्रियः क्रूरः ॥ ३९ ॥
पितृमातृबन्धुघाती मनसः खेदाय जायते पुत्रः।
चिन्तयति तातनिधनं पुत्रो द्रव्याद्यधीशताहेतोः ॥ ४० ॥
सर्वगुणैरुपपन्नः पुत्रः कस्यापि कुत्रचिद्भवति।
सोऽल्पायू रुग्णो वा ह्यनपत्यो वा तथापि खेदाय ॥ ४१ ॥
पुत्रात्सद्गतिरिति चेत्तदपि प्रायोऽस्ति युक्त्यसहम्।
इत्थं शरीरकष्टैर्दुःखं संप्रार्थ्यते मूढैः ॥ ४२ ॥
पितृमातृबन्धुभगिनीपितृव्यजामातृमुख्यानाम्।
मार्गस्थानामिव युतिरनेकयोनिभ्रमात्क्षणिका ॥ ४३ ॥
दैवं यावद्विपुलं यावत्प्रचुरः परोपकारश्च।
तावत्सर्वे सुहृदो व्यत्ययतः शत्रवः सर्वे ॥ ४४ ॥
अश्नन्ति चेदनुदिनं वन्दिन इव वर्णयन्ति संतृप्ताः।
तच्चेद्द्वित्रिदिनान्तरमभिनिन्दन्तः प्रकुप्यन्ति ॥ ४५ ॥
दुर्भरजठरनिमित्तं समुपार्जयितुं प्रवर्तते नित्यम्।
लक्षावधि बहुवित्तं तथाप्यलभ्यं कपर्दिकामात्रम् ॥ ४६ ॥
लब्धश्चेदधिकोऽर्थः पत्न्यादीनां भवेत्स्वार्थः।
नृपचौरतोऽप्यनर्थलल्लाद्द्रव्योद्यमो व्यर्थः ॥ ४७ ॥
अन्यायमर्थभाजां पश्यति भूपोऽध्वगामितां चौरः।
पिशुनो व्यसनप्राप्तिं दायादानां गणः कलहम् ॥ ४८ ॥
पातकभैररनेकैरर्थं समुपार्जयन्ति राजानः।
अधमनरद्रव्यहेतोः प्रतिक्षणं नश्यते सोऽर्थः ॥ ४९ ॥

राजान्तराभिगमनाद्रोगाद्वा मन्त्रिभृत्यदोषाद्वा ।
विषशस्त्रगुप्तघातान्मग्नाश्चिन्तार्णवे भूपाः ॥ ९० ॥

इति विषयनिन्दाप्रकरणम् ॥ २ ॥

हसति कदाचिद्रौति भ्रान्तं सदृश दिशो भ्रमति ।
हृष्टं कदापि रुष्टं शिष्टं दुष्टं च निन्दति स्तौति ॥ ९१ ॥
किमपि द्वेष्टि सरोषं ह्यात्मानं श्लाघते कदाचिदपि ।
चित्तं पिशाचमभवद्राक्षस्या तृष्णया व्याप्तम् ॥ ९२ ॥
दम्भाभिमानलोभैः कामक्रोधोरुमत्सरैश्चेतः ।
आकृष्यते समन्ताच्छ्वभिरिव पतितास्थिवन्मार्गे ॥ ९३ ॥
तस्माच्छुद्धविरागो मनोभिलषितं त्यजेदर्थम् ।
तदनभिलषितं कुर्यान्निर्व्यापारं ततो भवति ॥ ९४ ॥

इति मनोनिन्दाप्रकरणम् ॥ ३ ॥

संसृतिपारावारे ह्यगाधविषयोदकेन संपूर्णे ।
नृशरीरमम्बुतरणं कर्मसमीरैरितस्ततश्चलति ॥ ९५ ॥
छिद्रैर्नवभिरुपेतं जीवो नौकापतिर्महानलसः ।
छिद्राणामनिरोधाज्जलपरिपूर्णं पतत्यधः सततम् ॥ ९६ ॥
छिद्राणां तु निरोधात्सुखेन पारं परं याति ।
तस्मादिन्द्रियनिग्रहमृते न कश्चित्तरत्यनृतम् ॥ ९७ ॥
पश्यति परस्य युवतिं सकाममपि तन्मनोरथं कुरुते ।
ज्ञात्वैव तदप्राप्तिं व्यर्थं मनुजोऽतिपापभाग्भवति ॥ ९८ ॥
पिशुनैः प्रकाममुदितां परस्य निन्दां शृणोति कर्णाभ्याम् ।
तेन परः किं म्रियते व्यर्थं मनुजोऽतिपापभाग्भवति ॥ ९९ ॥
अनृतं परापवादं रसना वदति प्रतिक्षणं तेन ।
परहानिर्लब्धिः का व्यर्थं मनुजोऽतिपापभाग्भवति ॥ ६० ॥
विषयेन्द्रिययोर्योगे निमेषसमयेन यत्सुखं भवति ।
विषये नष्टे दुःखं यावज्जीवं च तत्तयोर्मध्ये ॥ ६१ ॥
हेयमुपादेयं वा प्रविचार्य सुनिश्चितं तस्मात् ।
अल्पसुखस्य त्यागादनल्पदुःखं जहाति सुधीः ॥ ६२ ॥

धीवरदत्तमहामिषमश्नन्वैसारिणो म्रियते।
तद्वद्विषयान्भुञ्जन्कालाकृष्टो नरः पतति ॥ ६३ ॥
उरगग्रस्तार्धतनुर्भेकोऽश्नातीह मक्षिकाः शतशः।
एवं गतायुरपि सन्विषयान्समुपार्जयत्यन्धः ॥ ६४ ॥

इति विषयनिग्रहप्रकरणम् ॥ ४ ॥

स्वीयोद्गमतोयवहा सागरमुपयाति नीचमार्गेण।
सा चेदुद्गम एव स्थिरा सती किं न याति वार्धित्वम् ॥ ६५ ॥
एवं मनः स्वहेतुं विचारयत्सुस्थिरं भवेदन्तः।
न बहिर्वादेति तदा किं नात्मत्वं स्वयं याति ॥ ६६ ॥
वर्षास्वम्भःप्रचयात्कूपे गुरुनिर्झरे पयः क्षारम्।
ग्रीष्मेणैव तु शुष्के माधुर्यं भवति तत्राम्भः ॥ ६७ ॥
तद्वद्विषयोद्रिक्तं तमःप्रधानं मनः कलुषम्।
तस्मिन्विरागशुष्के शनकैराविर्भवेत्सत्त्वम् ॥ ६८ ॥
यं विषयमभिलषित्वा धावति बाह्येन्द्रियद्वारा।
तस्याप्राप्तौ खिद्यति तथा यथा स्वं गतं किंचित् ॥ ६९ ॥
नगनगर(दुर्ग)दुर्गमसरितः (परितः) परिभ्रमच्चेतः।
यदि नो लभते विषयं यन्त्रितमिव खिन्नतां याति ॥ ७० ॥
तुम्बीफलं जलान्तर्बलादधः क्षिप्तमप्युपैत्यूर्ध्वम्।
तद्वन्मनः स्वरूपे निहितं यत्नाद्बहिर्याति ॥ ७१ ॥
इह वा पूर्वभवे वा स्वकर्मणैवार्जितं फलं यद्यत्।
शुभमशुभं वा तत्तद्भोगोऽप्यप्रार्थितो भवति ॥ ७२ ॥
चेतःपशुमशुभपथं प्रधावमानं निराकर्तुम्।
वैराग्यमेवमुचितं गलकाष्ठं निर्मितं धात्रा ॥ ७३ ॥
निद्रावसरे यत्सुखमेतत्किं विषयजं यस्मात्।
नहि चेन्द्रियप्रदेशावस्थानं चेतसो निद्रा ॥ ७४ ॥
भद्वारतुङ्गकुड्ये गृहेऽवरुद्धो यथा व्याघ्रः।
बहुनिर्गमप्रयत्नैः श्रान्तस्तिष्ठत्यनुत्पतन्स तथा ॥ ७५ ॥

सर्वेन्द्रियावरोधादुद्योगशतैरनिर्गमं वीक्ष्य ।
शान्तं तिष्ठति चेतो निरुद्यमत्वं तदा याति ॥ ७६ ॥
प्राणस्पन्दनिरोधात्सत्सङ्गाद्वासनात्यागात् ।
हरिचरणभक्तियोगान्मनः स्ववेगं जहाति शनैः ॥ ७७ ॥

इति मनोनिग्रहप्रकरणम् ॥ ५ ॥

परगृहगृहिणीपुत्रद्रविणानामागमे विनाशे वा ।
कथितौ हर्षविषादौ किं वा स्यातां क्षणं स्थातुः ॥ ७८ ॥
दैवात्स्थितं गतं वा यं कंचिद्विषयमीड्यमल्पं वा ।
नो तुष्यन्न च सीदन्वीक्ष्य गृहेष्वतिथिवन्निवसेत् ॥ ७९ ॥
ममताभिमानशून्यो विषयेषु पराङ्मुखः पुरुषः ।
तिष्ठन्नपि निजसदने न बाध्यते कर्मभिः क्वापि ॥ ८० ॥
कुत्राप्यरण्यदेशे सुनीलतृणवालुकोपचिते ।
शीतलतरुतलभूमौ सुखं शयानस्य पुरुषस्य ॥ ८१ ॥
तरवः पत्रफलाढ्याः सुगन्धशीतानिलाः परितः ।
कलकूजितवरविहगाः सरितो मित्राणि किं न स्युः ॥ ८२ ॥
वैराग्यभाग्यभाजः प्रसन्नमनसो निराशस्य ।
अप्रार्थितफलभोक्तुः पुंसो जन्मनि कृतार्थतेह स्यात् ॥ ८३ ॥

द्रव्यं पल्लवतश्च्युतं यदि भवेत्क्वापि प्रमादात्तदा
शोकायाथ तदर्पितं श्रुतवते तोषाय च श्रेयसे ।
स्वातन्त्र्याद्विषयाः प्रयान्ति यदमी शोकाय ते स्युश्चिरं
संत्यक्ताः स्वयमेव ते शमसुखं निःश्रेयसं तन्वते ॥ ८४ ॥
विस्मृत्यात्मनिवासमुत्कटभवाटव्यां चिरं पर्यट-
न्संतापत्रयदीर्घदाहदहनज्वालावलीव्याकुलः ।
वल्गन्फल्गुषु सुप्रदीप्तनयनश्चेतः कुरङ्गो बला-
दाशापाशवशीकृतोऽपि विषयव्याघ्रैर्नृपा हन्यते ॥ ८५ ॥

इति वैराग्यप्रकरणम् ॥ ६ ॥

उत्पन्नेऽपि विरागे विना प्रबोधं सुखं न स्यात् ।
स भवेद्गुरूपदेशात्तस्माद्गुरुमाश्रयेत्प्रथमम् ॥ ८६ ॥

यद्यपि जलधेरुदकं यद्यपि वा प्रेरकोऽनिलस्तत्र।
तदपि पिपासाकुलितः प्रतीक्षते चातको मेघम्॥ ८७॥
त्रेधा प्रतीतिरुक्ता शास्त्राद्गुरुतस्तथात्मनस्तत्र।
शास्त्रप्रतीतिरादौ यद्वन्मधुरो गुडोऽस्तीति॥ ८८॥
अग्रे गुरुप्रतीतिर्दूराद्गुडदर्शनं यद्वत्।
आत्मप्रतीतिरस्माद्गुडभक्षणजं सुखं यद्वत्॥ ८९॥
रसगन्धरूपशब्दस्पर्शा अन्ये पदार्थाश्च।
कस्मादनुभूयन्ते नो देहाद्विन्द्रियग्रामात्॥ ९०॥
मृतदेहेन्द्रियवर्गो यतो न जानाति दाहजं दुःखम्।
प्राणश्चेन्निद्रायां तस्करबाधां स किं वेत्ति॥ ९१॥
मनसो यदि वा विषयस्तद्युगपत्किं न जानाति।
तस्य पराधीनत्वाद्यतः प्रमाद''''कस्त्राता॥ ९२॥
गाढध्वान्तगृहान्ततः क्षितितले दीपं निधायोज्ज्वलं
पञ्चच्छिद्रमधोमुखं हि कलशं तस्योपरि स्थापयेत्।
तद्बाह्ये परितोऽनुरन्ध्रममलं (?) वीणां च कस्तूरिकां
सद्रत्नं व्यजनं न्यसेच्च कलशच्छिद्राध्वनिर्गच्छताम्॥ ९३॥
तेजोंशेन पृथक्पदार्थनिवहज्ञानं हि यज्जायते
तद्रन्ध्रैः कलशेन वा किमु मृदो भाण्डेन तैलेन वा।
किं सूत्रेण न चैतदस्ति रुचिरं प्रत्यक्षबाधादतो
दीपज्योतिरिहैकमेव शरणं देहे तथात्मा स्थितः॥ ९४॥

इत्यात्मसिद्धिप्रकरणम्॥ ७॥

चिन्मात्रः परमात्मा ह्यपश्यदात्मानमात्मतया।
अभवत्सोऽहंनामा तस्मादासीद्भिदो मूलम्॥ ९५॥
द्वेधैव भाति तस्मात्पतिश्च पत्नी च तौ भवेतां वै।
दस्मादयमाकाशस्त्रिधैव परिपूर्यते सततम् (?)॥ ९६॥
सोऽयमपीक्षां चक्रे ततो मनुष्या अजायन्त।
इत्युपनिषदः प्राहुर्दयितां प्रति याज्ञवल्क्योक्तिम्॥ ९७॥

चिरमानन्दानुभवात्सुषुप्तिरिव काप्यवस्थाभूत् ।
परमात्मनस्तु तस्मात्स्वप्नवदेवोत्थिता माया ॥ ९८ ॥
सदसद्विलक्षणासौ परमात्मसदाश्रयानादिः ।
सा च गुणत्रयरूपा सूते सचराचरं विश्वम् ॥ ९९ ॥
माया तावददृश्या दृश्यं कार्यं कथं जनयेत् ।
तन्तुभिरदृश्यरूपैः पटोऽत्र दृश्यः कथं भवति ॥ १०० ॥
स्वप्ने सुरतानुभवाच्छुक्रद्रावो यथा सुतो (?) वसने ।
अनृतेतरे प्रबोधे वसनोपहतिर्भवेत्सत्या ॥ १०१ ॥
स्वप्ने पुरुषः सत्यो योषिदसत्या तयोर्युतिश्च मृषा ।
शुक्रद्रावः सत्यस्तद्वत्प्रकृतेऽपि संभवति ॥ १०२ ॥
एवमदृश्या माया तत्कार्यं जगदिदं दृश्यम् ।
माया तावदियं स्याद्या स्वानाशेन हर्षदा भवति ॥ १०३ ॥
रजनीवातिदुरन्ता न लक्ष्यतेऽत्र स्वभावोऽस्याः ।
सौदामिनीव नश्यति मुनिभिः संप्रेक्ष्यमाणैव ॥ १०४ ॥
माया ब्रह्मोपगताविद्या जीवाश्रया प्रोक्ता ।
चिदचिद्ग्रन्थिश्चेतस्तदक्षयं ज्ञेयमा मोक्षात् ॥ १०५ ॥
घटमठकुड्यैरावृतमाकाशं यत्तदाह्वयं भवति ।
तद्वदविद्यावृतमिह चैतन्यं जीव इत्युक्तः ॥ १०६ ॥
ननु कथमावरणं स्यादज्ञानं ब्रह्मणो विशुद्धस्य ।
सूर्यस्येव तमिस्रं रात्रिभवं स्वप्रकाशस्य ॥ १०७ ॥
दिनकरकिरणोत्पन्नैर्मेघैराच्छाद्यते यथा सूर्यः ।
न खलु दिनस्य दिनत्वं.... विकृतं सान्द्रसंघातैः ॥ १०८ ॥
अज्ञानेन तथात्मा शुद्धोऽपि च्छाद्यते सुचिरम् ।
न परंतु लोकसिद्धा प्राणिषु तच्चेतनाशक्तिः ॥ १०९ ॥

इति मायासिद्धिप्रकरणम् ॥ ८ ॥

स्थूलशरीरस्यान्तर्लिङ्गशरीरं च तस्यान्तः ।
करणमस्याप्यन्तस्ततो महाकारणं तुर्यम् ॥ ११० ॥

स्थूलं निरूपितं प्रागधुना सूक्ष्मादितो ब्रूमः।
अङ्गुष्ठमात्रपुरुषः श्रुतिरिति यत्राह तत्सूक्ष्मम् ॥ १११ ॥
सूक्ष्माणि महाभूतान्यसवः पञ्चेन्द्रियाणि पञ्चैव।
षोडशमन्तःकरणं तत्संघातो हि लिङ्गतनुः ॥ ११२ ॥
तत्कारणं स्मृतं यत्तस्यान्तर्वासनाजालम्।
तस्य प्रवृत्तिहेतुर्बुद्ध्याश्रयमत्र तुर्यं स्यात् ॥ ११३ ॥
तत्सारभूतबुद्धौ यत्प्रतिफलितं तु शुद्धचैतन्यम्।
जीवः स उक्त आर्यैर्योऽहमिति स्फूर्तिकृद्वपुषि ॥ ११४ ॥
चरतरतरङ्गसङ्गात्प्रतिबिम्बं भास्करस्य च चलं स्यात्।
अस्ति तथा चञ्चलता चैतन्ये चित्तचाञ्चल्यात् ॥ ११५ ॥
नन्वर्कप्रतिबिम्बः सलिलादिषु यः स चावभासयति।
किमितरपदार्थनिवहं प्रतिबिम्बोऽप्यात्मनस्तद्वत् ॥ ११६ ॥
प्रतिफलितं यत्तेजः सवितुः कांस्यादिपात्रेषु।
तदनु प्रविष्टमन्तर्गृहमन्यार्थान्प्रकाशयति ॥ ११७ ॥
चित्प्रतिबिम्बस्तद्वद्बुद्धिषु यो जीवतां प्राप्तः।
नेत्रादीन्द्रियमार्गैर्बहिरर्थान्सोऽवभासयति ॥ ११८ ॥

इति लिङ्गदेहादिनिरूपणप्रकरणम् ॥ ९ ॥

तदिदं य एवमार्यो वेद ब्रह्माहमस्मीति।
स इदं सर्वं च स्यात्तस्य च देवाश्च नेशते भूत्या ॥ ११९ ॥
येषां स भवत्यात्मा योऽन्यामथ देवतामुपास्ते यः।
अहमन्योऽसावन्यश्चेत्थं यो वेद पशुवत्सः ॥ १२० ॥
इत्युपनिषदामुक्तिस्तथा श्रुतिर्भगवदुक्तिश्च।
ज्ञानी त्वात्मैवेयं मतिर्ममेत्यत्र युक्तिरपि ॥ १२१ ॥
ऋजु वक्रं वा काष्ठं हुताशदग्धं सदग्नितां याति।
तत्किं हस्तग्राह्यं ऋजुवक्राकारसत्त्वेऽपि ॥ १२२ ॥
एवं य आत्मनिष्ठो ह्यात्माकारश्च जायते पुरुषः।
देहीव दृश्यतेऽसौ परं त्वसौ केवलो ह्यात्मा ॥ १२३ ॥

प्रतिफलति भानुरेकोऽनेकशरावोदकेषु यथा ।
तद्वदसौ परमात्मा ह्येकोऽनेकेषु देहेषु ॥ १२४ ॥
दैवादेकशरावे भग्ने किं वा विलीयते सूर्यः ।
प्रतिबिम्बचञ्चलत्वादर्कः किं चञ्चलो भवति ॥ १२५ ॥
सव्यापारं कुरुते यथैकसवितुः प्रकाशेन ।
तद्वच्चराचरमिदमेकात्मसत्तया(?) चलति ॥ १२६ ॥
येनोदकेन कदलीचम्पकजात्यादयः प्रवर्धन्ते ।
मूलकपलाण्डुलशनास्तेनैवैते विभिन्नरसगन्धाः ॥ १२७ ॥
एको हि सूत्रधारः काष्ठप्रकृतीरनेकशो युगपत् ।
स्तम्भाग्रपट्टिकायां नर्तयतीह प्रगूढतया ॥ १२८ ॥
गुडखण्डशर्कराद्या भिन्नाः स्युर्विकृतयो यथैकेक्षोः ।
केयूरकङ्कणाद्या यथैकहेम्नो भिदाश्च पृथक् ॥ १२९ ॥
एवं पृथक्स्वभावं पृथगाकारं पृथग्वृत्ति ।
जगदुच्चावचमुच्चैरेकेनैवात्मना चलति ॥ १३० ॥
स्कन्धधृतसिद्धमन्नं यावन्नाश्नाति मार्गगस्तावत् ।
स्पर्शभयात्क्षुत्पीडे तस्मिन्भुक्ते न ते भवतः ॥ १३१ ॥
मानुषमतङ्गमहिषश्वसूकरादिष्वनुस्यूतम् ।
यः पश्यति जगदीशं स एव भुङ्क्तेऽद्वयानन्दम् ॥ १३२ ॥

इत्यद्वैतप्रकरणम् ॥ १० ॥

यद्वत्सूर्येऽभ्युदिते स्वव्यवहारं जनः कुरुते ।
तं न करोति विवस्वान्न कारयति तद्वदात्मापि ॥ १३३ ॥
लोहे हुतभुग्व्याप्ते लोहान्तरताड्यमानेऽपि ।
तस्मान्तर्गतवह्नेः किं स्यान्निर्घातजं दुःखम् ॥ १३४ ॥
निष्ठुरकुठारघातैः काष्ठे संछेद्यमानेऽपि ।
अन्तर्वर्ती वह्निः किं घातैश्छेद्यते तद्वत् ॥ १३५ ॥
तनुसंबन्धाज्जातैः सुखदुःखैर्लिप्यते नात्मा ।
ब्रूते श्रुतिरप्युभयोरश्नन्यन्योऽभिचाकशीत्यादि ॥ १३६ ॥

निशि-वेश्मनि प्रदीपे दीप्यति चौरस्तु वित्तमपहरति।
ईरयति वारयति वा तं दीपः किं तथात्मापि॥ १३७॥
देहान्ते दैववशात्कसिश्चित्समुदिते विपन्ने वा।
दीपस्तुष्यत्यथ वा न खिद्यते तद्वदात्मापि॥ १३८॥

इति कर्तृत्वभोक्तृत्वप्रकरणम्॥ ११॥

रविचन्द्रवह्निदीपप्रमुखाः स्वपरप्रकाशाः स्युः।
यद्यपि तथाप्यमीभिः प्रकाश्यते क्वापि नैवात्मा॥ १३९॥
चक्षुर्द्वारैवैषां परमात्मनि भानमेतेषाम् (?)।
यद्वा तेऽपि पदार्था न ज्ञायन्तेऽथ केवलालोकात्॥ १४०॥
तत्राप्यक्षिद्वारा सहायभूतो न चेदात्मा।
नो चेत्सत्यालोके पश्यत्यन्धः कथं नार्थान्॥ १४१॥
सत्यात्मन्यपि किं नो ज्ञानं तच्चेन्द्रियान्तरेण स्यात्।
अन्धे दृक्प्रतिबन्धे करसंबन्धे पदार्थभानं हि॥ १४२॥
जानाति येन सर्वं केन च तं वा विजानीयात्।
इत्युपनिषदामुक्तिर्बुध्यत आत्मात्मना तस्मात्॥ १४३॥

इति स्वप्रकाशताप्रकरणम्॥ १२॥

यावत्क्षणं क्षणार्धं स्वरूपपरिचिन्तनं क्रियते।
तावद्दक्षिणकर्णे त्वनाहतः श्रूयते शब्दः॥ १४४॥
सिध्यारम्भस्थिरताविश्रमविश्वासबीजशुद्धीनाम्।
उपलक्षणं हि मनसः परमं नादानुसंधानम्॥ १४५॥
भेरीमृदङ्गशङ्खाद्याहतनादे मनः क्षणं रमते।
किं पुनरनाहतेऽस्मिन्मधुमधुरेऽखण्डिते स्वच्छे॥ १४६॥
चित्तं विषयोपरमाद्यथा यथा याति नैश्चल्यम्।
वेणोरिव दीर्घतरस्तथा तथा श्रूयते नादः॥ १४७॥
नादाभ्यन्तरवर्ति ज्योतिर्यद्वर्तते हि निरम्।
तत्र मनो लीनं चेन्न पुनः संसारचन्धाय॥ १४८॥

परमानन्दानुभवात्सुचिरं नादानुसंधानात् ।
श्रेष्ठश्चित्तलयोऽयं सत्स्वन्यलयेष्वनेकेषु ॥ १४९ ॥

इति नादानुसंधानप्रकरणम् ॥ १३ ॥

संसारतापमाप्तं नानायोनिभ्रमात्परिश्रान्तम् ।
लब्ध्वा परमानन्दं न चलति चेतः कदा क्वापि ॥ १५० ॥
अद्वैतानन्दभरात्किमिदं कोऽहं च कस्याहम् ।
इति मन्थरतां यातं यदा तदा मूर्छितं चेतः ॥ १५१ ॥
चिरतरमात्मानुभवादात्माकारं प्रजायते चेतः ।
सरिदिव सागरयाता समुद्रभावं प्रयात्युच्चैः ॥ १५२ ॥
आत्मन्यनुप्रविष्टं चित्तं नापेक्षते पुनर्विषयान् ।
क्षीरादुद्धृतमाज्यं यथा पुनः क्षीरतां न यातीह ॥ १५३ ॥
दृष्टौ द्रष्टरि दृश्ये यदनुस्यूतं च भानमात्रं स्यात् ।
तत्रोपक्षीणं चेच्चित्तं तन्मूर्छितं भवति ॥ १५४ ॥
याति स्वसंमुखत्वं दृङ्मात्रं वा यदा तदा भवति ।
दृश्ये द्रष्टृविभेदो ह्यसंमुखेऽस्मिन्न तद्भवति ॥ १५५ ॥
एकस्मिन्दृङ्मात्रे तत्तद्दृश्यादिकं हि समुदेति ।
लीनं दृङ्मात्रमपि ह्येकात्मत्वं च शिष्यते पश्चात् ॥ १५६ ॥
दर्पणतः प्राक्पश्चादस्ति मुखं प्रतिमुखं तदाभाति ।
आदर्शेऽपि च नष्टे मुखमस्ति मुखे तथैवात्मा ॥ १५७ ॥

इति मनोलयप्रकरणम् ॥ १४ ॥

माधुर्यं गुडपिण्डे यत्तस्यांशेऽणुमात्रेऽपि ।
एवं न पृथग्भावो गुडत्वमधुरत्वयोरस्ति ॥ १५८ ॥
अथवा न भिन्नभावः कर्पूरामोदयोरेवम् ।
आत्मस्वरूपमनसां पुंसां जगदात्मतां याति ॥ १५९ ॥
यद्भावानुभवः स्यान्निद्रादौ जागरस्यान्ते ।
अन्तः स चेत्स्थिरः स्याल्लभते हि तदाद्वयानन्दम् ॥ १६० ॥

अतिगम्भीरेऽपारे ज्ञानचिदानन्दसागरे स्फारे।
कर्मसमीरणतरला जीवतरङ्गावलिः स्फुरति ॥ १६१ ॥
खरतरकरैः प्रदीप्तेऽभ्युदिते चैतन्यतिग्मांशौ।
स्फुरति मृषैव समन्तादनेकविधजीवमृगतृष्णा ॥ १६२ ॥
अन्तरदृष्टे यस्मिञ्जगदिदमारात्परिस्फुरति।
दृष्टे यस्मिन्सकृदपि विलीयते क्वाप्यसद्रूपम् ॥ १६३ ॥
स्थूला सूक्ष्मा चेति द्वेधा हरिभक्तिरुद्दिष्टा।
प्रारम्भे स्थूला स्यात्सूक्ष्मा तस्याः सकाशाच्च ॥ १६४ ॥
स्वाश्रमधर्माचरणं कृष्णप्रतिमार्चनोत्सवो नित्यम्।
विविधोपचारकरणैर्हरिदासैः संगमः शश्वत् ॥ १६५ ॥
कृष्णकथासंश्रवणे महोत्सवः सत्यवादश्च।
परयुवतौ द्रविणे वा परापवादे पराङ्मुखता ॥ १६६ ॥
ग्राम्यकथासूद्वेगः सुतीर्थगमनेषु तात्पर्यम्।
यदुपतिकथावियोगे व्यर्थं गतमायुरिति चिन्ता ॥ १६७ ॥
एवं कुर्वति भक्तिं कृष्णकथानुग्रहोत्पन्ना।
समुदेति सूक्ष्मभक्तिर्यस्या हरिरन्तराविशति ॥ १६८ ॥
स्मृतिसत्पुराणवाक्यैर्यथाश्रुतायां हरेर्मूर्तौ।
मानसपूजाभ्यासो विजननिवासेऽपि तात्पर्यम् ॥ १६९ ॥
सत्यं समस्तजन्तुषु कृष्णस्यावस्थितेर्ज्ञानम्।
अद्रोहो भूतगणे ततस्तु भूतानुकम्पा स्यात् ॥ १७० ॥
प्रमितयदृच्छालाभे संतुष्टिर्दारपुत्रादौ।
ममताशून्यत्वमतो निरहंकारत्वमक्रोधः ॥ १७१ ॥
मृदुभाषिता प्रसादो निजनिन्दायां स्तुतौ समता।
सुखदुःखशीतोष्णद्वन्द्वसहिष्णुत्वमापदो न भयम् ॥ १७२ ॥
निद्राहारविहारेष्वनादरः सङ्गराहित्यम्।
वचने चानवकाशः कृष्णस्मरणेन शाश्वती शान्तिः ॥ १७३ ॥

केनापि गीयमाने हरिगीते वेणुनादे वा ।
आनन्दाविर्भावाद्युगपत्स्यादृष्टजातिकोद्रेकः ॥ १७४ ॥
तस्मिन्ननुभवति मनः प्रगृह्यमाणं परात्मसुखम् ।
स्थिरतां याते तस्मिन्याति मदोन्मत्तदन्तिदशाम् ॥ १७५ ॥
जन्तुषु भगवद्भावं भगवति भूतानि पश्यति क्रमशः ।
एतादृशी दया चेत्तदैव ह᳚᳚ सर्वशास्यः स्यात् ॥ १७६ ॥

इति द्विधाभक्तिनिरूपणप्रकरणम् ॥ १५ ॥

यमुनातटनिकटस्थितवृन्दावनकानने महारम्ये ।
कल्पद्रुमतलभूमौ चरणं चरणोपरि स्थाप्य ॥ १७७ ॥
तिष्ठन्तं घननीलं स्वतेजसा भासयन्तमिह विश्वम् ।
पीताम्बरपरिधानं चन्दनकर्पूरलिप्तसर्वाङ्गम् ॥ १७८ ॥
आकर्णपूर्णनेत्रं कुण्डलयुगमण्डितश्रवणम् ।
मन्दस्मितमुखकमलं सुकौस्तुभोदारमणिहारम् ॥ १७९ ॥
वलयाङ्गुलीयकाद्यानुज्ज्वलयन्तं स्वलंकारान् ।
गलविलुलितवनमालं स्वतोरड(?)न्यस्तकलिकालम् ॥ १८० ॥
गुञ्जारवालिकलितं गुञ्जापुञ्जान्विते शिरसि ।
भुञ्जानं सह गोपैः कुञ्जान्तरवर्तिनं हरिं स्मरत ॥ १८१ ॥
मन्दारपुष्पवासितमन्दानिलसेवितं परानन्दम् ।
मन्दाकिनीयुतपदं नमत महानन्ददं महापुरुषम् ॥ १८२ ॥
सुरभीकृतदिग्वलयं सुरभिशतैरावृतं सदा परितः ।
सुरभीतिक्षपणमहासुरभीमं यादवं नमत ॥ १८३ ॥
कंदर्पकोटिसुभगं वाञ्छितफलदं दयावन्तम् ।
त्यक्त्वा कमन्यविषयं नेत्रयुगं द्रष्टुमुत्सहते ॥ १८४ ॥
पुण्यतमामतिसुरसां मनोभिरामां हरेः कथां त्यक्त्वा ।
श्रोतुं श्रवणद्वन्द्वं ग्राम्यकथामादरं वहति ॥ १८५ ॥
दौर्भाग्यमिन्द्रियाणां सत्सु च विषयेषु कृष्णविषयेषु ।
क्षणिकेषु पापकरणेष्वासज्जन्ते यदन्यविषयेषु ॥ १८६ ॥

इति ध्यानविधिप्रकरणम् ॥ १६ ॥

यशोदयापयोधरामृतेन विश्वपालको
यशोदयापयोधरामृतेन सोऽपि पालितः ।
.............................................

सतामवन्धनोचितः सदामवन्धनो हरिः ॥ १८७ ॥
यः शेषतूलिकायां मासंवाहितपदो हि निद्राति ।
शेते स परिश्रान्तस्तरुमूले कम्बले गतः शिशुताम् ॥ १८८ ॥
शिरसि वहन्ति यदाज्ञाशेषां ब्रह्मादयोऽपि सुरपालाः ।
आज्ञापितः स गोपैः समानयति गास्त्विदं महच्चित्रम् ॥ १८९ ॥
धन्या गोपकुमार्यस्तत्सदृशं नास्ति भाग्यमपि लक्ष्म्याः ।
याः श्रीकृष्णेन समं व्यहरन्रासे विसृज्य तां लज्जाम् ॥ १९० ॥
चित्रं यः स्वजनानां परितुष्टः सन्ददाति साम्राज्यम् ।
गच्छन्पथि कुब्जायै चन्दनमभियाचते स रङ्क इव ॥ १९१ ॥
मुनयस्त्वभ्यासरता यतन्ति यत्प्राप्तये मनोयुक्त्या ।
अनुतिष्ठति स यत्नं स राधिकायाः प्रसादसिद्ध्यर्थम् ॥ १९२ ॥
संवर्णयन्ति निगमाः सहस्रपादेति यं पुरुषसूक्ते ।
भित्त्यवलम्बं कृत्वा स करोति शनैः शनैः क्रमणम् ॥ १९३ ॥
निवसन्ति यस्य रोम्णि ब्रह्मकटाहा यथावकाशेन ।
चित्रं स हरिः शेते पञ्चवितस्तिप्रमाणिकान्दोले ॥ १९४ ॥
नेच्छति यः स्वामित्वं क्वचिदपि विजितात्मनामपि मुनीनाम् ।
चित्रं कुरुते दास्यं स एव घोषेषु पुंश्चलीस्त्रीणाम् ॥ १९५ ॥
क्षीरोद्भवकौस्तुभमपि लब्ध्वा यो नाभवद्धृष्टः ।
गोपालबालदत्तैर्गुञ्जाभरणैश्च मोदयुक्तः सः ॥ १९६ ॥
यस्य तु नामोच्चारात्कालोऽपि हि बाधते न भक्तजनान् ।
जनदम्भील्या जननी तस्य कपोले ह्यदान्मषीतिलकम् ॥ १९७ ॥
चित्रं पुरा सुरान्यः स्वकरेणापाययत्सुधां दिव्याम् ।
क्षुधितः स मातुरङ्के स्तन्यार्थं रोदनं स्वयं कुरुते ॥ १९८ ॥

प्रवदामि कस्य पुरतः को विश्वासं करोति मद्वाक्ये ।
धृत्वा स्वमातृचेलं दुग्धार्थं रौति केवलं ब्रह्म ॥ १९९ ॥

इति प्रबोधसुधाकरः ।

---

## काश्मीरकमहाकविश्रीजह्लणप्रणीतो मुग्धोपदेशः ।

पीयूषाभिनिवेश एष रभसादस्माकमद्यानया
बन्धूकद्युतिबान्धवाधररसस्यन्देन मन्दीकृतः ।
इत्थं दैत्यचयः समुद्रमथने येन क्षणाद्वञ्चित-
स्तस्मै सादरमोंनमोऽस्तु कपटस्त्रीरूपिणे विष्णवे ॥ १ ॥

हारिद्रद्रवसोदराय रसनामंडो(मात्रो)परिस्थायिने
सत्यादन्यतमाय वित्तहरणप्रत्यक्षचौराय च ।
चित्रं दुर्भगरूपवर्णनमहापाण्डित्यविद्याय ते
व्याजानां प्रथमाय गर्भगणिकारागाय तुभ्यं नमः ॥ २ ॥

ध्यानं यत्परमेश्वरं प्रति सदा यद्वीतरागं मनो
यत्कर्मातिकठोरघोरगहनं भूत्यै यदत्यादरः ।
आश्चर्यं च शरीरदानमपि यत्कार्यं विकारं विना
तद्वेश्यैव तपस्विनी कलियुगे लोकोऽपि तद्भावितः ॥ ३ ॥

श्रीमन्तं शिरसा बिभर्ति कुरुते विश्वभ्रमं हेलया
धत्ते पाटक(?)पक्षपातमनिशं नैवामिषैस्तृप्यति ।
रक्तं पातुमपीहते च सकलं तार्क्ष्यस्य मूर्तिर्यथा
वेश्या किं तु भुजंगभक्षणविधौ नाद्यापि विश्राम्यति ॥ ४ ॥

---

१. अयं जह्लणकविः कश्मीरेषु खिस्ताब्दीयद्वादशशतकपूर्वार्धे आसीत्. स्तुतश्चायं तत्कालसमुद्भूतेन मङ्खकविना श्रीकण्ठचरितस्यान्तिमे सर्गे. सोमपालविलासाभिध जह्लणकविप्रणीतं महाकाव्यमप्यस्ति, यस्यालंकारानुसारिणीसमाख्या टीका श्रीराजानकरुचकेन निर्मितास्ति. सोमपालश्च कश्मीरप्रान्तवर्तिराजपुर्या महीपतिरासीदिति राजतरङ्गिणीतो ज्ञायते. दुर्लभस्यास्य मुग्धोपदेशस्यैकं पुस्तकं कश्मीरमहाराजाश्रितज्योतिर्विदुपाह्वपण्डितविवेकश्रीदयारामशर्मभिः प्रहितम्. तदाधारेणैवैतन्मुद्रणं समजनि.

शौर्यस्यातिविकत्थनं रिपुनतिर्मानस्य दुःशीलता
सौन्दर्यस्य समुन्नतेस्तरलता ज्ञानस्य गर्वग्रहः।
ऐश्वर्यस्य विकारता मुखरता विद्याप्रकर्षस्य च
भ्रान्तविभ्रमनर्मणश्च गणिका सर्वात्मना दूषणम् ॥ १८ ॥
छायामभ्रदलैः खलैः सुजनतां मानोन्नतिं याच्ञया
कार्पण्येन यशांसि धूर्तकलया मैत्रीं सुखं सेवया।
धर्मं प्राणिवधेन वाञ्छति धनं द्यूतप्रसादेन यो
वेश्याभिश्च विलासमात्मनि नराकारोऽस्ति गौरेव सः ॥१९॥
नान्यो मूर्खसमो न सेवकसमो दुःखी न यक्ष्मोपमो
व्याधिर्नाधिरसत्सुतप्रतिनिधिस्त्रासो न मृत्योः समः।
कष्टं नाध्वसमानमिन्द्रियसमो नारिः परस्त्रीसमं
नानायुष्यमवश्यनिन्द्यमथ नो वेश्यासमं दृश्यते ॥ २० ॥
किं काकोऽपि विहंगमो मरुरपि स्थानं करीरोऽपि किं
शाखी राहुरपि ग्रहः स च भवेदुष्ट्रोऽपि किं वाहनम्।
किं काचोऽपि मणिर्मृगोऽपि करटिः प्रेष्योऽपि वा मानुषः
किं वेश्यापि विलासिनी स च तदासक्तोऽपि किं कामुकः॥२१॥
किं तत्कर्म यदस्तशर्म रसना किं सा न(च) यास्तुदा
किं तत्प्रेम यदस्थिरं स च पुमान्किं नाम यो निर्गुणः।
सा किं श्रीरुपभोगमर्हति न या सेव्यः स किं योऽन्तरं
नो जानाति तदस्ति किं विलसितं वेश्यासु यत्कृत्रिमम् ॥२२॥
दूरे तानि धनानि येषु मलनं मानस्य संजायते
बन्धुः सोऽस्तु सुखी सुखे मधुमयो योऽन्तश्च मायामयः।
ते भोगाः प्रलयं प्रयान्तु कथमप्यौचित्यभङ्गेन ये
यायातुर्निधनं (?) वरं निधुवनं वेश्यासु मूल्येन यत् ॥ २३ ॥
अस्थानाभिनिवेशिता रतिपतेरौचित्यभङ्गो रते-
र्वैयर्थ्यं नवयौवनस्य किमपि प्रेम्णः कलङ्काङ्कुरः।

१. पुरुषाणां धनम्. २. 'नान्यः पापसमानुष्य परदाराभिमर्शनात्' इति मार्कण्डेयपुराणे उक्तं महाभारतस्थमिदं उपजीव्य. ३. यथा स्यात्तु दन्तिजातिभेदा आदि.

सौभाग्यस्य विमानना विगुणता सौन्दर्यसारश्रियः
शृङ्गारस्य विडम्बना किमपरं वेश्यारताडम्बरः ॥ २४ ॥
क्रुद्धो यस्य मनोभवस्तरुणिमा येनात्मनो वञ्चित-
स्तैस्तैर्यश्च कटाक्षितः परिभवैः साक्षादलक्ष्मीमुखैः।
युक्तायुक्तविचारणापरिहृतः कामं स कामी क्रिमिः
पण्यस्त्रीषु नितम्बनामनि महानिम्ने रतिं विन्दति ॥ २५ ॥
शापः कोऽपि महानयं परिणतिर्दुष्कर्मणामीदृशी
दौर्जन्यं परमं विधेरिदमियं साक्षादलक्ष्मीः स्थिरा।
सौहार्दस्य च विभ्रमस्य च रतेर्भर्तुश्च यूनां तथा
यत्संत्यज्य कुलाङ्गनां बहुसुखो दासीजनः सेव्यते ॥ २६ ॥
संपर्कोऽप्यतिकर्कशः परिचयाभासोऽप्यसंपत्करो
दृक्पातोऽप्यवसादसूरपि सकृत्संभाषणं दूषणम्।
छायापि च्छलनात्मिका परिमलोद्गारोऽपि हालाहलं
वेश्यानां विषयेषु किं पुनरहो सक्तिर्महासाहसम् ॥ २७ ॥
द्रोहो यस्य पिता कलाः किल चतुःषष्टिस्तथा मातरः
प्राणाः सर्वमलीकमर्थहरणं नाम प्रधानव्रतम्।
विक्रेयं निजमङ्गमङ्गमपि चानङ्गः सहायः स्वयं
तस्यानर्थशतात्मकस्य गणिकाव्याधेः किमस्त्यौषधम् ॥ २८ ॥
गृध्री निर्भरमामिषेषु सरघा घोरा मधूनां भरे
व्याघ्री तीक्ष्णनखक्षतेषु भुजगी दंशप्रकारेषु च।
उत्तानेषु विवर्तनेषु शफरी वित्तच्छले मूषिका
वेश्या कामुकवञ्चनाय भुवने रूपैरनेकैः स्थिता ॥ २९ ॥
साम्राज्यं मधुमांसमत्स्यगिलनं मन्त्री जरत्कुट्टनी
दण्ड्यः सार्थकिराटसूनुरधनाः शृङ्गारिणः किंकराः।
आचारो बहुगालिदानमधमो मित्रं धनं जीवितं
वेश्यानां पुरचार..............थ भग्नः प्रियः ॥ ३० ॥

१. पद्यमेतत्सुभाषितावलौ समुद्धृतमस्ति. २ सार्थो धनवान्; किराटो वणिग्विशेषः.

उत्कम्पं मतिविभ्रमं विदधती यूनां शनैर्निन्दिता
तारुण्यस्य जनापवाद·······वेश्या च संदृश्यते ॥ ३७ ॥
योऽयं निर्दयदन्तखण्डनकरो बुद्धिप्रयोगैर्हठा-
न्नीरन्ध्रो भुजयन्त्रपीडनविधिः सोल्लासमुत्पादितः ।
तेनेक्षोरिव कामुकस्य सरसस्यादाय सारं परं
वेश्याभिः क्रियते बहिर्यदि परं निष्कासनं शल्कवत् ॥ ३८ ॥
वाग्भिर्भर्त्सनमंशुकादिहरणं संताडनं मुष्टिभिः
किं चान्यद्विपरीतदर्शनमधःकारोऽथ पादाहतिः ।
इत्यादि प्रथमं यदेव सुरतप्रौढोपचारक्रमे
वेश्या पश्यत तत्तदेव कुरुते निर्वासने कामिनाम् ॥ ३९ ॥
यद्भूयः परिचुम्बनं यदसकृत्सर्वाङ्गमालिङ्गनं
यत्पर्युत्सुकमीक्षितं सरभसं यच्चाटुकोत्कट्ट(त्कीर्तः)नम् ।
यत्सद्भावकथानकं रहसि यत्तत्किंचिदभ्यर्थनं
वेश्यानां विषवत्तदेव निपुणं चिन्त्यं सदा कामुकैः ॥ ४० ॥
बिब्बोके बकचेष्टितं बहुविधभ्रूविभ्रमेषु भ्रमं
कौटिल्यं नखरक्षतेषु सुरतोपायेषु मायां स्वयम् ।
सीत्कारान्तरसत्यमर्थहरणं सर्वत्र ये जानते
वेश्यानां परमं रहस्यमवनौ ते केऽपि मेधाविनः ॥ ४१ ॥
किंचित्प्राहु(घु)णकागमेन किमपि प्रस्तारविस्तारव-
द्यात्राचैत्रतिथिक्रमैः किमपि च क्रोधप्रसादोदयैः ।
किंचित्काञ्चनरत्नवस्त्रविपर्ययैर्नानाविधैर्दोहदै-
र्द्राराण्यर्थविनिर्गमस्य गणिकाः कुर्वन्ति शृङ्गारिणाम् ॥ ४२ ॥
अर्थोष्मा पितृलालनं विटघटामेलः प्रियंमन्यता
तारुण्यं नगरे स्थितिस्तरलता धीः कामशास्त्रं प्रति ।
संगीतं रजनी विधुर्मधुमदः स्पर्धा सपत्नैस्तथा
वेश्यानामनुरक्तवित्तहरणे कुर्वन्ति साहायकम् ॥ ४३ ॥

रागीति प्रतिपत्तिर्भूविट इति प्राप्तोऽतिवन्द्यं पदं
श्लाघार्हो व्यसनीति हीनकुल इत्यग्र्यः कुटुम्बः स्वयम् ।
मान्यः प्राहत(?) इत्यहो कितव इत्याप्तश्च किं वाधिकं
सर्वावस्थ इति प्रमाणपुरुषो वेश्याभिरभ्यर्च्यते ॥ ३१ ॥
मांसाकोत्कटमद्यगन्धि विहरच्चेटीनटीसंकुलं
यद्वेश्यायतनं भुजंग परया भक्त्या पुरः पश्यसि ।
अत्रास्ते गृहदेवता विदधती दिग्बद्धनं कुट्टनी
यस्याः प्रत्यहमाढ्यकामुकपशुव्रातोपहारैर्बलिः ॥ ३२ ॥
प्रत्यङ्गार्पणचारुचाटुकरणप्रेमोचितप्रार्थना
श्रीवातायनदर्शनादि (?) गणिकालोकस्य धर्मः परः ।
कुट्टन्याः पुनरुत्कटोत्कटमिदं तत्रास्त्यगस्त्यव्रतं
यत्प्राणाहुतिरेककैव सकलै रत्नाकरैः कामिभिः ॥ ३३ ॥
कंदर्पप्रतिभूनिवेशितवलीरेखावलीशोभिते
लीलोदञ्चितबाहुपाशयुगलापातैश्च भोः कामुकाः ।
वेश्यानां विपुले नितम्बफलके शारैः कटाक्षैरितो
यद्वः क्रीडितमत्र दास्यति पुरो दारिद्र्यमेवोत्तरम् ॥ ३४ ॥
शूलेनाद्य मृताहमद्य सरजाः कर्तव्यमद्य व्रतं
त्यागी नास्ति ततोऽधिकोऽपर इति श्लाघा विपक्षस्य न ।
कंचिन्नोत्सहते स राजतनयो जानाति माता ममे-
त्येवं मुग्धभुजंग रूक्षगणिकावाचोऽचिराच्छ्रोष्यसि ॥ ३५ ॥
मालिन्यं प्रकटीकरोति निबिडं नैर्गुण्यमातन्वते(ती)
जीर्णस्नेहपरम्परा विदधते पात्रेऽप्यहो दूषणम् ।
वेश्या दीपशिखेव भाति रजनौ रूपभ्रमान्धीकृतो
यत्रायं कुरुते पतङ्गपतनं हाहा भुजंगमनः ॥ ३६ ॥
केशाकर्षणकर्मणि व्यवसिता वीर्यं हरन्ती परं
मूर्ध्नि कामपि तन्वती स्मितमुखी लक्ष्मा न कर्णान्तिके ।

१. एतदपि पद्यं सुभाषितावल्यामस्ति.

उत्कम्पं मतिविभ्रमं विदधती यूनां शनैर्निन्दिता
तारुण्यस्य जनापवाद·······वेश्या च संदृश्यते ॥ ३७ ॥
योऽयं निर्दयदन्तखण्डनकरो बुद्धिप्रयोगैर्हठा-
न्नीरन्ध्रो भुजयन्त्रपीडनविधिः सोल्लासमुत्पादितः।
तेनेक्षोरिव कामुकस्य सरसस्यादाय सारं परं
वेश्याभिः क्रियते बहिर्यदि परं निष्कासनं शल्कवत् ॥ ३८ ॥
वाग्भिर्भर्त्सनमंशुकादिहरणं संताडनं मुष्टिभिः
किं चान्यद्विपरीतदर्शनमधःकारोऽथ पादाहतिः।
इत्यादि प्रथमं यदेव सुरतप्रौढोपचारक्रमे
वेश्या पश्यत तत्तदेव कुरुते निर्वासने कामिनाम् ॥ ३९ ॥
यद्भूयः परिचुम्बनं यदसकृत्सर्वाङ्गमालिङ्गनं
यत्पर्युत्सुकमीक्षितं सरभसं यच्चाटुकोत्कट्ट(त्कीर्त?)नम्।
यत्सद्भावकथानकं रहसि यत्तत्किंचिदभ्यर्थनं
वेश्यानां विषवत्तदेव निपुणं चिन्त्यं सदा कामुकैः ॥ ४० ॥
बिब्बोके बकचेष्टितं बहुविधभ्रूविभ्रमेषु भ्रमं
कौटिल्यं नखरक्षतेषु सुरतोपायेषु मायां स्वयम्।
सीत्कारान्तरसत्यमर्थहरणं सर्वत्र ये जानते
वेश्यानां परमं रहस्यमवनौ ते केऽपि मेधाविनः ॥ ४१ ॥
किंचित्प्राहु(घु)णकागमेन किमपि प्रस्तारविस्तारव-
द्यात्राचैत्रतिथिक्रमैः किमपि च क्रोधप्रसादोदयैः।
किंचित्काञ्चनरत्नवस्त्रविषयैर्नानाविधैर्दोहदै-
र्द्वाराण्यर्थविनिर्गमस्य गणिकाः कुर्वन्ति शृङ्गारिणाम् ॥ ४२ ॥
अर्थोष्मा पितृलालनं विटघटामेलः प्रियंमन्यता
तारुण्यं नगरे स्थितिस्तरलता धीः कामशास्त्रं प्रति।
संगीतं रजनी विधुर्मधुमदः स्पर्धा सपत्नैस्तथा
वेश्यानामनुरक्तवित्तहरणे कुर्वन्ति साहायकम् ॥ ४३ ॥

तस्यैवाद्य निराश दुर्भग पशो निर्लज्ज गच्छाधुना
धिक्त्वां निर्धनचङ्गमित्यपवदन्ह्रीतो न वेश्याजनः ॥ ९० ॥
केचिद्द्यूतकरा भवन्ति कतिचिद्भिक्षाचराः किंकराः
केचित्कर्मकराः परे धनवतां श्लाघाकराः केचन ।
स्कन्धासक्तपटच्चरा ह्य(अ)नुचरा शोकादकिंचित्करा-
स्तेऽर्मा कामिवराः पुरा समभवन्वेश्यासु ये गोचराः ॥ ९१ ॥
वेश्याभिर्विवशीकृतः कुपुरुषः संजायते दुर्गतो
दौर्गत्येन दुरोदरे निपतितः स्वं हारयत्येव सः ।
रुद्धो द्यूतकरैः करोति विधुरश्चौर्यं ततस्तस्करो
वध्यः स्यान्नृपतेरहो नु विषयासक्तेर्दुरन्ता गतिः ॥ ९२ ॥
आजीवः कपटानुरागकलया दोषो न दुःशीलता
वैधव्यं न च बाधते सदसतोः संभावना व्यत्ययात् ।
यत्किंचित्करणे परस्वहरणे व्रीडा न पीडाकरी
नो वा राजभयं च हीं बत सुखं जीवन्ति वारस्त्रियः ॥ ९३ ॥
स्त्रीति प्रीतिकरं पुरः परिणतौ हालाहलं केवलं
सर्वस्य व्यसनं किलैतदधिकं तत्रापि वेश्येति च ।
प्राधान्येन ततस्तदेव कथितं यत्तत्प्रसङ्गेन च
व्याख्यातं गुणदोषजातमुचितं चिन्त्यं तदप्यादरात् ॥ ९४ ॥
चेतःश्वापदवागुरा दशगुणस्फारस्मरोड्डामरा
वार्तव्यावधयः (?) समुद्गलहरीपूरैरिवोत्पादिताः ।
नापि स्वाम्यसमर्पणेन न सखे सख्या (?) विरोधेन वा
गूढान्तर्मुखसाहसव्यतिकरा रक्ष्याः परं योषितः ॥ ९५ ॥
भस्मस्नानमहाव्रतं कतिपयश्रीभ्रष्टसंभावितं
सर्वापह्नवहस्तलाघवकलाकूटाक्षशिक्षात्मकम् ।
प्रत्याशापुनरुक्तहारणजगद्द्रोहं विवादास्पदं
दारिद्र्यस्य निमन्त्रणं किमपरं धिग्द्यूतलीलायितम् ॥ ९६ ॥

१. द्यूते. २. जीविका.

वैदग्धीमवधीरय व्यवहितं कार्यं कलाकौशलं
सौजन्येन गतं किमन्यदफलो राशिर्गुणानामपि।
यस्मान्न प्रणयेन न प्रणतिभिः प्रेम्णा न न प्रीणनै-
र्न प्राणैरपि ते भुजंग गणिका वित्तं विना तुष्यति॥ ४४॥
दासी नाथ तवाहमेव विभवः सर्वस्त्वदीयः स्थितो
मा मां निर्दय मुञ्च शून्यमखिलं मन्ये जगत्त्वां विना।
इत्युक्त्वा सहसा भुजंगपुरतो यद्वेश्यया रुद्यते
भुक्तोच्छिष्टदरिद्रकामिविभवास्ते केवलं तद्विदुः॥ ४५॥
स्वप्ने कामपि संलपन्प्रिय मया दृष्टोऽसि तत्ते वला-
देवं मां प्रति सांप्रतं किमुचिता निष्कारणं वञ्चना।
तज्जागर्मि वरं निशासु यदसौ निद्रापि मे द्रोहिणी-
त्यालापैर्गणिकागणेन न च को विश्वास्यते कामुकः॥ ४६॥
भ्रूभङ्गैरतिभङ्गुरैः कुटिलितप्रान्तैस्तथा कुन्तलैः
सोपेक्षैरिव चक्षुषोः सरलितापाङ्गैश्च भङ्गयन्तरैः।
आत्मीयां चलचित्तवृत्तिरचनां वेश्या वराकी सदा
यूनां दर्शयतीव ते यदि परं मूढा न तज्जानते॥ ४७॥
वक्रोक्त्या प्रथमं निरादरतया पश्चात्ततः केनचि-
द्दातव्यं बहु तत्र यामि भवतां(ताद्) भूयोऽपि नो संगमः।
इत्युक्तोऽपि न बुध्यते खलु यदा रागी दरिद्रो जड-
श्चेटीभिर्बहुभाषितैरपि तदा हस्तार्गलैर्वार्यते॥ ४८॥
भूयः कालवशात्तमर्जितधनं दृष्ट्वाथ मद्वल्लभः
स क्रुद्धो गमितस्त्वयेति कलहो मात्रा समं जायते।
कृत्वा तं प्रति च व्रतादि विरहं स्वं नाटयित्वा तत-
स्तल्लिन्मित्रमुखेन संघिपरो वेश्याभिरुत्पाद्यते॥ ४९॥
प्रौढ प्राणद कान्त नाथ सुभगोदार प्रिय त्वां विना
किं वित्तेन गृहेण किं किमसुभिर्योऽपीति यो भाषितः।

१. पूर्वादर्शेऽप्य.

तस्यैवाद्य निराश दुर्भग पशो निर्लज्ज गच्छाधुना
धिक्त्वां निर्धनचङ्क्रमित्यपवदन्न्हीतो न वेश्याजनः ॥ ९० ॥
केचिद्द्यूतकरा भवन्ति कतिचिद्भिक्षाचराः किंकराः
केचित्कर्मकराः परे धनवतां श्लाघाकराः केचन ।
स्कन्धासक्तपटच्चरा ह्य(अ)नुचरा शोकार्दाकिंचित्करा-
स्तेऽमी कामिवराः पुरा समभवन्वेश्यासु ये गोचराः ॥ ९१ ॥
वेश्याभिर्विवशीकृतः कुपुरुषः संजायते दुर्गतो
दौर्गत्येन दुरोदरे निपतितः स्वं हारयत्येव सः ।
रुद्धो द्यूतकरैः करोति विधुरश्चौर्यं ततस्तस्करो
वध्यः स्यान्नृपतेरहो नु विषयासक्तेर्दुरन्ता गतिः ॥ ९२ ॥
आजीवः कपटानुरागकलया दोषो न दुःशीलता
वैधव्यं न च बाधते सदसतोः संभावना व्यत्ययात् ।
यत्किंचित्करणे परस्वहरणे व्रीडा न पीडाकरी
नो वा राजभयं च हा वत सुखं जीवन्ति वारस्त्रियः ॥ ९३ ॥
स्त्रीति प्रीतिकरं पुरः परिणतौ हालाहलं केवलं
सर्वस्य व्यसनं किलैतदधिकं तत्रापि वेश्येति च ।
प्राधान्येन ततस्तदेव कथितं यत्तत्प्रसङ्गेन च
व्याख्यातं गुणदोषजातमुचितं चिन्त्यं तदप्यादरात् ॥ ९४ ॥
चेतःश्वापदवागुरा दशगुणस्फारस्मरोड्डामरा
वार्तव्यावधयः (?) समुद्रलहरीपूरैरिवोत्पादिताः ।
नापि स्वाम्यसमर्पणेन न सखे सख्या (?) विरोधेन वा
गूढान्तर्मुखसाहसव्यतिकरा रक्ष्याः परं योषितः ॥ ९५ ॥
भस्मस्नानमहाव्रतं कतिपयश्रीभ्रष्टसंभावितं
सर्वापह्नवहस्तलाघवकलाकूटाक्षशिक्षात्मकम् ।
प्रत्याशापुनरुक्तहारणजगद्द्रोहं विवादास्पदं
दारिद्र्यस्य निमन्त्रणं किमपरं धिग्द्यूतलीलायितम् ॥ ९६ ॥

१. द्यूते. २. जीविका.

हिंसानिर्घृणकर्मभूः प्रतिपदानेकप्रमादप्रसू-
रव्यापारधुरंधरा प्रतिकृता ग्राम्यैर्जघन्यैः श्वभिः ।
शून्यारण्यसदाप्रवासविरसव्यायाममिथ्यागुणा
कायक्लेशफलावधिर्मतिमतां सेव्या मृगव्यापि किम् ॥ ९७ ॥
शौचाचारविचारबाह्यमखिलाकार्याहिताचार्यकं
तत्तद्गोप्यरहस्यमन्त्रभिदुरं निर्नैशमक्ष्णोस्तमः ।
यत्तद्वादकलिप्रमादविविधोन्मादैः पिशाचायितं
मद्यं मूर्तममेध्यमेतदितरादन्यस्य कस्य प्रियम् ॥ ९८ ॥
उल्काग्रातसहोदरं सहचरं नैदाघझञ्झामरु-
ज्झम्पानां हरकण्ठलालितगरद्रोणीकुटुम्बीकृतम् ।
जिह्वाग्रे करपत्रमित्रमनिशं तत्कर्कशं दुर्वचो
यस्यास्ते वद कद्वदः कथमहो सोऽपि स्वयं जीवति ॥ ९९ ॥
चण्डं दण्डमकाण्ड एव कलयन्राजा प्रजानां यमः
कुर्वन्दुर्व्ययमर्थदूषणरुचिः स्वस्यैव स द्रोहकृत् ।
सौम्यः सौम्यकरोऽतिविश्वनयनानन्दोऽभिनन्द्यः सतां
सश्रीकः कमलाकरश्च सुषमां कां कामहो नार्हति ॥ ६० ॥
संसारस्य महेश्वरो दिनपतिर्भ्रान्तस्य वैद्यो रुजां
प्रायश्चित्तमघस्य शास्त्रमपरिज्ञानस्य तोयं तृषः ।
सिद्धाज्ञा गरलस्य तीर्थसरणं वृद्धत्ववैक्लव्ययोः
सप्ताङ्गव्यसनावलेः प्रशमनोपायश्च शिक्षा सताम् ॥ ६१ ॥
ॐकारः साहसानां निजगुणनिपुणप्रत्यवेक्षा सुखानां
कादाचित्कः प्रयोगः सकलपरिचयोपाधिवैदग्ध्यबन्धुः ।
कष्टानामन्त्यकाष्ठा धनरसिकवणिग्लोकयात्राप्रसङ्गो
जीवज्जन्मान्तरं चेत्यलमतिबहुना स्वास्ति देशान्तराय ॥ ६२ ॥
यद्यप्यस्ति सविस्तराद्भुतकथाभूयिष्ठनानाविध-
व्याख्यायां निरवद्यहृद्यचरितोदारं च देशान्तरम् ।

१. गर्ववादी.

तत्रापि स्वगृहेषु कोऽपि गुणवद्गोष्ठीगरिष्ठीकृत-
स्फारोऽनारतभारतीरसपरिस्पन्दः सखे सुन्दरः ॥ ६३ ॥
ते वन्द्या मकरन्दबिन्दुमधुरैरभ्युत्थितादक्षरै-
र्येषां वान्ति सरस्वतीपरिमलोद्गारा मुखाम्भोरुहात् ।
वन्द्यास्तेऽपि तदन्तरालपतिता ये भृङ्गभङ्गीजुषः
सान्द्रानन्दकरम्बितं जगदिदं विन्दन्ति नि(न)न्दन्ति च ॥६४॥
दृष्ट्वा देशमशेषमा जलनिधेरालोक्य कौतूहला-
दास्थानीरवनीभृतां च पुनरप्यागत्य देशं निजम् ।
कारुण्यात्तरुणं जनं प्रति सतामभ्यर्थनाभिस्तथा
सोऽयं संप्रति जह्लणेन कविना मुग्धोपदेशः कृतः ॥ ६५ ॥
विद्याभ्यासपरम्परापरिचयैर्बाल्यं कृतार्थीकृतं
तारुण्यं तरुणीनिरन्तरपरीरम्भैश्च संभावितम् ।
अस्माकं सुरसिन्धुरोधसि पुनः शंभावदम्भार्चनै-
र्वृद्धत्वस्य विशुद्धतां जनयितुं कर्तव्यशेषः स्थितः ॥ ६६ ॥

इति काश्मीरिकमहाकविश्रीजह्लणप्रणीतो मुग्धोपदेशः ।

---

श्रीविश्वेश्वरपण्डितप्रणीतं

## रोमावलीशतकम् ।

नाभीह्रदे तव विराजति रोमवल्ली
धूमावली मदनपावकबोधिकेयम् ।
लोकोत्तराद्भुतकृति त्वयि पक्षवृत्ति-
युक्ता भवन्त्यपि पुरा तदभावभाजः ॥ १ ॥
वह्निं विनैव तव रोमलतामिषेण
धूमावली स्फुरति नाभिगभीरदर्याम् ।

---

१. अस्य विश्वेश्वरपण्डितस्य देशकालादिकं रुद्रेन्द्रकर्णपूरणारम्भे (काव्यमालाया ६६ मितेऽङ्के) प्रोक्तमेव. पुस्तकद्वयमस्य शतकस्यास्माभिरासादितम्. तत्रैकं जयपुरराजगुरुपर्वणीकरोपाह्वनारायणभट्टानां क-संज्ञकम्. द्वितीयं अलवरमहाराजाश्रितपार्वणीकपण्डितलक्ष्मणदत्तपन्तानां ख-संज्ञकं ज्ञेयम्.

संख्यामतीतमतिदुर्लभमत्र तेन
मन्यामहे कुसुमचापमहानिधानम् ॥ २ ॥
उद्दीप्यते तव हृदि स्मरजातवेदा
वक्षोरुहप्रविहतोऽथ तदुत्थधूमः ।
जानामि रोमलतिकापदवीमवाप्य
नाभीगभीरविवरं प्रविशन्विलीनः ॥ ३ ॥
वक्षोरुहक्षितिभृता मिलितैकभागां
रोमावलीं भुजगराजवधूं विधाय ।
दर्वीकरज्यगिरिचापजितामरारि-
रुद्रोपमेयमसमाशुगमातनोपि ॥ ४ ॥
नाभीसमाश्रयिण उज्ज्वलदीप्रमूर्ते-
र्हाराग्रगुम्फितमहामणिदीपकस्य ।
उद्गत्वरी विलसदञ्जनमञ्जरीव
राजीवगात्रि तव राजति रोमराजी ॥ ५ ॥
वक्षोरुहौ कविवरैस्तव तर्कितौ यौ
स्तम्बेरमप्रवरकुम्भतया वरोरु ।
तन्निर्गलन्मदजलौघतया ध्रुवं तै
रोमालिरूपमपि निह्नुतदेदयमेव ॥ ६ ॥
नाभीह्रदे निपततां जनमानसानां
नैवाभविष्यदित उद्धरणं कदाचित् ।
रज्जुर्हि रोमलतिकाव्यपदेशभाजी
वक्षोजशैलनियता यदि नाभविष्यत् ॥ ७ ॥
नाभीमुपेत्य सरसीं तव रोमवीथी-
स्तम्भं ततो दुरधिरोहतरं निखाय ।
वक्षोनवप्रमसुबोधसुखं मनोभू-
र्व्यग्रीकृतः सततमुग्रभियाधिशेते ॥ ८ ॥

१. 'मासां' ख. २. 'रुद्रोपमेय' क.

वेलावनी लवणिमामृतसागरस्य
तालीलता तव विराजति रोमलेखा ।
तस्याः पयोधरमयेन फलद्वयेन
माद्यन्ति नेत्रविषयीभवतापि लोकाः ॥ ९ ॥
अत्युन्नतस्तनमहीरुहदुर्गवासो
भर्गाद्भिया मकरकेतन आयताक्षि ।
रोमालिरज्जुमिलिताग्रकहाररत्न-
कुम्भं निरस्य रसमिच्छति नाभिकूपात् ॥ १० ॥
वृद्धेर्निदानमिह पुष्पशरासनस्य
वामोरु ते स्तनमयो नववामदेवः ।
यस्मिन्कुरङ्गमदपङ्कवशात्कलिन्द-
कन्या स्थिता पतति रोमलताछलेन ॥ ११ ॥
स्नेहातिरेकसततज्वलितासमेषु-
दीपेन यत्स्तनतलेऽञ्जनमाविरासीत् ।
मन्ये तदेव चिरकालभवद्गुरुत्वं
तस्मात्पतद्वदति रोमलतेति लोकः ॥ १२ ॥
आकाशमाश्रितवतीमवलोकमाना
स्रोतस्वतीं दुहितरं तुहिनाचलस्य ।
मन्ये कलिन्दतनयापि तवावलग्न-
माशिश्रिये सुतनु रोमलतामिषेण ॥ १३ ॥
शृङ्गारनामकरसान्वितनीलवर्णः
किं पारमार्थिक इतीव मनोभवेन ।
क्षिप्तः परीक्षितुमयं नलिनाक्षि मध्य-
व्योम्नि स्फुरत्यहह रोमलतेति चित्ते ॥ १४ ॥
अश्रान्तवक्रतुहिनद्युतिसंनिधाना-
दीपद्विकासमपि लब्धुमनीश्वराभ्याम् ।

१. 'निपानं' क.

अन्तर्भृतं मधु कुचाम्बुजकोरकाभ्यां
निश्च्योतदन्तरवगच्छति रोमवल्लीम् ॥ १५ ॥

त्वन्मध्यमं गगनमित्यविवादमेव
वक्षोजकाञ्चनसरोजरुचास्य भागः।
पिङ्गीकृतो ह्युभयतोऽखिलदिङ्मुखत्वा-
द्रोमालिरित्यविकृतः पुनरस्य योंऽशः ॥ १६ ॥

नूनं पयोधरयुगं तव तन्वि देह-
व्यूहं वहत्यविहतं यत एतदेव।
रोमावलीपदमुपैति गभीरनाभी-
पद्माकराभवसमुद्यतमेचकत्वम् ॥ १७ ॥

त्वन्मध्यमं प्रियतमे वियता समानं
मन्दाकिनीव समुदञ्चति हारवल्ली।
पीयूषभानुरिव नायकरम्यरत्नं
रोमावली तनुबलाहकवीथिकेव ॥ १८ ॥

सारङ्गिकामदनिपङ्करसंप्ररोह-
नीलत्वयोस्तव पयोधरयोरतीव।
संघट्टनादिव परस्परमेकखण्डो
रोमावलीपदमुपेत्य पपात मन्ये ॥ १९ ॥

मुक्तालिलोहितकमालिकयोर्द्विभाग-
संलग्नयोर्ललितरोमलतेयमन्तः।
संगम्य शीतकिरणामृत(?)दीधितिभ्यां
सिंहीसुतः कवलतामिव नीयमानः ॥ २० ॥

त्वन्मध्यमाम्बरतलादहितुल्यरूपो
रोमावलीमयविधुंतुद एष सुभ्रु।
लिप्सुर्मुखेन्दुमिव जिघ्रसिपासमेतः
प्रोद्यत्स्तनक्षितिधरान्वयतो निरुद्धः ॥ २१ ॥

१. 'भृत' ख. २. 'करान्तर' क.

हाराग्रभूग्रथितलोहितकांशुजाल-
नीरन्ध्रनाभिमिलिता तव रोमराजिः ।
पारीक्षितक्रतुविदीपितवह्निकुण्ड-
मध्ये विभाति पतयालुरिवोरगस्त्री ॥ २२ ॥
श्रीखण्डसङ्गविरहेण विहीनमुच्चै-
र्वक्षोरुहं मलयपर्वतमारुरुक्षुः ।
दर्वीकरी तव विलासिनि रोमराजी
गारुत्मतान्वयभयादध एव तस्थौ ॥ २३ ॥
नाभी तवोज्ज्वलरसामृतपूर्णवापी
तस्यां निधाय विधया वरहारयष्टिम् ।
मीनध्वजं मदयितुं हृदयाधिवासं
रोमावली रसझरी समकॢप्यतोर्ध्वम् ॥ २४ ॥
वक्षोरुहक्षितिधरद्वितयान्तराला-
दुत्थायिनी शुचिरसस्य सरस्वतीयम् ।
उन्निद्रनीलनवनीरजहासिनीयं
रोमालिरुल्लसति जीवितवल्लभे ते ॥ २५ ॥
वक्षोरुहाद्रिपतनप्रतिबन्धहेतु-
संयोगवस्त्वदुदरं वियदस्त्यपूर्वम् ।
यस्मिन्विराजति समायतरोमवल्ली-
स्वातीपथो विलसदञ्जनगञ्जनश्रीः ॥ २६ ॥
नाभीदरीज्वलदनङ्गकृशानुमध्ये
यूनां मनांसि रससंस्तिमितानि पेतुः ।
तद्दाहतः समुदिता प्रतिभाति रोम-
राजीमिषेण वरवर्णिनि धूमलेखा ॥ २७ ॥
धूमो हि वह्न्यनुमितौ मत एव हेतु-
रित्येवमीरयति तार्किकचक्रमत्र ।

१. 'श्रीः' ख. २. 'पतयोः' ख. ३. 'वियदास पूर्वम्' क.

रोमावली मरकतोपलरेखिकेयं
नीलारविन्दसुषमाक्षि समुज्जिहीते ।
केनान्यथा कुसुमबाणभुजंगदष्टं
चेतः समुच्छ्वसिति दृग्गतया तयापि ॥ ३५ ॥
उद्दाममन्मथविकारविमोहगाढ-
ध्वान्तच्छटा सुतनु संक्रमणस्वभावा ।
रोमावली तव कुतोऽपरथा युवाक्ष्णां
तद्दर्शनात्तिमिरिता हरितो भवन्ति ॥ ३६ ॥
स्वानन्तरोन्नतपयोधरमण्डलेन
ग्रीष्मेण यौवनमयेन महोष्मभाजा ।
नीता शिशुत्वरजनी कृशिमानमेषा
नूनं चकास्ति तव रोमलताछलेन ॥ ३७ ॥
जागर्ति मानसगतो रस उज्ज्वलो यः
स्वाधिक्यतः स किल मातुमिहासमर्थः ।
वक्षोजभूमिधरसंधिपथेन मन्ये
वामाक्षि ते वहति रोमलतापदेशात् ॥ ३८ ॥
बाल्यं दशाननमिवास्तमितं विधातुं
रोम्णामियं ततिरिति व्यपदिश्य शङ्के ।
लावण्यवारिनिधिमुत्तरितुं रतीश-
रामेण सेतुरिह चारुतरो न्यबन्धि ॥ ३९ ॥
पीयूषदीधितितया जनितप्रसङ्गो
योऽङ्को मुखेन तव तन्वि तिरस्कृतोऽभूत् ।
मन्ये स एव कुचशैलनिपातभिन्नो
विज्ञायते जगति रोमलतेति लोकैः ॥ ४० ॥
वक्षोजपर्वततटीषु कृताटनानां
नाभीसरः समवगाहितुमुत्सुकानाम् ।

१. 'परि' ख.

रोमालिधूमलतिकाकुचपर्वतेन
नाभीह्रदेन च समं व्यतिषङ्गमेति ॥ २८ ॥
स्वज्ञानजन्यदहनानुमितौ विशङ्कं
धूमोऽपि याति विषयत्वमितीव वक्तुम् ।
नूनं व्यधत्त हृदये तव रोमराजि-
व्याजेन धूमवितर्तिं विधिरुद्धिवादाम् ॥ २९ ॥
एकार्थवाचकमिदं दहनासमेषु-
शब्दद्वयं नियतमाकलयामि कान्ते ।
धूमेन रोमलतिकाव्यपदेशभाजा
स्यादन्यथा तदनुमाप्रमितिः कथं वा ॥ ३० ॥
कामोपजीवकमिमं मुखरेवतीश-
मासेवितुं तपनजासरिदुद्गतेव ।
तद्भीत्युदीतकृशता तव रोमराजी
निर्भाति मुक्तवलिरूपकऋजुप्रवाहा ॥ ३१ ॥
सर्वाङ्गसंचरणतः समनन्तरं य-
द्यूनां दृशस्तनमहीधरमध्यरुक्षन् ।
मन्ये ततो निपतनं समुपेयुषीणां
तासां विभाति पदवी तव रोमवीथी ॥ ३२ ॥
रत्नावलीविविधकान्तिकदम्बकेन
चापं पयोधरयुगे तव निर्मितं यत् ।
कामस्य रुद्रविजयाय तदीयमौर्वी-
लेखेव रोमलतिका दयिते चकास्ति ॥ ३३ ॥
त्वच्चेतसि स्थितवतो मकरध्वजस्य
संरक्षणाय दनुजद्विपता निदिष्टम् ।
स्वाश्मच्छलेन गरुडं समवेक्ष्य रोम-
श्रेणीमिषात्स्तनभवाहिरपागमत्किम् ॥ ३४ ॥

१. 'व्यतिरेक' ख. २. 'लेखा' ख.

रोमावली मरकतोपलरेखिकेयं
नीलारविन्दसुपमाक्षि समुज्जिहीते ।
केनान्यथा कुसुमबाणभुजंगदष्टं
चेतः समुच्छ्वसिति दृग्गतया तयापि ॥ ३५ ॥
उद्दाममन्मथविकारविमोहगाढ-
ध्वान्तच्छटा सुतनु संक्रमणस्वभावा ।
रोमावली तव कुतोऽपरथा युवाक्ष्णां
तद्दर्शनात्तिमिरिता हरितो भवन्ति ॥ ३६ ॥
स्थानन्तरोन्नतपयोधरमण्डलेन
ग्रीष्मेण यौवनमयेन महोष्मभाजा ।
नीता शिशुत्वरजनी कृशिमानमेषा
नूनं चकास्ति तव रोमलताच्छलेन ॥ ३७ ॥
जागर्ति मानसगतो रस उज्ज्वलो यः
स्वाधिस्यतः स किल मातुमिहासमर्थः ।
वक्षोजभूमिधरसंधिपथेन मन्ये
वामाक्षि ते वहति रोमलतापदेशात् ॥ ३८ ॥
बाल्यं दशाननमिवास्तमितं विधातुं
रोम्णामियं ततिरिति व्यपदिश्य शङ्के ।
लावण्यवारिनिधिमुत्तरितुं रतीश-
रामेण सेतुरिह चारुतरो न्यबन्धि ॥ ३९ ॥
पीयूषदीधितितया जनितप्रसङ्गो
योऽङ्को मुखेन तव तन्वि तिरस्कृतोऽभूत् ।
मन्ये स एव कुचशैलनिपातभिन्नो
विज्ञायते जगति रोमलतेति लोकैः ॥ ४० ॥
वक्षोजपर्वततटीषु कृताटनानां
नाभीसरः समवगाहितुमुत्सुकानाम् ।

१. 'परि' ख.

यूनां मनोमदकलद्विपनायकानां
बन्धाय रोमलतिका तव शृङ्खलेव ॥ ४१ ॥
एषा वशीकरणसिद्धमहाञ्जनस्य
रेखा व्यधायि तव रोमलता स्मरेण।
नेत्रेन्द्रियाणि जगतां सति यत्प्रयोगे
नालं भवन्ति विषयान्तरसंगमाय ॥ ४२ ॥
तारुण्यघर्मसमये तव देहभूमौ
संचारिणां युवकदम्बकलोचनानाम्।
विश्रामकाम इव कामिनि काम आधा-
न्नाभीप्रहिं कुचघटौ कचराजिरज्जुम् ॥ ४३ ॥
अभ्युद्गता तव पयोधरमध्यदेशा-
द्विद्योतते तडिदिवाहह रोमराजी।
यूनां विवेकधृतिमुख्यगुणक्षयस्य
संसूचनाय सुतनूदितमेचकत्वा ॥ ४४ ॥
रोमावली तव नवीनपयोदवीथि-
रैरावतः किमु पयोधर एतदूर्ध्वम्।
यस्यां विभाति नवमौक्तिकहारवल्ली-
निःस्पन्दमन्दगतिका बिसकण्ठिकेव ॥ ४५ ॥
आरामताजुषि मनोजनृपो भवत्यां
वाणी कुहूरुतरुतं युवता निदाघः।
रोमावली घनलता वदनं सुधांशु-
र्हासो हिमं करयुगं मृदुलं शिरीषम् ॥ ४६ ॥
काले महातरुणताजनितान्धकारे
त्वन्मानसालयमनङ्गमभिव्रजन्ती।
नीलं निचोलमुपगृह्य कृशाङ्गयष्टी
रोमावली रतिरिव प्रविविक्षुरन्तः ॥ ४७ ॥

1. 'लेखा' ख.

वक्षोजशैलशिखरं समवाप्य बाल्य-
तीक्ष्णद्युतौ रसहरेऽस्तमुपप्रयाति ।
संध्येवलैहितकररश्मिभिरुज्झिहीते
रोमालिरुल्लसति सुभ्रु तमोलतेव ॥ ४८ ॥
या तस्य पूजनविधौ हरिणीमदस्य
धारा त्वया प्रियतमे प्रथमं व्यतारि ।
सैव त्वदीयहृदये कृतसंनिवासं
रोमालिरीक्ष्यत उपस्थितमीनकेतुम् ॥ ४९ ॥
निर्जग्मुषी कुचतटात्तव रोमराजी
नाभीमुखं प्रविशती नितरां चकास्ति ।
चामीकराम्बुजगुलुच्छमुपेक्ष्य फुल्ल-
मम्भोरुहं मधुतृषा भ्रमरावलीव ॥ ५० ॥
लोकत्रयं वशयितुं कुसुमायुधस्य
तारुण्यमभ्युदयते दहनीयमस्त्रम् ।
तस्यैव संभवविबोधनकोविदेयं
रोमावली स्फुरति धूमलता कृशाङ्गि ॥ ५१ ॥
प्रीत्यै प्रसूनधनुषो नवयौवनेन
नाभीसरोवरमिवोत्सृजतोच्छ्रिता ते ।
तत्संनिधौ सुरुचिरासितवैजयन्ती
रोमावलीति वरवर्णिनि वर्णयन्ति ॥ ५२ ॥
वक्षोरुहात्मकहिरण्यमहीधरोऽयं
विभ्राजते स्मरधनुर्भुवि दभ्रभावम् ।
तस्यैकतो मुखरुचामपरः प्रकाशो
रोमच्छटान्धतमसं परतो विभाति ॥ ५३ ॥
त्वं दक्षिणासि नितरां धृतचन्दनोऽयं
वक्षोरुहोऽपि मलयो हृदयावनौ ते ।

---

१. 'वस्रं' क.

लङ्का नखक्षतपलाशवती यतोऽत्र
रोमावली रजनिरस्ति सदैकरूपा ॥ ५४ ॥
वक्षोजहाटकगिरीन्द्रतटस्थनील-
जम्बूफलस्रुतरसोत्करनिर्मितेयम् ।
स्रोतस्वती वहति रोमलता त्वदीया
यस्याः सुवर्णघटितोभयभागभूमिः ॥ ५५ ॥
तारुण्यपावकभवा कचराजिधूम-
वीथी विराजति मृगाक्षि विलक्षणैव ।
या गोलकेन सह संगममप्यनाप्ता
दृष्टैव दृष्टिविकृतिं वितनोति यूनाम् ॥ ५६ ॥
मन्दाकिनीं कनकभूमिधरप्रपात-
निष्पातिनीं समवलोक्य तदीर्ष्ययेव ।
मन्ये कलिन्दतनया तव रोमराजि-
व्याजेन सुभ्रु कुचवप्रतटात्पपात ॥ ५७ ॥
तन्वि त्वदीयहृदये परमाधिराज्यं
नेतुं मनोभवमशेषजगत्सु नूनम् ।
वक्षोरुहौ कनकजावभिषेककुम्भौ
रोमालिहारलतिके चमरेऽसिताच्छे ॥ ५८ ॥
आवासधाम्नि हृदये तव मन्मथस्य
कुम्भौ सुवर्णघटितौ निहितौ स्तनौ किम् ।
मन्ये तयोर्निपतनप्रतिकारहेतो
रोमालिरक्रियत मारकतीव यष्टिः ॥ ५९ ॥
रोषान्धकारनिकरो दयितं प्रति प्रा-
ग्वामाक्षि ते हृदय एव तिरोहितोऽभूत् ।
मन्ये स एव तव रोमलतामिषेण
प्रादुर्बभूव चिरसंभृतिभूतभूमा ॥ ६० ॥

१. 'धूमलता' क. २. 'दृष्टैव' क.

यूनां वियोगदहनाहितदाहभाजा-
मुज्ज्वासनेन य उपार्जि मनोभवेन ।
मन्ये सुदुष्कृतभरो हृदये स्थितं त-
मन्वेतुमावसति रोमलताच्छलेन ॥ ६१ ॥
यावन्ति जाग्रति पुरा हृदये त्वदीये
बीजानि चन्द्रमुखि कामकलाविकृत्याः ।
तान्येव हाररससेकवशेन रोम-
राजीमिपात्सकलमङ्कुरितानि मन्ये ॥ ६२ ॥
वासाय पुष्पधनुषो हृदयं तवेदं
साधु प्रसाधयितुमागतवद्युवत्वम् ।
रोमालिकैतवत आयतनीलसूत्र-
लेखां विभागजननीमिव तन्वि चक्रे ॥ ६३ ॥
त्वन्मानसे निवसता कुसुमायुधेन
मायासु शम्बरमहासुरतो बुधेन ।
व्यामोहनाय दहनालिकलोचनस्य
रोमावली तिमिरवीथिरिव व्यकासि ॥ ६४ ॥
हारस्तवैष मकरध्वजपालनाय
संकर्षणोऽतिविशदो हृदि नित्यमास्ते ।
प्रत्यग्रमेघदलमेचककान्तिरेषा
रोमावली वृहतिकालतिका तदीया ॥ ६५ ॥
तारुण्यतीक्ष्णरुचिना तव कामकेली-
मोहान्धकारमखिलं निरकासि चित्तात् ।
यन्मत्तकाशिनि हठेन तदेव रोम-
राजीति नूनमिह गोचरयन्ति लोकाः ॥ ६६ ॥
येन व्यधायि जनकेन पुरास्य दाहो
भल्लेक्षणे निवसता पुरसूदनस्य ।

---

१. 'उल्लासनेन' ख. २. 'दन्त' क.

तस्य त्वदीयहृदये वसता स्मरेण
धूमस्य रोमलतिकेति कुतो ग्रहः किम् ॥ ६७ ॥
आलम्ब्य ते स्तनमहीधरमच्छहारं
मन्दाकिनीरुचिरमुग्रजिगीषयेव ।
रोमावलीमिषसमुन्नतधूमलेखा-
मिन्दीवराक्षि पिबतीव रतेरधीशः ॥ ६८ ॥
तारुण्यशक्तिजनुषा कृतभारतार्ह-
व्यासेन ते स्तनयुगेन मृगीमदाभाम् ।
मत्स्यीं ग्रहीतुमनसा निरमायि नूनं
नीहारवीथिरिह रोमलतापदेन ॥ ६९ ॥
वक्रेन्दुकान्तिनिकरैः कुचचक्रवाक-
युग्मस्य यत्र समुदञ्चति विप्रलम्भः ।
रोमावलीतिमिरलौहितिकार्कयोश्च
वासो यदेष मदनस्य नवीनसर्गः ॥ ७० ॥
संकेतभूः प्रियतमे हृदयं त्वदीयं
नूनं विहर्तुमनसो रतिकामयोः किम् ।
यस्मिन्विभाति विशदत्रिवलीतटिन्यां
रोमावलीमयनवीनतमालवल्ली ॥ ७१ ॥
अद्यापि रौद्रनयनानलदाहजन्यां
बद्धां रुजं वहति सुन्दरि पुष्पधन्वा ।
एतत्सुहृत्तरुणिमा तव हृत्स्थितेऽस्मि-
न्रोमालिशैवललतां निदधाति यस्मात् ॥ ७२ ॥
रोमावलीलवणिमामृतदीर्घिकायां
शैवालवल्लरिरुदेति विशङ्कमेषा ।
नाशिष्यतां कथममुं कुचचक्रवाकौ
ध्वान्तभ्रमो यदि तयोर्हृदि नाभ्युदैष्यत् ॥ ७३ ॥

१. 'धूमलता' क. २. 'रोमावलीकपटनिह्नुततालवल्ली' क. ३. 'नूनमलिकेक्षण' क.

रोमावली मरकतोपलकोमलेयं
शैवालतः कथमिवाम्युपयातु भेदम् ।
यद्गोचरीकरणमात्रत उत्पलाक्षि
गृध्नोति कामुकजनेक्षणमीनसंघः ॥ ७४ ॥
शुद्धेन्द्रनीलघटितध्वजयष्टिरेषा
रोमावली त्रिजगतीजयकृत्स्मरस्य ।
यस्या विभाति शिखरे कुचसंश्रयोऽयं
सत्पत्रभङ्गिमिषतो मकरः सुनेत्रे ॥ ७५ ॥
त्वन्मानसे निवसता मकरध्वजेन
संतर्क्य साध्वसमलीकविलोचनोत्थम् ।
स्वप्रत्यनीकविनिरोधनहेतुसिद्ध-
मन्त्राक्षरालिरिव रोमलता व्यलेखि ॥ ७६ ॥
वाचा कुहूरुतरुतोपमया प्रिये ते
क्रुसाह्वया निजमनेहसमन्तरेण ।
वक्त्रामृतद्युतिभिया समुपस्थितेयं
रोमालिरूपककुहूः कुचपर्वताधः ॥ ७७ ॥
विद्यामधीत्य तत एव हतं तमेव
कामेन शम्बरमहादितिजं निरीक्ष्य ।
रोमावलीपदमुपेत्य विधुंतुदोऽमुं
त्वन्मानसस्थमभियुङ्क इवोत्पलाक्षि ॥ ७८ ॥
वैरानुबन्धनविधेर्विधुरावधित्व-
मालोक्य पुष्पधनुषा सुकुमारगात्रि ।
रौद्रीयभालनयनानलवारणाय
रोमालिसूर्यतनया हृदि ते न्यधायि ॥ ७९ ॥
वक्षोजशैलशिखरान्मुखसाम्यमाप्तुं
नूनं पपात वरगात्रि सुधामयूखः ।

१. 'विहितो' क. २. 'साध्वसमयेऽलिकलोचनोत्थम्' क. ३. 'उड्डीयमान' क.

भग्नस्य तस्य कणिका इव हारमुक्ता-
 स्तल्लाञ्छनस्य तव रोमलतेति मन्ये ॥ ८० ॥
वह्निर्न दाहमुपगच्छति वह्निनैवे-
 त्येवं विभाव्य मदनोऽधृत वह्नितां नु ।
यस्मात्तदीयवसतौ हृदये त्वदीये
 रोमालिधूमततिरुल्लसति प्रकामम् ॥ ८१ ॥
वामेक्षणे तव मुखेन सुधाकरेण
 द्वेषान्निगृह्य तिमिरप्रकरं प्रसह्य ।
क्षिप्त्वा कुचक्षितिधरादथ रोमलेखा-
 व्याजेन नाभिविवरे किमु संन्यवेशि ॥ ८२ ॥
भूयो रसं तव पयोधरमण्डलेऽस्मि-
 न्यूनां मनःसु परिवर्षति निर्विरामम् ।
दर्वीकरी सुतनु रोमलतास्वरूपा
 नूनं प्रवेष्टुमभिकाङ्क्षति नाभिरोकम् ॥ ८३ ॥
स्फूर्जत्पुरत्रयविरोधिललाटनेत्र-[1]
 ज्वालोदितज्वरमनङ्गममुं हृदिस्थम् ।
सेक्तुं हलायुधभियेव कलिन्दकन्या
 रोमावलीत्वमुपगम्य किलोपतस्थे ॥ ८४ ॥
वक्षोरुहौ वरसुवर्णसरोजगुच्छौ
 मुक्तावली पुनरखण्डिततण्डुलाली ।
दीपोऽतिदीप्रतरलः स्मरपूजनाय
 रोमावली लघुजधूमलता कृशाङ्गि ॥ ८५ ॥
भ्रूवल्लिकार्मुकमथाञ्जनवीथिमौर्वी
 लब्ध्वा कटाक्षविशिखांस्तव काम औज्झत् ।
ज्यां रोमराजिरिति चापमथावतंस
 इत्याशुगान्कबरिकासुमना इतीव ॥ ८६ ॥

१. 'विपक्षललामनेत्र' क.

ब्रह्मादयोऽप्यतिवशंवदितेन्द्रिया ये
चेतोभुवा वशमनायिषतात्मनः प्राक् ।
तेषामिह स्फुटतरा अयशःप्ररोहा
व्यक्तास्त्वदीयहृदि रोमलतामिषेण ॥ ८७ ॥
हुत्वा युवत्वदहने रतिजीवितेश-
कापालिकेन मदिराक्षि मनांसि यूनाम् ।
निर्जंतुमुग्रमिव रोमलताकृपाणी
सिद्धेन साधु विधिना विदधे विधेया ॥ ८८ ॥
कामेन ते हृदयसीम्नि निवासभाजा
संप्रेक्ष्य संनिहितमीशमुरोजरूपम् ।
तं विध्यता नखरजन्यपदार्धचन्द्रै-
र्मौर्वी परेव निहिता तव रोमलेखा ॥ ८९ ॥
अन्तर्निवासमुपयातवतः स्मरस्य
द्वारे यथा हृदि विराजदुरोजकुम्भे ।
दौवारिकीव हृदि ते नवयौवनश्री-
स्तन्नीलयष्टिरिव रोमलता विभाति ॥ ९० ॥
भीत्या भवस्य भजता न परिस्फुटत्व-
मप्यक्षतामखिलमेव निनीषता च ।
कामेन ते हृदि गतेन वरोरु रोम-
राजीमिषेण निहिता किल काचलेखा ॥ ९१ ॥
कर्णान्तकर्षणभरादवनम्यमाना-
द्बाणासनात्सुतनु पुष्पशरासनस्य ।
या श्च्योतितेऽच्युततरा मकरन्दवीथी
तामेव रोमलतिकां ब्रुवते जगन्ति ॥ ९२ ॥
दूरस्थितानि हृदयानि सुभेदभिन्ना-
न्यालोक्य तानि पुनरेकगतानि कर्तुम् ।

१. 'सुवेध' क.

आकर्षणाञ्जनततिः किमु रोमवल्ली-
कामेन ते व्यरचि जेतुमखेदितेन ॥ ९३ ॥
अभ्युच्छ्रितं किमपि यौवनसेवकेन
मुक्तावलीद्वितयचामरमन्तरेण।
रोमावली हृदयगस्य मनोभवस्य
मायूरमातपपिधानमिवावभाति ॥ ९४ ॥
वक्षोजकाञ्चनमहीभृति यत्कलाङ्क-
रूपः समुद्गमुपागमदर्धचन्द्रः।
तत्रास्ति कारणमियं तव रोमराजि-
रूपा यदर्धरजनी नवनीरजाक्षि ॥ ९५ ॥
ईशानभालनयनानलदाहभाजो
मीनध्वजस्य परितापनिवारणाय।
सज्जीकृतेव नसितोत्पलपत्रशय्या
रोम्णामियं तव लता बलवद्विभाति ॥ ९६ ॥
धूमोर्ध्वगत्यनुमिताद्विरहाद्वरिम्ण-
स्तत्पार्थिवत्त्वविषये विमतिं विहन्तुम्।
किं तावकीनहृदि मन्मथवह्निधूमो
बाले व्यधायि विधिना पतयालुरेषः ॥ ९७ ॥
धूम्याटभावमुपबिभ्रति नूनमत्र
यूनां मनांसि नलिनायतलोचनान्ते।
यन्मन्मथेन निरमीयत रोमराजि-
धूमावली खलु वशीकरणाय तेषाम् ॥ ९८ ॥
त्वन्मानसे निवसता झषकेतनेन
*सार्धं रतेरतितरां विहृतिं चरन्त्या।*
तालच्छिदेव वरवर्णिनि कर्णदेशा-
द्विस्रंसिनी स्फुरति ते हृदि रोमराजी ॥ ९९ ॥

१. 'भेत्तुं' क.

उज्जृम्भमाणनवयौवनधर्मकाल-
विस्तारभृद्घनशिरीषरजश्छटेव ।
यूनां मनांसि नितरामुपलोभयन्ती
रोमालिरन्तरतिसंमदमातनोति ॥ १०० ॥

सुरेन्द्रमौलिमुकुटामलरत्नदीप-
लक्ष्मीधराख्यबुधवर्यतनूद्भवेन ।
विश्वेश्वरेण हृदयालुहृदां मदाय
रोमावलीशतकमेतदकारि चारु ॥ १०१ ॥

इति पार्वतीयश्रीविश्वेश्वरपण्डितप्रणीतं रोमावलीशतकम् ।

---

## वेदान्ताचार्यश्रीवेङ्कटनाथप्रणीता

## सुभाषितनीवी ।

अनिपुणपद्धतिः ।

प्रथमसुजनाय पुंसे मह्यमपि प्रथमदुर्जनाय नमः ।
सर्वं हृतः कृतं यौ सकृदुपकारापकाराभ्याम् ॥ १ ॥
प्रमितिपरिष्कृतिमुद्रा सहृदयहृदयैः समर्पिता कविभिः ।
भवति सुभाषितनीवी परगुणचौरैरहार्यार्था ॥ २ ॥
पश्यति परेषु दोषानसतोऽपि जनः सतोऽपि नैव गुणान् ।
विपरीतमिदं स्वस्मिन्महिमा मोहाञ्जनस्यैषः ॥ ३ ॥
यत्र पयः प्रभृति स्वं भुक्त्वा सत्यानुपक्तधीश्चोरः ।
पशुवृत्तिगणे तस्मिन्नपि नाम यशोदया वृत्तम् ॥ ४ ॥

---

१. 'विस्तारिवर्धन' क. २. अयं वेदान्ताचार्यः खिस्ताब्दीयत्रयोदशशतकोत्तरार्ध आसीद्द्रविडदेशे. अधिकारसंग्रह–तत्त्वमुक्ताकलाप–न्यायसिद्धाञ्जन–पादुकासहस्र–यदुवंशादिपञ्चकाव्य–रहस्यत्रयसार–संकल्पसूर्योदयाद्या एतत्प्रणीता बहवो ग्रन्था: समुपलभ्यन्ते. अस्याः सुभाषितनीव्या एकं द्रविडलिपिमुद्रितं पुस्तकमुपलब्धम्. तत्प्रतिरूपकं च सांप्रतं जयपुरमलंकुर्वाणानां श्रीविठ्ठनरसिंहाचार्याणां साहाय्येन विहितम्. कवेर्देशकालादिकं च तैरेव दर्शितम्.

हरिकरपुष्करहंसं हारमणीनां प्रसूतिमिव लक्ष्म्याः ।
पित्तेन पाञ्चजन्यं पीतं पश्यन्निपश्यतु कम् ॥ ५ ॥
स्फटिकस्वभावशुद्ध्या स एव सम्भवति सर्वमारोपम् ।
तदपि न तत्रानास्था तदुपाधिषु वा भवत्यास्था ॥ ६ ॥
स्वल्पपरिशेषितजलधेः सविधे संजातडम्बरं जलदम् ।
प्रहसन्ति पाण्ड्यनद्यः शुक्तिमुखैर्मौक्तिकस्त्यानैः ॥ ७ ॥
प्रतिपन्नवामदृष्टिः स्तन इव कश्चित्समुन्नतोऽप्यधिकम् ।
पतनमधिगम्य समये परिहासरसावहो भवति ॥ ८ ॥
बहु विदधत्युपकारान्गुह्या दुरितं प्रकाश्य पिदधति च ।
सुहृदि विहिताहितं य.........न्न प्रत्युपकरोति न तत् ॥ ९ ॥
एधान्दहन्ति शान्तान्येभ्यः सिध्येयुरसितवर्त्मानः ।
अगणितनिजप्रकाशैः किमाश्रयाशैरनास्थमिह ॥ १० ॥

नवदलपुटे कल्प्या यस्य प्रभोरपि कल्पश्री-
नैटपरिवृढो यस्याधस्ताच्छ्रमं शमयिष्यति ।
वटविटपिनस्तस्याङ्कुरानुत्कटपल्लवा-
न्स्थपुटचटसापेक्षी भिक्षुः प्रतिक्षणमीक्षते ॥ ११ ॥
निरवधिगुणग्रामे रामे निरागसि वागसि-
स्फुरणमुषितालोका लोका वदन्ति सदन्तिके ।
वरतनुहृतिं वालिद्रोहं मनागपि सर्पणं
परिमितगुणे स्पष्टावद्ये मुधा किमुदासते ॥ १२ ॥

इत्यनिपुणपद्धतिः प्रथमा ।

---

अथ हसपद्धतिः ।

तदेव गृह्यतां नाम च्छागमण्डूकरासभैः ।
तिसृणां तावता हन्त मूर्तानां किमिहागतम् ॥ १ ॥
अण्डजाः पुण्डरीकेषु समुद्रेषु जनार्दनाः ।
नीलकण्ठाश्च शैलेषु निवसन्ति न तेन ते ॥ २ ॥

कामं लिखतु संस्थानं कश्चिद्रूपं च भास्वतः ।
अभित्तिविहितालम्बमालोकं विलिखेत्कथम् ॥ ३ ॥
अपि सत्पथनिष्ठानामाशाः पूरयितामपि ।
अगस्त्यवृत्तिर्मेघानां हन्त मालिन्यकारणम् ॥ ४ ॥
अस्तु तावदगस्त्यस्य जह्नोर्महिमनिह्नवः ।
का कथा तस्य बालस्य विश्वग्रासेऽप्यतृप्यतः ॥ ५ ॥
दृष्टसारङ्गयूथोऽपि दंष्ट्रानखरवानपि ।
भूभृत्कटकसंस्थोऽपि सारमेयो न सिंहति ॥ ६ ॥
सत्पथे छादयन्मित्रमपि व्यालस्तमोमयः ।
अतीतपर्वा जगतामदृश्यः सहसा भवेत् ॥ ७ ॥
धुर्याणामपि सत्कार्यगुणशालिविमर्दिनाम् ।
अनागमविदां युक्तमपनीतेर्निवारणम् ॥ ८ ॥
बलोत्तरेण हरिणा नागमल्लविभेदिना ।
शृगालः साम्यमाकाङ्क्षञ्शौर्याधिक्यं न विन्दति ॥ ९ ॥
सुदर्शनभृता कश्चिदजहत्कीर्तिमत्सरः ।
महाशान्तपदाकर्षी जलजन्तुर्निगृह्यते ॥ १० ॥
गतिर्व्योम्ना तत्किं गरुडमभिटीकेत चटकः
पिबत्वम्भःक्षारं न खलु कलशीसूनुरलसः ।
कलः कण्ठे नादः क इव मशके किंनरपतेः
कथंचित्साधर्म्यं क्षिपति नहि वैधर्म्यनियमम् ॥ ११ ॥
निमीलयतु लोचने नहि तिरस्कृतो भास्करः
श्रवः स्थगयतु स्वयं परभृतः किमु ध्वाङ्क्षति ।
स्वयं भ्रमतु बालिशो न खलु बम्भ्रमीति क्षितिः
कदर्थयतु मुष्टिभिः कथय किं नभः क्षुभ्यते ॥ १२ ॥

इति दृष्टपद्धतिर्द्वितीया ।

हरिकरपुष्करहंसं हारमणीनां प्रसूतिमिव लक्ष्म्याः ।
पित्तेन पाञ्चजन्यं पीतं पश्यन्भिपज्यतु कम् ॥ ५ ॥
स्फटिकस्वभावशुध्या स एव सन्भवति सर्वमारोपम् ।
तदपि न तत्रानास्था तदुपाधिषु वा भवत्यास्था ॥ ६ ॥
स्थलपरिशेषितजलधेः सविधे संजाततडम्बरं जलदम् ।
प्रहसन्ति पाण्ड्यनद्यः शुक्तिमुखैर्मौक्तिकस्त्यानैः ॥ ७ ॥
प्रतिपन्नवामदृष्टिः स्तन इव कश्चित्समुन्नतोऽप्यधिकम् ।
पतनमधिगम्य समये परिहासरसावहो भवति ॥ ८ ॥
बहु विदधत्युपकारान्गुप्त्या दुरितं प्रकाश्य पिदधति च ।
सुहृदि विहिताहितं य·········न्न प्रत्युपकरोति न तत् ॥ ९ ॥
एधान्दहन्ति शान्तान्येभ्यः सिध्येयुरसितवर्त्मानः ।
अगणितनिजप्रकाशैः किमाश्रयाशैरनास्थमिह ॥ १० ॥
नवदलपुटे कल्प्या यस्य प्रभोरपि कल्पधी-
नेष्टपरिवृढो यस्याधस्ताच्छ्रमं शमयिष्यति ।
वटविटपिनस्तस्याङ्कुरानतुल्कटपल्लवा-
न्स्वपुटघटसापेक्षी भिक्षुः प्रतिक्षणमीक्षते ॥ ११ ॥
निरवधिगुणग्रामे रामे निरागसि वागसि-
स्फुरणमुषितालोका लोका वदन्ति सदन्तिके ।
वरतनुहृतिं वालिद्रोहं मनागपि सर्पणं
परिमितगुणे स्पष्टावद्ये मुधा किमुदासते ॥ १२ ॥

इत्यनिपुणपद्धतिः प्रथमा ।

---

अथ दक्षपद्धतिः ।

तदेव गृह्यतां नाम च्छागमण्डूकरासभैः ।
तिसृणां तावता हन्त मूर्तीनां किमिहागतम् ॥ १ ॥
अण्डजाः पुण्डरीकेषु समुद्रेषु जनार्दनाः ।
नीलकण्ठाश्च शैलेषु निवसन्ति न तेन ते ॥ २ ॥

कामं लिखतु संस्थानं कश्चिद्रूपं च भास्वतः ।
अभित्तिविहितालम्बमालोकं विलिखेत्कथम् ॥ ३ ॥
अपि सत्पथनिष्ठानामाशाः पूरयितामपि ।
अगस्त्यवृत्तिर्मेघानां हन्त मालिन्यकारणम् ॥ ४ ॥
अस्तु तावदगस्त्यस्य जह्नोर्महिमनिह्नवः ।
का कथा तस्य बालस्य विश्वग्रासेऽप्यतृप्यतः ॥ ५ ॥
दष्टसारङ्गयूथोऽपि दंष्ट्रानखरवानपि ।
भूभृत्कटकसंस्थोऽपि सारमेयो न सिंहति ॥ ६ ॥
सत्पथे छादयन्मित्रमपि व्यालस्तमोमयः ।
अतीतपर्वा जगतामदृश्यः सहसा भवेत् ॥ ७ ॥
धुर्याणामपि सत्कार्यगुणशालिविमर्दिनाम् ।
अनागमविदां युक्तमपनीतेर्निवारणम् ॥ ८ ॥
बलोत्तरेण हरिणा नागमल्लविभेदिना ।
शृगालः साम्यमाकाङ्क्षञ्शौर्याधिक्यं न विन्दति ॥ ९ ॥
सुदर्शनभृता कश्चिदजहत्कीर्तिमत्सरः ।
महाशान्तपदाकर्षी जलजन्तुर्निगृह्यते ॥ १० ॥

गतिर्व्योम्ना तत्किं गरुडमभिटीकेत चटकः
पिबत्वम्भःक्षारं न खलु कलशीसूनुरलसः ।
कलः कण्ठे नादः क इव मशके किंनरपतेः
कथंचित्साधर्म्यं क्षिपति नहि वैधर्म्यनियमम् ॥ ११ ॥
निमीलयतु लोचने नहि तिरस्कृतो भास्करः
श्रवः स्थगयतु स्वयं परभृतः किमु ध्वाङ्क्षति ।
स्वयं भ्रमतु बालिशो न खलु बम्भ्रमीति क्षितिः
कदर्थयतु मुष्टिभिः कथय किं नभः क्षुभ्यते ॥ १२ ॥

इति दृष्टपद्धतिर्द्वितीया ।

अथ दुर्वृत्तपद्धतिः ।

गुणजालप्रकर्षेऽपि धीवरत्वेऽपि जन्मनः ।
सर्वतीर्थावगाहेऽपि नीचवृत्तिर्न शस्यते ॥ १ ॥

द्विजराजाङ्कसंस्थोऽपि सन्मार्गाकारवानपि ।
विशुद्धिरहितः कश्चिन्न विन्दत्यकलङ्कताम् ॥ २ ॥

अवकस्तारकाधीशः परिपूर्णः प्रियोदयः ।
प्राचीं दिशमतिक्रम्य पतनं प्रतिपद्यते ॥ ३ ॥

पततां हन्त केषांचिद्भजते मलिनात्मनाम् ।
विशुद्धवर्णयोगोऽपि विपरीतनिमित्तताम् ॥ ४ ॥

पतनानन्तरं कृच्छ्रात्प्ररूढः शुद्धिमानपि ।
द्विजः संछाद्यते नित्यमधरेणापि रागिणा ॥ ५ ॥

गोपमेकपदे स्थित्वा संनिकृष्टान्क्षणाद्ग्रसन् ।
बहिर्दर्शितसंशुद्धिर्बकव्याहारमर्हति ॥ ६ ॥

द्विजस्य सितपक्षस्य कवेरपि निरस्यते ।
नाहंस इति साजात्यं गतिशब्दितवृत्तिभिः ॥ ७ ॥

अव्यवस्थितवृत्तानामभिन्नश्रुतिचक्षुषाम् ।
अवर्मार्जितभोगानामाशीरप्यहितोचिता ॥ ८ ॥

दुष्टैरारोपितः कश्चिदनर्थक्रिययान्वितः ।
असत्कारेण गृह्येत विशुद्धाकारवेदिभिः ॥ ९ ॥

तमः स्वभावमलिनं वृत्त्यालोकोज्झिताश्रयम् ।
दण्ड्यं मित्रेण राज्ञा च दृष्टदोषान्वयं विदुः ॥ १० ॥

जातिमात्रशरणा बहिष्कृताः केचिदाहतजघन्यवृत्तयः ।
रोपणा विपरिधाविनो मुधा द्वेपयन्ति जनमुज्झितह्रियः ॥ ११ ॥

आलोकावधि यद्दशेन सुगतिं विन्दन्ति भूतान्यसौ
दृष्टिस्नेहविशेषतो वितनुते यस्मे भुजंगभ्रमम् ।
दत्ता भोगिषु केषुचिद्विषमिता दृष्टिं निहन्तु क्षणा-
त्तानप्याशु विनाशयेत्क्षणरुचिः काचित्क्षणस्फूर्जिता ॥ १

इति दुर्वृत्तपद्धतिश्चतुर्थी ।

अथ खलपद्धतिः।

परचिन्तैकनिरताः पुत्रादिष्वप्यसङ्गिनः।
योगिनामनुकुर्वन्ति विशृङ्खलधियः खलाः॥ १॥
आत्मार्थं युक्तचित्तानां मित्रमण्डलभेदिनाम्।
अविलङ्घितलोकानां न बन्धः केनचित्क्वचित्॥ २॥
स्नेहः शैत्यं प्रसादश्च कोपत्यागश्च जायते।
आसन्नपरपीडार्थं निस्त्रिंशस्यासितात्मनः॥ ३॥
जनित्वापि महावंशे निम्नगा वक्रचेष्टिताः।
वैपरीत्यं वितन्वन्ति समेषु विषमेषु च॥ ४॥
उत्पथादुन्नताः केचिद्बहुभङ्गभ्रमाकुलाः।
तटस्थानपि निघ्नन्ति तरसा भिन्नसेतवः॥ ५॥
केनचिद्दान्तकृत्येन कुलगोत्रविमर्दिनम्।
मदेन बहुधा भिन्नं मातङ्गं मन्यते जनः॥ ६॥
अनेकमुखपापात्मा छद्मसंदर्शिताश्रमः।
कर्पूरप्रकृतिः कश्चित्कापेयकलहोचितः॥ ७॥
छलिनं सत्कथानर्हं स्वात्मोपहतजातिकम्।
न निगृह्णाति यः काले सोऽपि सभ्यैर्निगृह्यते॥ ८॥
निगरन्तो जगत्प्राणानुद्गिरन्तो विषं मुखैः।
दूरतः परिहर्तव्या द्विजिह्वा जिह्मवृत्तयः॥ ९॥
अकिंचित्कारिणां दीनैराकृष्टगुणकर्मणाम्।
अपाय गतसत्त्वानां दर्शनस्पर्शनादिकम्॥ १०॥
अधिकोन्नतैरपि सुदारुणान्वितैरसकृद्भ्रमत्पशुगणाङ्घ्रिपीडितैः।
विधिसिद्धनैकगुणसस्यसंपदां विरसैः स्वभावकठिनैरलं खलैः॥ ११॥
मुक्ताहारनिषेविता अपि न तद्वृत्त्यै दिशन्त्यन्तरं
बद्धे गाढविमर्दने च न जहत्यन्योन्यसंपीडनम्।
उष्णे शीतलतामुपेत्य शिशिरे प्राप्ते भजन्त्युष्णतां
कामान्तःपुरचेटिकाकुचतटीकाठिन्यवन्तः खलाः॥ १२॥

इति खलपद्धतिस्तृतीया।

अथ दुर्वृत्तपद्धतिः ।

गुणजालप्रकर्षेऽपि धीवरत्वेऽपि जन्मनः ।
सर्वतीर्थावगाहेऽपि नीचवृत्तिर्न शस्यते ॥ १ ॥

द्विजराजाङ्कसंस्थोऽपि सन्मार्गाकारवानपि ।
विशुद्धिरहितः कश्चिन्न विन्दत्यकलङ्कताम् ॥ २ ॥

अवक्रस्तारकाधीशः परिपूर्णः प्रियोदयः ।
प्राचीं दिशमतिक्रम्य पतनं प्रतिपद्यते ॥ ३ ॥

पततां हन्त केषांचिद्व्रजते मलिनात्मनाम् ।
विशुद्धवर्णयोगोऽपि विपरीतनिमित्तताम् ॥ ४ ॥

पतनानन्तरं कृच्छ्रात्प्ररूढः शुद्धिमानपि ।
द्विजः संछाद्यते नित्यमधरेणापि रागिणा ॥ ५ ॥

जोषमेकपदे स्थित्वा संनिकृष्टान्क्षणाद्ग्रसन् ।
बहिर्दर्शितसंशुद्धिर्बकव्याहारमर्हति ॥ ६ ॥

द्विजस्य सितपक्षस्य कवेरपि निरस्यते ।
नाहंस इति साजात्यं गतिशब्दितवृत्तिभिः ॥ ७ ॥

अव्यवस्थितवृत्तानामभिन्नश्रुतिचक्षुषाम् ।
अधर्मार्जितभोगानामाशीरप्यहितोचिता ॥ ८ ॥

दुष्टैरारोपितः कश्चिदनर्थक्रिययान्वितः ।
असत्कारेण गृह्येत विशुद्धाकारवेदिभिः ॥ ९ ॥

तमः स्वभावमलिनं वृत्त्यालोकोज्झिताश्रयम् ।
दण्ड्यं मित्रेण राज्ञा च दृष्टदोषान्वयं विदुः ॥ १० ॥

जातिमात्रशरणा बहिष्कृताः केचिदाहृतजघन्यवृत्तयः
रोपणा विपरिधाविनो मुधा क्षेपयन्ति जनमुज्झितं
आलोकावधि यद्दर्शेन सुगतिं विन्दन्ति भूतान्न। ९
दृष्टिस्नेहविशेषतो वितनुते वंशे भुजंगभ्रमः ।
दक्षा भोगिषु केषुचिद्विषमिता दृष्टिं निहन्तु ॥ १
तानप्याशु विनाशयेत्क्षणरुचिः काचित्स्- यताम्

इति दुर्वृत्तपद्धतिश्चतुर्थी ।

अथासेव्यपद्धतिः ।

कठिनः कृशमूलश्च दुर्लभो दक्षिणेतरः ।
कश्चित्कल्याणगोत्रोऽपि मनुष्यैर्नोपजीव्यते ॥ १ ॥
दुष्टपङ्कः प्रतिपदं स्वादल्परससंस्थितिः ।
काले घनरसैर्योगेऽप्यसेव्यो जीवनार्थिभिः ॥ २ ॥
स्वतः सत्त्वविहीनानां सत्त्वयैवापराध्यताम् ।
कथंकारं प्रतीकारः कल्पकोटिशतैरपि ॥ ३ ॥
अपि संतापशमनाः शुद्धाः सुरभिशीतलाः ।
भुजंगसङ्गाज्जायन्ते भीषणाश्चन्दनद्रुमाः ॥ ४ ॥
नीचानुसरणान्मन्ये निसर्गपरिशुद्धयोः ।
गतिः कुटिलतां याति गङ्गायमुनयोरपि ॥ ५ ॥
मित्रे भवति वैमुख्यं मैत्री दोषाकरेण च ।
अपि तीर्थप्रसूतानां कैरवाणां रजोभृताम् ॥ ६ ॥
अपि निर्मुक्तभोगेन स्वान्तस्थविषयेक्षया ।
असद्भावाय जायेत जिह्मगेन सहासिका ॥ ७ ॥
मण्डूकराविणं सर्पं गोमुखं च मृगादनम् ।
असुहृत्त्वेन मन्येत मानयन्तं च वैरिणम् ॥ ८ ॥
घोरास्त्यक्तमिथोवैराः सौकर्यवदुपद्रवे ।
दण्डेनापि न भज्येरन्पापमण्डलमण्डलाः ॥ ९ ॥
अनाकलितमानुष्याः क्षमासंसर्गवर्जिताः ।
प्रतिबुद्धैर्न सेव्यन्ते पूर्वदेवविरोधिनः ॥ १० ॥
वासदग्ध विश्वासः श्वपचकरके सौमिकरसः
मुक्ताहारनि· गङ्गाम्भः खलपरिषदग्रे सुजनता ।
वद्धे गाढ गरे श्रुतमनुपनीते च निगमः
उष्णे शीतल सद्धां शुद्धिं त्यजति विपरीतं च फलति ॥ ११ ॥
कामान्तःप सयाब्धिमधिरोहतु शैलतटीं
धातुवर्गमभिगच्छतु रत्नसुखम् ।

तदिदमरुंतुदं यदुत बद्धवधाय भिया
घनमदमेदुरक्षितिभृद्दलनचङ्क्रमणम् ॥ १२ ॥

इत्यसेव्यपद्धतिः पञ्चमी ।

---

अथ महापुरुषपद्धतिः ।

सतामेव खपुष्पत्वं येषां यत्सदसत्त्वयोः ।
न जातु तस्य तत्ताभ्यामिति तेषां स विश्वदृक् ॥ १ ॥
मुक्तानुगुणवृत्तानां भजतां पावनीं गतिम् ।
नित्यं विष्णुपदे वृत्तिस्तारकाणां सितात्मनाम् ॥ २ ॥
सन्नियोगेन शिष्टानां वर्णादीनां स्वसूत्रतः ।
प्रवृत्तिं च निवृत्तिं च न भिन्द्यात्साधुशब्दवित् ॥ ३ ॥
धर्मसेतुनिविष्टानामखलानां शरीरिणाम् ।
दक्षिणोत्तरवृत्तीनां दृष्टिः पापनिवर्तिनी ॥ ४ ॥
अनङ्गीकृतकामानामनुमानार्हवर्ष्मणाम् ।
वृतनिर्मलतीर्थानां भूतिलेपोऽपि भूषणम् ॥ ५ ॥
अनन्तख्यातिसंपन्नः शुद्धसत्त्वः सुधीर्बलः ।
धत्ते बहुसुखं भोगं श्रुतिदृष्टिस्थिराश्रयः ॥ ६ ॥
अहार्यः सर्वमध्यस्थः काञ्चनद्युतिमुद्वहन् ।
सव्यदक्षिणयोग्यत्वमुपयाति सदोन्नतः ॥ ७ ॥
पुण्यगन्धाः सुमनसः प्रबुद्धाः समयागमे ।
शिरसा परिगृह्यन्ते सादरं त्रिदशैरपि ॥ ८ ॥
अनुकर्तुमपद्योतुमतिवर्तितुमीक्षितुम् ।
अशक्ये तेजसां पत्यौ मित्रतानुमतिक्षमा ॥ ९ ॥
आहितुण्डिकवृत्तीनामशेषा भोगिनः पदम् ।
न संवर्ताग्निसारथ्ये स्थाता यन्मुखमारुतः ॥ १० ॥
गरुत्मति नुपक्षतां गिरिधुरंधरे धीरता-
मुदन्वति गभीरतामन्तर्नदीव्रिते सौम्यताम् ।

अथासेव्यपद्धतिः।

कठिनः कृशमूलश्च दुर्लभो दक्षिणेतरः।
कश्चित्कल्याणगोत्रोऽपि मनुष्यैर्नोपजीव्यते ॥ १ ॥
दुष्टपङ्कः प्रतिपदं स्यादल्परससंस्थितिः।
काले घनरसैर्योगेऽप्यसेव्यो जीवनार्थिभिः ॥ २ ॥
स्वतः सत्त्वविहीनानां सत्तयैवापराध्यताम्।
कथंकारं प्रतीकारः कल्पकोटिशतैरपि ॥ ३ ॥
अपि संतापशमनाः शुद्धाः सुरभिशीतलाः।
भुजंगसङ्गाज्जायन्ते भीषणाश्चन्दनद्रुमाः ॥ ४ ॥
नीचानुसरणान्मन्ये निसर्गपरिशुद्धयोः।
गतिः कुटिलतां याति गङ्गायमुनयोरपि ॥ ५ ॥
मित्रे भवति वैमुख्यं मैत्री दोषाकरेण च।
अपि तीर्थप्रसूतानां कैरवाणां रजोभृताम् ॥ ६ ॥
अपि निर्मुक्तभोगेन स्वान्तस्थविषयेक्षया।
असद्भावाय जायेत जिह्मगेन सहासिका ॥ ७ ॥
मण्डूकराविणं सर्पं गोमुखं च मृगादनम्।
असुहृत्त्वेन मन्येत मानयन्तं च वैरिणम् ॥ ८ ॥
चोरास्त्यक्तमिथोवैराः सौकर्यवदुपद्रवे।
दण्डेनापि न भज्येरन्पापमण्डलमण्डलाः ॥ ९ ॥
अनाकलितमानुष्याः क्षमासंस्पर्शवर्जिताः।
प्रतिबुद्धैर्न सेव्यन्ते पूर्वदेवविरोधिनः ॥ १० ॥

वाराङ्गनाः विश्वासः श्वपचकरके सौमिकरसः
मुक्ताहारनि गङ्गाम्भः खलपरिषदग्रे सुजनता।
बद्धे गाढ रे श्रुतमनुपनीते च निगमः
उष्णे शीतल सद्धां शुद्धिं त्यजति विपरीतं च फलति ॥ ११ ॥
कामान्तःप सयाब्धिमधिरोहतु शैलतटीं
धातुवर्गमभिगच्छतु शास्त्रमुखम्।

तदिदमरुंतुदं यदुत वह्नवधाय भिया
धनमदमेदुरक्षितिभृदङ्गणचङ्क्रमणम् ॥ १२ ॥

इत्यसेव्यपद्धतिः पञ्चमी ।

अथ महापुरुषपद्धतिः ।

सतामेव खपुष्पत्वं येषां यत्सदसत्त्वयोः ।
न जातु तस्य तत्ताभ्यामिति तेषां स विश्वदृक् ॥ १ ॥
मुक्तानुगुणवृत्तानां भजतां पावनीं गतिम् ।
नित्यं विष्णुपदे वृत्तिस्तारकाणां सितात्मनाम् ॥ २ ॥
सन्नियोगेन शिष्टानां वर्णादीनां स्वसूत्रतः ।
प्रवृत्तिं च निवृत्तिं च न भिन्द्यात्साधुशब्दवित् ॥ ३ ॥
धर्मसेतुनिविष्टानामखलानां शरीरिणाम् ।
दक्षिणोत्तरवृत्तीनां दृष्टिः पापनिवर्तिनी ॥ ४ ॥
अनङ्गीकृतकामानामनुमानार्हवर्त्मणाम् ।
वृतनिर्मलतीर्थानां भूतिलेपोऽपि भूषणम् ॥ ५ ॥
अनन्तख्यातिसंपन्नः शुद्धसत्त्वः सुधीर्बलः ।
धत्ते बहुमुखं भोगं श्रुतिदृष्टिस्थिराश्रयः ॥ ६ ॥
अहार्यः सर्वमध्यस्थः काञ्चनद्युतिमुद्वहन् ।
सत्प्रदक्षिणयोग्यत्वमुपयाति सदोन्नतः ॥ ७ ॥
पुण्यगन्धाः सुमनसः प्रबुद्धाः समयागमे ।
शिरसा परिगृह्यन्ते सादरं त्रिदशैरपि ॥ ८ ॥
अनुकर्तुमपह्नोतुमतिवर्तितुमीक्षितुम् ।
अशक्ये तेजसां पत्यौ मित्रतानुमतिस्समा ॥ ९ ॥
आहितुण्डिकवृत्तीनामशेषा भोगिनः पदम् ।
न संवर्ताग्निसारथ्ये स्थाता यन्मुखमारुतः ॥ १० ॥
गरुत्मति सुपक्षतां गिरिधुरंधरे धीरता-
मुदन्वति गभीरताममृतदीधितौ सौम्यताम् ।

विवस्वति च दीप्तितां विधिरुपाददानश्चिरा-
दनर्घगुणचित्रितं किमपि चित्रमासूत्रयत् ॥ ११ ॥
प्रशस्ति निन्दन्ति प्रशमसुखदिव्यामृतरस-
प्रलीनोदन्यानां परिषदि न संपत्तिसरितः ।
अमित्रोपक्षेपक्षणविगलदात्मीयपृतना-
हृढामर्दत्रस्यद्रुमिडभटजङ्घाजवभृतः ॥ १२ ॥

इति महापुरुषपद्धतिः षष्ठी ।

---

अथ समचित्तपद्धतिः ।

पुंसः कस्यचिदास्थाने द्विजेन्द्रः सूरिसेविते ।
गुणवत्पक्षपातेऽपि मध्ये तिष्ठति मानभृत् ॥ १ ॥
देशकालविशेषेण विषमत्वसमत्ववत् ।
निशादिवसयोर्दृष्टमहोरात्रस्य न क्वचित् ॥ २ ॥
चकोरस्य दरं देवश्चक्रवाकस्य चादरम् ।
विवस्वान्नाभिसंधत्ते विश्वमेकं प्रकाशयन् ॥ ३ ॥
प्रतिगृह्णाति जीमूते प्रत्यर्पयति वा स्वयम् ।
अपूरणमपांपत्युः पूरणं च न लक्ष्यते ॥ ४ ॥
छिद्रं जनयतां तीक्ष्णैरच्छिद्रं बिभ्रतामपि ।
त्रासहीनाः सुमणयः स्वभावादुपकुर्वते ॥ ५ ॥
अनुज्झितसुहृद्भावः सुहृदां दुर्हृदामपि ।
सम इत्येव भाव्योऽपि नम इत्येव भाव्यते ॥ ६ ॥
मरुद्भिः पीड्यमानोऽपि संत्यक्तोऽपि दिवानिशम् ।
विषयस्नेहरहितो रत्नदीपः प्रकाशते ॥ ७ ॥
जनयत्यनिले दावं शमयत्यपि तोयदे ।
अभिन्नैः स्थीयते पुण्यैराश्रमारण्यपादपैः ॥ ८ ॥
अहार्येण कदाप्यन्यैरसंहार्येण कैरपि ।
तितिक्षाकवचेनैकः सर्वं जयति संवृतः ॥ ९ ॥

अमृतस्यन्दिनं कंचित्कृष्णमेघं द्विजः स्मरन् ।
उदन्यया न वेशान्तमुदन्वन्तं च वीक्षते ॥ १० ॥
विदधातु धाम तमसा कृतेन किं यदि वा न वेत्ति न विधिर्न वा वयम् ।
प्रथमापकारचरमं यतस्ततः प्रतियोगिनो भवति तस्य सार्थता ॥ ११ ॥
विभवेष्वपि दोषगन्धहीनः प्रलयेऽपि स्थितिमक्षयां दधानः ।
विषमेष्वपि भावयन्समर्थं पुरुषः कोऽपि हृदि स्थितः प्रजानाम् ॥ १२ ॥

इति समचित्तपद्धतिः सप्तमी ।

अथ सदाश्रुतपद्धतिः ।

सुवृत्तस्यावदातस्य कलापूर्णस्य सत्पतेः ।
क्षणलेशग्रहेऽपि स्यादतीर्थस्यापि तीर्थता ॥ १ ॥
प्रतिपत्प्राप्तितः प्रागप्यपातार्हपदाश्रितः ।
राजा तदितरो वापि नोपरागेण गृह्यते ॥ २ ॥
विषमो गुणभेदेन विकाराञ्जनयन्क्रमात् ।
समये महता योगादहंकारः प्रलीयते ॥ ३ ॥
स्वदृष्टिप्रतिघातोऽपि स्वच्छे क्वचन शोभनः ।
तत्र ह्यभिमुखः स्वात्मा झटित्येव प्रकाशते ॥ ४ ॥
शिक्षके हरिताकारो मेरौ नीलतनुर्द्विजः ।
अपूर्ववर्णवान्भाति सत्यनिष्ठे च कौशिकः ॥ ५ ॥
कलङ्किनि जले क्वापि सौरं प्रतिफलन्महः ।
तमोपहत्वं तनुते समृद्धिं च दिने दिने ॥ ६ ॥
स्वतश्चेतन्यभिन्नस्य विषमच्छिद्रभागिनः ।
कस्यचित्प्राज्ञमूलाः स्युः पुरुषार्थप्रवृत्तयः ॥ ७ ॥
महान्तं पुरुषं प्राप्य कंचित्सत्त्वप्रवर्तकम् ।
प्रतिबुद्धो जनस्तेन परमं साम्यमश्नुते ॥ ८ ॥
सूत्रं रत्नसमावेशाच्चर्मसंश्रयसत्पदात् ।
तदभेदेन गृह्येत तृणमप्यस्त्रमन्त्रणात् ॥ ९ ॥

एकयैव गुरोर्दृष्ट्या द्वाभ्यां वापि लभेत यत् ।
न तत्तिसृभिरष्टाभिः सहस्रेणापि कस्यचित् ॥ १० ॥
रथ्यातोयं त्रिदशसरिता राजनीतिः सुकीर्त्या
काव्यालापस्त्रियुगकथया कायवानात्मबुद्ध्या ।
दारप्रीतिः प्रजननधिया जन्तुहिंसा मखेन
प्रज्ञाहीनः परहितविदा संगतः शुद्धिमेति ॥ ११ ॥
विभुर्बन्धं प्राप्य व्यतनुत विमुक्तिं व्रजभुवां
स्वतन्त्रोऽसौ दूतः स्वयमजनि सूतश्च भजताम् ।
प्रतिज्ञां स्वामौज्झत्स्वपदतटिनीसूनुसमरे
महद्योगात्प्रायो वहति महिमानं तदधिकम् ॥ १२ ॥

इति सदाश्रुतपद्धतिरष्टमी ।

---

अथ नीतिपद्धतिः ।

विक्रमाक्रान्तभुवने समे षाड्गुण्यशालिनि ।
भजति स्थिरतां लक्ष्मीः कस्मिंश्चित्पुरुषोत्तमे ॥ १ ॥
पार्थिवानां पदार्थानां स्वभूत्या चक्रवर्तिनाम् ।
सूचयत्यचिराद्भेदं छिद्रेण महतान्वयः ॥ २ ॥
सदसन्तौ विचिन्वानः समवर्ती शमप्रदः ।
अपि दण्डधरो नित्यं लोकपालः सदक्षिणः ॥ ३ ॥
यमेनोपक्रमे जानन्विश्वाधीशं व्यवस्थितम् ।
शमादिषु न तत्त्वज्ञः सनकः सिद्धिमर्हति ॥ ४ ॥
अङ्गयुक्तः कृतास्त्रश्च कुर्वन्सम्यक्पुरोविधिम् ।
विज्ञानन्सिद्धसाध्यादीन्वैरिमन्त्रैर्न पीड्यते ॥ ५ ॥
आमाधिकरणग्राह्यमूलादिबलशालिनः ।
अहीनेऽपि नरेन्द्रस्य शक्तयः सिद्धिहेतवः ॥ ६ ॥
प्रद्युम्नो ह्यनिरुद्धात्मा स्वनाम्ना मानसोदयः ।
वीरः कश्चिद्विजानीते स्त्रीप्रायमखिलं जगत् ॥ ७ ॥

तमिस्राचारिणां रोद्धा विजिताक्षो मरुत्प्रियः ।
कपिकुल्यैरपि स्थाने भाति वेलातिलङ्घिभिः ॥ ८ ॥
प्रयुक्तं मन्त्रिभिः काले भक्तिभेदपुरस्कृतम् ।
अपि ज्वलनवक्राणां साम संवननं परम् ॥ ९ ॥
विधौ लब्धधृतिर्नित्यं विनतानन्दनो द्विजः ।
नियम्यमानैः स्थानेषु भुजगैरपि भूष्यते ॥ १० ॥
नीतिः सती त्वयि परं परपुष्टया तु
पुत्रीकृतोऽसि बलिपुष्टकुलैर्यतस्त्वम् ।
दूरीकृतश्च पुरुषैस्तत एव काले
कण्ठे यदेष तव पञ्चममुच्चकार ॥ ११ ॥
विबुधमहिते मेरावैरावणः करटी मुहुः
कषतु करटं कण्डूलं स्वं क्षरन्मदकर्दमम् ।
भजतु च तटक्रीडां पीडाभिसंधिरसौ दृढं
न तु मलिनता नापि क्षोभः क्षमाभृति संभृतः ॥ १२ ॥

इति नीतिपद्धतिर्नवमी ।

---

अथ वदान्यपद्धतिः ।

आभिमुख्यदशामात्राद्वदान्य इव सज्जनः ।
शीघ्रं रक्तमरक्तं वा गृह्णाति स्वप्रसादतः ॥ १ ॥
अप्यनावर्जिताः स्वेन फलभारेण संनताः ।
अर्भकैरपि गृह्यन्ते साधुसंतानशाखिनः ॥ २ ॥
निर्मुक्तभवनक्षेत्राः स्युः सदागतिनिर्वृताः ।
प्राप्ते भूपविपर्यासे भोगिनः खलु योगिनः ॥ ३ ॥
सर्वेषामुत्तरामाशां धनदो यः परीक्षते ।
सत्यं मनुष्यधर्मैव स तु पुण्यजनेश्वरः ॥ ४ ॥
येषां हिरण्यकशिपुक्षेत्रदानकरः करः ।
तेषां तिर्यङ्मुखत्वेऽपि पुरुषत्वं न हीयते ॥ ५ ॥
मुख्यदानोदकक्लिन्नकरः स्यात्क्षमाभृतिः ।
लोकपालाश्रितः कश्चिदनाशावारणः कथम् ॥ ६ ॥

क्षोभितोऽपि बुधैः कश्चिद्गम्भीरमधुराशयः ।
चन्द्ररत्नगवाश्वादिसहितां दिशति श्रियम् ॥ ७ ॥
वदान्यश्च कदर्यश्च गृहीतस्थिरलोभतः ।
स्वानर्थान्संचिनोत्यर्थान्परानर्थैर्योजयन् ॥ ८ ॥
अनिःशेषितदातव्यं वदान्यदिति वादिनम् ।
नोपसर्पति सव्रीडा व्रीडा कुलवधूरिव ॥ ९ ॥
अपुनर्देहिशब्दार्हमप्रत्युपकृतिक्षमम् ।
अर्थिनं कुरुते कश्चित्पुनरावृत्तिवर्जितम् ॥ १० ॥
त्वचं मांसं जीवं यदपि ददुरस्थीनि पृथिवीं
श्रियं रत्नाधीशं त्रिदशतरुमैरावतमपि ।
तदेतत्प्रत्येकं मिलितमपि नालं तुलयितुं
मनस्कारोपेतस्थिरमधुरकल्पोक्तिकणिकाम् ॥ ११ ॥
अनिर्घातं धाराधरममथनीयं निधिमपा-
मकाठिन्यं चिन्तामणिमजडभूतं सुरतरुम् ।
अभित्त्वोपादाय प्रभुरपशुवृत्तिर्न सुरभिं
परार्थैकस्वार्थानकृत पुरुषानादिपुरुषः ॥ १२ ॥

इति वदान्यपद्धतिर्दशमी ।

---

*अथ सत्कविपद्धतिः ।*

अपङ्किलयितुं शुद्धाः साधुमानसवृत्तयः ।
वमन्ति श्रुतिजीवातुं ध्वनिं नवरसास्पदम् ॥ १ ॥
महापुरुषलब्धात्मा सर्गादिप्रथितोदयः ।
वश्यावदातया वाचा सेव्यते चतुराननः ॥ २ ॥
विशुद्धललिताकारा गुणालंकारशालिनी ।
सरसा भारती यस्य ससत्येकः प्रतिष्ठितः ॥ ३ ॥
कुतश्चिदचलस्थानात्प्रयान्ती सागरान्तिकम् ।
दृश्यादृश्यतनुर्भाति श्रुत्यभीष्टा सरस्वती ॥ ४ ॥
प्रभूतोदितमुक्ताभिर्भूयते सूक्तिशुक्तिभिः ।
सुदृशां कर्णपूराय तादृशः फलभेदतः ॥ ५ ॥

# अनुक्रमणिका।


पृष्ठाङ्क।

१ आनन्दवर्धनाचार्यकृत देवीशतकम् (कय्यटकृत टीकया समेतम्) १
२ अवतारकविप्रणीतमीश्वरशतकम् (सटीकम्) .... . ३१
३-मधुसूदनकविप्रणीतमन्यापदेशशतकम् .... .... .. ६४
४ लक्ष्मणाचार्यप्रणीता चण्डीकुचपञ्चाशिका ... .... ... ८०
५ विद्यावागीशकविविरचित कौन्तेयवृत्तम् ... . . ९२
६ उत्प्रेक्षावल्लभकविरचित सुन्दरीशतकम् .... .... १००
७ श्रीनारायणपण्डिताचार्यविरचिता शिवस्तुति (सटीका) .. १०९
८ श्रीमच्छङ्कराचार्यभगवत्पादविरचित त्रिपुरसुन्दरीमानसिकोपचारपूजास्तोत्रम् .... .... .... .... ११४
९ श्रीसुन्दराचार्यकविनिर्मित गीतिशतकम् .. .. ... १३९
१० श्रीसामराजदीक्षितविरचित त्रिपुरसुन्दरीमानसपूजनस्तोत्रम् १४०
११ श्रीशङ्कराचार्यविरचित चतुःषष्ट्युपचारमानसपूजास्तोत्रम् . १५३

# काव्यमाला।

## श्रीमदानन्दवर्धनाचार्यकृतं
## देवीशतकम्।

श्रीकय्यटकृतया टीकया सहितम्।

नमोऽस्तु वागधीशाय हयग्रीवाय विष्णवे।
कौमोदकीचक्रशङ्खकमलाङ्कितपाणये॥
प्रणम्य परमं धाम यत्प्रसादाज्ज्वलन्त्यमी।
महामोहमहिम्नार्ता रवितारादिपानलाः॥
संचिक्षिप्सुरलं स्वबुद्धिरचितैः पर्यायशब्दैर्यथा-
टीकां वल्लभदेव उत्तममतिस्तूर्णं भवानीस्तुतौ।
पर्यायैः क्रियया समं कविकृतान्पाठान्पठन्कय्यट-
श्चन्द्रादित्यतनूज इत्यमकरोत्तस्यैव नत्वा नगाम्॥
आनन्दवर्धनकविप्रवरप्रणीतकाव्ये किमल्पमतिना क्रियते मंथनम्।
किं वा पिपीलककुलानि न सञ्चयन्ते मत्तेभदन्तपदपङ्क्तिममेयसाराम्॥
विषमेऽत्र काव्यमार्गे सुरसे वा स्खलति मामकी धिषणा।
बालेय निसरण (?) संप्राप्य शनैः शनैस्तदपि याति॥

सर्वत्र काव्यारम्भे सम्बन्धाभिधेयप्रयोजनानि ज्ञातव्यानि। 'सिद्धिः श्रोतृप्रवृत्तीनां संबन्धकथनाद्यतः। तस्मात्सर्वेषु शास्त्रेषु सम्बन्धः पूर्वमुच्यते॥ सर्वस्यैव हि शास्त्रस्य कर्मणो

---

१. ध्वन्यालोकाद्यनेकग्रन्थकर्ता श्रीमदानन्दवर्धनाचार्यः कश्मीरेषु खिस्ताब्दीयनवमशतकोत्तरभाग आसीदित्यसकृदुक्तम्. अयं देवीशतकटीकाकर्ता कय्यटोऽपि भीमगुप्तनृपतिराज्ये तत्रैव ४०७८ मितेषु गतकलिवर्षेषु (९७८ खिस्ताब्दे) टीकां प्रणीतवानिति टीकासमाप्तौ विलोकनीयम्. अयं कय्यटश्चन्द्रादित्यसूनुर्वैयाकरणकय्यटस्तु जय्यटात्मज इत्यस्माद्भिन्नः. सटीकस्य देवीशतकस्य पुस्तकद्वयमासादितमस्माभिः. तत्रैकं पुण्यपत्तनस्थराजकीयपुस्तकालयस्थं श्रीभुतभाण्डारकरपण्डितैः कृपया प्रहितमासीत्, तत्क-संज्ञकम्. अपरं कश्मीरमहाराजाधितर्ज्योतिर्विद्गुणाढ्यश्रीदयारामपण्डितैः प्रहितम्, तत्ख-संज्ञकम्. २. 'शङ्खचक्र' ख. ३. 'उन्नतमति' ख. ४. ख-पुस्तके 'बालेयनिसरणं संप्राप्य' इत्यस्य स्थाने त्रुटिचिह्नमस्ति.

वापि कस्यचित्। यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥' इह तु देव्याः स्तोत्रेण स हाराध्याराधन संबन्धः। तदीयगुणकर्माणि चेहाभिधेयानि। तदभिधानद्वारकस्य च देव्याराधनस्य दृष्टादृष्टफलभूता भोगापवर्गफलप्राप्तिः प्रयोजनम् ॥

तत्रादौ कविः स्तोत्रं प्रारिप्सुः पञ्चभिः श्लोकैः कुलकं चकार—

अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम्।
या च मातेव भजते प्रणते मानवे दयाम् ॥ १ ॥
नतापनीतक्लेशायाः सुरारिजनतापनी।
न तापनी तनुर्यस्यास्तुल्या नादीनतापनी ॥ २ ॥
वक्रपद्मा विधेर्भान्ति यया सर्गलयो दया।
या साक्षाद्या च जनितस्थितिसर्गलयोदया ॥ ३ ॥
याश्रिता पावनतया यातनाच्छिदनीचया।
याचनीया धिया मायायामायासं स्तुता श्रिया ॥ ४ ॥
तमांसि ध्वंसमायान्ति यस्याः स्तुत्यादरेण वः।
तस्याः सिद्ध्यै धियां मातुः कल्पन्तां पादरेणवः ॥ ५ ॥

(कुलकम्)

तस्या धियां मातुः पादरेणवो वः सिद्ध्यै कल्पन्ताम्। तस्याः वर्णयिष्यमाणस्वरूपाया धियां मातुः प्रज्ञाजनन्याः सबन्धिनः पादरेणवश्चरणपांसवो वो युष्माकं सिद्ध्यै समीहितसंपत्त्यै कल्पन्तां संपद्यन्ताम्। या वेधा न वेद। यां देवीं वेधा ब्रह्मा न वेद न वेत्ति न जानाति। अपिशब्दोऽत्रार्थोऽवगम्यते। वेधा अपि न वेत्ति कोऽन्यो वराको ज्ञास्यतीति। यथा—'क्रोधावृतासौ क्षमते न धातुः'। धातुः प्रजापतेरपि न क्षमते इत्यर्थः। किंभूता याम्। अनन्तमहिमव्याप्तविश्वाम्। अनन्तो भगवान्विष्णुस्तस्य महिमा माहात्म्यं तेन व्याप्तं पूरितं विश्वं त्रैलोक्यं यया ताम्। हरिमाहात्म्यवशेन हि भगवती जगदापूरयतीत्यागमः। अथवा अनन्तैर्बहुभिरप्रमेयैर्महिमभिर्व्याप्तं विश्वं यया ताम्। अथ च या देवी मातेव जननीव प्रणते मानवे प्रह्वे भक्ते नरे दयां घृणां भजते पोषयति। यस्या अविज्ञेयस्वरूपाया अपि भक्तैर्भक्तिसुलभत्वमुक्तं भवति। यां वेधा अपि न वेद सा भक्तया सुलभेति स्तोत्रीयमे साफल्यम्[1] ॥ १ ॥

अपरम्। यस्यास्तापनी तनुर्मानवी मूर्तिः न न तुल्या। सदृशैवेत्यर्थः। तपनस्येयं तापनी। किंभूताया देव्याः। नतापनीतक्लेशायाः। नतानां भक्तानामपनीता विनाशिताः क्लेशा रागादयो यया तादृश्याः। कीदृशी च तापनी तनुः। सुरारिजनतापनी देवशत्रुमर्दनी।

1. 'ऽतिसाफल्यम्' क.

सुरारिजनांस्तापयतीति तच्छीलेति । देव्यप्येवंभूतैवेति तयोस्तुल्यत्वम् । तथा अदीनतामौ-र्जित्यमापर्यन्त प्रापयत्यसावदीनतापनी । उच्छ्रायप्रदा । इत्युभयोः समानम् ॥ २ ॥

यया देव्या वाग्रूपया विधेर्ब्रह्मणो वक्त्रपद्मा मुखनलिनानि भान्ति शोभन्ते । कीदृशाः सर्गलयः । ऋच एवालयः [भ्रमराः] ऋगालयः वेदखण्डत्रयं सह तेन वर्तत इति । या च देवी साक्षाद्दया । दयामयीत्यर्थः । तथा या च देवी जनितस्थितिसर्गलयोदया जनिता विहिताः स्थितिसर्गलयाः पालनोत्पत्तिविनाशा येनासौ जनितस्थितिसर्गलयो भगवान्विष्णुस्तत उदयो यस्याः सा । भगवच्छक्तिरेव सा देवीति भावः । अथवा जनित उत्पादितः स्थितिसर्गलयानामुदयः प्रभवो यया ॥ ३ ॥

अन्यदपि । या पावनतया पवित्रत्वेनाश्रिता सेविता । पवित्रेत्यर्थः । तथा च या देवी यातनाच्छित् । यातना प्राग्विहितदुष्टकर्मविपाकः । अन्यच्च अनीचया अनूनया धिया प्रज्ञया मायाया आयामोऽविद्याप्रपञ्चस्तस्यायास उपघातो निवारणं त याचनीया प्रार्थनीया । तथा धिया लक्ष्म्या स्तुता ॥ ४ ॥

तथा यस्या देव्याः स्तुत्यादरेण स्मरणाभिनिवेशेन तमांसि मोहावबोधादयो ध्वंसं विनाशमायान्ति प्राप्नुवन्ति तस्या एतादृश्या धियां मातुर्धिषणानां प्रसवित्र्याः सम्बन्धिनः पादरेणवश्चरणरजांसि वः सिद्ध्यै कल्पन्तामिति ॥ ५ ॥

ऋषीणां सादयामास या तमांसि त्रयीमयी ।
पायाद्वः सा दयामाविच्छिदं जगति बिभ्रती ॥ ६ ॥

सा देवी वो युष्मान्पायाद्रक्षतात् । त्रयीमयी ऋग्यजुःसामरूपा ऋषीणां मुनीनां तमांस्यज्ञानानि सादयामास नाशयांबभूव । त्रय्यामुदितायामृषीणां हि तमांसि नष्टानि । तथा दयां करुणां बिभ्रती दधाना । किंभूतां दयाम् । जगति विश्वस्मिन्नाधिच्छिदं मनःपीडाविनाशिनीम् ॥ ६ ॥

स्मरद्विषा या ययाचे यया चेयं विधेः क्रिया ।
यां चाच्युतोऽपि तुष्टाव तुष्टा वः सास्तु पार्वती ॥ ७ ॥

सा पार्वती हिमवत्कन्या वो युष्माकं तुष्टा प्रसन्नास्तु भवतु । या देवी स्मरद्विषा कामशत्रुणा ययाचे प्रार्थिता । यया देव्या हेतुभूतया विधेः प्रजापतेरियं प्रत्यक्षदृश्या सृष्टिलक्षणा क्रिया सिद्धा । यां चाच्युतोऽपि तुष्टाव । हरिहरहिरण्यगर्भादिभिः स्तुतेत्यर्थः ॥७॥

या दमावनयागेन स्वाराधा नयसारया ।
हरिकैतवहास्याय सायामा विजिता यया ॥ ८ ॥

प्रतिलोमानुलोमत एवायं द्वितीयः श्लोकः—

यायताजिविमाया सा यस्या हा बत केरिह ।
या रसायनधारा स्वा न गेयानवमा दया ॥ ९ ॥

---

१. 'उत्तमया' क. २. 'स्तुत्यादरेण' ख.

सा बुद्धिरुत्तमालोकः सतामार्या पुनातु वः ।
यद्भक्तेरुत्तमा लोकः प्राप्नोत्येप विशुद्धताम् ॥ १० ॥

(विशेषकम्)

सार्या पूज्या वो युष्मान्पुनातु पवित्रीकरोतु । या दमावनयागेन दम उपशान्तचित्तता तेनावन पालन तदेव याग इष्टिस्तेन स्वाराधा सुखमाराध्यतेऽभिमुखीक्रियते । यया नयसारया नीतिपरया हरिकेतनवद्धास्याय हरेरिन्द्रस्य केतनवद्धासाय व्याजोपहासाय सायामाः सविस्तराः कृतोद्यमा विजिताः पराभूताः । अभिमानवशेन शक्रमप्युपहास्याय केचिदाक्रमन्ति तेऽप्यभिभूता ययेति भावः ॥ ८ ॥

या आयताजिविमाया आयते वितते आजौ सङ्ग्रामे विमाया विगतप्रपञ्चा । स्पष्टयुद्धा विविधमायाप्रपञ्चा वा । यस्याश्च देव्याः सा स्वा दया निजा करुणा अनवमा शोभना हावत कैर्दैवादिभिरिहास्मिञ्जगति न गेया न गातव्या । सर्वैरेव स्तुत्येत्यर्थः । हावतशब्दौ द्वावपि विस्मये । यथा 'अहो बतासि स्पृहणीय वीर्य' इति । का च सा दया, या रसायनधारा पीयूषस्रुतिः । आह्लादकत्वात् ॥ ९ ॥

अन्यच्च । सतां साधूनां बुद्धिर्धीः । कीदृशी धीः । उत्तमालोका उत्कृष्टप्रकाशाः । प्रज्ञाचक्षुर्हि अतरणिशशधरदहनभासोऽपि पश्यति न चर्मचक्षुरिति । रजस्तमोरहितप्रकाशरूपा हि या बुद्धिस्तद्देवीस्वरूपमाहुः । तथा च यद्भक्तेर्यदीयसेवनात् उत्तमा उत्खाततमाः विनाशितमोहः सन् उद्धततमा अपि वैप लोकोऽय जनो विशुद्धतामपगतकल्मषत्वमेति प्राप्नोति ॥ इत्यनुलोमोत्तमेन श्लोकेन सह श्लोकत्रयेण विशेषकमिदम् ॥ १० ॥

अयुद्ध साधुत्राणाय सामरा या सहारिणा ।
खड्गेन दीप्रा देवाना सामरायासहारिणा ॥ ११ ॥
चरणाघातनिहतकासरा च रणाजिरे ।
रराज या नयजयैरराजसजनानता ॥ १२ ॥
सावताद्वोऽम्बिकाभ्यर्च्यनामा नै न यशोऽभितः ।
तनोति प्रणतो यस्या ना मानेनयशोभितः ॥ १३ ॥

(इदमपि विशेषकम्)

साम्बिका जननी वो युष्मानवतादक्षतात् । या सामरा सदेवा सती । अथवा मान गान्त्वं राति ददाति सामरा[illegible] सती साधुत्राणाय सज्जनपरिरक्षणाय[illegible] शत्रुणा सममयुद्ध युद्धमकार्षीत् । कीदृशी देवी । खड्गेन करवालेन दीप्रा उज्ज्वला । कीदृशेन । देवानाममराणां सामरं सङ्ग्रामभयमायासं क्लेशं हरति तच्छीलस्तेन सामरायासहारिणा । सा-ङ्ग्रामिकदेवविनाशिनेत्यर्थः ॥ ११ ॥

---

१. 'नरन' क. २. 'नरन' क.

तथा या देवी नवजयैर्नीलुत्कर्षैं रराज शुशुभे । किंभूता । रणाजिरे सङ्ग्रामाङ्गने चरणाघातनिहतकामरा पादाहतिव्यापादितमहिषासुरा । अन्यत्, अराजसजनानता । रजःप्रतिषेधाद्दूरतरे तमो निषिद्धम् । तत्सात्त्विकजनप्रणतेत्यर्थः । यथा च 'अरजस्काः परं पदम्' ॥ १२ ॥

अपरं यस्या देव्या ना मनुष्यः प्रणतः प्रह्वो न नाभितः समन्ताद्यशः कीर्तिं तनोति विस्तारयति । अपि तु तनोत्येव । स च नाम्यर्च्यनामा पूज्याभिधानः । देवी वाम्यर्च्यो नामो नमनं यस्या इति । अन्यच्च स पुमान्मानयशोभितः । मानयाभ्यामलंकृत इत्यर्थः ॥ १३ ॥

संयतं याचमानेन यस्याः प्रापि द्विषा वधः ।
संयतं या च मानेन युनक्ति प्रणतं जनम् ॥ १४ ॥

या दमानवमानन्दपदमाननमानदा ।
दानमानक्षमानित्यधनमानवमानिता ॥ १५ ॥

(मुरजबन्धः)

सा रक्षतादपारा ते रसकृद्गौरवाधिका ।
सारक्षतादपारातेरसकृद्गौरवाधिका ॥ १६ ॥

(समुद्गकम्) (इदमपि विशेषकम्)

सा देवी ते रक्षतादवतात् । यस्या द्विषा शत्रुणा संयतं सङ्ग्रामं याचमानेन प्रार्थयमानेन वधः प्रापि मरणमलम्भि । या च देवी प्रणतं प्रह्वं संयतं जनं यमनियमवन्तं लोकं मानेन युनक्ति पूजया संभावयति ॥ १४ ॥

या देवी दमानवमानन्दपदम् । दमेनेन्द्रियजयेनानवमः श्रेष्ठो यः आनन्दपदं आनन्दस्थानम् । विद्यया हि शमसुखलाभः । किं च, आननमानदा । आननस्य मुखस्य मानं पूजां श्लाघारूपां ददाति प्रयच्छति । निरपभ्रंशपदभाषणान्मुखं पूज्यं भवति । एवं च पदद्वयेन प्रकाशरूपं वाग्रूपं च देव्या आगमोक्तं प्रकाशितं भवति । तथा दानमानक्षमानित्यधनमानवमानिता । दानं सत्पात्रे धनसमर्पणम् । मानं ज्ञानम् । क्षमा रोषोपघातः । ता एव नित्यमविनश्वरं धनं वित्तं येषां मानवानां पुंसां तैर्मानिता पूजिता । दानादिभिरेव देव्यर्चिता यथा भवति न तथा पुष्पादिभिरित्यर्थः । एष मुरजबन्धः ॥ १५ ॥

सा अपारा अपर्यन्ता गौर्वाक् अवाधिका अविघातिनी रक्षतात् । सारक्षतादुत्कर्षेक्षतेः । असकृत्पुनःपुनः । रसकृत् रसं रागं करोति छिनत्ति च सा रसकृत् । अभिमतं निरीहं वा वस्तु रक्षताद् । कीदृशस्य ते । अपारातेर्निःशत्रोः । किं च, गौरवाधिका गौरवेण पूजयाधिकोत्कृष्टा । सर्वेषां गुरुरित्यर्थः । एष समुद्गकबन्धः ॥ १६ ॥

---

१. 'अरजस्कं' क. २. 'मानन्द' क.

अनुत्तमोहराशयो भवन्ति यामनाश्रिताः ।
अनुत्तमो हराशयो यया चिरं च रञ्जितः ॥ १७ ॥
अनन्तरागतापायास्तारयित्री भवापदः ।
अनन्तरागतापायाः सा वो गौरी ह्रियात्क्रियाः ॥ १८ ॥

(संदानितकम्)

सा गौरी वो युष्माकमनन्तरागतापायाः अनन्तरमविद्यमानान्तरं कृत्वा आगताः प्राप्ता अपाया विघ्ना यासां ताः । अनिष्पन्ना एवोत्पन्नविनाशा याः क्रियाश्चेष्टा ह्रियादप-हरतु । दुष्टक्रिया विनाशयत्वित्यर्थः । यां देवीमनाश्रिताः शरणं न प्राप्ता नरा अनुत्तमोह-राशयोऽप्रेरिताज्ञाननिवहा अविनाशिततमसो भवन्ति संपद्यन्ते । यया गौर्या अनुत्तमो-ऽविद्यमानप्रधानो हराशयो महादेवचित्तं चिरं बहुकालं रञ्जित आवर्जितः । तथा या देवी भवापदः संसारदुःखात् । भव एवापत् भवस्येति वा । कीदृश्या भवापदः । अनन्तोऽपर्य-न्तो रागतापः स्मरार्तिदाहो यस्यास्ततस्तारयित्री उद्धर्त्री । भवापद इति कृद्योगे कर्मणि षष्ठी । अथवा अनन्ता ये रागजनितास्तापास्तानायस्यति क्षिपतीति देवीविशेषणम् ॥१७॥१८॥

यामायासजिदासक्तशोकजालस्य पातिनी ।
या माता सर्वदा भक्तलोकजालस्य पालनी ॥ १९ ॥

(गोमूत्रिकाबन्धः)

सामरागमनायासं त्यक्त्वा सार्धं सुरारिभिः ।
सामरा गमनायासन्नुद्यता युधि यद्गणाः ॥ २० ॥
सामोद्‌यजया शातैः शस्त्रैः शत्रौ हते यया ।
सामोद्‌या जयाशा तैर्गीर्वाणैर्गर्वतो जहे ॥ २१ ॥
ययायायाय्यया यूयं यो योऽयं येययेय याम् ।
ययुयायिययेयाय येयेऽयायाय याययुक् ॥ २२ ॥
साव्याद्गौरी सदा युष्मान्सदायुष्मान्समृध्यति ।
शरणं यां नरोगच्छन्न रोगच्छन्दमेति च ॥ २३ ॥

(पञ्चभिः कुलकम्)

सा गौरी गिरितनया युष्मान्भवतः सदा सततमव्याद्रक्षतात् । या भक्तलोकजालस्य

---

१. 'त्रियाता' क. २. 'अनिष्पन्नविनाशा याः' क. ३. 'विद्यप्रधानो' क. ४. 'उ-द्धरन्ती' ख. ५. 'जातस्य' क. ६. 'ययो यो' ख. ७. 'ये ये' क. ८. 'जातस्य' क.

प्रणतजनसमूहस्य यामायासजित् । याममन्तककृतमायासमुपतापं जयत्यभिभवति । या माता करुणापरा सती सर्वदा सर्वकालं च भक्तानामेवासक्तशोकजालस्य पातिनी । आसक्तानि संलग्नानि शोकजानि खेदोद्भवानि यान्यालस्यानि तानि पातयति निहन्त्यवश्यमिति । भक्तलोकस्य जालं समूहस्तस्य पालनी गोप्त्री च । गोमूत्रिकाबन्धः ॥ १९ ॥

तथा यद्गणा यस्याः संबन्धिनः पार्श्वकिंकराः सुरारिभिः सार्धं दैत्यैः सह युधि सङ्ग्रामे गमनायोद्यताः प्रेत्रुं साहंकाराः सामराः सदेवाः सन्त आसन्नभूवन् । किं कृत्वा । सामरागं सान्त्वसक्तिं त्यक्त्वा परित्यज्य । किंभूतम् । अनायासमक्लेशम् ॥ २० ॥

यया चाजया जन्मरहितया सामोदया सदर्पया शत्रौ विपक्षे शातैः शस्त्रैस्तीक्ष्णैरायुधैर्हते निपातिते सति तैर्गीर्वाणैर्देवैः सामोदया जयाशा सान्त्वोद्भूता विजयाकाङ्क्षा गर्वतोऽभिमानाज्जहे त्यक्ता । सान्न उदयो यस्या इति सामोदया ॥ २१ ॥

[यया आयाय अयि अया यूयं यः यः ऽयं येयया एय याम् ।
ययुयायियया इयाय यये अयायाय या आययुक् ॥ २२ ॥ इति पदानि ।]

अयि जनाः, यया देव्या हेतुभूतया यूयं भवन्तः आयायाविर्भूय अया विष्णुशरणा भवत । अं भगवन्तं वासुदेवं यान्त्ययाः संपद्यध्वम् । प्रभवस्य हि हेतुर्देवीति भावः । यथा च—'गोविन्दभगिनी देवी तदन्ते तद्गतिप्रदा । भगवती' इत्यागमः । यः यः अयं लोकः यामेव यां देवीं प्राप्य ययुयायियया इयाय । ययुभिरश्वैर्याति गच्छति तच्छीलो ययुयायी सूर्यः तं ययुयायिनं यातीति ययुयायियः रविमण्डलभेदी । मुक्त इत्यर्थः । तस्य या गतिः । यानं या । 'अन्यत्रापि दृश्यते' इति क्विप् । तया ययुयायियया सूर्यमण्डलभेदिगत्या । 'क्विबन्तो धातुत्वं न जहाति' इति परिभाषावचनात् 'आतो धातोः' इत्याकारलोपे कृते रूपमेतत् । इयाय जगाम । किंभूतया गत्या । येयया अवश्यप्राप्यया । यो यो जनस्तां देवीं शरणमेति स स सूर्यमण्डलभेदिगत्या गच्छति । मुच्यते इति तात्पर्यार्थः । अन्यच्च या देवी अयायाय यये । अयो शुभं दैवमनुकूलं वा कथ्यते तस्यायः अयायः । अवनमायः प्राप्तिः । तदर्थमयायाय ज्ञानप्राप्तये यये शिश्रिये । यस्माद्देवी आययुक् । आयेन ज्ञानेन धनागमनेन वा युनक्ति संबध्नाति । अवनमायः । भावे घञ् । एय इति ईङ् आङ्पूर्वस्य ल्यपि ॥ २२ ॥

तथा या देवीं शरणं गच्छन्नरः प्रपद्यमानः पुमान् । सदायुष्मान् शोभनचिरजीवी सन् समृद्धति समृद्धिं संपत्तिं प्राप्नोति । रोगच्छन्दं च नैति व्याधेरनुवर्तनं च न प्राप्नोति । व्याधिवशादपथ्यपायी न जातु भवति । यो देवीं शरणमेति स आयुरारोग्यमैश्वर्यं लभत इति वाक्यार्थः ॥ २३ ॥

कृतास्पदा यया संपदयानि सुरवैरिपु ।
हन्ति या वाङ्मयी दूरादवानि सुरवैरिपुः ॥ २४ ॥

जितानया या नताजितारसाततसारता ।
न सावना नावसानयातनारिरिना तया ॥ २५ ॥
(सर्वतोभद्रः)

मनोभवारातिमनोभिरामया जरामयापाकरणैकदक्षया ।
मदक्षयान्निर्मलतां ददानया सदा नयास्था क्रियतां तवार्यया॥२६॥
(विशेषकम्)

तव भवतस्तया आर्यया गौर्या नयस्यास्था नीत्यवस्थितिः सदा सर्वकालं क्रियतां विधीयताम् । यया देव्या सुरवैरिषु देवशत्रुषु कृतास्पदा लब्धप्रतिष्ठा संपत्समृद्धिरघानि जघ्ने हता । या च वाङ्मयी परापश्यन्तीमध्यमावैखरीरूपा अघानि पापानि व्यसनानि वा हन्ति हिनस्ति । केन । सुरवैः साधुशब्दैः । सा च दूरहननादिपुरिवेषुः ॥ २४ ॥

या जितानया अविद्यमानो नयो नीतिर्येषां ते जिता यया । तथा या देवी नताजितारसाततसारता । नतानां भक्तानां आजितः सङ्ग्रामात् यस्तारस्तारणं विजयस्तत्र या साहता सविस्तारा । आततनमातत इति । सारता दृढता । बहुतरं दार्ढ्यं सा देवीत्यर्थः । न सावना न । सहावनेन रक्षणेन वर्तते इति सावना न न सावना किं तु सावनैव । भक्तानां सरक्षणा । किं च अवसानयातनारिः । अवसाने अन्तकाले या यातना दुष्कृतिविपाकास्तासामरिः शत्रुः विनाशिनी । इना स्वामिनी । सर्वतोभद्र एषः । बन्धस्तु प्रसिद्ध एव ॥ २५ ॥

तया देव्या मनोभवारातिमनोभिरामया चित्तजन्मशत्रुचेतोनुकूलया त्रिनयनचित्तहारिण्या । तथा जरामयापाकरणैकदक्षया जरा पलितं आमया व्याधयस्तेषामपाकरणं तिरस्कारः विनाशनं तत्र दक्षया चतुरया । अन्यच्च मदक्षयादहकारविघाताद्धेतोर्निर्मलतां विरजस्कत्वं ददानया वितरन्त्या प्रयच्छन्त्या ॥ विशेषकमिदम् ॥ २६ ॥

समाययाविन्द्रहिताय या रणे समाययया या न जितारिसेनया ।
स मा ययाचे हरमाश्रितः स्फुटं समा यया मुग्धतया मनोज्ञताः॥२७॥

सा भावक्षालवर्या नुतविभवितनुर्या वलक्षावभासा
जानानस्याशयप्रा नवमलिमवनप्रायशास्याननाजा ।
सातं वर्माननस्था रहसि रसिहरस्थाननर्मावतंसा
पायादक्ता रणत्रा मतनमनतमत्राणरक्ता दयापा ॥ २८ ॥
(प्रतिपादं प्रतिलोमानुलोमः) (संदानितकम्)

सा देवी अक्ता व्यक्ता पायादव्यात् । येन्द्रहिताय शक्रश्रेयोर्थं रणे सङ्ग्रामं समाययौ समाजगाम । एवं व्यक्ताव्यक्तस्वरूपिणी देवीत्युक्तं भवति । या समायया सकपटयारि-

सेनया शत्रुपृतनया न जिता नाभिभूता । अपि च मुग्धतया कृशतया युक्तः स माश्चन्द्रो हरं महादेवमाश्रितः संश्लिष्टः सन् स्फुटं नूनं यया देव्याः समा तुल्या मनोज्ञता रामणीयकानि ययाचे प्रार्थयामास । तत्समलावण्येच्छश्चन्द्रः स्फुटं हरं याचते ॥ २७ ॥

[या च देवी] सा भावक्षालवर्या । क्षालनं क्षालः भावस्य चेतसः क्षालो नैर्मल्यं तत्र च या वर्या श्रेष्ठा । तथा नुतविभवितनुः । नुता विभविनी महाप्रभावा तनुर्मूर्तिर्यसाः । वलक्षावभासा । वलक्षः शुद्धोऽवभासः प्रभा यस्याः । शुद्धप्रकाशरूपेत्यर्थः । किं च जानानस्य ज्ञानिनः आशयप्रा अभिलाषपूरणी । तथा नवनलिनवनप्रायशस्याननाप्रत्यग्रकमलखण्डतुल्यस्तुत्यमुखी । तथा अजा जन्मरहिता । किं चाननस्था मुखगता सती सातं वर्म श्रेष्ठः कवचः । सदैव सतां वाग्रूपेण परमं संनहनं सेत्यर्थः । तथा रहसि विजने रसी रसिको योऽसौ हरः शम्भुस्तस्य यानि स्थाने नर्माणि अवसरे परिहसितानि तानि अवतंसः कर्णाभरणं यस्याः सा । रणत्रा सङ्ग्रामत्रायिणी । अपरं मतनमनतमत्राणरक्ता । अतिशयेन मतमभिप्रेतं नमनं देवीप्रणामो येषां तेषां त्राणे रक्ता सक्ता । यतो दयापा । दयां करुणां पाति रक्षति आप्नोति वा । प्रणतानां दयापरेति भावः ॥ २८ ॥

उपासते कृष्टिकृतोदयां यां जना सदाराधनमीहमानाः ।
शंभोः प्रसिद्धा तनुतां वहन्ती गौरी हितं सा भवतां विधेयात् ॥२९॥
(अर्थत्रयवाची)

सा गौरी मृडानी भवतां युष्माकं हितमनुकूलं विधेयात्कुर्यात् । यां जना लोका उपासते सेवन्ते । यतः कृष्टिकृतोदयाम् । कृष्टीनां सूरीणां कृतो विहित उदय आविर्भावो यया ताम् । कीदृशा जनाः । सदा सततं सच्छोभनं वाराधनं संमुखीकरणं सेवामीहमानाः काङ्क्षन्तः । किंभूता देवी । शंभोः शर्वस्य तनुतां कायत्वं वहन्ती बिभ्राणा । प्रसिद्धा प्रथिता ॥ अथ च सा गीर्वाणी ईहितमभिमतं विधेयात् । कीदृशी । कृष्टिभिः सूरिभिः कृत उदयो विकासो यस्याः । शंभोर्ब्रह्मण अतनुतामक्षरतां वहन्ती प्रसिद्धा ॥ तस्मिन्स्त्रीरूपेणापि सुव्यक्ता स्थिता वागिति भावः । 'शंभू ब्रह्मेश्वरौ ज्ञेयौ' । यां जना उपासते । कीदृशाः । सतां साधूनामाराधनं चित्तग्रहणमीहमाना अभिलषन्तः ॥ अन्यच्च सा गौर्भूः वः ईहितं विधेयात् । यां जना उपासते अधितिष्ठन्ति । कीदृशाः । सदाराः सकलत्राः । धनं वित्तमीहमानाः प्रार्थयमानाः । कीदृशीं क्ष्माम् । कृष्टिभिः कर्षणैर्हलविलेखनैः कृत उदयः फलागमः । देवी च वाङ्मयी (मही) मूर्तिरपीति वाक्यार्थः ॥ २९ ॥

यां सद्य एव त्रिदशैः पुमांसः समा नमस्यन्ति सदानभोगाः ।
अयानि यस्याः प्रणता विपक्षैः समानमस्यन्ति सदा नभोगाः ॥ ३० ॥
यस्याः प्रभावो द्युसदां विपक्षसेना वधानन्दयिताहरस्य ।
मनोम्बुजस्यावहतु श्रिये वः सेनावधानं दयिता हरस्य ॥ ३१ ॥
(संदानितकम्)

सा इना ईश्वरी हरस्य गिरीशस्य दयिता वल्लभा वो भवतां श्रियै लक्ष्म्यर्थमवधानं प्रयत्नमावहतु विदधातु । यां पुमांसो नराः सद्य एव प्रणतेः समनन्तरमेव त्रिदशैर्देवैः समास्तुल्या नमस्यन्ति प्रणमन्ति । किं च सदानभोगाः । सह दानेन त्यागेन भोगैर्विषयानुभवैश्च वर्तन्ते ये ते । तथा यस्या देव्याः प्रणता. प्रह्वाः नभोगा नभसि गता इति विपक्षैः शत्रुभिः समानं सहाघानि पापानि सदा सर्वकालमस्यन्ति क्षिपन्ति ॥ ३० ॥

तथा यस्या देव्याः प्रभावो माहात्म्यं द्युसदां सुराणां विपक्षसेना वधानन्दयिता अरिवरूथिनीवधेन हननेनानन्दयिता परितोषयिता । किं चास्य मनोम्बुजस्य चेतःकमलस्य अहर्विाहः । विकासकत्वात् । एतद्देव्याः प्रभावस्य वा विशेषणम् ॥ ३१ ॥

सुरा जिता भावितदेवराजद्विपक्षमा यात रणादभीतम् ।
स्वापं न वो धाम हितं न नाम सदेवसेना भवतोहितानाम् ॥ ३२ ॥
सुराजिता भावितदेवराजद्विपक्षमाया तरणादभीतम् ।
स्वापन्नबोधामहितं ननाम सदैव सेना भवतो हितानाम् ॥ ३३ ॥

(महायमकम्)

सुरानिति द्वेषिजनैरभिद्रुतानुदाहरद्या स्वयमाहवोद्यता ।
शिवोऽद्य तापप्रशमस्तया तव प्रशस्तया तत्त्वदृशा विधीयताम् ॥३४॥

(विशेषकमिदम्)

तथा देव्या प्रशस्तया मङ्गलभूतया तव भवतः अद्यास्मिन्नहनि तत्त्वदृशा सारज्ञानेन शिवः श्रेयाननुकूलः······मसुख इति यावत् । तापप्रशम आध्यात्मिकाधि दैविकाधिभौतिकदोषत्रयस्य प्रशमो विनाशो विधीयतां क्रियताम् । या देवी सुरान्देवान्द्वेषिजनैः शत्रुजनैरभिद्रुतान्पलायितान्स्वयमाहवोद्यता सङ्ग्रामसंनद्धा सती इति वक्ष्यमाणप्रकारेणोदाहरदवोचत् । कथमित्याह—हे जिता अभिभूताः सुरा देवाः, रणात्सङ्ग्रामादभीतं निर्भयं कृत्वा यात गच्छत । मा भूद्भवतां सङ्ग्रामभयमित्यर्थः । भाविता देवराजद्विपस्य ऐरावणस्य क्षमा अशक्तता यैस्ते । अपरं वो भवतां हित धाम अनुकूलं स्थानं न न नाम स्वापम् । सुप्रापमेवेत्यर्थः । अन्यच्च या देवसेना सह देवेन इनेन प्रभुणा च सुराजिताः सुष्ठु आजिता ऊहितानां तर्कितानां चित्तविषयाणां शत्रूणां मध्ये भवतः संपत्········समस्तश्लोकयमनान्महायमकमिदम् ॥ ३२ ॥ ३३ ॥ ३४ ॥

वक्त्रं बिभ्रत्युपहितचन्द्रायासं या संमोहप्रशमनसूर्याकारा ।
कारानीतामरमरिमाचिक्षेप क्षेपत्यक्ता रणभुवि सा वः पायात् ॥ ३५ ॥

(काञ्चीयमकम्)

सा देवी वो युष्मान्पायात् । या उपहितचन्द्रायासं वक्त्रं बिभ्रती स्वकान्त्यतिशयेनोपहितो दत्तश्चन्द्रस्य शशाङ्कस्यायासो ग्लानिर्येन तादृशं वक्त्रं मुखं बिभ्रती धारयन्ती । तथा

संमोहो हार्दं तमस्तत्प्रशमने विनाशने सूर्याकारा भानुतुल्या। सूर्यो यथा तमोविनाशने दक्षस्तद्वद्धार्दतमोनिवृत्तये देवीत्यभिप्रायः। तथा या देवी क्षेपत्यक्ता भर्त्सनरहिता अनिन्द्या रणभुवि आहवभूमौ कारानीतामरं बन्धनस्थापितदेवं अरिं शत्रुं आचिक्षेपाजुहाव। समरार्थमाहूतवतीत्यर्थः। काञ्चीवन्मेखलावत्स्तम्भनात्काञ्चीयमकम्। जलधरमाला नाम वृत्तम्॥३५॥

हितेहितेऽस्तु ते स्तुते जिताजितामितामिता।
जयाजया जनोऽजनो यया ययावलं वलम्॥ ३६ ॥

(आवलिर्नाम यमकमिदम्)

जयाख्या देवी ते तव हितेहितेऽनुकूले चेष्टितेऽस्तु भवतु। हितं च तदीहितमिति। त्वद्धितकार्ये वर्ततामित्यर्थः। कीदृशे। हितेहिते स्तुते प्रशस्ते। कीदृशी देवी। जिताजितां लब्धजयसमरतामिता गता। तथा अमिता अपरिच्छिन्नस्वरूपा। अन्यत्, यया हेतुभूतया जनो लोकः अलमत्यर्थं [वलं] ययौ जगाम लेभे। कीदृश्या यया। अजया जन्मरहितया। कीदृशो जनः। अजनः जन्मरहितः सन्। जननं जन इति कृत्वा नञ्समासः। प्राप्ततत्त्वज्ञान इत्यर्थः। मुमुक्षुर्जनस्त्वत्प्रसादान्मोक्षावाप्तिसामर्थ्यं लभत इत्युक्तं भवति॥ ३६॥

सक्तिं वः सुकृतार्जने विदधती सत्रा यतां त्रायतां
दुर्गा दुर्ग्रहदूषितोद्धतधियामायासदा या सदा।
साधूत्साहविधानसक्तमनसां मुख्या ततां ख्याततां
संस्मृत्यैव········[मत्सरभरस्फीतापदां तापदाम्]॥ ३७ ॥

···············आयासदा क्लेशदायिनी। तथा साधूत्साहविधाने सज्जनानामुत्साहकरणे सक्तमनसामभिनिविष्टचेतसां लोकपालानां मुख्या प्रधानम्। अन्यच्च संस्मृत्यैव स्मरणेनैव ततां विस्तीर्णां ख्याततां·······। मत्सरत(भ)रो द्वेषबाहुल्यं स एव स्फीतो विप्रलाप (?) आपद्दौर्भाग्यं येषां तेषां तापदां खेदप्रदाम्॥ ३७॥

या मूर्तिं किमपि स्मरारिवपुषा धत्ते समायोजितां
यां दृष्ट्वैव विनाशमाप सहसा शुम्भः समायोऽजिताम्।
या नम्रैः सुरसिद्धकिंनरनरैः खेदं विना शस्यते
सा हेतुर्भवतां त्रिलोचनवधूरश्रीविनाशस्य ते॥ ३८ ॥

त्रिलोचनवधूर्हरपत्नी ते भवतः अश्रीविनाशस्यालक्ष्मीप्रतिघातस्य हेतुर्निमित्तं भवतात्संपद्यताम्। या स्मरारिवपुषा मदनरिपुशरीरेण समायोजिता मिश्रितां मूर्तिं तनुं किमपि केनापि हेतुना धत्ते धारयति। यां चाजितामपरिभूतां शुम्भाख्यो दैत्यः समायः सप्रपञ्चोऽपि सन्दृष्ट्वैवावलोक्यैव सहसा झटित्येव विनाशं मरणमाप प्राप लेभे। तथा सुरसिद्धकिंनरनरैर्देवसिद्धगन्धर्वपुरुषैः खेदं विना आलस्यं विना शस्यते स्तूयते॥ ३८॥

सायासायास्त्रिलोक्याः शरणमकरुणक्षुण्णदैत्यप्रवीरा
स्वैरं स्वैरंशसर्गैर्गहनतममहामोहहार्दं हरन्ती ।
शस्याशस्यादधाना सकलमभिहितं भक्तिभाजः स्मृतैव
स्तादस्तादभ्रदोषा द्विपदुपशमनी सर्वतः पार्वती वः ॥ ३९ ॥

पार्वती वो युष्माकं सर्वतः समस्तादिग्देशकाद्विपद्दुपशमनी शत्रुमर्दिनी स्ताद्भवतात् । अस्ताः क्षिप्ता विनाशिता अदभ्रा महान्तो दोषा मूर्तामूर्त·······तथा सायासायाः सोपतापायास्त्रिलोक्या भूर्भुवःस्वर्लक्षणायाः शरणमभयपदस्थानम् । अन्यच्चाकरुणं निर्दयं कृत्वा क्षुण्णा विनाशिता दैत्यप्रवीरा असुरप्रधाना यया सा । अपि च स्वैर्निजैरंशसर्गैरवयवप्रादुर्भावैः स्वैरं शनैः शनैः कृत्वा गहनतमो दुर्भेदो योऽसौ महान्हार्दो हृदयभवो मोहोऽविवेकस्तं हरन्ती निवारयन्ती । अन्यच्च भक्तिभाजः सेवासक्तपुंसः शस्याशस्य सम्यक्स्तुत्याभिलाषस्य सतः स्मृतैव ध्यातमात्रैव सकलमशेषमभिमतमादधाना पोषयन्ती॥३९॥

सुरसुरचितचितनवनवभवभवनानादरादरायेये ।
लयलयचरणौ चरणौ न न मामि नतेन नमामि न ते ॥ ४० ॥

(निरन्तरावलियमकम्)

हे देवि, सुरैर्देवैः सुरचितेन शोभनरचनाया चिता दृष्टा नवा अनन्यकृता नवाः स्तवा यस्याः सा सुरसुरचितचितनवनवा । तथा भवभवाः संसारसभूता ये नानादरा बहुप्रकारभयानि तन्निवृत्त्यर्थमादरेणौत्सुक्येन या आयेया आगन्तव्या । या भवभवनानादरादरायेया यातव्या । प्रथमार्धश्लोकेन (तु) संधानम् । ते तव चरणौ पादौ लयो लीला विलासस्तस्य लयश्चरण गमनं ययोस्तौ चरणौ नतेन नमनेन नमामि न मामि न पर्याप्तो भवामि । त्वां न गच्छामीत्यर्थः ॥ ४० ॥

या विस्मयं स्मरभिदा चक्रेऽङ्कारोपिता नवं नारीणाम् ।
विदधे यच्चापस्य न च कैंकारोऽपि तानवं नारीणाम् ॥ ४१ ॥
या हन्तां च प्रयाता विहायसा कंसमाह तारातिबलेन ।
कृष्णस्तव परमाया विहाय साकं समाहतारातिबलेन ॥ ४२ ॥
तां नमत या च समरेष्वनेकशो भाति भद्रकाली नतया ।
ख्याति यया जनतोज्ज्वलविवेकशोभातिभद्रकालीनतया ॥ ४३ ॥

(कलापकम्)

तां देवीं नमत नमस्कुरुत या स्मरभिदा मदनहन्त्रा भर्त्रा हरेणाङ्कारोपिता उत्सङ्गमारोहिता सती नारीणां स्त्रीणां नवमपूर्वं विस्मयमाश्चर्यं चक्रे । तथा यच्चापस्य य-

दीयधनुषश्च संबन्धी जैंकारोऽपि ज्यानिष्पत्तीणामरातीनां तानवं क्षयं न न विदधे अपि तु चक्रे । अपरं या तारा प्रकाशरूपिणी विहायसा आकाशेन प्रयाता गता सती कृष्णो भगवान्वासुदेवस्तव भवतः हन्ता हिंसतु इत्यनेन प्रकारेण कंसाख्यं दैत्यमाहान्तोचत्स्म । कथमित्याह—परमाया विहाय द्विपत्कुसतीः परित्यज्य अतिबलेन बाहुना समाह ताराविना निहतशत्रुणा बलेन भगवता संकर्षणाख्येन भ्रात्रा साकं सह । तथा या च भद्रकाली कात्यायनी समरेषु युद्धेष्वनेकशो बहुधा भाति शोभते । यया च देव्या नतया प्रणतया जनता जनसमूह उज्ज्वलविवेकशोभा प्रकृष्टज्ञानप्रभा सती अतिभद्रकालीनतया अत्यर्थमङ्गल्यसंयुक्ततया हेतुभूतया प्रशस्तया देवी भातीत्यर्थः । ख्याति प्रकाशते व्यक्तीभवतः (?) नमत इति संबन्धः ॥ ४१ ॥ ४२ ॥ ४३ ॥

तां स्मरत या स्मृतैव हि मानवतामरसमानता राति बलात् ।
यत्प्रणतं श्रीः श्रयते मानवतामरसमान् तारातिबलान् ॥ ४४ ॥

तां देवीं स्मरत चिन्तयत । हि यस्माद्या मानवता ज्ञानिना स्मृतैव ध्यातैव सती अमरसमानता देवतुल्यत्वानि अमृतत्वादीनि राति ददाति । तथा यत्प्रणतं यस्याः प्रह्वं मानवतामरसं नरनलिनं आनततारातिबलात् आसमन्तान्नतं धनुर्धरं पदरातिबलं तत्परित्यज्य इति ल्यब्लोपे कर्मणि पञ्चमी तस्मादेव श्रीः (बलात्) श्रयते सेवते ॥ ४४ ॥

अनवरागसमुद्भवदेहतामुपगता ददृशे गिरिशेन या ।
अनवरागसमुद्भवदेह तामवनतोऽस्मि जगत्प्रियतां सतीम् ॥ ४५ ॥

तां सतीं सतीसंज्ञां साध्वीं वा अवनतोऽस्मि अहं प्रणतः । कीदृशीम् । या अनवरः सर्वोत्कृष्टो योऽसावगः पर्वतस्तत्समुद्भवदेहतां तज्जातशरीरत्वमुपगता जगत्प्रियतां च प्राप्ता सती गिरिशेन महादेवेन इहास्मिञ्जगति अनवरागसमुत् अनवेन चिरंतनेन रागेण प्रेम्णा समुत् सहर्षा ददृशे दृष्टा । तथा च कालिदासः—'सती सतीयोगविसृष्टदेहा' इति । तथा भवदा भवं संसारं द्यति खण्डयति ॥ ४५ ॥

मेने नूनमनेन माननमुमानाम्ना नु मेनोन्मना
नुन्नेनोनमने निमानममुना नो नाम नानानुमे ।
मौनेनाममनानिम्नमननान्नानामिनानूनिमे
मुन्मिन्नाननमा नमी मुनिमनोमानाननोन्नामिनि ॥ ४६ ॥

(व्यक्षरः)

हे नुन्नेनोनमने देवि, नुन्नं प्रेरितं यदेनः पापं तदेव नमनं प्रणतिर्यस्याः । पापयातिनी यस्याः सेवेत्यर्थः । वामाहूय नुन्नमित्यर्थादभ्यूह्यते तेन हे देवि, तुभ्यं नमः । यद्वा त्वां प्रणमाम इति भावः । तथा हे देवि, मेना हिमवन्महिषी उन्मना सोत्कण्ठा सती अनेन तारकेन उमानाम्ना उमेति संज्ञया नूनं निश्चितं माननं पूजनं मेने जज्ञे मु-

बुधे । नु वितर्के । हे नानानुमे, नानाविधा अनुमाः संज्ञा यस्या इत्यमुना अनेन च नाम्ना नो नाम निमान न पर्याप्तिः । नामशब्दोऽभ्युपगमे । एकेनोमानाम्ना कतमा पूजा भवेदित्यर्थः । तथा मौनेन तपसा पूतायुपलक्षणोऽत्र मौनशब्दः । नियमेन्न भावः । अमममाननिम्नमननाय्नानामिनानूनिमे मममानं ममताज्ञानमहंकारस्तेन निम्नमल्पीभूतं मममाननिम्नम् नञ्समासे कृते अमममानानिम्न यन्मननं ज्ञानं तदेवाघ शरीरवृत्तिर्येषां तपसा नहकारज्ञानवृत्तीनाम् इनानूनिमे ऊनस्य भाव ऊनिमा न ऊनिमा अनूनिमा । इनादादित्यादनूनिमा यस्याः । टावन्ताया आह्वानं इनानूनिमे सूर्यसमाने । तथा हे मुन्मिन्माननमाः मुदा हर्षेण मिन्नः स्निग्ध आननमा मुखचन्द्रो यस्याः । हे आनन्दमयीत्यर्थः । अन्यच हे मुनिमनोमानाननोन्नामः तदस्या अस्ति शीलं वेति तन्नामिनी । मुनिमनसामेषा ज्ञानमाप्याययतीति भावः । तस्य आह्वानमिति सबन्धः ॥ ४६ ॥

तां वन्देऽहं नवं देहं ज्ञानरूपं विधाय या ।
सुधीरस्यति धीरस्य महामोहमयीं त्वचम् ॥ ४७ ॥

तां देवीमहं वन्दे प्रणतोऽस्मि या धीरस्य विषयानपहृतस्य सुधीः शोभनबुद्धिरूपा सती ज्ञानरूपं बोधमयं नव प्रत्यग्रं देहं शरीर विधाय निर्माय महामोहमयीं महदज्ञानरूपा त्वचं कृत्तिमस्यति क्षिपति नाशयति ॥ ४७ ॥

यां नुत्वा यान्ति हृद्यार्थसज्जायां गिरि शस्यताम् ।
नौम्यहं भक्तिमास्थाय सज्जायां गिरिशस्य ताम् ॥ ४८ ॥

तां गिरिशस्य जायां हरस्य पत्नीं अहमस्मि भक्तिमास्थाय सेवां पुरस्कृत्य सत् शोभनं कृत्वा वाङ्मनःकायैरिति नौमि स्तौमि यां देवीं नुत्वा प्रणम्य हृद्यार्थसज्जायां मनोहरवस्तुप्रवणाया वाचि शस्यतां यान्ति प्रशसा लभन्ते ॥ ४८ ॥

यदानतोऽयदानतो न यात्ययं नयात्ययम् ।
शिवे हितां शिवेहितां स्मरामितां स्मरामि ताम् ॥ ४९ ॥

तां देवीं स्मरेण कामेनामितामपरिच्छिन्नामनभिभूतां स्मरामि चिन्तयामि ध्याये । यदानतो यस्याः प्रणतः पुमान् अयदानतोऽयो दैवमनुकूलं तस्य दानं क्षयः । दीङ् आते (धातोः ?) रूपम् । अतोऽयदानतो हेतोर्नयात्ययं नीतिविघातं न याति न गच्छति । कीदृशीं देवीम् । शिवे शंकरे हितामनुकूलाम् । तथा शिवं श्रेय-प्रदमीहितं यस्यास्ताम् ॥ ४९ ॥

सर स्वतिप्रसादं मे स्थितिं चित्तसरस्वति ।
सरस्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति ॥ ५० ॥

हे सरस्वत्याख्ये देवि, स्वतिप्रसादं सुष्ठु अतिशयेन च प्रसादं सर गच्छ । स्वतिशब्दो सुतरामर्थे । तथा मे चित्तसरस्वति चित्तमेव सरस्वान्समुद्रस्तत्र मनःसमुद्रे स्थितिं पर कुरु विधत्स्व । क्षेत्र शरीरं तदेव कुरुक्षेत्रसंज्ञं पुण्यस्थानं तत्र नित्यावस्थानात्सरस्वती नदीव सरस्वती । तस्या आमन्त्रणम् । शरीरे नित्योदितवाग्रूपतया स्थितेति भावः ॥ ५० ॥

त्वद्भक्तिभावितधियो जगतामत्र ये त्रये ।
जन्मवत्तामहं मन्ये तेषामेवानृणां नृणाम् ॥ ५१ ॥

(विरोधाभासः)

हे देवि, ये नरास्त्वद्भक्तिभावितधियस्त्वत्सेवाधिवासितधिषणा अत्रास्मिञ्जगति जगतां विष्टपानां त्रये त्रैलोक्ये ये सन्ति तेषामेव जन्मवत्तां सजन्मत्वमनृणां विनष्टऋणत्रयामहं मन्ये । अस्मिञ्जगति ऋषिपितृदेवानां ब्रह्मचर्यप्रजायज्ञैर्यदानृण्यं तद्देवीभक्त्या भवतीति भावः । अत्रये त्रये, अनृणां नृणां इति विरोधाभासित्वम् ॥ ५१ ॥

जगतः सातिरेका त्वं गतिरस्य स्थिराधिका ।
तरस्यत्रासतारारेः सास्यत्रासरसस्थिति ॥ ५२ ॥

(अर्धभ्रमोऽयम्)

हे देवि, त्वमस्य जगतस्त्रैलोक्यस्य सातिरेका सातिशया गतिः परायणम् । शरणमित्यर्थः । कीदृशी । स्थिरानपायिनी । अथाधिका । सर्वेषां गरीयसीति भावः । तथा॰ त्रास्मिञ्जगति असतारा सती अरेर्मोहात्तरसि । सह तारेण वर्तत इति सतारा । न सतारा असतारा । अनायासेन मोहं नाशयसीत्यर्थः । कथम् । अत्रासरसस्थिति कृत्वा । त्रासरसे अभिनिवेशे स्थितिः स्थानं न विद्यते यस्मिन् । सर्वतोभद्रापेक्षयार्धभ्रमणादर्धभ्रमः कथ्यते ॥ ५२ ॥

त्वन्नामस्मरणादेव न लक्ष्मीश्चपलायते ।
सर्वतः पार्वति क्षिप्रमलक्ष्मीश्च पलायते ॥ ५३ ॥

हे पार्वति गिरिजे, त्वन्नामस्मरणाद्वाचकसंज्ञाचिन्तनादेव लक्ष्मीः श्रीर्न चपलायते चपलत्वं नाचरति । न चलतीत्यर्थः । तथा क्षिप्र त्वरितं सर्वतो दशदिक्कं सर्वपदार्थेभ्योऽलक्ष्मीर्दौर्भाग्य पलायते दूरीभवति ॥ ५३ ॥

जयन्ति भक्ता वित्तेशसमरायस्तवाहवे ।
तुभ्यं नमस्त्रिलोक्यर्थसमरायस्तबाहवे ॥ ५४ ॥

हे देवि, तव भवत्याः संबन्धिनो भक्ताः सेवका आहवे सङ्ग्रामे जयन्ति सर्वोत्कर्षेण वर्तन्ते । परानभिभूयेत्यर्थः । कीदृशा भक्ताः । वित्तेशेन वैश्रवणेन समस्तुल्यो राध नं येषां ते वित्तेशसमरायः । तस्मात्तुभ्यं भवत्यै नमः । कीदृशे । त्रयाणां लोकानां समाहारस्त्रिलोकी तदर्थं त्रिलोकीरक्षणार्थं यः समरो युद्धं तत्रायस्ता आ समन्तात्सयत्ना व्यापृता बाहवो भुजा यस्या इति ॥ ५४ ॥

सत्त्वं सम्यक्त्वमुन्मील्य हृदि भासि विराजसे ।
द्विपामरीणां त्वं सेनां वाहिनीमुदकम्पयः ॥ ५५ ॥

(पुनरुक्तवदाभासः)

हे देवि, विराजसे विगतरजोविकारे हृदि हृदये त्वं भासि शोभसे। किं कृत्वा। सम्यग्विधिवत्सत्त्वं चेतोगुणमुन्मील्य प्रकटीकृत्य। तथा द्विषां शत्रूणां संबन्धिनीं वाहिनीं चमूमरीणां सारवतीं सेनां सेश्वरां त्वमुदकम्पयः कम्पयांचकार कम्पितवती। भासि विराजसे, द्विषामरीणाम्, सेनां वाहिनीम्, उदकं पयः, इति पुनरुक्तभासनात्पुनरुक्तवदाभासोऽयं न तु पुनरुक्तः॥ ५५॥

दूरागतरसा धन्यः सेवते यस्तव स्तुतीः।
दूरागत रसाधन्यः कल्पन्ते तस्य सिद्धयः॥ ५६॥

हे देवि, यो धन्यः पुरुषः पुण्यवांस्तव भवत्याः स्तुतीः प्रशंसाः सेवते विदधाति तस्य पुंसः सिद्धयो मनोरथा अणिमाद्या वा कल्पन्ते संपद्यन्ते। किंभूताः सिद्धयः। दूरागतरसा दूरमत्यर्थमागतो रसः सक्तिर्यासु ताः। अभिलषणीया इति यावत्। तथा दूरागो दुष्टासक्तिस्ततस्तर उत्तरणं साधयन्ति संपादयन्ति तच्छीलास्ताः॥ ५६॥

मोहं हत्वास्पदं यासि सात्त्वमम्ब रवासिना।
या न संस्तूयसे केन सा त्वम्बरवासिना॥ ५७॥

हे अम्ब मातः, सा त्वं वक्ष्यमाणस्वरूपा केनाम्बरवासिना द्युसदा देवेन न स्तूयसे। सर्वैरपि देवैः स्तूयस इति भावः। सा त्वं का। या भवती रवासिना अनाहतखड्गेन मोहमज्ञानं हत्वा विनाश्य प्रकाशात्मकसत्त्वगुणमयमास्पदं स्वकीयं प्रकाशस्थानं यासीत्यर्थः। तथा चोक्तम्—'अनाहते पात्रकर्णे भग्नशब्दे सरिद्रुते (?)। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति'॥ ५७॥

प्रकाश्य गृह्यपुंसस्यखेदच्छेदाम्बुदावली।
प्रज्ञात्मनेनविमला स्थिता दृश्यसि विद्वताम्॥ ५८॥

(अपशब्दाभासः)

हे देवि, असि त्वम्। विद्वताम् वेदन वित् ज्ञानं विद्यते येषां तेषां संबन्धिन्यां दृशि बुद्धौ प्रज्ञात्मना ज्ञानरूपेण विवेकात्मना प्रकाश्य प्रकटीकृत्वा इनविमला आदित्यरूपा तिष्ठतीत्यर्थः। कीदृशी त्वम्। गृह्यास्त्वत्सेवोद्यता ये पुमांसस्त एव सस्य शालिस्तस्य खेद आयासस्तस्य च्छेदे विनाशेऽम्बुदावलीत्यर्थः। गृह्य, प्रज्ञात्मनेन, दृश्यसि, विद्वताम्, इत्यपशब्दवदाभासनादपशब्दाभासः॥ ५८॥

भवानि ये निरन्तरं तव प्रणामलालसाः।
मनस्तमोमलालसा भवन्ति नैव तु क्वचित्॥ ५९॥

हे भवानि शर्वभार्ये, ये जना निरन्तरमविरतं कृत्वा तव भवत्याः प्रणामलालसाः प्रणतिपरास्ते मनस्तमोमलालसा चित्तमोहकलङ्कनिःशोभा न क्वचिन्न कुत्रचिद्भवन्ति संपद्यन्ते॥ ५९॥

विभावनाकुला त्वयि क्रमेण देवि भावना ।
वपुष्पतिस्थिरेतरे नितान्तमेव पुष्यति ॥ ६० ॥

हे देवि, त्वयि विभौ व्यापिन्यां त्वद्विषये क्रमेण यथोक्तविधिना अनाकुला स्थिरा निश्चला भावना भक्तिः अतिस्थिरेतरे अतिशयेन स्थिरादितरे विनश्वरे वपुषि शरीरे नितान्तमेवात्यर्थं पुष्यति पुष्टा । प्रकृष्टेत्यर्थः । अस्थिरेऽस्मिन्संसारे त्वद्भक्तिरेव सारमित्यर्थः ॥ ६० ॥

महोऽदयानामवधी रणेन महोदयानामवधीरणेन ।
महोदयानामव धीरणेनमहोदयानामवधीरणेन ॥ ६१ ॥

(पादाभ्यासयमकम् ।)

न दयन्ते रक्षन्तीत्यदया हिंस्रास्तेषामदयानां महस्तेजः रणेन संग्रामेण या त्वमहो आश्चर्यं दयानामवधीरणेन तिरस्कारेणावधीः निहतवती । निर्दयतया हिंस्रत्वं समरं महोदयानामुत्सवोत्पत्तीनामवधीरणेनावधिक्षपणेन निरवधिसुखोत्पादनेन महोदया महान्तो बृहन्त ये उदया अयो ज्ञानं दैवमनुकूलं वा । उद्गतश्चासावय उदयः । महान्त उदया येषां तेषां धीरणेनं धीरयतीति धीरणं धैर्यकर्तारमिनमीश्वरं प्रभुमव रक्षस्व । महाज्ञानानां धैर्यकर्तारं प्रभुं पालयेति यावत् ॥ ६१ ॥

न मज्जनेन तीर्थानां तदिह प्राप्यते शुभम् ।
नमज्जनेन तीर्थानां सेवया यत्त्वाम्बिके ॥ ६२ ॥

हे अम्बिके मातः, तव भवत्याः संबन्धिनां तीर्थानामागमानां सेवया समाश्रयणेन नमज्जनेन प्रणतजनेन यच्छुभं फलं श्रेयः प्राप्यते लभ्यते तत्तीर्थानामप्यसेवितजलानां मज्जनेन न प्राप्यते ॥ ६२ ॥

प्रयाति मोहे निःसारभारतीव्रतमेत्ययम् ।
त्वत्प्रसादाज्जनः सारभारतीव्रतमेत्ययम् ॥ ६३ ॥

हे देवि, अयं जनो लोकस्त्वत्प्रसादात्त्वदीयेन कारणेन सारभारतीव्रतं सारा प्रधाना चासौ भारती वाक् तद्व्रतं तत्परतामेति प्राप्नोति । पश्यन्तीस्वरूपं लभत इत्यर्थः । वाक्त्रितये हि प्रधाना पश्यन्ती । तथा चोक्तम्—'अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥' कस्मिन्समये । मोहेऽज्ञानेऽत्ययं विनाशं प्रयाति गच्छति सति । कीदृशे मोहे । निःसारभारतीव्रतमे निःसारस्य दुर्बलस्य यथा भार आयासहेतुस्तद्वत्तीव्रतमे दृढतमे । अविषयायासद इत्यर्थः ॥ ६३ ॥

शास्त्रप्रभावहसिताः सतां या निर्मला गिरः ।
शास्त्रप्रभावहसितास्त्वमम्ब तिमिरच्छिदः ॥ ६४ ॥

हे अम्ब जननि, याः सतां साधूनां सूरीणां संबधिन्यः शास्त्रप्रभावेण पदवाक्यप्रमाणानां

माहात्म्येन हसिता गिरो वाचो निर्मला अकलङ्का निरपशब्दास्तास्त्वं शास्त्रप्रभा आयुधदीधितयस्तिमिरच्छिदोऽन्धकारघ्यो वहसि बिभर्षि धारयसि। निरपशब्दा वाचो मोहध्वस्तत्वायुधमित्यर्थः॥ ६४॥

शमीह ते समानतो विभावितोऽत्रसन्न यः।
विभावितोऽत्र सन्नयः शमीहते स मानतः॥ ६५॥

हे देवि, ते तव समानतः सम्यक्प्रणतो य इह संसारेऽत्रसन्नबिभ्यन्सन् न विभौ भगवति वासुदेव्याख्ये ब्रह्मणि इतः न गतः। मोक्षं न प्राप्त इति भावः। शमी जितेन्द्रियः सन् सन्नयो विद्यमाननीतिः। अत्र ससारे विभावितो लक्षितो मानतो ज्ञानाद्धेतो सश्रयत ईहते चेष्टते यः। संसारसक्ततया भगवन्त विष्णुं न श्रितः सोऽपि त्वां प्रणतश्चेत्तद्विद्यमाननीतिः शमी स प्राप्तज्ञानो विश्व प्राप्नोतीति भावः॥ ६५॥

मातरं त्वा पदं सद्य आश्रितास्ते कथं जनाः।
मा तरन्त्वापदं सद्य आद्यं श्रेयः समाश्रिताः॥ ६६॥

हे देवि, त्वां मातरमम्बिकां ये जना लोका आश्रितास्ते कथं केन प्रकारेण सद्यस्तत्क्षणमेव आपदं दुर्गति मा तरन्तु मा लङ्घयन्तु। दुःखमुत्तीर्य वर्तन्त इति भावः। त्वां कीदृशीम्। सत्पदं शोभनस्थानम्। जनाः कीदृशाः। आद्यमग्रिम श्रेयः शिवं समाश्रिता अधितिष्ठन्तः॥ ६६॥

भाति त्वत्तनुसंश्लेषे सत्यम्ब पुरनुत्तरम्।
संसाराब्धौ सदाहुस्ते सत्यं वपुरनुत्तरम्॥ ६७॥

हे अम्ब मातः, त्वत्तनुसंश्लेषे त्वत्कायसङ्गे सति पुरनुत्त्रिपुरारातिः शंभुर्भाति शोभते। ते तव सबन्धि च सत्सत्यं ध्रुव वपुः पश्यन्तीवाग्रूपं शरीर संसाराब्धौ जगज्जलधौ सत्तर शोभनं प्लव अनुत्तरमविद्यमानापरमाहुर्ब्रुवते। तत्त्वविद एवं गायन्तीत्यर्थः। अविधातोरम्बाशब्दसिद्धेः कथं केवलौष्ठ्यतया मकारः परमवर्णः (?) दन्त्योष्ठ्ययोर्द्वयोरपीति यमकस्याभङ्गः॥ ६७॥

यच्छ मे नित्यसंसङ्गि यच्छमे तदिदं मनः।
स्वच्छलो भक्तियोगस्ते स्वच्छलोकविवेकसूः॥ ६८॥

हे देवि, यत् शमे विषयाणामसङ्गे मनश्चेतो नित्यसंसङ्गि सततानुरक्त तदिद तथाविधमेतन्मे मम यच्छ देहि। यतस्ते तव संबन्धी यो भक्तियोगः सेवासङ्गः स स्वच्छलः सुष्ठु अविद्यमानच्छलो निश्छिद्रः सन् स्वच्छं निर्मलं लोकानां जनानां लोकयोर्वा इहामुत्र च विवेकं प्रकृतिपुरुषोत्तमोत्कर्षं सूते जनयति। अत एव इहात्र परत्र च स्वच्छता॥ ६८॥

के वलन्ते वितन्वन्तकृतस्त्वत्प्रणता भवे।
केवलं ते वितन्वन्त आसते विमलां धियम्॥ ६९॥

हे देवि, त्वत्प्रणतास्त्वद्भक्ता जना वितन्वन्तकृतः वितनोरनङ्गस्यान्तकृतो विनाशकारिणो भवे संसारे के वलन्ते के आविर्भवन्ति । त्वत्प्रणता जितकामा विमुच्यन्त इति भावः । ते केवलमनन्यव्यापाराः सन्तो निर्मलाममोहां धियं बुद्धिं वितन्वन्तो विस्तारयन्त आसते तिष्ठन्ति । यावत्संसारस्तावद्विमोहः । भूयश्च त्वत्प्रणता भवे न निवर्तन्ते ॥६९॥

देवि निर्दग्धकामस्य त्वं निरावरणात्मनः ।
हरस्य शुभसंतानं तेनासौ भ्राजते तथा ॥ ७० ॥

हे देवि, त्वं हरस्य गिरिवरतनयाधवस्य शिवस्य निर्दग्धकामस्य भस्मीभावितमीनकेतनस्य तथा निरावरणात्मनः निर्गतमावरणं परिधानमात्मनो यस्य आशाम्बरस्य दिग्वाससः शुभसंतानं पुण्यप्रतानं श्रेयोविस्तारस्तेन कारणेनासौ हरस्तथा माहात्म्ययुक्तो भ्राजते शोभते । अत्र च क्रियां मत्वाकाङ्क्षैव नास्ति । विमृश्यमानश्चार्थो नान्वयः (?) एवं क्रियाया अभावात् शुभसंतानमिति द्वितीयानुपपत्तेस्त्वमिति प्रथमाया असामानाधिकरण्याच्च एतत्प्रतीयमानार्थसंबन्धिनी क्रिया गोपिता भवति । अत्रैव च व्याख्यानाल्लभ्यते । तदा चान्वयो भवति—यथा देवि, निर्दग्धकामस्य निरभिलाषस्य तथा निरावरणात्मनः प्रक्षीणक्लेशजालस्वभावस्य यतस्त्वमशुभसंतानमावरणसंततिं हरसि निवारयसि तेनाशुभसंतानहरणेनासौ तथा भ्राजते दीप्यते ॥ ७० ॥

द्विपद्भिया सपदि विमुच्यते यतस्त्वानतो जननि जयाशया न कः ।
स्तवानतो जननिजया शयानकः करोति ते युधि मधूसूदनस्वसः ॥ ७१ ॥

हे मधुमथनभगिनि कात्यायनि जननि मातः, अतोऽस्माद्वक्ष्यमाणाद्धेतोः कः पुमान् युधि संग्रामे जयाशयारिपरिभवाभिलाषेण स्तवान्स्तुतीर्न करोति न विदधाति । सर्वलोको जिगीषुस्तव स्तुतीर्विरचयतीत्यर्थः । यतो यस्मात्कारणात्तव भवत्या आनतः प्रह्वः जननिजया लोकात्मीयया द्विपद्भिया शत्रुभीत्या कर्म्या शयानकोऽपि निरुद्यमोऽपि सपदि तत्क्षणमेव प्रणामानन्तरमेव विमुच्यते त्यज्यते ततो हेतोरिति संबन्धः ॥ ७१ ॥

ज्यायोनिष्ठारिचर्याधिनियमनपरस्वैरदत्तायताज्ञा
स्वाराधत्वासमध्यानिधजननजननि ज्ञेयवस्त्वावभासा ।
नानापुण्यागमस्था नननमनमयज्ञाननन्या वरा धी-
र्याता नव्या विभुत्वं नुतसरलमनस्तामसस्त्यावहास्ये ॥ ७२ ॥

प्रतिलोमानुलोमतयात एवायं द्वितीयश्लोकः—

स्येहावस्त्या समस्तानमलरसतनु त्वं भुवि व्यानतार्या
धीरा वन्या न न ज्ञा यमनमननस्थामगण्या पुनाना ।

सा भावस्था सुयज्ञेऽनिनजनजयनि ध्यामसत्त्वाधरास्वा
ज्ञातायत्तादरस्वैरवनमयनिधिर्या वरिष्ठानियोज्या ॥ ७३ ॥

(अनेन सह संदानितकम् ।)

हे देवि, स्या समस्तानव । स्येति तदो रूपं सत्वे कृते । तेन स्या त्वं सा भवती इहास्मिञ्जगति समस्तान्समप्रानव रक्ष । या त्वमित्थंभूता ज्यायसां जगच्छ्रेष्ठानां निष्ठा परा कोटिः । तथारिवर्याणां शत्रुप्रधानानां आधीनां मनःपीडाना च नियमनाय निवारणाय वरस्याज्ञीकारस्स स्वैरं स्वातन्त्र्येण दत्ता वितीर्णा आयता दीर्घा अविनाशिनी आज्ञा शासनं यया । अथ वा दत्तं दानं यस्याः सा तथा । यताज्ञेति पृथगुक्तिः । स्वाराधत्वेत्यादि । स्वाराधत्वेन सुखसेव्यतया समानि स्वप्रतिमानि ध्यानिनां योगिना यानि यजनानि यानाः (?) तानि जनयति या तस्या आमन्त्रणम् । ज्ञेये ज्ञातव्येऽर्थे सुस्थो निश्चलोऽवभासः प्रकाशो यस्याः सा ज्ञेयसुस्थावभासा । तथा नानापुण्यागमस्था नानाविधेषु बहुप्रकारेषु पुण्यागमेषु धर्मशास्त्रेषु तिष्ठसि त्वम् । तथा जननमनमयज्ञाननन्या जनानां नमनमयं प्रणाममयं त्वत्प्रणामादागतं यज्ज्ञानं तेन नन्या । विद्यारूपा सती नन्दनीयेत्यर्थः । वरा श्रेष्ठा धीश्च त्वम् । तथा नुतसरलमनः नुतेन स्तवेन सरल मनश्चेतो यस्यास्तादृशि देवि । तम एव तामसम् । प्रज्ञादित्वात्स्वार्थे णः । तस्य तामसस्य मोहत्वावहास्ये त्व विपुलमीशत्वं याता गता नव्या स्तव्या । अपरं हे अमलरसतनु । अविद्यमानो मलरस आवरण रागस्तनौ शरीरे यस्यातस्या आहूतिः । त्वं भवती भुवि भूमौ व्यानता विधिवन्नमस्कृता । अर्या स्वामिनी । धीरा धैर्ययुक्ता । वन्द्या प्रणम्या । नन ज्ञा अपि तु ज्ञा सर्वदर्शिनी । यमनमननजस्थामगण्या च । यमेन अहिंसास्तेयसत्यब्रह्मचर्यापरिग्रहादिविधिना, तथा मननेन ज्ञानेन जात यत्स्थाम बल तेन गण्या परिच्छेद्या । तथा पुनाना पवित्रीकुर्वाणा च सती हे सुयज्ञे शोभनयजने । तथा अनिनजनजयनि अनीश्वरलोकपरिभवकारिणि । सा एवप्रकारा आयत्तादरस्वैः आयत्तो वश्योऽदरोऽभयः स्व आत्मा येषां तैः भावस्था आशयस्था ज्ञाता बुद्धा । तथा ध्यामसत्त्वाधरास्वा ध्यामानां धूसराणां तमोमयानां सत्त्वाधरा·········आत्मीया । अवनमयविधिः पालनमयं विधानम् । तथा वरिष्ठा श्रेष्ठा । अनियोज्या न केनचित्प्रेर्यते स्वतन्त्रेति भावः ॥ ७२ ॥ ७३ ॥

अलोलकमले चित्तललामकमलालये ।
पाहि चण्डि महामोहभङ्गभीमबलामले ॥ ७४ ॥

(भाषाषट्कसमावेशः ।)

हे देवि चण्डि, पाहि रक्ष । अलोला अचपलापि त्व कमला लक्ष्मीः अलोलकमला । तादृशि । तथा चित्तमेव ललामकमलं प्रधानपद्म तदेवालयः कुलायो यस्याः । तथा महामोहस्य जन्मलक्षाव्यस्ताया अविद्याया भङ्गे विनाशे भीममुग्रं बलं सामर्थ्यं यत्तेनामलेऽकलङ्के । अमलज्ञानरूपिणी सती अज्ञानं निहंसीति भावः । संस्कृतमहाराष्ट्रपिशा-

शाचमागधन्नरसेनापभ्रंशात्मिकाः षडपि भाषा अत्र समाविष्टा यदा तदा भाषापट्कसमावेशोऽयम् । षण्णामपि भाषाणां साधारणा (?) न भिद्यन्त इति वाक्यार्थः ॥ ७४ ॥

दुर्गापि मातः सुलभासि भक्त्या भवानुकूलापि भवं क्षिणोपि ।
अध्येयतां यासि सदैव देवि ध्येयासि चित्रं चरितं तवैतत् ॥ ७५ ॥

हे देवि । तव भवत्याः संबन्धि चरितमाचारश्चित्रमाश्चर्यप्रदम् । यतः हे मातर्जननि, दुर्गापि कात्यायन्यपि अविदितपरमार्थापि भक्त्या सेवया सुलभासि । तथा भवानुकूलापि हरानुरक्तापि भव क्षिणोपि संसारं निहंसि । अपि च ध्येयापि चिन्तनीयापि सती अध्येयतां पठनीयत्वं सदैव सर्वकालं यासि गच्छसि । अपिरिह संभावनायाम् । या दुर्गा दुर्गमा सा सुलभा, या भवानुकूला सा भवघ्नी, या ध्येया सा अध्येयतां यातीत्यपिशब्देन विरुद्धवदाभासनाद्विरोधाभासोऽयम् ॥ ७५ ॥

महदेसुरसंधम्मे तमवसमासङ्गमागमाहरणे ।
हरवहुसरणं तं चित्तमोहमवसर उमे सहसा ॥ ७६ ॥

(संस्कृतमहाराष्ट्रभाषाश्लेषः ।)

प्रकृतत्वात्संस्कृतशब्दार्थस्तावत्—हे देवि, महदे उत्सवदायिनि मे मम सुरसंधं सुरा देवाः संधिरवधिर्यस्य तम् आगमाहरणे शास्त्रार्जने समासङ्ग सम्यगासक्तिश्रद्धामव रक्ष। शास्त्रासक्तिर्देवैरपि न परित्यक्तेति भावः । यदुक्तम्—'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' इति । तथा हे उमे हे अगजे, हसनं हसः सह हसेन वर्तत इति सहसा सामोदा सती अवसरे प्रसङ्गे बहुसरणमत्यन्तव्यापारं तं चित्तमोहं चेतोजाड्यं हर विनाशय । कविविरचितमहाराष्ट्रभाषाशब्दार्थोऽधुना—हे हरवहु शिववधु, धम्मे धर्मे पुण्ये रसं रागं देसु देहि दद्स्व विधत्स्व । तथा णे नः अस्माकं गमागमा संसारात् तमवसं तमोवशां अविद्याप्रयत्तायत्तां आसं आशां हर छिन्धि विनाशय । मोक्षं देहीत्यर्थः । मह मम तं त्वं सरणं शरण परायणम् । सहसा झगित्येव चित्तमोहं मानसमज्ञानं चित्तमोहं वा चित्रं नानाविधं मोहं मोघं विफलमर्थात्संसारं अवसरउ अपसरतु प्रयातु इतिक्रियान्वितयेन द्वितीयभाषाशब्दार्थः ॥ ७६ ॥

वन्द्या प्रभातसंध्येव सूर्यालोकप्रवर्तिनी ।
निवर्तयसि देवि त्वं महामोहमयीं निशाम् ॥ ७७ ॥

हे देवि, त्व वन्द्या प्रणम्या । सूरीणां विदुषामालोकप्रवर्तिनी प्रकाशदायिनी ज्ञानदा सती महामोहमयीमज्ञानस्वरूपां निशामविद्यां निवर्तयसि द्रावयसि । अत एव प्रभातसंध्येव उषःप्रत्यूषयोरन्तरं यथा । सा हि संध्या सर्वेषां वन्द्या भवति तथा सूर्यालोकप्रवर्तिनी महान्धकारां निशां निवर्तयति ॥ ७७ ॥

संवादिसारसंपत्तीसदागोरिजयेसुदे ।
तवसत्तीरदे सन्तु संसारे सुसमानदे ॥ ७८ ॥

(संस्कृतसूरसेनभाषाश्लेषः ।)

तत्र संस्कृतशब्दार्थस्तावत्—हे देवि, असुदे प्राणदायिनि, तव संबन्धिन्यौ द्वे सत्ते । भावावित्यर्थः । तत्रैका विद्यमानता अपरा उज्ज्वलता ते सत्ते सद्विद्यमानमागोऽपराधो येषां तेषां सागसां सापराधानामरीणां शत्रूणां जयेऽभिभवे पराभवविषये संवादिसारसंपत्ती संवादिनी ज्ञायमाना सारस्य बलस्य संपत्तिः समृद्धिर्ययोस्ते सत्ते । सापराधा अरयो यथा जनेन जीयन्ते तथा तव सनिधानमौज्ज्वल्यं च लक्ष्यत इत्यर्थः । तथा ते सत्ते द्वे भवसागरे सत्तीरदे शोभनपारप्रदे । त्वयि सत्यां त्वत्प्रभावेण वा संसारसागरादुत्तीर्यत इति भावः । तथा सुसमानमपभ्रंशमानं ददतः । अथवा सुसम ब्रह्मादिस्तम्बपर्यन्तं चतुर्दशविधे भूतसर्गे नित्योदिततया समत्वेन साधारणत्वेनावस्थितं शब्द शब्दब्रह्म ददतः । तच्च संसारसागरसमुत्तरणप्लवम् । तथा च बाह्वृची श्रुतिः—'ऋचे अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः । यस्तं न वेद किमृचा करिष्यति य एतद्विदुस्त इमे समासते ॥' इति । सूरसेनभाषार्थोऽधुना—हे गोरि हे गौरि, जयेसु जगत्सु त्रैलोक्यं दे ते तवसत्ती तपःप्रभावः सदा सर्वकालं संवादिसारसंपत्ती शम्बातिसारसंप्राप्तिः शम्बवद्वज्रवदतिसारातिदृढा संप्राप्तिर्लाभो यस्याः सा शम्बातिसारसंप्राप्तिः । यदुक्तममरसिंहेन—'ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः । शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥' इति । अनपायिनी त्वत्तपःशक्तिरित्यर्थः । कीदृशि गौरि । सत्ती रदे सत्वे रते चेतोविकारजयासक्ते । कीदृशे सत्वे । शंसारे श्रेयःप्रधाने । तथा हे गौरि, सुसमानदे सुशमानते सुशमैः सुष्ठुचित्तोद्रेकजयिभिरानते प्रणते । मुमुक्षवस्त्वां प्रणमन्तीति भावः । यतश्चित्तजय एव मोक्षः । यदुक्तम्—'चित्तमेव हि संसार रागादिक्लेशदूषितम् । तदेव तद्विनिर्मुक्त मोक्ष इत्यभिधीयते ॥' इति ॥ ७८ ॥

आगममणिसुदमहिमसमसंमदकृदपरजस्सु ।
किर सविभयवदितो समय उज्जलभावसहस्सु ॥ ७९ ॥

संस्कृतापभ्रंशश्लेषः ।

द्विपथकाख्यं वृत्तम् । इहापि संस्कृतशब्दार्थस्तावत्प्रकृतत्वात्—हे देवि, अपरजःसु अपगतरजस्केषु गलितमोहेषु नृषु इतोऽस्मात्संसारादसमयेऽनवसरे आगममणिसुदमहिमसमसंमदकृत् आगमाः शास्त्राणि त एव प्रकाशकत्वान्मणय इव मणयः तथा शोभनो यो दमश्चित्तोपशमः स एव निर्वापकत्वाद्धिमं तत्संबन्धी योऽसौ समोऽनाकुलः संमदो हर्षस्तं कृन्तति छिनत्ति यत्तत्किर उत्क्षिप । अज्ञानं विनाशयेति वाक्यार्थः । कथम् । सविभयवत् सवो यज्ञोऽस्यास्तीति सवी यायजूकस्तेषां भयवद्भीतिवत् । यज्वनां यथा भयं किरसि तद्वदज्ञानं नाशयेत्यर्थः । तथा कीदृशेषु नृषु । उज्जलभावसहस्सु उद्गतो

योऽसौ जलभावो जडभावो जाड्यं तत्र सहो बलं येषां तेषु । लडावेकरूपावित्याम्नायः । अथ प्राकृतापभ्रंशभाषार्थः ।—जस्सु पर यस्य परं केवलं आगम मणि आगमाः शास्त्राणि मणि मनसि तथा सुदमहिम श्रुतमहिमा शास्त्रावबोधः, तथा सम शमः विषयनिग्रहः एते च सर्वे समद साम्यदाः साम्यमनाकुलत्वं ददानाः किर स वि किल सोऽपि भयवदितोसमय उज्जलभावसहस्सु भगवतीतोषमयमुज्ज्वलभावसहस्रम् । सहस्रशब्दो बाहुल्यार्थे । तदपि किल देवीपरितोषागत निर्मलपदार्थसहस्रमित्यर्थः । देवीप्रसादविलसितं तत्तस्येति वाक्यार्थः ॥ ७९ ॥

अथ चक्रम्—

त्वं वादे शास्त्रसङ्गिन्यां भासि वाचि दिवौकसः ।
तवादेशास्त्रसंस्काराज्जयन्ति वरदे द्विषः ॥ ८० ॥

(अप्रत्यभिज्ञायमकमिदम् ।)

हे देवि वरदेऽभिलषितदायिनि, वादे स्वपक्षपरपक्षपरिग्रहे शास्त्रसङ्गिन्यां शास्त्रसज्जायां वाचि भारत्यां त्वं भवती भासि शोभसे । तथा दिवौकसो लेखा देवास्तव भवत्याः संबन्धिन आदेशास्त्रसंस्कारात् आदेश आज्ञा तदेवास्त्रं विनाशायाभिनिर्मितं द्रव्यं तत्संस्कारासद्भावनाबलाद्धेतोर्द्विषः शत्रून् जयन्त्यभिभवन्ति । वादे शास्त्रसमिति पञ्चाक्षरयमनेऽप्यप्रत्यभिज्ञानादप्रत्यभिज्ञायमकमेतत् ॥ ८० ॥

सदाव्यानवशिध्याताः सदात्तजपशिक्षिताः ।
ददास्यजस्रं शिवताः सूदात्ताजदिशि स्थिताः ॥ ८१ ॥

(गोमूत्रिकाबन्धद्वयेन जालाकारबन्धसंबन्धादयं जालबन्धः ।)

हे देवि, अजस्रमनवरतं शिवताः श्रेयस्त्वानि ददासि प्रयच्छसि । कीदृशीः शिवताः । सदा सर्वकालमव्याजैर्निर्दम्भैर्वशिभिर्जितेन्द्रियैर्ध्याताश्चिन्तिताः । तथा सच्छोभनं कृत्वा आत्तजपैर्गृहीतमन्त्रावर्तनैः शिक्षिता अभ्यस्ताः । अन्यच्च सूदात्ताजदिशि स्थिताः सुष्ठु उदात्ता उर्जिताः प्रधाना या अजदिक् विष्णुस्थानं परं ब्रह्म तत्र स्थिताः । परब्रह्मण आगता इति भावः । अनन्तरप्रक्रान्ताप्रत्यभिज्ञायमकश्लोकेन सहामुना गोमूत्रिकाबन्धेन सह जालबन्धोऽयम् । केचित्त्वनेन (केवलेन) गोमूत्रिकाबन्धेन केवलेनैव जालाकृतिं विलिखन्ति तत्र यथानुरूपं युक्तायुक्तविचारे जालस्य प्रयोगतत्त्वविदश्चित्रकाव्यकरणकुशलाः कवयः प्रमाणम् ॥ ८१ ॥

हरेः स्वसारं देवि त्वा जनताश्रित्य तत्त्वतः ।
वेत्ति स्वसारं देवित्वा योगेन क्षपिताशुभा ॥ ८२ ॥

हे देवि, जनता जनसमूहस्त्वा त्वां भगवतीं हरेः स्वसारं गोविन्दस्य भगिनीमाश्रित्य संसेव्य तत्त्वतः सत्यतः स्वसारं निजमुत्कर्षं वेत्ति जानाति । कथम् । योगेन चेतोवृत्तिनि-

रोधेन देवित्वा व्यवहृत्य क्षपिताशुभा विनाशितकिल्बिषा। तथा च मनुः—'प्राणायामैर्दहेद्दोषान्प्रत्याहारेण संगतिम्। ध्यानेनानीश्वरान्भावान्धारणाभिश्च किल्बिषम्॥ समस्तेन्द्रियवृत्तिर्हि प्राणो वायुः प्रकीर्तितः। तज्जयादिन्द्रियाण्याशु विजितानि भवन्ति हि॥ प्राणस्यैव जयो योगः प्राणस्यैव जयस्तपः। प्राणस्यैव जयात्सर्वं प्राप्यते नात्र संशयः॥' इति। तथा च छान्दोग्योपनिषदि—'यथा शकुनिः सूत्रे बद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपाश्रयते एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपाश्रयते। प्राणनिबन्धनं हि सोम्य मनः।' तथा च बाह्वृची श्रुतिः—'सप्त युञ्जते रथमेकचक्रमेकोऽश्वो वहति सप्तनामा। त्रिनाभिचक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधितस्थुः॥' इति॥ ८२॥

सदाप्नोति यतिर्ज्योतिस्तादृशं त्वत्प्रभावतः।
प्रभावतः समो येन कल्पते मोहनुत्तितः॥ ८३॥

हे देवि, त्वत्प्रभावतस्त्वन्माहात्म्यात् यतिश्चतुर्थाश्रमी संयमी वा तादृशं तथाविधं सच्छोभनं ज्योतिःप्रकाशमान्तरं तेज आप्नोति लभते येन ज्योतिषा करणभूतेन हेतुना वा मोहनुत्तितो मोहविनाशाद्धेतोः प्रभा दीप्तिर्विद्यते यस्येति तस्य प्रभावतः सूर्यस्य समस्तुल्यः कल्पते समर्थो भवति। सपद्यत इत्यर्थः। एवं देव्या असकृन्नादरूपिणीत्वं प्रतिपाद्यानेन श्लोकेन बिन्दुरूपता प्रदर्शिता। परं ज्योतिर्हि बिन्दुशब्देनोच्यते। यदुक्तम्—'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥' तथा चोपनिषत्सु ज्योतिःस्थानमसकृच्चागमेषु चोक्तम्—'नेत्रयोरुभयोर्मध्ये नाशावंशस्य मूलतः। हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्॥' इति॥ ८३॥

त्वं सद्गतिः सितापारा परा विद्योत्तितीर्षतः।
संसारादत्र चाम्ब त्वं सत्त्वं पासि विपत्तितः॥ ८४॥
(अयं गूढचतुर्थः।)

हे अम्ब हे मातः, संसारादुत्तितीर्षत उत्तर्तुमिच्छोः पुंसस्त्वं सद्गतिः शोभनं परायणं शरणम्। कीदृशी। सिता निर्मला। अपारा अपर्यन्ता। परा उत्कृष्टा विद्या तत्त्वज्ञानार्थदा। अत्र संसारे सत्त्वं प्राणिनं विपत्तित आपद आर्तेस्त्वं पासि रक्षसि। चतुर्थोऽयं पादोऽत एव पादत्रयाल्लभ्यत इत्यस्य गूढचतुर्थता॥ ८४॥

परमा या तपोवृत्तिरार्यायास्तां स्मृतिं जनाः।
परमायात पोषाय धियां शरणमादृताः॥ ८५॥

हे जनाः पुमांसः परमत्यर्थमादृताः सादराः सन्त आर्याया देव्याः संबन्धिनीं तां स्मृतिं तत्स्मरणं शरणमायात आश्रयं श्रयध्वम्। स्मृतिं किंविधाम्। परमा प्रकृष्टा तपोवृत्तिर्नियमव्रतवर्तनम्। देव्याः स्मरणमेव परमं तप इत्यर्थः। किमर्थं धियां बुद्धीनां पो-

णाय वृद्धये । अष्टप्रकारा बुद्धिरिति बहुवचननिर्देशः । यदुक्तम्—'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ज्ञानं विज्ञानमूहश्चापोहो बुद्धिः स्मृताष्टधा ॥' इति ॥ ८५ ॥

प्रवादिमतभेदेषु दृश्यस्ते महिमाश्रयः ।
भान्ति त्वत्त्रिशिखस्येव शिखानामसमाश्रयः ॥ ८६ ॥

हे देवि, प्रवादिनां वाग्मिनां मतभेदेषु बुद्धिनानात्वेषु ते तव दृशः आलोकाः भान्ति शोभन्ते यान्येव प्रवादिनां भिन्नानि ज्ञानानि तास्त्वद्दृशा एव दृष्टय इति तात्पर्यार्थः । किंभूता दृशः । महिमाश्रयो माहात्म्यस्थानम् । त्वत्त्रिशिखस्येव भवत्त्रिशूलस्य यथा शिखानां कोटीनामसमा विषमास्तीक्ष्णा अश्रयो धारा भ्राजन्त एवम् । एतादृशा इत्यर्थः ॥ ८६ ॥

यच्चेष्टया तवे स्फीतमुदारवसु धामतः ।
यच्चेतो यात्यवहितमुदा रवसुधामतः ॥ ८७ ॥

(गोमूत्रिकाबन्धः । संदष्टयमकम्)

हे देवि, तव भवत्याश्चेष्टया व्यापारेण श्रवणचिन्तनाध्ययनलक्षणेन इन्द्रियादिनियमेन वा । यत एवंविधा वार्गाशायाश्चेष्टा । यत उक्तम्—'मनस्तूपरतं कुर्यादक्षग्रामं बहिः स्थितम् । चित्तं बुद्धौ विनिक्षिप्य सा बुद्धिर्ज्ञानगोचरे ॥ ज्ञानभावनया कर्म कुर्याद्वा पारमार्थिकम् ।' इति । अत एव तया चेष्टया स्फीतं विकसितं यच्चेतः अवहितं च सावधानं संयतं मनः अत एवोदारवसु परमनश्वरं धनं तच्चेतो मुदा हर्षेणोपलक्षितं सत् धामतो ज्योतिःस्थानान्मोक्षलक्षणात्स्थानात् रवसुधां शब्दामृतं याति प्राप्नोति । शब्दब्रह्मोदयं लभत इत्यर्थः । यदुक्तम्—'ओमित्येकाक्षरं ब्रह्म ।' तथा चोपनिषत्सु—'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥' गोमूत्रिकाबन्धोऽयं यमकश्च । प्रस्तारस्त्वेकदा दर्शितः ॥ ८७ ॥

सुरदेशस्य ते कीर्तिं मण्डनत्वं नयन्ति ये ।
वरदे शस्यते धीरैर्भवती भुवि देवता ॥ ८८ ॥

(अर्धगोमूत्रिकाबन्धयमकम्)

हे देवि वरदे, अभिमतदायिनि, धैर्यैरविकृतचित्तैर्भवती त्वं भुवि भूमौ संसारे देवता शरणं शस्यते स्तूयते ते पुमांसः कीर्तिं प्रथां सुरदेशस्य देवसदनस्य मण्डनत्वं भूषणत्वं नयन्ति प्रापयन्ति ॥ ८८ ॥

तत्त्वं वीतावततनुत्तत्त्वं ततवती ततः ।
वित्तं वित्तव वित्तत्वं वीतावीतवतां वत ॥ ८९ ॥ (द्व्यक्षरः)

हे देवि, वित् विद्ये, यत आश्चर्यं वीतावीतवतां सांख्यानाम् । वीतसंज्ञा अवीतसंज्ञा च सांख्यानाम् । प्रधानपुरुषसद्भावावेदकादेशहेतवः ते विद्यन्ते येषाम् । ततो हेतोस्तव भवत्या वित्तत्वं धनत्वं वित्तं ज्ञानम् । सार इत्यर्थः । ते हि ज्ञानादेव मोक्षमाचक्षते । य-

स्मात् तत् त्व तार्त्रे ततवती तद्रवती तत्त्वं परमार्थं परब्रह्मस्वरूपं ततवती विस्तारयन्ती। कीदृक्त्वम्। वीतावततनु वीता विगता अवतता विस्तीर्णास्तुदो व्यथा यत्र तत्। सांख्यानां त्वमेव सर्वप्रधानमिति तात्पर्यार्थः॥ ८९॥

तारे शरणमुद्यन्ती सुरेशरणमुद्यमैः।
त्वं दोषापासिनोदग्रस्वदोषा पासि नोदने॥ ९०॥

(पादगोमूत्रिकाबन्धद्वयेन तूणबन्धः)

हे तारे ताराभिख्ये विमले, त्व भवती शरणमुद्यन्ती आश्रितत्राणायोल्लिसन्ती उदग्रस्वदोषा उत्कटनिजबाहुना दोषापासिना दुरितविनाशकेन उद्यमैर्व्यापारैर्नोदने प्रेरणे काले सुरेशरणं शक्रसंग्रामं पासि रक्षसि। पालिता देवा भवतीं शरणमेत्य पुनः संग्रामासक्ताः संपद्यन्त इति वाक्यार्थः। प्राक्तनेन 'सुरदेशस्य ते कीर्ति' इत्यनेनार्धेन गोमूत्रिकाबन्धेन सहामुना पादेनावृत्तिगोमूत्रिकाबन्धेन तूणबन्धोऽयम्॥ न्यासः॥ तत्र प्रकारपञ्चकमत्र व्याख्यायते॥ ९०॥

सुमातरक्षयालोक रक्षयात्तमहामनाः।
त्वं धैर्यजननी पासि जननीतिगुणस्थितीः॥ ९१॥

हे सुमातः, शोभनजननि, जनानां लोकानां नीतेर्नयस्य गुणानां सच्चरितानां स्थितीः स्थैर्याणि पासि आयसे। विद्याप्रसादाद्धि जनाना नीतौ गुणेषु च स्थैर्यमुत्पद्यते। शास्त्रमार्गानुल्लङ्घी व्यापारो नीतिः। गुणाः क्षमादयः। कीदृशी त्वम्। अक्षयालोकरक्षया शाश्वतज्योतिस्त्राणेनात्तं गृहीतं महदुदारं मनश्चेतो यया। अविनाशप्रकाशरूपिणीत्यर्थः। तथा च धैर्यजननी धैर्यस्यानाकुलताया उत्पत्तिः॥ ९१॥

ख्यातिकल्पनदक्षैका त्वं सामग्र्यजुषामितः।
सदा सरक्षसांमुख्यदानवानामसुस्थितिः॥ ९२॥

(रेफविवर्तितकोऽयम्)

हे देवि, त्वं भवती इतोऽस्मिञ्जगति अनवानामकृतानां सामग्र्यजुषां त्रयाणां वेदानामसुस्थितिः प्राणरूपा सती। वेदानां हि वागीशी प्राणरूपा जनाना च। तथा च बह्वृची श्रुतिः—'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधाबद्धो वृषभो रोरवीति महो देवो मर्त्यानाविवेश॥' इति। अतः सदा सततं सरक्षसांमुख्यदा निरपभ्रंशाभिमुख्यदायिनी। ख्यातेः समृद्धेः कल्पने रचने दक्षा चतुरा। एका नापरा। वेदानां विपर्ययदोषरक्षिणी त्वमेवेति भावः। रेफविवर्तनेनायमपरोऽर्थः—सरक्षसा रक्षोभिः सहितानां मुख्यदानवानां सामग्र्यजुषां सामग्र्यं समग्रतां जुषन्ति सेवन्ते ये तेषाम्। सम्प्राणामित्यर्थः। सदा ख्यातिकल्पनदक्षा प्रथाछेदनचतुरा भवसीत्यर्थः। रक्षोदानवयोरत्र

१. 'प्रकारपञ्चक मित्यत्वाम लिखितम्' इति पुस्तकान्तरे.

भेदः । अथवा दासानि भृत्यानि अप्रधानानि यानि रक्षांसि तानि दासरक्षांसि । सह तैर्वर्तन्ते ये ते सदासरक्षसः तेषां सदासरक्षसाम् । सपरिवाराणामित्यर्थः । अथवा सह दासैः रक्षोभिश्च वर्तन्ते ये तेषामिति । अत्र श्लोकेऽर्यवर्णस्थरेफस्य विपर्ययात् र्य इति जायते तेन रेफविवर्तकोऽयम् ॥ ९२ ॥

सिता संसत्सु सत्तास्ते स्तुतेस्ते सततं सतः ।
ततास्तितैति तस्तेति सूतिः सूतिस्ततोऽसि सा ॥ ९३ ॥ (द्व्यक्षरः)

हे देवि, सा असि सा त्वं ततो हेतोः सूतिः शोभना ऊतिः रक्षा । अवतेः क्तिन्निपातनाद्रूपम् । यस्मात्ते भवत्याः संबन्धिन्याः स्तुतेः नुतेः हेतोः सतः साधो सततं सदा संसत्सु सभासु सत्ता प्रशस्तता निर्मला आस्ते तिष्ठति । तथा तस्य सतस्तता अस्तिता एति विस्तीर्णा विद्यमानता आयाति । दीर्घमायुरारोग्यमैश्वर्यं च लभते आविर्भवतीति भावः । कीदृशी अस्तिता । तस्तेतिसूतिः तस्ता क्षपिता ईतीनां व्याधीनां सूतिः प्रसवो यसाम् ॥ ९३ ॥

त्वदाज्ञया जगत्सर्वं भासितं मलनुद्यतः ।
सदा त्वया सगन्धर्वं समिद्धमरिनुत्तितः ॥ ९४ ॥

(गोमूत्रिकाबन्धोऽयम्)

हे देवि, मलनुत् आवरणनिवारिणि, त्वदाज्ञया भवच्छासनेन जगत्सर्वं त्रैलोक्यं समग्रं (त्रैलोक्य)ज्ञानशक्तेरिच्छाशक्त्यात्मक भवतीति भावः । यतो यस्मात्कारणादरिनुत्तितः शत्रुप्रेरणाद्विपक्षनाशाद्धेतोः त्वया भवत्या समिद्धं संलब्धज्ञानं सगन्धर्वं सदेवकुशीलवमेतज्जगद्भासितं प्रकाशितम् । मलं हि भासो विपक्षं त च लं तुदसि । प्रस्तारोऽस्य प्राग्वत् ॥ ९४ ॥

यतो याति ततोऽत्येति यया तां तायतां यतैः ।
मातामितोत्तमतमा तमोतीतां मतिं मम ॥ ९५ ॥

(श्लोकार्धं द्व्यक्षरम्)

हे देवि, मतिं बुद्धिं मम तायतां मे विस्तार्यताम् । कीदृशीम् । तमोतीतां विगततमस्काम् । यया मत्या यतो याति यतो निवर्तते ततोऽत्येति ततो विनश्यत इति भावः । कीदृशी मतिः । माता जननी । तथा अमिता अपरिच्छिन्ना । उत्तमतमा प्रकृष्टा ज्ञानमयी । एते षोडश श्लोकार्धके षोडशाराः । एत एव च पुनरनुलोमतो लिखिता अन्ये षोडश एवं द्वात्रिंशदराः ॥ ९५ ॥

महत्तां त्वं श्रिता दासजनं मोहच्छिदा वस ।
यच्छुद्धत्वं गतः पापमन्यस्य प्रसभं जय ॥ ९६ ॥

द्विप्रकारो दासजनः एको निवृत्तपापावरणः अपरः पापावृतः । तत्र मोहच्छित् अज्ञा-

ननाशिनि देवि, त्वं भवती महत्ता श्रिता माहात्म्यमास्थिता सती यः शुद्धत्वं दासजनो गतः नैर्मल्यं प्राप्तः तमावस अधितिष्ठ । अन्यस्य सपापस्य पापं कल्मषं प्रसभं बलाज्जय निवर्तय ॥ ९६ ॥

त्वं साज्ञासु जगन्मातः स्पष्टं ज्ञाता सुवर्त्मसु ।
प्रज्ञा मुख्या समुद्भासि तत्पृथुत्वं प्रदर्शय ॥ ९७ ॥

हे मातस्त्रैलोक्यजननि, सुवर्त्मसु सन्मार्गविषयास्वाज्ञासु निरूपणासु त्वं भवती मुख्या प्रधाना प्रज्ञा बुद्धिः स्पष्टं ज्ञाता सुव्यक्तं विदिता तदा तत्पृथुत्वं प्रज्ञापृथुत्वं बुद्धिविस्तारं समुद्भासि समुद्भासते यत् तत्प्रदर्शय प्रकटीकुरु ॥ ९७ ॥

अस्मादेव श्लोकादक्षराण्युच्चित्येयमार्या भवति—

आज्ञासु जगन्मातः स्पष्टं ज्ञाता सुवर्त्मसु प्रज्ञा ।
भासि त्वं सा मुख्या समुत्पृथुत्वं प्रदर्शय तत् ॥ ९८ ॥

अर्थोऽस्याः—हे देवि, जगन्मातस्त्रिलोकजननि, शोभनं वर्त्म मार्गो येषां पुंसां तद्विषया या आज्ञास्तासु त्वं सा ज्ञाता विदिता मुख्या प्रज्ञा भासि । स्पष्टं समुत् प्रकटमानन्दरूपं सत्पृथुत्वं महिमानं प्रदर्शय ॥ ९८ ॥

हन्त्र्यो रुषः क्षमा एता सदक्षोभास्समुन्नतः ।
सतेहितः सेवते ताः सततं यः स ते हितः ॥ ९९ ॥

हे देवि, क्षमा एतास्त्वं एताः प्रसिद्धा याः क्षान्तयो दर्पनिहतयस्ता भवती इति भावः। कीदृशाः क्षमाः। रुषो हन्त्र्यः क्रोधविनाशिन्यः । तथा सदक्षोभाः सत्याश्चाक्षोभाश्च। श्रेष्ठा अधिकाश्चेत्यर्थः । ताः क्षमाः सततमजस्रं य उन्नतः प्रधानपुरुषः सता ईहितः शोभनेन मार्गेण व्यापारितः सन्सेवते आश्रयते स ते भवत्या हितोऽनुकूलः ॥ ९९ ॥

करोषि तास्त्वमुत्खातमोहस्थाने स्थिरा मतीः ।
पदं यतिः सुतपसा लभतेऽतः सशुक्लिम ॥ १०० ॥

हे देवि, उत्खातमोहस्थाने, उत्खातान्युन्मूलितानि मोहस्थानानि मदादयो यया तस्या आहूतिः । यतस्त्वं स्थिरा मतीः मैत्र्यादिका धिषणा अचलाः करोषि संपादयसि । अतो हेतोः यतिर्मुमुक्षुः सुतपसा शोभनेन निर्दम्भेन व्रतादिना सशुक्लिम शुक्लिमा शुक्लगुणत्वं तेन शुक्लिम्ना सह वर्तते यत्तत्सशुक्लिम सत्त्वगुणसहितं रजस्तमोरहितं पदं स्थानं लभते प्राप्नोति । चत्वार एते नेमिश्लोकाः । एभ्यश्च प्रथमं (प्रथममक्षरं) त्रीणि त्रीण्यक्षराणि लिखित्वा चतुर्थमक्षरं श्लोकमान्ते च भवतीति नेमिद्वितीयमर्धं मीलितं भवति । एवमेव चान्तर्लिखित्वा मध्यमाभिमीलनं भवति । एवं चक्रप्रस्तारः ॥ १०० ॥

अत एव द्वात्रिंशतो नेमिस्थानान्नामितो वा भ्रमं दत्त्वा तृतीयं तृतीयमेकोनत्रिंशमेको-

नत्रिंशं चाक्षरमादाय यथा लिखितदर्शनानुसारमङ्कचिह्नानि वीक्ष्य वर्णद्वात्रिंशतः श्लोकोऽयमुत्पद्यते—

देव्या स्वप्नोद्गमादिष्टदेवीशतकसंज्ञया।
देशितानुपमामाधादतो नोणसुतो नुतिम्॥ १०१॥

इत्यङ्कश्लोकोऽयमुत्पद्यते। अर्थोऽस्यायम्—एतामेवमुक्तप्रकारां नुतिं स्तुतिं नोणसुतो नोणाख्यस्य कस्यचित्पुत्र आनन्दवर्धननामा आधाद्विहितवानकार्षीत्। कीदृशीम्। देव्या वागीश्वर्या स्वप्नोद्गमे निद्राविर्भावे आदिष्टा निरूपिता देवीशतकमिति संज्ञा तया देशितानुपमाम्। तल्लक्षणो देशो निर्देश आज्ञा विद्यते यस्याः सा देशिनी तस्या भावो देशिता स्थानविशेषः तया देशितया अविद्यमानान्यप्रशंसामनुत्तमाम्। देवीस्तोत्रतया सर्वातिशायिनीमिति भावः॥ १०१॥

हार्दध्वान्तनियन्तृभास्वरवपुः स्वर्वासिनां सर्वतो
दुर्वारारिपरिक्षयं विदधती ध्यातैव निर्वाणसूः।
देहार्धे निहिता भवेन भुवनत्राणैकतानात्मना
देवि त्वं त्वमिवापरा जगति का सत्केसरीन्द्रस्थितिः॥१०२॥

(प्रहेलिकेयम्)

हे देवि, त्वमिव जगति कापरा भवतीतुल्या त्रिभुवने कान्या विद्यते। त्वत्सदृशी त्रैलोक्येऽपि नान्या विद्यत इत्यर्थः। हार्दध्वान्तं सहृन्मोहस्तस्य नियन्तृ प्रमाथि भास्वरं दीप्तिमद्वपुः शरीरं यस्याः सा तथाविधा। तथा स्वर्वासिनां दिवौकसां सर्वतः समन्तात् दुर्वारारिपरिक्षयमजेयशत्रुशमनं विदधती कुर्वाणा। तथा ध्यातैव निर्वाणसूः चिन्तितैव निर्वाणं मोक्षं सूते प्रयच्छति। अपरं देहार्धे निहिता भवेन (देवेन द्योतनशीलेन) भवेन शिवेन शरीरार्धे नियोजिता सशरीरवामभागे स्थापिता। हरेण प्रभुणा कीदृशेन। भुवनत्राणैकतानात्मना भुवनानां त्रयाणां लोकानां त्राणे रक्षायामेकतान एकरसः सर्वदा प्रसृत (प्रवृत्त) आत्मा प्रकृतिः स्वभावो यस्य तेन। त्वं च कीदृशी। सत्केसरीन्द्रस्थितिः शोभनसिंहराजे स्थितिरवस्थानं यस्याः सा। अथ च त्वमिवापरा जगति का इति प्रश्ने कृते सत्केसरीन्द्रस्थितिरित्युत्तरम्। त्वत्तुल्या का इति पृच्छायां भगवन्नृसिंहमूर्तिरित्युरदानात्प्रहेलिकेतीयमुच्यते। व्याख्या तु समाना सर्वत्र। केवलं देहार्धे निहिताभवेनेत्यत्राकारप्रश्लेषो व्याख्यायते। तथा अभवेनाविद्यमानसंसारेणाजेन भगवता विष्णुना देहार्धे शरीरोपरिभागे निहितेत्येतावान्स्तुतिविशेषः। प्रहेलिकेयम्॥ १०२॥

क्लेशोन्माथकरी सतां भवहरानन्दैकहेतो गुरुर्मीता त्वं जगतां भवन्ति विधवाः सर्वे तवानुग्रहात्।

दुर्गे न कश्चिदेव सीदति जनस्त्वद्भक्तिपूताशयः
स्तुत्या भर्तुरभिन्नयेति विबुधैस्त्वं स्तूयसे श्रीरिव ॥ १०३ ॥
(चतुरर्थः)

इतिशब्दः पूर्वोक्तप्रकारापेक्षायां वर्तते । भर्तुरभिन्नया पत्युः सदृश्या स्तुत्या नुत्या त्वं भवती विबुधैर्देवैर्मनीषिभिर्वा श्रीरिव लक्ष्मीरिव स्तूयसे नूयसे । अर्थवशाद्विभक्तिवचनलिङ्गविपरिणाम इति लक्ष्मीर्यथा भर्तुरभिन्नया स्तुत्या स्तूयते तथा त्वं स्तूयस इति । एवममूनि स्तुतिपदानि चतुर्णां भवभवानीकमलाकान्तकमलानां योज्यन्ते । तत्रोपमानयोः कमलाकान्तकमलयोस्तावत्स्तुतिप्रकारा व्याख्यायन्ते । हे श्रीः, भवहरानन्दैकहेतोः संसार(निवर्तक)स्य भगवतो विष्णोरानन्दे चित्ताह्लादने एकहेतौ एकनिमित्तभूते, त्वं भवती सतां साधूना क्लेशोन्माथकरी अविद्याविनाशिनी करीति आनुलोम्येऽचि ङीप । तथा त्वं जगतां त्रयाणां लोकानां गुरुः प्रधानम् । माता जननी । तथा विभवाः सर्वे समृद्धिगुणाः सकलास्तवानुग्रहाद्भवत्प्रसादाद्भवन्ति सपद्यन्ते । अन्यत्, त्वद्भक्तिपूताशयो जनः भवत्सेवापवित्रीकृतमना लोकः दुर्गे दुर्गतौ न कश्चिदेव न कुत्रचिदेव सीदति मज्जति ।

भर्तुरभिन्नया स्तुत्येति तद्भर्तुः पक्षे योजना—हे भवहर संसारनिवर्तक विष्णो, तथा आनन्दैकहेतो, त्वं सता क्लेशोन्माथे अविद्याविनाशने करी हस्ती । आनन्दैकहेतुत्वान्मोक्षप्रद इत्यर्थः । तथा त्वं जगतां गुरुः माता मापकश्च । त्रिभिः क्रमैरिति भावः । भवन्ति विभवाः सायुज्यादयः सर्वे तवानुग्रहात् । दुर्गे संसारबन्धने न कश्चिदेव सीदति जनस्त्वद्भक्तिपूताशयः ।

उपमेययोरधुना सबन्धः । तत्र भवान्यास्तावत्—सता क्लेशोन्माथकरी भव । लोण्मध्यमपुरुषैकवचनमेतत् । हे दुर्गे विन्ध्यवासिनि, हरस्यानन्दैकहेतो । शिष्टं श्रीस्तुत्या समानम् ।

एतद्भर्तुर्गिरिशस्याधुना—हे भव हे हर हे आनन्दैकहेतो, त्व जगता गुरुः माता हिंसिता । त्रैलोक्यसंहर्ता रुद्र इत्याशयः । मीनातेः कृतान्तस्य तृचि मातेति रूपम् । तवानुग्रहात्सर्वे विभवा अणिमाद्या ऋद्धयो भवन्ति । शिष्टं श्रीपतिस्तुत्या समानमिति । एवमर्थचतुष्टयवाची ॥ १०३ ॥

येनानन्दकथायां त्रिदशानन्दे च लालिता वाणी ।
तेन सुदुष्करमेतत्स्तोत्रं देव्याः कृतं भक्त्या ॥ १०४ ॥

अस्याप्ययमर्थः—तेन कविना नोणतनयेनानन्दवर्धनेन एतदेवमुक्तप्रकारं स्तोत्र नवनं भक्त्या सेवया आरिराधयिषया कृतं दृब्ध रचितम् । कीदृश स्तोत्रम् । सुदुष्करं शोभना दुष्कराश्चक्रबन्धादयो यत्र सुष्ठु वा दुष्करं नान्येन केनचित्कर्तुं शक्यमिति । केन कविनेत्याह—येनानन्दकथायां विषमबाणलीलायां त्रिदशानन्देऽर्जुनचरिते च वाणी भारती लालिता विनोदिता । विषमबाणलीलार्जुनचरितविरचयितुः कवेः कृतिरेतत्स्तोत्रमिति वाक्यार्थः ॥

वल्भदेवायनितश्चन्द्रादित्यादवाप्य जन्मेमाम् ।
कय्यटनामारचयद्विवृतिं देवीशतस्तोत्रे ॥
एवं वार्गाध्वर्याः सरूपमास्थाय यन्मयावाप्तम् ।
पुण्यं तेन जगत्स्यात्प्रतिजन्मावाप्तपरबोधम् ॥
वसुमुनिगगनोदधि(४०७८)समकाले याते कलेस्तथा लोके ।
द्वापञ्चाशे वर्षे रचितेयं भीमगुप्तनृपे ॥
कर्मस्थानोदिता साहिमकरशशभृद्वह्निचक्रान्तरस्थ-
क्षेत्रज्ञोद्बोधनाय प्रलयरविकराग्राभतेजोविरामा ।
नित्यं मन्द्रालिघोषा कचटतपयशालापिनी मध्यवाहा
बालाग्रात्सूक्ष्मरूपा त्रिभुवनजननी पातु वागीश्वरी वः ॥
एकायनस्याच्युततुल्यमूर्तेराचार्यनारायणगर्तनाम्नः ।
शिष्येण दृब्धेयमनन्तशास्त्रवेत्तुः सदक्षेण च कय्यटेन ॥

इति गोणात्मजश्रीमदाचार्यानन्दवर्धनविरचित कय्यटप्रणीतया टीकया
समेतं देवीशतकम् ।

---

# काश्मीरिकश्रीमदवतारकविप्रणीतं
# ईश्वरशतकम् ।

सटीकम् ।

स वः पायाद्येन निन्ये वासुकिर्निजहारताम् ।
तपोपायात्तनुं कोपाद्यः स्मरस्य जहार ताम् ॥ १ ॥

स वः पायादित्यादिग्रन्थारम्भे त्रिविधविघ्नोपघातार्थं कविना नमस्कारवाक्यमनुचितं

---

१. सटीकस्येश्वरशतकस्य प्रणेता श्रीमदवतारकविः कश्मीरेषु कदा समुत्पन्न इति न निश्चयः. किंतु स्तुतिकुसुमाञ्जलिटीकाकर्तृ राजानकरत्नकण्ठस्य पितामहोऽप्यवतारनामासीदिति 'सकलविपश्चिद्वर्यः प्रज्ञाजितवृषमहामात्यः । अवतारोऽजनि तस्मात्पाण्डित्यस्यावतार इव ॥' इति स्तुतिकुसुमाञ्जलिटीकासमाप्तिस्थार्यातः प्रतीयते. रत्नकण्ठेन च स्तुतिकुसुमाञ्जलिटीका १७३८ मिते विक्रमाब्दे प्रणीतेति तत्रैव स्फुटम्. अतोऽवतारोऽपि १६२२ मितख्रिस्ताब्दासन्नकाल आसीत्. यदि स एव सटीकस्यास्य शतकस्य निर्माताऽवतारकविः स्यात्तदा निर्णीत एव तत्सत्तासमयः. सटीकस्यास्य शतकस्य पुस्तकद्वयमस्माभिरासादितम्. तत्रैकं श्रीयुतभाण्डारकरपण्डितैः पुण्यपत्तनस्थराजकीयपुस्तकालयात्कृपया प्रहितम्. अपरं कश्मीरनगरज्ज्योतिर्विदुपाह्वश्रीदयारामपण्डितैः प्रेषितम्. पुस्तकद्वयेऽपि प्रायो नास्ति भेदः, द्वयं च कश्मीरलिखितमिति समानमातृकमेवेति प्रतीयते. एतदाधारेणैवैतन्मुद्रणमुपक्रम्यत इति शिवम्.

सूचितम्। येन भगवता स्वतन्त्रेण धराधरणयोग्यो वासुकिर्हारतां नीतः। एतेन वि-श्वाधारत्वं ध्वनितम्। तथा तपोपायास्वयमविघ्नविधायित्वात् न स्त्रीर्ष्यया कोपात्तां वि-श्वस्य प्रसिद्धां स्मरस्य तनुं जहार दिदाहेति प्रतीयते। तामित्यनुभवगोचराम्। अत एव यच्छब्दोपादानं न कृतम्। यदाहुः—'प्रक्रान्तप्रसिद्धानुभूतविषयस्तच्छब्दो यच्छब्दो-पादानं नापेक्षते'। तत्र नमस्कारः स्वातन्त्र्यकर्तृत्वाद्भगवतः सर्वातिशायित्वादर्थादेवा-क्षिप्तः॥ १॥

रक्षावतारं गम्भीरं भवमुग्रं हरेश्वर।
नय नीतिगुणं तं तु ममताप्रियतामिमाम्॥ २॥

हे ईश्वरपरमात्मन्, तदुक्तम्—'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः'। तत्संबोधनम्। भवं संसारं गम्भीरं त्वं हर निवारय। कथंभूतं भवम्। उग्रं कठिनम्। त्वं भक्तानामवतारमवतरणं भवात्पुनःपुनरागमनं रक्ष। कविना च अवतारमवतार-नामानं मां पाहीति स्वनाम ध्वनितम्। तु पक्षान्तरे। इमां प्रत्यक्षां सर्वेषां ममताप्रि-यतामहङ्कृतिहेत्वाकितां तं प्रसिद्धं लोकोत्तरं नीतिगुणं नय प्रापय। अत्र च रक्ष अव, तारं गम्भीरं, भव उग्रं, हर ईश्वर, नय नीति, गुणं तन्तु, अमत अप्रिय, इति द्वयो-र्द्वयोः शब्दयोरर्थस्य पौनरुक्त्यमिवावभासते। भिन्नार्थत्वात्तु पुनरुक्तवदाभासः। 'आमुखा-वभासनं तु पुनरुक्तवदाभासम्' इति॥ २॥

वदामि ते स्वं रमयन्नमोऽहं वहामि संसारमयं न मोहम्।
तनुर्मुदायोगवता स्मितेन मुक्तः स्फुरद्योग बतास्मि तेन॥ ३॥

अहं ते तुभ्यं नमो वदामि नमस्कारं करोमि। अनेन कायवाक्चित्तानां प्रह्वीभावः सूचितः। अत एव स्वमात्मानं रमयन्नानन्दयन्संसारमयं मोहमज्ञानरूपं न वहामि। यदुक्तम्—'आ-नन्दं ब्रह्मणो विद्वान्बिभेति कुतश्चन' इति। हे भगवन्स्फुरद्योग,। बत आश्चर्ये। अहं तनुस्तुच्छोऽपि मानुषादज्ञानात् मुदां हर्षाणां निरतिशयप्रीतिरूपान्ताम्, आ समन्तात् योग आयोगः तद्वता मुदायोगवता स्वानुभवैकगोचरेण स्मितेन अभिमतप्राप्त्या हसितेनोपल-क्षितः सन्मुक्तोऽस्मि। यमकम्॥ ३॥

सृष्टिस्थिती प्राग्भजता कृतापवर्गोद्यमेनाथ भवान्धकारे।
धृतं त्वया विश्वमतो हतारिवर्गोऽद्य मे नाथ भवान्धकारे॥ ४॥

हे नाथ हे अन्धकारे अन्धकासुररिपो, प्राक् सृष्टिस्थिती भजता कुर्वता त्वया अ-थानन्तरं भवान्धकारे संसाररूपान्धकारे कृतापवर्गोद्यमेन कृतो भक्तानामपवर्गार्थमुद्यमो येन तथाविधेन। त्रिविधकृत्यकारिणा त्वयैव विश्वं धृतम्। अतो ममापि अद्य हतारिवर्गो भव। हता अरयो मुख्याः कामादयो येन तादृशः। पादयमकम्॥ ४॥

सञ्जातसञ्जाततलोचनाग्ने संध्यात संध्यातपसा सुरौघैः।
माधीनमाधीनपरिग्रहेण कालेन कालेन हतं कृथा माम्॥ ५॥

सत् अकृत्रिमं जातं जन्म यस्य स सज्जातः सज्जः संनद्ध आततो विस्तीर्णो विश्वव्यापित्वाल्लोचनाग्निर्यस्य तदामन्त्रणं सज्जातसज्जाततलोचनाग्ने । तथा सुरैर्विधिब्रह्मविष्णुप्रभृतिभिर्दैत्यसमूहैः सध्यातपक्ष निरोध्य समाधानेन संध्यात सम्यग्ध्यात । कालेन अचिन्त्यवर्णेन । भयंकरेणेति यावत् । तथा आर्धानपरिग्रहेण आधीनां मनःपीडानां ये इनाः स्वामिनो ज्वरादयो रोगास्तेषां परिग्रहः परिवारो यस्य स तादृशेन कालेन मृत्युना हतं सन्तं मां माधीनं कृथाः सपादय । (यद्वा) मायाः शोभाया आधीनमायत्तं माधीनम् । श्वेतराजवत्तदित्यर्थः । आदियमकम् ॥ ५ ॥

भवोत्सुकानामसमाधिभिन्नः कश्चिन्मदन्यो न समाधिभिन्नः ।
ये त्वां प्रशंसन्ति सदा सभार्यास्त एव जीवन्ति सदासभार्याः ॥ ६ ॥

त्वं नोऽस्माकमुत्सुकानां सोत्कण्ठानामसमाधिभित् असमा अनल्पा ये आधयो मनोरुजस्तान्भिनत्तीति तादृक् भव संपद्यस्व । यतो मत्सकाशात् अन्यो जनः समाधिभिन्नश्चित्तैकाग्र्यबहिष्कृतो नास्ति । ये त्वां सदा सर्वकालं सभासु मध्ये अर्या निष्पापाः प्रशंसन्ति स्तुवन्ति त एव सदासभार्याः सह दासैर्भार्यया च वर्तन्ते ये ते सपरिवारा इत्यर्थः । जीवन्ति । पुनः संसारावृत्तिं न लभन्ते । अनश्वरपदप्राप्तेः । अन्ये तु संसारिणो नानाजन्मोपलब्ध्या जीवन्तोऽपि मृता एव । 'ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः' इति यावत् । आदियमकम् ॥ ६ ॥

दैत्यद्विषां त्वच्चरणावलीनामिवाम्बुजे भग्नरणावलीनाम् ।
स्तुवन्त्यतो निःशरणा वलीनां त्वन्मूर्तिमीतेः सरणावलीनाम् ॥ ७ ॥

दैत्यद्विषां देवानां त्वच्चरणौ अलीनां भ्रमराणामिवाम्बुजे पद्मे भक्तः विश्रान्तिस्थानं मनोभिलषितप्राप्तेः स्त इत्यर्थः । कथंभूतानां दैत्यद्विषाम्, भग्नाः पराजिता रणावलयः समासमूहा यैस्तथाविधानाम् । अतो हेतोः निःशरणा मादृशा अपि ईतेः संसारोपद्रवस्य सरणौ मार्गे अलीनामश्लिष्टां त्वन्मूर्तिं स्तुवन्ति । कथंभूताम् । वबयोरैक्याद्बलिनामिनां स्वामिनीम् । तदधिष्ठातृत्वात् । सर्वपादान्तयमकम् ॥ ७ ॥

भवेति भिन्नः कुलपामराणां भवेऽतिभिन्नः कुलपामराणाम् ।
सदा सकान्ताय नमो हराय सदासकान्ताय नमो हराय ॥ ८ ॥

हे अमराणां देवानां कुलप, त्वं नोऽस्माकं कुलमध्ये पामराणामयोग्यत्वाद्वालिशानामीतिभित् दुर्गतिनिहन्ता भव । अतस्त्वमेव भवे संसारेऽतिभिन्न उत्तीर्णः । सह दासैर्वर्तते कान्तश्च यः । सर्वाभिलाषपदायित्वात् । सदासकान्तः । तस्मै । तथा मोहं राति ददाति मोहरः अज्ञानदायी । न मोहरः तस्मै न मोहराय । सदा सर्वकालं सकान्ताय निजशक्तिपरिवृताय हराय नमः । संपुटयमकम् ॥ ८ ॥

राजते विष्टपाकारा राकापाहिफणावरा।
रावणाराधिताक्षारा राक्षाताम्राक्षि तेऽजरा॥ ९॥

पद्मबन्धः॥

तनुरद्रिसुताकान्त कान्तलावण्यवाहिनी।
वाहिनीवामृतमयी मयीह विमलातनुः॥ १०॥

शृङ्खलायमकम्॥ (युग्मम्)

हे अद्रिसुताकान्त पार्वतीश, तव संबन्धिनी तनुर्मूर्तिः राजते। कथंभूता। विष्टपाकारा विष्टपं जगत् तदाकारा। तथा राकापः पूर्णचन्द्रः तथा अहिफणाः ताभिर्वरा उत्कृष्टा। तथा रावणेनाराधिता सेविता। अक्षारा न क्षारा। (मधुरा) सौम्यस्वभावेत्यर्थः। तथा राक्षा लाक्षा तद्वत्ताम्रमक्षि यत्रेति क्रियाविशेषणम्। राक्षाताम्राक्षि राजते इत्यर्थः। तथा अजरा जन्मादिरहितत्वात्। कान्तलावण्यवाहिनी अमृतमयी वाहिनी नदीव। अतनुर्बहुला। युगलकम्। आद्यः श्लोकः पद्मबन्धः। द्वितीयः शृङ्खलायमकम्॥ ९॥ १०॥

दरवति वरदय भटभयदपण क्षणपथरथपर पुरशरसमरे।
मदमयरणरय जय जय खमत क्षतमख सुरवरसुखद शिव॥ ११॥

महादेवबन्धः। जागेश्वरबन्ध इत्यर्थः।

हे शिव, त्वं जय जय। किंविध। दरवति समये मादृशे वरदय वरा उत्कृष्टा दया यस्य। अन्धकादीनां विश्वकण्टकानामपि पुनर्दयया गाणपत्यप्रतिपादकत्वात्। तथा भटानां भयदः पणो व्यवहारो यस्य तादृशः। तथा क्षण पन्था यस्य तादृग्यो रथस्तत्र पर उद्योगवान् तदामन्त्रणं भटभयदपणक्षणपथरथपर। तथा पुराणां त्रिपुराणां शरसमरे बाणयुद्धे मदमयः साहंकारो रणरयः सम्रामवेगो यस्य तदामन्त्रणम्। तथा खमत खानामिन्द्रियाणां मताभिप्रेत। तदधिष्ठातृत्वात्सर्वेन्द्रियाणाम्। तथा क्षतो मखो दक्षाध्वरो येन। तथा सुरवराणां सुखं ददातीति तत्संबोधनम्॥ ११॥

क्रूरा नराणां भवता शोधनीयाविभागतिः।
चराचराणां भवता बोधनीया शुभा मतिः॥ १२॥

क्रूरा दुःसहा संसारे रता नराणां भक्तानां भवता स्वामिना अविभागतिस्तामसी गतिः शोधनीया। चराचराणां जङ्गमस्थावराणां शुभा मतिर्भवतैव बोधनीया। अथ गोमूत्रिकाबन्धः॥ १२॥

नरकं कालमालाभ रणा हि तरसा श्रिताः।
नरकङ्कालमालाभरणाहितरसाश्रि ताः॥ १३॥

काञ्चीगोमूत्रिकाबन्धो समुद्गयमकम्॥

ततेतितति तातैता मम मा मामिमा ममाः ।
लल्लोलालिलीलालैरुरुरोरारैररम् ॥ १४ ॥

पादैकाक्षरः ॥

यमवाराङ्गनाः कान्तैरवसादरतापदैः ।
समं त्रस्ता भवभक्तिरवसादरतापदैः ॥ १५ ॥

त्रिभिः श्लोकैर्वाक्यार्थतिलकम् ॥

हे तात पूज्य, या यमवाराङ्गना मृत्युस्त्रियो भवद्भक्तिरवसादरतापदैः भवति विषये यानि भक्तिरवाणां सादरता तस्याः पदानि वाक्यानि तैः त्रस्ता भीताः कान्तैर्भर्तृभिः समं सह । कथंभूतैर्भर्तृभिः । अवसादरतापदैः अवसादं विनाशं रान्ति ददति तापं च ददति तादृशैर्भर्तृभिः साकं त्रस्ता भीताः । भवदीयभक्तजनस्तुतिवाक्यं श्रुत्वैव त्रस्ता इत्यर्थः । इमां मम संबन्धिनीं मां लक्ष्मीं मा एता न प्राप्ताः माशब्दो निषेधार्थः । अमा अश्रीकाः । पुनः कथंभूताः । तरसा बलेन हि निश्चयेन नरकं श्रिताः । तता विस्तीर्णा या ईतिततय ईतीनां विघ्नानां ततयः समूहा यत्र तथाविधं कृत्वा कालमालाभरणा कालस्य मा लक्ष्मीस्तल्लाभार्थं रणो यासां तथाविधाः । पुनः कथम् । नरकङ्कालमालाभरणाहितरसाश्रि । नराणां कङ्कालमालाभिर्यान्याभरणानि तैराहितः रसाश्रिः रसायन्तो यत्र तथा । पुनः कथंभूतैर्भर्तृभिः । लल्लोलालिलीलालैः ललन्त उल्लसन्तो लोलाश्च तेऽलयस्तल्लीलां लान्ति कृष्णत्वात् ये तैः । उरुरोरारैः उरु बहुलं च तत् रोरं दारिद्र्यं उरुरोरं तथा अरीणां समूह आरं उरुरोरं च आरं च तत् उरुरोरारं तं रान्ति ददति तथाविधैः । अरमत्यर्थम् । अत्र वाक्यार्थतिलकेन प्रथमः समुद्गकयमकः काञ्चीगोमूत्रिकायन्थी च । द्वितीयः पादैकाक्षरः । तृतीयः पादयमकम् ॥ १३ ॥ १४ ॥ १५ ॥

प्रलापिनं मा रसेनाभयप्रद यमाकुलम् ।
आगत्य त्वरितं तीव्रप्रभावोचितविग्रह ॥ १६ ॥

हे तीव्रप्रभ, तथा उचितविग्रह, अभयप्रद, त्वं मा कर्मभूतं अव रक्ष । केन । रसेनादरेण । मा कीदृशम् । यमाकुलं यमादाकुलम् । तथा प्रलपति तच्छीलः प्रलापी तं प्रलापिनम् । त्वरितमागत्य । गूढकर्मक्रियोऽयं श्लोकः ॥ १६ ॥

चिरातिचित्तेतिचितैरिताराचराचराचारचरित्रचार ।
रैचारुता चित्रतराचिराचीरीतिं रतारैरुरुचौररोरैः ॥ १७ ॥

त्र्यक्षरः ॥

हे भगवन् चराचराचारचरित्रचार, चराचराणां जङ्गमस्थावराणां यदाचारचरित्रं तत्र चारश्चरणं यस्य तत्संबोधनम् । रैचारुतायां धनानां चारुता ऐश्वर्यं चित्रतरा साश्चर्या क्ष-

णिकत्वादचिरार्चिषो विद्युतो रीतिमिता प्राप्ता। कैः हेतुभूतैः। उरवो बहला ये चौरास्तथा रोराणि दारिद्र्याणि (तैः) उरुचौररोरैः। कैः। रतारिः रतस्य चित्तविश्रान्तेराराणि अरिसमूहा इव तैः। पुनः कथभूतैः। चिरं या आर्तिस्तथा चित्तेतिश्चित्तबाधा च तया चितैर्व्याप्तैश्चिरार्तिचित्तेतिचितैः। आराद्दूरतः। त्र्यक्षरोऽयं श्लोकः॥ १७॥

मुदात्तसारा द्युसभासमाना सभासमानाङ्ग मुदात्तसारा।
विभावसुस्थान भव प्रभा ते भवप्रभाते रविभावसुस्था॥ १८॥

व्यावृत्तयमकम्॥

हे भगवन् भव, विभावसोर्नेत्राश्रयस्य वह्नेः स्थान आश्रय, भवप्रभाते संसारोदये सति ते तव संबन्धिनी प्रभा रविभाववत्सुस्था सामस्थ(स्वास्थ्य?)वती। यतः मुदा हर्षेणात्तं सारं यस्याः मुदात्तसारा। द्युसभायां देवसदसि समाना सह मानेन पूजया वर्तते या। सभासमानानि रुचिराण्यङ्गानि यत्र तथाविधं कृत्वा उदात्तमुद्भटं बलं यस्याः॥ व्यावृत्तयमकम्॥ १८॥

देहान्तकाले स्वरसेन पाहि यमात्प्रभो भास्वरलोचनाज।
शमैकसर्वस्व सभूरिकामां मां यच्छ देवेश जहीहि मां मा॥ १९॥

वज्रबन्धः॥

हे भास्वरलोचन धामत्रयनेत्र, अज अनादे, शमैकसर्वस्व उपशमैकसाधन, त्वं मां देहान्तकाले मरणसमये स्वरसेन कृपया यमान्मृत्योः पाहि। तथा भूरयो बहलाः कामा मनोरथानि यस्यां सा तादृशीं सर्वाभीष्टप्रदां मां लक्ष्मीं यच्छ वितर। मां च मा जहीहि। मा परित्यज॥ वज्रबन्धः॥ १९॥

तनुस्त्वदीया भगवन्स्मरारे रसासुखं मुक्तिमुखं सुसार।
शुभावहा भक्तिपरायणानां सादान्तताकृत्तकृतान्तदासा॥ २०॥

हे भगवन् सुसार शोभनबल, स्मरारे, तव संबन्धिनी तनुर्मूर्ती रसायां सुखं लक्षणया भूतलस्थानां जनानां सुखदायिनी। तथा मुक्तिसुखम्। भोगमोक्षप्रदेत्यर्थः। अत एव भक्तिपरायणानां शुभावहा। तथा सादस्यावसादस्यान्तताविच्छेदस्तेन हेतुना कृत्ताश्छिन्नाः कृतान्तदासा यमभटा यया। त्वद्भक्तेभ्यस्ते निराशाः पलायन्ते नन्दिरुद्रवत्॥ २०॥

स्थिरासुरापक्षपरा सुरास्थिमालावरासन्नसरावलाभा।
वादे हिता मन्त्रमताहिदेवातिभाविता नुत्यनुता विभाति॥ २१॥

प्रतिलोमानुलोमपादः। युगलकम्॥

त्वदीया तनुरित्यनेन पूर्वश्लोकस्थेनान्वयः। त्वदीया तनुर्विभाति। कीदृशी। स्थिरा येऽसुरा अन्धकादयस्तेषामपक्षपरा प्रतिपक्षभूता। सुराणां ब्रह्मादीनां चास्थिमालादिभि-

वैरा उत्कृष्टा। तथा आसन्ना निकटा सरावा नादयुक्ता लामा उत्कृष्टरूपा देवता यस्यां सा आसन्नसरावलामा। तथा वादे चतुर्दशविद्यास्थानविशारद(विचार)विषये हिता। भक्तविद्वज्जनेभ्य इति शेषः। तथा मन्त्रैर्मननत्राणधर्मादिभिर्देवतोचाकपदैर्मता भाविता। यदाहुः—'मन्त्रमूर्तिस्तु देवता' इति। तथा अहिभिर्नागैर्देवैश्चातिभाविता अतिध्याता। तथा तुल्या स्तुत्या ये ब्रह्मादयस्तैरपि नुता तुल्यनुता। एवंविधा त्वदीया तनुर्विभाति। 'अमत्रमता' [इति पाठे] अमत्रेभ्यः पात्रेभ्यो मता अहयः सर्पा यस्यां तादृशी देवातिभाविता च। [इत्यर्थः]। युगलकम्। आद्यो युक्पादप्रतिलोमः। द्वितीयः प्रतिलोमानुलोमपादः॥ २१॥

तनोति ते तात नुतौ नितान्तं नूनं नतानां तनुतां न नीतिः।
नेने ननो नूतनतां तु नीता तेनोन्नतानन्ततनो ततेतिः॥ २२॥

द्व्यक्षरः॥

हे भगवन्, तात पूज्य, उन्नतानन्ततनो, उन्नता अनन्ताः पृथ्व्यादयस्तनवो मूर्तयो यस्य तत्संबोधनम्। ते तव संबन्धिनी नीतिः नतानां भक्तानां नुतौ स्तुतौ सत्यां नूनं निश्चितं तनुतां लघुतां न तनोति। दार्ढ्यमेव पोषयति। तु पक्षान्तरे। तेन हेतुना इनेनार्याद्भवता स्वामिना नोऽस्माकं तता विस्तीर्णा ईतिः संसारबाधा नूतनतां नवत्वं न नीता। भवत्नुतिमात्रेण वयं मुक्ता इति सूचितम्। श्लोकोऽयं द्व्यक्षरः॥ २२॥

हर प्रभो परं वन्द्य रक्षोभागस्थिरो भव।
प्रभावितदमो रोरं भोगातत्त्व सदस्थिप॥ २३॥

अर्धभ्रमः॥

हे प्रभो भव, त्वं रोरं दारिद्र्यं हर निवारय। परमत्यर्थं वन्द्य वन्दनीय। कथंभूतस्त्वम्। रक्षसां हिंसापराणामपि भागे संविभागेऽस्थिरश्चञ्चलः। दानादावपि सर्वलो(प)काहितहेतुना कीलितः। पुनः कथंभूतः। प्रभावितः सर्वजनोपलक्षितो दम इन्द्रियजयो यस्य। तथा प्रभो कथंभूत। भोगातत्त्व भोगा अतत्त्वं यस्य। आभासमानत्वात्। पुनः कथंभूत प्रभो, सदस्थिप सन्ति शोभनान्यस्थीनि भूषणतया पाति रक्षतीति तादृश॥अर्धभ्रमः॥२३

कार्ष्ण्येन भगवन्नास्ति तव कण्ठच्छवेः समा।
कालिकाकालिकालालीलीलाका परवीरप॥ २४॥

त्रिशूलबन्धः॥

परा उत्कृष्टा ये वीरास्तान्यः पाति तादृश परवीरप। 'वीतरागभयद्वेषो रहितः सर्वसंशयैः। सर्वभूतानुकम्पी च वीर इत्युच्यते बुधैः॥' इति। तव संबन्धिन्याः कण्ठच्छवेः कान्त्या समा अस्ति। कीदृशी। कालिनाम (?) काकानामालयः पङ्क्तयः तथा कालानामाली च तासामिव लीला विच्छित्तिर्यस्यास्तादृशी कृष्णत्वेन॥ २४॥

मरुर्मेरुररिर्मारोऽमरारामोऽरमोऽरिरः।
मुरारिरामा रोरोऽरमुमारामी ममोरुराः॥ २५॥ व्यक्षरः॥

मम मेरुः सर्वदेवताविश्रान्तिस्थानमपि मरुर्निर्जलप्रायो देश इव नावर्जकः। मारः कामोऽपि सर्वजनवल्लभोऽरिः शत्रुः। तथा अमराणां देवानामारामो विश्रान्तिप्रदो नन्दनादिप्रदेशः सोऽपि अरमः शोभारहितः। अतएव अरिरः अरीन् रातीति असुखत्वाच्छत्रुरिव। मुरारेर्विष्णो रामा लक्ष्मीर्भगवती रोरो दारिद्र्यम्। अरमत्यर्थम्। उमारामी उमया सह योऽवश्यं रमते स पार्वतीवल्लभः स एव उरुराः महदुत्कृष्टं निधानभूतं धनम्॥ २५॥

विहाय सस्यसंपन्नां सेव्यः स्वामी शिवं भवेत्।
येनाप्यो दिवि पन्थानो राजेनत्वं च तिष्ठति॥ २६॥
अपशब्दाभासः॥

नोऽस्माकं सस्यसंपन्नां धान्यादिसमृद्धिमत्त्वं विहाय स्वामी विश्वेश्वरः सेवनीयः। येन हेतुना शिवं कल्याणं भवेत्। दिवि च यः पन्थाः सचाप्यः प्राप्यः। राजेनत्वं राज्ञां मध्ये इनत्वं प्रभुत्वं च तिष्ठति। अत्र विहासस्य, संपन्नां, शिवं, स्वामी, सेव्यः, पन्थानः, आप्यः, राजेन, त्वं तिष्ठति इति सर्वेऽपि शब्दा अपशब्दा इवाभासन्ते अतोऽपशब्दाभासोऽयम्। अर्थान्तरप्रतीतौ निर्दोषः॥ २६॥

न भासते ते सभा न भाविताममता विभा।
सता वदे देवतास ते मदेन नदेऽमते॥ २७॥ सर्वतोभद्रः॥
भग्ना वयं भवमये नोद्धृताः पशवस्त्वया।
यास्त्ववस्था रुजां भामामाभाजां रुद्र ता हर॥ २८॥
परशुबन्धः॥ युगलकम्॥

द्वयोर्टीका—हेभगवन् देवतास, देवतानां ब्रह्मविष्णुप्रभृतीनामासनं स्थितिः रक्षणं क्षेपण विनाशो वा यस्मात् तत्संबोधनम्। ते तव सभा न न भासते। अपि तु सर्वोत्तमा भासते एव। किंविधा। भावितानां नन्दिप्रभृतीनां अममता निरहंकारता तया विभा दीप्तिर्यस्याम्। सता सत्पुरुषेण ब्रह्मणा वदे। वदे इति 'संभाषणोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः' इत्यात्मनेपदम्। ते तव वयं मदेनाहंकारेण नदे भवमये अमते अनौ, प्मिते दुस्तरे तडागे भग्ना मुद्रिताः सन्तः पशव इत्यज्ञानपरत्वात् त्वया नोद्धृताः। हे रुद्र रुजां दुःखानां भामः क्रोधः अमा अलक्ष्मीस्तद्भाजां रुजां या अवस्थास्ता हर निवारय। इति युगलकम्। एकः सर्वतोभद्रो द्वितीयः परशुबन्धः॥ २७॥ २८॥

कलिकाकलकालीककेलिः कलकलाकुले।
कालेऽलिकोकिलाकाले कोऽलं लोले कुले किल॥ २९॥
व्यक्षरः॥

को नामालं समर्थो भवति । अपि तु न कश्चित् । कुले गृहे । शरीर इत्यर्थः । कुले शरीरे लोले अस्थिरे सति यतः कलिकाले याः कटास्ताभिर्यदटीकं तदेव केलिः खेलनं यस्य । तथा कलकलैर्नानाविधोत्कलिकाभिराकुले क्षुभिते । तथा काले मृत्यौ जाग्रतीत्यर्थः । तथा अलयो भ्रमरास्तथा कोकिलाश्च तद्वत्काले तामसे ॥ २९ ॥

आभातिभाति भवतस्तव कालमार्कि
संचिन्तय स्मरहरोग्रतनुं कृशाङ्गम् ।
मां मास्य मुञ्च भव भीममलं कलङ्कं
हन्तातिकष्टममराधिप देव तेन ॥ ३० ॥

पुनरुक्तवदाभासः सर्वपदाश्रयः ॥

हे स्मरहर, हे देव, हे अमराधिप, हे भव, एतान्यामन्त्रणानि भीतोक्त्या च पुनरुक्तानि तत्राभा शोभा अतिभाति अतिशयेन भाति । आर्कि उग्रतनुं रौद्रशरीरं संचिन्तय । कथंभूतमार्किम्, कालमतिमलीमसम् । तथा भवतो जन्महेतोः मां कृशाङ्गमतिर्भीत्या क्षामतनुं संचिन्तय । अतिदयालुतयेति शेषः । तेन हेतुना हन्ता वधकः तादृशानामुग्रशरीराणामपीत्यर्थः । त्वमस्य कालस्य भीम भयदायकमतिकष्टं कलङ्कं मा मुञ्च । कलङ्कं सर्वथा जहीत्यर्थः । अत्र च आभाति भाति, भवतः तव, कालं आर्कि, संचिन्तय स्मर, हर उग्र, तनुं कृशाङ्गं, मां मा, अस्य मुञ्च, भव भीम, मलं कलङ्कं, हन्त अतिकष्ट, अमराधिप देवतेन, इति सर्वपदाश्रयत्वं पुनरुक्तवदाभासस्य । देवतानामिनो देवतेनस्तदामन्त्रणम् ॥३०॥

यजने वर धीसाररसामानससारस ।
सरसासनमासाररसाधीरवने जय ॥ ३१ ॥
दक्ष दासवरासारनद मत्तकृतारव ।
वरताकृतमदन रसाराव सदाक्षद ॥ ३२ ॥ युग्मम् ॥

हे भगवन्, त्वं जय । किंभूत । यजने यज्ञे वर उत्कृष्ट । तथा धीसाराणां योगिनां या रसा भूमिः सैव मानसं तत्र सारस हंस । तथा दक्ष निपुण । तथा दासानां निजभक्तानां वरा एव आसारस्तत्र नद मेघविशेष । तथा मत्तेषु कामाद्युन्मादयुक्तेषु कृत आरावस्तापनामृष्टो येन । तथा वरतया उत्कृष्टतया कृतो मदनो येन तादृश । तथा रसो रसज्ञः । अर्थआदित्यादन् । आरावः संजल्पो यस्य तदामन्त्रणम् । तथा सदा सर्वदा अक्षान्भरणाद्यक्षान् पृथपातकान् यति हन्तीति तादृश सदाक्षद । कस्मिन् । सरसासनमासार रसाधीरवने । सरसमासनं स्थितिर्येषां ते माया लक्ष्म्याः साराः रसायां भूमौ ये धीरास्त्वंदंकताना भावुकास्तेषां वनं समूहस्तत्र । युगलकम् ॥ ३१ ॥ ३२ ॥

तवैव मूर्तिः शिव धर्मराजमुद्धत्समानामसहत्समाना ।
शुभावहा तत्त्वजुषां निरस्तधनादराणां निधनप्रदाराणाम् ॥ ३३ ॥

हे भगवन् शिव, तवैव मूर्तिः असुहृत् प्राणहृत् भवति । केषाम् । धर्मराजसुहृत्समानां यमसुहृत्सदृशानां तत्प्रियलोकानां तत्किंकराणां वा । कथंभूता समाना सह मानेन पूजया वर्तते या सा । पुनः किंविधा । निरस्तधनादराणां दूरीकृतधनाभिलाषाणां तत्त्वजुषां त्वदेकतानानां जनानां अराणामभिसमूहानां भवपाशरूपाणां निधनात्कर्तनाच्छुभावहा शुभदा । युक्पादाद्यन्तयमकोऽयं श्लोकः ॥ ३३ ॥

भूयाद्भक्तिस्त्वय्युमाकान्त तीव्रासारा दक्षामोघमोक्षादरा सा ।
नो चेन्नैषा जीयते कालसेना या कालिम्ना नित्यनिम्नालिकाया ॥३४॥
युक्पादप्रतिलोमः ॥

हे भगवन् उमाकान्त, त्वयि सा भक्तिर्मम तीव्रासारा अविच्छिन्ना भूयात् । पुनः किंभूता । दक्षा निपुणा । पुनः किंभूता । अमोघः सफलो मोक्षे आदरो यस्याम् । नो चेद्भक्तिस्तव स्यात् तर्ह्येषा कालसेना मृत्युचमूर्जन्ममरणादिरूपा न जीयते । केनापीत्यर्थः । एषा कालसेना का । या कालिम्ना मलीमसत्वेन नित्यनिम्नोऽतिनीचोऽलिकायो भ्रमरकायो यस्याः सा । भ्रमरकायादप्यत्यन्तमलिनेत्यर्थः ॥ ३४ ॥

न नानान्नानि नूनं नो न ना नीनानना न नः ।
नानु नानेन नुन्नैना ननु नेनाननेन नौः ॥ ३५ ॥ एकाक्षरः ॥
दृष्टेन लभ्या भवता नयनानलसाधुना ।
मुक्तिरूपा भवाब्ध्यन्ता नयनानलसाधुना ॥ ३६ ॥
पादयमकम् ॥ युग्मम् ॥

नूनं निश्चये नोऽस्माकं नानान्नानि नानाविधानि अन्नानि न भवन्ति । यतः नीनाः निर्गत इनः स्वामी येषां ते नीनाः स्वामिरहिताः । अननाः अविद्यमाना अनाः प्राणा येषां ते अननाः । निष्प्राणा एवेत्यर्थः । नानुना इत्यादि । अनेन हेतुना अनु अविद्यमाना नौर्यस्मिन्कर्मणि तत् । अनु न भवति । काक्वा भवत्येवेत्यर्थः । ना नरः स्वामी न भवति केषाम् । नः । ननु निश्चये । इनाननेन इनसाननं मुखं यस्य स इनाननो लक्ष्मीवान् नेनाननो दरिद्रस्तेन नेनाननेन दरिद्रेणापि मुक्तिरूपा नौर्लभ्या । कदा । अधुना । केन हेतुना । भवता । कथंभूतेन दृष्टेन । पुनः कथभूतेन । नयनानलसाधुना नयनानलेन साधुः प्रख्यातः(?) तेन । मुक्तिरूपा नौः कथंरूपा । भवाब्ध्यन्ता भवाब्धेरन्तो यस्याः सा । पुनः कथभूता । नयनानलसा नयने प्रापणे अर्थाद्भवोत्तारणे अनलसा सज्जा इति । मुक्तिरूपा नौः पुनः कथंभूता । नुन्नैनाः नुन्नं नोदितमेनः पापं यया (युग्मम्) इति भक्तजनं प्रति । आर्त्योक्तिः । (अधुना इदानीम्) आद्य एकाक्षरः द्वितीयं पादयमकम् । इह शब्दपौनरुक्त्यभ्रान्तिर्मितलिङ्गत्वान्न ग्राह्या । माघकाव्यकिरातार्जुनीयादिकाव्येषु बहुष्वपि पदार्थानां पौनरुक्त्यं दृश्यते तच्च पूर्वाचार्यैः समर्थितम् । यथा—'यमकश्लेषचित्राणां नातिपदक्षोदः कार्यः' इति । अस्य कवेः क्वचित्पौनरुक्त्यादिचमत्कृतेः (?) । चित्रकाव्यस्य दुष्करत्वात् ॥ ३५ ॥ ३६ ॥

सुसुररससभामा स्वस्वदादावक्र-

क्रममनुमुततत्त्वा स्वाततप्रप्रजाजा ।

ननव वधधनानाश्चञ्चला लाभभव्य-

व्यस सततममन्दान्दाससङ्गङ्गते ते ॥ ३७ ॥ आवलिः ॥

मयि तनुमुचितां तां दर्शयस्वेदृशीं या

रविजजविरणत्रा त्राणरक्तातिभाति ।

जय जय जगतस्त्वं तत्त्वतज्ज्ञोऽसि भासि-

न्रसिक सदसदासस्ते भवे भर्ग भव्यः ॥ ३८ ॥

एतस्य श्लोकस्य प्रथमार्धेन त्रिशूलबन्धः, द्वितीयार्धेन गदाबन्धः । मालिनीवृत्ताभ्यां युगलकम् ॥

' हे भगवन् भर्ग, न[नव] नव्य आदि[भूत] लाभभव्यव्यस लाभेन हेतुनोत्कृष्टो व्यसो विशेषेणासनं त्यजनं यस्य हेतोः । पदार्थानामनन्तफलदत्वात् । तथाविध । हे भासिन् भासनशील रसिक भक्तजनप्रिय, ईदृशीं तनुं मयि ते तव दाससङ्गं गते आशु त्वरितं दर्शयस्व । या तव तनुरेवंभूतातिभाति सातिशया शोभते । कथंभूता । सुसुररससभामा सुष्ठु सुराणां रसा यस्यां तथाविधायां सभायामाभा यस्याः । आदावादावेव स्वस्वदा भक्तादिभ्यो भक्तेभ्यः स्वमात्मीयं स्वं धनं ददातीति तथा । अवक्रक्रमं कृत्वा अकौटिल्येन अनु पश्चाद्युतं तत्त्वं यस्याः सा । तु पक्षान्तरे आतता विस्तीर्णा प्रकृष्टा प्रजा प्रप्रजा तस्यापि प्रभृतिसमस्तनिर्माणं यस्यास्तथाविधा । स्वयं पुनरजा जन्मरहिता । तथा वधधनानां हिंसाजीवनानामसुरादीनां चञ्चलास्थिरा । सतत सर्वकालममन्दां नित्योद्युक्ताम् । तां तनुमिति संबन्धः । तथा । या च ते तनुः रविजस्य यमस्य ये जविनो वेगवन्तः । अर्थाद्भटाः । तैः सह यो रणस्तत्त्रायते तथाविधा । अत एव सर्वेषां त्राणरक्ता । अत एव त्वं जगतां तत्त्वविषये वै तज्ज्ञोऽसि विचारनिपुणः । जय जय । सदसतोर्नित्यानित्ययोर्य आस आस्यास्ते तव भवे संसारे भव्य उत्कृष्टः । सतः सत्वेनः स्थितिर्भवता कल्पिता, असतोऽपि खपुष्पादेर्व्यवधानायासत्वेन । यदाहुः—'वस्तु भवतत्वान्यत्वेन नातिक्रामति' इति । प्रमेयमनुरूपेण प्रमाणेन प्रमीयते प्रत्यक्षवत्यमाणमभ्यपतितत्वादसतोऽपि व्यवस्थानादिविदेयर्थनिर्माणसंचिन्त्यात् ॥ अत्र युगलके एक आवलिः । द्वितीयश्लोकस्यार्धेन त्रिशूलबन्धः । द्वितीयार्धेन च गदाबन्धः ॥ ३७ ॥ ३८ ॥

सुखदोनवभत्येन सुवर्णाकृतिविग्रहः ।

नागरागप्रथात्यक्तो गिरीशो जयतादसौ ॥ ३९ ॥

अर्थत्रयवाचकोऽयम् ॥

असौ गिरीशो महादेवः, गिरीणामीशो मेरुः, गिरि वाचि ईशो बृहस्पतिश्चेति त्रय उक्ताः। तत्राद्येऽर्थे—गिरीशो महादेवो जयति। सु शोभनानि खानि ददातीति सुखदः। तथा अनवमत्वेनोत्कृष्टत्वेन सु शोभनानां वर्णानां ब्राह्मणादीनामक्षराणां वा आ समन्तात्कृतिः स्थितिर्यस्मात्स सुवर्णाकृतिस्तादृशो विग्रहः शरीरसंनिवेशो यस्य। नागराजादीनां प्रथया प्रसिद्ध्या त्यक्तो विरहितः सर्वाङ्गभूषणत्वात्। तत्सहितः। एकोऽर्थः॥ मेरुरपि—सु शोभनाः खदा गह्वराणि यस्य स सुखदः। नवोत्कृष्टा मा लक्ष्मीर्यस्य तद्भावेनोपलक्षितः। सुवर्णमयी आकृतिर्यस्य। विविधानां वस्तूनां ग्रहो ग्रहणं यस्य च। न अगराजप्रथात्यक्तः पर्वतराज एव। द्वितीयोऽर्थः॥ बृहस्पतिः—नवमत्वेन सुखदः 'जीवः सप्तनवद्विपञ्चमगतः' इति। तथा सुवर्णा शोभनवर्णाकृतिर्यस्य तथाविधो विग्रहः संनिवेशो यस्य। भासमानाकृतित्वात्। 'बृहस्पतिर्भ्राजस्य' इति श्रुतिः। विशिष्टो ग्रहो वा विग्रहः। नागराजस्य दन्तिनः प्रथया त्यक्तः। गजवाहनत्वात्। प्रथया अति अक्तो वा सर्वोत्कर्षेण वर्तनात्। इति तृतीयोऽर्थः॥ ३९॥

भवभव्य भवातीत तत्त्वतज्ज्ञ तमोहर।
रणे रक्त रसेनैहि हिताहिसहितार्थद॥ ४०॥
दयादक्ष दहाघानि निन्द्यानि त्वं विरामय।
यमायत्तं यतित्वाव वर वन्द्य वरेण्य माम्॥ ४१॥

द्वाभ्यां गदाबन्धः॥ युगलकम्॥

हे भवभव्य सर्वोत्कृष्ट। भव संसारमतीत निर्मुक्त। तत्त्वेन परमार्थेन तज्ज्ञ सम्यक्परमार्थज्ञ तद्ब्रह्म जानातीति तज्ज्ञ। तमोहर सर्वजनानामज्ञानध्वान्तघ्न। रणे विश्वकण्टकोद्धरणार्थं रक्त हेवाकिन्। भैरवत्वात्। रसेन कृपाविशारद आदरेण एहि। हितसर्वजनेभ्यः, अहिभ्यः शेषादिभ्यः, सहितमरुत्तादिभ्यो भक्तेभ्योऽर्थद। दयायां दक्ष कुशल अघानि पापानि दह शान्तिं नय। निन्द्यानि पापानि विरामय अधःकुरुष्व। यमस्यायत्तं मां मरणधर्मित्वान्मर्त्यानां यतित्वा प्रयत्नपूर्वं अव रक्ष। वर वन्द्य वरेण्य इत्यामन्त्रणपदानि॥४०॥४१॥

न तनुतां दधती ततोदिता तुदति नीतिनिधे निधने तनुम्।
निधिदनाथ ततं ननु नूतनं नुतिधनं तदिदं निददानि ते॥ ४२॥

तवर्गबन्धः॥

हे निधिदनाथ कुबेरस्य स्वामिन्, हे नीतिनिधे, ततोदिता तोदा रोगाः। ततोदिता बहलरोगिता निधनेऽन्तसमये तनु देहं तुदति व्यथयति। यतस्तनुतां न दधती। बहुलेत्यर्थः। ततोऽस्माद्धेतोरहं ते तुभ्य नूतनमिदं नुतिधनं स्तुतिरेव वित्तं निददानि। नीतेर्विश्वस्थितिरूपाया निधे आस्पद। ततं विस्तीर्णम्। ननु समुखीकरणे। द्रुतविलम्बिताक्षराभ्यां तवर्गबन्धः॥ ४२॥

सा राजते तनुरलं वरदा परासा-
सारापदारहित सन्महहासदासा ।
सादासहाहतभवोत्करकाविलासा
सालाविकारपृथु साक्षततेऽजरासा ॥ ४३ ॥

अष्टदलपद्मबन्धः ॥

हे भगवन्, असारायोग्या चासावापत्तया रहित असारापदारहित, तथा सह अक्षतत्या-क्षमालया पाणिगया सह वर्तते यः स तदामन्त्रणं साक्षतते, ते तव सबन्धिनी सा तनुः राजते । वरान्ददातीति वरदा । परानस्यतीति परासा । परेषां शत्रूणामासः कोपो वा यस्याः सकाशात् । सन्मह उत्कृष्टोत्सवो हासः प्रमोदो येषां तथाविधा दासाः सेवका यस्याः सा सन्महहासदासा । तथा सादं न सहन्ते इति सादासहा मृदवस्तेयामा समन्ताद्धतो भव एवोच्चैः करकाणां वर्षोपलानां विलासो बाहुल्यं यया सा सादासहाहतभवोत्करका-विलासा । कथम् । सालवदविकारपृथु निर्विकारप्रांशु कृत्वा । तथा अजरासा न विद्यते ज-राया आसा आस्था यस्याः ॥ पद्मबन्धोऽयं वसन्ततृत्तेन ॥ ४३ ॥

वरा सारवरासारपराभवपरा भव ।
समुद्वृत्ता समुद्वृत्तातनुस्तव तनुस्तव ॥ ४४ ॥

यमकावली ॥

हे भगवन् भव, समुद्वृत्तातनुस्तव सम्यग् उच्चैर्वृत्तानि छन्दांसि अनुष्टुप्प्रभृतीनि येषु तथाविध । अतनवो बहलाः स्तवाः स्तोत्राणि यस्य तादृश, तव सबन्धिनी तनुर्वरो-त्कृष्टा । तथा सारा मुख्या ये वरास्तेषामासारो बहलवर्षण तत्र परोद्युक्ता सारवरासार-परा । तथा अभव मोक्षं पिपर्ति पोषयति अभवपरा । तथा समन्ताद्वृत्ता भैरव-त्वादुत्कटा ॥ ४४ ॥

साध्या मूर्तिर्गुणैर्या ते भावितत्वमतारसा ।
सारतावाधितविभा रविजस्य सदैव सा ॥ ४५ ॥

क्षुरिकाबन्धः ॥

सा तव मूर्तिर्यमनियमादिभिर्गुणैः साध्याराध्या । सा का । या भावितत्वेन मता प्रिया भावितत्वमता । तथा अरसा वीतरागा । तथा सारतयोत्कृष्टत्वेन बाधितोपशमिता विभा यया । कस्य । रविजस्य मृत्योः । सदा सर्वदैव ॥ इति क्षुरिकाबन्धः ॥ ४५ ॥

कुरवे काले साव यमारेऽरस सुकुमार सदानव देव ।
अनवद्याचित भव मदनारेऽचल मामुक्तियते मयि हेव ॥ ४६ ॥

संस्कृतकाश्मीरापभ्रंशश्लोकः ॥

हे भव, कौ भूमौ रवे सूर्यवत्प्रकाशद कुरवे, मदनस्यारे मदनारे, काले समये हे सात सहावेन रक्षणेन वर्तते यस्तत्संबोधनम्। अहं स्मरामि मद्भक्ति नयामि। परमां गतिमिति यावत्। यमस्यारे यमारे। अरस संसारवासनोज्झित। सदा नित्यं नव तरुण। देव दिवु क्रीडाव्यवहारादिधात्वर्थवाचक। अनवदयया कृपया चित व्याप्त। अचल स्थिर। उक्तिषु यतं उद्युक्ते उक्तियुक्ते मयि विषये। अत एव मामव। इति पुराणपुरुषसंस्कृतभापार्थः॥ कुरवे काले कश्मीरभाषया सर्वे मारिताः। रसमुकुमाराः सदा नवा देवाः। अनवर भाषया निरवधीत्यर्थः। याचितभव प्रार्थितसंसार इति मदनारे इति मदवह्निना मुक्ताः। तादृशा अपि। इति कश्मीरभाषार्थः॥ एव संस्कृतकाश्मीरापभ्रंशभाषाश्लेषः॥ ४६॥

सा रसावर सारम्भ तरसावरसारता।
तारसाररसा भक्तिस्थिर सावरसाभया॥ ४७॥
उल्लसद्विजरानन्द शिव सद्विजराज यत्।
मूर्तिराभाति ते भव्या सा स्थिराभातितेजसः॥ ४८॥

अयं तूणबन्धः॥ युग्मम्॥

हे शिव, सद्विजराज चन्द्रभूषण, रसायां भुवि वरो मुख्यः सदारम्भेण वर्तते विश्वकर्मणा वर्तते यस्तदामन्त्रणम्। तथा भक्तिस्थिर। तथा उल्लसन् विजरो जरारहितस्तरुण आनन्दो निरतिशयप्रीतिलक्षणो मोक्षपर्यायो यस्य स तथाविध। तव संबन्धिनी सा मूर्तिर्भव्योत्कृष्टा आभाति। अतितेजसः परमानन्दस्याभा स्फुरत्ता। यदाहुः—'देवः स कोऽपि जगतीप्रकाशः' इति, 'तदल स्वात्मावबोध पुष्णाति तेजोमयोऽमृतमयः पुरुषोऽयमेव सः' इत्यादि, 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥' इति रीत्या 'सूर्यनिर्मलपरमेष्ठिभिः' इत्यादिभिः सवादैः सर्वदर्शनेषु परमात्मनः सर्वतेजास्थतिशय्य सर्वेश्वरत्व विश्वकर्तृत्वमिति सुसिद्धम्। इह काव्यमात्रप्रस्तावेन किंचिद्ध्वनितम्। अत्र विस्तरभयात्प्रकृतानुपयोगाच्च न वितत्य प्रपञ्चितम्। दीप्तिः तरसा अव रसेष्ववगतरसेषु बालिशप्रायेषु अरतासक्ता। तारे संसारोत्तारणे सारः समर्थो रसो यस्याः सा तथाविधा। वरेषु साभया अभयदायिनी। एवंरूपा तवैवेति॥ द्वितीयस्तूणबन्धः॥ ४७॥ ४८॥

चर्चाशिक्षितमन्त्रतत्त्वविभवोदारप्रतीतिर्भृशं
सतां वन्द्यभवप्रदोऽसि विदितस्त्वं कृत्तवैरिन्भुवि।
विश्वस्तुत्य हिताय ते दिवि नमो धूतार्यजेयध्वने
नेत्राग्नौ च हुतस्मराय विभवे शर्वाय विद्यात्मने॥ ४९॥

कविनामगर्भश्चक्रबन्धः॥

'शिवस्तुतिरियमवतारकृता' इति श्लोकान्निर्गच्छति ॥ चर्चया पुनः पुनः पर्यालोचनया अन्यैः स्वतः शास्त्र इति नीत्या पारम्पर्यक्रमेण यः शिक्षितो मन्त्राणां तत्त्वस्य परमार्थस्य विभवः स्फाररूपो महिमा तेनोदारा प्रतीतिर्यस्य तथाविधोऽसि । विश्वगुरोर्गुरोः कविनामगर्भश्चक्रबन्धः'शिवस्तुतिरियमवतारकृता' इति श्लोकान्निर्गच्छति'स त्वं मानविशिष्ट–'इति माघचक्रबन्धवद्वहिस्तृतीयावर्ते'शिवस्तुतिः–' इत्यादि द्वादशाक्षरी निर्गच्छति। मन्त्रान्तर्विमर्शो गुरुः । अतश्चर्चया, न तु शिक्षया । भृशं स्मरति भृशं स्मर्ता । भक्तजनानां वन्द्यं शानयुक्तं भवं जन्मभुक्तिमुक्तिसाधकं ददाति यः स तथाविधः । मनुष्यजन्मना हि बुद्धिबलेन सर्वं साध्यते । अत एव भुवि सर्वजनानां विदितः सम्यग्ज्ञातः । हे कृत्तवैरिन्, कृत्ता वैरिणः कामादय आन्तराः, बाह्याश्चान्धकासुरादयः । हे विश्वस्तुत्य विश्वस्मिन्सर्वोत्कृष्टत्वात्स्तुत्य तुभ्यं शर्वाय विभवे विश्वात्मने नमः । दिवि देवभूमौ अर्थात् स्थितेभ्यो हिताय । सुराः सत्त्वप्रधानास्तदुपरि भगवतः सकृपत्वमुचितम् । धूता आकम्पिता अरयो येन स धूतारिः । तथा अजेयो दुरवगाह्यो ध्वनिर्नादरूपो यस्य स तथाविध । तथा नेत्राग्नौ हुतः स्मरो येनैवंविधाय सर्वोत्कर्षवते । विद्या सम्यग्ज्ञानरूपाविद्यातिरस्कारिणी भगवतो रूपम् । 'विद्ययामृतमश्नुते' । सर्वागमेषु च 'महाविद्या ज्ञानयोगः' इति चतुर्थ्यं विद्या आत्मस्वरूप यस्य तादृशाय ते नमः ॥ ४९ ॥

मारासुघ्नाविपक्षादरवरवरदक्षापविघ्ना सुरामा
सामासक्ता रणत्रा रिपुरसुरपुरि त्राणरक्तासमा सा ।
शापाक्रुष्टामृदुस्वा वत सरस तव स्वादुमृष्टा कृपासा
नामासत्या कृतज्ञा तनुरजर नुतज्ञातकृत्या समाना ॥ ५० ॥

प्रतिलोमानुलोमपादः ॥

हे भगवन्, सरस नित्यानन्दमय, अजर नित्यतरुण, वत आश्चर्यं तव सम्बन्धिनी तनुः मारस्य कामस्य असूनन्तीति मारासुघ्ना । अविपक्षा प्रतिपक्षवर्जिता । तथा अदरं निर्भयं कृत्वा स्वातन्त्र्येण वरेभ्य उत्तमेभ्यो वरे दक्षा कुशला । अपविघ्ना निर्विघ्ना । सु शोभना रामा पार्वती यस्यां सा । साम्निवेदे आसक्ता संनिहिता । रणात्त्रायते इति रणत्रा । असुराणां पुरि नगर्यां रिपुः । अत एव त्राणे सकलरक्षणे रक्तानुरागवती । असमा न विद्यते समस्तुल्यो यस्याः । सा विश्वप्रसिद्धा । शापेनाक्रुष्टः अमृदूनां क्रूरात्मनां स्व आत्मा यया । स्वादुना मृष्टा सर्वजनरुचिदा स्वादुमृष्टा । कृपया आसः स्थितिर्यस्याः सा कृपासा ॥ अत्र चित्रकाव्ये शसयोरभेदः । न अमा अविद्यमाना मा यस्याः सा, अपि तु सश्रीका । सत्याविनश्वरा । कृतज्ञा भक्तानां सेवयान्तरज्ञा । अजराणां देवानां युनुतिः-(तं) स्तुतिः तेन ज्ञातं कृत्यं यस्याः । अत एव सह मानेन वर्तते या समाना ॥ स्रग्धरा वृत्तं प्रतिलोमानुलोमपादतः ॥ ५० ॥

पिता सुराणां क्षपितासुराणां भवस्यनूनं विभवस्य नूनम् ।
खराजितानां मुखराजितानां सदाशिव त्वं तु सदा शिवत्वम् ॥ ५१ ॥

सर्वपादाद्यन्तयमकम् ॥

हे सदाशिव, त्वमेव तु सदा सर्वकालं क्षपितासुराणां मारितदैत्यानां सुराणां विष्णुप्रभृतीनां संबन्धिनो विभवस्यैश्वर्यस्य पिता निर्माता भवसि । नूनं निश्चितम् अनून कृत्वा खे आकाशे राजितानाम् । तथा मुखरैर्निन्दापरैर्वाचालैः प्रतिपक्षैरजितानां त्वमेव शिवत्वं शिवस्य भावः शिवत्वं कल्याणभावः ॥ सर्वपादाद्यन्तयमकम् ॥ ५१ ॥

अहीनभोगाभ रणादराय सदानयज्ञान्त कविग्रहाय ।
सुभूति चेतो हरवीरकाय वरायते सज्ज नमोऽक्षदाय ॥ ५२ ॥
अहीनभोगाभरणादराय सदानयज्ञान्तकविग्रहाय ।
सुभूतिचेतोहरवीरकाय वराय ते सज्जनमोक्षदाय ॥ ५३ ॥

महायमकम् ॥ युग्मम् ॥

हे हरवीरकाय, तथा वर उत्कृष्ट, अहीनभोगादिषु राज्यादिषु आभा यस्मात्सोऽहीनभोगाभस्तदामन्त्रणम् । तथाविध । सर्वत्र भवद्दीप्तेरेव स्फुरणात् । तदुक्तम्—'न सा जीवकला काचित्संतानद्वयवर्तिनी । व्याप्त्री विश्वकला यस्यामधिष्ठात्री न विद्यते ॥' इति । तुभ्यं नमः । अक्षाणीन्द्रियाणि दयते पलायते । मनःप्रभृतीनां सर्वेन्द्रियाणां बाह्यपदार्थानां च तदधिष्ठानमन्तरेण ग्राहकत्वग्राह्यत्वासिद्धेः । यदाहुः—'आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन' इति । रणादराय रणादित्यसंग्रामाददरो निर्भयस्तस्मै रणादराय सदालब्धजयत्वात् । सदानः सदक्षिणः यज्ञान्तः यस्य हेतोः । सर्वयज्ञसंपादनवेलायां रुद्रप्रीत्यर्थमेव दक्षिणादि यजमाना वितरन्ति । तावच्च यज्ञस्य पूर्णता न भवति । 'मृतो यज्ञस्त्वदक्षिणः' इति नीत्या यजमानमूर्ते । क जलं मूर्तिर्विग्रहो यस्य तथाविधाय, अष्टमूर्तित्वात् । शोभना भूतिरैश्वर्यं यत्र तत् सुभूति ऐश्वर्येण भोगः समोक्ष ईश्वरेच्छया प्राप्यते तथाविधं कृत्वा । च समुच्चये । इतो लोकात् चेतः, इति पदच्छेदः । आयते मुक्तिमार्गे सज्जभक्तजननिस्तारेण संनद्ध, ते नमः । अक्षदाय । एकोऽर्थः ॥ अर्थान्तरं यथा—वराय वरार्थं सज्जनानां मोक्षदाय तुभ्यं अहीनामिना नागराजास्तेषां ये भोगाः शरीरसनिवेशास्तदाभरणे आदरो यस्य । सदा सर्वकालं नयं संसारस्थितिं जानाति यस्तत्संबोधनम् । अन्तकं प्रति विग्रहो विरोधो यस्य सः । तथा सुभूत्या भस्माङ्गरागेण चेतोहरो वीरको नाम गणो यस्य स तथाविधाय ॥ इति महायमकम् ॥ युग्मम् ॥५२॥५३॥

साध्यं सुकृतिभिर्यत्नैरमरैर्नुतमञ्जसा ।
साहसानां निधिं गम्यं न दुरासदतेजसा ॥ ५४ ॥

साध्यार्चितं स्तुवे येन वरेयं भूपिता रसा ।
साधुवृत्तं साररूपं त्रिनेत्रमतिसादरम् ॥ ९९ ॥

द्वाभ्यां खड्गबन्धः ॥ युगलकम् ॥

सुकृतिभिः सत्कर्मभिः साध्यं यत्नैर्ध्यानधारणातपोभिः अमरैर्ब्रह्मादिभिर्नुतं स्तुतमञ्जसा स्पष्टं साध्यैर्देवविशेषैरर्चितं पूजितम् । येन भगवता इयं रसा भूर्भूपिता । तथा साधु वृत्तं यस्य स तादृशम् । तथा सारं रूपं यस्य तथाविधं त्रिनेत्ररूपं व्यक्तं भक्तजनेषु सादरं साहसानां त्रिपुरदाहादीनां निधिं स्थानम् । दुरासदेन तेजसा हेतुना सर्वैः कैश्चिदेव भक्तैरगम्यमेवंविधं सर्वोत्तममहं स्तुवे ॥ इति श्लोकाभ्यां खड्गबन्धः ॥ युगलकम् ॥ ॥ ५४ ॥ ५५ ॥

सारज्ञं च सदाचारतापच्छिदमुमावरम् ।
रंहसा नौम्यधिपतारम्यं मुक्तिफलप्रदम् ॥ ९६ ॥

मुसलबन्धः ॥

सारं मुक्तितत्त्वं जानामीति तथाविधं सदाचाराणां समयिनां तापं त्रिविधं छिनत्ति यस्तमुमावल्लभत्वादुमावरं सर्वातिशायिनं रंहसा त्वरया अधिपतया सर्वेश्वरत्वेन रम्यम् । तथा मुक्तिफलं प्रददाति यस्तमहं नौमि ॥ मुसलबन्धः ॥ ५६ ॥

साधुचक्रनुतं वन्दे रेणुकोद्भवशौर्यदम् ।
दंष्ट्रा विपाटिता येन गजस्य विजिता रसा ॥ ९७ ॥

धनुर्बन्धः ॥

साधुचक्रैर्नुतं नियमिसमूहैः स्तुतम् । रेणुकोद्भवो जामदग्न्यस्तस्य शौर्यदम् । शस्त्रास्त्रकर्मशिक्षाप्रतिपादनेन । येन दुर्जयस्य गजासुरस्य दंष्ट्रा विपाटितोन्मूलिता । अत एव रसा भूर्विजिता ॥ इति धनुर्बन्धः ॥ ५७ ॥

सावर्ता मित्रपरमाणवोऽपि कतमे स्थि(स्त्रि)सा (?) ।
सा मा नैकस्य तेभ्योऽपि देव मत्तनुरञ्जसा ॥ ९८ ॥

शरबन्धोऽयम् ॥

संसारे पितृपुत्रभ्रातृसुहृत्प्रभृतयः सावर्ता भ्रमन्तो नवनवाः कतमे तावत् असङ्ख्या विस्तारणायोग्यत्वादगण्याः, तेभ्यो मध्यान्मत्तनुः एकस्यापि न सा भा सा दीप्तिः आत्मनो वा तेषां भवत्राणासमर्थेति (?) मित्रस्य वा परमाणवः ॥ ५८ ॥

सामर्थ्यद सुमूर्तिस्ते सदा जीयात्समोऽरसा ।
सा रसासार सारास्थिस्थिरासा विदिता भुवि ॥ ९९ ॥

त्रिशूलबन्धः ॥

सामर्थ्यं संसारसागरतरणयोग्यं ददाति यस्तथाविध, तव मूर्तिस्ते सर्वकालं जीयात्। रसाहार रसानां मध्ये सार उत्कृष्ट, अस्ता वीतरागा सारास्थि कृत्वा स्थिर आसः स्थितिर्यस्याः। तथा भुवि विदिता॥ इति त्रिशूलबन्धः॥ ५९॥

सा विडम्बकतां नीत्वासवती क्रूरतां विभो।
विसारे कुरुते कालसेना दोषं मयि स्थिरा॥ ६०॥

डमरुबन्धः॥

कालसेना मयि विसारे दुर्बले विषये दोषं कुरुते। विडम्बकत्वं कृत्वा तामासवती॥ डमरुबन्धः॥ ६०॥

सारा बन्धैर्नाज विभो भियार्ता मे मतिः परा।
सा राजते विनैव त्वां भगवन्नेहि रंहसा॥ ६१॥

हलबन्धोऽयम्॥

खड्गबन्धात्प्रभृतिभिः सप्तभिरमीभिर्बन्धैः कविनामगर्भश्चक्रबन्धः, 'कृतं चक्रमिदं बन्धैरवतारेण सप्तभिः' इति निर्गच्छति॥

हे अज भगवन्, इयं मे मतिर्नैव विराजते। बन्धैराणवमायीयकार्मणैः (?) पाशैर्यत उपलक्षिता। सारा दुर्लभमनुष्यजन्मप्राप्त्या भव्या सती भिया यमभीत्या आर्ता। परा उत्कृष्टा त्व रंहसा त्वरितं एहि। मां पाहीत्यर्थः॥ इति हलबन्धः॥ 'कृतं चक्रमिदं बन्धैरवतारेण सप्तभिः' इत्यक्षराणि चक्रादुच्चित्य निर्गच्छन्ति॥ ६१॥

सो हेममग्गसग्गो सोहारोहक्खमो विसुद्धो सि।
सिद्धो सुविमोक्खहरो हासोग्गो सग्गममहेसो॥ ६२॥

प्रतिलोमानुलोमगाथा॥

एतस्याः संस्कृतीकरणम्—

'स हेममार्गसर्गः शोभारूपक्षमो विशुद्धोऽसि।
सिद्धः सुविमोक्षहरो हासोग्रः संगममहेशः॥'

स हेममार्गसर्गः मत्त्वं प्रति शोभारूपा क्षमा यस्य। सुविमोक्षः। वरः (?)। यस्य संबन्धी अट्टहास उग्रः। सङ्गमेत्यामन्त्रणम्॥ ६२॥

पथेन साधुना माय कुसुमेषुस्यदक्षते।
परमसे सतेजाय भोनमस्तेनमस्तव॥ ६३॥

अपशब्दाभासः॥

भो भगवन्, इन स्वामिन्, हे अनमस्तव न अमा अनमाः सश्रीकाः स्तवा यस्य तादृग्विध। अविद्यमाना मा लक्ष्मीर्येषां तेऽमाः। तथा कुसुमेषोः कामस्य यः स्यदो दर्पाति

शयस्तस्य क्षते हानौ अमाय निष्प्रपञ्च, मुकरत्वात् । साधुना पथा उपलक्षित, ते तुभ्यं नमः । अस्मै अनुभवगोचरत्वात्संनिकृष्टेण वर्तमानाय । 'पथेन' इति, 'साधुनामाय' इति, 'कुसुमेषुस्य' इति, 'दक्षते' इति, 'परमस्मै' इति 'नमस्ते नमस्तव' इति, एते आमुखे अपशब्दा भासन्ते इति अपशब्दाभासाः ॥ ६३ ॥

किन्ते कार्यं भर्गभयं कामद काला-
चिन्तेयं मे मन्युममेयं जनयित्री ।
व्यङ्क्ते भालादग्निदलाभां तव दृष्टि-
र्भुङ्क्ते [नैनं मन्दमतिं] नैपुणतः किम् ॥ ६४ ॥

मत्तमयूरेण नन्दिकावर्तबन्धः ॥

हे कामद सर्वाभिलषितदायिन्, इयं मम चिन्ता अमेयं बहुल मन्युं जनयित्री । जनयिष्यतीत्यर्थः । इयं का । यत्कालाद्भयं कार्यं छिन्ते तव सबन्धिनी दृष्टिर्भालाह्ललाटात् अग्निदलाभां वह्निखण्डद्युतिं व्यङ्क्ते प्रकाशयति सा दृष्टिरेनं मन्दमतिं तुच्छहृदयं नैपुणतो दार्ढ्येन किं न भुङ्क्ते । किमिति भस्मसान्न करोतीत्यर्थः ॥ मत्तमयूरेण नन्द्यावर्तबन्धः ॥६४॥

गिरिभिद्विधिजिद्विद्धि द्विपि च्छिन्द्धि स्थितिं गिरि ।
श्रियि सिद्धिर्धियि विधिर्विच्छित्तिरिति चिद्भियि ॥ ६५ ॥

इकारान्त एकस्वरः ॥

हे गिरिभिद्विधिजित्, गिरिभिदिन्द्रः, विधिर्ब्रह्मा तौ भुजस्तम्भेन शिरश्छेदेन च जितवान् । तत्संबोधनम् । त्वमिति विद्धि जानीहि । किम् । द्विपि वैरिणि या गीस्तस्यां स्थितिं संनिधिं छिन्द्धि विदारय । अत एव नोऽस्माकं श्रियि सिद्धिः, धियि प्रज्ञायां विधिर्विधानम् । चिद्भियि चितोऽपरिमितज्ञानाया भीतिः संसारभ्रमणात् तस्यां विच्छित्तिर्विच्छेदः । भवतीति सर्वत्र योज्यम् ॥ इकारान्तस्वरोऽयम् ॥ ६५ ॥

शर्व नयः शुभो वितरणे गुणे रत विभो
तिष्ठति ते श्रियेऽजर परं चिरं परजये ।
तत्कृपया सुचारुरव मा क्षमावररुचा
दर्शय सद्धिते परमुखं मुखं सुरपते ॥ ६६ ॥

स्फुरबन्धः ॥

हे शर्व विभो, गुणे रत, अजर जरारहित, ते तव नयो नीतिरागः शुभोऽस्ति । वितरणे दानविषये परमत्यर्थं चिरं श्रिये पर उत्कृष्टे यो जयस्तस्मिन्नस्ति । तस्मात् हे सुर-

---

1. आदर्शपुस्तकयोस्तु 'किन्ते' इत्येव पाठ उपलभ्यते, परंतु टीकायां 'छिन्ते' इति व्याख्यानस्योपलभ्यमानत्वात् 'छिन्ते' इत्येव पाठः स्यात्.

पते, त्वं कृपया सुचारु रमणीयः । मा अव मामव रक्ष क्षमया सामर्थ्येन सा वरोत्कृष्टा या रुक्तया सद्धयो हिते विषये यत्परमतिसौख्यं तथाविधं सुखं सुष्ठु खानीन्द्रियाणि यत्र तद्दर्शय ॥ स्फुरबन्धोऽयं श्लोकः ॥ ६६ ॥

कालाक्रान्ता तनुरमरनुत त्रस्तेयं मे विदितहित दिवि ।
नश्यत्यग्रे तव सरस बत ग्लानिः सेयं वशिदमद शिव ॥ ६७ ॥
प्रतिलोमानुलोमपादार्धः ॥

हे अमरनुत, हे दिवि विदितहित, हे सरस लब्धात्मविश्रान्ते, हे वशिनां जितेन्द्रियाणां दमद सर्वसहत्वदायिन्, मम सबन्धिनीयं तनुः कालेनाक्रान्ता त्रस्ता । बत आश्चर्ये। तव प्रभोरग्रे नश्यति सेयं ग्लानिः शिव सर्वेषां श्रेयस्कर ॥ भ्रमरविलसितं वृत्तम् ॥ ६७ ॥

दानासन्ना पवित्रानुतजनितरणत्रा रिपुत्वे न जेया
माराभिख्यासचर्याविरतकृदरमद्यापि दक्षा पराका ।
शापाकृत्यायनज्ञावनमनजनिमुक्तारगत्यानपाया
या सा रम्यागदत्वा शिवतनुरमदत्वातिहृत्तापरासा ॥ ६८ ॥
सारापत्ताहृतित्वादमरनुतवशित्वादगम्यारसा या
या पानत्यागरक्ता मुनिजनमनवज्ञा नयत्याक्रुपाशा ।
कारापक्षादपि द्यामरदकृतरविर्या च सख्याभिरामा
याजेनत्वे पुरि त्राणरतनिजतनुत्राविपन्ना सनादा ॥ ६९ ॥
प्रतिलोमानुलोमाभ्यां स्रग्धराद्वयम् ॥ (युग्मम्)

सा शिवतनुः एवंविधा सती मुनिजन भक्तलोकं कारापक्षात्संसारबन्धादपि द्यां नयति । यतः । दाने आसन्नाभ्यर्णवर्तिनी । तथा पवित्रा । आ समन्तान्नुत स्तवन येषां तथाविधैरानतैर्भक्तजनैर्जनितो यो रणो विपक्षैः सह कलहस्ततस्त्रायते आनुतजनितरणत्रा । रिपुत्वे सति असुरादिभिर्न जेया । मारस्य कामस्य याभिख्या रूपलावण्यकान्तिमत्त्वाच्छोभा तया समानचर्या । तद्युक्तेत्यर्थः । विरुद्धं यद्रतं रमणं संसारासक्तिस्तत्कृन्तति छिनत्तीति विरतकृत् । अरमत्यर्थं अद्यापि अविच्छिन्नप्रवाहेण दक्षा पञ्चकृत्यकुशला । परान् शत्रून् अकति कौटिल्येनोल्लङ्घयति पराका । शापोऽकृत्यं यस्याः शापाकृत्या कृपया वरदायिनीत्वात् । अयनं मुक्तिगमनं जानातीति अयनज्ञा । अवनमनेन नमस्कारेण जनेर्जन्मनो मुञ्चति अवनमनजनिमुक् । तारगत्या विस्तारकेणोपायेन अनपायाविनश्वरी । एवंविधा या प्रसिद्धा सा, रम्यमगदत्वमारोग्यं यस्याः सा रम्यागदत्वा । तथा अमदत्व दीनतामतिशयेन हरति यत्तस्य भावोऽमदातिहृत्ता तेजःप्रसादस्तेन परानस्यति क्षिपति परासा अमदातिहृत्तापरासा एवंविधा । सारा बहला या आपदस्तासां भावः

सारापत्ता तस्या हृतित्वं हरणभावस्तस्मात्सारापत्ताहृतित्वात्, तथा अमरनुतवशिता-त्सुरस्तुतजितेन्द्रियत्वादगम्या दुष्प्रापा । अरसा वीतरागा च । या च पाने रक्षणे त्यागे च भक्तजनाय इष्टदाने रक्ता हेवाकिनी । तथा अनवज्ञा न विद्यतेऽवज्ञा भक्तजनं प्रत्य-वहेला यस्याः । तथा आ समन्तात् कृपया आशा यस्याः सकाशात् । तथा—अरदः कृतो रविर्यया पूष्णो दन्तदलनाददन्तकृतरविः । या च तनुः सख्या सेवयाभिरामा भक्ता-नभिरमयति । या कारापक्षादपि अर्थात्संसाररूपात्कारागृहाद् द्यां स्वर्गं नयति । या अजा आद्या शक्तिः । इनत्वे सति प्रभुत्वे सति पुरि भवने त्राणरता पालनोद्युक्ता या निज-तनुः क्षित्यादिरष्टविधा तामपि त्रायते परेण रूपेणाधितिष्ठते । अत एव अविपन्ना क-ल्पादावप्यनश्वरी । सनादा सशब्दोल्लासा । यतः 'न सोऽस्ति प्रत्ययो लोके यः शब्दा-नुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥' इति वचनाच्छब्दात्मकं परं ब्रह्म-रूपम् ॥ युगलकम् ॥ ६८ ॥ ६९ ॥

सुरद्विपां धामनिवारणाय तुभ्यं समिद्धामनि वारणाय ।
नमोऽस्तु भव्याय भवाकुलाय संसाररक्षाप्रभवाकुलाय ॥ ७० ॥
यमकम् ॥

हे भगवन्, तुभ्यं नमोऽस्तु । सुरद्विपां दैत्यानां धामनिवारणाय तेजोग्लापनाय । तथा समिद्धामनि वारणाय समिद्धामनि दन्तिनो(?) क्षोभकत्वात् । भव्याय सर्वोत्कृष्टाय । अ-कुलाय जन्मरहितत्वात् । संसाररक्षाप्रभवैराकुलाय व्यग्राय ॥ ७० ॥

रसारसासारसार सारसाररसार सा ।
रसा रसासारसारसारसाररसारसा ॥ ७१ ॥
मरुस्थलीत्वं त्वद्दते मयीह सति धामनि ।
अतो मां यमसेनेर्ष्यामयी हसति धामनि ॥ ७२ ॥

अत्राद्यो द्व्यक्षरो द्विस्वरोऽसंयुक्ताक्षरोऽर्धभ्रमः सर्वतोभद्रः, समुद्गय-मकम्, मालायमकम्, आवृत्तयमकम्, गूढचतुर्थः, गूढतृतीयः, गूढत्रिंश-दक्षरो वा, गोमूत्रिकादयश्च बहवो बन्धा अत्र श्लोके पृथक्प्रस्तार्य प्रेक्ष-णीयाः । द्वितीयः पादयमकः ॥

हे भगवन्, रसारस रसेभ्यः शृङ्गारादिभ्योऽरसो विमुखस्तदामन्त्रणं हे रसारस, तथा असारसार असारात्संसारात्सारः तादृश हे असारसार । अरीणां समूहमारम्, सह आरेण वर्तते यत्तत्सारम्, सारं च तत्सारं बलं तत्र रसो यस्य सः । तद्विधा सा लोको-त्तरा रसा भूमिः आर जगाम । मरुस्थलीत्वं मयि विषये धामनि स्वे तेजसि सत्यपि इह संसारे । यतः । कीदृशी भूः । रसासारसारसारसाररसारसा । रसस्य जयस्य ये आसारास्ते

साराणि येषु तानि रसासारसाराणि, तथा सारसानां हंसानामारं गमनं राति ददाति एवंविधानि मारसानि सरःसमूहा यस्यां वारुण्या जलपूर्णा तथाविधापि मां तापयतीति। अतो हेतोर्यमसेना ईर्ष्यामयी मां हसति। धामनि गृहे॥ ७१॥ ७२॥

अक्षय्यं क्षीणसादं नृबुधहतभयं सत्फलं धीरचित्तं
तुङ्गं श्रीसाररक्षोसुरहृतिरभसं त्वां सगङ्गं श्रितं वा।
चर्यालक्षेण लोकक्षममलयमहासंक्रमं स्वैरसज्जं
स्थाणो स्वावद्धसर्वाहवगरिमगुणं के तु नेह स्तुवन्ति॥ ७३॥

अयं श्लोको गाथागर्भः॥

हे स्थाणो, इह संसारे के त्वां न स्तुवन्ति, अपि तु सर्व एव। यतः अक्षय्यं क्षेतुं शक्यः क्षय्यः न क्षय्यः अक्षय्यः, तादृशम्। 'जिक्षेः शक्ये' इति यः। तथा क्षीणः सादः संसारावसादो यस्मात्, तादृशम्। तथा नृणां बुधानां देवानां च हृतं भयं येन स तादृशं च। सतां फलं भुक्तिमुक्तिरूपं यस्मात्। धीरं स्थिरं भक्तानुग्रहं प्रति चित्तं यस्य। तुङ्गमत्युन्नतं सर्वोपरिवर्तित्वात्। श्रिया सारा ये रक्षोसुरास्तेषां हृतौ रभस आदरो यस्मात्। चर्यालक्षेण बहुलचर्याभिः सर्वदर्शनानां पृथक्प्रस्थापनत्वाद्राचारभेदैः श्रित सेवितम्। सगङ्गं गङ्गाधरम्। लोकेषु सप्तसु मध्ये तु क्षम सर्वसहम्। अलयोऽविनश्वरः महान् संक्रमो यस्य। स्वैरं स्वातन्त्र्येण सज्ज पञ्चकृत्यसंनाहम्। स्वेनात्मना आबद्धाः सर्वाहवेषु दैत्ययुद्धेषु गरिमगुणा येन दुरासदत्वात्। एवंविधम्॥ गाथागर्भोऽयम्॥ *गाथा यथा—'अय्यं णदबुहभमलं रत्तङ्गं सारसुहरसासहम्। तं चलणकमलसमं रज्जं णो वसहगमण तुह॥'* इति। अस्य संस्कृतीकरणम्—'आर्ये नतबुधभ्रमरं रक्ताङ्गं सारसुभरसासहम्। तव चरणकमलसम राज्यं नो वृषभगमन तव॥' इति। अस्या गाथायाः स्पष्टोऽर्थः॥ ७३॥

सुरासुराजये जयेऽदरादरादमादमा।
सदा सदारतारता विभो विभोगता गता॥ ७४॥

आवलिः॥

सुरासुराणामाजये संग्रामाय जये विषये अदरो निर्भय आदरो यथा तथाविध अदरादर हे विभो विभोगता। विशिष्टभोगता इति यावत्। सदा सर्वकालं सदारतायां गार्हस्थ्ये रतासक्ता। अमा अविद्यमाना लक्ष्मीर्यस्याः [निः]श्रीका म(?)............ गता॥ आवली॥ ७४॥

जय मसम तत्त्वद स्वतन्त्रसर्गतत्पर।
नगत्रयप्रवर्धन क्षतसार प्रहर्षद॥ ७५॥

अयमेकस्वरः श्लोकः॥

हे हर हर रोराहो होरां रंहोहरारिराहुहरे ।
रोहाहारेरहरहराहिहारेहाहरां हा हा ॥ ७६ ॥
अयं श्लोको द्व्यक्षरः ॥ आर्यावृत्तम् ॥

हे हर, अहि[हार] वासुकिभूषण, त्वं होरां लग्नस्थितिं रोराहो दारिद्र्यावहां हर निवारय । रंहोहर रणे वेगहारो योऽरिः शत्रुः स एव राहुस्तस्य त्वमेव हारिः शिरोहरत्वात् । तदामन्त्रणं रंहोहरारिराहुहरे, रोहाः कन्दमूलादयस्तेषामाहारैर्भक्षणैररहरहः प्रतिदिनम् । हा कष्टे । ईहां चेष्टां हरति तथाविधां होरां हर ॥ द्व्यक्षरः ॥ ७५ ॥ ७६ ॥

सारतास्थिरवरस्थिता रसाभारसौम्य गणगम्यसौरभा ।
राजते स्तुतिमतिस्तुतेऽजरा दक्ष मान्य धनधन्यमाक्षद ॥ ७७ ॥
स्वर्गमार्गद निरर्गलातनुः सा मतात्तकृतकृत्ततामसा ।
इन्दुमण्डितशिरःस्थजाह्नवीतीरभाव्यभयभव्य भारती ॥ ७८ ॥
प्रतिलोमानुलोमपादार्धः ॥ युगलकम् ॥

हे स्वर्गमार्गद, तथा हे इन्दुमण्डितं च तच्छिरस्तत्र तिष्ठतीति तादृशी या जाह्नवी तस्यास्तीरभावि यदभयं तेन भव्य उत्कृष्ट । तथा हे दक्ष सर्वत्र कुशल, हे मान्य पूज्य, तथा हे धनधन्यम धनेन मरुत्तादिभ्यो दत्तेन धन्या मा शोभा यस्य तादृश, तथा हे अक्षद अक्षाणि दिव्येन्द्रियाणि दूरदर्शनश्रवणयोग्यानि ददाति यस्तादृश, तथा हे रसाभारसौम्य रसाभारे भूभारोद्वहने सति············असौ निर्विकारा ते तव भारती राजते । कीदृशी । सारतास्थिरवरस्थिता सारतया स्थिराश्च ते वरास्तेषु स्थिता । पुनः कीदृशी । गणगम्यसौरभा गणैर्नन्दिप्रभृतिभिर्गम्यं प्राप्यं सौरभं यशःपरिमलो यस्या तथा किंभूता । स्तुति(मतिः) स्तुतौ मतिर्यस्याः । तथा निरर्गला निर्निरोधा । अजरा नित्यतरुणा । पुनः कथंभूता । मतात्तकृतकृत्ततामसा । मतेन आत्तं च तत् कृतं पुण्यं तेन कृत्तं छिन्नं तामसं यया । पुनः कीदृशी । अतनुरस्वल्पा ॥ रथोद्धता ॥ युग्मम् ॥ ७७ ॥ ७८ ॥

समाधिकारा सुरसारसादरा समाधिकारासुरसारसादरा ।
समाधिकारासुरसा रसादरासमाधिकारासुरसारसादरा ॥ ७९ ॥
सुदर्शनस्येव युधि द्विपां वधे मतिः सुतीक्ष्णा भवतो जयत्यसौ ।
नमामि शंभो शमिमानवाभयं नयं भवानर्थजितं भवाततम् ॥ ८० ॥
आद्यः पादाभ्यासयमकम् । द्वितीयस्त्रिशूलबन्धः ॥

हे शंभो, कीदृश । समाधिकार समाधिं चित्तैकाग्र्यं करोति समाधिकारस्तादृश, भवतो मतिरसौ सुतीक्ष्णा जयति । कथंभूता । समाधिकारा सह मया वर्तते यः स समः सर्वाकोऽधिकारो यस्याः सा । तथा किंभूता । सुरसारसादरा सुरसारेषु विष्णुप्रभृतिषु सादरा सानुग्रहा । पुनः कीदृशी । समाधिकारासुरसारसादरा समाधिकाराः तुल्यसत्त्वैः,

तथा अधिकः अरो गमनं बाणादौ येषां तादृशा येऽसुरास्तेषां सारस्य बलस्य सारं राति ददाति तादृशी । तथा किंविधा । [आ]सुरसा नवेषु [समन्तात्] शोभनरसा । पुनः किंविधा । रसादरा रसायां भूमौ अदरा निर्भया । तथा असमाधिकारासुरसारसात् असमा आधयः तथा कारा बन्धनगृहं येषु ते तादृशा ये असवस्तेषु यो रसो हेवाकस्तत्र आरं अरीणां समूहं आरं सर्वसारसपत्र आरसात् द्विषां वधेन तेषामेव अरा धारा सुदर्शनस्येव । सा च अरिभयानां वधे सुतीक्ष्णा संवास आरात्परिसमूहा इव अहं तव नयं नमामि । त्वं किं शमिमानवा भयशमिनो मानवास्तेषां अभयमभयप्रदत्वात् । आयुर्घृतमिति न्यायेन यतो भवानिर्जितः । नयं कथंभूतम् । भवानर्थजितं ससारानर्थभेदिनम् । आतत विस्तीर्णम् ॥ ७९ ॥ ८० ॥

कृतानवतनुप्राज्ञ स्वाभासुरसमाधिकृत् ।
स्थिताज्ञाहिसितत्वाप्य दमासक्ताव मा व्यरि ॥ ८१ ॥
सुरमात्वस्थितिसम संततायाद्वयस्वन ।
सरसारमना माक्षामतिसारतमोद्यम ॥ ८२ ॥

द्वाभ्यामष्टदलपद्मबन्धः ॥ (कुलकम्)

हे कृतानवतनुप्राज्ञ कृता अनवा आयास्तनवः पृथ्व्यादयो येन तथाविधश्चासौ प्राज्ञश्च तादृश । तथा हे स्वाभ शोभनदीप्ते । तथा असुरसमाधिकृत् । असुराणां समाधि कृन्तति छिनत्ति तद्विघ्नकारित्वात् । तथा हे स्थिताज्ञाहिसितत्व स्थिता आज्ञा यस्य अहिसितत्वं च यस्य तद्विध । आप्य भक्तजनैः प्राप्य । तथा हे दमासक्त दमे आसक्त, मा मामित्यर्थः । त्वमव रक्ष । कथम् । व्यरि विगता अरयो यत्र तथाविधं कृत्वा । तथा हे सुरमात्वस्थितिसम शोभनं यदमात्यमैश्वर्यं तस्य या स्थितिस्तस्यां सम अनुद्विग्न । तथा हे संतत अविनश्वर । तथा हे अद्वयस्वन अद्वयः स्वन आज्ञारूपः शब्दो यस्य स तादृश । तथा हे माक्षामतिसारतमोद्यम मया लक्ष्म्या तथा अक्षैरिन्द्रियैरा समन्तात् मतिसारतम उद्यमः कर्तव्यता यस्य तादृश । त्वं कथंभूतः सन् । रससारमना आदौ सुखचित्तः सन् ॥ युगलकम् ॥ ८१ ॥ ८२ ॥

वरतास्थिरसामन्त सारतातिसमाहित ।
सुकृताप्कासन स्वाज्ञादमासस्मुतावसि ॥ ८३ ॥
त्वमद्य भव्य सान्त्वानुकृतप्राप्य सद्वर ।
नाम सुस्थिर मोक्षाय ममाधिरिति सा तथा ॥ ८४ ॥

एतदुक्तचतुरङ्गाश्वपादपूरणश्लोकयुगलकम् ॥

हे प्रभो, वरतया प्राधान्येन स्थिराः सामन्ताः सेवका यस्य स तादृश वरतास्थिरसामन्त । तथा हे सारतातिसमाहित सारतमोत्कृष्टत्वेन अतिसमाहित । तथा हे सुकृता-

१. 'समाधि' क-ख.

स्तासन सुकृतेन धर्मेणासक्तं सेवितमासनं यस्य तद्विध । तथा हे स्वाह्लादमासुमत शोभनाथ ते आह्लादमाथ तेषां य आसक्तेन शोभना मता यस्य तादृश । अव । मामित्यर्थात् । त्वमवसि रक्षसि । तथा हे [सा]ज्ञत्वानुकृतप्राप्य [सा]ज्ञत्वस्य यदनुद्धतमनुकरणम् । नपुंसके भावे क्तः । तेन प्राप्य । सतां वर । नाम संभावनायाम् । इत्यतो हेतोः मोक्षाय मम । तथा य आधिर्मनोरुक् । नय त्वमवसीति स्पष्टीकृत पुनः ॥ ८३ ॥ ८४ ॥

कृतानतज्ञसुरमाहितत्वाप्यवताद्वय ।
रसारक्षासारतम कृतज्ञ सुर माप्यव ॥ ८५ ॥
अष्टापदाब्जनिर्गतसमञ्जसबोधो गूढचतुर्थः ॥

कृतमानतं जानन्ति ये तादृशाः कृतानतज्ञा देवा योगिनस्तेषां या सुरमा शोभना चासौ रमा लक्ष्मीस्तस्यै हितत्वं यस्य तथाविध हे कृतानतज्ञसुरमाहितत्व, तथा हे आप्य भक्तिगम्य । तथा हे अद्वय । तथा हे रसायां रक्षतया सारतम कृतज्ञ हे सुर देव मा अपि मामपि त्वमव ॥ ८५ ॥

सुप्रज्ञानतसारज्ञ सकृतान्ततनुव्यय ।
रक्षावतारमद्य त्वमतिभासुर सुस्थिर ॥ ८६ ॥
अष्टापदनिर्गतः कविनाम्ना कुसुमोचयबन्धः ॥

हे सुप्रज्ञ शोभनथामी प्रशस्तयाविध, तथा आनतसारज्ञ आनतानां भक्तानां सारमुत्कर्षं जानाति यस्तद्विध, तथा हे सह कृतान्ततनुव्ययेन वर्तते तद्विध, अवतारं रक्षेति कविराशास्ते आत्मनि । हे अतिभासुर दीप्तिमन् । हे सुस्थिर अविनश्वर ॥ अष्टापदाब्जनिर्गतकविनाम्ना कुसुमोचयबन्धः ॥ ८६ ॥

वेद वेदविदां वादविद्देवो दिवि दावदः ।
वादो वादेवदेवादिविद्यो वादिवदे विदम् ॥ ८७ ॥
एकान्तरितद्यक्षरः ॥

हे देवदेव, अहं वदे व्यक्तं वदामि । देवः देवादिवस्तुमात्रि देव जानातीत्यर्थः । वेदविदां मध्ये वादविद् दिवि दानमुपतापं देत्यकृतं यति खण्डयति यः स दावदः । आदिविन् सर्वज्ञत्वात् । देवविदं अहं न अविद्यविदम् ॥ ८७ ॥

कथाभोगजडो मूढवया आरोपणायुतः ।
आद्या फलायदिशतो नाहं झटिति चायुधः ॥ ८८ ॥
अपुनरुक्तव्यञ्जनः ॥

अहं कथाभोगजडः, मूढं व्यर्थं वयो यस्य, आ समन्तात् रोपणवया आयुतः, अर्धरात्रावाशातायदिशतः । अयुध्य ॥ ८८ ॥

---

१. 'सारज्ञ' क-ख.

स्थिर सुरवरसुप्रसाद क्षमोपेत हा मोघमोहातपे मोक्षद त्वामजं
दिवि भुवि च विभुं कृपादे(वे)शहीनाविमौ कालकामौ विनाहीशदेहाङ्गदम्।
जितरणगुणरत्न तौ रौरवीयाधिदौ मा किमादौ धिया वीररौद्रौ यतः
किमु भव भवभङ्गदोषागते पाशवे साधुसावेशपाते गदा घ्नन्त्यलम्॥८९॥

चण्डव्यष्टिप्रपातदण्डकेन नन्दिकावर्तबन्धः ॥

स्थिर अविनश्वर, सुरवरेषु ब्रह्मविष्णुप्रभृतिषु शोभनः प्रसादो यस्य तथाविध, क्षमोपेत क्षान्तियुक्त, हा कष्टम् । मोघे निष्फले मोहातपे अज्ञानतापे मोक्षद, त्वामजं हि दिवि भुवि च विभुं द्यावापृथिव्योः स्वामिनम्, अहीशानां नागराजानां देहा अङ्गदा यस्य तथाविधम्, विना इमौ तौ कालकामौ विना रौरवीयाधिदौ रौरवीया आधिः पीडा तत्प्रदौ, धिया प्रज्ञया वीररौद्रौ किं मा मादोद्यताः(?) खण्डयतः । किमु तव जितरणगुणरत्न हे भव भवभङ्गदोषागते पाशवे पशोरयं पाशवस्तस्मिन्पाशवे, तथा साधुसावेशपाते सति गदा रोगा जरादयो घ्नन्त्यलं तत्सर्वं देवदेव देवो देवी वा इति ॥ चण्डव्यष्टिप्रपातदण्डकेन नन्दिकावर्तबन्धः ॥ ८९ ॥

तुभ्यं जगत्त्रयत्राणससंपज्जयते नमः ।
शिव संयत्सभाशील जय सज्जनवत्सल ॥ ९० ॥

'जय सज्जनवत्सल' इति चतुर्थः पादः समञ्जसेन प्रतिलोमेनैव पाठेन निर्गच्छति भ्रान्तिसमञ्जसबोधो गूढचतुर्थः ॥

हे शिव, जगत्त्रयत्राणे सह संपद्भिरष्टाभिर्ऋद्धिमयीभिर्वर्तते यस्तत्संबोधनम् । जगत्त्रयत्राणससंपद् तुभ्यं जयते सर्वोत्कृष्टाय नमः ॥ संयत्सभाशील संग्रामपर्षत्परायण सत्पुरुषवत्सल त्वं जय ॥ तुभ्यमित्यस्मात् 'जय सज्जनवत्सल' इति चतुर्थः पादः समञ्जसप्रतिलोमेनैव पाठेन निर्गच्छति ॥ समञ्जसबोधो गूढचतुर्थः ॥ ९० ॥

सुधीसारज्ञताभव्यजय मासामगक्षम ।
सुसाज्ञ भज मामक्षधीरताव्यय सागम ॥ ९१ ॥

प्रथमार्धादेकान्तरितान्यक्षराण्युच्चित्य तृतीयपादः, शिष्टाक्षरैस्तथैव चतुर्थपादः ॥

सुधिया शोभनप्रज्ञया या सारज्ञता तया हेतुभूतया भव्य उत्कृष्टो जयो यस्य तद्विध । मा शोभा तया सामगा सान्त्वगा क्षमा यस्य तद्विध, सर्वसहेत्यर्थः । सुसाज्ञ शोभनश्चासौ साज्ञश्च तदामन्त्रणम् । अक्षैर्या धीरता तया अव्यय । सागम सर्वागमसम । [मा भज ।] प्रथमार्धादेकान्तरितान्यक्षराण्युच्चित्य तृतीयपादः, शिष्टाक्षरैस्तथैव चतुर्थपादः ॥ ९१ ॥

नूनं नमन्मेनमनिम्नमेनमुमामनोमाननतुन्नमौनम् ।
मानं मिमानं मुनिमानिनीनामनूननामानमिनं नमामि ॥ ९२ ॥

द्व्यक्षरः ॥

अहमेनमिनं स्वामिनं अनूननामानं नमामि । अनन्ताभिधानम् । 'असंख्याताः सहस्राणि' इति वेदश्रुतेः । तथान्यत्रागमेऽपि—'नवकोट्यस्तु चामुण्डा तावद्रूपाणि शंकरः । कृतवांस्तांश्च भजते पतिरूपेण भैरवः ॥' इति नीत्या भगवतोऽनूनानि [नामानि] । नूनं निश्चितम् । [नमन् प्रणमन्] मया इनो येनः लक्ष्मीपतिर्यस्य तथा । अनिम्नमलघुतम् । तथा उमाया मनोमाननार्थं चेतोरञ्जनाय तुन्नं निवारितं मौनं येन तम् । मुनिमानिनीनां मानं भर्तृविषय[कं] स्मयं मिमानं हिंसन्तम् । देवदारुवनप्रवेशात् ॥ ९२ ॥

हृदि लसमान समा नो ह्रियते [ते] शाश्वती समान समानः ।
कान्न समानसमानः करोष्यतस्त्यान्धकास मानसमा नः ॥ ९३ ॥

पादान्तयमकम् ॥

सर्वेषां हृदि लसमान, 'तथा स्थानं हृत्पद्मजसमुद्गकम्' इति नीत्या । हे अन्धकास, अन्धकदैत्यमस्यति यस्तत्संबोधनम् । केश्चिदपि ते तव संबन्धिनी समान पूज्य शाश्वती समा अनन्तकालं न(नो) ह्रियते नापलप्यते । समः आनः आननं जीवनं [यस्य] तथाविधः । कान् न समान् सश्रीकान् करोषि । यतः [अ]समानः अतुल्यः । [नः] अस्माकं मानसमा मानसस्य चेतसः मा शोभा मानसमा चेतःशोभा अतस्त्या अत आगता ॥ सर्वपादान्तयमकम् ॥ ९३ ॥

चित्ते सद्धासमत्ते समिद्धपरमहोऽजो गदासंकरोसा-
वाहेमासारवाही कदवरसमहामोहसत्तापहारी ।
पातादोजोगसत्तोऽविरलसुरणदोऽसच्चलासोऽकलङ्को-
ऽकाले कामेऽन्तको वोऽवितरततरसासज्जसंपत्तिदो वा ॥ ९४ ॥

अयं श्लोकः संस्कृतप्राकृताभ्यां भाषाश्लेषः ॥

असौ अकाले असमये । असंप्राप्ते इत्यर्थः । कामे विषये अन्तको वो युष्माकं पाताद्रक्षतु । अवितरः, विगतः तरः तरणं यस्मात् स वितरः, न वितरः ततः अवितरततः । अथ च रसायां भूमौ सज्जा चार्वी संपत्तिश्च, तां ददाति रसासज्जसपत्तिदः । तथा ओजोगसत्तः । ओजोगानां तेजोगामिनां सत्ता अस्तित्वं यस्य । परप्रकाशरूपत्वात् । तथा अविरलसुरणदः । अविरलं कृत्वा सुष्ठु शोभनान् सुखदायिनो रणान्ददाति । तथा असच्चलासः । असत्सु वेशादिषु चला अस्थिरा आसा आस्था यस्य । अत एव अकलङ्कः ।

---

१. 'समृते' क; 'मसत्ते' स.

चित्ते चेतसि सद्धासमत्ते सति सन् ह्रासो विकासः तेन मत्ते सति । समिदपरमहः । समित्सु संग्रामेषु अपरः महः उत्सवः । भगवतः स्मरणाद्रणे सर्वेषां सकुलभ्यजयलात् । अजः जन्मरहितः । तथा गदासकरः । न विद्यते गदैः सह संकरो यस्य । तथा आ समन्तात् हेम्नः सुवर्णस्य वर्षणं वहति । आहेमासारवाही । कदवरसमहामोहसत्तापहारी । कत् कुत्सितः अवरसो महामोहः तस्य सत्तां स्थितिमपहरतीति ॥

संस्कृतभाषाश्लेषः—

[चित्रे श्रद्धासमाप्तौ शमितपरमखो यो गताशङ्करोपा-
द्वाधे मासारवाहिः कृतवरसुमहामोघसत्ताप्रथारिः ।
पातादो योगसक्तो विरलसुरनतः सत्यलास्यः कलाङ्कः
काले कामेऽन्तको वा वितरतु तरसा सदृशं प्रासिदो वा ॥]

चित्रे आश्चर्यवति श्रद्धासमाप्तौ आदरनिवृत्तौ । शमितपरमखः [शमितः परमखो] दक्षाध्वरो येन । तथा गताशङ्करोपात् । वह्निबाधे सति मासारवाहिः, मया शोभया उपलक्षिताः सारवा अहयः वासुक्यादयो यस्य । तथा कृतवरसुमहामोघसत्ताप्रथारिः । कृतवरः सुमहा आत्मोत्सवात् मोघसत्ता या प्रथा तस्या अरिः । पातादो(?)यनतादितोः विरलैः कतिपयैः सुरैः ब्रह्मादिभिर्नतः सम्यक्प्रार्थनया नमस्कृतः। यदाहुः—'पूजका बहवः सन्ति भक्ताः सन्ति सहस्रशः । प्रसादपात्रमाश्वस्ता द्वित्रा एव न पञ्चषाः ॥' इति लीला । योगसक्तः । सत्यलास्यः । सत्यं लास्यं नटनं यस्य स सत्यलास्यः । कल्पान्तादौ नृत्यति । तथा कलाङ्कः । कला चान्द्री अङ्को यस्य सः । काले कामेऽन्तको वा । काले कर्मेण कोपः । वितरतु । तरसा वेगेन । सज्जसदृशं प्रासिदो वा । इति प्राकृतभाषाश्लेषेण संस्कृतप्राकृतभाषाभ्यां श्लेषोऽयम् ॥ ९४ ॥

कमलभ्यमलीकविधौ कमलं वय आननशोकमलं कमलम् ।
कुरुपे न विशङ्कमलं कमलं सवितेव लसत्कमलं कमलम् ॥ ९५ ॥
सर्वपादान्तयमकं तोटकवृत्तेन ॥

त्वं कं जलं गाढमलभ्यं दुस्तर अलीकविधौ मुकुटचन्द्रे, न तु निर्मल्यात । कं ब्र- ह्माणं आननशोकमलं वयः सुखभगा (?) तथा कं न [कमलं] जलं कुरुषे । अपि तु सर्वं सुखयसि । अलं विशङ्कं कला । कामित्र । सविता रविः कमलमिव । कथंभूतम् । लसन्ती कमला लक्ष्मीर्यत्र तथाविधम् ॥ ९५ ॥

१. '(सज्जम) सदृश' इति पाठो भवेत्. २. इतः प्राक् 'विभो प्रसमास्य निवा- न्वदीनयोऽजा प्रश्रश्रस्तुलतायः । विश दर्शदस्य कुतानार दशहं निर्धापिणे प्रमोद ॥' इति श्लोको दृश्यते, स नानमत्वानतया क्षेपक इति प्रतिभाति.

भीमारारा रामा मारा मारारारा माराराभा ।
[रामाराराराराभा] माराराराभामा मा मारा ॥ ९६ ॥
मारारातेरावाते सातेऽद्यासातेसा मा सेना ।
नादे नासादेनामानानादे सानाशादेशा ते ॥ ९७ ॥

आद्यः श्लोकस्तुरगपदद्व्यक्षरः । द्वितीयो गजपदबन्धः । गजपदबन्धस्यासंयुक्तद्विस्वरत्वम् ॥

हे भीम भगवन्, रामा नायिका । अरा कुटिला आरा गतिर्यस्याः तथाविधा सती मारा मारणं मारस्तत्सहितेत्यर्थः । मारणपरैव यतः । तथा मारस्य आराश्चेकधाराः ता राति तादृशी मारारारा इत्यर्थः । माराराभा मारस्यारामा विश्रान्तिस्थानं रामा भवति धनेनेति यतः आरामा । भीम कीदृश । रामारार । रामस्य जामदग्न्यस्य आरं शत्रुसमूहः तस्य आरः भीमः । नाशकत्वात् तत्सबोधनम् । मा लक्ष्मीस्तां रातीति तादृशी [मारा] इत्यर्थः ॥ हे अनादे, तव संबन्धिनी सा भा दीप्तिः भासुरता मे मम मारा । अरातेर्वैरिण आयाते गते सति । अनाश[:] अविनाश[:] आदेश आज्ञा यस्याः सा । तथा सेना नादे सति सासात्था अयासा अयति(?) अस्यति निवारयति सह(?) आशया आदेशः तस्य आज्ञा दिक् । तवादेशेन मुक्तिरित्याशयस्थानम् ॥ विद्युन्मालाभ्यां युगलकम् ॥९६॥९७॥

स्फूर्जन्महाः प्रसन्नास्ते क्षणादेव त्वयि स्तुते ।
स सन्महानमुत्रास्ते यस्त्वां देव नमोऽस्तु ते ॥ ९८ ॥

काञ्चीबन्धः ॥

स्पष्टोऽर्थः ॥ ९८ ॥

[1]निजजानि नुन्नानाजी नूनं नानाजनानजान्नानि(?) ।
निजानेनजानिनानुजजानूनानिजजनैः(?) ॥ ९९ ॥

द्व्यक्षरः ॥

हे इन स्वामिन्, ननु ऊनान् जनेर्जन्मनः हेतोः एतान् । कान् निजजानि स्वां भार्यां, तथा नुन्नार्नान्(?) नाना जनान् सुभटान् अजाश्चन्द्रागा(?) अन्नानि च अननं जीवनम् । अजिनानि राङ्कवादीनि प्रावरणानि । अनुजाः स्वपरादयः निजा मित्रादयः । [नून] निश्चितम् । ननु प्रश्ने । एतानि जनेः पुनः पुनः संसारभ्रमणात् । ऊनानुजनेनिः सरतीत्यर्थः(?) । त्वत्प्रसादसेवां विनेति प्रतीतिः ॥ ९९ ॥

केन क्रौञ्चो विभिन्नः कमवनतगताः के दिनेशस्य तीक्ष्णा
अन्तस्थाद्यक्षरं किं द्विजकुलमधिकां वक्ति कां जातिमग्र्याम् ।

1. 'निजजानि ननु निजाजूनं नानाजनानि न ।
जानननाजिनाभानि नुन्नेनो जननीजनैः ॥' इति स्यात्.

भृत्यानां कुत्र भक्तिः किमुचितमजयन्क्ष्मां नरेन्द्राः किमर्थं
कस्मै भक्ता अजस्रं प्रविदधति नमः स्वामिने शंकराय ॥ १०० ॥
प्रहेलिकान्तर्लापिकात्वेनेति स्वामिने शंकरायेति पदच्छेदेनोत्तरम् ॥

यथा—केन क्रौञ्चः शैलो विभिन्नः । अत्रोत्तरम्—स्वामिना इति कुमारेण । कं अवनतगताः । कं नत्वा गताः । लोकाः इति शेषः । अत्रोत्तरम्—ईशं महादेवम् । के दिनेशस्य रवेस्तीक्ष्णाः । अत्रोत्तरम्—कराः रश्मयः । अन्तस्थानां आद्यक्षरं किम् । अत्रोत्तरम्—य इति । द्विजकुलं ब्राह्मणवर्गः अधिकां श्रेष्ठामग्र्यां कां जातिं वक्ति । अत्रोत्तरम्—स्वाम् । भृत्यानां कुत्र भक्तिः । अत्रोत्तरम्—इने स्वामिनि । किमुचितं युक्तम् । अत्रोत्तरम्—शं कल्याणम् । राजानः क्ष्मां भूमिं किमर्थमजयन् । अत्रोत्तरम्—कराय प्रजाभ्यो ग्राह्यबल्यर्थम् । भक्ताः कस्मै नमः अजस्रं प्रविदधति । अत्रोत्तरम्—शंकराय महादेवाय । इति स्पष्टः प्रहेलिकार्थः ॥ १०० ॥

रिपुरोपारोपपर प्रोरुपापपरैररम् ।
रोरैरपाररूपैराप्पे पुरारिपो पुरा ॥ १०१ ॥

द्व्यक्षरः ॥

हे पुरारिपो । कर्थंभूत । रिपुरोपारोपपर शत्रुकुन्तारोपणे उद्युक्त । पुरा पूर्वं प्राग्जन्मनः प्रभृति अपाररूपैः अनन्तैः दौर्गत्यक्लेशैः प्रोरुपापपरैः प्रकर्षेण उरूणि यानि पापानि तान्येव परं परमार्थो यत्र तथाविधैः पापैः प्राक्कर्मवैचित्र्यादेव जन्मादिदौर्गत्योपप्लवैः । अप्मत्यर्थम् ॥ १०१ ॥

अपरुषो गतनिर्विभवासवः स्वयमिनः श्रितसत्यकलादयः ।
क्षततमा असुहृत्कलितापदस्त्वमसि नाथ वयं [च] तवार्थिनः॥ १०२ ॥

हे नाथ, त्वं अपरुषः, न परुषः अपरुषः । पारुष्यरहितः । वयं च संसारं प्रति अपगतरुषः । तेनैव बाधितत्वात् । त्वं गतनिर्विभवासवः, गतो निर्विभः निष्कान्तिः वासवः इन्द्रो यस्मात् । त्वत्सकाशाद्वासवः······स्तम्भनाभिप्रतिभत्वं गतः । इन्द्र इत्यर्थः । वयं च गतनिर्विभवासवः, गता अस्मभ्यं पशुम्य इव इति शेषः । निर्विभवाः असवः प्राणाः येषां ते । तथा त्वं स्वयमिनः सर्वेश्वरः । वयं च स्वयमिनः । त्वं श्रितसत्यकलादयः, सत्यकला च दया च [श्रि]ते सत्यकलादये येन सः । वयं च श्रिताः सत्यकलादयः कश्चिल्लवहारार्थं सत्यं कश्चिच्च कलादयो यैः तादृशाः । तथा त्वं क्षततमाः, क्षतं तमो येन सः । वयं च क्षततमाः, अतिशयेन क्षताः । त्वं असुहृतां यमस्थानां पुरुषेण कलिता पदं ददाति सः । वयं च असुहृद्भिरमित्रैः कलिता आपदो येषां तादृशाः । वयं च तवार्थिनः याच्ञापराः सेवकाः पालनीयाः इति प्रार्थयमाना विज्ञप्तिः । इत्येकवचनबहुवचनश्लेषः । उक्तं काव्यादर्शे श्लेषलक्षणे—'वर्णपदलिङ्गभाषाप्रकृतिविभक्तिवचनानां प्रभेदः श्लेषः' ॥ १०२ ॥

भाविदासहिते साररसा ते हि रमामय ।

यममारतनुत्यागगत्या नुत सदा विभा ॥ १०३ ॥

हे रमामय लक्ष्मीमय, तव संबन्धिनी विभा सातिशया दीप्तिः भाविदासेभ्यः भाविभ्यो दासेभ्यो हिते सारः उत्कृष्टो रसो [यस्याः सा] यममारयोः तनुत्यागेन या गतिर्विच्छित्तिस्तया हेतुभूतया । सर्वैर्नुत स्तुत ॥ भद्रकावर्तबन्धः ॥ १०३ ॥

सादासन्ना रिपूणां परमुखसुरपक्षोतितस्थस्थिरासा

सारास्थिस्वच्छभावा विभवनवभवित्राणभव्योत्तमासा ।

सामात्तव्योमरूपा तनुरमरनुतत्वात्पुरस्ताद्विलासा

सालाद्विस्तारलाभातियजन जयति स्वःप्रसन्ना सदासा ॥ १०४ ॥

भद्रकावर्तबन्धः अष्टदलपद्मबन्धः, षोडशदलश्च ॥

हे अतियजन, तव तनुर्जयति । अतिशयितानि सर्वोत्कृष्टानि यजनानि यस्य तादृश । सर्वयज्ञेषु रुद्रस्य मुख्यत्वात् । कीदृशी । रिपूणां सादे विनाशे आसन्ना सादासन्ना । पुनः कीदृशी । परमुखे सुरपक्षे च तत्स्थत्वेन (?) स्थिरासा । सारः अस्ति(स्थि) स्वच्छभावो यस्याः । तथा विभवेन ऐश्वर्येण नवभविनां नूतनसंसारिणां त्राणे रक्षणे भव्या उत्कृष्टा अपरसा । सामात्ता(?) आत्तं व्योमरूपं यया । अमरनुतत्वात् । सर्वदेवस्तुतत्वात् । पुरस्तान्निहिता विलासा यस्याः । तथा सालाद् देवदारोरपि विस्तृता, सालप्रांशुः । स्वः देवानां प्रसन्ना । सह दासैर्वर्तते या सदासा ॥ १०४ ॥

भव जलवायुनभोजनरुचिकर-

म(मृ)दनलराजरमा(सा)मयदेह ।

अव मामतिमोहकमारसहर

हर नम इह ते पुरभयदेह ॥ १०५ ॥

हे भव, जलवायुनभोजनरुचिकर, म(मृ)दनलराज र[सा]मयदेह । जलधि(लादि) रसान्तानां चार्थे द्वन्द्वः । तेषामष्टानां मूर्तिरूपा या प्रकृतिस्तन्मयदेह । जनशब्दो यजमानवाचकः । तद्रूपशरीर । त्वं मामव रक्ष । यतः कीदृश । अतिमोहकोऽयं मारसो लक्ष्म्यामित्यादयः तन्निवारक । हे हर, इह सर्वत्र भुवनान्तरे ते तुभ्यं नमः । तथा कथंभूत । पुरभयदेह, पुराणां भयं ददाति । तथा ईहा यस्य तत्संबोधनम् । इति संस्कृतकर्मधारयभ्रंशाभ्यां श्लेषः ॥ १०५ ॥

[1]विविधधररसासाम भव्य व्यसासा-

धुधुततनन सासादद तत सासा ।

1. मालिनीवृत्तमथन्धि वृत्तान्तरमेवत.

प्रति आर्यत्वस्य अन्तरज्ञो भविष्यतीति । भवजालसंसारजात् । ततः तमव रक्ष । हितः सन् । अमाय मायावर्जित । सत्यानुतिर्यस्य तत्संबोधनम् । यमं मिमान हिंसन् । यमादागतं यद्कृत्यं तद्येहि । येन नयेति, विचारयेत्यर्थः । तुभ्यं नमामि । नुत्याकृता आगमाः सर्वजनोपदेशार्थं शास्त्राणि येन तस्मै । वै सत्ये चैश्वर्ये च । एत कर्बुरवर्ण, हे भगवन्, श्र अनन्त स्वामिन् । ततः सात्वतं(?) आज्ञया चारुरुचा मणिप्रदीप्यात्यर्थंवधान । यमनियममयेत्यर्थः । अतो हेतोर्यदा समुत्तया यत्कारित्वेन क्षमेमत् (?) सतः सकाशाद्भावतः भ्रमणात् अन्यः तनुमः अल्पर्थाकः नास्ति । तुभ्यं (न) ते नत्रे विपत्रे अनुत्तममोक्षदाय उत्कृष्टमोक्षदायिने एवंविधाय नमः । हे शर्व (सर्वपते) धताकृते संवृतात्मन्, निर्जेतः निःशेषेण जयनशील, इन स्वामिन्, मया वशताकृता आपत्तताकारिणा, पर्वतजे निवासे सेवा न कृता । अभितः समन्तात् भीर्यस्य तथाविधेन । सदा कृताय पुण्यस्तथायार्थम् । न विद्यते मदो यस्यां तादृशसे[व]कमपि मां कृपया अवेति पूर्वोक्तवाक्यार्थः । चतुर्भिः कुलकम्(कालापकम्) ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥

महामते मन्त्रपते परं पदं विना विभुं विन्दति कोऽतिभूतिमान् ।
कृपाकृते कृत्तयमाय मायते नमो नमो नम्रहिते हि पाहि माम् ॥११२॥

हे महामते विशुद्धरणे दक्ष, तथा मन्त्रपते 'सप्तसप्ततिकोटीनां मन्त्राणां प्रभुरव्ययः' इत्यागमे । त्वां प्रभुं विना परिहृत्य को जनः परं पदं मुक्तिरूपं विन्दति लभते । अतिशयेन भूतिमान् । अर्थविवैश्वर्ययुक्तः । नम्रहितप्राण……यदा त्वमेव मां पाहि रक्ष । (मा) यते, तुभ्यं कृपाकृते करुणापराय । कृत्त[य]माय छिन्नकालाय नमः । चतुर्महादेवस्वस्तिकबन्धः ॥ ११२ ॥

भो भो भविभुभावीभविभावैभव भीभुवः ।
भवाव भवभा भाविभवाभिभवभावभित् ॥ ११३ ॥

भो भो भव महेश्वर, भानां नक्षत्राणां विभुः चन्द्रः । जूटेन्दुरित्यर्थः । तस्य [आ]भा दीप्तयः, ताभिर्विगता इभस्य गजासुरस्य विभा वैभव यस्मात्तादृश, त्वमव रक्ष । मामित्यर्थः ।……'अर्थः प्रकरणं लिङ्गम्' इत्यलङ्कारात् । भावियः भवाभिभवः संसारसलीकारस्तस्य यो भावः सत्ता तद्भित् । भव वाशब्दो विकल्पे । 'भो भोः' इति प्रधानामन्त्रणे । अव [र]क्ष । कृतान्तान् । भिया भयस्य (भवस्य) भूरुत्पत्तिस्थानम् ॥ एकाक्षरोऽयं श्लोकः ॥ ११३ ॥

इति श्रीमहाकाव्यवतारकृतमीश्वरशतक सटीक समाप्तम् ।

---

## श्रीमधुसूदनकविमर्णीतम्[1]

## अन्यापदेशशतकम्[2] ।

कालीयाहिफणाली क्रमणकरालीभवन्नघक्षाली ।
गोपालीकरतालीनर्तनशाली पुनातु वनमाली ॥ १ ॥
पद्मालयासादरदत्तचकोरीपेपीयमानाननचन्द्रबिम्बः ।
विघ्नौघविध्वंसविधिं विधत्तां राधामयूरीमुदिरो मुकुन्दः ॥ २ ॥
विद्वन्मनोविनोदाय सद्युक्तिपरिशीलितम् ।
अन्यापदेशशतकं करोति मधुसूदनः ॥ ३ ॥
मर्यादानुपमैव शीलममृतोत्पत्त्यैव निर्वर्णितं
नैर्मल्यं निजधर्म एव वचसां पारे तु गम्भीरता ।
किं वाच्यो महिमा तवार्णव रमाप्रेयानपि प्रार्थने
तादृक्कौस्तुभभाजनेन भवता वैदग्ध्यमध्यापितः ॥ ४ ॥
हे पीयूषमयूख भूषणमणिः शंभोस्त्वमम्भोनिधे-
रुत्पन्नोऽसि तवैव दैवतकुलं प्रीणाति साध्वी सुधा ।
विश्वेषामुपरि स्थितिर्ननु तनुस्तत्तत्कलाभाजनं
किं वाच्या विभुता धराध्वरभुजां राजा त्वमाजानिकः ॥ ५ ॥
उन्मीलन्ति कियन्ति न क्षितितले पुष्पाणि नानाविधा-
न्युन्मीलन्तु परंतु निर्भरमिदं किंचिद्वदामो वयम् ।
धन्यं जन्म तवैव चम्पकतरो यत्कोरकाणां पुरो
हेम्नः श्रीरपि जायतेऽतिमलिना गण्या किमन्या रुचिः ॥ ६ ॥
भाभिर्भासितमम्बरं वितिमिरं क्षोणीतलं निर्मितं
चक्रे चक्रकुलव्यथाहतिरथादिष्टाः क्रतूनां क्रियाः ।
अम्भोजानि विकासितानि भवता सद्यो ननु द्योमणे
निर्बीजं बत कैरवोपरि परिक्षिप्तं किमन्यं तमः ॥ ७ ॥

---

१. अस्य श्रीमधुसूदनकवेर्देशो मिथिला, जनकः पद्मनाभः, माता शुभदा, इत्युपान्त्यश्लोकात् 'दुजती(उचिती) कुलम्' इत्यन्तिमश्लोकात्प्रतीयते. कालस्य तु न निश्चयः.
२. अस्य काव्यस्य पुस्तकमेकमेव १८२२ संवत्सरलिखितं श्रीमता डॉक्टर् पीटर्सनेन मथुरात आनीय काव्यमालार्थं दत्तमिति तदाधारेणास्य शोधनमकारीति ज्ञेयम्.

लक्ष्मीं लेभे मुरारिः समलभत सुधां स्वर्गिवर्गः समग्रां
तत्तद्वस्तूनि वास्तोष्पतिरपि सहसैरावतादीन्यवाप ।
पाथोधे त्वत्त एव प्रमथपतिरथ प्रापदापत्करं य-
त्क्ष्वेडं तद्युक्तमेवाजनि जनिदिवसादेष यद्वामदेवः ॥ ८ ॥
पाण्डित्यं त्वयि ताण्डवानि तनुते शेते स नारायण-
स्त्वामध्यास्य कृतस्त्वदेककलया शीर्णः प्रलम्बासुरः ।
धन्योऽसि त्वमनन्त संततमसौ यत्रातिसौख्योदया-
द्विश्रामं लभते चराचरभराक्रान्तान्तरा मेदिनी ॥ ९ ॥
माकन्दा मकरन्दबिन्दुविधुरा व्यग्रो गजग्रामणी-
रप्यन्तर्मदशोषदोषकलितं चक्रे हरेर्हुकृतेः ।
त्वं हे कल्पतरो करोषि नहि चेदन्तः कृपाकोमलं
कुत्रायं भ्रमरो मनागपि मनो विश्राममालम्बताम् ॥ १० ॥
त्वं तावन्निरुपाधिरम्बुद सुधासारानुकाराः पयो-
धारा मुञ्चसि विश्वमोदजननीः सर्वत्र साधारणीः ।
छिन्ना एव पतन्ति यत्पुनरमुष्यान्तर्मुखे बिन्दव-
स्तद्गाढं जयतीह चातकशिशोर्दुर्दैवदुश्चेष्टितम् ॥ ११ ॥
चापल्यं परिमुञ्च चातकशिशो नैवार्तनादं वृथा
कुर्याश्चिन्तय निश्चलेन मनसा धाराधरानन्वहम् ।
एषां जीवनमुन्नतिं च सहजामन्यार्थमेवासृज-
द्धाता त्वं पुनरेतदेकशरणस्तद्धैर्यमालम्ब्यताम् ॥ १२ ॥
नोच्चैर्जल्पति वारिदो यदधुना कासार तन्मा मनो-
मालिन्यं समुपेहि हन्त महतां नैसर्गिकोऽयं क्रमः ।
काले वर्षितुमुद्यतो यदि भवेदेकक्षणार्धं तदा
युष्माकं कियती तृषा त्रिजगती पूर्णा भविष्यत्यसौ ॥ १३ ॥
श्रीखण्डाचलगण्डशैलशिखरप्रान्ताटवीसंस्थिताः
पाटीरा निभवन्ति शाल्मलिमुखा निःसारभूमीरुहाः ।

मालत्याः स्रजि गुम्फितानि कुटजान्यप्याप्नुवन्ति स्फुटं
विद्वद्वृन्दशिरोधिरोहणकृतामुच्चैस्तरामुन्नतिम् ॥ १४ ॥
अङ्के किं न कलङ्कतामपि गतं धत्ते मृगं चन्द्रमाः
किं वा शल्यमिवान्तरा वहति नो मैनाकमम्भोनिधिः।
त्रायन्ते तरवो दहन्तमनलं वृष्टेः स्थितं कोटरे
किं किं नाश्रितपालनाय सहते कष्टं शरण्यो जनः ॥ १५ ॥
स्फीता शीतांशुकान्तिर्मुदमथ कुमुदान्यापुराशा विकाशा-
नाजग्मुर्वारिमुग्भिः प्रखरमुखरता दूरतो द्रागपास्ता।
नैर्मल्यं वारि भेजे शरदुदयदिनारम्भ युष्मत्प्रसादा-
त्स्रोतः स्रोतस्वतीनां कथय कथमहो क्षैण्यमभ्येति भूयः ॥ १६ ॥

विश्वोपकारकरणाय गुरुप्रयत्ना-
त्सृष्टः सरोरुहभुवा स्फुटमम्बुवाहः।
धाराः स्वयं पुनरयं परितो विमुञ्च-
न्किं नाभिषिञ्चति लतां विपिने विपस्र ॥ १७ ॥

चञ्चू चारुतरे चिराय विहिते मञ्जिष्ठरागारुणे
पक्षौ चापि कृतौ हरिन्मणिनिभौ दूर्वाद्रवालेपनैः।
काकैवं भवता शुकस्य समता निर्बन्धतो निर्मिता
सा संसारमनोविनोदजननी वाणी क्व लभ्या पुनः ॥ १८ ॥
यस्मिन्नम्बुरुहाणि जातसुहृदप्रेमाणि यस्मिन्घना-
नन्दं विन्दति चक्रवाकपटली यस्मिन्प्रसन्ना दिशः।
तस्मिन्विश्वविकाशितेजसि रवौ रज्यत्युलूको न चे-
द्धानिः कैव तदा रवेः परमसौ हास्यास्पदं जायते ॥ १९ ॥
म्लानान्भूमिरुहोऽभिषिञ्च परितः शुष्काः स्रवन्तीः पुन-
र्धाराभिः परिपूरय प्रतिदिशं संप्लावयोर्वीमिमाम्।
अम्भोवाह परं त्वकीर्तिदमिदं पानीयपानाशया
स्तोकोऽसौ भवदेकवृत्तिरनिशं यद्रारटीत्याकुलः ॥ २० ॥

उच्चैरुत्पथगा नदीः प्रकुरुषेऽनच्छं च नीराशयं
पन्थानं मलिनीकरोषि परुषं मौखर्यमालम्बसे ।
प्रावृष्येव कियन्त्यहान्यविकृतस्त्वं वारिदैवं क्रिया
नो जाने चिरमेपि चेदभिपतां स्यात्कस्तदोपद्रवः ॥ २१ ॥

कान्तिः काञ्चनरूपदर्पदमनी सौरम्यमम्याहतं
मध्यं चापि न धूलिधूसरतरं रोचिष्णुरुच्चैः स्थितिः ।
सर्वे विश्वविलक्षणास्तव गुणाः किं चम्पकैतावता
नो चेत्त्वय्यनुरज्यते क्षणमपि क्षीणोऽपि पुष्पंधयः ॥ २२ ॥

कः संबन्धो यदभिरमते वीक्ष्य मेघं मयूरी
केवासक्तिर्यदमृतरुचौ सानुबन्धा चकोरी ।
को वा हेतुः पतति परितो यत्कृशानौ पतङ्गः
प्रायेणैवं विधिपरवशा प्राणिनां चित्तवृत्तिः ॥ २३ ॥

मन्दारो विविदे व्यलोकि बकुलं संशीलितश्चम्पकः
पर्यालोचनयावधारितमिदं वन्द्यस्तु चाम्पेयकः ।
येनैकेन विधीयते मधुभराक्रष्टालिमालागरु-
द्वातोद्धूतपरागसौरभभरैरामोदिता मेदिनी ॥ २४ ॥

कुन्दं वारिभिरुक्ष यच्छ सुमना(नो)मूले मृदं यूथिका-
पर्यन्ते रचयावृतिं कुरु मुहुर्मल्लीतले कर्षणम् ।
मालाकार विशेषतः पुनरसौ सेव्यो रसालस्त्वया
सर्वेषामुपयोगिनी फलवती वृद्धिर्यदस्यैव हि ॥ २५ ॥

दत्त्वा स्कन्धतले पदं विनमितां कृत्वा तु शाखाशिखां
सर्वेषां कुसुमावलीमवचिनु स्वच्छन्दमुर्वीरुहाम् ।
किं त्वस्मिन्वनपाल केतकतरौ यत्नेनिदध्याः करौ
स्यातां कण्टककोटिभिः कवलितौ नो तावदेतौ यथा ॥ २६ ॥

आरोहो निशिताङ्कुशेन कतिधा कुम्भं भिनत्ति क्रुधा
पश्चाद्दंशचयैरयोमयमुखैर्निघ्नन्ति चान्ये जनाः ।

क्वापि स्थैर्यमुपागतस्य सहजेनाग्रे पदान्यर्पितुं
स्वेच्छाचारपरस्य पेचकिपते रोमापि न स्पन्दते ॥ २७ ॥
फेत्कुर्वन्त्यपि फेरवोऽतिपरुषं चेत्पार्श्वयोराश्रिताः
काकाश्चेदुपरि स्थिताः प्रतिदिशं कुर्वन्ति कोलाहलम् ।
मन्दं मन्दमुपान्तमीलितदृशो मार्गे पदं न्यस्यतः
किं भेदं समुपैति कुञ्जरपतेर्मानोन्नता भ्रूलता ॥ २८ ॥
यद्यूथाधिपपालितेन भवतारण्या वने निर्जिता
हे दन्तावलडिम्भ किं भवति ते तत्कीर्तये पौरुषम् ।
यूथेशे समयेन कालवशतां प्राप्तेऽथ कुत्रापि चे-
त्किंचित्सेत्स्यति ते बलं तदमलं कर्ता यशोमण्डलम् ॥ २९ ॥
चन्द्रस्तावदलंकरोतु रजनीं भासां भरैर्मुद्रतीं
व्यावृत्तां च कुमुद्वतीं विनयतु ध्वान्तोपरोधं दिशाम् ।
किं च क्लान्तचकोरचेतसि मुदं पुष्णातु किं तावता
यद्येता मलिनीकरोति पुरतस्ताराः सुदारानपि ॥ ३० ॥
माकन्दे कुरु मञ्जरीभिरशनं कर्णे सुधावर्षिणीं
वाणीं व्याहर किंतु कोकिल शुकस्पर्धां वृथा मा कृथाः ।
योऽसौ काञ्चनपञ्जरे परिलसन्नाकर्णितान्युच्चर-
न्देवीभिः समुपास्यते सविनयं दुग्धौदनप्राशनैः ॥ ३१ ॥
स्वच्छन्दं कलहंस संचर सुखं निद्राहि पारावत
त्वं चोच्चै रट हे शिखावल शिखामारुह्य भूमीरुहाम् ।
अस्माभिः शुक एव केवलमिहारण्ये समन्विष्यते
यस्मै राजनितम्बिनी स्पृहयति श्रोतुं गिरां पाटवम् ॥ ३२ ॥
अङ्गीकृतः प्रसवबन्धनतो वियोगः
सोढानि तानि करजक्षतिपीडितानि ।
उद्यानपाल तदिदं तु मनो दुनोति
प्रश्नासि यत्कुरुवकैः सह मालतीं माम् ॥ ३३ ॥

लवङ्गि द्रागङ्गीकुरु सुरभितामाहर मन-
स्त्वमप्यम्भोजश्रीः कुमुद मुदमाधेहि हृदये ।
नमस्या सा कापि स्फुरति पुनरन्यैव लतिका
गतव्रीडं क्रीडन्पिबति मधु यस्यां मधुकरः ॥ ३४ ॥

कियत्यः श्रीमत्यः कुसुमकुलसौरभ्यसुभगा
दृगानन्दं यूनां जगति जनयन्त्येव हि लताः ।
परं त्वासां मध्ये सफलजनिरेकैव सुमना
विना सङ्गं यस्या दलति हृदयं हा मधुलिहः ॥ ३५ ॥

धन्याः स्पृशन्ति मधुपास्तव पल्लवाली-
मन्तर्निविश्य मधु किंतु पिबन्ति पुष्पे ।
एतावतैव सफलं मम जन्म जात-
माकस्मिकं यदिह मालति वीक्षितासि ॥ ३६ ॥

रे काक कालवशतो यदि सौधपृष्ठ-
मारूढवानसि तथापि हि काक एव ।
जम्बालजालपतितोऽपि मरालबालः
कैर्नाद्रियेत रमणीगमनोपमायाम् ॥ ३७ ॥

स्पर्धां जाविकृतां भजन्तु भवता सार्धं परे सागराः
किंवा दुग्धपयोनिधे तव तुलामभ्येतुमेते क्षमाः ।
त्वं तादृङ्महिमालयो विजयते तत्तादृशं ते यशो
देव्या सिन्धुसुवा समं यदुदरे निद्राति दामोदरः ॥ ३८ ॥

केऽमी दिक्करिणो रणोद्धुरतरश्चेदस्ति कस्तिश्च वा
शक्तिस्ताट्टगिहास्ति यस्य न भयं जागर्ति मद्गर्जिते ।
एवं केवलमात्मनैव गुरुतामात्मन्यभिद्योतय-
न्साहंकारमितस्ततो विहरते कूपोदरे दर्दुरः ॥ ३९ ॥

द्वित्राम्भोधरवारिबिन्दुजटिले गर्ते स्थितः स्वां तनुं
वीक्ष्य स्वर्णसमां किमित्यतितमां जल्पन्मुधा मोदसे ।

रे रे वर्बर दर्दुर स्फुटमिदं जानीहि वर्षात्यये
यत्नेनापि गवेषितः कुतुकिभिः कुत्रापि न प्राप्यसे ॥ ४० ॥
तुङ्गः साहजिकोऽसि नम्रतरतामभ्येषि भूयः फलैः
पुष्पामोदभरेण कस्य न मनोमोदं विधत्तेतराम्।
कस्ते हे बकुलान्यजन्मदुरितोद्रेको गरीयानयं
येनेयं वनितावितीर्णमदिरागण्डूषपानस्पृहा ॥ ४१ ॥
सोढा श्रीविगमव्यथातिविषमा कल्लोलकोलाहलै-
रन्तस्तापभरा न वाभिलषिता दत्ता मणीनां चयाः।
उच्चैर्मन्दरमन्थनेन हृदये व्यालोलितेऽतीव भू-
मर्यादा न विलङ्घिता तु भवता वन्द्योऽसि वारांनिधे ॥ ४२ ॥
यः सख्यौ सुरसिन्धुनीरनिकरे नित्यं निदाघार्दितो
हेमाम्भोजवनीपरागपटलैश्चक्रे रजःक्रीडनम्।
निःशङ्कं समवाप नन्दनवने स्वेच्छाविहारोत्सवं
सोऽयं कालविपर्ययात्करियुवा शुष्कं सरः सेवते॥ ४३ ॥
यत्राजायत कौस्तुभो हि ककुभो भासा समुद्दीपय-
न्नुत्पन्नो हिमदीधितिस्तरुवरो जज्ञेऽथ कल्पद्रुमः।
शम्बूका अपि संभवन्ति शतशस्तत्रैव पाथोनिधौ
विख्यातस्त्रिजगत्सु तस्य महिमा किं तावता हीयते ॥ ४४ ॥
मा खेदं समुपेहि चेतसि सखे पद्माकरोष्मागमे
शुष्कोऽसीति मरीचिमालिजटिलज्वालानिपीतोदकः।
भावी कोऽपि स वासरः पुनरपि प्रावृट्पयःपूरितो
यत्र त्वं भवितासि वारिजवृतो दृश्यो दृशां कोटिभिः ॥ ४५ ॥
अग्रे कूप इतीव लोकमुखतः श्रुत्वा निदाघार्दितः
पास्यामीह यथाभिलाषमुदकं पान्थः समुत्कण्ठितः।
धावित्वाथ समागतोऽस्य सविधं हा हन्त कूपः पुनः
पाताले विनिवेश्य वारिपटलं व्यादाय वक्त्रं स्थितः ॥ ४६ ॥

काकुं चातकपोत नाकुलतया कुर्यां वृथा शारदे
यावद्वारिभरव्ययेन नितरां रिक्तीकृते वारिदे ।
त्वत्तृष्णा न विराममेष्यति परं काका पयोविप्रुषो-
ऽप्युत्सर्गे हतशक्तिरेष भविता व्रीडा व्रजः केवलम् ॥ ४७ ॥

स्थाने स्थाने सुमेरुप्रभृतिगिरिवराः सन्ति नोर्व्यां कियन्तः
किं तैरेको..........मलय महिमा पूजनीयस्तवैव ।
चञ्चत्पाटीरवाटीप्रभवनवनवामोदसंपत्समृद्ध्या
यस्त्वं शश्वत्समामोदयसि निरुपधिः सर्वतो दिङ्मुखानि ॥ ४८ ॥

सद्वृत्तोऽसि गुणान्वितोऽसि विमलच्छायोऽसि पृथ्वीपति-
त्रस्यच्चारुचमूरुशावकदृशामप्येषि दन्तोपमाम् ।
मुक्ताहार परं त्वरुंतुदमपि ब्रूमो वयं यद्भवा-
नन्तःशून्यतरोऽस्ति तत्प्रतिपलं चेतः समुत्ताम्यति ॥ ४९ ॥

भूयांसो जलबिन्दवो जलमुचा स्वातौ विमुक्ताः परं
निःपीताः खलु शुक्तिकाभिरिह ये ते बिन्दवो बिन्दवः ।
तद्गर्भे परिणामतः परिणता मुक्ता नृपप्रेयसी-
पीनोत्तुङ्गपयोधरोपरि सुखं खेलन्ति हारस्थिताः ॥ ५० ॥

भ्रातः षट्पद यत्र तत्र कुसुमे तृष्णातुरो न भ्रम
स्वल्पाहेन विराममेष्यति सरोजानां विपच्छैशिरी ।
अन्तारूढविसप्रसूनमुकुलामोदैरिदं सूच्यते
द्वित्रैरेव दिनैः प्रफुल्लकमलाकीर्णं सरः स्यादिदम् ॥ ५१ ॥

भ्रमर भ्रमतोऽपि केतकीनां विपिनं नैव कदाचिदप्युपेहि ।
रसलब्धिरिहास्तु वा न वास्तु नियतः कण्टकसंकटे निपातः ॥ ५२ ॥

दूषणान्यपि महान्ति धीमतां संवृणोति समुपार्जितो गुणः ।
स्रग्विलुम्पति गुणेन केवलं मौक्तिकस्य प्रकटरन्ध्रमात्मनः ॥ ५३ ॥

मोहितो मधुप रूपसंपदा कर्णिकारकुसुमं किमीहसे ।
नेह सौरभसमागमस्तव व्यक्तिमेष्यति परं तु मूढता ॥ ५४ ॥

सिन्धुबन्धुममुमम्बुलिप्सया सेवसे किमु निदाघबाधितः ।
सेवनस्य परिदेवनं फलं लप्स्यसे न कणमप्यपां पुनः ॥ ९१ ॥
यत्र नैव कलहंसकूजितं नाथ पङ्कजसमूहसंभवः ।
नापि कापि जलखेलनक्रिया तत्किमम्बुजलमुच्यते जलम् ॥ ९६ ॥
यद्दिशालजघनाङ्गनागणस्नानधौतकुचकुङ्कुमारुणम् ।
उन्नदज्जलपतत्रिचित्रितं तत्सरोवरपयः पयः स्मृतम् ॥ ९७ ॥
हंसैर्मौनमकारि वारिजकुलैरासादितं मुद्रणं
शोकः कोकमवाप कामपि दिशं भेजे दिनश्रीरपि ।
अस्ते भास्वति हा दिगम्बरतलं व्याप्तं तमोभिर्दिशो
भीमाः फेरवफू(पू)त्कृतिव्यतिकरैर्नृत्यन्त्यमी पेचकाः ॥ ९८ ॥
ज्योत्स्नाभिः ककुभो विभूषय तमोमालाजटालाम्बरं
द्रागुल्लासय वासयापि कुमुदामोदैर्महीं त्वं विधो ।
सर्वं सम्यगिदं तथापि किमपि ब्रूमो वयं कुप्य मा
यादृक् श्रीर्जगतां रवौ न तु पुनस्तेनैव सा भाविनी ॥ ९९ ॥
वासन्ती न विलोकिता कमलिनी नालिङ्गिता नेक्षिता
यूथी नापि कुमुद्वती परिचिता नापेक्षिता मालती ।
युष्मद्दानसमीहया मधुलिहा हन्त त्वयायं पुन-
र्दूरादेव निवार्यते गजप किं कर्णस्य विक्षेपणैः ॥ ६० ॥
यावन्नृत्यं कलय(यि)तुमलं सज्जते नीलकण्ठे
यावच्चञ्चूमपि च विवृणोत्यम्बुने चातकोऽपि ।
संनद्धोऽयं वियति जलदस्तावदुत्पातवातै-
रागत्योच्चैरहह सहसा क्वाप्यपाकृष्य नीतः ॥ ६१ ॥
एकत्रैव कुलायकोटरकुहरे वृद्धिं परां प्राप्तयो-
रेकाकारजुषो रसालशिखरे साकं समासीनयोः ।
इत्थं कोकिलकाकयोः कथमहोत्पद्येत भेदग्रहो
नो चेज्जातिनियन्त्रितेह वचसां व्यक्तिर्भवेद्भेदिका ॥ ६२ ॥

यः प्रासूत सुतं सुधाकरमुमाप्राणेशचूडामणिं
लक्ष्मीर्यस्य सुता हरिप्रियतमा यः कालकूटाश्रयः ।
पातुं पाणिपुटे कृतस्य मुनिनागस्त्येन तस्याम्बुधे-
र्जाताः केऽपि न रक्षणक्षमतमा दैवं ततो व्येतु कः ॥ ६३ ॥

यो दिङ्मण्डलमुद्धरत्युरुतमोग्रासादनायासतो
येनानन्दमनिन्दितेन लभते चित्ते कुमुद्वानपि ।
यं चाश्रित्य जगज्जयत्यतनुरप्येवंगुणोऽसौ विधु
राहोरास्यकरम्भतामुपगतः कस्मै किमावेद्यताम् ॥ ६४ ॥

कैरविणीकुलबन्धो हिमकर सिन्धोरवाप्तजन्मासि ।
इति तव महद्यशस्त्वं मलिनयसि यदम्बुजश्रेणिम् ॥ ६५ ॥

संगम्य दुग्धनिवहैरविशेषबुद्ध्या
किं वारिपूर बहुदूरमुपेहि मोदम् ।
दुग्धाभिलाषिणि विवेकिनि राजहंसे
हा हा क यास्यति पदं भवतोऽभिमानः ॥ ६६ ॥

यो मन्दारमरन्दबिन्दुनिवहैः संवर्धितः शैशवे
तारुण्ये मदमाचचाम बलभिद्वेतण्डगण्डस्थले ।
सोऽयं जीर्णतनुर्निनीषति जनुः कार्पासपुष्पेष्वलि-
र्दुर्दैवव्यवसायतोऽस्य तदपि प्रायोऽभवद्दुर्लभम् ॥ ६७ ॥

नादत्तेऽनुचरोपनीतकवलं सर्पिःसिताप्लावितं
यत्नेनापि न पातुमिच्छति मनोहारीणि वारीण्यपि ।
विन्ध्यासन्नवनीवियुक्तकरिणीचिन्तादुरन्ताधिवा-
न्मूर्धानं विधुनोति बन्धनगतः स्तम्बेरमः केवलम् ॥ ६८ ॥

देशोऽयं मरुरुद्धतो विधिवशादस्मिंस्तडागोल्पक-
स्तत्रैकाजनि मद्विधालिनिकरप्राक्पुण्यतः पद्मिनी ।
तामुन्मूलयितुं समुद्यतकरस्त्वं तावदुत्कण्ठसे
हे दन्तावल ते कथं न वलते दृष्टिः कृपाकोमला ॥ ६९ ॥

कस्मै दैन्यमुपैतु काननतले कोऽन्यो गरीयानितो
यं वालम्ब्य करेण कर्षति वपुस्तीरे न तादृक्तरुः।
गृध्रैर्व्योम्नि शिवागणैर्भुवि मुहुर्जिज्ञासितासुव्ययो
हा धिक् पङ्कपराभवे निपतितो दन्तावलो हीयते॥ ७०॥
पस्पर्धेऽञ्जनपर्वतेन सह यस्तन्वा तदन्वाययो
साधर्म्यं श्रुतसप्तधामदपयःसारेण धाराभृताम्।
दिग्दन्तावलराजिमाजिषु रदाघातैर्जिगायौजसा
सोऽयं दैवनिबन्धनं विषहते दन्तावलो बन्धनम्॥ ७१॥

अजनि रजनिजानिर्यद्यपि क्षीरसिन्धो-
रलभत पदमुच्चैर्मूर्ध्नि कंदर्पशत्रोः।
तदपि यदि जडात्मत्वात्कलङ्कावगुण्ठं
वहति हृदयमध्ये कस्तदा किं करोति॥ ७२॥

शरद्घने गर्जति वारिवाञ्छा कदापि रे चातक नैव कार्या।
इदं तु निर्व्यूढमवेहि तत्त्वं गर्जन्ति ये ते न फलोपलब्ध्यै॥ ७३॥

रे काक किं रटसि कर्णभिदः कटूक्ती-
र्वाचालता नहि विदग्धविनोदभूमिः।
पश्येति कोकिलयुवा समये कदाचि-
त्सूक्तिं लपन्नभिमतो न जनस्य कस्य॥ ७४॥

वैदग्ध्यमन्दिर मनोहररूपमात्रा-
दिन्दिदिर भ्रमणमिच्छ न कर्णिकारे।
अस्मिन्नुदेष्यति न कोऽपि रसोपलम्भः
सौरभ्यदुर्भगमिदं जगति प्रसिद्धम्॥ ७५॥

अकाले संनद्धो नभसि मुदिरो मेदुरतरः
परीतस्तोयाशाविवृतवदनैश्चातकगणैः।
तथानेनारब्धं किमपि चरितं येन करका-
निपातैरेतेषां सपदि शतधाभिद्यत शिरः॥ ७६॥

यद्यपि सन्ति बहून्यपि कुसुमानि तथापि वारिजं वन्दे ।
निशि निशि मधुपयुवायं यन्मधुने बन्धनं सहते ॥ ७७ ॥

तुल्यैव रूपरचना गणनापि धातु-
मध्ये समैव समता घटते तथापि ।
हेम्ना समं न दहने प्रविशारकूट
व्यक्तीभविष्यति यतो भवतो विशेषः ॥ ७८ ॥

द्रुमानतिक्रामति पल्लवश्रीः प्रवालशोभां हरति प्रसूनम् ।
तरोरशोकस्य तथापि नाभूद्दुर्दैवतः साधुफलोपलब्धिः ॥ ७९ ॥

नैव त्वत्सदृशी परागपटली कुत्रापि पुष्पान्तरे
नो वा सौरभमुग्रमीदृशमथो नैतादृशी सुच्छविः ।
अन्यस्मै स्पृहयन्ति किं मधुलिहो हित्वा भवन्तं तदा
भ्रातः केतक कण्टकैः कटुमुखैस्त्वं सा न चेदावृतः॥ ८० ॥

स्निग्धं न वीक्षितमसिक्षितिलास्यमास्यं
मुग्धे मुधा हलिकनारि कुचेष्टितेन ।
अन्यानि तानि ललितानि विलासिनीनां
यैराहतानि हृदयानि हरन्ति यूनाम् ॥ ८१ ॥

एकः स एव धरणीधरचक्रवर्ती
भूभृत्सु वन्द्यमहिमा हिमवान्न चान्यः ।
योऽसौ तपोभिरधिगम्य सुतामपर्णा-
मर्थीचकार सुरसारमपीन्दुमौलिम् ॥ ८२ ॥

इतस्ततः श्रावणवारिवाह किमूषरे वारिभरव्ययेन ।
त्वमुर्वरां शश्वदिमां निषिञ्च जीवातुभूता जगतां यदेषा ॥ ८३ ॥

उपरि चरणपातं कुर्वती मौक्तिकानां
हरिहतकरिकुम्भप्रच्युतानां समन्तात् ।
वनमटति किराती चिन्वती(न्वती) खलु गुञ्जां
हसति किमु महत्त्वं येन मुक्तामणीनाम् ॥ ८४ ॥

उच्चैर्विरौति परितो यदि सारमेय-
स्तस्मिन्भवन्ति किमु केऽपि कृतावधानाः ।
धीरं ध्वनत्यवनिभृत्कुहरे हरीन्द्रो
दिग्दन्तिनां सपदि शुष्यति दानधारा ॥ ८५ ॥

ध्वनति मधुरमम्भोमुक्शरद्येष भावी
झटिति जलनिपातोऽपीत्यनन्दत्कुमुद्वान् ।
तदिह पुनरनेनाकारि येनास्य जाता
रुचिरपि हिमरश्मेर्दुर्लभा सैव वृष्टिः ॥ ८६ ॥

कतिविधा विलसन्ति मधुप्लुताः कुसुमभारनता न लता वने ।
कमलिनीविरहव्यथितो रतिं वितनुते किमु तासु मधुव्रतः ॥ ८७ ॥

नैवासन्कति सन्ति नैव कति वा के के न वा भाविनो
राजानो जनकस्य जातु किममी कर्तुं तुलामीशते ।
सीताकल्पलताप्रतिग्रहमिह क्षोणीभुजामग्रतः
स्वस्तीत्युक्तवते त्रिलोकपतये रामाय योऽयं ददौ ॥ ८८ ॥

रे हंस संचर सरोरुहवृन्दमध्ये
त्वं चापि चक्र चर चंक्रमणं ततः किम् ।
योऽन्तर्निगूढमकरन्दरसोऽस्य हृद्यो
गृह्णाति तं परमसौ रसिको द्विरेफः ॥ ८९ ॥

वन्ध्ये किमन्ध शुक सीदसि काञ्चनारे
पुष्पश्रिये पटुरसौ न फलागमाय ।
उड्डीय गच्छ फलितं तरुमन्यमाशु
भ्रातर्न चेत्पुनरुपेष्यति तेऽनुतापः ॥ ९० ॥

एधन्तां त्वयि पीनमीननिवहग्रासैर्बका निर्भरं
पङ्केरुट्फलमूलशैवलगणानश्नन्तु कारण्डवाः ।
अन्ये चापि चिरं चरन्तु विहगाः स्वच्छाश्च पद्माकर
भ्रातर्या पुनरभ्युदेति सुषमा हंसैरमीभिर्न सा ॥ ९१ ॥

स्थाने स्थाने विकचकमलश्रेणिगुञ्जद्द्विरेफा
न भ्राजन्ते किमिह सलिलोदीर्णरागास्तडागाः ।
उत्सृज्यायं तदपि कुधियां दर्दुराणां समूहः
कस्मात्कूपे निपतति वयं तत्र बीजं न विद्मः ॥ ९२ ॥

चेदेकदा न सरसीषु न वा नदीषु
वारीण्यवाप दुरवग्रहदूषितासु ।
तत्किं तृषार्तिविभवाकुलितोऽपि तोय-
पानाय कूपमनुधावति वारणेन्द्रः ॥ ९३ ॥

नास्मै हस्तिपते प्रसारय करं कूपाय तृष्णातुरो
भावी नैव तव प्रसारितकरस्याप्यम्बुलाभोऽप्यतः ।
द्वित्राणीह दिनानि धेहि हृदये धैर्यं भविष्यन्त्यमी
द्राग्धाराभिरितस्ततो जलमुचां पूर्णास्तु पद्माकराः ॥ ९४ ॥

किं गर्वमुद्वहसि कच्छप गाधतोये
पद्माकरे समवहेलितदिव्यकूर्मः ।
स्यादेष चेत्पुनरवग्रहदोषशुष्क-
स्तत्रावधारय विधिं निजजीवनस्य ॥ ९५ ॥

निदाघे छायायै तरणिकिरणोत्तापिततनु-
र्यदं यावद्विन्ध्येऽनुसरति समृद्धं करियुवा ।
तथा तुङ्गश्चायं दवदहनकीलैः कवलितो
यथाभूदामूलं दहनमहसा भस्मनिचयः ॥ ९६ ॥

यदृच्छा जाताभूदुपवनतटे काचन शमी
समृद्धिं योऽयानाधिकृतपुरुषैः प्रापि कृपया ।
तथाकस्माद्यस्यां हुतभुगुदियायान्तरगतो
यथाभूदासन्नद्रुमनिवहदाहाय कुशला ॥ ९७ ॥

संतोषयाद्धि मकरन्दभरेण भृङ्गा-
नम्भोज संपदि वरो हि परोपकारः ।

दोषागमोऽयमतिसंनिहितो यदस्मि-
न्कान्तिर्न तेन मधुना गमनं त्वमीषाम् ॥ ९८ ॥

अन्येऽपीह लसन्ति किं न कुसुमश्रेणीसमृद्धश्रिय-
स्ते ते चम्पककाञ्चनारबकुलाशोकादयो भूरुहः ।
हे माकन्द तथापि भेदविदुषामिन्दिन्दिराणां मनः
सान्द्रानन्दमहर्निशं रसवति त्वय्येव विश्राम्यति ॥ ९९ ॥

यज्जातोऽपि चतुःपथेऽत्र विषये निःशाखिभूमण्डले
शाखाभिर्निविडाभिरुन्नततरच्छायोऽसि यत्त्वं पुनः ।
तं न्यग्रोधतरो सहस्व बहलच्छायाभिलाषाय त-
त्पान्थानामुपरोधखेदमधुना नैदाघमध्यंदिने ॥ १०० ॥

विश्वेषां त्रिदिवौकसामपहरन्नार्तिं ह्रदामन्वहं
यद्यप्याकुल एव तिष्ठति भवाञ्ज्ञानाम्यहं तत्त्वहो ।
हंहो कल्पतरो परोपकृतये सृष्टोऽसि यद्वेधसा
तत्त्वत्तोऽहमपीप्सितामुपकृतिं किंचित्समीहेतमाम् ॥ १०१ ॥

तिष्ठामो विपिने सरःसु सलिलं स्वैरं पिबामस्तृणा-
न्यद्मो यद्यपि सर्वतो भयपराधीनाश्च वर्तामहे ।
निर्बीजं प्रहरन्ति हन्त तदपि व्याधा इमेऽस्मान्मृगा-
नीदृश्येव विधातृनिर्मितिव(र)तः किं कुर्म एते वयम् ॥ १०२ ॥

धन्या रोहणभूरियं सहजतो यस्यां मणिश्रेणयः
पर्यन्तेषु लुठन्त्यकुण्ठितरुचिव्यालिप्तदिग्भित्तयः ।
किं त्वस्याः पुनरन्य एव महिमा श्लाघ्यः समन्तान्मणी-
न्यो गृह्णाति निजेच्छयैव सरसं गृह्णातु ना संमतिः ॥ १०३ ॥

मातङ्गाश्चलताप्यतस्त्वमपि हे शार्दूल दूरं व्रज
त्वं चान्यत्र वराह निःसर पुरो यावत्स्थितं तत्स्थितम् ।
सोऽयं दीर्घकरीन्द्रकुम्भनखरक्रोडस्थमुक्तावली-
भासा दन्तुरयन्दिशो निविशते पञ्चाननः कानने ॥ १०४ ॥

चेदङ्गीक्रियते न मत्तकरिणा भृङ्गीयुवा गौरवा-
द्ब्रूयादस्य गुणालयस्य तदये चित्तव्यथा किं वृथा ।
सौरभ्यस्तवनिर्झरभ्रमदलिभ्राजत्प्रसूनप्रभा-
स्तास्ताः सन्ति लवङ्गिकाप्रभृतयश्चेतोमुदे चेल्लताः ॥ १०५ ॥

करटिकठिनदन्तोल्लेखसंकर्षितायाम-
मविरलघनवारासारसेकाप्लुतायाम् ।
अपि सुभगमुहूर्ते यत्नतो बीजमुप्तं
गिरिशिखरशिलायां रोहते किं कदापि ॥ १०६ ॥

एतस्यां वनवीथ्यि यद्यपि वसत्युग्रोऽपि कण्ठीरवो
निःशङ्कं करिशाव संचर तथाप्याकर्ण्य वार्तामिमाम् ।
अन्ये ते करिणो मदोत्कटकटस्थानभ्रमच्चापद-
श्रेणीगुञ्जितरञ्जितेषु हरयो येषु प्रहारप्रदाः ॥ १०७ ॥

रे रे शूकरयूथनाथ महता तारुण्यदर्पोष्मणा
दन्ताभ्यामिह पातनाय यतसे शालद्रुमस्यास्य किम् ।
जग्मुर्यत्र कठोरपर्वतशिलातुल्यत्वचि प्रांशवो
दन्ता निष्ठुरवज्रकोटिकठिना दिग्दन्तिनां कुण्ठताम् ॥ १०८ ॥

लेभे यं शुभदा तपोभिरमलैः श्रीपद्मनाभात्सुतं
यद्देशो मिथिलाखिलावनितलालंकारचूडामणिः ।
तेनेयं(दं) मधुसूदनेन कविना विद्यावता निर्मितं
श्लोकानां शतकं मुदे सुकृतिनामन्यापदेशाह्वयम् ॥ १०९ ॥

निरवद्यमद्य शतमेतदतिप्रकटार्थवर्णपदसंवलितम् ।
दुज(रुचि)तीकुलाम्बुजवनीरविणा मधुसूदनेन कविना रचितम् ॥ ११० ॥

इति मैथिलमधुसूदनकृतमन्यापदेशशतकं समाप्तम् ।

---

## श्रीलक्ष्मणाचार्यप्रणीता

## चण्डीकुचपञ्चाशिका।[1]

श्रियं नौमि देवीं परां पारिजातां पदाम्भोजरेणूपसेवापराणाम्।
यदाद्याक्षरस्याभिधेयेन शूली प्रलीढोऽपि मृत्युप्रजेता गरेण ॥ १ ॥

आशादासीभिरूर्ध्वं करविधृतचतुष्कोणभागाभखण्डैः
खण्डैराढ्या पटानां विधुरविघटिता शुष्कतावासयेया।
खात्मानाधः पतन्ती सजवमसकृदाकर्षणक्लान्तिपङ्क्ति-
श्वासोद्वासौघपूर्णा हिमगिरिदुहितुः पातु वोऽपूर्वकन्था ॥ २ ॥

आसीद्विरिञ्चिवरदा सुरसार्थतीर्थे
तेजोमयी मखभुजामखिलास्ति शक्तिः।
एवं भविष्यति पुरोऽपि पुरारिपत्नी
त्रैकालिकं यदिति तन्मह आद्यमीडे ॥ ३ ॥

मध्ये पीयूषसिन्धोर्घनकुसुमलसत्कल्पवृक्षान्तराले
दिव्ये मण्यन्तरीपे त्रिदशपरिवृढप्रौढगीर्वाणवर्ण्या।
शर्वाणी पूर्णमण्याभरणरणरणत्पाणिनाभ्यर्णवाणीं
तूर्णं चिन्तामणेर्मामपि सदसि सदाश्लिष्य सिंहासनेऽस्ति ॥ ४ ॥

वन्दारुवृन्दारकसुन्दरीणां सीमन्तभृङ्गाञ्चितपादपद्मा।
संस्तोतृपद्मापतिपद्मजन्मस्वाराट्पिकाल्याश्रगुणा विभाति ॥ ५ ॥

यत्रोदग्रहरिन्मणिप्रविलसत्सौधाङ्कुराणां गणै-
रुद्गीर्णैर्निजगर्भतश्च चणकैः साम्यं गतानां नवैः।
मुक्तानाममृतद्युतेरपि भरं वीक्ष्य स्थितानां हृदि
भ्रान्त्याखू रभसोत्पपात हृदये सारङ्ग एतन्मुधा ॥ ६ ॥

---

१. राधावेणीमाधवयोस्तनूजन्मा सामगोपनामकोऽत्रिवंशमुक्तामणिर्दाक्षिणात्यप्रकाण्डं लक्ष्मणाचार्यः सह्याद्रिप्रान्तवर्तिनि वांईसंज्ञके नगर आसीदित्यादि सर्वं प्रकृतनिबन्धस्यैकादशद्वादशत्रयोदशश्लोकैरुपसंहाराच्च व्यक्ततरमास्ते. भाति चायं नवीनः. २. अस्याः पञ्चाशिकाया एकं पुस्तकं राजगुरु-पर्वणीकरोपनामक-भट्टश्रीनारायणशास्त्रिभिः स्वहस्तेन विलिख्य काव्यमालार्थमस्मभ्यं दत्तम्, तदाधारेणैतन्मुद्रणमजनीति तेषां विद्वन्मणीनां महान्तमुपकारमुरीकुर्मः.

पादारविन्दस्य पुरंदरोऽपि सेवां विधातास्म्यहमेव देव्याः।
नार्हस्त्वमस्मिन्निति वज्रपाणिर्व्याक्षिप्यते यत्र गणैर्विचित्रम् ॥ ७ ॥

विडौजसि पदाम्बुजे निविडतेजसि त्र्यम्बक-
त्रियाः प्रणतिमीप्सितप्रतिपदाप्तये निर्जरैः।
हरावपि हरे विधौ प्रणतिकर्मकार्मीणके
जयाम्ब जगदम्बिके जयजयेति यत्र ध्वनिः ॥ ८ ॥

तत्रैकदा निखिललोकचरित्रविद्भिः
संप्रार्थिता भगवती प्रणिधीनवर्गैः।
विज्ञाप्यमस्ति किमपीति रहस्यमस-
हृग्यायिनः कविवरस्य कृतेर्विचित्रम् ॥ ९ ॥

किं कुङ्कुमोऽस्ति कलितामरभोज्यवीची-
सारप्रसारवचसां प्रमुखः कवीनाम्।
यत्काव्यमन्यकवितां विधुनोति जीर्णां
जायामिवाभिनवमुग्धवधूस्तनश्रीः ॥ १० ॥

असह्यभरसह्यभूधरमणौ महाराष्ट्रके
महाबलजटाढ्यनिष्प्रथितकृष्णवेणी धुनी।
तदम्बुलहरीलता जयति वाञ्सिसंज्ञा पुरी
स लक्ष्मणकवीश्वरो वसति तत्र वृत्त्या स्वया ॥ ११ ॥

वेणीमाधव एव यस्य जनकः प्रख्यातकीर्तिस्तथा
राधा यज्जननी सती गुणवती रामोऽपि यत्सोदरः।
अत्रिर्गोत्रपुमांश्च यस्य कविता चेतोहरा सामगो-
पाह्वो यः किल राजते चरणयोर्देव्या भवान्याः स्वयम् ॥ १२ ॥

यस्य गुरुर्यो जातो दण्डकराभिन्नपर्वतान्वयतः।
रघुनाथमन्दराद्रिर्मथितुं तर्कादिशास्त्रचयजलधिम् ॥ १३ ॥

स त्वत्पदपङ्कजस्फुरदमन्दानन्दसंदोहद-
स्यन्दन्मञ्जुमरन्दसुन्दरमधुव्यालोलरोलम्बकः।

सत्पोतेतरताविनीतवनितासंभोगशून्यः पुन-
र्योऽसौ संप्रति कथ्यते मम गुणप्रौढिप्रबद्धात्मकः ॥ १४ ॥

तस्यैव चेत्किमपि काव्यमकव्ययेच्छो-
रस्मत्सभापरिसरे पठनीयमस्ति ।
यन्मत्पदाम्बुजमधुप्रतिषेचनेऽस्य
मृद्वीकयापि न कयापि न मृद्विकासः ॥ १५ ॥

श्रुत्वादेशं दूतवर्गैर्भवान्या न्यासान्धन्यान्वीक्ष्य वाचः कवेस्तान् ।
न्यस्तो मूर्धा स्वामिनीपादपद्मे कर्त्रेत्युक्तं तत्कृतैर्यत्कृतेऽत्र ॥ १६ ॥

सावधाना ततो देवी काव्यश्रवणकर्मणि ।
जातेत्यालोच्य सहगवर्गैः काव्यं प्रवर्ण्यते ॥ १७ ॥

यद्यपि पदनुतिरादौ कार्या मातुस्तथापि विश्वस्य ।
मुख्यमिति स्तनपानं लक्ष्मणबालेन तत्स्तुतिर्विहिता ॥ १८ ॥

प्रालेयशैलजनुपः सुहिरण्यवल्ल्या
गौर्याः पयोधरविचित्रफलं पिबामि ।
यत्स्पर्शनादपि बभूव स शूलिनोऽपि
मृत्युंजयत्वविभवैकपदेऽभिषेकः ॥ १९ ॥

कल्याणावलिमातनोतु नितरां कर्पूरपूराधिक-
प्रालेयं तुहिनालिशैलदुहितुस्तुङ्गं तदङ्गं हृदः ।
येनाकारि पुरारिभालनयनज्वालाकरालावली-
वाढोल्लीढतनुस्तदीयहृदि सोऽनङ्गोऽपि रङ्गे नटः ॥ २० ॥

आजीवं तदुपास्महेऽद्रिदुहितुः कर्पूरगौरं कुच-
द्वन्द्वं नीलगलं सुचन्दनयुतं तत्राङ्गनखेन्द्वङ्कितम् ।
यद्वीक्ष्यैव ममर्द किं नवमिदं जीवत्यशेषे मयि
प्रारूढं शिवयुग्ममन्यदबलाहृन्मर्मणीतीर्ष्यया ॥ २१ ॥

प्रत्यूहावलिमालुनातु दयया यश्चार्धनारीकुच-
प्रान्तोत्तुङ्गपटीरपङ्कमदनीमीनैकमुद्राङ्कुरः ।

यं कृत्वा स्वयमेव मन्मथरिपुः पाणिश्रितस्वेदतो
यातः सात्त्विकतां हि तत्कज इति ध्यात्वा स्मरार्तोऽभवत् २२
शर्वाणीकुचकुड्मलमूलविलसत्कर्पूरकस्तूरिका-
काश्मीरत्रितयावलेपरचनाचातुर्यचर्यावतात्।
यामुद्दिश्य महेशमानसमहाहंसः प्रयागस्थिता
वेण्येवेत्यवधारयन्निव ममज्जानन्यवृत्तिश्चिरम् ॥ २३ ॥
नित्यं पायादपायाज्जगदिह तु शरच्चन्द्रगौरप्रभासौ
गौर्या वक्षोजयुग्मद्वयशिखरचरत्तारहीरालिमाला।
चण्ड्या मे नाथचेतोविहरणनिपुणेतीर्ष्यया तत्र बद्धां
गङ्गां निश्चित्य भर्गः करमपि च ददौ यत्पदे मोक्षकामः॥ २४ ॥
नुमोऽपर्णारामस्थलहृदयकासारतटग-
प्रवल्गद्वक्षोजच्छलमिलितचक्राह्वयुगलम्।
दरालोकाच्छंभोः शिशिरशशिरेखानखगता
स्मरन्ती सापद्यं व्यथयति नितान्तं यदिह सा ॥ २५ ॥
वन्दे तत्कुसुमायुधान्तकवधूतुङ्गस्तनाब्जद्वयं
दुग्धामन्दमरन्दमन्दिरमिदं चूचालिलीढं परम्।
नित्यास्येन्दुविकासनान्मुकुलितं पङ्क्वक्राम्बुजैः
पीतं किं किमितीश्वरस्य मनसो येनाभवद्विस्मयः ॥ २६ ॥
मल्लीस्रक्फणिभोगभूषणमणिश्रेणीविदूरोल्लस-
न्मैनाकाचलसोदरी कुचरसाधारद्वयी मञ्जुला।
यस्याः स्पर्शनतस्त्रिलोचनमनोमानव्यपायोऽभव-
त्पायात्सा निखिलं हि विष्टपलतां संसारझञ्झानिलात् २७
तुषारगिरिकन्यकाकुचतटीपटीराटवी-
विपाटयतु कङ्कटोद्भवकठोरतापं हि सा।
यदीयदरदर्शनादपि गरप्रलीढो हरः
सुखेन घनसारतिसररिपुर्महोग्रः शिवः ॥ २८ ॥

रचयतु शिवं वक्षोजन्मद्वयं द्रुहिणोज्ज्वल-
स्कनककलशलिङ्बीजं तन्निशुम्भरिपोर्धिरम्।
तदपि च मुहुर्दर्शं दर्शं कपालिकरोच्छ्रित-
प्रखरनखरप्राञ्चचन्द्रोदयोऽपि भवत्यहो ॥ २९ ॥

दूरीकरोतु दुरितानि पुरारिदार-
वक्षोजशैलमिथुनं जितमन्दराद्रि।
येनाभवद्भवमनोऽर्णवतः प्रमोद-
पीयूषमत्र हुतमन्मथजीवनाय ॥ ३० ॥

अपारां संपत्तिं दिशतु कुचरत्नक्षितिधरः
समुत्तुङ्गस्थानं सुमनस उमे ते मम चिरम्।
यदीये मूर्ध्नि श्रीगलकरनखालिद्युतिभर-
स्फुरद्गङ्गाभङ्गा इह हि विहरन्त्येव सततम् ॥ ३१ ॥

तं कासरासुरविमर्दसमुत्थशोण-
शोणार्द्रशोणितकणं स्तनमम्बिकायाः।
वन्देऽमरेन्द्रकरिणः कृतशिल्पचित्रं
यच्चुंभुहृद्यपि कटं स्तरणीबभूव ॥ ३२ ॥

उद्दामद्विपकुम्भदर्पदमनं प्रालेयशैलाङ्गजा-
वक्षोजद्वयमत्र भद्रमनिशं धत्तां ममाप्राकृतम्।
यच्छ्रीकण्ठकठोरकोटिनखरश्रेणीसृणिस्थापन-
प्रद्योत····धुभाजनं समभवत्पुष्पायुधायोधने ॥ ३३ ॥

सौवर्णाचलसानुसंमितकुचद्वन्द्वं भवान्याः स्तुमः
सेनानीस्फुरितद्विवेदरसनासंसर्पमच्छायितम्।
ईशो नैजकरोरुभूषणगणं मत्वेति भूयस्तरा-
मादातुं यतते यदीयशिखरप्राग्भारपाणिभ्रमः ॥ ३४ ॥

मालूरद्रुफलप्रदर्पशमनं प्रालेयभूमीधर-
प्रत्युत्प्रतिपक्षबीजमपरं दुर्गास्तनाद्रिद्वयम्।

यन्नोगैकदृशः पिशाचनृपतेर्वक्षःस्थले जाग्रती
चित्रा कापि विसंस्थुला नमत तत्कण्डूरखण्डाभवत् ॥ ३५ ॥
दिग्दन्तावलकुम्भमौक्तिकमणिश्रेणीक्रमेणीदृशः
शर्वाण्याः कुचगुच्छयुग्ममवतात्संसारतापाद्द्रुतम् ।
यस्योपान्तसमुत्पतत्पशुपतिव्यालोलसाभिस्फुर-
छीलापाङ्गतरङ्गभ्रङ्गसुभगैः शृङ्गाररङ्गायितम् ॥ ३६ ॥
स्मराराते: स्वान्तभ्रमकटकुमुदं मोदयति यो
हृदाकाशस्थस्वद्दहनयनाब्जं मुकुलयन् ।
दधत्कूचं लक्ष्म प्रकटयति चक्राह्वयुगलं
निहन्त्वद्रेः कन्याकुचविधुरघध्वान्तपटलीम् ॥ ३७ ॥
प्रालेयाचलकन्यकाकुचतटीपाटीरमोट्टायितां
पापाटोपकठोरकष्टपटलान्यापाटयन्तीं स्तुमः ।
यत्रापीनपिनाकपाणिकठिनोरःपीठकण्ठोल्लुठ-
व्यालालीवलयावलेखमकरोदालिङ्गनेऽन्योन्यतः ॥ ३८ ॥
मातः पर्यभिवादये सुरपुरोद्यानान्तरालोल्लस-
द्रूजन्यप्रसवासवावसथमुद्वक्षोजकोषद्वयम् ।
यस्यान्तः परमेश्वरस्य करतः संमर्दनव्यापृतौ
भूतिः संसरति क्षपापरिवृढार्भप्रेङ्ख्यचूडामणेः ॥ ३९ ॥
परिधीमहिते कुचस्थलीं मणिकान्तिद्युनदीनभःस्थलीम् ।
शिवपाणिनखेन्दुमण्डलीं निजमौलौ विनिधाय या स्थिता ॥ ४० ॥
मातुर्नौमि पयोधरौ त्रिजगतामारम्भकुम्भौ शुभौ
मावत्कौ भुवि तौ भवप्रियतमे भाव्यक्षतौ भासुरौ ।
यौ श्रीकण्ठकरप्रवालल्लतिकामूर्धस्फुरत्पल्लवौ
पङ्कद्विरदाननाननवनोज्जन्माभिलीढौ चिरम् ॥ ४१ ॥
वक्षःपीठे पटाढ्यं सितविबुधधुनीनिर्झरैश्चाभिषिक्तं
मातर्वक्षोजराजं श्रितपविमणिरुक्चामरं ते नमामि ।

छत्रं क्षीरं पिपासोर्निटिलशशिकलां यत्र पुत्रस्य मत्वा
दुर्गाधीशो महेशः करमपि स ददौ तत्स्थमाराभितुन्नः ॥४२॥

पटासक्तं वक्षोजनियुगमपूर्वं गिरिपतेः
सुकन्ये मन्ये ते नवसुभगसारिद्वयमिति ।
यदुत्तुङ्गोत्सङ्गे मृगधरधराक्षानुसरणं
कराब्जव्यापारैः सममनिशमुन्मूलतितराम् ॥ ४३ ॥

धयत्येतौ धाता जगदखिलमेतद्रचयितुं
तथा पातुं विष्णुः पिबति हरजाये तव कुचौ ।
इति प्रेक्षं प्रेक्षं स्वयमपि हरो मर्दयति तौ
जगत्संमर्दायाभ्यसति किमु विद्यामभिनवाम् ॥ ४४ ॥

भवेतां क्षेमाय स्मरहरवधूरोजकरिणौ
ययोरेका रोमावलिकपटशुण्डाद्भुतकरी ।
महादेवस्वान्तप्रचुरतरकासारगतया
यया तद्व्यापाराम्बुजमपहृतं क्रीडनविधौ ॥ ४५ ॥

उदञ्चन्तौ मातस्तव कुचहरी हृद्दरीमुखा-
त्कुरङ्गानां तारौ शिवहृदटवीसीमनिहताम् ।
निहत्यैनःश्रेणीमददुरधिरोहद्द्विपपातिं
प्रकुर्वाणौ मुक्तावलिमयमिदं यौ त्रिभुवनम् ॥ ४६ ॥

तवेमौ वक्षोजौ वृजिनहरणौ दिव्यहरिणा-
वहं ध्याये मातर्दितिजतृणराश्यग्रचरौ ।
विरूपाक्षस्वान्तोपवनवरयात्रा चिरतरं
ययोरस्ति स्माराभिधशबरधाटीव्यतिकरे ॥ ४७ ॥

दृढं कूर्पासेन प्रतिपिहितमुर्वीधरसुते
भवानि त्वद्वक्षोरुहयुगलमीडे तदनिशम् ।
स्मरन्तं वैरं तं स्मरमपरमासाद्य सुहृदं
स्थितं संलीयेति व्यथयति हरो यत्पटगृहे ॥ ४८ ॥

वक्षस्तटक्षुवरसंस्थमुमे कुचं ते
तं नीलकण्ठपरिलिङ्गितभोगमीडे।
यत्रेश्वरस्य मनसस्तव रूपमेवे-
त्याकल्पकल्पनमभूदविलोकनेन ॥ ४९ ॥
घनं वक्षोजं ते नव[न]वहिरण्याकृतिधरं
नुमस्तं प्रह्लादावलिजनकमद्रीश्वरसुते।
यदीयाभोगेऽस्मिन्ननुपमनखालिव्रणततिः
स्फुरत्याकल्पं श्रीगलकपटकण्ठीरवकरैः ॥ ५० ॥
वर्धिष्णुर्बलिमस्तकस्थितपदो वक्षःकृतश्रीः सुखं
कुर्यान्नस्तुहिनावनीधरसुते वक्षोजविष्णुस्तव।
विष्णुः शंभुहृदीति वाक्यममलं सत्यं विधातुं स्वयं
यस्तूर्णं कृतसंस्थितिर्विजयते तस्यैव हृन्मन्दिरे ॥ ५१ ॥
मनस्तिमिरशान्तये प्रतिपदं कुचार्कद्वयं
भवानि तव चिन्त्यते हृदयदेववर्त्मस्थितम्।
विकासयति संततं शिवमनःसरोजं परं
यदेव दिवसे कथं व्यथयतीह कोकानहो ॥ ५२ ॥
स्मरान्तकरवल्लभे तव पयोधरश्रीफल-
द्वयं स्मरति यो जनः स भवतीह सच्छ्रीफलः।
इतीव किल बोधयन्स्मृतभवत्कुचश्रीः स्वयं
समुद्रमथने पपावपि गरं हरः श्रीफलः ॥ ५३ ॥
स्मृता तव कुचद्वयी तुहिनशैलबाले हर-
त्यसावचमरं भवप्रियतमे नृभिः कैरपि।
इतीव हृदि तां दधौ विधिशिरोविभेदोद्भवं
प्रचण्डवृजिनावलीकवलितः कपाली ध्रुवम् ॥ ५४ ॥
उच्चैरुच्चैः पदं या नयति गुरुतरं वर्धयत्येव भोगं
भूभृत्सत्तां तनोति क्षितिधरतनये त्वत्कुचश्रीः श्रिये नः।

यद्दीक्षाभिः कपर्दी प्रथमपरिवृढो भैक्ष्यवृत्तिः कपाली
सोऽपि श्रीमान्विचित्रं सपदि च जगतामीश्वरोऽभूत्सुखेन ॥ ९५ ॥

वक्षःस्थं दितिजरिपोस्तवाभिवन्दे
तारुण्योदधिजमुरोजकौस्तुभं तम् ।
यत्स्थाने स्मरजनकं महो हि किंचि-
त्संमोहं सपदि महेशितुश्चकार ॥ ९६ ॥

तारुण्याम्भोधिजन्मा दलितसुमकरः कामदस्ते प्रकामं
कामं यच्छत्वपर्णे पृथुहृदयजनुः पारिजातद्रुजातः ।
दैत्यघ्नातातपघ्नः पदगतजगतीं छायया स्वे रसौघे
रक्षंस्तृप्तिं च कुर्वन्भवहृदयमहानन्दने नन्दते यः ॥ ९७ ॥

मातः स्तन्यमधुस्तनस्थमनघं यच्छत्वजस्रं तव
प्रौढोल्लासमखण्डितं पशुजनुःपाशच्छिदं सुन्दरि ।
यत्पानं गणपे प्रकुर्वति शिशौ चेतोदृशौ पश्यतः
शंभोर्मुग्धमभूद्बभूवतुरहो व्याघूर्णिते च क्षणात् ॥ ९८ ॥

शैलेन्द्रापालबाले नुम इह विबुधप्राणजीवातुमूर्तिं
क्षीरोदन्वत्प्रभूतं भवगदहमुरोजन्मधन्वन्तरिं ते ।
यस्योपास्तिप्रभावात्पितृगहनगतो वासुकिं कालकूटं
कण्ठे बिभ्रच्च शूली नयनगहुतभुक्सोऽपि मृत्युंजयोऽभूत् ॥ ९९ ॥

चञ्चन्नीलाभचोलीसलिलदपटलीलीनमम्लानमाला-
लोलालपङ्कं दधानं धरणिधरसुते नौमि ते तं कुचेन्दुम् ।
यस्यालोकैर्विनिद्रं भवति भवमनःकैरवं हर्षितं च
क्षीरासारामृतौघं रसवदनमुखैः पातुकामैश्चकोरैः ॥ ६० ॥

क्षीराशसंसकलकामदमावके ते
वक्षोजनुः सुरभिरूपमकं निहन्तु ।
यत्पातृषण्मुखगजास्यहरीन्द्रमुख्या
वत्सा रसस्थरसनावसनैर्विरेजुः ॥ ६१ ॥

विचित्रालेखाढ्यं समरदसुचातुर्यकलितं
दधे मातस्त्वं ते हृदि हृदयजैरावणमहम्।
यदीयाञ्चद्रोमावलिकपटशुण्डा शिवमनः-
सरोजं तच्चक्षुः सरसि परिविश्यैव हरति॥ ६२॥
भगवति तव वक्षोजन्मरम्भास्वरूपं
शुकहृदि सुफलस्य भ्रान्तिदं दर्शनेन।
दिशतु मम शिवं तन्नृत्यतीशस्य चेतः
कमलमिव सुधर्मा दिव्यदेशे चिरं यत्॥ ६३॥
उदग्रग्रीवं तेऽविरलमसृणं नौमि गिरिजे
सुवृत्तं हीरोद्यन्मणिरुचमुरोजेन्द्रतुरगम्।
पयः पातुं श्लिष्टद्विरदमुखपङ्कजवदना-
न्यपश्यत्स्तेशो गणपतिपिता यत्र सहसा॥ ६४॥
दितिजजनविनाशकं नमस्ते भगवति कुचकूटकालकूटम्।
यदिह हृदि हरस्य कण्ठलग्नं किमिति मदन्यदितीर्ष्ययावतस्थे॥ ६५॥
कर्पूरकुङ्कुमसुनाभिजचित्रलेखं
मन्ये कुचं वलयितं जननीन्द्रचापम्।
यस्योद्भवे स्मररिपोः प्रववर्ष शंभो-
रानन्दजाश्रुसलिलं नयनाम्बुवाहः॥ ६६॥
शर्वाणि ते तरुणिमोद्गमसिन्धुजातं
मन्ये कुचं दरमहं वृजिनावलिघ्नम्।
यं कुर्वतो निजकरे शशिशेखरस्य
जातः सदैकजनकत्वपदेऽभिषेकः॥ ६७॥
धराधरसुते सुतत्रिदशपेयमाशास्महे
तव स्तनजनुःसुधारसमसारसंसारहम्।
स्मरामि नयनोज्ज्वलज्ज्वलनजालदग्धोऽप्यसा-
वनङ्ग इह यत्पदे कृतपदेन संजीवितः॥ ६८॥

अलमलममलोहैः श्लोकजालैः कवेस्तै-
र्यदिदमखिलमेतैः क्रीतमेवास्मदीयम्।
पुनरपि यदि चैवं वर्ण्यते तर्ह्यहं स्यां
तदपि भवतु चेत्किं पारितोषीयमस्य॥ ६९॥

इत्याकर्ण्य वचो विचार्य च चमत्काराञ्चितं चेतसि
श्रीदेव्याश्चकिताः प्रभोः प्रणिधयश्चक्रुस्तथा तैः परम्।
भूयः किंचिदुदञ्चितस्तबकया वाचेदमन्विष्यते
यच्चोक्तं किल पारितोषिकमिति स्यात्किं तदुक्तं वद॥ ७०॥

स्तोत्रं गृहीतमनघं स्तनपाललक्ष्म्या
शुल्कं मदीयमखिलं हि मयास्य दत्वा।
शिष्टाहमस्मि मदभेदमनर्घमेतं
दास्यामि तस्य परितोषणिकं सुखेन॥ ७१॥

एतदेव कविराजमानसे काङ्क्षितं लसति संततं किल।
अन्यदेकमपि दीयते स्वतः श्रूयतामनुचरेश्वराः स्फुटम्॥ ७२॥

इति स्तनघटस्तवं पठति यस्तु चण्ड्या मम
प्रसन्नहृदयः प्रियो भवति मे सदा सूनुवत्।
कविर्भवति भूमिपस्तुतवचःप्रपञ्चः क्षितौ
लभेत किल वाञ्छितं सहृदि सुन्दरीणां सरः॥ ७३॥

मदीयचरणाम्बुजे भवति भक्तिभाजां प्रभुः
क्षितीशमुकुटस्थितप्रसवपूज्यपादाम्बुजः।
अनेकनवपद्मिनीस्तनगिरीन्द्रकान्तिच्छटा-
जटालहृदयान्तरो(रः) [सद]सि संस्थितो राजते॥ ७४॥

यः श्रद्धया मम घनस्तनकुम्भलक्ष्म्याः
स्तोत्रं पठेत(?) किल संशृणुयात्सलोकः।
गीर्वाणवामनयनानयनारविन्द-
जालप्रभासरणिकज्जलतामुपैति॥ ७५॥

वाक्कायचित्तकरणप्रकृतिस्वभाव-
बुद्ध्यात्मभिः सदसतोरपि संगमेन।
यद्यत्कृतं यदपि भाव्यमशेषमात-
र्यद्यत्करोम्यखिलमस्तु तवार्पणं तत् ॥ ८३ ॥

इति श्रीमदत्रिगोत्रमाणिक्यसामगोपनामकवेणीमाधवाचार्यसुतरसालंकारपारावारपारीणलक्ष्मणाचार्यकृता श्रीचण्डीकुचपञ्चाशिका संपूर्णा ॥

---

## श्रीविद्यावागीशकविविरचितं[1]

## कौन्तेयवृत्तम्[2]।

### प्रथमः सर्गः।

दिश्युत्तरस्यां निकषा हिमाचलं चकास्ति शैलः किल गन्धमादनम्।
अन्वर्थमुद्रां निजनाम्नि योजयन्प्रसूनसंपत्तिविसारिसौरभैः ॥ १ ॥
सिञ्चन्ति चेतः सुखवृत्तिधारया यत्कन्दराभ्यन्तरवासिनश्चिरम्।
मुञ्चन्ति किं चानुचिताः सनातनीर्निरन्वयं बन्धनवासनाः सैमाः[3] ॥ २ ॥
सदा सदारैरनुदारमानसैर्मुदा यदारामविहारसादरैः।
सैनादनालोकितभानुभानुभिर्विद्याधराद्यैरतिनीयते तपः ॥ ३ ॥
गाढं परिष्वज्य रसार्द्रसुन्दरीरासां पिबन्तो रदनच्छदामृतम्।
हिमागमे यत्र हि मायता दरीरध्यासते धन्यतरा निरन्तरम् ॥ ४ ॥
अधिश्रयन्तो यदधित्यकावनं न शाखिनः किं परिणाहशालिनः।
करम्बितास्तारकमौक्तिकश्रिया स्फुरन्ति नित्यं निशि पुष्पिता इव ॥ ५ ॥
शृङ्गाणि यस्मिन्निशि भान्त्यनारतं विचित्ररत्नप्रचुराणि कानिचित्।
विसृत्वरैरूर्ध्वमुखं मरीचिभिः किर्मीरयन्त्यन्तिकतारकागणम् ॥ ६ ॥

---

१. अस्य श्रीविद्यावागीशकवेर्देशकालौ न ज्ञायेते, परंतु समाप्तिलेखे 'माधवभट्टतनय' 'भट्टाचार्य' इति त्रुटिपूरणस्योपलभ्यमानत्वेन भट्टाचार्यपदस्य वङ्गेषु प्रसिद्धत्वेन वङ्गदेशः कदापि भवेत्. मातापितरौ तु सर्गसमाप्तौ 'रमामाधवौ' स्वयमेव स्तवीति. २. अस्य काव्यस्य पुस्तकमेकमेव शुद्धप्रायं सप्तपत्रात्मकं प्राचीन श्रीकृष्णचन्द्रभट्टैः काव्यमालार्थं प्रत्तमिति तेषामुपकारवर्णनेऽशक्तास्ताश्चिरायुष्ट्वाशिषा योजयामः. ३. सर्वा इत्यर्थः. ४. सदा इत्यर्थः.

वाक्कायचित्तकरणप्रकृतिस्वभाव-
बुद्ध्यात्मभिः सदसतोरपि संगमेन।
यद्यत्कृतं यदपि भाव्यमशेषमात-
र्यद्यत्करोम्यखिलमस्तु तवार्पणं तत् ॥ ८३ ॥

इति श्रीमदत्रिगोत्रमाणिक्यसामगोपनामकवेणीमाधवाचार्यसुतरसालंकारपारावारपारीणलक्ष्मणाचार्यकृता श्रीचण्डीकुचपञ्चाशिका संपूर्णा ॥

---

## [1]श्रीविद्यावागीशकविविरचितं

# [2]कौन्तेयवृत्तम्।

### प्रथमः सर्गः।

दिश्युत्तरस्यां निकषा हिमाचलं चकास्ति शैलः किल गन्धमादनम्।
अन्वर्थमुद्रां निजनाम्नि योजयन्प्रसूनसंपत्तिविसारिसौरभैः ॥ १ ॥
सिञ्चन्ति चेतः सुखवृत्तिधारया यत्कन्दराभ्यन्तरवासिनश्चिरम्।
मुञ्चन्ति किं चानुचिताः सनातनीर्निरन्वयं बन्धनवासनाः [3]समाः ॥ २ ॥
सदा सदारैरनुदारमानसैर्मुदा यदारामविहारसादरैः।
[4]सनादनालोकितभानुभानुभिर्विद्याधराद्यैरतिनीयते तपः ॥ ३ ॥
गाढं परिष्वज्य रसार्द्रसुन्दरीरासां पिबन्तो रदनच्छदामृतम्।
हिमागमे यत्र हि मायता दरीरध्यासते भन्यतरा निरन्तरम् ॥ ४ ॥
अधिश्रयन्तो यदधित्यकावनं न शाखिनः किं परिणाहशालिनः।
करम्बितास्तारकमौक्तिकश्रिया स्फुरन्ति नित्यं निशि पुष्पिता इव ॥ ५ ॥
शृङ्गाणि यस्मिन्निशि भान्त्यनारतं विचित्ररत्नप्रचुराणि कानिचित्।
विसृत्वरैरूर्ध्वमुखं मरीचिभिः किर्मीरयन्त्यन्तिकतारकागणम् ॥ ६ ॥

---

१. अस्य श्रीविद्यावागीशकवेर्देशकालौ न ज्ञायेते, परतु समाप्तिलेखे 'माधवभट्टतनय' 'भट्टाचार्य' इति त्रुटिपूरणस्योपलभ्यमानत्वेन भट्टाचार्यपदस्य वङ्गेषु प्रसिद्धत्वेन वङ्गदेशः कदापि भवेत्. मातापितरौ तु सर्गसमाप्तौ 'रमामाधवौ' स्वयमेव स्तवीति. २. अस्य काव्यस्य पुस्तकमेकमेव शुद्धप्रायं सप्तपत्रात्मकं प्राचीनं श्रीकृष्णचन्द्रभट्टैः काव्यमालार्थं प्रत्तमिति तेषामुपकारवर्णनेऽशक्तास्ताश्चिरायुष्ट्वाशिषा योजयामः. ३. सर्वा इत्यर्थः. ४. सदा इत्यर्थः.

यत्रास्ति किंचित्पुरुपायितश्रमास्तल्पान्तमध्यास्य शरन्निशान्तरे ।
सलीलमिन्दावरविन्दनालकैः पिबन्ति पीयूषरसं सुराङ्गनाः ॥ ७ ॥
प्रभिन्नसप्तच्छदगन्धिभिर्मदैर्निरस्तविन्यस्तपदैरपि क्रमात् ।
यस्मिन्मदान्धद्विपदर्शनोत्सुका मार्गं मृगेन्द्रा मृगयन्ति मानिनः ॥ ८ ॥
पञ्चापि पार्थास्तु विना धनंजयं पञ्चालभूपालजया जैयान्विताः ।
तीर्थाश्रमारामगतिप्रसङ्गतो गिरीन्द्रमेनं समया समाययुः ॥ ९ ॥
सैंभेदमुन्नादतरं तरङ्गिणं वनानि मञ्जून्यवनानि नेत्रयोः ।
निरूपयन्तस्तदुपत्यकासु ते सुतेजसस्तत्र विचेरुरश्रमाः ॥ १० ॥
विचित्रधातुद्रवनिर्झरस्फुरन्नानामणीनिर्मितरामणीयकम् ।
अन्तर्विलोकोत्कलिकासमाकुलैस्तद्धर्मराजादिभिरारुरुक्षितम् ॥ ११ ॥
अथैकमत्या मिलिता जितश्रमाः प्रपातमार्गानपहाय ते समान् ।
अकृत्रिमेणैव गतागताध्वना नगं तमारोढुमुपोपचक्रमुः ॥ १२ ॥
अथाञ्जसा स्वेदर्पृषन्तिसंततिं मुक्तामणिश्रेणिमिवातिमञ्जुलाम् ।
शिरीषमृद्वी स्तनभारमन्थरा बभार मालाभरणं नितम्बिनी ॥ १३ ॥
स्ववत्सुधे वक्त्रविधौ तथाविधे चलाचले श्वासवलादुरःस्थले ।
सकम्पयोः किं च तदूरुदण्डयोर्मृदुश्रियोः शोणपदारविन्दयोः ।
समाधिमन्तः स्तिमितातिकातराः पेतुश्चतुर्णां मसृणा दृगंशवः ॥ १४ ॥
विलासिनीनामिव चारुवीरुधामथाङ्गहारानुपशिक्षयन्निव ।
वनाधिदेव्या मृदुचञ्चलीकृतात्किं तालवृन्तादुपलम्भमागतः ॥ १५ ॥
समीरणः शीकरसारमुद्गिरन्पराङ्गसङ्गी मकरन्दमेदुरः ।
आनन्दयामास नितम्बिनीमिमां विश्रान्तिमेतेऽपि वितेरुरन्तरा ॥ १६ ॥
तामाश्रयन्तीमथ मन्थरां गतिं तथानुकुर्वन्ननुरागसागरः ।
धर्मात्मजन्मा प्रथमामधित्यकां जगाम यामेन समं सहोदरैः ॥ १७ ॥

---

१. अस्तः क्षितः; नष्ट इति यावत्. २. जयेनान्विताः, अजयायोनिजया वा. ३. नदीसंगममित्यर्थः. ४. पृषन्तिशब्दोऽपि रायमुकुटे स्वीकृतः. ५. आदर्शे सार्धश्लोकेऽङ्को दत्तः.

विधूनयद्भिस्तिमितांस्तनूरुहान्विहंगमैरन्तिकतो निवेदितम् ।
अन्विष्य तस्यां विमलापमाप सा सुधारसं पञ्चतयी सरोवरम् ॥ १८ ॥
अतिप्रकाशेन तलावलम्बिनीं विलोकमानेन कणामणीयसीम् ।
तटस्थलीमाश्रयताप्यनाविलं क्षणं न साक्षात्क्रियते यदञ्जसा ॥ १९ ॥
अजस्रचक्षुःप्रसरावरोधिनो निखातभूमीवदनावलम्बिनः ।
चकासतः स्फाटिकपट्टकस्य यत्तुलामुपास्ते चतुरस्रताभृतः ॥ २० ॥
समस्तमन्तर्गतमस्तसंशयं निवेदयन्नुल्लसितप्रभाप्रभम् ।
जानाति मन्ये जनता सरस्तया समीरणान्दोलितसंवरेण यत् ॥ २१ ॥
विराजिकादम्बनितम्बिनीगिरं रथाङ्गनारीरतिकेलिमन्दिरम् ।
पङ्केरुहस्तोमतिरोहितान्तरं तदन्तिके भाति वरं सरोऽन्तरम् ॥ २२ ॥
नितान्तदीव्यत्कलहंसकध्वनिः प्रतीकचञ्चन्मुकुरोर्जुनोर्मिका ।
मनो हरन्ती रुचिरेव पद्मिनी रसोत्तरेयं सरसी विराजते ॥ २३ ॥
सदारविन्दद्युतिकृत्तसरोहिता समुल्लसच्चञ्चलचारुपुष्करा ।
तिग्मातपोत्तापतिरस्कृतिक्षमा कादम्बिनी सा सरसीति निश्चयः ॥२४॥
उमेव गौरीयमथापि पार्वतीश्रिया युता किंच हरेस्तनूरिव ।
द्विजैरुपास्यारुणशोणपुष्करा प्रभातवेलेव विभाति निर्भरम् ॥ २५ ॥
लसन्ति चास्यां कमलानि मङ्गलं मृगेक्षणाया वदनं विलोकितुम् ।
तद्देवतायाः कृतमूर्तिसंततेः समुद्गतानीव मुखानि कौतुकात् ॥ २६ ॥
यः सूचयत्यस्य नगाधिराजतां दधाति शैलस्य किलातपत्रताम् ।
सोऽयं विशालोन्मुखसुन्दराग्रणीरन्तस्तयोरस्ति पुराणरोहिणः ॥ २७ ॥
निःसंधिसौगन्ध्यसमृद्धिशालिना पर्यन्तविस्तारिपटीरशाखिना ।
निरन्तरं सौरभसारसंक्रमान्निसर्गगन्धां निजभङ्गमापितः ॥२८॥(युग्मम्)
अस्ति प्रशस्तोपलजालकल्पिता तन्मूलमालम्ब्य विशालवेदिका ।
संक्रान्तलक्षच्छदगर्भशोभया विभाति गारुत्मतनिर्मितेव या ॥ २९ ॥

१. संवरं जलम्. २. हसाः, कटकाश्च. ३. मुकुरा बकुलाः, आदर्शाश्च. ४. अर्जुनः ककुभवृक्षः, धवलश्च. ५. ऊर्मिकास्तरङ्गाः, अङ्गुलीयकं च. ६. पद्मिनी स्त्रीविशेषः, कमलवती च. ७. कृत् कारिका, नाशिका च. ८. सरोहिता सरोभ्यो हिता, रोहितेन सहिता च. ९. पुष्करो मेघः, जलं कमलं वा.

अथो मृणालानि मृदूनि कानिचिन्मरन्दसाराणि सरोरुहाणि च ।
आदाय मध्येऽहनि विश्रमाय ते निषेदुरध्यासितसाधुवेदिकाः ॥ ३० ॥
आहर्तुकामो विहितेन हेतुना समानुमत्याप्तरसं रसोत्तरम् ।
भव्ये मृगव्ये विनिधाय मानसं जगाम जङ्घालतयार्जुनाग्रजः ॥ ३१ ॥
महीरुहच्छायमदभ्रमाश्रितं युवानमेकं तृणतृप्तमंसलम् ।
सकृष्णसारं शरपातसंमितां महीमतीत्य स्थितिमन्तमैक्षत ॥ ३२ ॥
स यावदिष्वासनिषङ्गसङ्गिनं विभाव्य भीमं वलते पलायितुम् ।
संधाय बाणं पवमाननन्दनो जगाम तावत्तदुपान्तिके जवात् ॥ ३३ ॥
प्रस्कन्दमानं वसुहस्तपातिनं पश्यन्तमत्यन्तमधीरया दृशा ।
आलक्ष्यलक्ष्यं चलमेनमञ्जसा विभेद भीमो निशितेन पत्रिणा ॥ ३४ ॥
तेने ततस्तेन तदेतदद्भुतं गुणावतंसेन विसारि सौरभम् ।
विचित्रचेतोहरमाधुरीभरं करम्भितं नूनमनूनतेमनैः ॥ ३५ ॥
विभज्य भोज्यं मृदुमेदुरोज्ज्वले शिलातले वल्लभयोपकल्पितम् ।
आस्वाद्य सर्वेऽपि विधाय विश्रमं विहारकासारमुपेयुरुत्सुकाः ॥ ३६ ॥
यथोचितं तान्यवचित्य कौतुकाददूरपद्माकरवारिजानि ते ।
प्रसन्नवारिण्यवसन्नपङ्करे सरोवरे चिक्षिपिरे विलासिनः ॥ ३७ ॥
तस्मिन्भवं ते भजमानमञ्जसा योगेन पद्माकरनामधेयताम् ।
आश्लेषलेशादपि तापभञ्जनं शनैः शनैरेव सरो जगाहिरे ॥ ३८ ॥
पयोभिरुच्चैः करतालचालितैः पाणिद्वयीयन्त्रविनिर्गतैरपि ।
तौ सारसासारसिकेलिसंगरं जायापती विभ्रमतो वितेनतुः ॥ ३९ ॥
तदा रसार्द्रेण हृदा कृतादरावनेकजातीयजलादिकेलिषु ।
श्रियं दधानौ रतिपञ्चबाणयोर्मन्ये जाने जयतः स्म जम्पती ॥ ४० ॥
तत्रारविन्दच्छदभाजि वक्षसा भुजक्षिपाभिश्चरणप्रचारणैः ।
निमग्नभङ्ग्या शयनीयशीलनैस्तैरः कलाकौशलकल्पनैरमी ॥ ४१ ॥
निर्गम्य तस्मात्सरसो रसोत्तरास्ताम्रारविन्दच्छदचारुचक्षुषः ।
आयासनिश्वाससमीरसंगमैरम्यासमामोदमयं विधायिनः ॥ ४२ ॥

---

१. अंसलं पुष्टम्.

हर्षावगाहोद्भवदेहलाघवाः खेलासमारम्भनिबद्धमध्यमाः ।
विश्रामकामां दयितामपीदृशीं निपीयमानाः सुदृशां विशश्रमुः ॥ ४३ ॥
मुदं दधानेन तपानुबन्धिना दिनेन तेनेत्थमुदित्वरश्रियम् ।
सीमानमुल्लङ्घ्य निसर्गनिर्मितां पराबभूवे कतमो न वासरः ॥ ४४ ॥
चित्रार्चिषो रोचिरुदञ्चयन्करैः संकोचयन्कंचन भानुसंचयम् ।
अचण्डचञ्चद्रुचियुग्विरोचनश्चुचुम्ब चूलं किल पश्चिमाचलम् ॥ ४५ ॥
आसन्नविश्लेषमलीमसश्रियां विश्वासमाधातुमिहाम्बुजन्मनाम् ।
समाचरन्सत्यमिवात्मसंगमे दधार मध्येऽग्नि करं स रागवान् ॥ ४६ ॥
दिवाधिकारादपनिद्रपद्मया जगन्ति संतोष्य चरत्करश्रिया ।
दैवादियं संकुचतीति भावयन्नदृश्यतां नूनममन्यतोचिताम् ॥ ४७ ॥
जपावसाने जगतीविलोचनं बद्धा विवस्वन्तमुपासितुं मुदा ।
काले तदा कुड्मलदम्बुजन्मनां(तां) दधुस्तला(मा)मञ्जलयो द्विजन्मनाम् ॥
निर्गम्य माहेन्द्रमहीध्रकंदरादुद्दामभास्वन्मणिमौलिमञ्जुना ।
निपीतकिंचित्पयसा पयोनिधौ न्यमज्ज्यताहीनदिनेन पश्चिमे ॥ ४९ ॥
प्रसादयन्निर्भरमम्बरस्पृशा करेण माहेन्द्रदिगङ्गनामुखम् ।
ततश्चिरोत्कण्ठचकोरचक्षुषामासेचनश्चारु चचार चन्द्रमाः ॥ ५० ॥
ततः प्रसन्ना मुदिते कलानिधौ कुमुद्वतीं योषितमात्ममन्दिरात् ।
पद्मासना सत्वरमेत्य संमुखी शृङ्गारयामास मुदेव नन्दिनी ॥ ५१ ॥
श्रीसंनिधानत्रपया तया समं न प्राप साक्षात्परिरम्भसंभ्रमम् ।
प्रभाभिरेनां परिरम्य निर्भरं प्रमोदयामास परं कलानिधिः ॥ ५२ ॥
नीलैकभागं तदखण्डमण्डलं प्राकल्पि लोकैः किल शुक्तिसंपुटम् ।
गलन्ति यत्तारकवृन्दकैतवात्समौक्तिकानीति गृहीतशुक्तिभिः ॥ ५३ ॥
ते कौमुदीसंगतचन्द्रकान्तस्रवत्सुधानिर्झरमञ्जुनादम् ।
निपीयमानाः किल कीरकण्ठीमालापयन्तो मधुरेति हान्तः ॥ ५४ ॥
यामान्तरोज्जृम्भितवक्त्रचन्द्राः प्रमीलदम्भोरुहचारुनेत्राः ।
तथापि तादृग्विधया समेतास्तिरस्कृतोद्यद्रतिकामदर्पाः ॥ ५५ ॥

१. चित्रार्चिषो वहेः.

मन्दं वहत्युत्पलगन्धवाहे समन्ततश्चन्दनकाननान्तः ।
शिलामिलत्पल्लवतूलिकायां निद्रामवापुः प्रमदार्द्रचित्ताः ॥ ९६ ॥
गोपीकान्तपदारविन्दयुगलीरोलम्बशीलान्तरौ
यं मातापितरौ हितोन्नतिपरौ श्रीमद्रमामाधवौ ।
स्निग्धाशीर्भिरपुप्यतां मधुभिदो भृत्येन तेनाहिते
काव्येऽस्मिन्प्रमदाङ्कवत्यवसितः सर्गोऽयमौपक्रमः ॥ ९७ ॥
इति श्रीविद्यावागीशकृतौ कौन्तेयवृत्ताभिधाने काव्ये भेद्वविहारो नाम प्रथमः सर्गः ।

द्वितीयः सर्गः ।

अथ सुप्तोत्थितानेतानसेवत समीरणः ।
कह्लारसारसुरभिर्धीरो नीरेणुरोत्तरः ॥ १ ॥
तदीयसौरभभरैरुत्तरोत्तरपीवरैः ।
अनाघ्रातचरैस्तेषामञ्जसा हृतचेतसाम् ॥ २ ॥
आनन्दोच्छ्वसदङ्गानां दर्शनोत्कलिकावताम् ।
विषयान्तरसंचारं मनागपि न बिभ्रताम् ॥ ३ ॥
दत्तसादरदृष्टीनामुत्तरायतवर्त्मनि ।
कथंचित्सहमानानां तदालोकविलम्बनम् ॥ ४ ॥
कियतापि क्षणेनेदमभून्नयनगोचरः ।
अभ्यासमेप्यदानीतमनुकूलेन वायुना ॥ ५ ॥(पञ्चभिः कलापकम्)
जघनाभोगभारेण मत्तवारणगामिनी ।
मनोरथेनाभिययौ द्रुतं द्रुपदनन्दिनी ॥ ६ ॥
उत्पक्ष्मणैकलक्षेण चक्षुषा वीक्षमाणया ।
करद्वये तदूर्ध्वाग्रे जगृहे महदेतया ॥ ७ ॥
सौगन्धिकमदो रेजे तन्वङ्गया करधारितम् ।
विकासिनीव राजीवे स्मेरं सरसिजान्तरम् ॥ ८ ॥
प्रकृत्या पुण्डरीकेण सदृशं पाणिपल्लवे ।
धार्यमाणमिदं सद्यो दधे कोकनदद्युतिम् ॥ ९ ॥
तन्मुखाम्भोजकह्लारमन्तरा दृग्द्युतिच्छटा ।
रेजे द्विरेफराजीव राजीवद्वयसंगता ॥ १० ॥

अनुजैः पूजितायेदं प्रेयसे धर्मजन्मने ।
ददौ स्मेराननं सुभ्रूर्मुदा मदिरलोचना ॥ ११ ॥
इदमात्तवतस्तस्य दत्तं दयितया तया ।
विचकास हृदम्भोजमुखाब्जनयनाम्बुजम् ॥ १२ ॥
न स्पर्शेन न रूपेण न सौरभभरेण च ।
तथा तं प्रीणयामास तद्वितीर्णतया यथा ॥ १३ ॥
अथ सौगन्धिकैरेव विहर्तुं विहितस्पृहा ।
सितेनासिञ्चदधरं विवक्षास्फुरितं प्रिया ॥ १४ ॥
प्रेम्णातिशयमग्नेन धर्मराजेन तां प्रति ।
समुन्नीतविवक्षेण वचश्चतुरमाददे ॥ १५ ॥
यत्ते स्मितसुधासिक्तं स्फुरत्यधरपल्लवम् ।
तदिन्दुवदने किंचिद्विवक्षन्तीव लक्ष्यसे ॥ १६ ॥
निजाधीने जने सुभ्रूः किंच संकोचमञ्चसि ।
विपञ्चीवाणि कल्याणि विकासय तदाशयम् ॥ १७ ॥
विन्यस्यन्ती भरं भीमे दृशा कर्णान्तिकस्पृशा ।
जगाद मधुरस्निग्धं तमवन्ध्यमनोरथा ॥ १८ ॥
नाथ निर्मातुमिच्छामि साधुसौगन्धिकस्रजः ।
कान्त कामं मम स्वान्तमेतैः खेलितुमीहते ॥ १९ ॥
दृशैवाशयमुन्नीय तस्या धर्मानुजन्मना ।
वितेने सूनृता वाणी मन्वानेनात्मनो जयम् ॥ २० ॥
चारुकह्लारसंभारं मुदे हृदयदेवते ।
अहं समाहरिष्यामि हंसमालासमत्विषम् ॥ २१ ॥
इत्युक्त्वा वन्द्यमानस्य पवमानात्मजन्मनः ।
गदायुद्धप्रसिद्धस्य बलसंपत्तिशालिनः ॥ २२ ॥
प्रस्थानं भीमसेनस्य प्रयुञ्जानः शुभाशिषम् ।
अनुमेने धर्मसूनुः सत्यवादिधुरंधरः ॥ २३ ॥

अथ प्रतस्थे परितः पादपान्प्रक्षिपन्पदा ।
पार्थः पन्थानमपथे प्रथयन्पवनोपमः ॥ २४ ॥
कियद्दूरमतिक्रम्य स शूरस्तनिताकृतिम् ।
निरुध्य सरणिं सन्तं हनुमन्तमलोकत ॥ २५ ॥
मुञ्च पन्थानमित्युक्तो नाहं चलितुमुत्सहे ।
त्वमेव मामितः क्षिप्रं क्षिपेति छद्मनाब्रवीत् ॥ २६ ॥
गिरिं गृहीत्वा भूतार्थी यत्नैः क्रमविवर्धितैः ।
मनागपि स्पन्दयितुं न क्षमः प्रणनाम तम् ॥ २७ ॥
गम्भीरकरुणाम्भोधेः प्रकाशितनिजाकृतेः ।
तस्माद्विदितवृत्तान्तः श्रीदपद्माकरं ययौ ॥ २८ ॥
अन्तरायतया प्राप्ता यक्षा रक्षाधिकारिणः ।
क्षणेन भीमसेनस्य गदया विकलीकृताः ॥ २९ ॥
तमुपद्रवमाकर्ण्य धनदः प्राहिणोन्मुहुः ।
कटकं तमहो भीममरुत्तृण्यामिवाक्षिपत् ॥ ३० ॥
अथ स्वयमुपायातः कुबेरः परिचिन्त्य तम् ।
पूजयामास संपत्त्या तत्कार्यं चान्वमन्यत ॥ ३१ ॥
अवन्ध्यवीक्षणास्त(त्त)स्मादधिगम्य प्रभाविताम् ।
सौगन्धिकान्युपादाय यथेच्छमथ सोऽभ्ययात् ॥ ३२ ॥
ततस्तेन समागम्य त्रयस्ते पाण्डुनन्दनाः ।
पाञ्चाली प्रमदं पूर्णमवापुः सिद्धलालसाः ॥ ३३ ॥

गोपीकान्तपदारविन्दयुगलीरोलम्बशीलान्तरौ
यं मातापितरौ हितोन्नतिपरौ श्रीमद्रमामाधवौ ।
स्निग्धाशीर्भिरपुष्यतां मधुभिदो भृत्येन तेनाहिते
काव्येऽस्मिन्प्रमदाङ्कवत्यवसितः सर्गो द्वितीयः शुभः ॥ ३४ ॥

इति श्रीविद्यावागीशकृतौ कौन्तेयवृत्ताभिधाने काव्ये सौगन्धिकाहरणो नाम द्वितीयः सर्गः ।

समाप्तमिदं कौन्तेयवृत्ताभिधानं काव्यम् ॥

---

## श्रीमदुत्प्रेक्षावल्लभकविरचितं

# सुन्दरीशतकम् ।

जयति विलासवतीनां नेत्रप्रान्तावलोकनप्राणः ।
वदनेन्दुद्युतिसदनः सितमाध्वीमेदुरो मदनः ॥ १ ॥
सहृदयहृदयग्राह्यं मदनमहीपालशासनादेव ।
विरचयति सुन्दरीशतमुत्प्रेक्षावल्लभः सुकविः ॥ २ ॥
चन्द्राधिकरुचयोऽपि क्षालनशुचयोऽपि चन्द्रकान्तेन ।
सुन्दरि तव नखमणयो न नयो यत्तापयन्ति मनः ॥ ३ ॥
वरवर्णिनि तव चरणौ कस्य न हृदयानुरञ्जनं कुरुतः ।
परमेष्ठिनोऽतिनिष्ठुरपाणितलस्पर्शतस्ताम्रौ ॥ ४ ॥
सुन्दरि जङ्घायुगमिदमुपासनस्तम्भविभ्रमं धत्ते ।
इषुभिरतनोर्मनो मे विद्धं यल्लग्नमात्रमिह ॥ ५ ॥
सुन्दरि काञ्चनकदली कर्पूरोत्पत्तिशालिनीत्यनया ।
चन्द्रोद्वर्तनसुरभिस्तवोरुरुपमीयते कविभिः ॥ ६ ॥
विपरीतरतसमुद्यमपुलकप्रथमानमांसलाभोगम् ।
सुरतसुखैकनिधानं सुन्दरि जघनस्थलं जयति ॥ ७ ॥
वलिभिर्वन्धमकस्मादुपेत्य मध्यस्तनूभवत्यस्याः ।
आनन्दीति नितम्बः समुन्नतिं निर्भरं धत्ते ॥ ८ ॥
अम्बरचुम्बिनमेनं नितम्बमधिरुह्य मुग्धनयनायाः ।
दूरात्पश्यति यूनां मनांसि पाटच्चरो मदनः ॥ ९ ॥

---

१. अस्य कवेर्देशो न ज्ञायते. गोकुलनाम्नश्चास्योत्तमकाव्यनिर्मितेः 'उत्प्रेक्षावल्लभ' इति नाम जातमिति चरमश्लोकतो ज्ञायते. आदर्शपुस्तकसमाप्तौ 'चिन्तामणिभट्टनामधि-पयन्—'अनलशरस्वरचन्द्रे वर्षे माघस्य शुक्लशुभषष्ठयाम् । गुरुवारे रेवत्यां संपूर्णं सुन्दरी-शतकम् ॥' इत्युपलभ्यते. तथा च विक्रमसंवत् १६५३ (खिस्ताब्दाः १५९७) समयः स्फुट एव. २. अस्य काव्यस्य पुस्तकं लेखकेन शुद्धं जीर्णं प्राप्तम्. तच कदाचित्कवि-समयलिखितमेव भवेत्.

अस्मिन्प्रकृतिमनोज्ञे लग्ना प्रायेण मान्मथी दृष्टिः ।
सुन्दरि यतो भवत्याः प्रतिक्षणं क्षीयते मध्यः ॥ १० ॥
या तव गात्रे यौवनतपनरथारोहनेमिनवरेखा ।
सुन्दरि सैव जनानां जनयति रोमावलिभ्रान्तिम् ॥ ११ ॥
स्मरविपुरःसरीकृतयौवनमायातमभिमुखं सुतनोः ।
आलक्ष्यते यदेषा रोमालिच्छत्रतश्छाया ॥ १२ ॥
सुतनोरियत्प्रदेशे तिष्ठतु नवरोमराजिभुजगीति ।
त्रिवलित्रिसत्यरेखा वयःफणिग्राहिणाकारि ॥ १३ ॥
वक्षसि सुमुखि भवत्या मनोहरं कान्तिमण्डलं जयति ।
भ्रामितमभिनववयसा कामनृपादेशचक्रमिव ॥ १४ ॥
वयसा कुम्भकृतास्याः परिभ्रमत्कान्तिमण्डलच्छलतः ।
अभ्रमि किमुरसि चक्रं कुचकुम्भं कर्तुकामेन ॥ १५ ॥
कृतचन्दनाङ्गरागो मदनसखः श्रीफलद्वेषी ।
सुन्दरि सुवर्णवर्णो वक्षोजः कीदृशो रुद्रः ॥ १६ ॥
करनखललितभुजायाः पल्लवकुसुमाभिरामलतिकायाः ।
अनयोर्विशेषदर्शी सुन्दरि कुसुमेषुरेवैकः ॥ १७ ॥
यस्य स्वरेण विजितः प्रिये पिकोऽभूद्वनप्रियः सपदि ।
उपमामुपैतु शङ्खः कण्ठे तस्मिन्निभित्वेन ॥ १८ ॥
वदनमिदमृतमयमिति न तर्कितं किं तु तत्प्रमितम् ।
मुग्धे दग्धरतिप्रियजीवनमेव प्रमाणमिह ॥ १९ ॥
इन्दोरखण्डमण्डलनिर्यत्पीयूषमृष्टरसनो यः ।
अधरदलं तव सुन्दरि वर्णयितुं कल्पते यदि सः ॥ २० ॥
सुन्दरि तव दृक्तुलनामारोढुं विकसितं सरोजेन ।
विधिना तदैव दत्तं परागविपत्तो मुखेऽस्य रजः ॥ २१ ॥
लोचनयोः श्रीभृतयोः कर्णान्तिकवासिनोः पृथुक्रमयोः ।
अनयोस्तन्वि किमुचिता वद परहृदयापहारिणी रीतिः ॥ २२ ॥

सुन्दरि तव नयनाम्बुजभालकलानाथखण्डयोर्मध्ये ।
अन्योन्यकलहशान्त्यै भ्रुकुटिभ्रमरावली व्यरचि ॥ २३ ॥
तव नयनवारिरुहयोः संकोचो भालचन्द्रमुद्वीक्ष्य ।
मा भूदिति कमलभुवा भ्रूलेखा व्यरचि किं मध्ये ॥ २४ ॥
तव निर्मलौ कपोलौ सौन्दर्यासारसुन्दराभोगौ ।
किं वर्णयामि सुन्दरि चुम्बनयोग्याकृती कृतिनः ॥ २५
सीमन्तिनि तव कुटिलस्निग्धायतमेचकः कटाक्ष इव ।
हा हन्त केशहस्तो हृदयं हस्ताद्विहस्तयति ॥ २६ ॥
युवजनमारणशाला सुन्दरि वेणीकृपाणिकोपेता ।
तव चरमभङ्गमेतत्कवयित्वा पातकी कः स्यात् ॥ २७ ॥
कुसुमशरनृपनिदेशात्सुतनौ चकितं नवं वयो विशति ।
नवसेवक इव पार्थिवसद्मनि दत्तप्रवेशोऽपि ॥ २८ ॥
शरणमिव याचमानं क्वचित्क्वचिद्बाल्यमङ्गेषु ।
भ्रमति मनोजनिदेशादधिकारिणि यौवने भवति ॥ २९ ॥
कुसुमशरनृपतिशासनमभिनवसौन्दर्यसारसौभाग्यम् ।
युवजनमनोविनोदो जयति प्रथमं वयस्तस्याः ॥ ३० ॥
जयति स्मितप्रकारः स्फुरदधरोपान्तविश्रमस्तस्याः ।
कुसुमाञ्जलिरिव दत्तो नवेन वयसा रतीशाय ॥ ३१ ॥
सुन्दरि तव स्मितेन स्फुरिताधरपल्लवाङ्कमिलितेन ।
मकरध्वजनृपहस्ते वद कस्य मनो न विक्रीतम् ॥ ३२ ॥
अङ्गं कोमलमङ्गादधरोऽधरतोऽपि चन्द्रमुखि वचनम् ।
वचनादपि स्मितं ते तत्कथमन्तर्भिनत्ति मम ॥ ३३ ॥
अधरदलोपरि निहितं मुक्ताचूर्णं दरस्मितं तस्याः ।
आस्वाद्योच्छूनमिदं मनो मम स्नेहमभिलपति ॥ ३४ ॥
सललितमुखमवधीरितचेलाञ्चलमीषदानतग्रीवम् ।
विर्यग्विलोकयन्त्या कोऽपि कृती लक्षितः क्रियते ॥ ३५ ॥

तरुणि तरलनयनान्तं वलितग्रीवं वधूतचेलान्तम् ।
भवनद्वारि विशन्त्यास्तव दृष्टं द्रष्टुमुत्कण्ठे ॥ ३६ ॥
पश्यत्यसंमुखं मां मयि पश्यति साथ संमुखीभवति ।
स्मरमेकतोऽवरोहैः श्रमयति कोटिद्वये मौर्वी ॥ ३७ ॥
तव सुन्दरि मधुरसितमेदुरमचक्षुरभिमुखं चक्षुः ।
शरदिन्दुकिरणतुन्दिलकुमुदोन्मुखमधुपमनुहरते ॥ ३८ ॥
सुन्दरि विवृत्य दष्टः कष्टमपाङ्गेन भुजगेन ।
अधरामृतेन जीवति सोऽयमुपायान्तरासाध्यः ॥ ३९ ॥
कुञ्चन्मृदुकरशाखाकृष्टाञ्चलकोणतिर्यगुल्लसितः ।
लक्ष्मीकरोति धन्यं सुन्दरि दीर्घः कटाक्षस्ते ॥ ४० ॥
निष्ठुरपञ्जरकोपे नवसंयमितस्य खञ्जनस्येव ।
गुरुजनसमक्षमक्षिव्यापारो जयति मुग्धाक्ष्याः ॥ ४१ ॥
तव नयनपुण्डरीकात्प्रिये कटाक्षक्रमा विराजन्ते ।
विकसितविचकिलकुसुमात्कुसुमानीवावतीर्णानि ॥ ४२ ॥
किंचिदुदञ्चय चञ्चलमञ्चलमचिरेण लोचनांशुकयोः ।
सुन्दरि कर्णवतंसः कैरवमिन्दीवरं भवतु ॥ ४३ ॥
चक्षुरपाङ्गमपाङ्गः कर्णं कर्णोऽपि दूतिकावचनम् ।
अवधत्ते मम तपसामुदारसारः क्रमः सोऽयम् ॥ ४४ ॥
कातरनयननिवेदितनिर्दयकंदर्पवेदनातिशयम् ।
दृष्टं निखातमन्तः प्रियया प्रस्थानवेलायाम् ॥ ४५ ॥
संसदि सखीजनानां गोष्ठीं कर्तुं पुरः प्रवृत्तायाः ।
गोत्रस्खलनविलक्षं सुन्दरि मुखमीक्षणीयं ते ॥ ४६ ॥
अरविन्दद्युतिशोणं लोचनकोणं सरोजाक्ष्याः ।
प्रणमति मय्यथ सदयं हरिहरि(?) हृदयं न विस्मरति ॥ ४७ ॥
सागसि मयि मन्दपदं पश्चादेत्य स्थिते सरोजदृशम् ।
मुकुरं प्रदर्शयन्त्या तत्सख्या किमिव नोपकृतम् ॥ ४८ ॥

सस्मितमरुणकपोलं रचितभ्रूभङ्गमञ्चितव्रीडम्।
संपृक्तभावरुचिरं वदनं तस्याः स्मरामि सखे ॥ ४९ ॥
ज्ञातासि गृहजनैरिति कथिते संभ्रान्ततारकं दूत्या।
अरुणमपि मानवत्याः स्मरामि पाण्डुभवद्वदनम् ॥ ५० ॥
प्रेमासवोन्मदिष्णोः प्रणयतनीयांसि तानि वचनानि।
करणीयानि न हृदये दयिते यदयं दयावसरः ॥ ५१ ॥
तव विरहानलतप्तं स्नेहकटाहं मदन्तरात्मानम्।
सुन्दरि चन्दनशाखे शीतलय स्पर्शमात्रेण ॥ ५२ ॥
सहचर कुशलं तस्याः कुशलवती कथय किमपि संदिष्टम्।
कं संदिशतु कृशाङ्गी न तत्र मरुतोऽपि यद्गमनम् ॥ ५३ ॥
अवधिदिवसप्रयाणाः प्रियतम तस्या मृगीदृशः प्राणाः।
तिष्ठन्ति कतिपयाहं कृत्वा प्रस्थानमधिकण्ठम् ॥ ५४ ॥
गच्छति वर्षाकाले जलधरपटली यथा यथा रिक्ता।
वर्षति लोचनयुगली तथा तथा पुण्डरीकदृशः ॥ ५५ ॥
नदति कलापिकलापे नवजलदच्छायशान्तसंतापे।
संशयदोलारूढं जीवितमस्याः स्मरेण कृतम् ॥ ५६ ॥
किं वा कृतैः प्रयत्नैरेतैस्तुहिनोपचारसमवेतैः।
उष्णीभवति यदस्याः परितः शीतोऽपि संचरन्पवनः ॥ ५७ ॥
अग्निश्चन्दनलेपो विषममृतं मरणमेव जीवातुः।
सुन्दरि विरहिजनानां काचन लोकोत्तरा रीतिः ५८ ॥
विरहार्तिदलनमौषधमेकं चेष्टासु तासु तादात्म्यम्।
सुन्दरि यस्मिञ्जाते ब्रह्मानन्दोऽपि नाकाङ्क्ष्यः ॥ ५९ ॥
*सुन्दरि रहस्यमालिषु कल्याणी स्फूर्तिरेव तव वेद।*
गोत्रस्खलनभयेन त्यक्ता यद्गौरवी संसद् ॥ ६० ॥
सुन्दरि वसन्तपथिकान्रजनिभुजङ्गी यथा यथा दशति।
तद्विपसंक्रान्तिवशात्तथा तथा क्षीयते दैर्घ्यात् ॥ ६१ ॥

सुन्दरि समुदितशशिकरधौततमा नेयमष्टमी रात्रिः ।
विरहिजनमसितभुजगी विदश्य परिवर्तितोत्ताना ॥ ६२ ॥
पर्यङ्कपार्श्वलग्नां गलदश्रुप्लावितैकभुजमूलाम् ।
अञ्चलसंवृतवदनां तामन्तश्चिन्तयामि चिरम् ॥ ६३ ॥
अश्रुप्लुतमतिकातरमनिमिषमस्पन्दतारकं तस्याः ।
लेखनयुगलं सरतः सरतो मम केवलं भीतिः ॥ ६४ ॥
प्रत्येकमिन्द्रियाणामास्तां भिन्नैव देवतान्यस्य ।
परिणमति मम तु सैका सकलेन्द्रियदेवतात्वेन ॥ ६५ ॥
अयि पथिक रक्ष जीवं परिहर दूरेण केतकीकुसुमम् ।
इह वसति पुष्पधन्वा स्मरहरनयनान्निरातङ्कः ॥ ६६ ॥
तव रथ्या राजगृहं प्रेमधनं किं च परिजनो बन्धुः ।
सख्यो मूर्ताः प्राणाः सुन्दरि किमतो ममाकाङ्क्ष्यम् ॥ ६७ ॥
साहसभवनमदूतिकमवलोकनदानवर्धमानमिदम् ।
जयति कचिदपि धन्ये सुन्दरि सहजं तव प्रेम ॥ ६८ ॥
शितिकण्ठकण्ठकान्तिप्रतिमल्ले स्फुरति सर्वतस्तिमिरे ।
धन्याय वदति सुन्दरि तवागमं परिमलोत्कर्षः ॥ ६९ ॥
मन्त्रो मनसा द्वेषश्चन्द्रमसा हन्त परिचयस्तमसा ।
सुन्दरि तवाभिसारे परिपाटी काचिदन्यैव ॥ ७० ॥
आसारस्नपिते यत्प्रयासि पथि दुस्तरे पयोदजलैः ।
प्राक्तनमुदवासतपः फलोन्मुखं कस्यचित्कृतिनः ॥ ७१ ॥
द्विगुणीकृतान्धतमसं वर्षति रुद्धानिलं पयोवाहे ।
आकस्मिकमागमनं कान्त्यानुमितं सखे तस्याः ॥ ७२ ॥
अतिमन्दवर्षदम्बुदशीकरशिशिरार्द्रसान्द्रवसनायाः ।
आकस्मिकागतायाः कण्ठग्रहणं फलं जनुषः ॥ ७३ ॥
सितवसनमौक्तिकावलिचन्दनचर्चासहायशालिन्याः ।
ज्योत्स्नाभिसारिणि तव च्छाया परिपन्थिनी भवति ॥ ७४ ॥

यावत्पतति न चरणं छाया दुर्वारवैरिणी शिरसि ।
ज्योत्स्नाभिसारवेपः सहचरि नेशः कृतार्थयितुम् ॥ ७५ ॥
वचनरचनैः कृतं तव कितवप्रणिपातमात्रसाध्यायाः ।
अस्या मानकदल्याः फलावसानः परीपाकः ॥ ७६ ॥
भ्रूभङ्गभङ्गिभुग्नं तिर्यक्चललोचनं मुखं दधती ।
सुरतप्रार्थनवेलाकृतावहेला वधूर्जयति ॥ ७७ ॥
विश्लथयति किमपि नीवीं कलकण्ठि रतस्य कूजितं यत्ते ।
शिक्षाविस्मृतिरेषा गुरोरभक्तिं निवेदयति ॥ ७८ ॥
मधुधौतमधुरमधुरं धृतधम्मिल्लं धवे धयति ।
कवलयति किमपि कम्पितकान्ताकरकंकणक्वणितम् ॥ ७९ ॥
अर्चितचण्डीचरणप्रसादफलमन्यदुर्लभं तरुणः ।
सुन्दरि हसितकरम्बितमखण्डपुण्येन खण्डयत्यधरम् ॥ ८० ॥
स्मेरानने मुखं तव सुधानिधेर्मण्डलेन तुलयन्तम् ।
एनं निजाधरसुधादानेन न किं विलक्षयसि ॥ ८१ ॥
निबिडीकृतोरुबन्धं वेल्लितवदनेन्दुनिह्नुतोच्छ्वासम् ।
तस्याः स्मरामि सुरतं तत्करभररुद्धमन्नाभि ॥ ८२ ॥
सस्मिततिर्यग्वेल्लितमुखपर्यन्तप्रकीर्णकबरीकम् ।
अतिभाग्यवान्भवत्याः सुन्दरि पुरुषायितं लभते ॥ ८३ ॥
प्रतिपणितमेकवारं पातुं द्यूते जितं पिबन्नधरम् ।
आवृत्तिद्वयभीत्या नायं निश्नूपते धूर्तः ॥ ८४ ॥
आश्लेषोऽधरदानं चुम्बनमनिमेषवीक्षणं सुरतम् ।
इत्येकैकपणेन क्रीडति मिथुनं जितान्योन्यम् ॥ ८५ ॥
संस्पृष्टपद्मिनीको यथा यथार्कः करान्प्रसारयति ।
सुन्दरि मानवतीयं संकुचति तथा तथा छाया ॥ ८६ ॥
मातः पृच्छति निभृतं सखीजने रजनिकेलिवृत्तान्तम् ।
मन्दस्मितादनायत रहस्यभेदः सरोजास्याः ॥ ८७ ॥

दोरान्दोलनसुभगं नितम्बभरमन्थराङ्घ्रिविन्यासम् ।
तव गजगामिनि गमनं कुरुते यतिचित्तसंयमनम् ॥ ८८ ॥
चरणक्रममनुविलसद्भ्रूयुगविन्यासमानतग्रीवम् ।
नृत्यन्नितम्बबिम्बं गतमस्याः कं न मोहयति ॥ ८९ ॥
चरणतलगलदलक्तकवलत्पदं वर्त्म चकितनयनायाः ।
अनुरागबन्धपद्धतिरियतीति परं निवेदयति ॥ ९० ॥
नतवदनमुन्नतभ्रू पश्यन्ती वदनमूर्मिकामुकुरे ।
सुन्दरि मृदु स्मयन्ती कस्य न नयनं कृतार्थयसि ॥ ९१ ॥
अधरोत्तरासमर्थं मदनपुमर्थं स्मितेन परिपुष्यत् ।
कस्य न करोति कदनं वदनं दष्टाधरं तस्याः ॥ ९२ ॥
त्रिवलीतरङ्गतरलितनखाङ्कमीनं ह्यपाङ्गकैवर्तः ।
तस्यां सुधासरस्यां वलयति रोमालिबडिशेन ॥ ९३ ॥
सुन्दरि तव रोमावलिमुखाग्रनाग्रनखाङ्कलेखेयम् ।
प्रत्यग्रविधृतभुजगी दंष्ट्राकोटिश्रियं वहति ॥ ९४ ॥
दरविकसदम्बुजास्या भाति रवेः संमुखस्थिता नलिनी ।
हिमकरकरोपनीतां कदर्थनां वक्तुकामेव ॥ ९५ ॥
सौधशिखराधिरूढा मन्दानिलकम्पमानवसनान्ता ।
कस्यापि धन्यजनुषः पुण्यपताका परिस्फुरति ॥ ९६ ॥
पुनरुक्तभूषणानां हृदयाभिन्ने निवेद्यमानानाम् ।
सुन्दरि तव चरितानां कथमपि कथया न तृप्यामि ॥ ९७ ॥
अङ्कगतस्तव कुमुदिनि मत्तो मधुपः प्रसुप्त इति मन्ये ।
संभावयति सरोजं यन्न विनिद्रं समागत्य ॥ ९८ ॥
अपकृतये तव पद्मिनि सहवासो भवति हन्त कुमुदिन्याः ।
त्वयि निशि निशि स्वपत्यामनया यन्नीयते मधुपः ॥ ९९ ॥
त्वमधिकगुणासि मालति मल्लीलवलीलवङ्गलतिकाभ्यः ।
सकललतिकानुसारी यया निबद्धः षडङ्घ्रिरपि ॥ १०० ॥

मधुकर तवैव धन्यं जनुरभितो वन्यमन्यदुत्सृजतः।
यस्य प्रेमाबन्धो मालत्यां यत्र तस्याश्च ॥ १०१ ॥
किं कृतमनेन मरुता माधविकाकुसुमसौरभं वहता।
आश्लिष्टभ्रमरीकोऽप्यौत्कण्ठ्यं मधुकरो नीतः ॥ १०२ ॥
स्थास्यति कुवलयकलिका कर्णे तव तावदेव कमलाक्षि।
विकसति न यावदेषा चन्द्रकरस्पर्शदुर्ललिता ॥ १०३ ॥
आश्लिष्य जिघ्र पिब मधु मधुकर तोषोदयाय मालत्याः।
निर्दय सुगन्धिवल्लीरिताश्चरणैः किमाक्षिपसि ॥ १०४ ॥
ईशस्याप्युपकुरुते क्वचित्कलावानिसर्गकुटिलोऽपि।
भ्रूर्भवति चन्द्रलेखा सुन्दरि शंभोस्तृतीयदृशः ॥ १०५ ॥
केतकि तव यदि न कृतं परिशीलनमादरान्महेशेन।
इयता न कापि हानिः सौरभ्याकृष्टमधुपायाः ॥ १०६ ॥
प्रकटितकपटाचारं रथ्यामुखरचितमन्दिरद्वारम्।
युवतीहृदयस्तेनं युवानमेनं नमस्कुर्मः ॥ १०७ ॥
कति कति नात्र युवत्यो जडीभवन्ति स्खलन्ति वेपन्ते।
इदमुदवसितोपान्तं तत्साध्व्यो दूरमुज्झन्ति ॥ १०८ ॥
अधिभवनमुच्चपीठे पामरवध्याहृते सुखासीनः।
अभिलषितमुत्तमर्णः कटाक्षयंस्तामवाप्नोति ॥ १०९ ॥
कुसुमेषुशास्त्रचर्चा सरसहृदां भावनीयं यत्।
तद्यरचि........सुन्दरमुत्प्रेक्षावल्लभेनेदम् ॥ ११० ॥
भारत्यैव क्रियते स्तोत्रैः संतुष्टया द्विजद्वारा।
श्रीगोकुलस्य सुकवेरुत्प्रेक्षावल्लभेत्यभिधा ॥ १११ ॥

इति श्रीमदुत्प्रेक्षावल्लभकविविरचितं सुन्दरीशतकं समाप्तम्।

# श्रीमल्लिकुचिसूरिसूनुनारायणपण्डिताचार्यविरचिता शिवस्तुतिः ।

(सटीका ।)

स्फुटं स्फटिकसप्रभं स्फुटितहाटकश्रीजटं
शशाङ्कदलशेखरं कपिलफुल्लनेत्रत्रयम् ।
तरक्षुवरकृत्तिमद्भुजगभूषणं भूतिम-
त्कदा नु शितिकण्ठ ते वपुरवेक्षते वीक्षणम् ॥ १ ॥

भवस्यान्तः समासीनं भवतापनिवारकम् ।
संकर्षणं समानस्य व्याकरिष्ये शिवस्तुतिम् ॥

स्फुटमिति । हे शितिकण्ठ, मे वीक्षणं ते वपुः कदा न्ववेक्षत इत्यन्वयः । शितिः कण्ठे यस्यासौ शितिकण्ठः तस्य संबुद्धिर्हे शितिकण्ठ नीलकण्ठ । 'शिती धवलमेचकौ' इत्यमरः । मे मम वीक्षतेऽनेनेति कर्तृ ते तव वपुः शरीरं कर्म कदा नु कस्मिन्वा समये स्फुटं यथा भवति तथा । क्रियाविशेषणमेतत् । अवेक्षतेऽवेक्षिष्यते । करणे लो(कर्तृत्वो)पचारः । कीदृशं वपुः । स्फटिकसप्रभं तत् । पुनः । स्फुटितहाटकश्रीजटं स्फुटितं (तत्) संततं तत् हाटकं च सुवर्णं तस्य श्रीरिव श्रीर्यासां ता एवंविधा जटा यस्य तत् । पुनः । शशाङ्कदलशेखरं शशाङ्कस्य दलं शशाङ्कदलं खण्डं शेखरे यस्य शिरोभूषणं यस्य तत् । पुनः । कपिलफुल्लनेत्रत्रयं कपिलं पिङ्गलं विकसितं नेत्रत्रयं यस्य तत् । पुनः । तरक्षुवरकृत्तिमत् । तरक्षोर्व्याघ्रस्य वरा श्रेष्ठा या कृत्तिश्चर्म तदस्यास्तीति । तथा—'व्याघ्रचर्मपरिधानम्' इति रुद्राध्याये । पुनः । भुजगभूषणं भुजगाः सर्पाः ते भूषणमलंकारो यस्यास्तीति । पुनः । भूतिमत् । 'भूतिर्भस्मनि संपदि' इत्यभिधानम् ॥

त्रिलोचन विलोचने लसति ते ललामायिते
स्मरो नियमघस्मरो नियमिनामभूद्भस्मसात् ।
स्वभक्तिलतया वशीकृतवती सतीयं सती
स्वभक्तवशतो भवानपि वशी प्रसीद प्रभो ॥ २ ॥

त्रिलोचनेति । त्रीणि लोचनानि यस्यासौ त्रिलोचनः तस्य संबोधनं हे त्रिलोचन । ते तव विलोचने ललामायिते रत्नवदाचरिते विशिष्टे तृतीयनेत्रे लसति भासमाने सति स्मरः कामः भस्मसात्कृतः भस्म संपद्यत इति भस्मसात् अभूत् । किंलक्षणः । नियमिनां नियमवतां नियमस्य घस्मरो नाशकः । इयं सती साध्वी सती उमा स्वभक्तिरेव लतानया त्वां वशीकृतवती वशीचकार । भवान् वशी स्वतन्त्रः तथापि स्वभक्तवशतः स्वकीया भक्तास्तेषां वशतोऽधीनत्वतः त्वं मह्यं प्रसीद प्रसन्नो भव ॥

महेश महितोऽसि तत्पुरुष पूरुषाग्र्यो भवा-
नघोर रिपुघोर तेऽनवम वामदेवाञ्जलिः ।
नमः सपदिजात ते त्वमिति पञ्चरूपोऽञ्चितः
प्रपञ्चय च पञ्चवृन्मम मनस्तमस्ताडय ॥ ३ ॥

महेशेति । हे महेश, महितोऽसि पूजितोऽसि । इन्द्रादिभिरिति शेषः । हे तत्पुरुष, तस्य परमात्मनः पुरुषो दासः तस्य संबुद्धिः । हे वामदेव, वामः सुन्दरो देवो यस्यासौ वामदेव । भवान् पुरुषेषु अग्र्यः श्रेष्ठः । हे अघोर भक्तानामभयंकर । हे अनवम न अवमस्तस्य संबुद्धिः । हे वामदेव तथोक्तसंबुद्धिः । अनवमश्चासौ वामदेवश्चानवमवामदेव इत्येकं पदं वा । 'वामः सव्ये प्रतीते दक्षिणे वाथ सुन्दरे' इत्यभिधानम् । ते तुभ्यमञ्जलिरस्तु । हे सपदिजात सद्योजात, ते तुभ्यं नमः । इत्यनेन प्रकारेणाञ्चितः पञ्चरूपस्त्वं पञ्चवृत् 'मनो बुद्धिरहंकारश्चित्तं चेतनम्' इति पञ्चप्रकारमित्यर्थः । एवं मनोऽन्तःकरणं प्रपञ्चयं विस्तारय । पञ्चवृत् पञ्चप्रकारम् । तमोमोहमहामोहतामिस्रमिति पञ्चधा भिन्नं तमोऽविद्यां ताडय नाशय । अत्र श्रुतिः—'ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्' इति, 'तत्पुरुषाय विद्महे' इति, 'अघोरेभ्योऽथ घोरेभ्यः' इति, 'वामदेवाय नमः' इति, 'सद्योजातं प्रपद्यामि' इति ॥

रसाघनरसानलानिलवियद्विवस्वद्विधु-
प्रयष्टृषु निविष्टमित्यज भजामि मूर्त्यष्टकम् ।
प्रशान्तमुत भीषणं भुवनमोहनं चेत्यहो
वपूंषि गुणपुंषि तेऽहमहमात्मनोऽहंभिदे ॥ ४ ॥

रसाघनेति । हे अज हे महारुद्र । 'अजा विष्णुहरच्छागाः' इत्यभिधानम् । रसा पृथिवी, घनरसं जलम्, अनलोऽग्निः, अनिलो वायुः, वियदाकाशम्, विवस्वान् सूर्यः, विधुश्चन्द्रः, प्रयष्टा सोमयाजी, तेषु निविष्टं मूर्त्यष्टकमहं भजामि । प्रशान्तं मनोहरमुत अन्यत् भीषणं भयंकरं भुवनमोहनं भुवनशब्देन तन्निष्ठो जनो लभ्यते । 'जनव्यामोहमहंकारमित्यर्थः । गुणपुंषि ज्ञानभक्तिवैराग्यादिगुणपूर्णादीनि वपूंषि रूपाणि चाहं भजामि । कथंभूतस्य तव । अहमात्मनः अहमित्यव्ययमहंकारवाचकम् । अहंकारस्यात्मा अभिमान्यहमात्मनः । कस्मै प्रयोजनाय अहंभिदे देहादावहंममत्वलक्षणाभिमाननिवृत्तये ॥

विमुक्तिपरमाध्वनां तव षडध्वनामास्पदं
पदं निगमवेदिनो जगति वामदेवादयः ।
कथंचिदुपशिक्षिता भगवतैव संविद्रते
वयं तु विरलान्तराः कथमुमेश तन्मन्महे ॥ ५ ॥

विमुक्तिपरमेति । प्रविद्धा निगमवेदिनो वामदेवादय ऋषयः भगवतैव ज्ञानमुक्तिवैराग्यादिगुणवत्वेन त्वया उपशिक्षिताः सन्तो विमुक्तिपरमाध्वनां विमुक्तौ परमा असक्ता एतेषामध्वनामागमभूतानां पद्ध्वनां षड्दर्शनानामास्पदं विषयत्वेनाश्रयीभूतं तव पदं पथत इति पदं ज्ञेयं परं ब्रह्मतत्त्वरूपं वा कथंचिन्महतायासेन यथाकथंचित् केनचित्प्रकारेण न तु सामस्त्येन संविद्रते जानन्ति । 'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः' इति विदेरात्मनेपदम् । 'वेत्तेर्विभाषा' इति रुट् । यद्वा संविद्रते संविदि ज्ञाने रतिर्यस्य स संविद्रतिस्तस्य संबुद्धिः तदा जानन्तीति शेषः । हे उमेश विरलान्तराः विरलमल्पविषयमन्तरं मनो येषां ते विरलान्तरा वयं तु विशेषेण तव परं ब्रह्म तव स्वरूपं कथं मन्महे जानीमहे । यदा विज्ञा वामदेवादयो भवदुपदिष्टाः सन्तस्तदुपास्यं परं ब्रह्म त्वत्स्वरूपं वा कार्त्स्न्येन ज्ञातुमशक्तास्तदाल्पज्ञा वयं कथं विशेषेण सामस्त्येन जानीमहे इति भावः ॥

कठोरितकुठारया ललितशूलया वाहया
रणड्डमरया स्फुरद्धरणया सखट्वाङ्गया ।
चलाभिरचलाभिरप्यगणिताभिरुन्नृत्यत-
श्चतुर्दश जगन्ति ते जय जयेत्ययुर्विस्मयम् ॥ ६ ॥

कठोरेति । हे महेश, कठोरितकुठारया कठोरितः कुठारो यस्यां सा तथा । ललितं शूलं यस्यां सा तथा । रणड्डमरो यस्यां सा तथा । स्फुरद्धरणया । एवंविधया वाहया । जातावेकवचनम् । वाहाभिर्बाहुभिश्चलाभिश्चचलाभिरचलाभिः स्थिराभिरगणिताभिरसंख्याभिः । अतिनर्तनवृत्तिभिरिति विशेष्यपदाध्याहारो बोद्धव्यः । उन्नृत्यत उच्चैर्नर्तनं कुर्वतस्ते तव चतुर्दशजगन्ति चतुर्दशभुवनानि तन्निष्ठा जना वा युवत् (?) जय जयेति नन्दन्तो विस्मयमयुः प्रापुः ॥

पु(प)रत्रिपुररन्धनं विविधदैत्यविध्वंसनं
पराक्रमपरम्परा अपि परा न ते विस्मयः ।
अमर्षवलहर्षित क्षुभितवृत्तनेत्रोज्ज्वल-
ज्वलज्ज्वलनहेलया शलभितं हि लोकत्रयम् ॥ ७ ॥

पुरेति । हे महारुद्र, पु(प)राणामन्यामेयत्वेनोत्कृष्टाना त्रयाणां पुराणां रन्धनं भस्मीकरणम् । विविधदैत्यविध्वंसनम् । इत्याद्याः परा अपि पराक्रमाणां परम्परा अपि ते विस्मयो न आश्चर्यो न । हे अमर्षवलहर्षित, अमर्षबलाभ्यां कोपसामर्थ्याभ्यां हर्षितो हर्षं प्राप्तः । लोकानां भुवनानां त्रयं तव क्षुभितवृत्तनेत्रोज्ज्वलज्ज्वलज्ज्वलनहेलया क्षुभितं क्षोभयुक्तं वृत्तं वर्तुलं यन्नेत्रं तत्सामर्थ्यादुज्ज्वलः प्रकाशमानो ज्वलन् दहन् ज्वलनोऽग्निस्तस्य हेलया ज्वालाविलासेन 'हेला विलासे-' इत्यभिधानम् । शलभितं हि शलभवत् संजातं हि । यथा शलभोऽग्नौ प्रविष्टो भस्मीभवति, त[द्व]द्भस्मीभूतमित्यर्थः ॥

महेश महितोऽसि तत्पुरुष पूरुषाग्र्यो भवा-
नघोर रिपुघोर तेऽनवम वामदेवाञ्जलिः।
नमः सपदिजात ते त्वमिति पञ्चरूपोऽञ्चितः
प्रपञ्चय च पञ्चकृन्मम मनस्तमस्ताडय ॥ ३ ॥

महेशेति। हे महेश, महितोऽसि पूजितोऽसि। इन्द्रादिभिरिति शेषः। हे तत्पुरुष, तस्य परमात्मनः पुरुषो दासः तस्य संबुद्धिः। हे वामदेव, वामः सुन्दरो देवो यस्यासौ वामदेव। भवान् पुरुषेषु अग्र्यः श्रेष्ठः। हे अघोर भक्तानामभयंकर। हे अनवम न अवमस्तस्य संबुद्धिः। हे वामदेव तथोक्तसंबुद्धिः। अनवमश्चासौ वामदेवश्चानवमवामदेव इत्येकं पदं वा। 'वामः सव्ये प्रतीते दक्षिणे वाथ सुन्दरे' इत्यभिधानम्। ते तुभ्यमञ्जलिरस्तु। हे सपदिजात सद्योजात, ते तुभ्यं नमः। इत्यनेन प्रकारेणाञ्चितः पञ्चरूपस्त्वं पञ्चकृत् 'मनो बुद्धिरहंकारश्चित्त चेतनम्' इति पञ्चप्रकारमित्यर्थः। एवं मनोऽन्तःकरणं प्रपञ्चयं विस्तारय। पञ्चकृत् पञ्चप्रकारम्। तमोमोहमहामोहतामिस्रमिति पञ्चधा भिन्नं तमोऽविद्यां ताडय नाशय। अत्र श्रुतिः—'ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्' इति, 'तत्पुरुषाय विद्महे' इति, 'अघोरेभ्योऽथ घोरेभ्यः' इति, 'वामदेवाय नमः' इति, 'सद्योजातं प्रपद्यामि' इति॥

रसाघनरसानलानिलवियद्विवस्वद्विधु-
प्रयष्टृषु निविष्टमित्यज भजामि मूर्त्यष्टकम्।
प्रशान्तमुत भीषणं भुवनमोहनं चेत्यहो
वपूंषि गुणपुंषि तेऽहमहमात्मनोऽहंभिदे ॥ ४ ॥

रसाघनेति। हे अज हे महारुद्र। 'अजा विष्णुहरच्छागाः' इत्यभिधानम्। रसा पृथिवी, घनरसं जलम्, अनलोऽग्निः, अनिलो वायुः, वियदाकाशम्, विवस्वान् सूर्यः, विधुश्चन्द्रः, प्रयष्टा सोमयाजी, तेषु निविष्टं मूर्त्यष्टकमहं भजामि। प्रशान्तं मनोहरमुत अन्यत् भीषणं भयंकरं भुवनमोहनं भुवनशब्देन तन्निष्ठो जनो लभ्यते। जनव्यामोहमहंकारमित्यर्थः। गुणपुंषि ज्ञानभक्तिवैराग्यादिगुणपूर्णादीनि वपूंषि रूपाणि चाहं भजामि। कथंभूतस्य तव। अहमात्मनः अहमित्यव्ययमहंकारवाचकम्। अहंकारस्यात्मा अभिमान्यहमात्मनः। कस्मै प्रयोजनाय अहंभिदे देहादावहममत्वलक्षणाभिमाननिवृत्तये॥

विमुक्तिपरमाध्वनां तव षडध्वनामास्पदं
पदं निगमवेदिनो जगति वामदेवादयः।
कथंचिदुपशिक्षिता भगवतैव संविद्रते
वयं तु विरलान्तराः कथमुमेश तन्मन्महे ॥ ५ ॥

विमुक्तिपरमेति । प्रसिद्धा निगमवेदिनो वामदेवादय ऋषयः भगवतैव ज्ञानमुक्तिवैराग्यादिगुणवतैव त्वया उपशिक्षिताः सन्तो विमुक्तिपरमाध्वनां विमुक्तौ परमा असक्ता एतेषामध्वनामागमभूतानां षडध्वनां षड्दर्शनानामास्पदं विषयत्वेनाश्रयीभूतं तव पदं पयत इति पदं ज्ञेयं परं ब्रह्मतत्त्वरूपं वा कथंचिन्महतायासेन यथाकथंचित् केनचित्प्रकारेण न तु सामस्त्येन संविद्रते जानन्ति । 'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः' इति विदेरात्मनेपदम् । 'वेत्तेर्विभाषा' इति रुट् । यद्वा संविद्रते संविदि ज्ञाने रतिर्यस्य स संविद्रतिस्तस्य संबुद्धिः तदा जानन्तीति शेषः । हे उमेश विरलान्तराः विरलमल्पविषयमन्तरं मनो येषां ते विरलान्तरा वयं तु विशेषेण तद् परं ब्रह्म तव स्वरूपं कथं मन्महे जानीमहे । यद्वा विज्ञा वामदेवादयो भवदुपदिष्टाः सन्तस्तदुपास्यं परं ब्रह्म त्वत्स्वरूपं वा कात्स्न्येंन ज्ञातुमशक्तास्तदाल्पज्ञा वयं कथं विशेषेण सामस्त्येन जानीमहे इति भावः ॥

कठोरितकुठारया ललितशूलया वाहया
रणड्डमरया स्फुरद्धरणया सखट्वाङ्गया ।
चलाभिरचलाभिरप्यगणिताभिरुन्नृत्यत-
श्चतुर्दश जगन्ति ते जय जयेत्ययुर्विस्मयम् ॥ ६ ॥

कठोरेति । हे महेश, कठोरितकुठारया कठोरितः कुठारो यस्यां सा तया । ललितं शूलं यस्यां सा तया । रणड्डमरो यस्यां सा तया । स्फुरद्धरणया । एवंविधया वाहया । जातावेकवचनम् । वाहाभिर्बाहुभिश्चलाभिश्चलाभिरचलाभिः स्थिराभिरगणिताभिरसंख्याभिः । अतिनर्तनवृत्तिभिरिति विशेष्यपदाध्याहारो बोद्धव्यः । उन्नृत्यत उच्चैर्नर्तनं कुर्वतस्ते तव चतुर्दशजगन्ति चतुर्दशभुवनानि तन्निष्ठा जना वा युवत् (?) जय जयेति नन्दन्तो विस्मयमयुः प्रापुः ॥

पु(प)रत्रिपुररन्धनं विविधदैत्यविध्वंसनं
पराक्रमपरम्परा अपि परा न ते विस्मयः ।
अमर्षबलहर्षित क्षुभितवृत्तनेत्रोज्ज्वल-
ज्वलज्ज्वलनहेलया शलभितं हि लोकत्रयम् ॥ ७ ॥

पुरेति । हे महारुद्र, पु(प)राणामन्याभेद्यत्वेनोत्कृष्टानां त्रयाणां पुराणां रन्धनं भस्मीकरणम् । विविधदैत्यविध्वंसनम् । इत्याद्याः परा अपि पराक्रमाणां परम्परा अपि ते विस्मयो न आश्चर्यो न । हे अमर्षबलहर्षित, अमर्षबलाभ्यां कोपसामर्थ्याभ्यां हर्षितो हर्षं प्राप्तः । लोकानां भुवनानां त्रयं तव क्षुभितवृत्तनेत्रोज्ज्वलज्ज्वलज्ज्वलनहेलया क्षुभितं क्षोभयुक्तं वृत्तं वर्तुलं यन्नेत्रं तत्सामर्थ्यादुज्ज्वलः प्रकाशमानो ज्वलन् दहन् ज्वलनोऽग्निस्तस्य हेलया ज्वालाविलासेन 'हेला विलासे–' इत्यभिधानम् । शलभितं हि शलभवत् संजातं हि । यथा शलभोऽग्नौ प्रविष्टो भस्मीभवति, त[द्व]द्भस्मीभूतमित्यर्थः ॥

सहस्रनयनो गुहः सहसहस्ररश्मिर्विधु-
बृहस्पतिरुताप्पतिःससुरसिद्धविद्याधराः।
भवत्पदपरायणाः श्रियमिमां ययुः प्रार्थिनां
भवान्सुरतरुर्दृशं शिव(दिश) शिवां शिवावल्लभ ॥ ८ ॥

सहस्रेति। हे रुद्र, सहस्रनयन इन्द्रः, गुहः स्कन्दः, सहस्रं रश्मयो यस्यासौ सहस्ररश्मिः सूर्यः, तेन सहवर्तमान एव[भूतो] विधुश्चन्द्रः, बृहस्पतिः। उतशब्दोऽप्यर्थः। अप्पतिरपां पतिर्वरुणः, शक्राद्या इति शेषः(?) । ससुरसिद्धविद्याधराः सर्वे तत्तद्योगजना भवत्पदं भवदुपास्यं ब्रह्म परमयनमाश्रयो येषां ते भवत्पदपरायणाः सन्त इमा तद्योग्यां श्रियं संपदं ययुः प्रापुः। यतो भवान्प्रार्थिनां सुरतरुः कल्पवृक्षः। सुचिन्तितमनोरथप्रदः। हे शिवावल्लभ उमाकान्त, त्व मह्यं शिवां मङ्गलां दृशं दृष्टिं दिश देहि ॥

तव प्रियतमादतिप्रियतमं सदैवान्तरं
पयस्युपहितं घृतं स्वयमिव श्रियोवल्लभम्।
विभिद्य लघुबुद्धयः स्वपरपक्षलक्ष्यायितं
पठन्ति हि लुठन्ति ते शठहृदः शुचा शुण्ठिताः ॥ ९ ॥

तवेति। लघुबुद्धयः क्षिप्रबुद्धयः। सूक्ष्मार्थदर्शिन इति यावत्। 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः। एवंविधाः पण्डिताः तव प्रियतमाद्वस्तुतोऽतिप्रियतमं निरुपाधिविषयम् एकान्तभक्तत्वात्। तदुक्तम्—'एकान्तानां न कस्यचिदर्थे नारायणो देवः सर्वमन्यत्तदर्थकम्' इति। सदैव स्वपरपक्षयोः पूर्वपक्षसिद्धान्तयोः लक्ष्यवत् आचरितमान्तरमन्तर्वर्तमानं कथमिव पयस्युपहितं स्वयं स्वेच्छया रतं घृतमिव श्रियो वल्लभं लक्ष्मीकान्तं विभिद्य वेध। तन्मीमांसा यथा क्षीरे तत्स्थितं घृत क्षीरादिविवेक्षेण(केन) जानन्ति तथा त्वदन्तर्गत ब्रह्म ज्ञात्वा पठन्ति। शिष्येभ्य उपदिशन्तीति भावः। शठहृदः पवञ्चनचित्ताः ये के ब्रह्मवादिनस्ते शुचा शोकेन शुण्ठिताः स्तम्भिताः सन्तो लुठन्ति। नित्यं निरये पतन्तीत्यर्थः। उक्तं च श्रीमद्भागवते—'एवं तत्समुपासीना न मुह्यन्ति शुचार्पिताः' इति। तथा जीवात्ममेदज्ञानमेव मोक्षसाधनं नाद्वितज्ञानमिति भावः ॥

निवासनिलयश्चिता तव शिरस्ततिर्मालिका
कपालमपि ते करे त्वमशिवोऽस्यनन्तर्धियाम्।
तथापि भवतः पदं शिव शिवेत्यदो जल्पता-
मकिंचन न किंचनावृजिनमस्ति भस्मीभवेत् ॥ १० ॥

निवासेति। हे महेश चिता श्मशानभूमिः तव निवासनिलयो निवासस्याश्रयः, शिरस्ततिः शिरःपरम्परा तव मालिका, ते करे कपालमपि विद्यते, त्वमनन्तार्धियां बहिर्द-

र्षीनां पामराणामशिवोऽमङ्गलोऽस्ति । यद्यप्येवम्, तथापि हे अकिंचन अविद्यमानकिंचन, किमप्यासमन्ताद्वर्तमानं पापं नास्ति । किं तु सर्वं भस्मीभवेदित्यर्थः ॥

त्वमेव किल कामधक्सकलकाममापूरय-
न्सदा त्रिनयनो भवान्वहसि चात्रिनेत्रोद्भवम् ।
विषं विषधरान्दधत्पिबसि तेन चानन्दवा-
न्विरुद्धचरितोचिता जगदधीश ते भिक्षुता ॥ ११ ॥

त्वमेवेति । हे विरुद्धचरित्र, त्वमेव कामं कन्दर्पं दहतीति कामधक् किल सकलानां योग्यानां काममभिलाषमापूरयन्वर्तसे । अत्र शब्दमात्रसामान्येन विरोधभावः । अर्थभेदाद्विरोधपरिहारः । सदा त्रिनयनस्त्रिनेत्रः, अत्रिनेत्रोद्भवं चन्द्रं वहसि च । विषधरान् दधत् सन् विषं पिबसि तेन विषपानेनानन्दवांश्च भवसि । हे जगदधीश, ते भिक्षुता न्याय्या । अत्र विरोधाभासोऽलंकारः ॥

नमः शिवशिवाशिवाशिवशिवार्ध कृन्ताशिवं
नमो हर हराहराहरहरान्तरीं मे दृशम् ।
नमो भव भवाभवप्रभव भूतये ते भवन्
नमो मृड नमो नमो नम उमेश तुभ्यं नमः ॥ १२ ॥

नमः शिवेति । हे शिव शिव, शिवानां योग्यजीवानां शिवं करोतीति (शिवं भवतीति) शिवः अस्य संबुद्धिः शिव । 'तत्करोति तदाचष्टे' इति णिजन्ताच्छिवयतेः सुब्धातोः 'अप्रत्ययात्' इति अप्रत्ययः (?) । हे अशिवाशिव, अशिवानामयोग्यजीवानामशुभोऽशुभकरस्तत्संबुद्धिः । नमस्तुभ्यमिति शेषः । हे शिवार्ध, शिवा अर्धं यस्यासौ तथोक्तः तत्संबुद्धिः त्वं मम अशिवममङ्गलं कृन्त नाशय । हे हरहर । आदराद्विरुक्तिः । तुभ्यं नमः । अहरहः निरन्तरं वीप्सायामव्ययीभावः (?) । अन्तरोऽन्तरे सर्वं यस्य रंस्यत (?) इत्यन्तरो विष्णुस्तत्संबन्धिनीं दृशं ज्ञानं मह्यमाहर देहि । हे भव, तुभ्यं नमः । हे अभवप्रभव । अभवस्य प्रभव उत्पादको यस्य सोऽभवप्रभवस्तत्संबुद्धिः तुभ्यं नमः । हे भवन्, मद्भूतये भवेति । हे मृड, तुभ्यं नमो नमः । अत्रादरनैरन्तर्याभ्यां नमो नमः कर्तव्यमिति पुनः पुनरुक्तिः ॥

सतां श्रवणपद्धतिं सरतु संनतोक्त्येत्यसौ
शिवस्य करुणाङ्कुरात्प्रतिकृतात्सदा सोदिता ।

१. अस्य 'शिवान्'इत्यधिकारे विधानाचिन्त्यमिदम्, तस्मात्पचादेराकृतिगणत्वादच्प्रत्ययो बोध्यः.

इति प्रथितमानसो व्यधित नाम नारायणः
शिवस्तुतिमिमां शिवां लिकुचिसूरिसूनुः सुधीः ॥ १३ ॥

सतामिति । सासौ शिवस्तुतिः सतां साधूनां श्रवणपद्धतिं कर्णमार्गं सरतु गच्छतु । किंभूता । संनतोक्ता संनता (तेन) नम्रेणोक्ता । पुनः । प्रतिकृतात् शिवस्य करुणाङ्कुरात्समुदिता । उक्ता । नारायणो नाम लिकुचिसूरिसूनुरिमां शिवां शिवस्तुतिं व्यधित कृतवान् । किंभूतः । प्रथितं ख्यातं मानसं यस्य सः ॥

इति श्रीलिकुचिसूरिसूनुनारायणपण्डिताचार्यविरचिता सव्याख्या शिवस्तुतिः समाप्ता ।

---

श्रीमच्छंकराचार्यभगवत्पादविरचितं

## त्रिपुरसुन्दरीमानसिकोपचारपूजास्तोत्रम् ।

मम न भजनशक्तिः पादयोस्ते न भक्ति-
र्न च विषयविरक्तिर्ध्यानयोगे न सक्तिः ।
इति मनसि सदाहं चिन्तयन्नाद्यशक्ते
रुचिरवचनपुष्पैरर्चनं संचिनोमि ॥ १ ॥

व्याप्तं हाटकविग्रहैर्जलचरैरारूढदेवव्रजैः
पोतैराकुलितान्तरं मणिधरैर्भूमीधरैर्भूषितम् ।
आरक्तामृतसिन्धुमुद्धरचलद्वीचीचयव्याकुल-
व्योमानं परिचिन्त्य संततमहो चेतः कृतार्थीभव ॥ २ ॥

तस्मिन्नुज्ज्वलरत्नजालविलसत्कान्तिच्छटाभिः स्फुटं
कुर्वाणं वियदिन्द्रचापनिचयैराच्छादितं सर्वतः ।
उच्चैः शृङ्गनिषण्णदिव्यवनितावृन्दाननप्रोल्लस-
द्गीताकर्णननिश्चलाखिलमृगं द्वीपं नमस्कुर्वहे ॥ ३ ॥

जातीचम्पकपाटलादिसुमनःसौरभ्यसंभावितं
ह्रींकारध्वनिकण्ठकोकिलकुहूप्रोल्लासिचूतद्रुमम् ।
आविर्भूतसुगन्धिचन्दनवनं दृष्टिप्रियं नन्दनं
चञ्चच्चञ्चलचञ्चरीकचटुलं चेतश्चिरं चिन्तय ॥ ४ ॥

---

१. 'शक्तिः' क; 'भक्तिः' ग. २. 'कुल' क.

परिपतितपरागैः पाटलक्षोणिभागो
विकसितकुसुमोच्चैः पीतचन्द्रार्करश्मिः ।
अलिशुकपिकराजीकूजितैः श्रोत्रहारी
स्फुरतु हृदि मदीये नूनमुद्यानराजः ॥ ५ ॥

रम्यद्वारपुरप्रचारतमसां संहारकारिप्रभ-
स्फूर्जत्तोरणभारहारकमहाविस्तारहारद्युते ।
क्षोणीमण्डलहेमहारविलसत्संसारपारप्रद-
प्रोद्यद्भक्तमनोविहार कनकप्राकार तुभ्यं नमः ॥ ६ ॥

उद्यत्कान्तिकलापकल्पितनभः स्फूर्जद्वितानप्रभः
सत्कृष्णागुरुधूपवासितवियत्काष्ठान्तरे विश्रुतः ।
सेवायातसमस्तदैवतगणैरासेव्यमानोऽनिशं
सोऽयं श्रीमणिमण्डपोऽनवरतं मच्चेतसि द्योतताम् ॥ ७ ॥

क्वापि प्रोद्भटपद्मरागकिरणव्रातेन संध्यायितं
कुत्रापि स्फुटविस्फुरन्मरकतद्युत्या तमिस्रायितम् ।
मध्यालम्बिविशालमौक्तिकरुचा ज्योत्स्नायितं कुत्रचि-
न्मातः श्रीमणिमन्दिरं तव सदा वन्दामहे सुन्दरम् ॥ ८ ॥

उत्तुङ्गालयविस्फुरन्मरकतप्रोद्यत्प्रभामण्डला-
न्यालोक्याङ्कुरितोत्सवैर्नवतृणाकीर्णस्थलीशङ्कया ।
नीतो वाजिभिरुत्पथं बत रथः सूतेन तिग्मद्युते-
र्वल्गावल्गितहस्तमस्तशिखरं कष्टैरितः प्राप्यते ॥ ९ ॥

मणिसदनसमुद्यत्कान्तिधारानुरक्ते
वियति चरमसंध्याशङ्किनो भानुरथ्याः ।
शिथिलितगतकुप्यत्सूतहुंकारनादैः
कथमपि मणिगेहादुच्चकैरुच्चलन्ति ॥ १० ॥

---

१. 'गुरु' क-ग. २. 'पारक' क. ३. 'मण्डपं' क. ४. 'मण्डलीमालो' क.

भक्त्या किं नु समर्पितानि बहुधा रत्नानि पाथोधिना
किं वा रोहणपर्वतेन सदनं यैर्विश्वकर्माकरोत् ।
आ ज्ञातं गिरिजे कटाक्षकलया नूनं त्वया तोषिते
शंभौ नृत्यति नागराजफणिना कीर्णा मणिश्रेणयः ॥ ११ ॥
विदूरमुक्तवाहनैर्विनम्रमौलिमण्डलै-
र्निबद्धहस्तसंपुटैः प्रयत्नसंयतेन्द्रियैः ।
विरञ्चिविष्णुशंकरादिभिर्मुदा तवाम्बिके
प्रतीक्ष्यमाणनिर्गमो विभाति रत्नमण्डपः ॥ १२ ॥
ध्वनन्मृदङ्गकाहलः प्रगीतकिंनरीगणः
प्रनृत्तदिव्यकन्यकः प्रवृत्तमङ्गलक्रमः ।
प्रकृष्टसेवकव्रजः प्रहृष्टभक्तमण्डलो
मुदे ममास्तु संततं त्वदीयरत्नमण्डपः ॥ १३ ॥
प्रवेशनिर्गमाकुलैः स्वकृत्यरक्तमानसै-
र्बहिःस्थितामरावलीविधीयमानभक्तिभिः ।
विचित्रवस्त्रभूषणैरुपेतमङ्गनाजनैः
सदा करोतु मङ्गलं ममेह रत्नमण्डपः ॥ १४ ॥
सुवर्णरत्नभूषितैर्विचित्रवस्त्रधारिभि-
र्गृहीतहेमयष्टिभिर्निरुद्धसर्वदैवतैः ।
असंख्यसुन्दरीजनैः पुरस्थितैरधिष्ठितो
मदीयमेतु मानसं त्वदीयतुङ्गतोरणः ॥ १५ ॥
इन्द्रादींश्च दिगीश्वरान्सहपरीवारानथो सायुधा-
न्योषिद्रूपधरान्स्वदिक्षु[2] निहितान्संचिन्त्य हृत्पङ्कजे ।
शङ्खे श्रीवसुधारया वसुमतीयुक्तं च पद्मं स्मर-
न्कामं नौमि रतिप्रियं सहचरं प्रीत्या वसन्तं भजे ॥१६॥

१. 'इन्द्रादीन्दिगधीश्वरा' क. २. 'निवता' क. ३. 'रक्तं' क.

गायन्तीः कलवीणयातिमधुरं हुंकारमातन्वती-
द्वीराम्यासक्तस्थितीरिह सरस्वत्यादिकाः पूजयन् ।
द्वारे नौमि मदोन्मदं सुरगणाधीशं मदेनोन्मदां
मातङ्गीमसिताम्बरां परिलसन्मुक्ताविभूषां भजे ॥ १७ ॥

कस्तूरिकाश्यामलकोमलाङ्गीं कादम्बरीपानमदालसाङ्गीम् ।
वामस्तनालिङ्गितरत्नवीणां मातङ्गकन्यां मनसा स्मरामि ॥ १८ ॥

विकीर्णचिकुरोत्करे विगलिताम्बराडम्बरे
मदाकुलितलोचने विमलभूषणोद्भासिनि ।
तिरस्करिणि तावकं चरणपङ्कजं चिन्तय-
न्करोमि पशुमण्डलीमलिकमोहदुग्धाशयाम् ॥ १९ ॥

प्रमत्तवारुणीरसैर्विघूर्णमानलोचनाः
प्रचण्डदैत्यसूदनाः प्रविष्टभक्तमानसाः ।
उपोढकज्जलच्छविच्छटाविराजिविग्रहाः
कपालशूलधारिणीः स्तुवे त्वदीयदूतिकाः ॥ २० ॥

स्फूर्जन्नव्ययवाङ्कुरोपललसिताभोगैः पुरः स्थापितै-
र्दीपोद्भासिशरावशोभितमुखैः कुम्भैर्नवैः शोभिना ।
स्वर्णाबद्धविचित्ररत्नपटलीचञ्चत्कपाटश्रिया
युक्तं द्वारचतुष्टयेन गिरिजे वन्दे मणीमन्दिरम् ॥ २१ ॥

आस्तीर्णारुणकम्बलासनयुतं पुष्पोपहारान्वितं
दीप्तानेकमणिप्रदीपसुभगं राजद्वितानोत्तमम् ।
धूपोद्गारिसुगन्धिसंभ्रममिलद्भृङ्गावलीगुञ्जितं
कल्याणं वितनोतु मेऽनवरतं श्रीमण्डपाभ्यन्तरम् ॥ २२ ॥

कनकरचिते पञ्चप्रेतासनेन विराजिते
मणिगणचिते रक्तश्वेताम्बरास्तरणोत्तमे ।
कुसुमसुरभौ तल्पे दिव्योपधानसुखावहे
हृदयकमले प्रादुर्भूतां भजे परदेवताम् ॥ २३ ॥

---

१. 'मधिकमोहमुग्धाशयाम्' क. २. 'र्दीपोद्भा' क. ३. 'राजितम्' क.

पीनोत्तुङ्गपयोधराः परिलसत्संपूर्णचन्द्रानना
रत्नस्वर्णविनिर्मिताः परिलसत्सूक्ष्माम्बरप्रावृताः ।
हेमस्नानघटीस्तथा मृदुपटीरुद्वर्तनं कौसुमं
तैलं कङ्कतिकां करेषु दधतीर्वन्देऽम्ब ते दासिकाः ॥ ३१ ॥
तत्र स्फाटिकपीठमेत्य शनकैरुत्तारितालंकृति-
र्नीचैरुज्झितकञ्चुकोपरिहितारक्तोत्तरीयाम्बरा ।
वेणीबन्धमपास्य कङ्कतिकया केशप्रसादं मना-
क्कुर्वाणा परदेवता भगवती चित्ते मम द्योतताम् ॥ ३२ ॥
अभ्यङ्गं गिरिजे गृहाण मृदुना तैलेन संपादितं
काश्मीरैरगरुद्रवैर्मलयजैरुद्वर्तनं कारय ।
गीते किंनरकामिनीभिरभितो वाद्ये मुदा वादिते
नृत्यन्तीमिह पश्य देवि पुरतो दिव्याङ्गनामण्डलीम् ॥ ३३ ॥
कृतपरिकरबन्धास्तुङ्गपीनस्तनाढ्या
मणिनिवहनिबद्धा हेमकुम्भीर्दधानाः ।
सुरभिसलिलनिर्यद्गन्धलुब्धालिमालाः
सविनयमुपतस्थुः सर्वतः स्नानदास्यः ॥ ३४ ॥
उद्गन्धैरगुरुद्रवैः सुरभिणा कस्तूरिकावारिणा
स्फूर्जत्सौरभयक्षकर्दमजलैः काश्मीरनीरैरपि ।
पुष्पाम्भोभिरशेषतीर्थसलिलैः कर्पूरपाथोभरैः
स्नानं ते परिकल्पयामि गिरिजे भक्त्या तदङ्गीकुरु ॥ ३५ ॥
सत्यङ्गं परिमार्जयामि शुचिना वस्त्रेण संप्रोञ्छनं
कुर्वे केशकलापमायततरं धूपोत्तमैर्धूपितम् ।
आलीवृन्दविनिर्मितां जवनिकामास्थाप्य रत्नप्रभं
भक्तत्राणपरे महेशगृहिणि स्नानाम्बरं मुच्यताम् ॥ ३६ ॥
पीतं ते परिकल्पयामि निबिडं चण्डातकं चण्डिके
सूक्ष्मं स्निग्धमुरीकुरुष्व वसनं सिन्दूरपूरप्रभम् ।

---

१. 'हना' क. २. 'स्नाप रम्यमना' क. ३. 'चन्द्रानन' क.

सर्वाङ्गस्थितिरम्यरूपरुचिरां प्रातः समभ्युत्थितां
जृम्भामञ्जुमुखाम्बुजां मधुमदव्याघूर्णदक्षित्रयाम्।
सेवायातसमस्तसंनिधिसखीः संमानयन्तीं दृशा
संपश्यन्परदेवतां परमहो मन्ये कृतार्थं जनुः॥ २४॥
उच्चैस्तोरणवर्तिवाद्यनिवहध्वाने समुज्जृम्भिते
भक्तैर्भूमिविलग्नमौलिभिरलं दण्डप्रणामे कृते।
नानारत्नसमूहनद्धकथनस्थालीसमुद्भासितां
प्रातस्ते परिकल्पयामि गिरिजे नीराजनामुज्ज्वलाम्॥ २५॥
पाद्यं ते परिकल्पयामि पदयोरर्घ्यं तथा हस्तयोः
सौधीभिर्मधुपर्कमम्ब मधुरं धाराभिरास्वादय।
तोयेनाचमनं विधेहि शुचिना गाङ्गेन मत्कल्पितं
साष्टाङ्गं प्रणिपातमीशदयिते दृष्ट्या कृतार्थीकुरु॥ २६॥
मातः पश्य मुखाम्बुजं सुविमले दत्ते मया दर्पणे
देवि स्वीकुरु दन्तधावनमिदं गङ्गाजलेनान्वितम्।
सुप्रक्षालितमाननं विरचयन्स्निग्धाम्बरप्रोञ्छनं
द्रागङ्गीकुरु तत्त्वमम्ब मधुरं ताम्बूलमास्वादय॥ २७॥
निधेहि मणिपादुकोपरि पदाम्बुजं मज्जना-
लयं व्रज शनैः सखीकृतकराम्बुजालम्बनम्।
महेशि करुणानिधे तव दृगन्तपातोत्सुका-
न्विलोकय मनागमूनुभयसंस्थितान्दैवताम्॥ २८॥
हेमरत्नवरणेन वेष्टितं विस्तृतारुणवितानशोभितम्।
सज्जसर्वपरिचारिकाजनं पश्य मज्जनगृहं मनो मम॥ २९॥
कनककलशजालस्फाटिकस्नानपीठा-
द्युपकरणविशालं गन्धमत्तालिमालम्।
स्फुरदरुणवितानं मञ्जुगन्धर्वगानं
परमशिवमहेले मज्जनागारमेहि॥ ३०॥

१. 'समभ्युच्छ्रितां' क.

पीनोत्तुङ्गपयोधराः परिलसत्संपूर्णचन्द्रानना
रत्नस्वर्णविनिर्मिताः परिलसत्सूक्ष्माम्बरप्रावृताः ।
हेमस्नानघटीस्तथा मृदुपटीरुद्वर्तनं कौसुमं
तैलं कङ्कतिकां करेषु दधतीर्वन्देऽम्ब ते दासिकाः ॥ ३१ ॥
तत्र स्फाटिकपीठमेत्य शनकैरुत्तारितालंकृति-
र्नीचैरुज्झितकञ्चुकोपरिहितारक्तोत्तरीयाम्बरा ।
वेणीबन्धमपास्य कङ्कतिकया केशप्रसादं मना-
क्कुर्वाणा परदेवता भगवती चित्ते मम द्योतताम् ॥ ३२ ॥
अभ्यङ्गं गिरिजे गृहाण मृदुना तैलेन संपादितं
काश्मीरैरगरुद्रवैर्मलयजैरुद्वर्तनं कारय ।
गीते किंनरकामिनीभिरभितो वाद्ये मुदा वादिते
नृत्यन्तीमिह पश्य देवि पुरतो दिव्याङ्गनामण्डलीम् ॥ ३३ ॥
कृतपरिकरबन्धास्तुङ्गपीनस्तनाढ्या
मणिनिवहनिबद्धा हेमकुम्भीर्दधानाः ।
सुरभिसलिलनिर्यद्गन्धलुब्धालिमालाः
सविनयमुपतस्थुः सर्वतः स्नानदास्यः ॥ ३४ ॥
उद्गन्धैरगुरुद्रवैः सुरभिणा कस्तूरिकावारिणा
स्फूर्जत्सौरभयक्षकर्दमजलैः काश्मीरनीरैरपि ।
पुष्पाम्भोभिरशेषतीर्थसलिलैः कर्पूरपाथोभरैः
स्नानं ते परिकल्पयामि गिरिजे भक्त्या तदङ्गीकुरु ॥ ३५ ॥
प्रत्यङ्गं परिमार्जयामि शुचिना वस्त्रेण संप्रोञ्छनं
कुर्वे केशकलापमायततरं धूपोत्तमैर्धूपितम् ।
आलीवृन्दविनिर्मितां जवनिकामास्थाप्य रत्नप्रभं
भक्तत्राणपरे महेशगृहिणि स्नानाम्बरं मुच्यताम् ॥ ३६ ॥
पीतं ते परिकल्पयामि निबिडं चण्डातकं चण्डिके
सूक्ष्मं स्निग्धमुरीकुरुष्व वसनं सिन्दूरपूरप्रभम् ।

१. 'हता' क. २. 'स्नान रम्यमनां' क. ३. 'चन्द्रानक' क.

मुक्तारत्नविचित्रहेमरचनाचारुप्रभाभास्वरं
नीलं कञ्चुकमर्पयामि गिरिशप्राणप्रिये सुन्दरि ॥ ३७ ॥
विलुलितचिकुरेण च्छादितांसप्रदेशे
मणिनिकरविराजत्पादुकान्यस्तपादे ।
सुललितमवलम्ब्य द्राक्सखीमंसदेशे
गिरिशगृहिणि भूषामण्डपाय प्रयाहि ॥ ३८ ॥
लसत्कनककुट्टिमस्फुरदमन्दमुक्तावली-
समुल्लसितकान्तिभिः कलितशक्रचापव्रजे ।
महाभरणमण्डपे निहितहेमसिंहासनं
सखीजनसमावृतं समधितिष्ठ कात्यायनि ॥ ३९ ॥
स्निग्धं कङ्कतिकामुखेन शनकैः संशोध्य केशोत्करं
सीमन्तं विरचय्य चारु विमलं सिन्दूररेखान्वितम् ।
मुक्ताभिर्ग्रथितालकां मणिचितैः सौवर्णसूत्रैः स्फुटं
प्रान्ते मौक्तिकगुच्छकोपलतिकां ग्रथ्नामि वेणीमिमाम् ॥ ४० ॥
विलम्बिवेणीभुजगोत्तमाङ्गस्फुरन्मणिभ्रान्तिमुपानयन्तम् ।
स्वरोचिषोल्लासितकेशपाशं महेशि चूडामणिमर्पयामि ॥ ४१ ॥
त्वामाश्रयद्भिः कबरीतमिस्रैर्बन्दीकृतं द्रागिव भानुबिम्बम् ।
मूर्धानि चूडामणिमादधानं वन्दामहे तावकमुत्तमाङ्गम् ॥ ४२ ॥
स्वमध्यनद्धहाटकस्फुरन्मणिप्रभाकुलं
विलम्बिमौक्तिकच्छटाविराजितं समन्ततः ।
निबद्धलक्षचक्षुषा भवेन भूरि भावितं
समर्पयामि भास्वरं भवानि भालभूषणम् ॥ ४३ ॥
मीनाम्भोरुहखञ्जरीटसुषमाविस्तारविस्तारके
कुर्वाणे किल कामवैरिमनसः कंदर्पबाणप्रभाम् ।
माध्वीपानमदारुणेऽतिचपले दीर्घे दृगम्भोरुहे
देवि स्वर्णशलाकयोर्जितमिदं दिव्याञ्जनं दीयताम् ॥ ४४ ॥

---

१. 'विलम्बिन्द' क. २. 'स्वनद्धमध्यहाटक' क.

मध्यस्थारुणरत्नकान्तिरुचिरां मुक्तामुगोद्भासितां
दैवाद्भार्गवजीवमध्यगरवेर्लक्ष्मीमधः कुर्वतीम् ।
उत्सिक्ताधरबिम्बकान्तिविसरैर्भोमांभवन्मौक्तिकां
मद्दत्तामुररीकुरुष्व गिरिजे नासाविभूषामिमाम् ॥ ४५ ॥

उडुकृतपरिवेषस्पर्धया शीतभानो-
रिव विरचितदेहद्वन्द्वमादित्यबिम्बम् ।
अरुणमणिसमुद्यत्प्रान्तविभ्राजिमुक्तं
श्रवसि परिनिधेहि स्वर्णताटङ्कयुग्मम् ॥ ४६ ॥

मरकतवरपद्मरागहीरोत्थितगुलिकात्रितयावनद्धमध्यम् ।
विततविमलमौक्तिकं च कण्ठाभरणमिदं गिरिजे समर्पयामि ॥ ४७ ॥

नानादेशसमुत्थितैर्मणिगणप्रोद्यत्प्रभामण्डल-
व्याप्तैराभरणैर्विराजितगलां मुक्ताछटालंकृताम् ।
मध्यस्थारुणरत्नकान्तिरुचिरां प्रान्तस्थमुक्ताफल-
व्रातामम्ब चतुष्किकां परशिवे वक्षःस्थले स्थापय ॥ ४८ ॥

अन्योन्यं प्लावयन्ती सततपरिचलत्कान्तिकल्लोलजालैः
कुर्वाणा मज्जदन्तःकरणविमलतां शोभितेव त्रिवेणी ।
मुक्ताभिः पद्मरागैर्मरकतमणिभिर्निर्मिता दीप्यमानै-
र्नित्यं हारत्रयी ते परशिवरसिके चेतसि द्योततां नः ॥ ४९ ॥

करसरसिजनाले विस्फुरत्कान्तिजाले
विलसदमलशोभे चञ्चदीशाक्षिलोभे ।
विविधमणिमयूखोद्भासितं देवि दुर्गे
कनककटकयुग्मं बाहुयुग्मे निधेहि ॥ ५० ॥

व्यालम्बमानसितपट्टकगुच्छशोभि
स्फूर्जन्मणीघटितहारविरोचमानम् ।
मातर्महेशमहिले तव बाहुमूले
केयूरकद्वयमिदं विनिवेशयामि ॥ ५१ ॥

विततनिजमयूखैर्निर्मितामिन्द्रनीलै-
विंजितकमलनालालीनमत्तालिमालाम् ।
मणिगणखचिताभ्यां कङ्कणाभ्यामुपेतां
कलय वलयराजीं हस्तमूले महेशि ॥ १२ ॥
नीलपट्टमृदुगुच्छशोभिताबद्धनैकमणिजालमञ्जुलाम् ।
अर्पयामि वलयात्पुरःसरे विस्फुरत्कनकतैतृपालिकाम् ॥ १३ ॥
आलवालमिव पुष्पधन्वना बालविद्रुमलतासु निर्मितम् ।
अङ्गुलीषु विनिधीयतां शनैरङ्गुलीयकमिदं मदर्पितम् ॥ १४ ॥
विजितहरमनोभूमत्तमातङ्गकुम्भ-
स्थलविलुलितकूजत्किङ्किणीजालतुल्याम् ।
अविरतकलनादैरीशचेतो हरन्तीं
विविधमणिनिबद्धां मेखलामर्पयामि ॥ १५ ॥
व्यालम्बमानवरमौक्तिकगुच्छशोभि-
विभ्राजिहाटकपुटद्वयरोचमानम् ।
हेम्ना विनिर्मितमनेकमणिप्रबन्धं
नीवीनिबन्धनगुणं विनिवेदयामि ॥ १६ ॥
विनिहतनवलाक्षापङ्कबालातपौघे
मरकतमणिराजीमञ्जुमञ्जीरघोषे ।
अरुणमणिसमुद्यत्कान्तिधाराविचित्र-
स्तव चरणसरोजे हंसकः प्रीतिमेतु ॥ १७ ॥
निबद्धशितिपट्टकप्रवरगुच्छसंशोभितां
कलक्वणितमञ्जुलां गिरिशचित्तसंमोहनीम् ।
अमन्दमणिमण्डलीविमलकान्तिकिर्मीरितां
निधेहि पदपङ्कजे कनकघुङ्घुरूमम्बिके ॥ १८ ॥
विस्फुरत्सहजरागरञ्जिते शिञ्जितेन कलितां सखीजनैः ।
पद्मरागमणिनूपुरद्वयीमर्पयामि तव पादपङ्कजे ॥ १९ ॥

---

१. 'टलित' क.

पद्माम्बुजमुपासितुं परिगतेन शीतांशुना
कृतां तनुपरम्परामिव दिनान्तरागारुणाम् ।
महेशि नवयावकद्रवभरेण शोणीकृतां
नमामि नखमण्डलीं चरणपङ्कजस्थां तव ॥ १० ॥

नारक्तश्वेतपीतस्फुरदुरुकुसुमैश्चित्रितां पट्टसूत्रै-
र्देवस्त्रीभिः प्रयत्नाद्गुरुसमुदितैर्धूपितां दिव्यधूपैः ।
उद्यद्गन्धान्धपुष्पंधयनिवहसमारब्धझांकारगीतां
चञ्चत्कह्लारमालां परशिवरसिके कण्ठपीठेऽर्पयामि ॥ ११ ॥

गृहाण परमामृतं कनकपात्रसंस्थापितं
समर्पय मुखाम्बुजे विमलवीटिकामम्बिके ।
विलोकय मुखाम्बुजं मुकुरमण्डले निर्मले
निधेहि मणिपादुकोपरि पदाम्बुजं सुन्दरि ॥ १२ ॥

आलम्ब्य स्वसखीं करेण शनकैः सिंहासनादुत्थिता
कूजन्मन्दमरालमञ्जुलगतिप्रोल्लासिभूषाम्बरा ।
आनन्दप्रतिपादकैरुपनिषद्वाक्यैः स्तुता वेधसा
मच्चित्ते स्थिरतामुपैति(तु) गिरिजा यान्ती सभामण्डपम् ॥१३॥

चलन्त्यामम्बायां प्रचलति समस्ते परिजने
सवेगं संयाते(?) कनकलतिकालंकृतिभरे ।
समन्तादुच्चालस्फुरितपदसंपातजनितै-
र्झणत्कारैस्तारैर्झणझणितमासीन्मणिगृहम् ॥ १४ ॥

चञ्चद्वेत्रकराभिरङ्गविलसद्भूषाम्बराभिः पुरो-
यान्तीभिः परिचारिकाभिरमरव्राते समुत्सारिते ।
रुद्धे निर्जरसुन्दरीभिरभितः कक्षान्तरे निर्गतं
वन्दे नन्दितशंभु निर्मलचिदानन्दैकरूपं महः ॥ १५ ॥

---

१. 'दिव्यस्त्रीभिः' क. २. 'कलितललितालंकृतितरे' क. ३. 'रणत्कारैस्तारैर्गु-णगुणितमा' क. ४. 'समुद्धारिते' क.

वेधाः पादतले पतत्ययमसौ विष्णुर्नमत्यग्रतः
शंभुर्देहि दृगञ्चलं सुरपतिं दूरस्थमालोकय ।
इत्येवं परिचारिकाभिरुदिते संमाननां कुर्वती
दृग्द्वन्द्वेन यथोचितं भगवती भूयाद्विभूत्यै मम ॥ ६६ ॥

मन्दं चारणसुन्दरीभिरभितोयान्तीभिरुत्कण्ठया
नामोच्चारणपूर्वकं प्रतिदिशं प्रत्येकमावेदितान् ।
वेगादक्षिपथं गतान्सुरगणानालोकयन्ती शनै-
र्लिप्स(र्दित्स)न्ती चरणाम्बुजं पथि जगत्पायान्महेशप्रिया॥६७॥

अग्रे केचन पार्श्वयोः कतिपये पृष्ठे परे प्रस्थिता
आकाशे समवस्थिताः कतिपये दिक्षु स्थिताश्चापरे ।
संमर्दं शनकैरपास्य पुरतो दण्डप्रणामान्मुहुः
कुर्वाणाः कतिचित्सुरा गिरिसुते दृक्पातमिच्छन्ति ते ॥६८॥

अग्रे गायति किंनरी कलपदं गन्धर्वकान्ताः शनै-
रातोद्यानि च वादयन्ति मधुरं सव्यापसव्यस्थिताः ।
कूजन्नूपुरनादमञ्जु पुरतो नृत्यन्ति दिव्याङ्गना
गच्छन्तः परितः स्तुवन्ति निगमस्तुत्या विरञ्च्यादयः ॥६९॥

कस्मैचित्सुचिरादुपासितमहामन्त्रौघसिद्धिं क्रमा-
देकस्मै भवनिस्पृहाय परमानन्दस्वरूपां गतिम् ।
अन्यस्मै विषयानुरक्तमनसे दीनाय दुःखापहं
द्रव्यं द्वारसमाश्रिताय ददतीं वन्दामहे सुन्दरीम् ॥ ७० ॥

नम्रीभूय कृताञ्जलिप्रकटितप्रेमप्रसन्नानने
मन्दं गच्छति संनिधौ सविनयात्सोत्कण्ठमोघत्रये ।
नानामन्त्रगणं तदर्थमखिलं तत्साधनं तत्फलं
व्याचक्षाणमुदग्रकान्ति कलये यत्किंचिदाद्यं महः ॥ ७१ ॥

१. 'मन्त्रौघार' ख-ग. २. 'सानन्दं शनकैरपि स्वपुरतो' क. ३. 'किंनरीकुलमिदं' क. ४. '-नीकलये' क.

तव दहनसदृक्षैरीक्षणैरेव चक्षु-
र्निखिलपशुजनानां भीषयद्भीषणास्यम् ।
कृतवसति परेशप्रेयसि द्वारि नित्यं
शरभमिथुनमुच्चैर्भक्तियुक्तो नतोऽस्मि ॥ ७२ ॥

कल्पान्ते सरसैकदासमुदितानेकार्कतुल्यप्रभां
रत्नस्तम्भनिबद्धकाञ्चनगुणस्फूर्जद्वितानोत्तमाम् ।
कर्पूरागुरुगर्भवर्तिकलिकाप्रान्तप्रदीपावलीं
श्रीचक्राकृतिमुल्लसन्मणिगणां वन्दामहे वेदिकाम् ॥ ७३ ॥

स्वस्थानस्थितदेवतागणवृते बिन्दौ मुदा स्थापितं
नानारत्नविराजिहेमविलसत्कान्तिच्छटादुर्दिनम् ।
चञ्चत्कौसुमतूलिकासनयुतं कामेश्वराधिष्ठितं
नित्यानन्दनिदानमम्ब सततं वन्दे च सिंहासनम् ॥ ७४ ॥

वदद्भिरभितो मुदा जय जयेति वृन्दारकैः
कृताञ्जलिपरम्परा विदधती कृतार्था दृशा ।
अमन्दमणिमण्डलीखचितहेमसिंहासनं
सखीजनसमावृतं समधितिष्ठ दाक्षायणि ॥ ७५ ॥

कर्पूरादिकवस्तुजातमखिलं सौवर्णभृङ्गारकं
ताम्बूलस्य करण्डकं मणिमयं चैलाञ्चलं दर्पणम् ।
विस्फूर्जन्मणिपादुके च दधतीः सिंहासनस्याभित-
स्तिष्ठन्तीः परिचारिकास्तव सदा वन्दामहे सुन्दरि ॥ ७६ ॥

स्वदमलवपुरुद्यत्कान्तिकल्लोलजालैः
स्फुटमिव दधतीभिर्बाहुविक्षेपलीलाम् ।
मुहुरपि च विधूते चामरग्राहिणीभिः
सितकरकरशुभ्रे चामरे चालयामि ॥ ७७ ॥

---

१. 'दग्रदन' ख-ग. २. 'जलम' क. ३. 'नमामि' क. ४. 'सार्धं' ख-ग. ५. 'शंस' क. ६. 'हतां तनु' क. ७. संबन्धज्ञानान्यविरक्षरा पटी. ८. 'वदनऽपुनरथत्का' क. ९. 'भंयामि' क.

प्रान्तस्फुरद्विमलमौक्तिकगुच्छजालं
चञ्चन्महामणिविचित्रितहेमदण्डम्।
उद्यत्सहस्रकरमण्डलचारु हेम-
छत्रं महेशमहिले वि[1]निवेशयामि ॥ ७८ ॥
उद्यत्तावकदेहकान्तिपटलीसिन्दूरपूरप्रभा-
शोणीभूतमुदग्रलोहितमणिच्छेदानुकारिच्छवि।
दूरादादरनिर्मितञ्जलिपुटैरालोक्यमानं सुर-
व्यूहैः काञ्चनमातपत्रमतुलं वन्दामहे सुन्दरम् ॥ ७९ ॥
संतुष्टां परमामृतेन विलसत्कामेश्वराङ्कस्थितां
पुष्पौघै[2]रभिपूजितां भगवतीं त्वां वन्दमाना मुदा।
स्फूर्जत्तावकदेहरश्मिकलनाप्राप्तस्वरूपाभिदाः
श्रीचक्रावरणस्थिताः सविनयं वन्दामहे देवताः ॥ ८० ॥
आधारशक्त्यादिकमाकलय्य मध्ये समस्ताधिकयोगिनीं च।
मित्रेशनाथादिकमत्र नाथचतुष्टयं शैलसुते नतोऽस्मि ॥ ८१ ॥
त्रिपुरासुधार्णवासनमारभ्य त्रिपुरमालिनी यावत्।
आवरणाष्टकसंस्थितमासनषट्कं नमामि परमेशि ॥ ८२ ॥
ईशाने गणपं स्मरामि विघ्नै[3]रद्विघ्नान्धकारच्छिदं
वायव्ये वटुकं च कज्जलरुचिं व्यालोपवीतान्वितम्।
नैर्ऋत्ये महिषासुरप्रमथिनीं दुर्गां च संपूजय-
न्नाग्नेयेऽखिलभक्तरक्षणपरं क्षेत्राधिनाथं भजे ॥ ८३ ॥
उ[4]ड्यानजालंधरकामरूपपीठानिमान्पूर्णगिरिप्रसक्तान्।
त्रिकोणदक्षाग्रिमसव्यभागमध्यस्थितान्सिद्धिकरान्नमामि ॥ ८४ ॥
लोकेशः पृथिवीपतिर्निगदितो विष्णुर्जलानां प्र[5]भु-
स्तेजोनाथ उमापतिश्च मरुतामीशस्तथा चेश्वरः।

---

१. 'विनिवेशयामि' क. २. 'रपि' क. ३. 'विघ्नेश' क. ४. 'औड्यान' क. ५. 'पति' क.

आकाशाधिपतिः सदाशिव इति प्रेताभिधामागता-
नेतांश्चक्रबहिःस्थितान्सुरगणान्वन्दामहे सादरम् ॥ ८५ ॥
तारानाथकलाप्रवेशनिगमव्याजाद्गताग्रुप्रथं(जाद्धुताशप्रभं)
त्रैलोक्ये तिथिषु प्रवर्तितकलाकाष्ठादिकालक्रमम् ।
रत्नालंकृतिचित्रवस्त्रललितं कामेश्वरीपूर्वकं
नित्याषोडशकं नमामि लसितं चक्रात्मनोरन्तरे ॥ ८६ ॥
हृदि भावितदैवतं प्रयत्नाभ्युपदेशानुगृहीतभक्तसंघम् ।
स्वगुरुक्रमसंज्ञचक्रराजस्थितमोघत्रयमानतोऽस्मि मूर्ध्ना ॥ ८७ ॥
हृदयमथ शिरः शिखाखिलाद्ये कवचमथो नयनत्रयं च देवि ।
मुनिजनपरिचिन्तितं तथास्त्रं स्फुरतु सदा हृदये षडङ्गमेतत् ॥ ८८ ॥
त्रैलोक्यमोहनमिति प्रथिते तु चक्रे
चश्चद्विभूषणगणत्रिपुराधिवासे ।
रेखात्रये स्थितवतीरणिमादिसिद्धी-
र्मुद्रा नमामि सततं प्रकटाभिधास्ताः ॥ ८९ ॥
सर्वाशापरिपूरके वसुदलद्वन्द्वेन विभ्राजिते
विस्फूर्जत्रिपुरेश्वरीनिवसतौ चक्रे स्थिता नित्यशः ।
कामाकर्षणिकादयो मणिगणभ्राजिष्णुदिव्याम्बरा
योगिन्यः प्रदिशन्तु काङ्क्षितफलं विख्यातगुप्ताभिधाः ॥ ९० ॥
महेशि वसुभिर्दलैर्लसति सर्वसंक्षोभणे
विभूषणगणस्फुरत्रिपुरसुन्दरीसद्मनि ।
अनङ्गकुसुमादयो विविधभूषणोद्भासिता
दिशन्तु मम काङ्क्षितं तनुतराश्च गुप्ताभिधाः ॥ ९१ ॥
लसद्युगदृशारके स्फुरति सर्वसौभाग्यदे
शुभाभरणभूषितत्रिपुरवासिनीमन्दिरे ।
स्थिता दधतु मङ्गलं सुभगसर्वसंक्षोभिणी-
मुखाः सकलसिद्धयो विदितसंप्रदायाभिधाः ॥ ९२ ॥

---

१. 'दुपदेश' क. २. 'चित्रित' क. ३. 'भिधानाः' क.

बहिर्दशारे सर्वार्थसाधके त्रिपुराश्रयाः ।
कुलकौलाभिधाः पान्तु सर्वसिद्धिप्रदायिकाः ॥ ९३ ॥
अन्तःशोभिदशारकेऽतिलुलिते सर्वादिरक्षाकरे
मालिन्या त्रिपुराद्यया विरचितावासे स्थितं नित्यशः ।
नानारत्नविभूषणं मणिगणभ्राजिष्णु दिव्याम्बरं
सर्वज्ञादिकशक्तिवृन्दमनिशं वन्दे निगर्भाभिधम् ॥ ९४ ॥
सर्वरोगहरेऽष्टारे त्रिपुरासिद्धयान्विते ।
रहस्ययोगिनीर्नित्यं वशिन्याद्या नमाम्यहम् ॥ ९५ ॥
चूताशोकविकासिकेतकरजःप्रोद्भासिनीलाम्बुज-
प्रस्फूर्जन्नवमल्लिकासमुदितैः पुष्पैः शरान्निर्मितान् ।
रम्यं पुष्पशरासनं सुललितं पाशं तथा चाङ्कुशं
वन्दे तावकमायुधं परशिवे चक्रान्तराले स्थितम् ॥ ९६ ॥
त्रिकोण उदितप्रभे जगति सर्वसिद्धिप्रदे
युते त्रिपुरयाम्बया स्थितवती च कामेश्वरी ।
तनोतु मम मङ्गलं सकलशर्म वज्रेश्वरी
करोतु भगमालिनी स्फुरतु मामके चेतसि ॥ ९७ ॥
सर्वानन्दमये समस्तजगतामाकाङ्क्षिते बैन्दवे
भैरव्यां त्रिपुराद्यया विरचितावासे स्थिता सुन्दरी ।
आनन्दोल्लसितेक्षणा मणिगणभ्राजिष्णुभूषाम्बरा
विस्फूर्जद्वदना परापररहः सा पातु मां योगिनी ॥ ९८ ॥
उल्लसत्कनककान्तिभासुरं सौरभस्फुरणवासिताम्बरम् ।
दूरतः परिहृतं मधुव्रतैरर्पयामि तव देवि चम्पकम् ॥ ९९ ॥
वैरमुद्धतमपास्य शंभुना मस्तके विनिहितं कलाच्छलात् ।
गन्धलुब्धमधुपाश्रितं सदा केतकीकुसुममर्पयामि ते ॥ १०० ॥
चूर्णीकृतं द्रागिव पद्मजेन त्वदाननस्पर्धिसुधांशुबिम्बम् ।
समर्पयामि स्फुटमञ्जलिस्थं विकासिजातीकुसुमोत्करं ते ॥ १०१॥

१. त्रिपुरमालिन्या. २. त्रिपुरासिद्धया चक्रेश्वर्या. ३. त्रिपुराम्बया.

अगरुबहलधूपाजस्रसौरभ्यरम्यां
मरकतमणिराजीराजिहारिस्रगाभाम् ।
दिशि विदिशि विसर्पद्गन्धलुब्धालिमालां
बकुलकुसुममालां कण्ठपीठेऽर्पयामि ॥ १०२ ॥

ईकारोर्ध्वगबिन्दुराननमधोबिन्दुद्वयं च स्तनौ
त्रैलोक्ये गुरुगम्यमेतदखिलं हार्दं च रेखात्मकम् ।
इत्थं कामकलात्मिकां भगवतीमन्तः समाराधय-
न्नानन्दाम्बुधिमज्जने प्रलभतामानन्दथुं सज्जनः ॥ १०३ ॥

धूपं तेऽगरुसंभवं भगवति प्रोल्लासिगन्धोद्धुरं
दीपं चैव निवेदयामि महसा हार्दान्धकारच्छिदम् ।
रत्नस्वर्णविनिर्मितेषु परितः पात्रेषु संस्थापितं
नैवेद्यं विनिवेदयामि परमानन्दात्मिके सुन्दरि ॥ १०४ ॥

जातीकोरकतुल्यमोदनमिदं सौवर्णपात्रे स्थितं
शुद्धान्नं शुचि मुद्गमाषचणकोद्भूतास्तथा सूपकाः ।
प्राज्यं माहिषमाज्यमुत्तममिदं हैयंगवीनं पृथ-
क्पात्रेषु प्रतिपादितं परशिवे तत्सर्वमङ्गीकुरु ॥ १०५ ॥

दुर्गे रोहितखण्डमण्डजपलं कौर्मं जखाङ्गं पृथ-
क्पट्त्रिंशन्ति(?) सुसाधितानि मृदुना सद्व्यञ्जनान्यग्निना ।
संपन्नानि च वेसवारविसरैर्दिव्यानि भक्त्या कृता-
न्यग्रे ते विनिवेदयामि गिरिजे सौवर्णपात्रव्रजे ॥ १०६ ॥

माषव्यञ्जनजातमुत्तमतमं मुद्गप्रकारान्बहू-
न्हारिद्रक्वथिकारसैर्विलुलितापूपांस्तथा चाणकान् ।
मांसं सर्पिषि साधितं बहुतरं शूल्याकृतं मारिचं
मत्स्यांश्चैव सुसंस्कृतान्परशिवे संस्थापयाम्यग्रतः ॥ १०७ ॥

१. 'निम्बीसूरणकारवेल्लबृहतीकूष्माण्डकोशातकीडिण्डाकानि पटोलकानि मृदुना ससाधितान्यग्निना' ख.

निम्बूकार्द्रकचूतकन्दकदलीकौशातकीकर्कटी-
धात्रीबिल्वकरीरकैर्विरचितान्यानन्दचिद्विग्रहे ।
राजीभिः कटुतैलसैन्धवहरिद्राभिः स्थितान्पातये
संधानानि निवेदयामि गिरिजे भूरिप्रकाराणि ते ॥ १०८ ॥
सितयाञ्चितलड्डुकव्रजान्मृदुपूपान्मृदुलाश्च पूरिकाः ।
परमान्नमिदं च पार्वति प्रणयेन प्रतिपादयामि ते ॥ १०९ ॥
दुग्धमेतदनले सुसाधितं चन्द्रमण्डलनिभं तथा दधि ।
फाणितं शिखरिणीं सितासितां सर्वमम्ब विनिवेदयामि ते॥११०॥
अग्रे ते विनिवेद्य सर्वममितं नैवेद्यमङ्गीकृतं
ज्ञात्वा तत्त्वचतुष्टयं प्रथमतो मन्ये सुतृप्तां ततः ।
देवीं त्वां परिशिष्टमम्ब कनकामत्रेषु संस्थापितं
शक्तिभ्यः समुपाहरामि सकलं देवेशि शंभुप्रिये ॥ १११ ॥
वामेन स्वर्णपात्रीमनुपमपरमान्नेन पूर्णां दधाना-
मन्येन स्वर्णदर्वीं निजजनहृदयाभीष्टदां धारयन्तीम् ।
सिन्दूरारक्तवस्त्रां विविधमणिलसद्भूषणां मेचकाङ्गीं
तिष्ठन्तीमग्रतस्ते मधुमदमुदितामन्नपूर्णां नमामि ॥ ११२ ॥
पङ्क्त्योपविष्टान्परितस्तु चक्रं शक्त्या स्वयालिङ्गितवामभागान् ।
सर्वोपचारैः परिपूज्य भक्त्या तवाम्बिके पारिषदान्नमामि॥११३॥
परमामृतमत्तसुन्दरीगणमध्यस्थितमर्कभासुरम् ।
परमामृतघूर्णितेक्षणं किमपि ज्योतिरुपास्महे परम् ॥ ११४ ॥
दृश्यते तव मुखाम्बुजं शिवे श्रूयते स्फुटमनाहतध्वनिः ।
अर्चने तव गिरामगोचरे न प्रयाति विषयान्तरं मनः ॥ ११५ ॥
त्वन्मुखाम्बुजविलोकनोल्लसत्प्रेमनिश्चलविलोचनद्वयीम् ।
उन्मनीमुपगतां सभामिमां भावयामि परमेशि तावकीम् ॥११६॥
चक्षुः पश्यतु नेह किंचन परं घ्राणं न वा जिघ्रतु
श्रोत्रं हन्त शृणोतु न त्वगपि न स्पर्शं समालम्बताम् ।

जिह्वा वेत्तु न वा रसं मम परं युष्मत्स्वरूपामृते
नित्यानन्दविघूर्णमाननयने नित्यं मनो मज्जतु ॥ ११७ ॥
यस्त्वां पश्यति पार्वति प्रतिदिनं ध्यानेन तेजोमयीं
मन्ये सुन्दरि तत्त्वमेतदखिलं वेदेषु निष्ठां गतम् ।
यस्तस्मिन्समये तवार्चनविधावानन्दसान्द्राशयो
यातोऽहं तदभिन्नतां परशिवे सोऽयं प्रसादस्तव ॥ ११८ ॥
गणाधिनाथं वटुकं च योगिनीः क्षेत्राधिनाथं च विदिक्चतुष्टये ।
सर्वोपचारैः परिपूज्य भक्तितो निवेदयामो बलिमुक्तयुक्तिभिः॥११९॥
वीणामुपान्ते खलु वादयन्त्यै निवेद्य शेषं खलु शेषिकायै ।
सौवर्णभृङ्गारविनिर्गतेन जलेन शुद्धाचमनं विधेहि ॥ १२० ॥
ताम्बूलं विनिवेदयामि विलसत्कर्पूरकस्तूरिका-
जातीपूगलवङ्गचूर्णखदिरैर्भक्त्या समुल्लासितम् ।
[1]स्फूर्जद्रत्नसमुद्गकप्रणिहितं सौवर्णपात्रे स्थितै-
र्दीपैरुज्ज्वलमन्त्रचूर्णरचितैरारार्तिकं गृह्यताम् ॥ १२१ ॥
काचिद्गायति किंनरी कलपदं वाद्यं दधानोर्वशी
रम्भा नृत्यति केलिमञ्जुलपदं मातः पुरस्तात्तव ।
[2]क्लैव्यं प्रोज्झ्य सुरस्त्रियो मधुमदव्याघूर्णमानेक्षणं
नित्यानन्दसुधाम्बुधिं तव मुखं पश्यन्ति [3]हृष्यन्ति च ॥१२२॥
ताम्बूलोल्लासिवक्त्रैस्त्वदमलवदनालोकनोल्लासिनेत्रै-
श्चक्रस्थैः शक्तिसंघैः परिहृतविषयासङ्गमाकर्ण्यमानम् ।
गीतज्ञाभिः प्रकामं मधुरसमधुरं वादितं किंनरीभि-
र्वीणाझंकारनादं कलय परशिवानन्दसंधानहेतोः ॥ १२३ ॥
अर्चाविधौ ज्ञानलवोऽपि दूरे दूरे तदापादकवस्तुजातम् ।
प्रदक्षिणीकृत्य ततोऽर्चनं ते पञ्चोपचारात्मकमर्पयामि[4] ॥ १२४ ॥

---

१. 'मुक्ताचित्रचतुष्कशालिनि महासौवर्णपात्रे स्थितैः' ख. २. 'सुस्थीकृत्य मनोऽपरा' ख. ३. 'हृष्यत्त्वचः' ख. ४. 'विमलीकृते मुहुरिश्वरप्रतिविम्बानन्दनाथचरणेन । मम हृदयदर्पणेऽस्मिन्प्रतिपालिता भावना तेषाम् ॥' इत्यधिका.

यथेप्सितमनोगतप्रकटितोपचारार्चितां
  निजावरणदेवतागणवृतां सुरेशास्थिताम् ।
कृताञ्जलिपुटो मुहुः कलितभूमिरष्टाङ्गकै-
  र्नमामि भगवत्यहं त्रिपुरसुन्दरि त्राहि माम् ॥ १२५ ॥
विज्ञप्तीरवधेहि मे सुमहता यत्नेन ते संनिधिं
  प्राप्तं मामिह कांदिशीकमधुना मातर्न दूरीकुरु ।
चित्तं त्वत्पदभावने व्यभिचरेद्दृग्वा च मे जातु चे-
  त्तत्सौम्ये स्वगुणैर्वधान न यथा भूयो विनिर्गच्छति ॥ १२६॥
काहं मन्दमतिः क्व चेदमखिलैरैकान्तभक्तैः स्तुतं
  ध्यातं देवि तथापि ते स्वमनसा श्रीपादुकापूजनम् ।
कादाचित्कमदीयचिन्तनविधौ संतुष्टया शर्मदं
  स्तोत्रं देवतया तया प्रकटितं मन्ये मदीयानने ॥ १२७ ॥
  नित्यार्चनमिदं चित्ते भाव्यमानं सदा मया ।
  निबद्धं विविधैः पद्यैरनुगृह्णातु सुन्दरी ॥ १२८ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं श्रीत्रिपुरसुन्दरी-
मानसिकोपचारपूजास्तोत्रं समाप्तम् ।

---

## श्रीसुन्दराचार्यकविनिर्मितं
## गीतिशतकम् ।

कि देवैः किं जीवैः किं भावैस्तेऽपि येन जीवन्ति ।
तव चरणं शरणं मे दरहरणं देवि कान्तिमत्यम्ब ॥ १ ॥
अरुणाम्बुदनिभकान्ते करुणारसपूरपूर्णनेत्रान्ते ।
शरणं भव शशिबिम्बद्युतिमुखि जगदम्ब कान्तिमत्यम्ब ॥ २ ॥
कलिहरणं भवतरणं शुभभरणं ज्ञानसंपदां करणम् ।
नतशरणं तव चरणं करोतु मे देवि कान्तिमत्यम्ब ॥ ३ ॥

---

१. गीतिशतकमिदं तिनेवेल्लिडिस्ट्रिक्टप्रदेशवर्तिकोटपुत्तनेरीनिवासिभिः जयपुरि-कृष्णमाचार्यैः श्रीनिवासाचार्यैश्चास्मत्सविधे प्रेषितमिति तेषामुपकारगौरवं बिभृमः.

अमितां ममतां मम तां तनु तां तनुतां गतां पदाब्जं ते ।
कृपया विदितो विहितो यया तवाहं हि कान्तिमत्यम्ब ॥ ४ ॥
मम चरितं विदितं चेदुदयेन्न दया कदापि ते सत्यम् ।
तदपि वदान्यपि कुरु तां निर्हेतुकमाशु कान्तिमत्यम्ब ॥ ५ ॥
न बुधत्वं न विधुत्वं न विधित्वं नौमि किं तु भृङ्गत्वम् ।
असकृत्प्रणम्य याचे त्वच्चरणाब्जस्य कान्तिमत्यम्ब ॥ ६ ॥
अभजमहं किं सारे कंसारे वीपदेऽपि संसारे ।
रुचिमत्तां शुचिमत्तामहह त्वं पाहि कान्तिमत्यम्ब ॥ ७ ॥
मामसकृदाप्रसादाद्दुष्कृतकारीति मावमन्यस्व ।
स्मर किं न मया सुकृतं वर्धितमिदमद्य कान्तिमत्यम्ब ॥ ८ ॥
करुणाविषयं यदि मां न तनोषि यथा तथापि वर्तेऽहम् ।
भवति कृपालुत्वं ते सीदामि मृषेति कान्तिमत्यम्ब ॥ ९ ॥
अतुलितभवानुरागिणि दुर्वर्णाचलविहारिणि मयि त्वम् ।
समतेर्ष्यया प्रसादं न वितनुषे किं नु कान्तिमत्यम्ब ॥ १० ॥
यां गां वाम्यपतं यदि जीवातुस्त्वाम्मृतेऽन्ततः को मे ।
हित्वा पयोदपङ्क्तिं स्तोकस्य गतिः क्व कान्तिमत्यम्ब ॥ ११ ॥
कं वा कटाक्षलक्ष्यं न करोष्येवं मयि त्वमासीः किम् ।
किं त्वामुपालभेऽहं विधिर्गरीयानिह कान्तिमत्यम्ब ॥ १२ ॥
तनुजे जननी जनयत्यहितेऽपि प्रेम हीति तन्मिथ्या ।
यदुपेक्षसे त्रिलोकीं मातर्मां देवि कान्तिमत्यम्ब ॥ १३ ॥
निन्दामि साधुवर्गं स्तौमि पुनः क्षीणपक्षसंसर्गम् ।
वन्दे किं ते चरणे किं स्वाभीतिस्तु कान्तिमत्यम्ब ॥ १४ ॥
गीर्वाणवृन्दविहारसायनस्तीयमाननीयगुणे ।
निगमान्तपञ्जरान्तरमरालिके पाहि कान्तिमत्यम्ब ॥ १५ ॥
त्रिनयनकान्ते शान्ते तान्ते स्वान्ते ममास्तु पद दान्ते ।
कृपया मुनिजनचिन्तितचरणे नियताय कान्तिमत्यम्ब ॥ १६ ॥

धुतकदने कृतमदने भृशमदने योगिशर्वभक्तानाम् ।
मणिसदने शुभरदने शशिवदने पाहि कान्तिमत्यम्ब ॥ १७ ॥
गिरितनुजे हतदनुजे वरमनुजेद्धाभिधे च हर्यनुजे ।
गुहतनुजेऽवितमनुजे कुरु करुणां देवि कान्तिमत्यम्ब ॥ १८ ॥
गजगमने रिपुदमने हरकमने क्षपापकृच्छमने ।
कलिजनने मयि दयया प्रसीद हे देवि कान्तिमत्यम्ब ॥ १९ ॥
यन्मानसे पदाब्जं तव संविद्धास्त्वदाभयाभाति ।
तत्पाददासदासकदासत्वं नौमि कान्तिमत्यम्ब ॥ २० ॥
दुष्करदुष्कृतराशेर्न बिभेमि शिवे यदि प्रसादस्ते ।
दलने दृषदां टङ्कः कल्पेत न किं नु कान्तिमत्यम्ब ॥ २१ ॥
कोमलदेहं किमपि श्यामलशोभं शरन्मृगाङ्कमुखम् ।
रूपं तव हृदये मम दीपश्रियमेतु कान्तिमत्यम्ब ॥ २२ ॥
किंचनवञ्चनदक्षं पञ्चशरारेः प्रपञ्चजीवातुम् ।
चञ्चलमञ्चलमक्ष्णोरयि मयि कुरु देवि कान्तिमत्यम्ब ॥ २३ ॥
अञ्चति यं त्वदपाङ्गः किंचित्तस्यैव कुम्भदासत्वे ।
अहमहमिकया विबुधाः कलहं कलयन्ति कान्तिमत्यम्ब ॥ २४ ॥
किमिदं वदाद्भुतं ते कस्मिंश्चिल्लक्षिते कटाक्षेण ।
बृंहादीनां हृदयं दीनत्वं याति कान्तिमत्यम्ब ॥ २५ ॥
प्रायो रायोपचिते मायोपायोल्बणासुरक्षपणे ।
गेयो जायोरुबले श्रेयो भूयोऽस्तु कान्तिमत्यम्ब ॥ २६ ॥
करणं शरणं तव लसदलकं कुलकं गिरीशभाग्यानाम् ।
सरलं विरलं जयति सकरुणं तरुणां हि कान्तिमत्यम्ब ॥ २७ ॥
शंकरि नमांसि वाणी किंकरि दैतेयराड्भयंकरिते ।
करवै सुरवैर्यनुजे पुरवैर्यभिकेऽद्य कान्तिमत्यम्ब ॥ २८ ॥
तव सेवां भुवि के वा नाकाङ्क्षन्ते क्षमाभृतस्तनये ।
त्वमिव भवेयुर्यदि ते भजन्ति ये यां हि कान्तिमत्यम्ब ॥ २९ ॥

अखिलदिविषद्वालम्बे पदयुगं देवि ते सदालम्बे।
जगतां गोमत्यम्ब क्षितिधरकन्येऽद्य कान्तिमत्यम्ब ॥ ४३ ॥
अत्रैव कल्पवल्लीचिन्तामणिरस्ति कामधेनुरपि।
वेद्मि न किं यदि बुधता पुंसा लभ्येत कान्तिमत्यम्ब ॥ ४४ ॥
नाहं भजामि दैवं मनसाप्यन्यत्त्वमेव दैवं मे।
न मृषा भणामि शोधय मानसमाविश्य कान्तिमत्यम्ब ॥ ४५ ॥
खेदयसि मां मृगं किं मृगतृष्णेव प्रसीद नौमि शिवे।
मोदय कृपया नो चेत्क नु यायां देवि कान्तिमत्यम्ब ॥ ४६ ॥
कार्यं स्वेन स्वहितं को नाम वदेदयं जनो वेत्ति।
त्वं वा वदसि किमस्माद्गतिस्त्वमेवास्य कान्तिमत्यस्त्र ॥ ४७ ॥
धन्योऽस्ति को मदन्यो दिवि वा भुवि वा करोषि चेत्करुणाम्।
इदमपि विश्वं विश्वं मम हस्ते किं च कान्तिमत्यम्ब ॥ ४८ ॥
तरुणेन्दुचूडजाये त्वां मनुजा ये भजन्ति तेषां ते।
भूतिः पदाब्जधूलिर्धूलिर्भूतिस्तु कान्तिमत्यम्ब ॥ ४९ ॥
त्वामत्र सेवते यस्त्वत्सारूप्यं समेत्य सोऽमुत्र।
हरकेल्यां त्वदसूयापात्रति चित्राङ्गि कान्तिमत्यम्ब ॥ ५० ॥
चित्रीयते मनस्त्वां दृष्ट्वा भाग्यावतारमूर्तिं मे।
किंच सुधाब्धेर्लहरीविहारितामेति कान्तिमत्यम्ब ॥ ५१ ॥
किरतु भवती कटाक्षाञ्जलजसदृक्षात्रसेन तादृक्षान्।
कृतसुररक्षान्मोहनदक्षान्भीमस्य कान्तिमत्यम्ब ॥ ५२ ॥
मानसवार्धिनिलीनौ रागद्वेषौ प्रबोधवेदमुषौ।
मधुकैटभौ तवेक्षणमीनो मे हरतु कान्तिमत्यम्ब ॥ ५३ ॥
मञ्जुलभाषिणि वञ्जुलकुड्मललसितालके लसत्तिलके।
पालय कुवलयनयने बालं मां देवि कान्तिमत्यम्ब ॥ ५४ ॥
पुरमथनविलोलाभिः पटुलीलाभिः कटाक्षमालाभिः।
शुभशीलाभिः कुवलयनीलाभिः पश्य कान्तिमत्यम्ब ॥ ५५ ॥
करुणारसार्द्रनयने शरणागतपालनैककृतदीक्षे।
प्रगुणाभरणे पालय दीनं मां देवि कान्तिमत्यम्ब ॥ ५६ ॥

नरजन्मैव वरं त्वद्भजनं येन क्रियेत चेदसात् ।
किमवरमेवं नो चेदतस्तदेवास्तु कान्तिमत्यम्ब ॥ ५७ ॥
यद्दुर्लभं सुरैरपि तन्नरजन्मादिशो नमाम्येतत् ।
सार्थय दानाद्भक्तेर्व्यर्थय मान्येन कान्तिमत्यम्ब ॥ ५८ ॥
जीवति पञ्चभिरेभिर्न विनास्त्येभिर्जनस्ततुं भजते ।
तदपि तदासीनां त्वां दरमपि नो वेत्ति कान्तिमत्यम्ब ॥ ५९ ॥
यत्प्रेमद्विपवदने पङ्कदने वा कुरुष्व तन्मयि ते ।
जात्वपि मा भूद्भेदः स्तोकेष्वस्मासु कान्तिमत्यम्ब ॥ ६० ॥
शम्बररुहरुचिवदने शम्बररिपुजीविके हिमाद्रिसुते ।
अम्बरमध्ये वम्बरडम्बरचिकुरेऽव कान्तिमत्यम्ब ॥ ६१ ॥
मन्मानसपाठीनं कलिपुलिने क्रोधभानुसंतप्ते ।
सिञ्च परितो भ्रमन्तं कृपोर्मिभिर्देवि कान्तिमत्यम्ब ॥ ६२ ॥
यमिनः क्व वेद मुकुटान्यपि भवतीं भावयन्ति वा नो वा ।
यद्येवं मम हृदयं वेत्तु कथं ब्रूहि कान्तिमत्यम्ब ॥ ६३ ॥
क्लिश्यत्ययं जनो बत जननाद्यैरित्यहं श्रितो भवतीम् ।
तत्राप्येवं यदि वद तव किं महिमात्र कान्तिमत्यम्ब ॥ ६४ ॥
वृजिनानि सन्तु किमतस्तेषां धूत्यै न किं भवेद्वद ते ।
स्मरणं दृषदुत्क्षेपणमिव काकगणस्य कान्तिमत्यम्ब ॥ ६५ ॥
प्रसरति तव प्रसादे किमलभ्यं व्यत्यये तु किं लभ्यम् ।
लभ्यमलभ्यं किं नस्तेन विना देवि कान्तिमत्यम्ब ॥ ६६ ॥
किं चिन्तयामि संविच्छरदुदयं त्वत्पदच्छलं कतकम् ।
घृष्टं यदि प्रसीदेद्धृदयजलं मेऽद्य कान्तिमत्यम्ब ॥ ६७ ॥
विभजतु तव पदयुगली हंसीयोगीन्द्रमानसैकचरी ।
संविदसंवित्पयसी मिलिते हृदि मेऽद्य कान्तिमत्यम्ब ॥ ६८ ॥
कियदायुस्तत्रार्धं स्वप्ने न हृतं कियच्च बाल्याद्यैः ।
कियदस्ति केन भजनं तृप्तिस्तव केन कान्तिमत्यम्ब ॥ ६९ ॥
वेद्मि न धर्ममधर्मं कायक्लेशोऽस्त्यदो विचारफलम् ।
जानाम्येकं भजनं तव शुभदं हीति कान्तिमत्यम्ब ॥ ७० ॥

क्लिश्यति भोगे दुह्यति योगायेदं वृथाद्य मुह्यति मे।
हृदयं किमु स्वतो वा परतो वा वेत्ति कान्तिमत्यम्ब॥ ७१॥
न बिभीमो भवजलधेर्दरमपि दनुजारिसोदरि शिवे ते।
आस्ते कटाक्षवीक्षातरणिर्ननु देवि कान्तिमत्यम्ब॥ ७२॥
चिन्तामणौ करस्थेऽप्यटनं वीथीषु किं ब्रुवे मातः।
वद किं मे त्वयि सत्यामन्याश्रयणे न कान्तिमत्यम्ब॥ ७३॥
नरवर्णनेन रसना परवनितावीक्षणेन नेत्रमपि।
क्रौर्येण मनोऽपि हतं माव्यं तु न वेद्मि कान्तिमत्यम्ब॥ ७४॥
त्रासितसुरपतितप्तं तप्तं किं धर्ममेव वा क्लृप्तम्।
किमपि न संचितममितं वृजिनमये किं तु कान्तिमत्यम्ब॥ ७५॥
पापीत्युपेक्षसे चेत्पातुं कान्या भवेद्विना भवतीम्।
किमिदं न वेद्मि सोऽयं बकमन्त्रः कस्य कान्तिमत्यम्ब॥ ७६॥
वञ्चयितुं वृजिनाद्यैर्मुग्धान्भवतीं विनेतरान्नेक्षे।
किमतः परं करिष्यसि विदितमिदं मेऽद्य कान्तिमत्यम्ब॥ ७७॥
वञ्चयसि मां रुदन्तं बालमिव फलेन मां धनाढ्येन।
मास्तु कदापि ममेदं कैवल्यं देहि कान्तिमत्यम्ब॥ ७८॥
त्रय्या किं मेऽद्य गुणे तव विदिते यो यतस्तु संभवति।
आस्तां मौक्तिकलाभे सति शुक्त्या किं नु कान्तिमत्यम्ब॥ ७९॥
अद्भुतमिदं सकृद्येन ज्ञानावाश्रियो दिशस्येभ्यः।
ये खलु भक्तास्तेभ्यः कैवल्यं दिशसि कान्तिमत्यम्ब॥ ८०॥
सुरनैचिकीव विबुधान्कादम्बिनि केव नीलकण्ठमपि।
प्रीणयसि मानसं मे शोभय हंसीव कान्तिमत्यम्ब॥ ८१॥
कर्तुं मनःप्रसादं तव मयि चेत्किं करिष्यति वृजिनम्।
जलजविकासे भानोः परिपन्थितमो नु कान्तिमत्यम्ब॥ ८२॥
तव तु करुणा स्रवन्त्यां प्रवहन्त्यां स्तोकता गतेति मया।
लुठति स्फुटति मनो मे नेदं जानासि कान्तिमत्यम्ब॥ ८३॥
शोधयितुमुदासीना यदि मां पात्रं किमस्य पश्याहम्।
मादृशि का वा वार्ता दासजने कान्तिमत्यम्ब॥ ८४॥

अभजमनन्यगतिस्त्वां किं कुर्यास्त्वं न वेद्म्यतःप्रभृति ।
अवने वानवने वा न विचारो मेऽस्ति कान्तिमत्यम्ब ॥ ८५ ॥
किं वर्तते ममासान्निखिलजगन्मस्तलालितं भाग्यम् ।
यमिहृदयपद्महंसीं यत्त्वां सेवेऽद्य कान्तिमत्यम्ब ॥ ८६ ॥
कर्तुं जगन्ति विधिवद्भर्तुं हरिवद्गिरीशवद्धर्तुम् ।
लीलावती त्वमेव प्रतीयसे देवि कान्तिमत्यम्ब ॥ ८७ ॥
केचिद्विदन्ति भवतीं केचिन्न विदन्ति देवि सर्वमिदम् ।
त्वत्कृत्यं वद सत्यं किं लब्ध तेन कान्तिमत्यम्ब ॥ ८८ ॥
शास्त्राणि कुक्षिपूर्त्यै स्फूर्त्यै निगमाश्च कर्मणां किं तैः ।
किं तव तत्त्वं ज्ञेयं यैस्त्वत्कृपयैव कान्तिमत्यम्ब ॥ ८९ ॥
किं प्रार्थये पुनः पुनरवने भवतीं विना विचारः स्यात् ।
कस्याः क इति विदन्नपि दूये मोहेन कान्तिमत्यम्ब ॥ ९० ॥
विदुषस्त्वां शरणं मे शास्त्रश्रमलेशवार्तयापि कृतम् ।
करजुषि नवनीते किं दुग्धविचारेण कान्तिमत्यम्ब ॥ ९१ ॥
प्रणवोपनिषन्निगमागमयोगिमनस्स्विवातितुङ्गेषु ।
भाहि प्रभेव तरणेर्मम हृदि निम्नेऽपि कान्तिमत्यम्ब ॥ ९२ ॥
स्फुटितारुणमणिशोभं त्रुटिताभिनवप्रवालमृदुलत्वम् ।
श्रुतिशिखरशेखरं ते चरणाब्जं स्तौमि कान्तिमत्यम्ब ॥ ९३ ॥
तव चरणाम्बुजभजनादमृतरसस्यन्दिनः कदाप्यन्यत् ।
स्वप्नेऽपि किंचिदपि मे मा स्म भवद्देवि कान्तिमत्यम्ब ॥ ९४ ॥
विस्मापनं पुरारेरस्मादृग्जीविकां परात्परमम् ।
सुषुमामयं स्वरूपं सदा निषेवेय कान्तिमत्यम्ब ॥ ९५ ॥
मङ्गलमस्त्विति पिष्टं पिनष्टि गीः सर्वमङ्गलायास्ते ।
वशितजयायाश्च तथा जयेति वादोऽपि कान्तिमत्यम्ब ॥ ९६ ॥
आशासितुर्विभूत्यै भवति भवत्यै हि मङ्गलाशास्तिः ।
स्वामिसमृद्ध्याशंसा भृत्योन्नत्यै हि कान्तिमत्यम्ब ॥ ९७ ॥

निगमैरपरिच्छेद्यं क्व वैभवं तेऽल्पधीः क्व चाहमिति ।
तूष्णीकं मां भक्तिस्तव मुखरयति स्म कान्तिमत्यम्ब ॥ ९८ ॥
अनुकम्पापरवशितं कम्पातटसीम्नि कल्पितावसथम् ।
उपनिषदां तात्पर्यं तव रूपं स्तौमि कान्तिमत्यम्ब ॥ ९९ ॥
जय धरणीधरतनये जय वेणुवनाधिराट्प्रिये देवि ।
जय जम्भभेदिविनुते जय जगतामम्ब कान्तिमत्यम्ब ॥ १०० ॥
गुणमञ्जरिपिञ्जरितं सुन्दररचितं विभूषणं सुदृशाम् ।
गीतिशतकं भवत्या क्षयतु कटाक्षेण कान्तिमत्यम्ब ॥ १०१ ॥
वप्ता यस्य मनीषिहारतरलः श्रीवेङ्कटेशो महा-
न्माता यस्य पुनः सरोजनिलया साध्वीशिरोभूषणम् ।
श्रीवत्साभिजनामृताम्बुधिविधुः सोऽयं कविः सुन्दरः
देव्या गीतिशतं व्यधत्त महितं श्रीकान्तिमत्या मुदे ॥१०२॥

इति तिरुनेल्वेलिप्रदेशवर्तिविट्ठलपुरनिवासिभिः, अष्टगोत्रं तिरुमलैनल्लान्चक्रवर्तिश्रीवात्स-वेङ्कटेशविद्वन्मणितनूजैः, श्रीसुन्दराचार्यकविभिरभिनिर्मितं गीतिशतकं संपूर्णम् ।

---

## श्रीसामराजदीक्षितविरचितं

## त्रिपुरसुन्दरीमानसपूजनस्तोत्रम् ।

अमृतजलधिमध्योल्लासिरत्नान्तरीप-
प्रसृमरकिरणालीकल्पितोद्यानशोभे ।
सुरतरुनिकुरम्बस्पृष्टवातायनान्त-
श्चलदलिपटलीभिः क्लृप्तधूपादिकृत्ये ॥ १ ॥
मणिमयभवनेऽन्तःप्रौढमाणिक्यशाला-
मधिवसति विशाला कापि ते रत्नवेदी ।

१. अस्य कवेः स्थानं श्रीमधुरा. समयश्च ख्रिस्तीयषोडशशतकोत्तरार्धम्. अनेन च पूजारत्नादयोऽनेके ग्रन्थाः कृताः. एतस्य पुत्रपौत्रादयोऽपि दीक्षितकामराजभवराजा-दयो महाकवयो ग्रन्थकर्तारश्चासन्. एतस्य वंशे दीक्षितबालकृष्णशर्माद्यापि मधु-रायां वर्तते. एतत्सर्वं तत्कृतग्रन्थेभ्योऽवगम्यते.

पुनराचमनं कार्यं जगज्जननि सुव्रते ।
त्वच्छिक्षितेन मार्गेण यतो लोकः प्रवर्तते ॥ ९ ॥

त्वरितसहचरीभिर्दत्तहस्तावलम्बं
चरणनलिनमेतत्पादुकास्थं विधाय ।
प्रविश विविधशालं स्नानगेहान्तरालं
पशुपतिसहितैवाभ्यङ्गमङ्गीकुरुष्व ॥ १० ॥

अपि रसिकविगीतं भक्तचित्तानुमत्यै
सदयहृदयभावे स्नाहि पञ्चामृतेन ।
शशिमृगमदमुस्तागौरसिद्धार्थचूर्णैः
कुसुमजलविमिश्रैः स्वैरमुद्वर्तयाङ्गम् ॥ ११ ॥

परिजनपरिमृष्टे त्वच्छरीरे न याव-
च्छिशिरसलिलधारां कापि चिक्षेप तावत् ।
उदयिनि जनमातः सीत्कृते बद्धभावै-
स्त्रिपुरमथनहासैर्व्रीडितं क्रीडितं ते ॥ १२ ॥

अथ विमलितरत्नस्वर्णदुर्वर्णकुम्भै-
स्त्रिभुवनगततीर्थानीतपानीयपूर्णैः ।
स्नपयति सुरनारीवृन्दमेतत्तथापि
प्रणयजलमिदं नः स्नानकृत्यं करोतु ॥ १३ ॥

विमलधवलचीनप्रच्छदप्रावृताङ्ग्या-
स्तव शिरसिरुहेभ्यो निर्हरेऽम्बाम्बुबिन्दून् ।
अगरुशकलधूपैर्धूप्यतां चाङ्गमङ्गं
सह पशुपतिना त्वं याहि वासोगृहान्तः ॥ १४ ॥

नवविमलविचित्रे वाससी नूलरत्न-
द्युतिकृतपुनरुक्तायामसंशोभिनी ते ।
अथ कुचपरिणाहाच्छादिनीं शंभुनेत्र-
त्रितयभवदसूयां कञ्चुकीमर्पयामि ॥ १५ ॥

नहनमपि कचानां कङ्कतीभिर्विधाय
ग्रथितमणिविभूषां देवि वेणीं करोमि ।
निहितनवकिरीटालम्बिमुक्तालताभि-
स्ततबहलमयूखां चन्द्रलेखां विदध्याम् ॥ १६ ॥
अलिकतलविलम्बिस्फीतसीमन्तमुक्ता-
सरणिघटितहीरास्पष्टचन्द्राचतन्द्रे ।
विविधमणिगणाङ्कोत्तंससंश्लिष्यदश्मा
श्रवणयुगविभूषा देवि तोषाय भूयात् ॥ १७ ॥
विविधविरचनाभिर्भिन्नभिन्ना विभूषा
जनयतु तव कण्ठे देवि कामप्यभिख्याम् ।
गुणिनमपि गिरीशश्लेषदत्तान्तरायं
कठिनकुचयुगाग्रे हारमारोपयामि ॥ १८ ॥
दरतरलविलम्बिस्वर्णसूत्रान्तगुच्छे
जननि तव दिशेतामङ्गदे शर्मकर्म ।
अथ वलयमणीनां रश्मिसंभिन्नमुद्रां
जनयतु पुनरुक्तां शृङ्खलामन्तरीणाम् ॥ १९ ॥
मणिमयरशनाधःक्षुद्रघण्टानिनादा
मणितगुणनिकानां सारकाः स्युः शिवस्य ।
मरकतमणिजातं मञ्जुमञ्जीरयुग्मं
रचयतु शशिमौले रञ्जनं सिञ्जितेन ॥ २० ॥
अरुणमणिकृतानामङ्गुलीभूषणानां
प्रभवतु पदमुस्त्रैर्लोक्षया रञ्जितं ते ।
मृगमदरचितायां पत्रभङ्गीलताया-
मनुभवतु दृगन्तो बन्धनं भूतभर्तुः ॥ २१ ॥
भज जननि हरिद्रां दत्तहारिद्रमुद्रां
कुसुमसलिलतैलाक्रान्तकाश्मीरकोशाम् ।

१. किरणैः.

अथ नमसि कुरु मुक्तां दन्तवासोनुपक्तां
स्मितरुचिपुनरुक्तां नन्दितानेकभक्ताम् ॥ २२ ॥
सहजनलिननीले खञ्जने खञ्जनानां
भवनिगडगतानां मोचने लोचने ते।
जननि गिरिशचेतोरञ्जने मन्दमन्दं
मसृणिमसृणितैस्तैरञ्जनैरञ्जनेयम् ॥ २३ ॥
प्रणतिभिरुपनीतं दीप्तलालाटनेत्र-
प्रतिभटमिव शंभोर्मृत्युबाधाविरोधि[1]।
शशिन इव मुखेन्दोर्भेदकः कोऽपि धर्मो
जनयतु मुदमुच्चैः कुङ्कुमं रङ्कुनेत्रे ॥ २४ ॥
युगपदुपगतेन्द्रोपेन्द्ररुद्रादिमौलि-
स्थलमुकुटविघट्टचण्डदण्डाभिघातैः।
कृतसरणिरजस्रक्रुद्धदौवारिकैस्ते
जननि भव विभूषा प्रेतपद्मासनस्य ॥ २५ ॥
अहमहमिकयाधः पातुकानां सुराणां
प्रपदमपि शरीरे देवि संयोज्य शीघ्रम्।
करुणरसमयीनां लोचनान्तश्छटानां
कतिपयवलनाभिर्देहि पूजावकाशम् ॥ २६ ॥
अगुरुघुसृणचोरीशीरगोरोचनाभि-
र्मलयजमृगनाभिस्फीतकर्पूरपूरैः।
कुसुमसलिलघृष्टैः कल्पयित्वाङ्गरागं
पटुतरपटवासैर्वासये तेऽङ्गकानि ॥ २७ ॥
कमलकुमुदमल्लीमालतीकुन्दजाती-
बकुलकनकनीपाशोकचाम्पेयकाद्यैः।
मरुबकतुलसीभिः केतकीबिल्वपत्रै-
र्दमनकशतपत्रैरर्चये त्वत्पदाब्जम् ॥ २८ ॥

१. मृगविशेषनयने.

हारस्रेखरवतंसशाटिकाप्रच्छकातुलितकञ्चुकीमुखैः ।
मण्डपैर्जवनिकाभिरुच्चकैः कौसुमैस्तव मुदं कदम्बये ॥ २९ ॥

कनकमयहसन्तीकोटिमध्यस्थितानां
मृदुपवनधुतानां दीप्तवैश्वानराणाम् ।
अगरुमुपरि हुत्वा गुग्गुलुं सर्जखण्डा-
न्घृतजतुपरिमिश्रं त्वां शिवे धूपयामि ॥ ३० ॥

धूपवर्तितरुमन्तरान्तरा गन्धतैलपरिपूर्णदीपिकाः ।
आवहन्तु तव पार्श्वयोस्तरामम्बिके जवनिकापटश्रियम् ॥ ३१ ॥

सुरसुरभिजसर्पिःपूरिते रत्नपात्रे
हिमकिरणरजोभिर्लोडितां तूलवर्तीम् ।
तरुणदहनयुक्तामम्ब कृत्वा ददेयं
निरयनिरसनाय प्रस्फुरन्तं प्रदीपम् ॥ ३२ ॥

रजतकनकहीरायश्मपात्रेषु मात-
र्विविधरससनाथैश्चोष्यलेह्यप्रपेयैः ।
उपहितबहुभक्ष्यैर्व्यञ्जनैश्चारुखाद्यै-
र्जठरदहनतृप्तिं नित्यतृप्ते चरेथाः ॥ ३३ ॥

परस्परकुतूहलैः कवलदानरूपैः शिवे
पुराणतरुणौ युवां चरतमत्र लीलाशितम् ।
सुगन्धि सलिलं तथा पिबतमेणनाभीरसैः
सकेसरनिशाकरै रचयतं करोद्वर्तनम् ॥ ३४ ॥

पनसकदलजम्बूकर्कटीहारहूरा-
मलकबदरनिम्बूदुम्बरैर्बीजपूरैः ।
अमृतलकुचबिल्वैर्दाडिमीनालिकेरै
रुचिरुचितफलैस्ते वर्धतां बद्धरागा ॥ ३५ ॥

शशिकरधवलानां नागवल्लीदलानां
क्रमुककदरजातीचन्द्रसंयोगभाजाम् ।

मृगमदघुसृणतुरुष्कफीतचूर्णीकृतानां
भजतु जननि रागं त्वन्मुखाम्भोजमेतत् ॥ ३६ ॥
कनकभरितपृथ्वीं मातुपानन्दमोह-
स्तदुपरि शतकोटिकामुकानन्दमाहुः।
जननि तव ददेयं दक्षिणां कां तथापि
प्रथय मयि दृगन्तं दक्षिणावीक्षणेन ॥ ३७ ॥
त्रिभुवनकुहरेऽस्मिन्पूरिते वेणुवीणा-
पटुपटहकझिल्लीतालघण्टानिनादैः।
उरगसुरवधूभिर्गीयमानं समन्ता-
ज्जनयतु पदमुच्चैर्देवि नीराजनं ते ॥ ३८ ॥
प्राणेषु पञ्चसु निधाय षडात्मवृत्ति-
र्वर्तीश्चिदग्निपरिचुम्बितजातशोभाः।
नीराजयामि भवतीं भवतीव्रताप-
निर्वापहेतुमधुना मधुनालसासि ॥ ३९ ॥
उरगतुरगहंसीकेकिशार्दूलभृङ्गी-
मदकलकलविङ्कीश्येनपारावतानाम्।
गतिभिरुपचितोऽयं मौलितः पादमूलं
हरतु दुरितजातं देवि कर्पूरदीपः ॥ ४० ॥
जय देवि जय देवि जय विश्वाधारे
दीनानाथोद्धरणप्रवणे जनसारे।
त्वत्पदपद्मे पद्मे विधृतव्यापारे
मयि दीने कुरु करुणां करुणामृतपारे ॥ ४१ ॥
अमृतोदधिमध्यस्थितनवरत्नद्वीपे
विप्वग्विकसितसुरतरुनवचम्पकनीपे।
नानाकुसुमामोदिनि विधुतागरुधूपे
चिन्तामणिभवनेऽङ्कनर्तितपरसुरभूपे ॥ ४२ ॥

माणिक्योज्ज्वलचत्वरसिंहासनशोभे
शवपञ्चकमञ्चेऽञ्चितजनलोचनलोभे ।
सुश्वेतातपवारणचलचामरदम्भे
ध्याये भवतीमनिशं कृतजगदारम्भे ॥ ४३ ॥
दलितजपाकुसुमोपमवसनच्छन्नाङ्गीं
तरुणारुणकरुणप्रदकिरणावलिभङ्गीम् ।
दधतीं रचनां नयने यमुनातारङ्गीं
कलयन्तीं कुचकोशे सुषमां नारङ्गीम् ॥ ४४ ॥
शरपञ्चकबाणासनसृणिपाशोल्लसितां
मलयानिलपरिवाददमुखपद्मश्वसिताम् ।
बालामृतकरमण्डितचूडातटमहितां
ज्योतिस्त्रितयालंकृतनयनत्रयसहिताम् ॥ ४५ ॥
पशुपतियन्त्रणपटुतररोमावलियूपां
मन्मथतस्करगुप्तिक्षमनाभीकूपाम् ।
प्रपदालम्बिशिखामणिवृन्दारकभूपां
कमलासनहरिहरमुखचिन्त्यामितरूपाम् ॥ ४६ ॥
काली बगला बाला तारा भुवनेशी
वाराही मातङ्गी कमला वचनेशी ।
छिन्ना दुर्गा गङ्गा काशी कामेशी
त्वत्तो नान्यत्किंचित्त्वं चिद्रसपेशी ॥ ४७ ॥
त्वं भूमिस्त्वं सलिलं त्वं तेजः प्रबलं
त्वं वायुस्त्वं व्योम त्वं चित्तं विमलम् ।
त्वं जीवस्त्वं चेशस्त्वं ब्रह्मास्यमलं
सत्यानृतयोरन्यत्त्वत्तः किं सकलम् ॥ ४८ ॥
कुलकुण्डे त्वं कुरुषे शयने प्रस्वापं
स्वाधिष्ठाने मिहिरायुतदीधितितापम् ।

नीला नाभौ कण्ठे शशिभा हृतशापं
वर्षस्यमृतं विन्दावानन्दावापम् ॥ ४९ ॥
त्वत्पदपद्मे चित्तं त्रिपुरे मे रमतां
तत्रैव प्रतिवेलं मौलिर्मे नमताम् ।
यातायातक्लेशः सद्यः संशमतां
याचे भूयो भूयो भवता मे भवताम् ॥ ५० ॥
नृत्यति गायति सुरसं सुरनारीवृन्दे
करतालीदानोत्सुकसुरवितताननन्दे ।
नीराजनकाले तव मुनिजननुतवेदे
चरणानतसम्राजः परिहृतभवखेदे ॥ ५१ ॥
मिलद्दलिपटलीभिः केवलं घ्रातपूर्वैः
स्फुटितकुसुमगर्भैः स्वैरसंचारिणीभिः ।
उपहितपटवासः पुष्पधूलीकदम्बैः
प्रभवतु पदपाती देवि पुष्पाञ्जलिस्ते ॥ ५२ ॥
सकृदपि विनताङ्घ्रिस्त्वां परिक्रम्य मात-
र्भवति मखफलेषु क्षीणलोभं मनो नः ।
सरसिजमकरन्दास्वादतृप्तो मिलिन्दः
क्वचिदपि पिचुमन्दे चित्तवृत्तिं तनोति ॥ ५३ ॥
जननि खलकपोतन्यायतः पातुकाना-
मधिपदकमलं ते मन्दवृन्दारकाणाम् ।
भवतु नयनयोस्ते गोचरः कान्तिर्मे
न लसति पुनरुच्चैः स्वैरमुद्रीविका चेत् ॥ ५४ ॥
विमलमुकुरबिम्बं पुण्डरीकातपत्रं
शिशिरकरसमाने चामरे चामरेशि ।
करितुरगकदम्बं शक्तिभिर्दिश्यमानं
जनय सफलमच्छलोचनालोचनाभिः ॥ ५५ ॥

---

शिवता.

अथ कृतपरिवाराभ्यर्चनं ते समर्प्य
स्तुतिभिरनुपमाभिः पावये स्वां रसज्ञाम्।
यदपि न रविरश्मिः स्वोपकारं विधत्ते
तदपि कमलमालाम्लानहानिं तनोति ॥ ९६ ॥

श्रवसि विशति यस्य त्वन्मनोरेकवर्णः
सकृदपि विधियोगादम्बिके मानवस्य।
लघुतरफलमेतत्त्रिवर्गाश्रयत्वं
परिचरति पुरस्तात्पूरुषार्थश्चतुर्थः ॥ ९७ ॥

हृदयकमलमध्ये त्वां समानीय मातः
पवनभरितनाडीरन्ध्रमुद्राविधिज्ञाः।
दधति परमधन्याः कुण्डलीस्पर्शहृष्य-
च्छशिगलदमृतौघप्लावजन्यप्रमोदम् ॥ ९८ ॥

वदति विधिकलत्रं त्वां शिवे कोऽपि कश्चि-
त्त्रिपुरमथनपुण्यं श्रीपतेः कोऽपि भाग्यम्।
प्रकृतिमिति परेऽपि प्रौढविज्ञानमेके
निखिलनिगममूलं मन्महे बोधमेव ॥ ९९ ॥

कदा तव पदाम्बुजस्मरणजातरोमोद्गमः
सदाशिवमदालसे जननि मातरित्युद्गिरन्।
निलीनकरणक्रियस्त्रिदशगर्वसर्वंकषा-
मखर्वपदवीं भजे हरिहरादिभिर्भाविताम् ॥ १० ॥

त्वदीयमुखचन्दिरे चलितलोचनेन्दिन्दिरे
प्रसादकुलमन्दिरे स्थगितपद्मचन्द्रेन्दिरे।
प्रभापटलतन्तुरे ललितहावकेलीपुरे
हृतस्मरहरान्तरे धृतमतिर्भवं संतरे ॥ ११ ॥

त्वदीयं यद्रूपं जननजननि बिन्दुत्रययुतं
स्मरन्नन्तर्योगात्त्रिदिवपतितामाप सुरपः।

इदं को जानीते क्षणमपि हरार्धं प्रजपतां
हसार्धं व्यालम्ब्य प्रतिफलति हंसः परिणतिः ॥ ६२ ॥
जननि निभृतं यत्ते रूपं वदत्यतिशाश्वतं
लसतु हृदि नो दीपप्रायः स कोऽपि हसात्मकः।
स्मरणविषये येन स्वैरं स्वरेण विजृम्भता
त्रिपुरमथनः प्रापेशत्वं तदात्मकतां गतः ॥ ६३ ॥
ऋचामाचार्यासि स्तुतिशतजुषां चापि यजुषां
महाधाम्नां साम्नां प्रथितयशसोऽथर्वशिरसः।
हरिब्रह्मेशाद्याः प्रपदकिरणोत्तंसमुकुटा-
स्तवातस्त्वां स्तोतुं जननि को वा प्रभवतु ॥ ६४ ॥
त्रस्यत्खञ्जनगञ्जनव्यसनिनीमुन्माथिनीं मायतो
जीवंजीवकुलस्य भृङ्गपटलीन्यक्कारबद्धव्रताम्।
रङ्कूच्छङ्कुविधायिनीं च नलिनश्रीगर्वसर्वंकषां
कारुण्यामृतवर्षिणीं मयि शिवे दृष्टिं मनाग्योटय ॥ ६५ ॥
रिङ्गद्भृङ्गकदम्बडम्बरपरिष्वङ्गप्रसङ्गाकुल-
प्रत्यूषस्फुरमाणपङ्कजवनीसौभाग्यसर्वंकषः।
दृक्कोणः करुणाङ्कुराङ्किततनुः कोऽप्यद्रिजे मद्वपुः-
पान्थत्वे तरसा भवेत्परिकरी धन्यस्तदा स्यां न किम् ॥६६॥
समुद्यन्मार्तण्डप्रसृमरकरालीमसृणया
पदद्वन्द्वानन्दप्रणयिजनरिङ्गत्करुणया।
ललल्लीलाभाजा परशिवपरिष्वङ्गपरया
धिया चेतः कालं नय गतनय त्वं क्षणमपि ॥ ६७ ॥
वेदैरङ्घ्रिभिरुज्ज्वलोपनिषदां वृन्दैरधःकल्पितैः
शाखाद्यैरपि तिर्यगूर्ध्वकलितैरोंकारमार्गेण
विष्वग्व्याप्तनिबन्धनैः परिचितेऽस्मिन्वाङ्मये प
कीरी काचन चेतनैकविभवा चित्ते चका-

तरुणारुणप्रतिमरम्यरुचिं कुसुमेषुचापसृणिपाशकराम् ।
त्रिगुणात्परां त्रिगुणरूपमयीं भवतीमहर्निशमहं कलये ॥ ६९ ॥
इति निजमतिवैभवानुरूपामकृत कविर्भुवि सामराजनामा ।
समयिजनमुदेऽम्बिकासपर्याममृतसुखात्मकताविकासपर्याम् ॥ ७० ॥

इति श्रीसत्यानन्दनाथापरनामधेयसामराजदीक्षितविरचिते पूजारत्ने स्थितं त्रिपुरसुन्दरीमानसपूजनस्तोत्रम् ।

---

श्रीशंकराचार्यविरचितं

## चतुःषष्ठ्युपचारमानसपूजास्तोत्रम् ।

उषसि मागधमङ्गलगायनैर्झटिति जागृहि जागृहि जागृहि ।
अतिकृपार्द्रकटाक्षनिरीक्षणैर्जगदिदं जगदम्ब सुखीकुरु ॥ १ ॥
कनकमयवितर्दिशोभमानं दिशि दिशि पूर्णसुवर्णकुम्भयुक्तम् ।
मणिमयगृहमध्यमेहि मातर्मयि कृपया हि समर्चनं ग्रहीतुम् ॥ २ ॥
कनककलशशोभमानशीर्षं जलधरलम्बि समुल्लसत्पताकम् ।
भगवति तव संनिवासहेतोर्मणिमयमन्दिरमेतदर्पयामि ॥ ३ ॥
तपनीयमयी सुतूलिकाकमनीया मृदुलोत्तरच्छदा ।
नवरत्नविभूषिता मया शिबिकेयं जगदम्ब तेऽर्पिता ॥ ४ ॥
कनकमयवितर्दिस्थापिते तूलिकाढ्ये
विविधकुसुमकीर्णे कोटिबालार्कवर्णे ।
भगवति रमणीये रत्नसिंहासनेऽस्मि-
न्नुपविश पदयुग्मं हेमपीठे निधेहि ॥ ५ ॥
मणिमौक्तिकनिर्मितं महान्तं कनकस्तम्भचतुष्टयेन युक्तम् ।
कमनीयतमं भवानि तुभ्यं नवमुल्लोचमहं समर्पयामि ॥ ६ ॥

---

१. अस्य स्तोत्रस्य पुस्तकद्वयं समासादितम् . तत्रैकं क-चिह्नितं जयपुरराजगुरुश्रीनारायणपर्वणीकराणां नवपत्रात्मकम् . अपरं ख-चिह्नितं चातुर्वेदिकोपाख्यगौडरामचन्द्रशर्मतनूजनारायणशर्मणां चतुर्दशपत्रात्मकं समासादितम् . २. 'हेमपूर्णकुम्भ' क. ३. 'मण्डपमेतदेहि' ख. ४. 'चुम्बि' ख.

दूर्वया सरसिजान्वितविष्णुक्रान्तयापि सहितं कुसुमाढ्यम्।
पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ॥ ७ ॥
गन्धपुष्पयवसर्षपदूर्वासंयुतं तिलकुशाक्षतमिश्रम्।
हेमपात्रनिहितं सह रत्नैरर्घ्यमेतदुररीकुरु मातः ॥ ८ ॥
जलजद्युतिना करेण जातीफलकङ्कोललवङ्गगन्धयुक्तैः।
अमृतैरमृतैरिवातिशीतैर्भगवत्याचमनं विधीयताम् ॥ ९ ॥
निहितं कनकस्य सम्पुटे पिहितं रत्नपिधानकेन यत्।
तदिदं भवतीकरेऽर्पितं मधुपर्कं जननि प्रगृह्यताम् ॥ १० ॥
एतच्चम्पकतैलमम्ब विविधैः पुष्पैर्मुहुर्वासितं
न्यस्तं रत्नमये सुवर्णचषके भृङ्गैर्भ्रमद्भिर्वृतम्।
सानन्दं सुरसुन्दरीभिरभितो हस्ते धृतं तन्मया
केशेषु भ्रमरप्रभेषु सकलेष्वङ्गेषु चालिप्यते ॥ ११ ॥
मातः कुङ्कुमपङ्कनिर्मितमिदं देहे तवोद्वर्तनं
भक्त्याहं कलयामि हेमरजसा संमिश्रितं केसरैः।
केशानामलकैर्विशोध्य विशदान्कस्तूरिकाद्यर्चितैः
स्नानं ते नवरत्नकुम्भविधिना सवासितोष्णोदकैः ॥ १२ ॥
दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः।
स्नपयामि बताहमादतो जननि त्वा पुनरुष्णवारिभिः ॥ १३ ॥
एलोशीरसुवासितैः सकुसुमैर्गङ्गादितीर्थोदकै-
र्माणिक्यद्रवमौक्तिकामृतरसैः स्वच्छैः सुवर्णोदकैः।
मन्त्रान्वैदिकतान्त्रिकान्परिपठन्सानन्दमत्यादरा-
त्स्नानं ते परिकल्पयामि जननि स्नानं त्वमङ्गीकुरु ॥ १४ ॥
बालार्कद्युति दाडिमीयकुसुमप्रस्पर्धि सर्वोत्तमं
मातस्त्वं परिधेहि दिव्यवसनं भक्त्या मया कल्पितम्।
मुक्ताभिर्ग्रथितं सुकञ्चुकमिदं स्वीकृत्य पीतप्रभं
तप्तस्वर्णसमानवर्णमतुलं प्रावर्णमङ्गीकुरु ॥ १५ ॥

१. 'केसरम्' ख. २. 'सुकुसुमे' ख. ३. 'क्यामृत' ख. ४. 'मान्त्रिकान्' ख. ५. 'सर्वर्धि' क. ६. 'च कञ्चुकं' ख.

बालादित्यद्युतिरिव सदा लोहिता यस्य कान्ति-
रन्तर्ध्वान्तं हरतु सततं चेतसा चिन्तयामि ॥ २४ ॥

मन्दारकुन्दकरवीरलवङ्गपुष्पै-
स्त्वां देवि संततमहं परिपूजयामि।
जातीजपाबकुलचम्पककेतकानि
नानाविधानि कुसुमानि च तेऽर्पयामि ॥ २५ ॥

मालतीबकुलहेमपुष्पिकाकाञ्चनारकरवीरकेतकैः।
कर्णिकारगिरिकर्णिकादिभिः पूजयामि जगदम्ब ते वपुः॥ २६ ॥

पारिजातशतपत्रपाटलैर्मल्लिकाबकुलचम्पकादिभिः।
अम्बुजैः सुकुसुमैश्च सादरं पूजयामि जगदम्ब ते वपुः ॥ २७ ॥

लाक्षासंमिलितैः सिताभ्रसहितैः श्रीवाससंमिश्रितैः
कर्पूराकलितैः सितामधुयुतैर्गोसर्पिषा लोडितैः।
श्रीखण्डागरुगुग्गुलुप्रभृतिभिर्नानाविधैर्वस्तुभि-
र्धूपं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु ॥ २८ ॥

रत्नालंकृतहेमपात्रनिहितैर्गोसर्पिषा दीपितै-
र्दीपैर्दीर्घतरान्धकारभिदुरैर्बालार्ककोटिप्रभैः।
आताम्रज्वलदुज्ज्वलज्वलनवद्रत्नप्रदीपैः सदा
मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः ॥ २९ ॥

मातस्त्वां दधिदुग्धपायसमहाशाल्यन्नसंतानिकाः
सूपापूपसिताघृतैः सवटकैः सक्षुद्ररम्भाफलैः।
एलाजीरकहिङ्गुनागरनिशाकस्तूरिकासंस्कृतैः
शाकैः साकमहं सुधाधिकरसैः संतर्पयाम्यम्बिके ॥ ३० ॥

सापूपसूपदधिदुग्धसिताघृतानि
सुस्वादुभक्ष्यपरमान्नपुरःसराणि।

१. 'रन्तर्ध्यानं' क. २. 'कुरण्ट' क. ३. 'अम्बुजैश्च कुसुमैश्च' ख. ४. 'जननी धूप' क. ५. 'सर्पिषोद्दीपितैः' क. ६. 'प्रदीपैस्तथा' ख. ७. 'कुस्तुम्बरीसंस्कृतैः' ख.

शाकोल्लसन्मरिचजीरकबाल्हिकानि
भक्ष्याणि भक्ष जगदम्ब मयार्पितानि ॥ ३१ ॥
क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्यमिदमुत्तमं मधु ।
मातरेतदमृतोपमं त्वया संभ्रमेण परिपीयतां मुहुः ॥ ३२ ॥
उष्णोदकैः पाणियुगं मुखं च प्रक्षाल्य मातः कलधौतपात्रे ।
कर्पूरमिश्रेण सकुङ्कुमेन हस्तौ समुद्वर्तय चन्दनेन ॥ ३३ ॥
अतिशीतमुशीरवासितं तपनीयावपने निवेदितम् ।
पटपूतमिदं जितामृतं शुचि गङ्गामृतमम्ब पीयताम् ॥ ३४ ॥
जम्बाम्ररम्भाफलसंयुतानि द्राक्षाफलाक्षोडसमन्वितानि ।
सनालिकेराणि सदाडिमानि फलानि ते देवि समर्पयामि ॥ ३५ ॥
कलिङ्गकोशातकिसंयुतानि जम्बीरनारङ्गसमन्वितानि ।
सबीजपूराणि सबादराणि फलानि ते चाम्ब समर्पयामि ॥ ३६ ॥
कर्पूरेण युतैर्लवङ्गसहितैः कङ्कोलचूर्णान्वितैः
सुस्वादुक्रमुकैः सगौरखदिरैः सुस्निग्धजातीफलैः ।
मातः केतकपत्रपाण्डुरुचिभिस्ताम्बूलवल्लीदलैः
सानन्दं मुखमण्डनीयमतुलं ताम्बूलमङ्गीकुरु ॥ ३७ ॥
एलालवङ्गादिसमन्वितानि कङ्कोलकर्पूरसमिश्रितानि ।
ताम्बूलवल्लीदलसंयुतानि पूगानि ते देवि समर्पयामि ॥ ३८ ॥
ताम्बूलवल्लिदलनिर्जितहेमवर्णं
स्वर्णाक्तपूगफलमौक्तिकचूर्णयुक्तम् ।
रत्नस्थगिस्थितमिदं खदिरेण युक्तं
ताम्बूलमम्ब वदनाम्बुरुहे गृहाण ॥ ३९ ॥
महति कनकपात्रे स्थापयित्वा विशाला-
ण्डमरुसदृशरूपान्बद्धगोधूमदीपान् ।
बहुघृतमथ तेषु न्यस्य दीपानुकम्पा-
न्भुवनजननि कुर्वे नित्यमारार्तिकं ते ॥ ४० ॥

१. 'भुदृस्व' ख. २. 'तपनीयाचमनेनिवे०' ख. ३. 'आताम्र' ख. ४. 'कुष्माण्डी' ख. ५. 'सजाम्बवानि' ख. ६. 'देवि' ख. ७. 'सिन्दुररुचिभि' क. ८. 'सार्धं' ख.

मधुकरवृतकुम्भे न्यस्तसिन्दूररेणुः
कनककलितघण्टः किङ्किणीशोभिकण्ठः ।
श्रवणयुगलचञ्चच्चामरो मेघतुल्यो
जननि तव मुदे स्यान्मत्तमातङ्ग एषः ॥ ४८ ॥

द्रुततरतुरगैर्विराजमानं मणिमयचक्रचतुष्टयेन युक्तम् ।
कनकमयमहं वितानवन्तं भगवति ते हि रथं समर्पयामि ॥ ४९ ॥

हयगजरथपत्तिशोभमानं दिशि दिशि दुंदुभिमेघनादयुक्तम् ।
अतिबहुचतुरङ्गसैन्यमेतद्भगवति भक्तिभरेण तेऽर्पयामि ॥ ५० ॥

परिखीकृतसप्तसागरं बहुसंपत्सहितं मयाम्ब ते ।
विपुलं धरणीतलाभिधं प्रबलं दुर्गमिदं समर्पितम् ॥ ५१ ॥

शतपत्रयुतैः स्वभावशीतैरतिसौरभ्ययुतैः परागपीतैः ।
भ्रमरीमुखराकृतैरनन्तैर्व्यजनैस्त्वां जगदम्ब वीजयामि ॥ ५२ ॥

भ्रमरलुलितलोलकुन्तलाली विगलितमाल्यविकीर्णरङ्गभूमिः ।
इयमतिरुचिरा नटी नटन्ती तव हृदये मुदमातनोतु मातः ॥ ५३ ॥

मुखनयनविलासलोलवेणीविलसितनिर्जितलोलभृङ्गमालाः ।
युवजनसुखकारिचारुलीला भगवति ते पुरतो नटन्ति बालाः॥५४॥

रुचिरकुचतटीनां नाट्यकाले नटीनां
प्रतिगृहमथ तत्र प्रत्यहं प्रादुरासीत् ।
धिमिकिटिधिमिधिद्धी धिद्धिधिद्धीधिमिद्धी
धिमिकिटिधिमितत्ताथेयथेयेति शब्दः ॥ ५५ ॥

भ्रमदलिकुलतुल्या लोलधम्मिल्लभारा
स्मितमुखकमलोद्यद्दिव्यलावण्यपूरा ।
अनुपमतमवेषा वारयोषा नटन्ती
परभृतकलकण्ठी देवि धैर्यं तनोतु ॥ ५६ ॥

डमरुडिण्डिमझर्झरझल्लरी मृदुरवार्द्रघटार्द्रघटाहयः ।
झटिति झाङ्कृतिभिर्जगदम्बिके मुहुरिमे हृदयं सुखयन्तु ते॥५७॥

सविनयमथ दत्त्वा जानुयुग्मं धरण्यां
सपदि शिरसि धृत्वा पात्रमारार्तिकस्य।
मुखकमलसमीपे तेऽम्ब सार्धं त्रिवारं
भ्रमयति मयि भूयात्ते कृपार्द्रः कटाक्षः ॥ ४१ ॥
अथ बहुमणिमिश्रैर्मौक्तिकैस्त्वां विकीर्य
त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः।
मिलितविविधमुक्तादिव्यलावण्ययुक्तां
जननि कनकवृष्टिं दक्षिणां तेऽर्पयामि ॥ ४२ ॥
मातः काञ्चनदण्डमण्डितमिदं पूर्णेन्दुबिम्बप्रभं
नानारत्नविशोभिहेमकलशं लोकत्रयाह्लादकम्।
भास्वन्मौक्तिकजालिकापरिवृतं प्रीत्यात्महस्ते धृतं
छत्रं ते परिकल्पयामि शिरसि त्वष्ट्रा स्वयं निर्मितम्॥४३॥
शरदिन्दुमरीचिगौरवर्णैर्मणिमुक्ताविलसत्सुवर्णदण्डैः।
जगदम्ब विचित्रचामरैस्त्वामहमानन्दभरेण वीजयामि ॥ ४४ ॥
मार्तण्डमण्डलनिभो जगदम्ब योऽयं
भक्त्या मया मणिमयो मुकुरोऽर्पितस्ते।
पूर्णेन्दुबिम्बरुचिरं वदनं स्वकीय-
मस्मिन्विलोकय विलोलविलोचने त्वम् ॥ ४५ ॥
इन्द्रादयो नतिनतैर्मुकुटप्रदीपै-
र्नीराजयन्ति सततं तव पादपीठम्।
तस्मादहं तव समस्तशरीरमेत-
न्नीराजयामि जगदम्ब सहस्रदीपैः ॥ ४६ ॥
प्रियगतिरतितुङ्गो रत्नपल्याणयुक्तः
कनकमयविभूषः स्निग्धगम्भीरघोषः।
भगवति कलितोऽयं वाहनार्थं मया ते
तुरगशतसमेतो वायुवेगस्तुरंगः ॥ ४७ ॥

---

१. 'धरिण्यां' क-ख. २. 'जननि तव प्रकुर्वे नित्यमारार्तिकं ते' ख. ३. 'प्रीतं स्वहस्ते' ख. ४. 'पर्यङ्क' ख.

मधुकरवृतकुम्भे न्यस्तसिन्दूररेणुः
कनककलितघण्टः किङ्किणीशोभिकण्ठः ।
श्रवणयुगलचञ्चच्चामरो मेघतुल्यो
जननि तव मुदे स्यान्मत्तमातङ्ग एषः ॥ ४८ ॥

द्रुततरतुरगैर्विराजमानं मणिमयचक्रचतुष्टयेन युक्तम् ।
कनकमयमहं वितानवन्तं भगवति ते हि रथं समर्पयामि ॥ ४९ ॥

हयगजरथपत्तिशोभमानं दिशि दिशि दुंदुभिमेघनादयुक्तम् ।
अतिबहुचतुरङ्गसैन्यमेतद्भगवति भक्तिभरेण तेऽर्पयामि ॥ ५० ॥

परिखीकृतसप्तसागरं बहुसंपत्सहितं मयाम्ब ते ।
विपुलं धरणीतलाभिधं प्रबलं दुर्गमिदं समर्पितम् ॥ ५१ ॥

शतपत्रयुतैः स्वभावशीतैरतिसौरभ्ययुतैः परागपीतैः ।
भ्रमरीमुखराकृतैरनन्तैर्व्यजनैस्त्वां जगदम्ब वीजयामि ॥ ५२ ॥

भ्रमरलुलितलोलकुन्तलाली विगलितमाल्यविकीर्णरङ्गभूमिः ।
इयमतिरुचिरा नटी नटन्ती तव हृदये मुदमातनोतु मातः ॥ ५३ ॥

मुखनयनविलासलोलवेणीविलसितनिर्जितलोलभृङ्गमालाः ।
युवजनसुखकारिचारुलीला भगवति ते पुरतो नटन्ति बालाः॥५४॥

रुचिरकुचतटीनां नाट्यकाले नटीनां
प्रतिगृहमथ तत्र प्रत्यहं प्रादुरासीत् ।
धिमिकिटिधिमिधिद्धी धिद्धिधिद्धीधिमिद्धी
धिमिकिटिधिमितत्ताथेयथेयेति शब्दः ॥ ५५ ॥

भ्रमदलिकुलतुल्या लोलधम्मिल्लभारा
स्मितमुखकमलोद्यद्दिव्यलावण्यपूरा ।
अनुपमतमवेषा वारयोषा नटन्ती
परभृतकलकण्ठी देवि धैर्यं तनोतु ॥ ५६ ॥

डमरुडिण्डिमझर्झरझल्ली मृदुरवार्द्रघटार्द्रघटाहयः ।
झटिति झाङ्कृतिभिर्जगदम्बिके मुहुरिमे हृदयं सुखयन्तु ते॥५७॥

मुक्ताकुन्देन्दुगौरां मणिमयमुकुटां रत्नताटङ्कयुक्ता-
मक्षस्रक्पुष्पहस्तामभयवरकरां चन्द्रचूडां त्रिनेत्राम् ।
नानालंकारयुक्तां सुरमुकुटमणिद्योतितस्वर्णपीठां
सानन्दां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिन्तयामि ॥ ६९ ॥
एषा भक्त्या तव विरचिता या मया देवि पूजा
स्वीकृत्यैनां सपदि सकलान्मेऽपराधान्क्षमस्व ।
न्यूनं यत्तत्तव करुणया पूर्णतामेति सर्वं
सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ॥ ७० ॥
पूजामिमां पठेत्प्रातः पूजां कर्तुमनीश्वरः ।
पूजाफलमवाप्नोति वाञ्छितार्थं च विन्दति ॥ ७१ ॥
प्रत्यहं भक्तिसंयुक्तो यः पूजनमिदं पठेत् ।
वाग्वादिन्याः प्रसादेन वत्सरात्स कविर्भवेत् ॥ ७२ ॥
पूजामिमां यः पठति प्रभाते मध्याह्नकालेऽप्यथवा प्रदोषे ।
धर्मार्थकामान्पुरुषोऽभ्युपैति देहावसाने शिवतामुपैति ॥ ७३ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितचतुःषष्ठ्युपचार-
मानसपूजास्तोत्रं समाप्तम् ।

विपञ्चीषु सप्त स्वरान्वादयन्त्यस्तव द्वारि गायन्ति गन्धर्वकान्ताः ।
क्षणं सावधानेन चित्तेन मातः समाकर्णय त्वं मया प्रार्थितासि ॥ ५८॥

अभिनवकमनीयैर्नर्तनैर्नर्तकीनां
क्षणमथ रमयित्वा चेत एवं त्वदीयम् ।
स्वयमहमपि चित्रैर्नृत्यवाद्यप्रगीतै-
र्भगवति भवदीयं मानसं रञ्जयामि ॥ ५९ ॥

तव देवि गुणानुवर्णने चतुरा नो चतुराननादयः ।
तदिहैकमुखेषु जन्तुषु स्तवनं कस्तव कर्तुमीश्वरः ॥ ६० ॥

पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादिफलं ददाति ।
तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परिकल्पयामि ॥ ६१ ॥

रक्तोत्पलारक्तलताप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशाङ्किताभ्याम् ।
अशेषवृन्दारकवन्दिताभ्यां नमो भवानीपदपङ्कजाभ्याम् ॥ ६२ ॥

चरणनलिनयुग्मं पङ्कजैः पूजयित्वा
कनककमलमालां कण्ठदेशेऽर्पयित्वा ।
शिरसि विनिहितोऽयं रत्नपुष्पाञ्जलिस्ते
हृदयकमलमध्ये देवि हर्षं तनोतु ॥ ६३ ॥

अथ मणिमयमञ्चकाभिरामे द्युतिमति पुष्पवितानराजमाने ।
प्रसरदगरुधूपधूपितेऽस्मिन्भगवति वासगृहेऽस्तु ते निवासः ॥६४॥

तव देवि सरोजचिह्नयोः पदयोर्निर्जितपद्मरागयोः ।
अतिरक्ततरैरलक्तकैः पुनरुक्तां रचयामि रक्तताम् ॥ ६५ ॥

अथ मारुतशीतवासितं निजताम्बूलरसेन रञ्जितम् ।
तपनीयमये हि पट्टके मुखगण्डूषजलं निधीयताम् ॥ ६६ ॥

एतस्मिन्मणिखचिते सुवर्णपीठे त्रैलोक्याभयवरदे निधाय पादौ ।
विस्तीर्णे मृदुतरलोत्तरच्छदेऽस्मिन्पर्यङ्के कनकमये निषीद मातः ॥६७॥

क्षणमथ जगदम्ब मञ्चकेऽस्मिन्मृदुतरतूलिकया विराजमाने ।
अतिरहसि मुदा शिवेन सार्धं सुखशयनं कुरु मां हृदि स्मरन्ती ॥६८॥

मुक्ताकुन्देन्दुगौरां मणिमयमुकुटां रत्नताटङ्कयुक्ता-
मक्षस्रक्पुष्पहस्तामभयवरकरां चन्द्रचूडां त्रिनेत्राम् ।
नानालंकारयुक्तां सुरमुकुटमणिद्योतितस्वर्णपीठां
सानन्दां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिन्तयामि ॥ ६९ ॥
एषा भक्त्या तव विरचिता या मया देवि पूजा
स्वीकृत्यैनां सपदि सकलान्मेऽपराधान्क्षमस्व ।
न्यूनं यत्तत्तव करुणया पूर्णतामेति सर्वं
सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ॥ ७० ॥
पूजामिमां पठेत्प्रातः पूजां कर्तुमनीश्वरः ।
पूजाफलमवाप्नोति वाञ्छितार्थं च विन्दति ॥ ७१ ॥
प्रत्यहं भक्तिसंयुक्तो यः पूजनमिदं पठेत् ।
वाग्वादिन्याः प्रसादेन वत्सरात्स कविर्भवेत् ॥ ७२ ॥
पूजामिमां यः पठति प्रभाते मध्याह्नकालेऽप्यथवा प्रदोषे ।
धर्मार्थकामान्पुरुषोऽभ्युपैति देहावसाने शिवतामुपैति ॥ ७३ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितचतुःषष्ट्युपचार-
मानसपूजास्तोत्रं समाप्तम् ।

# KÂVYAMÂLÂ.

collection of old and rare Sanskrit Kâvyas,
Nâtakas, Champûs, Bhânas, Prahasanas,
Chhandas, Alankâras &c.

## PART X.

EDITED BY
PANDIT S'IVADATTA
AND
KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED
BY
TUKÂRÂM JÂVAJÎ,
Proprietor of Jâvajî Dâdâjî's "Nirnaya-sâgar" Press
BOMBAY.

1894.



*Price* 1½ *Rupee.*

॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

## दशमो गुच्छकः ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादद्वारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितः ।

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९४



मूल्यं सार्धो रूप्यकः ।

## अनुक्रमणिका ।


पृष्ठम् ।

१. दुर्वासोविरचितं ललितास्तवरत्नम् .... .... .... १

२. रामभद्रदीक्षितविरचितो रामाष्टप्रासः, सेतुशास्त्रिविरचितया टीकया समेतः .... .... .... .... १८

३. वासुदेवकविविरचितं वासुदेवविजयम्, स्वकृतटीकया समेतम् .... .... .... .... .... .... ९२

४. धातुकाव्यम्, टीकया समेतम् .... .... .... .... १२१




# काव्यमाला ।

श्रीदुर्वाससा विरचितं

## श्रीललितास्तवरत्नम्[1] ।

वन्दे गजेन्द्रवदनं वामाङ्कारूढवल्लभाश्लिष्टम् ।
कुङ्कुमपरागशोणं कुवलयिनीजारकोरकापीडम् ॥ १ ॥
स जयति सुवर्णशैलः सकलजगच्चक्रसंघटितमूर्तिः ।
काञ्चननिकुञ्जवाटीकन्दलदमरीप्रपञ्चसंगीतः ॥ २ ॥
हरिहयनैरृतमारुतहरितामन्तेष्ववस्थितं तस्य ।
विनुमः सानुत्रितयं विधिहरिगौरीशविष्टपाधारम् ॥ ३ ॥
मध्ये पुनर्मनोहररत्नरुचिस्तबकरञ्जितदिगन्तम् ।
उपरि चतुःशतयोजनमुत्तुङ्गं शृङ्गपुंगवमुपासे ॥ ४ ॥
तत्र चतुःशतयोजनपरिणाहं देवशिल्पिना रचितम् ।
नानासालमनोज्ञं नमाम्यहं नगरमादिविद्यायाः ॥ ५ ॥
प्रथमं सहस्रपूर्वकषट्शतसंख्याकयोजनं परितः ।
वलयीकृतस्वगात्रं वरणं शरणं व्रजाम्ययोरूपम् ॥ ६ ॥
तस्योत्तरे समीरणयोजनदूरे तरङ्गितच्छायः ।
घटयतु मुदं द्वितीयो घण्टास्तनसारनिर्मितः सालः ॥ ७ ॥
उभयोरन्तरसीमन्युद्दामभ्रमररञ्जितोदारम् ।
उपवनमुपास्महे वयमूरीकृतमन्दमारुतस्यन्दम् ॥ ८ ॥

---

१. अस्य श्रीललितास्तवरत्नस्य पुस्तकद्वयमासादितम्. तत्रैकं क-चिह्नितं जयपुरराजगुरुश्रीमद्दश्रीनारायणपर्वणीकराणाम्, अपरं च ख-चिह्नितं चातुर्वेदिकगौडरामचन्द्रतनूजनाथूनारायणशर्मणाम्.

आलिङ्ग्य भद्रकालीमासीनस्तत्र हरिशिलाश्यामाम्।
मनसि महाकालो मे विहरतु मधुपानविभ्रमन्नेत्रः ॥ ९ ॥
तार्तीयीको वरणस्तस्योत्तरसीम्नि वातयोजनतः।
ताम्रेण रचितमूर्तिस्तनुतामाचन्द्रतारकं भद्रम् ॥ १० ॥
मध्ये तयोश्च मणिमयपल्लवशाखाप्रसूनपक्ष्मलिताम्।
कल्पानोकहवाटीं कलये मकरन्दपङ्किलालवालाम् ॥ ११ ॥
तत्र मधुमाधवश्रीतरुणीभ्यां तरलदृक्चकोराभ्याम्।
आलिङ्गितोऽवतान्मामनिशं प्रथमर्तुरात्तपुष्पास्त्रः ॥ १२ ॥
नमत तदुत्तरभागे नाकिपथोल्लङ्घिशृङ्गसंघातम्।
सीसाकृतिं तुरीयं सितकिरणालोकनिर्मलं सालम् ॥ १३ ॥
सालद्वयान्तराले सरलालिकपोतचाटुसुभगायाम्।
संतानवाटिकायां सक्तं चेतोऽस्तु सततमस्माकम् ॥ १४ ॥
तत्र तपनातिरूक्षः सान्द्रात्रीचरणसान्द्रितस्वान्तः।
शुक्रशुचिश्रीसहितो ग्रीष्मर्तुर्दिशतु कीर्तिमाकल्पम् ॥ १५ ॥
उत्तरसीमनि तस्योन्नतशिखरोत्कम्पिहाटकपताकः।
प्रकटयतु पञ्चमो नः प्राकारः कुशलमारकूटमयः ॥ १६ ॥
प्राकारयोश्च मध्ये पल्लवितान्यभृतपञ्चमोन्मेषा।
हरिचन्दनद्रुवाटी हरतादामूलमस्मदनुतापम् ॥ १७ ॥
तत्र नभश्रीमुख्यैस्तरुणीवर्गैः समन्वितः परितः।
वज्राट्टहासमुखरो वाञ्छापूर्तिं तनोतु वर्षर्तुः ॥ १८ ॥
मालतयोर्मनदूरे महनीयस्तस्य चोत्तरे भागे।
भद्रं कृषीष्ट षष्ठः प्राकारः पञ्चलोहधातुमयः ॥ १९ ॥
अनयोर्मध्ये संततमङ्कुरद्दिव्यकुसुमगन्धायाम्।
मन्दारवाटिकायां मानसमङ्गीकरोतु मे विहृतिम् ॥ २० ॥
तस्यामिषोर्मिलक्ष्मीतरुणीभ्यां शरदृतुः सदा सहितः।
अभ्यर्चयन्स्तु[1] जीयादम्बामामोदमेदुरैः कुसुमैः ॥ २१ ॥

१. 'सस्यानिर्जित' क.

तस्यापि संख्ययोजनदूरे देदीप्यमानशृङ्गौघः ।
कलधौतकलितमूर्तिः कल्याणं दिशतु सप्तमः सालः ॥ २२ ॥
मध्ये तयोर्मरुत्पथलङ्घितविटपाग्रविरुतकलकण्ठा ।
श्रीपारिजातवाटी श्रियमनिशं दिशतु शीतलोद्देशा ॥ २३ ॥
तस्यामतिप्रियाभ्यां सह खेलन्सहसहस्यलक्ष्मीभ्याम् ।
सामन्तो झषकेतोर्हेमन्तो भवतु हेमवृद्ध्यै नः ॥ २४ ॥
उत्तरतस्तस्य महानुद्भटहुतभुक्शिखारुणमयूखः ।
तपनीयखण्डरचितस्तनुतादायुष्यमष्टमो वरणः ॥ २५ ॥
कादम्बविपिनवाटीमनयोर्मध्यभुवि कल्पितावासाम् ।
कलयामि सूनकोरककन्दलितामोदतुन्दिलसमीराम् ॥ २६ ॥
तस्यामतिशिशिराकृतिरासीनस्तपतपस्यलक्ष्मीभ्याम् ।
शिवमनिशं कुरुतान्मे शिशिरर्तुः सततशीतलदिगन्तः ॥ २७ ॥
तस्यां कदम्बवाट्यां तत्प्रसवामोदमिलितमधुगन्धम् ।
सप्तावरणमनोज्ञं शरणं समुपैमि मन्त्रिणीशरणम् ॥ २८ ॥
तत्रालये विशाले तपनीयारचिततरलसोपाने ।
माणिक्यमण्डपान्तर्महिते सिंहासने मणिखचिते ॥ २९ ॥
बिन्दुत्रिपञ्चकोणद्विपनृपवसुवेददलकुरेखाढ्ये ।
चक्रे सदा निविष्टां षष्ठचष्टत्रिंशदक्षरेशानीम् ॥ ३० ॥
तापिञ्छमेचकाभां तालीदलघटितकर्णताटङ्काम् ।
ताम्बूलपूरितमुखीं ताम्राधरबिम्बदृष्टदरहासाम् ॥ ३१ ॥
कुङ्कुमपङ्किलदेहां कुवलयजीवातुशावकवतंसाम् ।
कोकनदशोणचरणां कोकिलनिक्वाणकोमलालापाम् ॥ ३२ ॥
वामाङ्गगलितचूलीं वनमाल्यकदम्बमालिकाभरणाम् ।
मुक्तालल्लन्तिकाञ्चितमुग्धालिकमिलितचित्रकोदाराम् ॥ ३३ ॥
करविधृतकीरशावककलनिनदव्यक्तनिखिलनिगमार्थाम् ।
वामकुचसङ्गिवीणावादनसौख्यार्धमीलिताक्षियुगाम् ॥ ३४ ॥

---

१. 'महति सुसिंहासने' क. २. 'वामांसलुलित' क.

आपाटलांशुकधरामादिरसोन्मेषवासितकटाक्षाम् ।
आम्नायसारगुलिकामाद्यां संगीतमातृकां वन्दे ॥ ३५ ॥
तस्य च सुवर्णसालस्योत्तरतस्तरुणकुङ्कुमच्छायः ।
शमयतु मम संतापं सालो नवमः स पुष्परागमयः ॥ ३६ ॥
अनयोरन्तरवसुधाः प्रणुमः प्रत्यग्रपुष्परागमयीः ।
सिंहासनेश्वरीमनुचिन्तननिस्तन्द्रसिद्धनीरन्ध्राः ॥ ३७ ॥
तत्सालोत्तरदेशे तरुणजपाकिरणधोरणीशोणः ।
प्रशमयतु पद्मरागप्राकारो मम पराभवं दशमः ॥ ३८ ॥
अन्तरभूकृतवासाननयोरपनीतचित्तवैमत्यान् ।
चक्रेशीपदभक्तांश्चारणवर्गानहर्निशं कलये ॥ ३९ ॥
सारङ्गवाहयोजनदूरेऽसंघटितकेतनस्तस्य ।
गोमेदकेन रचितो गोपायतु मां समुन्नतः सालः ॥ ४० ॥
वप्रद्वयान्तरोर्व्यां वटुकैर्विविधैश्च योगिनीवृन्दैः ।
सततं समर्चितायाः संकर्षिण्याः प्रणौमि चरणाब्जम् ॥ ४१ ॥
तापसयोजनदूरे तस्य समुत्तुङ्गगोपुरोपेतः ।
वाञ्छापूर्त्यै भवताद्वज्रमणीनिकरनिर्मितो वप्रः ॥ ४२ ॥
वरणद्वितयान्तरतो वासजुषो विहितमधुरसास्वादाः ।
रम्भादिविबुधवेश्या रचयन्तु महान्तमस्मदानन्दम् ॥ ४३ ॥
तत्र सदा प्रवहन्ती तटिनी वज्राभिधा चिरं जीयात् ।
चटुलोर्मिजालनृत्यत्कलहंसीकुलकलक्वणितपुष्टा ॥ ४४ ॥
रोधसि तस्या रुचिरे वज्रेशी जयति वज्रभूषाढ्या ।
वज्रप्रदानतोषितवज्रिमुखत्रिदशविनुतचारित्रा ॥ ४५ ॥
तस्योदीच्यां हरिति स्तबकितसुषमावलीढवियदन्तः ।
वैडूर्यरत्नरचितो वैमल्यं दिशतु चेतसो वरणः ॥ ४६ ॥
अधिमध्यमेतयोः पुनरम्बाचरणावलम्बितस्वान्ताम् ।
कर्कोटकादिनागान्कलयामः किं च बलिमुखान्दनुजान् ॥ ४७ ॥

गन्धवहसंख्ययोजनदूरे गगनोर्ध्वजाङ्घिकस्तस्य ।
वासवमणिप्रणीतो वरणो वहलयतु वैदुषीं विशदाम् ॥ ४८ ॥
मध्यक्षोण्यामनयोर्महेन्द्रनीलात्मकानि च सरांसि ।
शातोदरीसहायान्भूपालानपि पुनः पुनः प्रणुमः ॥ ४९ ॥
आशुगयोजनदूरे तस्योर्ध्वे कान्तिधवलितदिगन्तः ।
मुक्ताविरचितगात्रो मुहुरस्माकं मुदे भवतु वप्रः ॥ ५० ॥
आवृत्त्योरविमध्यं पूर्वस्यां दिशि पुरंदरः श्रीमान् ।
अभ्रमुविटाधिरूढो विभ्रममस्माकमनिशमातनुतात् ॥ ५१ ॥
तत्कोणे व्यजनस्त्रुक्तोमरपात्रस्त्रुवास्त्रशक्तिधरः ।
स्वाहास्वधासमेतः सुखयतु मां हव्यवाहनः सुचिरम् ॥ ५२ ॥
दक्षिणदिगन्तराले दण्डधरो नीलनीरदच्छायः ।
त्रिपुरापदाब्जभक्तस्तिरयतु मम निखिलमंहसां निकरम् ॥ ५३ ॥
तस्यैव पश्चिमायां दिशि दलितेन्दीवरप्रभाश्यामः ।
खेटासियष्टिधारी खेदानपनयतु यातुधानो मे ॥ ५४ ॥
तस्या उत्तरदेशे धवलाङ्गो विपुलझषवरारूढः ।
पाशायुधात्तपाणिः पाशी विदलयतु पाशजालानि ॥ ५५ ॥
वन्दे तदुत्तरहरित्कोणे वायुं चमूरुवरवाहम् ।
कोरकिततत्त्वबोधान्गोरक्षप्रमुखयोगिनोऽपि मुहुः ॥ ५६ ॥
तरुणीरिडाप्रधानास्तिस्रो वातस्य तस्य कृतवासाः ।
प्रत्यग्रकापिशायनपानपरिभ्रान्तलोचनाः कलये ॥ ५७ ॥
तल्लोकपूर्वभागे धनदं ध्यायामि शेवधिकुलेशम् ।
अपि माणिभद्रमुख्यानम्बाचरणावलम्बिनो यक्षान् ॥ ५८ ॥
तस्यैव पूर्वसीमनि तपनीयारचितगोपुरे नगरे ।
कात्यायनीसहायं कलये शीतांशुखण्डचूडालम् ॥ ५९ ॥
तत्पुरषोडशवरणस्थलभाजस्तरुणचन्द्रचूडालान् ।
रुद्राध्यायोऽपठितान्रुद्राणीसहचरान्भजे रुद्रान् ॥ ६० ॥

१. 'मुत्तरभागे' क.

पवमानसंख्ययोजनदूरे वालतृणमेचकस्तस्य ।
साले मरकतरचितः संपदमचलां श्रियं च पुष्णातु ॥ ६१ ॥
आवृतियुग्मान्तरतो हरितमणीनिवहमेचके देशे ।
हाटकतालीविपिनं हालाघटघटितविटपमाकलये ॥ ६२ ॥
तत्रैव मन्त्रिणीगृहपरिणाहं तरलकेतनं सदनम् ।
मरकतसौधमनोज्ञं दद्याद्दायूंषि दण्डनाथायाः ॥ ६३ ॥
सदने तत्र हरिन्मणिसंघटिते मण्डपे शतस्तम्भे ।
कार्तस्वरमयपीठे कनकमयाम्बुरुहकर्णिकामध्ये ॥ ६४ ॥
बिन्दुत्रिकोणवर्तुलषडस्रवृत्तद्वयान्विते चक्रे ।
संचारिणी दशोत्तरशतार्णमनुराजकमलकलहंसी ॥ ६५ ॥
कोलवदना कुशेशयनयना कोकारिमण्डितशिखण्डा ।
संतप्तकाञ्चनाभा संध्यारुणचेलसंवृतनितम्बा ॥ ६६ ॥
हलमुसलशङ्खचक्राङ्कुशपाशाभयवरस्फुरितहस्ता ।
कूलंकषानुकम्पा कुङ्कुमजम्बालितस्तनाभोगा ॥ ६७ ॥
धूर्तानामतिदूरा वार्ताशेषावलग्नकमनीया ।
आर्तालीशुभदात्री वार्ताली भवतु वाञ्छितार्थाय ॥ ६८ ॥
तस्याः परितो देवीः स्वप्नेश्युन्मत्तभैरवीमुख्याः ।
प्रणमत जम्भिन्याद्या भैरववर्गांश्च हेतुकप्रमुखान् ॥ ६९ ॥
पूर्वोक्तसंख्ययोजनदूरे पूयांशुपाटलस्तस्य ।
विद्रावयतु मदार्तिं विद्रुमसालो विशङ्कटद्वारः ॥ ७० ॥
आवरणयोरहर्निशमन्तरभूमौ प्रकाशशालिन्याम् ।
आसीनमम्बुजासनमभिनवसिन्दूरगौरमहमीडे ॥ ७१ ॥
वरणस्य तस्य मारुतयोजनतो विपुलगोपुरद्वारः ।
सालो नानारत्नैः संघटिताङ्गः क्रपीष्ट मदभीष्टम् ॥ ७२ ॥
अन्तरकक्ष्यामनयोरविरलशोभापिचण्डिलोद्देशाम् ।
माणिक्यमण्डपाख्यां महतीमधिहृदयमनिशमाकलये ॥ ७३ ॥

१. 'हालामद' क. २. 'शंमला' क.

तत्र स्थितं प्रसन्नं तरुणतमालप्रवालकिरणाभम् ।
कर्णावलम्बिकुण्डलकन्दलिताभीशुकवचितकपोलम् ॥ ७४ ॥
शोणाधरं शुचिस्मितमेणाङ्कवदनमेधमानकृपम् ।
मृगधैणमदविशेषकमुद्रितनिटिलेन्दुरेखिकारुचिरम् ॥ ७५ ॥
नालीकदलसहोदरनयनाञ्चलघटितमनसिजाकूतम् ।
कमलाकठिनपयोधरकस्तूरीघुसृणपङ्किलोरस्कम् ॥ ७६ ॥
चाम्पेयगन्धि कैशयं शम्पासब्रह्मचारि कौशेयम् ।
श्रीवत्सकौस्तुभधरं श्रितजनरक्षाधुरीणचरणाब्जम् ॥ ७७ ॥
कम्बुसुदर्शनविलसत्करपद्मं कण्ठलोलवनमालम् ।
मुचकुन्दमोक्षफलदं मुकुन्दमानन्दकन्दमवलम्बे ॥ ७८ ॥
तद्वरणोत्तरभागे तारापतिबिम्बचुम्बितनिजशृङ्गः ।
विविधमणीगणघटितो वितरतु सालो विनिर्मलां धिषणाम् ॥ ७९ ॥
प्राकारद्वितयान्तरकक्ष्यां पृथुरत्ननिकरसंकीर्णाम् ।
नमत सहस्रस्तम्भकमण्डपनाम्नातिविश्रुतां भुवने ॥ ८० ॥
प्रणुमस्तत्र भवानीसहचरमीशानमिन्दुखण्डधरम् ।
शृङ्गारनायिकामनुशीलनमाद्योऽपि भृङ्गिनन्दिमुखान् ॥ ८१ ॥
तस्यैणवाहयोजनदूरे वन्दे मनोमयं वप्रम् ।
अङ्कूरन्मणिकिरणामन्तरकक्ष्यां च निर्मलामनयोः ॥ ८२ ॥
तत्रैवामृतवापीं तरलतरङ्गावलीढतटयुग्माम् ।
मुक्तामयकलहंसीमुद्रितकनकारविन्दसंदोहाम् ॥ ८३ ॥
शक्रोपलमयभृङ्गीसंगीतोन्मेषघोषितदिगन्ताम् ।
काञ्चनमयाङ्गविलसत्कारण्डवषण्डताण्डवमनोज्ञाम् ॥ ८४ ॥
कुरुविन्दात्मकहल्लककोरकसुषमासमूहपाटलिताम् ।
कलये सुधास्वरूपां कन्दलितामन्दकैरवामोदाम् ॥ ८५ ॥
तद्वापिकान्तराले तरले मणिपोतसीम्नि विहरन्तीम् ।
सिन्दूरपाटलाङ्गीं सितकिरणाङ्कुरकल्पितवतंसाम् ॥ ८६ ॥

१. 'नटित' क. २. 'भेद' क.

पर्वेन्दुबिम्बवदनां पल्लवशोणाधरस्फुरितहासाम् ।
कुटिलकबरीं कुरङ्गीशिशुनयनां कुण्डलस्फुरितगण्डाम् ॥ ८७ ॥
निकटस्थपोतनिलयाः शक्तीः शयविधृतहेमशृङ्गजलैः ।
परिपिञ्चन्तीं परितस्तारां तारुण्यगर्वितां वन्दे ॥ ८८ ॥
प्रागुक्तसंख्ययोजनदूरे प्रणमामि बुद्धिमयसालम् ।
अनयोरन्तरकक्ष्यामष्टापदपुष्टवेदिनीं रुचिराम् ॥ ८९ ॥
कादम्बरीनिवानां कलयाम्यानन्दवापिकां तस्याम् ।
शोणाश्मनिवहनिर्मितसोपानश्रेणिशोभमानतटीम् ॥ ९० ॥
माणिक्यतरणिनिलयां मध्ये तस्या मदारुणकपोलाम् ।
अमृतेशीत्यभिधानामन्तः कलयामि वारुणीं देवीम् ॥ ९१ ॥
सौवर्णिकेनिपातनहस्ताः सौन्दर्यगर्विता देव्यः ।
तत्पुरतस्थितिभाजो वितरन्त्वस्लाकमायुषां वृद्धिम् ॥ ९२ ॥
तस्य घृपदश्वयोजनदूरेऽहंकारसालमतितुङ्गम् ।
वन्दे तयोश्च मध्ये कक्ष्यां वलमानमलयपवमानाम् ॥ ९३ ॥
विनुमो विमर्शवापीं सौषुम्नसुधास्वरूपिणीं तत्र ।
वेलाविलङ्घवीचीकोलाहलभरितकूलवनवाटीम् ॥ ९४ ॥
तत्रैव सलिलमध्ये तापिञ्छदलप्रपञ्चसुषमाभाम् ।
श्यामलकञ्चुकलसितां श्यामाविटविम्बडम्बरहरास्याम् ॥ ९५ ॥
आघुन्नमद्यणचिह्नां हसितायुग्मशरकार्मुकविलासाम् ।
मन्दस्मितान्वितमुखीं मणिमयताटङ्कमण्डितकपोलाम् ॥ ९६ ॥
कुरुविन्दतरणिनिलयां कुलाचलस्पर्धिकुचनमन्मध्याम् ।
कुङ्कुमविलिप्तगात्रीं कुरुकुल्लां मनसि कुर्महे सततम् ॥ ९७ ॥
तत्सालोत्तरभागे भानुमयं वप्रमाश्रये दीप्रम् ।
मध्यं च विपुलमनयोर्मन्ये विश्रान्तमातपोद्गारम् ॥ ९८ ॥

---

१. 'स्र' क. २. 'नियतस' ख. ३. 'पार्श्वा' क. ४. 'साठ' ख. ५. 'निर्गुणिन्दम्पत्साम्' क. ६. देवे' क. ७. 'चितमय' ख.

तत्र कुरुविन्दपीठे तामरसे कनककर्णिकाघटिते ।
आसीनमरुणवासससम्लानप्रसवमालिकाभरणम् ॥ ९९ ॥
चक्षुष्मती प्रकाशनशक्तिच्छायासमारचितकेलिम् ।
माणिक्यमुकुटरम्यं मन्ये मार्तण्डभैरवं हृदये ॥ १०० ॥
इन्दुमयसालमीडे तस्योत्तरतस्तुषारगिरिगौरम् ।
अत्यन्तशिशिरमारुतमनयोर्मध्यं च चन्द्रिकोद्गारम् ॥ १०१ ॥
तत्र प्रकाशमानं तारानिकरैः परिष्कृतोद्देशम् ।
अमृतमयकान्तिकन्दलमन्तः कलयामि कुन्दसितमिन्दुम् ॥१०२॥
शृङ्गारसालमीडे शृङ्गोल्लसितं तदुत्तरे भागे ।
मध्यस्थले तयोरपि महितां शृङ्गारपूर्विकां परिखाम् ॥ १०३ ॥
तत्र मणिनौ[4]स्थिताभिस्तपनीयाविरचिताग्निहस्ताभिः ।
शृङ्गारदेवताभिः सहितं परिखाधिपं भजे मदनम् ॥ १०४ ॥
शृङ्गारवरणवर्यस्योत्तरतः सकलविबुधसंसेव्यम् ।
चिन्तामणिगणरचितं चिन्तां दूरीकरोतु मे सदनम् ॥ १०५ ॥
मणिसदनसालयोरधिमध्यं दशतालभूमिरुहदीर्घैः ।
पर्णैः सुवर्णवर्णैर्युक्तां काण्डैश्च योजनोत्तुङ्गैः ॥ १०६ ॥
मृदुलैस्तालीपञ्चकमानैर्मिलितां च केसरकदम्बैः ।
संततगलितमरन्दस्रोतोनिर्यन्मिलिन्दसंदोहाम् ॥ १०७ ॥
पाटीरपवनबालकघाटीनिर्यत्परागपिञ्जरिताम् ।
कलहंसीकुलकलकलकूलंकषनिनदनिचयकमनीयाम् ॥ १०८ ॥
पद्माटवीं भजामः परिमलकल्लोलपक्ष्मलोपान्ताम् ।
(देव्यर्घपात्रधारी तस्याः पूर्वदिशि दशकलायुक्तः ।)
वलयितमूर्तिर्भगवान्वह्निः क्रोशोन्नतश्चिरं पायात् ॥ १०९ ॥
तत्राधारे देव्याः पात्रीरूपः प्रभाकरः श्रीमान् ।
द्वादशकलासमेतो ध्वान्तं मम वहलमान्तरं भिन्द्यात् ॥ ११० ॥

---

१. 'आपीन' क. २. 'परिष्कृत सेव्यम्' क. ३. 'देशे' क. ४. 'संस्थिताभिः' क.
५. 'स्तपनीयारचितसारिहस्ताभिः' क.

तस्मिन्दिनेशपात्रे तरङ्गितामोदममृतमयमर्घ्यम् ।
चन्द्रकलात्मकममृतं सान्द्रीकुर्यादमन्दमानन्दम् ॥ १११ ॥
अमृते तस्मिन्नभितो विहरन्त्यो विविधमणितरणिभाजः ।
षोडशकलाः सुधांशोः शोकादुत्तारयन्तु मामनिशम् ॥ ११२ ॥
तत्रैव विहृतिभाजो धातृमुखानां च कारणेशानाम् ।
सृष्ट्यादिरूपिकास्ताः शमयन्त्वखिलाः कलाश्च संतापम् ॥ ११३ ॥
कीनाशवरुणकिन्नरराजदिगन्तेषु रत्नगेहस्य ।
कलयामि तान्यजस्रं कलयन्त्यायुष्यमर्घ्यपात्राणि ॥ ११४ ॥
पात्रस्थलस्य पुरतः पद्मारमणविधिपार्वतीशानाम् ।
भवनानि शर्मणे नो भवन्तु भासा प्रदीपितजगन्ति ॥ ११५ ॥
सदनस्यानलकोणे सततं प्रणमामि कुण्डमाग्नेयम् ।
तत्र स्थितं च वह्निं तरलशिखाजटिलमम्बिकाजनकम् ॥ ११६ ॥
तस्यासुरदिशि तादृशरत्नपरिस्फुरितपर्वनवकाढ्यम् ।
चक्रात्मकं शताङ्गं शतयोजनमुन्नतं भजे दिव्यम् ॥ ११७ ॥
तत्रैव दिशि निषण्णं तपनीयध्वजपरम्पराश्लिष्टम् ।
रथमपरं च भवान्या रचयामो मनसि रत्नमयचूडम् ॥ ११८ ॥
भवनस्य वायुभागे परिष्कृतो विविधवैजयन्तीभिः ।
रचयतु मुदं रथेन्द्रः सचिवेशान्याः समस्तवन्द्यायाः ॥ ११९ ॥
कुर्मोऽधिहृदयमनिशं क्रोडास्यायाः शताङ्कमूर्धन्यम् ।
रुद्रदिशि रत्नधाम्नो रुचिरपताकासपद्मकञ्चुकितम् ॥ १२० ॥

द्वारे द्वारे धाम्नः पिण्डीभूता नवीनबिम्बाभाः ।
विदधतु विपुलां कीर्तिं दिव्या लौहित्यसिद्धयो देव्यः ॥ १२४ ॥
मणिसदनस्यान्तरतो महनीये रत्नवेदिकामध्ये ।
बिन्दुमयचक्रमीडे पीठानामुपरि विरचितावासम् ॥ १२५ ॥
चक्राणां सकलानां प्रथममधःसीमफलकवास्तव्याः ।
अणिमादिसिद्धयो मामवन्तु देवीप्रभास्वरूपिण्यः ॥ १२६ ॥
अणिमादिसिद्धिफलकस्योपरि हरिणाङ्कखण्डकृतचूडाः ।
भद्रं पक्ष्म लयन्तु ब्राह्मीप्रमुखाश्च मातरोऽस्माकम् ॥ १२७ ॥
तस्योपरि मणिफलके तारुण्योत्तुङ्गपीनकुचभाराः ।
संक्षोभिणीप्रधाना भ्रान्ति विद्रावयन्तु दश मुद्राः ॥ १२८ ॥
फलकत्रयस्वरूपे पृथुले त्रैलोक्यमोहने चक्रे ।
दीव्यन्तु प्रकटाख्यास्तासां कर्त्री च भगवती त्रिपुरा ॥ १२९ ॥
तदुपरि विपुले धिष्ण्ये तरलदृशस्तरुणकोकनदभासः ।
कामाकर्षण्याद्याः कलये देवीः कलाधरशिखण्डाः ॥ १३० ॥
सर्वाशापरिपूरकचक्रेऽस्मिन्गुप्तयोगिनीसेव्या ।
त्रिपुरेशी मम दुरितं तुद्यात्कण्ठवलम्बिमणिहारा ॥ १३१ ॥
तस्योपरि मणिपीठे ताम्राम्भोरुहदलप्रभाशोणाः ।
ध्यायाम्यनङ्गकुसुमा प्रमुखा देवीश्च विधृतकूर्पासाः ॥ १३२ ॥
संक्षोभकारकेऽस्मिश्चक्रे श्रीत्रिपुरसुन्दरी साक्षात् ।
गोप्त्री गुप्ततराख्या गोपायतु मां कृपार्द्रया दृष्ट्या ॥ १३३ ॥
संक्षोभिणीप्रधानाः शक्तीस्तस्योर्ध्ववलयकृतवासाः ।
आलोलनीलवेणीरन्तः कलयामि यौवनोन्मत्ताः ॥ १३४ ॥
सौभाग्यदायकेऽस्मिश्चक्रेशी त्रिपुरवासिनी जीयात् ।
शक्तीश्च संप्रदायाभिधाः समस्ताः प्रमोदयन्त्वनिशम् ॥ १३५ ॥
मणिपीठोपरि तासां महति चतुर्हस्तविस्तृते वलये ।
संततविरचितवासाः शक्तीः कलयामि सर्वसिद्धिमुखाः ॥ १३६ ॥

---

१. 'तृप्यतु' क.

सर्वार्थसाधकाख्ये चक्रेऽमुष्मिन्समस्तफलदात्री ।
त्रिपुरा श्रीर्मम कुशलं दिशतादुत्तीर्णयोगिनी सेव्या ॥ १३७ ॥
तासां निलयस्योपरि धिष्ण्ये कौसुम्भकञ्चुकमनोज्ञाः ।
सर्वज्ञाद्या देव्यः सकलाः संपादयन्तु मम कीर्तिम् ॥ १३८ ॥
चक्रे समस्तरक्षाकरनाम्न्यस्मिन्समस्तजनसेव्याम् ।
मनसि निगर्भासहितां मन्ये श्रीत्रिपुरमालिनीं देवीम् ॥ १३९ ॥
सर्वज्ञासदनोपरि चक्रे विपुले समाकलितगेहाः ।
वन्दे वशिनीमुख्याः शक्तीः सिन्दूररेणुरुचः ॥ १४० ॥
श्रीसर्वरोगहराख्यचक्रेऽसिस्त्रिपुरपूर्विकां सिद्धाम् ।
वन्दे रहस्यनाम्ना वेद्याभिः शक्तिभिः सदा सेव्याम् ॥ १४१ ॥
वशिनीगृहोपरिष्टाद्विशतिहस्तोन्नते महापीठे ।
शमयन्तु शत्रुवृन्दं शस्त्राण्यस्त्राणि चादिदम्पत्योः ॥ १४२ ॥
शस्त्रसदनोपरिष्टाद्वलये बलवैरिरत्नसंघटिते ।
कामेश्वरीप्रधानाः कलये देवीः समस्तजनवन्द्याः ॥ १४३ ॥
चक्रेऽत्र सर्वसिद्धिप्रदनामनि सर्वफलदात्री ।
त्रिपुराम्बावतु सततं परापररहस्ययोगिनीसेव्या ॥ १४४ ॥
कामेश्वरीगृहोपरि वलये विविधमनुसंप्रदायज्ञाः ।
चत्वारो युगनाथा जयन्तु मित्रेशपूर्वका गुरवः ॥ १४५ ॥
नाथभवनोपरिष्टान्नानारत्नचयमेदुरे पीठे ।
कामेश्याद्या नित्याः कलयन्तु मुदं तिथिस्वरूपिण्यः ॥ १४६ ॥
नित्यासदनस्योपरि निर्मलमणिनिवहविरचिते धिष्ण्ये ।
कुशलं षडङ्गदेव्यः कलयन्त्वस्माकमुत्तरलनेत्राः ॥ १४७ ॥
सदनस्योपरि तासां सर्वानन्दमयनामके बिन्दौ ।
पञ्चब्रह्माकारं मञ्चं प्रणमामि मणिगणाकीर्णम् ॥ १४८ ॥
परितो मणिमञ्चस्य प्रलम्बमाना नियन्त्रिता पाशैः ।
मायामयी जवनिका मम दुरितं हरतु मेचकच्छाया ॥ १४९ ॥

१. 'श्रीसरोग' क. २. 'नाद' क.

मञ्चस्योपरिलम्बन्मदन्तीपुंनागमालिकाभरितम् ।
हरिगोपमयवितानं हरतादालस्यमनिशमस्माकम् ॥ १५० ॥
पर्यङ्कस्य भजामः पादान्बिम्बाम्बुदेन्दुहेमरुचः ।
अजहरिरुद्रेशमयाननलासुरमारुतेशकोणस्थान् ॥ १५१ ॥
फलकं सदा शिवमयं प्रणौमि सिन्दूररेणुकिरणाभम् ।
आरभ्याङ्केशीनां सदनात्कलितं च रत्नसोपानम् ॥ १५२ ॥
पट्टोपधानगण्डकचतुष्टयस्फुरितपाटलास्तरणम् ।
पर्यङ्कोपरि घटितं पातु चिरं हंसतूलशयनं नः ॥ १५३ ॥
तस्योपरि निवसन्तं तारुण्यश्रीनिषेवितं सततम् ।
आवृन्तफुल्लहल्लकमरीचिकापुञ्जमञ्जुलच्छायम् ॥ १५४ ॥
सिन्दूरशोणवसनं शीतांशुस्तबकचुम्बितकिरीटम् ।
कुङ्कुमतिलकमनोहरकुटिलालिकहसितकुमुदबन्धुशिशुम् ॥ १५५ ॥
पूर्णेन्दुबिम्बवदनं फुल्लसरोजातलोचनत्रितयम् ।
तरलापाङ्गतरङ्गितशफराङ्कनशास्त्रसंप्रदायार्थम् ॥ १५६ ॥
मणिमयकुण्डलपुष्यन्मरीचिकल्लोलमांसलकपोलम् ।
विद्रुमसहोदराधरविस्मरसितकिशोरसंचारम् ॥ १५७ ॥
आमोदिकुसुमशेखरमानीलभ्रूलतायुगमनोज्ञम् ।
वीटीसौरभवीचीद्विगुणितवक्त्रारविन्दसौरभ्यम् ॥ १५८ ॥
पाशाङ्कुशेक्षुचापप्रसवशरस्फुरितकोमलकराब्जम् ।
काश्मीरपङ्किलाङ्गं कामेशं मनसि कुर्महे सततम् ॥ १५९ ॥
तस्याङ्कभुवि निषण्णां तरुणकदम्बप्रसूनकिरणाभाम् ।
शीतांशुखण्डचूडां सीमन्तन्यस्तसान्द्रसिन्दूराम् ॥ १६० ॥
कुङ्कुमललामभास्वन्निटिलां कुटिलतरचिल्लिकायुगलाम् ।
नालीकतुल्यनयनां नासाञ्चलनटितमौक्तिकाभरणाम् ॥ १६१ ॥

१. 'तनु' क. २. 'कस्तूरीतिलकमनोज्ञं कुटिलालकभरितकुमुद' क. ३. 'स्मरादिना- गाय' क. ४. 'तमाल' क. ५. 'झिल्लिका' क. ६. 'सदृश' क.

सर्वार्थसाधकाख्ये चक्रेऽनुष्मिन्समस्तफलदात्री।
त्रिपुरा श्रीर्मम कुशलं दिशतादुत्तीर्णयोगिनी सेव्या॥ १३७॥
तासां निलयस्योपरि विष्ण्ये कौसुम्भकञ्चुकमनोज्ञाः।
सर्वज्ञाद्या देव्यः सकलाः संपादयन्तु मम कीर्तिम्॥ १३८॥
चक्रे समस्तरक्षाकरनाम्न्यखिलस्तमस्तजनसेव्याम्।
मनसि निगर्भसहितां मन्ये श्रीत्रिपुरमालिनीं देवीम्॥ १३९॥
सर्वज्ञासदनोपरि चक्रे विपुले समाकलितगेहाः।
वन्दे वशिनीमुख्याः शक्तीः सिन्दूररेणुरुचः॥ १४०॥
श्रीसर्वरोगहराख्यचक्रेऽलिलिपुरपूर्विकां सिद्धाम्।
वन्दे रहस्यनाम्ना वेद्याभिः शक्तिभिः सदा सेव्याम्॥ १४१॥
वशिनीगृहोपरिष्टाद्विरातिहस्तोन्नते महापीठे।
शमयन्तु शत्रुवृन्दं शस्त्राण्यस्त्राणि चादिदम्पत्योः॥ १४२॥
शस्त्रसदनोपरिष्टाद्वलये वलैवरिरत्नसंघटिते।
कामेश्वरीप्रधानाः कलये देवीः समस्तजनवन्द्याः॥ १४३॥
चक्रेऽत्र सर्वसिद्धिप्रदनामनि सर्वफलदात्री।
त्रिपुराम्बावतु सततं परापररहस्ययोगिनीसेव्या॥ १४४॥
कामेश्वरीगृहोपरि वल्ये विविधमनुसंप्रदायज्ञाः।
चत्वारो युगनाथा जयन्तु मित्रेशपूर्वका गुरवः॥ १४५॥
नाथभवनोपरिष्टान्नानारत्नचयमेदुरे पीठे।
कामेश्वाद्या नित्याः कलयन्तु मुदं तिथिस्वरूपिण्यः॥ १४६॥
नित्यासदनस्योपरि निर्मलमणिनिवहविरचिते धिष्ण्ये।
कुशलं षडङ्गदेव्यः कलयन्त्वस्माकमुत्तरलनेत्राः॥ १४७॥
सदनस्योपरि तासां सर्वानन्दमयनामके बिन्दौ।
पञ्चब्रह्माकारं मञ्चं प्रणमामि मणिगणाकीर्णम्॥ १४८॥
परितो मणिमञ्चस्य प्रलम्बमाना नियन्त्रिता पाशैः।
मायामयी जवनिका मम दुरितं हरतु मेचकच्छाया॥ १४९॥

१. 'अंसरोग' क. २. 'माद' क.

अपदजितकूर्ममूर्तिलकरुणं भर्मरुचिनिर्मथनदेहम् ।
श्रितवर्म मर्म शंभोः किंचन नर्म मम शर्म निर्मातु ॥ १७५ ॥
कालकुरलालिकालिमकन्दलविजितालिविधृतमणिवालि ।
मिलतु हृदि पुलिनजघनं बहुलितगलगरलकेलि किमपि महः॥१७६॥
कुङ्कुमतिलकितभाला कुरविन्दच्छायपाटलदुकूला ।
करुणापयोधिवेला काचन चित्ते चकास्तु मे लीला ॥ १७७ ॥
पुष्पंधयरुचिवेण्यः पुलिनाभोगत्रपाकरश्रोण्यः ।
जीयासुरिक्षुपाण्यः काश्चन कामारिकेलिसाक्षिण्यः ॥ १७८ ॥
तपनीयांशुकभांसि द्राक्षामाधुर्यनास्तिकवचांसि ।
कतिचन शुचं महांसि क्षपयतु (?) कपालितोपितमनांसि॥१७९॥
असितकचमायताक्षं कुसुमशरं कूलमुद्वहत्कृपार्द्रम् ।
आदिमरसाधिदैवतमन्तः कलये हराङ्कवासि महः ॥ १८० ॥
कर्णोपान्ततरङ्गितकटाक्षनिस्यन्दिकण्टदन्नकृपाम् ।
कामेश्वराङ्कनिलयां कामपि विद्यां पुरातनीं कलये ॥ १८१ ॥
अरविन्दकान्त्यरुंतुदविलोचनद्वन्द्वसुन्दरमुखेन्दुः ।
छन्दः कन्दलमन्दिरमन्तःपुरमैन्दुशेखरं वन्दे ॥ १८२ ॥
बिम्बनिकुरम्बडम्बरविडम्बकच्छायमम्ब रवलग्नम् ।
कम्बुगलमम्बुदकचं बिब्बोकं कमपि चुम्बतु मनो मे ॥ १८३ ॥
कमपि कमनीयरूपं कलयाम्यन्तः कदम्बकुसुमाढ्यम् ।
चम्पकरुचिरसुवेषैः संपादितकान्त्यलंकृतदिगन्तम् ॥ १८४ ॥
शम्पारुचिभरगर्हा संपादककान्तिकवचितदिगन्तम् ।
सिद्धान्तं निगमानां शुद्धान्तं किमपि शूलिनः कलये ॥ १८५ ॥
उद्यद्दिनकरशोणानुत्तरलचन्धुस्तनंधयापीडान् ।
करकलितपुण्ड्रचापान्कलये कानपि कपर्दिनः प्राणान् ॥ १८६ ॥

---

१. 'वालि' ख. २. 'उन्तल' फ. ३. अयं श्लोकः ख-पुस्तके त्रुटितः.

प्रपदजितकूर्मर्मूर्निलकरुणं भर्मरुचिनिर्मथनदेहम् ।
श्रितवर्म मर्म शंभोः किंचन नर्म मम शर्म निर्मातु ॥ १७५ ॥

कालकुरलालिकालिमकन्दलविजितालिविधृतमणिवालि ।
मिलतु हृदि पुलिनजघनं वहुलितगलगरलकेलि किमपि महः॥१७६॥

कुङ्कुमतिलकितभाला कुरविन्दच्छायपाटलदुकूला ।
करुणापयोधिवेला काचन चित्ते चकास्तु मे लीला ॥ १७७ ॥

पुष्पंधयरुचिवेण्यः पुलिनाभोगत्रपाकरश्रोण्यः ।
जीयासुरिक्षुपाण्यः काश्चन कामारिकेलिसाक्षिण्यः ॥ १७८ ॥

तपनीयांशुकभांसि द्राक्षामाधुर्यनास्तिकवचांसि ।
कतिचन शुचं महांसि क्षपयतु (?) कपालितोषितमनांसि ॥१७९॥

असितकचमायताक्षं कुसुमशरं कूलमुद्वहत्कृपार्द्रम्[1] ।
आदिमरसाधिदैवतमन्तः कलये हराङ्कवासि महः ॥ १८० ॥

कर्णान्ततरङ्गितकटाक्षनिस्यन्दिकण्ठदघ्नकृपाम् ।
कामेश्वराङ्कनिलयां कामपि विद्यां पुरातनीं कलये ॥ १८१ ॥

अरविन्दकान्त्यरुंतुदविलोचनद्वन्द्वसुन्दरमुखेन्दुः ।
कुन्दः[2] केन्दलमन्दिरमन्तःपुरमैन्दुशेखरं वन्दे ॥ १८२ ॥

बिम्बनिकुरम्बडम्बरविडम्बकच्छायमम्ब रवलग्नम् ।
कम्बुगलमम्बुदकचं विम्बोकं कमपि चुम्बतु मनो मे ॥ १८३ ॥

कमपि कमनीयरूपं कलयाम्यन्तः कदम्बकुसुमाढ्यम् ।
चम्पकरुचिरसुवेषैः संपादितकान्त्यलंकृतदिगन्तम् ॥ १८४ ॥

शम्पारुचिभरगर्हा संपादककान्तिकवचितदिगन्तम् ।
सिद्धान्तं निगमानां शुद्धान्तं किमपि शूलिनः कलये ॥ १८५ ॥

उद्यद्दिनकरशोणानुत्पल्वन्नुल्लनंवयापीडान् ।
करकलितपुण्ड्रचापान्कलये कानपि कपर्दिनः प्राणान् ॥ १८६ ॥

---

१. 'वासि' ख. २. 'कुन्तल' क. ३. अयं श्लोकः ख-पुस्तके त्रुटितः.

रशनालसज्जघनया रसना जीवातु चापभासुरया ।
घ्राणायुष्करशरया घ्रातं चित्तं कयापि वासनया ॥ १८७ ॥
सरसिजसहयुध्वदृशा शम्पालतिकासनाभिविग्रहया ।
भासा कयापि चेतो नासामणिशोभिवदनया भरितम् ॥ १८८ ॥
नैवयावकाभसिचयान्वितया गजयानया दयापरया ।
धृतयामिनीशकलया धिया कयापि क्षता मया हि वयम् ॥१८९॥
अलमलमकुसुमबाणैरबिम्बशोणैरपुण्ड्रकोदण्डैः ।
अकुमुदबान्धवचूडैरन्यैरिह जगति दैवतं मन्यैः ॥ १९० ॥
कुवलयसदृक्षनयनैः कुलगिरिकूटस्थबन्धुकुचभारैः ।
करुणासन्दिकटाक्षैः कवचितचित्तोऽस्मि कतिपयैः कुतुकैः ॥१९१॥
नतजनसुलभाय नमो नालीकसनाभिलोचनाय नमः ।
नन्दितगिरिशाय नमो महसे नवनीपपाटलाय नमः ॥ १९२ ॥
कादम्बकुसुमधाम्ने कायच्छायाकणापितार्यम्णे ।
सीम्ने चिरंतनगिरां भूम्ने कस्मैचिदाददे प्रणतिम् ॥ १९३ ॥
कुटिलकबरीभरेभ्यः कुङ्कुमसब्रह्मचारिकिरणेभ्यः ।
कूलंकषस्तनेभ्यः कुर्मः प्रणतिं कुलाद्रिकुतुकेभ्यः ॥ १९४ ॥
कोकनदशोणचरणात्कोमलकुरलालिविजितशैवालात् ।
उत्पलसुगन्धिनयनादुदरीकुर्मो न देवतामन्याम् ॥ १९५ ॥
आपाटलाधराणामानीलस्निग्धबर्बरकचानाम् ।
आम्नायजीवनानामाकूतानां हरस्य दासोऽस्मि ॥ १९६ ॥
पुङ्खितविलासहासस्फुरितासु पुराहिताङ्कनिलयासु ।
मग्नं मनो मदीयं कास्वपि कामारिजीवनाडीषु ॥ १९७ ॥
ललिता पातु शिरो मे ललाटमम्बा च मधुमतीरूपा ।
भ्रूयुग्मं च भवानी पुष्पशरा पातु लोचनद्वन्द्वम् ॥ १९८ ॥
पायान्नासां बाला सुभगा दन्तांश्च सुन्दरी जिह्वाम् ।
अधरोष्ठमादिशक्तिश्चक्रेशी पातु मे चिरं चिबुकम् ॥ १९९ ॥

१. अयं श्लोकः क-पुस्तके नास्ति. २. 'नीत' क.

कामेश्वरी च कर्णौ कामाक्षी पातु गण्डयोर्युगलम् ।
शृङ्गारनायिकाव्याद्वदनं सिंहासनेश्वरी च गलम् ॥ २०० ॥
स्कन्दप्रसूश्च पातु स्कन्धौ बाहू च पाटलाङ्गी मे ।
पाणी च पद्मनिलया पायादनिशं नखावलीर्विजया ॥ २०१ ॥
कोदण्डिनी च वक्षः कुक्षिं चाव्यात्कुलाचलतनूजा ।
कल्याणी च वलग्नं कटिं च पायात्कलाधरशिखण्डा ॥ २०२ ॥
ऊरुद्वयं च पायादुमा मृडानी च जानुनी रक्षेत् ।
जङ्घे च शोडशी मे पायात्पादौ च पाशसृणिहस्ता ॥ २०३ ॥
प्रातः पातु परा मां मध्याह्ने पातु मणिगृहाधीशा ।
शर्वाण्यवतु च सायं पायाद्रात्रौ च भैरवी साक्षात् ॥ २०४ ॥
भार्यां रक्षतु गौरी पायात्पुत्रांश्च बिन्दुगृहपीठा[1] ।
श्रीविद्या च यशो मे शीलं चाव्याच्चिरं महाराज्ञी ॥ २०५ ॥
पवनमयि पावकमयि क्षोणीमयि गगनमयि कृपीटमयि ।
रविमयि शशिमयि दिङ्मयि समयमयि प्राणमयि शिवे पाहि॥२०६॥
कालि कपालिनि शूलिनि भैरवि मातङ्गि पञ्चमि त्रिपुरे ।
वाग्देवि विन्ध्यवासिनि बाले भुवनेशि पालय चिरं माम् ॥ २०७ ॥
अभिनवसिन्दूराभामम्ब त्वां चिन्तयन्ति ये हृदये ।
उपरि निपतन्ति तेषामुत्पलनयनाकटाक्षकल्लोलाः ॥ २०८ ॥
वर्गाष्टकमिलिताभिर्वशिनीमुख्याभिरावृतां भवतीम् ।
चिन्तयतां सितवर्णां वाचो निर्यान्त्ययत्नतो वदनात् ॥ २०९ ॥
कनकशलाकागौरीं कर्णव्यालोलकुण्डलद्वितयाम् ।
प्रहसितमुखीं च भवतीं ध्यायन्तो ये त एव भूधनदाः ॥ २१० ॥
शीर्षाम्भोरुहमध्ये शीतलपीयूषवर्षिणीं भवतीम् ।
अनुदिनमनुचिन्तयतामायुष्यं भवति पुष्कलमवन्याम् ॥ २११ ॥
मधुरस्मितां मदारुणनयनां मातङ्गकुम्भवक्षोजाम् ।
चन्द्रावतंसिनीं त्वां सविधे पश्यन्ति सुकृतिनः केचित् ॥ २१२ ॥

---

1. 'बन्धुगृह' क.

ललितायाः स्तवरत्नं ललितपदाभिः प्रणीतमार्याभिः ।
प्रतिदिनमवनौ पठतां फलानि वक्तुं प्रगल्भते सैव ॥ २१३ ॥

इति श्रीभगवता दुर्वाससा विरचितं ललितास्तवरत्नं समाप्तम् ।

---

# श्रीरामभद्रदीक्षितविरचितो

# रामाष्टप्रासः ।

सेतुशास्त्रिविरचितविषमपदटीकया समेतः ।

पारावारपयोविशोषणकलापारीणकालानल-
ज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः ।
सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती
धर्मो विग्रहवानधर्मविरतिं धन्वी स धन्वीत नः ॥

रामचन्द्रं नमस्कृत्य क्रियते सेतुशास्त्रिणा ।
टीका काठिन्ययुक्तानां पदानामर्थबोधिका ॥

अव्यादर्ककुलाब्धिकौस्तुभमणिर्दिव्यारविन्देक्षणो
भव्याविष्कृतिलम्पटेषु पटलीलव्याशराशीश्वरः ।
रव्यासादितदोःप्रतापतुलनो हव्याशभूसुन्दरः
सव्यासव्यकरात्तचापविशिखः क्रव्याशवैरी विभुः ॥ १ ॥

अव्यात् रक्षतात् । अवधातुः रक्षणार्थः । भव्यं मङ्गलम् । 'भवुक भावुक भव्यम्' इ॰

---

१. "श्रीमहाचार्यपदुत्वसूचकोऽयं ग्रन्थः कविकुलसार्वभौमेन श्रीमद्रामभद्रदीक्षितेन विरचितः । सोऽयं मध्यार्जुनक्षेत्रनिकटवर्तिनि सहजिराजपुरेऽवात्सीदिति प्रसिद्धिः । अस्य जन्मभूमिस्तु कण्डरमाणिक्यमिति कश्चन ग्रामवर इत्येतद्विरचितशृङ्गारतिलकाभिधानाटकतः प्रतीयते । अनेन निर्मिता ग्रन्था बहवः । तेष्वत्र प्रथितास्त्वेते—(१) अष्टप्रासश्लोकाः, (२) जानकीपरिणयनाटकम्, (३) वर्णास्तवः, (४) पतञ्जलिविजयकाव्यम्, (५) पर्यायोक्तिनिष्यन्दः, (६) रामस्तवः, (७) शृङ्गारतिलकभाणः. अस्य पुस्तकस्यादर्शपुस्तकमनीनसतः तत्रत्य त्रिशिरःपुरवर्ति हिंदु है स्कूल् (Hindu High School) पाठशालास्थतत्कालिकसंस्कृताध्यापकैर्नवनीतकृष्णैः श्रीमद्भिः सेतुशास्त्रिभिः काठिन्यप्रकाशिका काचन व्याख्या निरमायि । तां च व्याख्यां समूलं विलिख्य वयमनल्पकार्थं प्रहिणोमि । काव्यमालायाममुं ग्रन्थं सटीकमद्यविरच्य तत्रभवद्भिर्भवद्भिरिति विहितमर्थनं"—टीकाकारसेतुशास्त्रितनूजः त्रिशिरोनगर(Trichinopoly)वासी ज. से. नटेशशास्त्री ।

समरः । तस्य आविष्कृतिः उत्पादनं तत्र लम्पटा समर्था इषुपटली बाणसमूहः तया लभ्यः छेद्यः आशराधीश्वरः रावणः यस्य स तथोक्तः । रविणा सूर्येण आसादिता दोःप्रताप-तुलना बाहुप्रतापसाम्यं यस्य सः । हव्यं अश्नातीति हव्याशः अग्निः तद्भवः सुब्रह्मण्यः स इव सुन्दरः सौन्दर्यवान् । क्रव्यमश्नन्तीति क्रव्याशाः राक्षसाः तेषां वैरी शत्रुः ॥

अम्बा कौसलनन्दना दशरथो लम्बालकान्तं पिता
यं बालं समवेक्ष्य कैरवसुहृद्बिम्बाननं नन्दिनौ ।
शम्बामर्शसमाङ्गवानरचमूसंबाधबद्धाम्बुधिं
तं बाणाहतरावणं शरणमालम्बामहे राघवम् ॥ २ ॥

अलकाः चूर्णकुन्तलाः तेषां अन्तानि अग्राणि । लम्बानि अलकान्तानि यस्य सः । कैरवसुहृत् चन्द्रः तस्य बिम्बं मण्डलम् । 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः । तदिव आननं मुखं यस्य सः । शम्बामर्शः वज्रस्पर्शः । तं राघवं रघोः गोत्रापत्यं रामं शरणं रक्षकं आलम्बामहे । वयमिति शेषः ॥

अम्भोदद्युतिमर्कवंशतिलकं कुम्भोरुलङ्कापुरी-
रम्भोरूकुचबाष्पपूरपतनारं भोपयुक्ताहवम् ।
शंभोरायुधचापशैलदलने दम्भोलिकेलीजुषं
तं भो मास्तु गिरां ममेति कलये तं भोगमोक्षप्रदम् ॥ ३ ॥

कुम्भाविव उरु कुचयोः विशेषणम् । मद्यान्ताविलर्यः । रम्भे इव ऊरू यासां ताः रम्भोर्वः । लङ्कापुर्यां विद्यमानाः रम्भोर्वः राक्षस्यः तासां कुचौ तयोः बाष्पपूरः नेत्राश्रुप्रवाहः ॥

अंसासक्तनिषङ्गमाशरचमूहिंसानपेतायुधं
संसारामयभेषजाह्वयपदं हंसान्वयालंकृतिम् ।
पुंसामुत्तममात्तचापविशिखं तं साधुसंसेवितं
शंसामीप्सितदायकं यदि न किं किं साधयेयं फलम् ॥ ४ ॥

अंसयोः बाहुमूलयोः आसक्तौ निषङ्गौ शरधी यस्य तम् । आशरचम्वाः हिंसायाः अनपेतं आयुधं यस्य तम् । हंसः सूर्यः । 'भानुर्हंसः सहस्रांशुः' इत्यमरः । तं तादृशं यदि न शंसामि न स्तौमि यदि किं फलं साधयेयम् । न किंचिदपीत्यर्थः ॥

अत्यन्तं विषयास्तुदन्ति हृदयं सत्यं मृषा न त्विदं
नित्यं तेन मलीमसं भवति मे कृत्यं ततो भावि किम् ।
इत्यन्तः परितप्यते रघुपते गत्यन्तरं नास्ति मे
सत्यन्तावसरे त्वमेत्य सहसा भृत्यं तदा पाहि माम् ॥ ५ ॥

तुदन्ति । 'तुद व्यथने' । न मृषा न मिथ्या । तेन कारणेन मलीमसं मलिनं भवति । ततः भावि भविष्यत्किं कृत्यं न किमपि । इत्यन्तः मनः । अन्तावसारे सति मरणकाले ॥

अस्तूपस्थितमभ्युवृत्तिरिति यो वस्तूनि नापेक्षते
कस्तूरीप्रभृतीनि तस्य विषयाः स्युस्तूलवन्निष्फलाः ।
यस्तूरीकुरुतेऽथ तान्मुरहरो मस्तूनि दध्नो यथा
द्युस्तूरभ्रजयीज्य तस्य कृपयैनस्तूर्वं मे राघव ॥ ६ ॥

अभ्युवृत्तिः अभ्यक्षणम् । उपस्थितं अनायासलभ्यम् । मस्तूनि मण्डानीव । द्युस्तूरभ्रजयीज्य द्युत् आकाशः तत्र तूर् शब्दायमानं यदभ्रं त जयतीति जयिनी ज्या मौर्वी यस्य। सबोधनम् । 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । तस्य मे विषयाभिभूतस्य एनः पापं तूर्वं नाशय । 'कलुषं वृजिनैनोऽघम्' इत्यमरः ॥

अन्ये संसृतिसागरस्य हिमवत्कन्येशमुत्तारकं
मन्येरंस्त्वमहं तु वेद्मि ननु यो मुन्येकगम्यात्मकः ।
धन्ये जन्म गृहीतवान्रघुकुले जन्ये विभिन्नार्यसृ-
ग्धुन्येषत्करपाटलिम्नि परमा निन्ये नुतिर्ब्रह्मणा ॥ ७ ॥

अहं तं यः रघुकुले जन्म गृहीतवान् उत्तारकं वेद्मि । युद्धे असृग्धुन्या रक्तनद्या ईषत्करपाटलिम्नि । यस्मिन् रामे इत्यध्याहार्यम् । ब्रह्मणा विधिना नुतिः निन्ये कृता । रावणवधानन्तरं ब्रह्मागत्य राममस्तौषीदिति रामायणकथात्रानुसंधेया ॥

आरोहव्यपनीतमेखलमपास्तोरोजहारं रिपु-
स्त्रीरोदं विरचय्य येन विजयश्रीरोचमानौजसा ।
आरोपाद्विरतं शरस्य धनुषि स्फारोदयत्कीर्तिना
धीरोदात्तमिमं भजे रघुपतिं नीरोगतावाप्तये ॥ ८ ॥

येन रामेण धनुषि शरस्य आरोपात् विरतम् । उपरतमित्यर्थः । रिपुस्त्रीरोदमित्यस्य विशेषणद्वयमेतत् । आरोहव्यपनीतमेखलं अपास्तोरोजहारं पुंसामाश्रमचतुष्टयवद् स्त्रीणामाश्रमत्रये अन्त्याश्रमस्य वैधव्यस्यारोहात् व्यपनीतमेखलमित्यर्थः । नीरोगतावाप्तये रोगनिवृत्तये इत्यर्थः ॥

आशापूरणमाकलय्य भजतां क्लेशापहं सर्वदा
नाशाय द्विषतामुपासत दिशामीशाय मुक्त्या विधेः ।
कीशाकारधरैः सुरैश्च रुरुधे नैशाचरीं यः पुरी-
मीशानायुधभञ्जनाय करुणाकोशाय तस्मै नमः ॥ ९ ॥

उपासत क्रियापदम् ।'आस उपवेशने'। आङ्पूर्वः लङि प्रथमपुरुषबहुवचनमात्मनेपदि। विधेः ब्रह्मणः । करुणाकोशाय दयानिलयाय । कीशाकारधरैः वानररूपिभिः ॥

आयामस्फुरदक्षिपद्मममितो जायानुजाभ्यां युतं
ध्येयाकारमुदारयोगिमनसां कायानुकार्यम्बुदम् ।
मायामानुषमर्कसंततिभुवो दायादमुर्वीपतेः
भूयासं प्रणतः प्रणम्य च शुभप्रायामुपेयां गतिम् ॥ १० ॥

स्ववीक्षणेन सर्वोऽपि वर्धत इति । अभितः आयामेन वैशाल्येन स्फुरत् प्रकाशमानं अक्षिपद्मयुगलं यस्य तम् । जाया सीता अनुजः लक्ष्मणः ताभ्यां युतम् । ध्येयः ध्यातुं योग्यः आकारः स्वरूपं यस्य तम् । उदारं निर्मलम् । कायानुकार्यम्बुद कायं शरीरं अनुकरोतीति कायानुकारि अम्बुदः मेघः यस्य तम् ॥

आसन्नक्षितिकन्यकाकुचतटव्यासङ्गिहारावलि-
श्रीसंक्रान्तसविभ्रमाक्षिवलनो हासं वितन्वन्मृदु ।
वासन्तीस्रगलंकृतो मलयजोल्लासं वहन्वक्षसं
दासं रक्षतु मामसौ रघुपतिस्त्रासं निरस्याखिलम् ॥ ११ ॥

आसन्ना समीपस्था या क्षितिकन्यका जानकी तस्याः कुचतटं तत्र व्यासङ्गिनी लग्नमाना या हारावली मौक्तिकहारपङ्क्तिः तस्याः श्रीः शोभा तस्यां संक्रान्तं संनिबद्धं अक्षिवलन अक्षिसंचारः यस्य सः । वासन्तीस्रक् मल्लिकामाला तया अलकृतः । मलयजोल्लासं मलयचन्दनम् । मम अखिलं त्रासं निरस्य मां रक्षतु ॥

आदेहच्युतिदुर्जयेन्द्रियतया स्यादेव चेत्पातकं
भूदेवाभिजनेऽपि तद्भवतु नः सीदेम किं तावता ।
वैदेषु स्फुटवैभवं दशमुखच्छेदेन दीप्तौजसं
वैदेहीरमणं प्रणम्यतु वयं मोदेमहि त्रायताम् ॥ १२ ॥

देहस्य च्युतिः मरणं तदभिव्याप्य आदेहच्युति मरणपर्यन्तम् । दुर्जयानि इन्द्रियाणि यस्य सः । तस्य भावः तत्ता तया । भूदेवाभिजनेऽपि ब्राह्मणरूपे उत्तमजन्मन्यपि पातकं भवतु तावता वयं सीदेम किम् । षद्धातुः विशरणाद्यर्थः । विधिलिङि उत्तमपुरुषबहुवचनम् ॥

आसीनः कनकासने निजपुरोवासीभवन्मारुति-
र्या सीतेति कृताभिधा भुवि तया श्रीसीममूर्त्या युतः ।
नासीरार्पितहारसाञ्जलिसमीपासीददर्कात्मजो
दासीभूतसुरःसकोसलमहीशासी शरण्योऽस्तु मे ॥ १३ ॥

निजस्य स्वस्य पुरोवर्तीभवन्मारुतिः यस्य तस्य स तथोक्तः। पुरःस्थितहनुमानित्यर्थः। श्रीसीममूर्त्या अधिकसौन्दर्यवत्या। नासीरं सेनामुखम्। प्रकृते सभायाम्। अर्पितः दत्तः हारः मुक्ताहारः यस्मै सः॥

आदित्वं दधदप्यशेषजगतां यो दित्यपत्यान्तकृ-
व्यादिष्टो विबुधैर्भवान्रिपुहरः स्यादित्यवन्यामभूत्।
नेदिष्ठं तपसां फलं नवसुधास्वादिष्टमन्तः सता-
मादित्यान्वयदीपमाश्रयति तं मे दिक्षु कीर्णं मनः॥ १४॥

यः अशेषजगतां समस्तजगतां आदित्वं आदिकारणं आदिकारणत्वं दधदपि दित्यपत्यान्तकृत् दितेः अपत्यानि असुराः तेषामन्तकृत् नाशकृत्। व्यादिष्टः प्रार्थितः। नेदिष्ठं अन्तिकतमं नवसुधा अभिनवामृतं तदिव स्वादु रुच्युत्पादनं इष्टं सतां महताम्। अन्तः मनसि। दीपं प्रकाशकम्। कीर्णं व्याप्तम्॥

आखावाहितविग्रहो जगति यः शैखावतो यत्कर-
स्तौ खाटप्रवरौ यदीयमनुना मौखानुबन्धोज्ज्वलौ।
साखादोद्यतकुम्भकर्णजयिनी शाखामृगानीकिनी
रे खामध्यगतावतात्प्रणिपतल्लेखावलिर्देवता॥ १५॥

आखौ मूषिके। 'खर्वाखुर्वोलमूषिका' इति दुर्गः। आहितं न्यस्तं विग्रहं शरीरं यस्य सः। विघ्नेश्वर इत्यर्थः। यत्करः यस्य शिखस्य करः शैखावतः अग्निमान्, तौ खाटप्रवरौ खे अटन्तीति खाटाः तेषां प्रवरौ श्रेष्ठौ शिवविघ्नेश्वरौ। यदीयमनुना यस्य रामस्य मनुना मन्त्रेण मौखानुबन्धोज्ज्वलौ मुखालंकारसहितौ। एतद्रामतापनीयाख्ये ग्रन्थे प्रसिद्धम्॥

इच्छां मे शृणु राम कामपि विभो कच्छातिरूढातसी-
गुच्छाङ्गप्रभ मर्दितुं मम समागच्छान्तरं हस्ततः।
पृच्छां मा कुरु मृद्यतां कथमिति स्वच्छांशुकीर्ते भवा-
नच्छानल्वरितं किमद्रिसदृशं तच्छाम्भवं कार्मुकम्॥ १६॥

कच्छः जलसमीपवर्तिदेशः। 'कच्छमनूपे' इति बोपालितः। तत्राधिरूढा उत्पन्ना अतसी पुष्पविशेषः तस्याः गुच्छ मञ्जरी तदिव अङ्गप्रभा यस्य तस्य संबोधनम्। मम अन्तरं चपलचित्तं समागच्छ विश। अणुत्वात्कथं मर्दनं संभवतीति पृच्छां मा कुरु। अद्रिसदृशं तत् सीतापरिणयपणभूतं शाम्भवं कार्मुकं धनुः भवान् नाच्छासीत् न च्छिन्नवान् किम्। खण्डितवानेवेत्यर्थः। 'च्छो छेदने' इत्यस्य लुङ् रूपम्। अणुयत्नात् मर्दय अनवयवित्वादेव च्छेदो न प्रार्थितः किंतु मर्दनमेव॥

ऊहन्ते निगमेन यं नियमिनो गेहं विशन्तो गुहां
यो हंसाकृतिरस्ति देहिषु चतुर्व्यूहं च गृह्णाति यः ।
देहं चेन्द्रियमण्डलं च पृथगेवाहं पदार्थाद्विद-
न्सोऽहं भावनया भजे तमधुना मोहं विना राघवम् ॥ १७ ॥

यं रामं गुहां गेहं विशन्तः । गुहावासिन इत्यर्थः । नियमिनः योगिनः नियमेन चित्तचाञ्चल्यराहित्येन ऊहन्ते तर्कयन्ति । यः देहिषु प्राणिषु हंसाकृतिः परमात्मरूपी अस्ति । चतुर्व्यूहं केशवादिव्यूहं संकर्षणादिव्यूहं वा गृह्णाति स्वीकरोति ॥

ऊरूपर्युपवेशितप्रियतमं मेरूपमानं श्रिया
चारूपस्थितमग्रतो हनुमताध्यारूढसिंहासनम् ।
गीरूढं कविमण्डलस्य चरणस्त्रीरूपितैकोपलं
दारूपाहितराज्यसंपदमिमं धीरूहते मामिका ॥ १८ ॥

ऊरूपर्युपवेशिता अङ्कस्था प्रियतमा यस्य तम् । गीरूढं गीर्षु रूढं कविमण्डलस्तुत्यर्थः । चरणेन पादेन स्त्रीरूपं प्राप्ता एकोपला यस्य तम् । दारुणि पादुकाभ्यां उपाहिता विन्यस्ता राज्यसंपदः येन तम् ॥

एत्याभीक्ष्णमनादिकर्मपटलीं वात्यामिवैष भ्रम-
न्यात्या याति परत्र चेह च मुहुर्भीत्या च संयुज्यते ।
भीत्यागाय ततश्च भूतकरुणाचैत्यायमानेक्षणं
कात्यायन्यधिनाथकार्मुकमिदं दैत्यारिमालम्बते ॥ १९ ॥

एषः जीवः अनादिः आदिशून्या या कर्मपटली कर्मसमूहं ताम् अभीक्ष्णं पुनः पुनः एति प्राप्नोति । पूर्वकर्मानुगुण्येण जन्म लभत इत्यर्थः । वात्यां वातसमूहम् भीत्यागाय भयविसर्जनायेत्यर्थः । संबोधनम् । ततः तस्मात् कारणात् भूतेषु करुणा तस्याः चैत्यायमाने ईक्षणे यस्य तम् । चैत्याः रथ्याकोणस्थिताभिज्ञानवृक्षः ॥

एके माधवमिन्दुमौलिमपरे नाकेशमन्ये नमो-
वाकेनानुसरन्तु न त्वहमपि स्तोकेन तानाश्रये ।
साकेतेशमुपैमि किंतु शरणं या कैकसी विश्रव-
स्तोकेनाजनि भीरपास्य खलु तां लोके भजन्तं यशः ॥ २० ॥

एके केचिज्जनाः माधवं विष्णुम्, अपरे इन्दुमौलिं शंकरम्, अन्ये नाकेशमिन्द्रम्, नमोवाकेन नमःशब्देन अनुसरन्तु नमस्कारं कुर्वन्तु । अहं तु तान् पूर्वोक्तान् स्तोकेनापि किंचिदपि नाश्रये । या भीतिः विश्रवस्तोकेन रावणेन अजनि उत्पन्ना तां भीतिं अपास्य दूरीकृत्य ॥

एकं साधु करोति यः प्रपतनं साकं धियानन्यया
लोकं तं भुवने नयन्तमभयं पाकं रवूणामपि ।
शोकंमोपगमं कृतान्तविकटभ्रूकम्पवाक्यैरिति
क्ष्माकन्याचिरसंभृतव्रतपरीपाकं तमेवाश्रये ॥ २१ ॥

यः अनन्यया अव्यभिचारिण्या प्रपतनं नमस्कारं साधु सम्यक् करोति तनोति तं नमस्कारिणं लोकं जनम्। 'लोकस्तु भुवने जने' इत्यमरः । भुवने जगति अभयं निर्भयं नयन्तं कुर्वाणम्। पाकं परिपक्वफलरूपं डिम्भं वा कृतान्तस्य यमस्य विकटे विस्तृते भ्रुवौ वाक्यानि च तैः शोकं दुःखं मोपगमं इति तमेव राममेव आश्रये ॥

एषा मेऽञ्जलियन्त्रणास्तु पदयोर्भूपायितैः पांसुभिः
पाषाणं कलभाषिणीं कृतवते दोषानपाकुर्वते ।
शेषाकारकरात्तभीमधनुषे दोषाचरेशद्विषे
रोषावेशविशोषिताब्धिपयसे पूषान्वयश्रेयसे ॥ २२ ॥

पदयोः चरणयोः । भूपायितैः पांसुभिः पाषाण शिलां कलभाषिणीं अहल्याम् । अपाकुर्वते तिरस्कुर्वते । दोषाचरेशः रावणः तस्य द्विषे शत्रवे । पूषा सूर्यः । अञ्जलियन्त्रणा अञ्जलिबन्धः ॥

कल्पापायघनारवस्मयभिदा शिल्पाकरेणादिश-
ञ्जल्पाकेन रणे जयस्य धनुषानल्पामरीणां व्यथाम् ।
कल्पागो भजतां स पातु करुणाकल्पावलोकोऽशुभ-
त्कल्पानेकशरः पुरा रघुपतिस्तल्पायिताहीश्वरः ॥ २३ ॥

कल्पापायः प्रलयकालः तत्र विद्यमानः यः घनारवः मेघध्वनिः तस्य स्मयः गर्वः तं भिनत्तीति भिद् तेन शिल्पाकरेण चित्राणि कर्माणि कुर्वता रणे जयं जल्पता आदिशन् कुर्वन् भजन् । भजतां कल्पागः देवदारुः करुणाकल्पावलोकः कृपालकृतवीक्षणः पुरा अवतारात्पूर्वं विष्णुत्वे तल्पायिताहीश्वरः । शेषशायीत्यर्थः॥

कर्ता कंजभवात्मना त्रिजगतां भर्ता मुकुन्दात्मना
हर्ता यश्च हरात्मनाघमखिलं स्तर्ता च यस्योज्झति ।
धर्तारं धनुषः शरैः सह तमादर्तारमार्तान्वयं
स्तर्तारोऽप्यपथे श्रिता रघुपतिं वर्तामहे निर्भयाः ॥ २४ ॥

कंजभवात्मना ब्रह्मरूपेण कर्ता स्रष्टा । मुकुन्दात्मना विष्णुरूपेण भर्ता पालकः हरात्मना शंकरात्मना हर्ता संहारकः । यस्य स्मर्ता । कर्मणि षष्ठी। एवमन्यत्रापि । यत्स्मर्ता उज्झति

त्यजति अपथे दुर्मार्गे सतोऽपि वर्तमाना अपि आर्तान्वयं दीनसमूहं आदर्तारं रक्षितारं रघुपतिं श्रिताः आश्रिताः ॥

कन्तुर्हन्ति मनो विधेयविरहान्मन्तुः क्रमादेधते
किंतु स्मर्यत एव नाङ्घ्रिकमलं हन्तुः पुरां वा मघोः।
गन्तुर्मे विषयाध्वसीम्नि धनिनां नन्तुश्च कुक्षिंभरेः
सन्तु श्रीरघुवीरपादभजनात्संतुष्यतोऽनेहसः ॥ २५ ॥

कन्तुः इच्छा विधेयविरहात् मनसा यदीप्सितं कार्यं तत्कर्तुमशक्यत्वात् मनः चित्तं हन्ति बाधते। मन्तुः अपराधः पुरां हन्तुः ईश्वरस्य मघोर्हन्तुः विष्णोः एतयोः अङ्घ्रिकमलं चरणारविन्दं न स्मर्यत एव। धनिनां नन्तुः। कर्मणि षष्ठी। धनिकान्सेवमानस्येत्यर्थः। रघुवीरपादभजनात् संतुष्यतः सतुष्टस्य मे मम अनेहसः दिनानि सन्तु। रघुवीरपादभजने नैव दिनानि गच्छन्त्विति निष्कृष्टोऽर्थः ॥

कङ्कालाभरणीयचापदलनाटंकारभिन्नाम्बरं
शङ्काकृष्टकुठारभृन्मदशिलाटंकायमानौजसम्।
लङ्कानायकवाहिनीचरमहातङ्कावहज्यास्वनं
तं कालाम्बुदमेचकं रघुकुलालंकारदीपं भजे ॥ २६ ॥

कङ्कालाभरणः शिवः तत्संबन्धी यः चापः तस्य दलना खण्डनं तस्य टंकारः तेन भिन्नं अम्बरं यस्य तम्। शङ्कया आकृष्टः समीपमागतः यः कुठारभृत् परशुरामः तस्य मदः गर्वः स एव शिला पाषाणं तस्याः टंका शीलाभेदी कश्चन आयुधविशेषः सैव ओजः यस्य तम्। आतङ्कं वहतीति आतङ्कावहः ज्यायाः मौर्व्याः स्वनः शब्दः यस्य तं प्रकाशकम् ॥

कङ्कालैर्द्विपदां नवैः सुखितवान्कङ्कावलिं कैतव-
न्यङ्कावर्पितशासनो घनघटाशङ्कावहस्तेजसा।
अङ्कारोपितमैथिलीकुचतटालंकारकस्तूरिका-
पङ्कालेपनकौतुकी दिशतु मे लङ्कारिपुर्मङ्गलम् ॥ २७ ॥

द्विपदां शत्रूणां कङ्कालैः अस्थिभिः कङ्कावलिं गृध्रसमूहं सुखितवान् सुखिनं कृतवान्। कैतवन्यङ्कौ मायामृगे मारीचे अर्पितं शासनं शिक्षा येन सः। घनघटा मेघसमूहः। अङ्के उत्सङ्गे आरोपिता प्रापिता या मैथिली तस्याः कुचतटालंकारकस्तूरिकापङ्कालेपने मकरिकापत्रादिनिर्माणे कौतुकी ॥

का शङ्का मम कार्तिकेयवपुषाप्याशंसनीयद्युता-
वेशं कार्मुकमाशुदारितवति क्ष्माशंकरे विक्रमैः।

क्लेशं हन्तुमुपस्थिते रघुपतौ दाशं सखायं गते
कीशं चापि विदेहराजदुहितुः साशं मनः कुर्वति ॥ २८ ॥

कार्तिकेयवपुषापि सुब्रह्मण्यशरीरेणापि आशंसनीया प्रार्थ्यमाना द्युतिर्यस्य सः । ऐशं शैवं कार्मुकं धनुः । क्ष्माशंकरे क्ष्मा भूमिः तस्याः शंकरे मङ्गलकरे उपस्थिते सति समीपस्थिते सति । दाशं गुहं कीशं सुग्रीवमपि सखायं मित्रम् साशं आशासहितम् ॥

कामीहे गतिमित्युदञ्चितभयग्रामीणलङ्कापुरी-
सामीचीन्यहरेषुपावकदलद्वामीमुखाग्निस्मयः ।
आमीलत्कमलोपमाञ्जलिसुरश्चामीकरालंकृतः
स्वामी नः शरणं स एव भुवने भूमीसुतावल्लभः ॥ २९ ॥

उदञ्चितं उत्पन्नं भयं एषां ते ग्रामीणाः लङ्कावासिनः । उदञ्चितभयाः ग्रामीणाः यस्याः सा तादृशी या लङ्कापुरी तस्याः सामीचीन्य सुखस्थितिः तां हरतीति हरः यः इषुः बाणः तस्य पावकेन अग्निना दलत् निरस्तः वामीमुखाग्निः वडवाग्निः तस्य स्मयः अहंकारः यस्य सः ॥

कारागारसमानसंसृतिनिराकाराय सच्चिन्मयं
धीरा यं शरणं व्रजन्ति भुवने नीरागमोहस्मयाः ।
तारादेवरमुख्यवानरपरीवाराय नीराकर-
स्फाराटोपहराय रावणजिते वीराय तस्मै नमः ॥ ३० ॥

कारागारं बन्धागृहं तस्य समाना या संसृतिः संसारः तस्य निराकाराय निवर्तकाय । सच्चिन्मयं सच्चिद्रूपं यं धीराः तीव्रभक्तिमन्तः । नीरागमोहस्मयाः रागमोहगर्वरहिताः । तारादेवरः सुग्रीवः । नीराकरः समुद्रः ॥

किं देवैरितरैः प्रपन्नहरणे संदेहकृद्भिर्नृणां
विन्देयं यदि तान्विमूढ इति मां निन्देयुरार्या न किम् ।
किं देयं किमदेयमित्यविदुषं तं देहिनामिष्टदं
वन्दे कंचन वञ्चनामृगरिपुं मन्देतरश्रेयसे ॥ ३१ ॥

प्रपन्नहरणे शरणागतसंरक्षणे संदेहकृद्भिः इतरैर्देवैः किम् । तान् पूर्वोक्तान् विन्देय यदि शरणं गतो यदि आर्याः पूज्याः मा विमूढ इति न निन्देयुः किम् । निन्देयुरेवेत्यर्थः । किं देयं दातुं योग्यं किं अदेयं इत्यस्मिन्विषये अविदुषं अविद्वांसम् । सकलेष्टदातारमित्यर्थः । वञ्चनामृगः तस्य रिपुम् ॥

कीर्तिर्यस्य निरस्य कुन्दकुटजस्फूर्तिस्मयं रोदसी-

पूर्तिव्यञ्जितवैभवाञ्चति तुलां कार्तिक्युदारेन्दुना ।

मूर्तिश्रीजितवार्मुचा रघुवरेणार्तिर्ह्रियेतामुना

मार्तिक्याः स्फुरणं मतेः प्रदिशता मार्तिप्रसूतिर्मम ॥ ३२ ॥

यस्य रामस्य कीर्तिः यशः कुन्दकुटजस्फूर्तिस्मयं कुन्दस्य कुटजस्य तदाख्यपुष्पविशेषस्य च स्फूर्तिः शोभा तस्याः स्मयं गर्वं रोदसीपूर्तिव्यञ्जितवैभवा सती रोदसी द्यावापृथिव्यौ तत्र व्यञ्जितः वैभवः यस्याः सा तथा सती। सर्वत्र व्याप्ता सतीति तात्पर्यार्थः। कार्तिक्युदारेन्दुना शरच्चन्द्रेण तुलां सादृश्यं अञ्चति प्राप्नोति । मूर्तिश्रीजितवार्मुचा स्वदेहकान्तिजितमेघेन अमुना श्रीरामेण मार्तिक्याः मृत्संबन्धिन्याः । मन्दाया इत्यर्थः । मतेः बुद्धेः स्फुरण उपर्युपरि स्फुरणं प्रदिशता। ददतेत्यर्थः । अमुनेत्यस्य विशेषणमेतत् । मार्तिप्रसूतिः मृतिः मरणं प्रसूतिः जननम् । जननमरणकारिणीत्यर्थः । आर्तिः पीडा ह्रियेत ॥

कुम्भीरप्रमुखाम्बुसत्वनिचितं गम्भीरमुन्मोचना-

रम्भी बाणशतस्य यः खलु पयोधिं भीतिमन्तर्न्यधात् ।

कुम्भीभूस्तुतमाश्रयामि मरुतां तं भीहरं सन्मनः-

कुम्भीशानिशबद्धगारुडमणिस्तम्भीभवन्तं प्रभुम् ॥ ३३ ॥

बाणशतस्य अनेकबाणस्य उन्मोचनारम्भी यः रामं कुम्भीरप्रमुखाम्बुसत्वनिचितं कुम्भीरः नक्रः। 'नक्रस्तु कुम्भीरः' इत्यमरः । सः प्रमुखः आदिः येषां तानि अम्बुसत्वानि तैः निचितं व्याप्तं गम्भीरमगाधं पयोधिं समुद्रं भीतिं भयं अन्तः न्यधात् आदधान । कुम्भीभूः अगस्त्यः सन्मनांस्येव कुम्भीशाः गजश्रेष्ठाः तैरनिशं बद्धो यः गारुडमणिः स इव भवतीति स्तम्भीभवन्तम् । मरुतां देवानाम् ॥

गल्लालम्बितरत्नकुण्डलयुगामुल्लासिहारस्तनीं

फुल्लाशोकदलाधरां हृदयभूभल्लानुकल्पेक्षणाम् ।

संल्लापे रमयन्प्रभुः स जगतामल्लामवन्त्याः सुतां

चिल्लाभाय ममार्य चित्तखुरलीमल्लायमानो भवेत् ॥ ३४ ॥

गल्लयोः गण्डयोः आलम्बितं रत्नकुण्डलयुगं यस्यास्ताम् । हृदयभूः मन्मथः तस्य भल्ली बाणी तयोः अनुकल्पे सदृशे ईक्षणे यस्याः ताम् । अल्लामम्बां अवन्याः सुतां जानकीं रमयन् संतोषयन् चिल्लाभाय ज्ञानलाभाय चित्तखुरली चित्तमेव खुरली बालक्रीडास्थानं तत्र मल्लायमानः वीरो भवेत् ॥

गङ्गीयन्नृपवंशमौक्तिक धनुः शृङ्गीशकल्पं वह-

न्भङ्गीभिस्तिसृभिः समुज्ज्वलतनौ भृङ्गीकुलश्रीमुषि ।

तुङ्गीभूतमुदां दशाननवधात्त्वं गीयमानां मया
संगीतानि निवृत्य दिव्यसुदृशामङ्गीकुरुष्व स्तुतिम् ॥ ३५ ॥

गङ्गीयनृपः गङ्गामात्मन इच्छतीति गङ्गीयन् नृपः भगीरथः स चासौ नृपश्च गङ्गीयनृपः तस्य वंशः तस्य मौक्तिक मुक्ताफलम् । संबोधनमेतत् । शृङ्गिणः पर्वताः तेषां ईशः मेरुः तस्य कल्पं सदृशं धनुः तिसृभिः भङ्गीभिः समुज्ज्वलतनौ भृङ्गीकुलश्रीमुषि भ्रमरकुलवत् श्यामे । एतत्तनाविति अस्य विशेषणम् । वहन्धारयन् । दशाननवधात् तुङ्गीभूतमुदां दिव्यसुदृशां देवस्त्रीणां संगीतानि निवृत्य मया गीयमानां स्तुतिम् ॥

गात्रेषु श्रममग्निमान्द्यमुदरे नेत्रे जडत्वं सह,
श्रोत्रेणादिशती जरा विशति चेत्कोऽत्रेरयेन्मास्त्विति ।
दात्रे यत्तु नमोऽधुनापि कलये स्तोत्रेण वित्ताशया
मैत्रे जन्मजुषे कुले कृतनतिर्नेत्रे तदुज्झाम्यहम् ॥ ३६ ॥

गात्रेषु अवयवेषु श्रमम्, उदरे अग्निमान्द्यं अजीर्णताम्, नेत्रे श्रोत्रेण सह जडत्वं बधिरत्वं चादिशती कुर्वाणा जरा वृद्धत्वं विशति चेत् । अत्रास्मिन्विषये मास्त्विति जरा मा विशत्विति कः ईरयेद्वदेत् । अधुनापि वार्धकेऽपि दात्रे यत्किंचिद्दानकर्त्रे वित्ताशया स्तोत्रेण यन्नमः कलये करोमि तत् नमः । कर्म । मैत्रे कुले जन्मजुषे जाताय तुभ्यं कृतनतिः कृतनमस्कारः नेत्रे जगन्नायकाय उज्झामि त्यजामि ॥

गेया यस्य गुणाः पुनन्ति मनुजान्मायामनुष्यात्मनो
यो यातूनि रणे जघान तरुणीस्तेयानि धीरः शरैः ।
दायादं रघुभूभुजां यमृषयोऽपायार्थिनो जन्मनां
कायानासिकृते स्मरन्ति भुवि नः पायादयं राघवः ॥ ३७ ॥

मायामनुष्यात्मनः मायया रामरूप प्राप्तस्य यस्य गेयाः गुणाः मनुजान् पुनन्ति । धीरः यः तरुणीस्तेयानि स्त्र्यपहर्तॄणि यातूनि रक्षांसि रणे शरैः जघान । रघुभूभुजां रघुवंश्यराजानां दायादं पुत्रं यं रामं जन्मनां अपायार्थिनः जन्मनिवृत्तिकामाः ऋषयः वसिष्ठाद्याः कायानासिकृते जन्मनिवृत्तये भुवि स्मरन्ति । अयं राघवः ॥

ग्रासावस्थितविश्वराक्षसपतिप्रासावलोकोत्थित-
त्रासाधिक्यवशातिनिःसृतगुरुश्वासामरप्रार्थितः ।
व्यासाभिष्टुतवैभवो हरिरिलामासाद्य जातः कुले
भासामीशितुरेव यः स कुशलं मे साधयेद्राघवः ॥ ३८ ॥

ग्रासावस्थिताः लोकभक्षकाः विश्वे अखिलाः राक्षसाः तेषां पतिः रावणः तस्य प्रास

आयुधविशेषः तस्यावलोकः दर्शनम् तेन उत्थितः त्रासः तस्य आधिक्यं तस्य वशाः अतएव अतिनिःसृतः अत्यन्तमुत्पन्नः गुरुश्वासः दीर्घनिःश्वासः येषां ते तैरमरैः प्रार्थितः। व्यासाभिष्टुतवैभवः व्यासेन मुनिना अभिष्टुतं वैभवं यस्य सः तादृशः हरिः इलां भूमिम्। 'इरा भूवाक्सुराप्सु' इत्यमरः। रलयोरभेदः। आसाद्य प्राप्य भासामीशितुः सूर्यस्य कुले सः राघव एव मे कुशलं साधयेत्॥

चर्या यस्य खराहवादिरमरीपर्यायगीता भृशं
धुर्या गायकलोकदुस्त्यजविपन्निर्यापणे केवलम्।
पुर्या किं मरुतां परिक्षयजुषां धुर्यावहन्त्येत्यहं
कुर्यामुत्तरणं त्वमुष्य कथया तर्या भवाम्भोनिधेः॥ ३९॥

यस्य भृशं अमरीपर्यायगीता गायकलोकदुस्त्यजविपन्निर्यापणे गायकलोकस्य गन्धर्वलोकस्य दुस्त्यजा अनिवर्तनीया विपत् तस्याः निर्यापणे निवृत्तौ केवलं मुख्यतया धुर्या धुरंधराः खराहवादिः खरयुद्धादिः चर्या चरित्रम्। विराजते इति शेषः। परिक्षयजुषां क्षयवतां मरुतां देवानां धुर्यावहन्त्या धुर्या भारः तां वहतीति धुर्यावहन्ती तया। देवान्वहन्त्येत्यर्थः। पुर्या पुरेण किम्। न किमपि प्रयोजनम्। इत्यस्मात्कारणात् अमुष्य रामस्य भवाम्भोनिधेः संसारसागरस्य तर्या नावा उत्तरणं कुर्याम्॥

चूलीभूतजटाकलापमिषुधिव्यालीढवामांसकं
कालीयाधिकभीमकार्मुकधरं नालीकरम्येक्षणम्।
कालीरङ्गरणस्थरावणशिरस्तालीफलभ्रंशना-
केलीतर्पितकंकवायसशिवापालीकमेकं भजे॥ ४०॥

चूलीभूतः शिरोलंकारभूतः जटाकलापः जटासमूहः यस्य तम्। इषुध्या तूणेन। 'तूणोपुधी उपासङ्गः' इति रत्नकोशः। व्यालीढः संयुक्तं वामांसः यस्य तम्। कालीयात् सर्पविशेषात् अधिकभीमं अधिकभयंकरं यत् कार्मुकं तस्य धरं तम्। नालीके इव पङ्कजे इव रम्ये मनोज्ञे ईक्षणे नेत्रे यस्य तम्। काल्याः रणकाल्याः रङ्गं आवासस्थानं यद्रणं तत्र तिष्ठति इति रणस्थः यः रावणः तस्य शिरांस्येव तालीफलानि तालफलानि तेषां भ्रंशनाक्रान्तमेव केली तया तर्पिता संतर्पिता कंकवायसशिवाः गृध्रकाकजम्बुकाः तेषां पाली पङ्क्तिः यस्य तमेकं मुख्यम्॥

जन्याभावितभानुसंततिरिलाकन्यामवाप्तुं प्रियां
धुन्याकल्पशिरःशरासदलनो वन्याविहारप्रियः।
मुन्याकाङ्क्षितकर्मकृज्जिनशरोदन्याकृताम्भोनिधिः
जन्याविद्धदशाननो रघुपतिस्तन्यादभीष्टं मम॥ ४१॥

जन्या जन्म तेन भाविता संभाविता भानुसततिः सूर्यसंततिर्येन सः। इलाकन्यां भूसुतां प्रियां पत्नीं अवामुम्। धुनी गङ्गा आकल्पः आभरण यस्य तत् धुन्याकल्पं शिरः यस्य सः धुन्याकल्पशिराः तस्य शरासनं धनुः तत् दलयति खण्डयति इति दलनः। वन्या वनं तत्र विहारप्रियः। मुनिभिः आकाङ्क्षितानि प्रार्थितानि यानि कर्माणि रावणवधादीनि तानि करोतीति कृत् निजशरैः उदन्याकृतः अल्पसरः तदिव कृतः अम्भोनिधिः समुद्रः यस्य सः। जन्यं युद्धम्। 'युद्धमायोधनं जन्यम्' इत्यमरः। तत्र आविद्धः दशाननः येन सः॥

जातो यो मिहिरान्वये नियमिना नीतो मखं रक्षितुं
शातोदर्यपि येन गौतममुनेः पूतोपलत्वं जहौ।
छातोमापतिकार्मुकं सदसि यं सीतोपलेभे पतिं
ना तो राघवतोऽपरं शरणमित्यातोद्यमाघोषये ॥ ४२ ॥

मिहिरान्वये सूर्यवंशे। 'मिहिरारुणपूषण' इत्यमरः। नियमिना विश्वामित्रेण। गौतममुनेः शातोदर्यपि वनिता अहल्यापि येन रामेण पूता सती चरणविन्यसनेन उपलत्व शिलात्वं जहौ। छातं छिन्न उमापतिकार्मुकं शिवधनुः येन तम्। अतः राघवतः अस्मादामात् अपरमितर न शरण इति आतोद्यं भेरीवाद्यं सर्वेषां श्रवणार्थमाघोषये॥

जाने न त्वदुपासनं धरणिभूजाने जपं वा मनो-
र्दीनेनापि कृतो जनेन कुरुते योऽनेन सन्तं तव।
स्थाने किं तदिदं विधीन्यदविधायानेहसो यापनं
हे नेतर्जगतामवाव शुभधीदानेन मां केवलम् ॥ ४३ ॥

हे धरणीभूजाने सीतापते। यः रामषडक्षरी मन्त्रजपः दीनेनापि अशुद्धेनापि जनेन कृतश्चेत् तं जपितारं अनेन सकुरुते तं तव मनोः मन्त्रस्य जपं वा त्वदुपासनं वा न जाने। न जानामीत्यर्थः। विधीन् धर्मशास्त्रोक्तविधीन् तदुक्तकर्माणि अविधाय अनतुष्ठाय अनेहसः दिनस्य यापन प्रापणमिति यत् तत्स्थाने किम्। योग्यं किम्। अनर्हमित्यर्थः। हे नेतः हे जगन्नायक, शुभधीदानेन मां केवलं मुख्यतया अव रक्ष॥

जम्भारिप्रमुखामरेन्द्रमुकुटीसंभाव्यमानाङ्घ्रये
कुम्भाभक्षितिकन्यकाकुचपरीरम्भाधिकार्हंयवे।
दम्भाविष्कृतिदक्षराक्षसरणारम्भातिविक्रान्तदो-
स्तम्भायास्तु ममैष कोसलसुताडिम्भाय सेवाञ्जलिः ॥ ४४ ॥

जम्भारिप्रमुखाः इन्द्रादयः ये अमरेन्द्राः तेषां मुकुट्यः ताभिः सभाव्यमाने पूजिते अङ्घ्री यस्य तस्मै। क्षितिकन्यकाकुचौ सीताकुचौ कुम्भस्याभेव कान्तिरिव आभा ययोः

१. 'अपहाय' इति पाठान्तरम्.

तौ तयोः परीरम्भे आलिङ्गने अधिकं अहंयुः अधिकाग्रहः । 'अहंकारवानहंयुः' इत्यमरः । तस्मै दम्भः गर्वः तस्याविष्कृतिः प्रकाशनं तत्र दक्षाः समर्थाः ये राक्षसाः तैः सह रणारम्भः तत्र अतिविक्रान्तौ अतिविक्रमयुक्तौ दोस्तम्भौ यस्य कोसलसुताडिम्भाय ॥

मैत्रायासुमतां पुलस्त्ययमिनः पौत्राय दत्ताहवो
धात्रा चन्द्रकलाभृता च गमितः स्तोत्रावलीपात्रताम् ।
गात्राणि प्रयतर्षिचित्तकरिणां तोत्रायितान्युद्वह-
न्भ्रात्रा च प्रियया च मे रघुपतिर्यात्रासु संनह्यतु ॥ ४५ ॥

असुमतां प्राणिनां जैत्राय जयिने पुलस्त्ययमिनः पुलस्त्यर्षेः पौत्राय रावणाय दत्ताहवः दत्तसमरः धात्रा ब्रह्मणा चन्द्रकलाभृता च ईश्वरेण च स्तोत्रावलीपात्रतां स्तुत्यतां गमितः प्रापितः प्रयतर्षिचित्तकरिणां परिशुद्धर्षिमनसां तोत्रायितानि गजबन्धनस्तम्भायमानानि गात्राणि उद्वहन् दधानः स रघुपतिः ॥

तन्द्रावर्जितनृत्तगीतमतिभागिन्द्रावरोधाङ्गना-
मन्द्रारब्धविपञ्चिकास्वरझरीसान्द्रावदत्तस्तवम् ।
चन्द्रालिप्तभुजान्तरं स्मरणतोऽघं द्रावयन्तं नृणां
चन्द्रापीडशरासभङ्गचतुरं तं द्रागुपास्ते मनः ॥ ४६ ॥

तन्द्र्या आलस्येन । 'तन्द्री प्रमीला' इत्यमरः । वर्जिते रहिते ये नृत्तगीते तयोः मतिभाजः अत्यासक्ताः याः इन्द्रावरोधाङ्गनाः इन्द्रान्तःपुरस्त्रियः । 'भूभुजामन्तःपुरं स्यादवरोधनम्' इत्यमरः । रम्भाद्याः मन्द्रारब्धः मन्द्रेण स्वरविशेषेण आरब्धः यः विपञ्चिकास्वरः वीणास्वरः । 'वीणा तु वल्लकी । विपञ्ची' इत्यमरः । तस्य झर्या प्रवाहेण सान्द्रावदत्तः अधिकतया कृतः स्तवः स्तोत्रं यस्य तम् । चन्द्रालिप्तभुजान्तरं चन्द्रेण कर्पूरादिविशेषेण । 'चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु' इति मेदिनी । आलिप्तं भुजान्तरं वक्षः यस्य तम् । स्मरणतः स्मृत्या नृणां मनुष्याणां अघं पापम् । 'एनोऽघमंहः' इत्यमरः । द्रावयन्तं निवर्तयन्तम् । चन्द्रापीडशरासभङ्गचतुरं शिवधनुःखण्डनपण्डितं मनः द्राक् झटिति उपास्ते । ममेति शेषः ॥

तं दातारमभीप्सितस्य सहसा वन्दारवे देहिने
भिन्दानं स्मरतामघानि करुणासंदानितालोकनम् ।
मन्दारब्धमहीसुताद्दगलिनीवृन्दानुबन्धस्फुर-
त्कुन्दालीमधुरस्मितास्यकमलं वन्दामहे राघवम् ॥ ४७ ॥

अभीप्सितस्य प्रार्थितस्य वन्दारवे स्तोत्रे । 'वन्दारुरभिवादकम्' इत्यमरः । देहिने प्राणिने सहसा अविलम्बेन दातारम् । स्मरतां अघानि पापानि भिन्दान भेत्तारम् । करुणासंदा-

कृपः उत्पन्नदयावान् यः। जलनिधेः निस्तोयीकरणे जलशून्यताकरणे तेजसा पराक्रमेण अस्तोपमः उपमानहीनः। स्तुतिकृत्सु स्तुतिकारकेषु शस्तोऽपि समर्थोऽपि यं रामं स्तोतुं न पारयति न समर्थो भवति। दुस्तोपस्तधनुःशरे हस्तधृतचापबाणे अस्मिन् भगवति रामे समस्तः भरः भारः न्यस्तः निक्षिप्तः॥

तृष्णा यद्विषयेषु धीविकलतां पुष्णाति धैर्यं च य-
न्मुष्णाति श्रुतिदर्शिते पथि पदं कृष्णामिवान्तं न वा।
उष्णाभीशुकुलाधिपस्य भजने वृष्णापि वन्द्यौजसो
निष्णातस्तु भवन्क्षिपाम्यघगणान्कृष्णानिवाब्दान्मरुत्॥ ९१॥

विषयेषु स्रक्चन्दनवनितादिषु तृष्णा आशा धीविकलतां धीशून्यतां पुष्णाति उत्पादयति आशां धैर्यं च मुष्णाति अपहरतीति यत् तस्मात् श्रुतिदर्शिते वेदोक्ते पथि पदं स्थानं कृष्णामिवान्तं करोमि न वा। 'कृष निष्कर्षे' म्वादिः धातुः। तथापि वृष्णापि इन्द्रेणापि वन्द्यौजसः उष्णाभीशुकुलाधिपस्य सूर्यकुलाधिपस्य रामस्य भजने निष्णातः समर्थः भवन् मरुत् वायुः अब्दानिव मेघानिव अघगणान् पापनिवहान् क्षिपामि प्रेरयामि। 'क्षिप प्रेरणे' तुदादिगणः॥

त्रातारं कमुपैमि कस्य भुवने भूतानुकम्पेति च
ध्यातासु त्रिदशावलीषु न भवत्येतादृगेकोऽपि यत्।
वातापत्यनिवेशितप्रणयिनी दूताधिकारं ततः
सीताविभ्रमदेशिकं मृगयते जातादरं मे मनः॥ ९२॥

भुवने भूमौ कं त्रातारं रक्षितारं उपैमि गच्छामि। कस्य भूतानुकम्पा भूतेषु प्राणिषु अनुकम्पा दया। 'कृपा दयानुकम्पा' इत्यमरः। इति त्रिदशावलीषु त्रिदशानां देवानां आवलीषु समूहेषु ध्यातासु सतीषु एतादृक् एष इव एषः रामः स इव एकोऽपि यत्र भवति ततः वातापत्यनिवेशितप्रणयिनी दूताधिकारं सीताविभ्रमदेशिकं रामं मे मनः जातादरं सन्मृगयते अन्वेषति॥

स्तैमित्यस्पृशि यः स्मृतो हृदि सतां चामित्रषट्कोज्झिते
भूमित्राणकरः शशीव जनितो यो मित्रवंशाब्धिना।
ओमित्याप वनं नियोक्तरि गुरौ सौमित्रिणा सीतया
यो मिथ्यावचनत्वदोषपनुदि तं नौमि त्रिलोकीपतिम्॥ ९३॥

यः रामः अमित्रषट्कोज्झिते कामक्रोधादिषड्रिपुरहिते स्तैमित्यस्पृशि स्तिमितस्य भावः स्तैमित्यं निश्चलता तद्वति। निश्चले इत्यर्थः। सतां हृदि स्मृतः भूमित्राणकरः शशीव यः मित्रवंशाब्धिना सूर्यवंशसमुद्रेण जनितः। यः मिथ्यावचनत्वदोषपनुदि अखलमौरौ गुरौ पितरि नियोक्तरि सति वनं गच्छेति प्रेरके सति ओं इति। 'ओमित्यङ्गीकारे'। अस्त्विति

नितालोकनं करुणापूरभरितालोकनाम् । मन्दाक्ष्यमहीसुताद्यगलिनीवृन्दानुबन्धस्फुरत्कुन्दालीमधुरस्मितास्यकमलं मन्दाक्ष्याः मन्दप्रवृत्ताः भूसुता तस्याः इव एव अलिन्यः भ्रमराङ्गनाः तासां वृन्दं समूहः तस्य अनुबन्धः संबन्धः तेन स्फुरन्त्यः प्रकाशमानाः कुन्दाल्यः लक्षणया कुन्दपुष्पसदृशदन्तावल्यः ताभिः मधुरं स्मितं प्रसन्नं आस्यकमलं यस्य तं राघवं वन्दामहे ॥

तारुण्येन महीसुताकुचतटे चारुण्युदीतस्पृहो
दारुण्यङ्घ्रिसमाश्रिते विभवकृत्कारुण्यवान्पातु नः ।
आरुद्रादवलोकितो दिवि सुरैर्भीरुद्रवद्राक्षसो
भीरुद्रावणयौवतो युधि घनश्रीरुद्रवज्ज्यो विभुः ॥ ४८ ॥

तारुण्येन यौवनेन चारुणि मनोज्ञे महीसुताकुचतटे सीताकुचतटे उदीतस्पृहः उदीता उत्पन्ना स्पृहा यस्य सः । अङ्घ्रिसमाश्रिते दारुणि पादुकायां विभवकृत् महदैश्वर्यकृत् आरुद्रान् रुद्रमभिव्याप्य दिव्याकाशे सुरैः देवैः अवलोकितः वीक्षितः भीरुद्रवद्राक्षसः भीत्या भीताः द्रवन्तः धावमानाः राक्षसाः यस्मात्सः । भीरुद्रावणयौवतः भिया रोदितीति भीरुत् युवतीनां समूहः यौवतं भीरुत् रावणयौवतं यस्य सः । घनश्रीः घनस्य श्रीः शोभेव श्रीर्यस्य सः युधि उद्रवज्ज्यः उत् रवती अधिकशब्दायमाना ज्या मौर्वी यस्य सः ॥

तुल्या यस्य न सन्ति चापकुशलावल्यामिलामण्डले
कल्यासङ्गमुषा यदङ्घ्रिरजसाहल्या पवित्रीकृता ।
कुल्यावज्जलधिं बबन्ध किल यो बल्याशरच्छित्तये
कल्याणाय स मेऽस्तु साशुगधनुर्वल्ल्या विराजत्करः ॥ ४९ ॥

इलामण्डले भूमण्डले । चापकुशलावल्यां धानुष्कसमूहे तुल्याः यस्य न सन्ति । कल्यासङ्गमुषा कल्यं पापं तस्य आसङ्गः संबन्धः तं मुष्णातीति मुषा यदङ्घ्रिरजसा यच्चरणपांसुना अहल्या पवित्रीकृता परिशुद्धीकृता । यः रामः बल्याशरच्छित्तये बलिनः बलिष्ठाः ये आशराः राक्षसाः तेषां च्छित्तिः छेदः तस्मै जलधिं समुद्रं कुल्यावत् अल्पसरिद्वत् बबन्ध । साशुगधनुर्वल्ल्या सबाणधनुर्लतया विराजत्करः विराजितहस्तः सः रामः मे कल्याणाय अस्तु ॥

त्रस्तोपागतलोकरक्षणविधावस्तोकमुद्यत्कृपो
निस्तीर्यीकरणे च यो जलनिधेरस्तोपमस्तेजसा ।
शस्तोऽपि स्तुतिकृत्सु पारयति यं न स्तोतुमस्मिन्मया
हस्तोपात्तधनुःशरे भगवति न्यस्तोऽखिलोऽयं भरः ॥ ५० ॥

त्रस्तः भीतः उपागतः समीपं प्राप्तः यः लोकः तस्य रक्षणविधौ अस्तोकं अधिकं उद्य-

क्रपः उत्पन्नदयावान् यः। जलनिधेः निस्तोयीकरणे जलशून्यताकरणे तेजसा पराक्रमेण अस्तोपमः उपमानहीनः। स्तुतिकृत्सु स्तुतिकारकेषु अस्तोऽपि समर्थोऽपि यं रामं स्तोतुं न पारयति न समर्थो भवति। हस्तोपात्तधनुःशरे हस्तधृतचापबाणे अस्मिन् भगवति रामे समस्तः भरः भारः न्यस्तः निक्षिप्तः॥

तृष्णा यद्विषयेषु धीविकलतां पुष्णाति धैर्यं च य-
न्मुष्णाति श्रुतिदर्शिते पथि पदं कृष्णामिवान्तं न वा।
उष्णाभीशुकुलाधिपस्य भजने वृष्णापि वन्द्यौजसो
निष्णातस्तु भवन्क्षिपाम्यघगणान्कृष्णानिवाब्दान्मरुत् ॥ ९१ ॥

विषयेषु स्रक्चन्दनवनितादिषु तृष्णा आशा धीविकलतां धीशून्यतां पुष्णाति उत्पादयति आशां धैर्यं च मुष्णाति अपहरतीति यत् तस्मात् श्रुतिदर्शिते वेदोक्ते पथि पदं स्थानं कृष्णामिवान्तं करोमि न वा। 'कृष निष्कर्षे' कादिः धातुः। तथापि वृष्णापि इन्द्रेणापि वन्द्यौजसः उष्णाभीशुकुलाधिपस्य सूर्यकुलाधिपस्य रामस्य भजने निष्णातः समर्थः भवन् मरुत् वायुः अब्दानिव मेघानिव अघगणान् पापनिवहान् क्षिपामि प्रेरयामि। 'क्षिप प्रेरणे' शविकरणः॥

त्रातारं कमुपैमि कस्य भुवने भूतानुकम्पेति च
ध्यातासु त्रिदशावलीषु न भवत्येतादृगेकोऽपि यत्।
वातापत्यनिवेशितप्रणयिनी दूताधिकारं ततः
सीताविभ्रमदेशिकं मृगयते जातादरं मे मनः ॥ ९२ ॥

भुवने भूमौ कं त्रातारं रक्षितारं उपैमि गच्छामि। कस्य भूतानुकम्पा भूतेषु प्राणिषु अनुकम्पा दया। 'कृपा दयानुकम्पा' इत्यमरः। इति त्रिदशावलीषु त्रिदशानां देवानां आवलीषु समूहेषु ध्यातासु सतीषु एतादृक् एष इव एषः रामः स इव एकोऽपि यत्र भवति ततः वातापत्यनिवेशितप्रणयिनी दूताधिकारं सीताविभ्रमदेशिकं रामं मे मनः जातादरं सन्मृगयते अन्वेषयति॥

स्तैमित्यस्पृशि यः स्मृतो हृदि सतां चामित्रषट्कोज्झिते
भूमित्राणकरः शशीव जनितो यो मित्रवंशाब्धिना।
ओमित्याप वनं नियोक्तरि गुरौ सौमित्रिणा सीतया
यो मिथ्यावचनत्वदोषनुदि तं नौमि त्रिलोकीपतिम् ॥ ९३ ॥

यः रामः अमित्रषट्कोज्झिते कामक्रोधादिषड्रिपुरहिते स्तैमित्यस्पृशि स्तिमितस्य भावः स्तैमित्यं निश्चलता तद्वति। निश्चले इत्यर्थः। सतां हृदि स्मृतः भूमित्राणकरः शशीव यः मित्रवंशाब्धिना सूर्यवंशसमुद्रेण जनितः। यः मिथ्यावचनत्वदोषनुदि असत्यभीरौ गुरौ पितरि नियोक्तरि सति वनं गच्छेति प्रेरके सति ओं इति। 'ओमित्यङ्गीकारे'। अस्त्विति

वनं सौमित्रिणा सुमित्रायाः अपत्येन लक्ष्मणेन सीतया च सह आप प्राप । तं त्रिलोकीपतिं रामं नौमि नमामि ॥

दत्तातङ्कमुदन्वतेऽस्त्रशिखिना वित्ताधिराजानुजं
कृत्तायस्ततनुं विधाय मरुतां हृत्तापनिर्वापकम् ।
मत्तानेकपचङ्क्रमं प्रणमदायत्तानुकम्पारसं
चित्ताकर्षमृपिव्रजस्य कलये तत्तादृशं राघवम् ॥ ९४ ॥

उदन्वते समुद्राय अस्त्रशिखिना बाणाग्निना दत्तातङ्कं दत्तः कृतः आतङ्कः संतापः येन तम् । वित्ताधिराजानुजं कुबेरानुजं रावणं कृत्तायस्ततनुं खण्डितविस्तृतशरीरं विधाय । रावणं हत्वेत्यर्थः । मरुतां देवानां हृत्तापनिर्वापकं हृत्संतापनिवर्तकं मत्तानेकपचङ्क्रमं अनेकपः गजः । 'हस्ती द्विरदोऽनेकपो द्विपः' इत्यमरः । मत्तगजतुल्यगमनं प्रणमदायत्तानुकम्पारसं नमत्सु कृपावन्तम् । ऋषिव्रजस्य चित्ताकर्षं मुनिहृदयाकर्षकं तत्तादृशं सः स इव अनन्यसदृशं राघवं कलये भजामि ॥

दानीयो रचितः श्रियामपि रिपोरानीय येनानुजः
पानीयाकरमेव योऽस्त्रशिखिनातानीदपोढस्मयम् ।
जानीते विभवं च यस्य स वसन्मौनी वटद्रोस्तले
यानीमं शरणं मनोविहरणस्थानीकृतं सीतया ॥ ९५ ॥

येन रामेण रिपोः रावणस्य अनुजोऽपि विभीषणोऽपि आनीय स्वनिकटं प्रापय्य श्रियां लङ्काराज्यश्रियां दानार्हः दानीयः रचितः कृतः । पानीयाकरं समुद्रं यः अस्त्रशिखिना अपोढस्मयं वीतगर्वं अतानीत् । यस्य विभवं माहात्म्यं वटद्रोस्तले वसन् मौनी दक्षिणामूर्तिधरः सः शिवः जानीते । सीतया जानक्या मनोविहरणस्थानीकृतं इमं शरणं यानि गच्छानि ॥

दूरादुज्झितसद्विधीनपि जनानाराधने स्वे परा-
न्धीरासाद्यपदं नयन्तमवनीभारापनोदक्षमम् ।
धारावाहिकवित्वहेतुभजनं राराज्यमानं श्रिया
श्रीरामायणनायकं सुकृतिनी धीराविशत्येव मे ॥ ९६ ॥

दूरात् उज्झितसद्विधीनपि कर्मभ्रष्टानपि आराधने भगवदाराधने तत्परान् उद्युक्तान् धीरासाद्यपदं धीरैः जीवन्मुक्तैः आसाद्यं प्राप्यं यत्पदं तन्नयन्तं अवनीभारापनोदक्षमं धारावाहिकवित्वहेतुभजनं श्रिया पराज्यमानं श्रीरामायणनायकं राममेव मे सुकृतिनी धीः आविशति ॥

नाहं पुत्रकलत्रमित्रविषये स्नेहं विहातुं क्षमः
साहंकारमिदं मनश्च न कृतोत्साहं गुरूपासने ।

देहं नश्वरमन्तकस्य न दया हा हन्त तेनोज्झितुं
मोहं नौमि रुचा विडम्बितपयोवाहं रघूणां पतिम् ॥ ९७ ॥

अहं पुत्रकलत्रमित्रविषये स्नेहं विहातुं न क्षमः । इदं नश्व साहंकारं सगर्वम्, गुरूपासने न कृतोत्साहं च देहं नश्वरं अन्तकस्य दया न । तेन मोहं उज्झितुं त्यक्तुं रुचा कान्त्या विडम्बितपयोवाहं तिरस्कृतमेघं रघूणां पतिं रामं नौमि ॥

न श्वानो भुवने भवन्ति सकृदप्यश्वायमाना यथा
विश्वा निर्जरजातयोऽपि च तथा न श्वायिता राघवात् ।
पश्चादिद्रुहिणान्तसर्गरसिके विश्वाधिवासे ततो
विश्वामित्रमखारिवैरिणि वयं विश्वासिनः केवलम् ॥ ९८ ॥

भुवने श्वानः कुकुराः सकृदपि एकदापि अश्वायमानाः अश्व इव आचरन्तीति तथोक्ताः यथा न भवन्ति तथा विश्वाः समस्ताः निर्जरजातयोऽपि देवाः राघवात् न श्वायिताः न वृद्धियुक्ताः । श्विधातुः वृद्ध्यर्थकः । ततः पश्चादिद्रुहिणान्तसर्गरसिके विश्वाधिवासे विश्वेषां समस्तानां अधिवासे वासनिलये विश्वामित्रमखारिवैरिणि वयं केवलं विश्वासिनः ॥

निर्वाणं गमिते शरै रणभुवि स्वर्वायुधारिव्रजे
सर्वासामजनिष्ट यः स्तुतिपदं स्वर्वारवामभ्रुवाम् ।
गुर्वादेशगृहीतकाननगतिर्दुर्वारयादोधिभू-
गुर्वापोहनसाहसी स दुरितं निर्वासयेन्मे विभुः ॥ ९९ ॥

यः रामं रणभुवि स्वर्वायुधारिव्रजे स्वरः । 'वज्र शतकोटिः स्वरुः' इत्यमरः । स्वर्वायुधः इन्द्रः तस्यारयः असुराः तेषां व्रजे समूहे निर्वाणं क्षयं शरैः गमिते प्रापिते सति सर्वासां स्वर्वारवामभ्रुवां रम्भादीनां स्तुतिपदं अजनिष्ट । गुर्वादेशगृहीतकाननगतिः पितृशासनप्रासारण्यः दुर्वारयादोधिभूगर्वापोहनसाहसी अतिदुःसहसमुद्रगर्वभङ्गसाहसी सः विभुः श्रीरामः मे दुरितं निर्वासयेत् निवर्तयेत् । प्रार्थनायां लिङ् ॥

नीलाम्भोदनिभं युगान्तविहरत्कालान्तकभ्रूलता-
लीलाबद्धधनुरीरितेषुदलितस्थूलाङ्गलङ्काधिपम् ।
फालान्तश्रमशीकरं युधि चलद्वालाञ्चलोद्धोपक-
द्रोलाङ्गूलयुतं भजामि विजयश्रीलाञ्छितं राघवम् ॥ ६० ॥

नीलाम्भोदनिभं युगान्तविहरत्कालान्तकभ्रूलतालीलाबद्धधनुरीरितेषुदलितस्थूलाङ्गलङ्काधिपं युगान्ते प्रलयकाले विहरन् यः कालान्तकः शिवः तस्य भ्रूलता तस्य लीला यस्य धनुषः तेनेरिताः इषवः तैः दलितः स्थूलाङ्गलङ्काधिपः यस्य तम् । युधि फालान्तश्रम-

शीकरं चलद्वालाश्चलोद्योपकृत् गोलाङ्गूलयुतं चलन्ति वालाचलानि अमाणि येषां ते उ-द्योपं कुर्वन्तीति उद्योपकृतः एवंभूतैः गोलाङ्गूलैः वानरविशेषैः युतं विजयश्रीलाञ्छितं विजयश्रिया राजलक्ष्म्या लाञ्छितं चिह्नितं राघवं भजामि ॥

नैल्यं यद्वपुषः पयोदरुचिभिस्तौल्यं समालम्बते
मूल्यं यस्य कथा करोति कलुषं माल्यं नदीवैश्वरम् ।
लौल्यं मे विषयं निवार्य करुणाशाल्यन्तरङ्गो नृणां
पाल्यं मामपि पश्यतु प्रणमतां वाल्यन्तको यः प्रभुः ॥ ६१ ॥

यद्वपुषः नैल्यं नीलिमा पयोदरुचिभिः मेघकान्तिभिः तौल्यं सादृश्यं समालम्बते आ-श्रयति । यस्य कथा कलुषं पापं ऐश्वरं माल्यं नदीव मूल्यं मूल्येन वध्यं मूल्यम् । 'नौवयो-धर्म–' इत्यादिना मूलशब्दाद्यत्प्रत्ययः । मे लौल्यम् । स्वार्थे ष्यङ्प्रत्ययः । विषयं विषया-काङ्क्षिणं चक्षुरादि निवार्य प्रणमतां नृणां नृविषये । विषयत्वं षष्ठ्यर्थः । करुणाशाल्यन्तरङ्गः दयालुः यः वाल्यन्तकः वालिरिपुः सः प्रभुः मामपि पाल्यं पालितु योग्यं पाल्यं रक्षणीय पश्यतु । दृशधातोः लोट् । प्रथमपुरुषैकवचनं प्रार्थनायामर्थे ॥

पश्यालीकशरासभञ्जनदशावश्याभिनन्द्यौजसं
पश्यामच्छलभक्तितस्तनुभृतामश्यानपुण्यात्मनाम् ।
शश्याभाननमण्डलां धृतिजितावश्यायशैलां कदा
पश्यामि क्षितिजाकटाक्षपटलीदृश्याकृतिं देवताम् ॥ ६२ ॥

पश्यति लोकानिति पश्यं अलीकं ललाट तत्रस्थं चक्षुरवितास्यात् अलीके पश्यम-लीकं यस्य सः ललाटाक्षः शिवः तस्य शरासं धनुः तस्य भञ्जनं खण्डनं तस्य दशा तया अवश्यं अभिनन्द्यं ओजः तेजः । 'ओजो दीप्तिप्रकाशयोः । अवष्टम्भो बले धातुतेजसि' इति हैमः । यस्य ताम् । अश्यानपुण्यात्मनां अक्षय्यपुण्यशालिनां तनुभृतां अच्छलभक्तितः निष्कपटभक्त्या पश्यां दर्शनीयां शश्याभाननमण्डलां चन्द्रकान्तिसमानमुखमण्डलां धृति-जितावश्यायशैलां धैर्यजितहिमवत्पर्वतां क्षितिजाकटाक्षपटलीदृश्याकृतिं सीतावीक्षणवी-क्षणीयमूर्तिं तां देवतां कदा पश्यामि ॥

पाकोऽभूदजनन्दनस्य भुवि यः काकोदरेशेशयो
लोकोपद्रवशान्तये दिविपदामेको जगन्नायकः ।
स्तोकोदञ्चितहासरश्मिविलसद्राकोडुराजाननं
शोकोपक्षतये भजामि तमहं श्रीकोशलाधीश्वरम् ॥ ६३ ॥

काकोदरेशेशयः फणीशेशयः । 'काकोदरः फणी' इत्यमरः । शेषशायी एकः मुख्यः जगन्नायकः यः विष्णुः दिविषदां देवानां उपद्रवशान्तये अजनन्दनस्य दशरथस्य पाकः

बालः। 'पोतः पाकोऽर्भकः' इत्यमरः। भुवि अभूत्। स्तोकोदञ्चितहासरश्मिविलसद्राकोडुराजाननं किंचिदुत्पन्नहासकान्तिराजमानपूर्णचन्द्रसदृशमुखं तं कोशलाधीश्वरं रामं अहं शोकोपक्षतये दुःखनिवृत्तये भजामि॥

पूर्वास्तव्यवधूदृगुत्पलवनीचार्वाकृतीन्दूदयं
वार्वाहध्वनिदायिनं च धनुषे शार्वाय भङ्गक्षणे।
गीर्वाणारिचमूदधेरतितरामौर्वायमाणं रणे
पूर्वाराधितमाश्रये रघुपतिं दूर्वादलश्यामलम्॥ ६४॥

पूर्वास्तव्यवधूदृगुत्पलवनीचार्वाकृतीन्दूदयं पौरनारीनेत्रोत्पलवनसंतोषकरातिमनोज्ञचन्द्रसदृशं भङ्गक्षणे शार्वाय शांकराय धनुषे वार्वाहध्वनिदायिनं वार्वाहः मेघः रणे गीर्वाणारिचमूदधेः राक्षससैन्यसमुद्रस्य और्वायमाणं और्वः वडवाग्निः। 'और्वस्तु वाडवो वडवानलः' इत्यमरः। पूर्वाराधितं दूर्वादलश्यामलम्। 'दूर्वा तु शतपर्विका' इत्यमरः। दूर्वायाः दल इव श्यामलं रघुपतिमाश्रये॥

पेटी विक्रममौक्तिकस्य सुमनोवाटी मुनीन्द्रालिनां
शाटीभावितवल्कला धृतजटाजूटीभवत्कुन्तला।
चेटीभूतजगद्दशाननशिरःपाटीपुरुर्वीसुता-
पाटीराङ्कभुजान्तरा मम मनस्याटीकते भावना॥ ६५॥

विक्रममौक्तिकस्य पेटी। स्थानमित्यर्थः। मुनीन्द्रालिनां ऋषिश्रेष्ठभ्रमराणां सुमनोवाटी उद्यानम्। 'वाटी वास्तौ गृहोद्यानकट्योः' इति हैमः। शाटीभावितवल्कलधारिणी धृतजटाजूटीभवत्कुन्तला जटाधारिणी चेटीभूतजगद्दशाननशिरःपाटीपुः चेटीभूतं भृत्यभूतं जगत् यस्य सः तादृशदशाननस्य रावणस्य शिरःपाटिनः इषवः बाणाः यस्य सः उर्वीसुतापाटीराङ्कभुजान्तरा सीताचन्दनचर्चितवक्षाः तादृशी भावना रामविषयभावना मम मनसि आटीकते आगच्छति॥

प्रालेयांशुनिभाननं सुरतरोर्मूलेस्थितं सानुजं
शीलेयं हृदि जानकीसहचरं काले यदि त्वन्तिमे।
फालेषु भ्रमितभ्रुवो यमभटाः कौलेयकैर्दारुणै-
रालेख्यापि न शक्नुयुर्जनयितुं भीलेशमप्येव मे॥ ६६॥

प्रालेयांशुनिभाननं चन्द्रनिभाननं सुरतरोः कल्पवृक्षस्य मूले स्थितं सानुजं जानकीसहचरं अन्तिमे काले मरणकाले हृदि शीलेयं यदि फालेषु भ्रमितभ्रुवः यमभटाः दारुणैः कौलेयकैः श्वभिः। 'कौलेयकः सारमेयः' इत्यमरः। आलेख्यापि [जिह्वाभिः] मे भीलेशमपि जनयितुं न शक्नुयुः। न समर्था इत्यर्थः॥

प्रासाय प्रयतेत चेद्गिरि तदा का सारवत्ता कवे-
र्हासायैव तु सा भवेन्मतिमतामासादिता चेत्पुरः।
त्रासादेव विना तथा विरचिता मे साहितिः प्रासभा-
ग्भासा निर्जितमेघ राघव कृपामासारयास्याः श्रुतौ ॥ ६७ ॥

प्रासाय प्रयतेत चेत् यत्नः कृतः चेत् तदा कवेः गिरि वाचि का सारवत्ता सारता। नास्तीत्यर्थः। किं च प्रासवद्धसाहितिः मतिमतां पुरः आसादिता प्राप्ता चेत् भृशं हासायैव भवेत्। त्रासादेव विना भयं विना तथा मे साहितिः प्रासभाक् प्रासवद्धा विरचिता भासा निर्जितमेघ हे राघव, अस्याः श्रुतौ श्रवणकाले कृपां आसारय वर्षय ॥

प्राजापत्यचरुप्रक्लृप्तजननः क्ष्माजामवाप्य प्रिया-
माजावुत्कमपि क्षणेन विदधे यो जामदग्न्यं जितम्।
आजान्वायतबाहुरन्तिकमहीभाजानुजेनावृतः
पूजाकर्मफलं सतां मनसि मे राजा रघूणां वसेत् ॥ ६८ ॥

यः प्राजापत्यचरुप्रक्लृप्तजननः ब्रह्मप्रेषितदिव्यपायससंभूतः क्ष्माजां सीतां प्रियां पत्नीं प्राप्य आजौ युद्धे उत्कं सोत्कण्ठं अपि जामदग्न्यं परशुरामं जितं विदधे। आजान्वायतबाहुः अतिदीर्घबाहुः अन्तिकमहीभाजा समीपस्थितेन अनुजेन लक्ष्मणेन आवृतः सतां पूजाकर्मफलं रघूणां राजा स रामः मे मनसि वसेत् ॥

बन्धा सेतुपथस्य सैन्यगतये सिन्धावुदारोर्मिभी
रुन्धाने शरचापशोभितकरः स्कन्धावसक्तेषुधिः।
गन्धानेकपचङ्क्रमो भुवि कृतां संधामवन्ध्यां वह-
न्निन्धामात्मनि सोऽवतीर्य सुचिरं तं धारयत्वेष मे ॥ ६९ ॥

उदारोर्मिभिः रुन्धाने। गतिमिति शेषः। सिन्धौ सैन्यगतये सेतुपथस्य सेतुमार्गस्य बन्धा निर्माता शरचापशोभितकरः स्कन्धावसक्तेषुधिः गन्धानेकपचङ्क्रमः मत्तगजगमनः भुवि कृतां संधां प्रतिज्ञां अवन्ध्यां सफलां वहन् स रामः मे आत्मनि मनसि अवतीर्य इन्धां दीप्यताम्। 'ञि इन्धी दीप्तौ'। एषः आत्मा त धारयतु ॥

बालोऽप्यध्वरगुप्तये निशिचरानालोप्य यश्चित्रकृ-
ल्लीलोऽभ्यर्णगतानृपीन्निजतनुश्रीलोभिचित्तान्व्यधात्।
कालोद्यत्कमलेक्षणो भवदवज्वालोत्थसंतापहृ-
त्त्रैलोक्यप्रभुरेष भूपकुलभूरालोक्यते मे हृदि ॥ ७० ॥

यः बालोऽपि अध्वरगुप्तये विश्वामित्रयागत्राणार्थं निशिचरान् मारीचसुबाहुप्रमुखान्

आलोप्य नाशयित्वा चित्रकल्लीलः सन् अभ्यर्णगतान् समीपस्थान् कपीन् निजतनुश्रीलोभिचित्तान् व्यधात् । कालोयत्कमलेक्षणः प्रातःकालविकसितारविन्दनेत्रः भवद्दवज्ज्वालोत्थसंतापहृत् त्रैलोक्यप्रभुः पूपकुलभूः सूर्यवंशोत्पन्नः एषः रामः मे हृदि आलोक्यते ॥

भक्तं कन्दफलादिरत्नमकुटीरिक्तं जटालं शिरः
शक्तं नाम विशुद्धये शरधनुर्युक्तं च पाणिद्वयम् ।
रक्तं नेत्रयुगाञ्चलं निखिलमप्युक्तं त्विदं लक्षणं
व्यक्तं मत्कुलदैवतस्य भुवने नक्तंचरद्रोहिणः ॥ ७१ ॥

मत्कुलदैवतस्य रामस्य नक्तंचरद्रोहिणः भक्तं अन्नं कन्दफलादिरत्नमकुटीरिक्तं शिरः जटालं जटाभरितं नाम अभिधा विशुद्धये [स्मर्तॄणां] विशुद्धये शक्तं पाणिद्वयं च शरधनुर्युक्तं नेत्रयुगाञ्चलं रक्तं निखिलं इदं उक्तं लक्षणं भुवने व्यक्तम् ॥

भिन्तामन्तरिदं निरन्तरमियं चिन्ता वृथा चेतसः
संतापं च तनोतु मुञ्चतु मुदं किं तावता मे मनः ।
संतानद्रुममीप्सितार्थघटने यन्तारमम्भोनिधे-
र्हन्तारं दशकन्धरस्य भजते तं ताटकारिं यतः ॥ ७२ ॥

अन्तः अन्तःकरणं भिन्तां भेदयतु इयं चिन्ता निरन्तरं सर्वदा । वृथा चेतसः संतापं च तनोतु । मे मनः मुदं मुञ्चतु तावता किम् । न किमपीत्यर्थः । यतः ईप्सितार्थघटने संतानद्रुमं अम्भोनिधेः यन्तारं दशकन्धरस्य हन्तारं तं ताटकारिं भजते ॥

मित्रं यस्य च चित्रभानुतनयः पत्रं च शत्रुंजयं
पुत्रं चाह जनः कुशं लवमपि क्षत्रं च जात्यञ्चितम्[1] ।
सत्रं त्राणपदं च कस्यचिदृषेश्छत्रं तदेकं सितं
चित्रं धन्व च दापितं जितवता वृत्रं स पातु प्रभुः ॥ ७३ ॥

यस्य चित्रभानुतनयः सुग्रीवः मित्रम् । पत्रं च वाहनं च शत्रुंजयं गरुडः । 'पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणोः' इति विश्वः । पुत्रं कुशं लवमिति आह (लोके) क्षत्रं जात्यञ्चितम् । कस्यचिदृषेः विश्वामित्रस्य सत्रं यागः त्राणपदं छत्रं तत् एकं प्रसिद्धं सितं यस्मै वृत्रं तदाख्यमसुरं जितवता इन्द्रेण । चित्रं शत्रुसंहारक्षमं धन्व च धनुश्च दापितं दत्तं सः प्रभुः पातु ॥

यद्रागस्य पदं विदेहतनया रुद्रायुधध्वंसना-
दुद्रावं विरचय्य येन पिदधे छिद्राणि या रोदसोः ।
भद्रायास्त्वरुणान्वयार्णवतमोदुद्रावणे सा रणे
निद्रामक्षयिणीं समर्पितवती मुद्रा खरद्रोहिणी ॥ ७४ ॥

---

1. 'जात्याञ्चितम्' इति पाठः.

- येन उद्रावेण अधिकशब्देन या रोदसोः द्यावापृथिव्योः छिद्राणि पिदधे तादृशं उद्रावं रुद्रायुधध्वंसनात् हरचापभञ्जनात् विरचय्य या मुद्रा रोदसोः द्यावापृथिव्योः छिद्राणि पिदधे यद्रागस विदेहतनया पदं अरुणान्वयार्णवतमोनुत् तमोनुत् चन्द्रः रणे रावणे अक्षयिणीं निद्रां दीर्घनिद्रां समर्पितवती खरद्रोहिणी सा मुद्रा भद्राय अस्तु ॥

यन्मातुर्जठरेऽन्वभावि नरके यन्मानवैर्दुःसहे-
ऽप्युन्मादादिव मौढ्यभाजि न सकृत्तन्मानसे चिन्त्यते।
जन्मासुव्यजनोदितं व्यसनितां सन्मानितोक्त्या विदं-
स्त्वन्माहात्म्यमवेत्य राम दुरितच्छिन्मादृशां त्वां भजे ॥ ७५ ॥

मानवैः दुःसहे नरके नरकप्राये मातुः जठरे यद्दुःखं अन्वभावि अनुभूतं [मया] तद्दुःखं उन्मादादिव वैचित्यादिव मौढ्यभाजि मानसे सकृत्तचिन्त्यते जन्मात्यन्तसुदुःसहां जन्मनि अत्यन्तसुदुःसहां व्यसनितां सन्मानितोक्त्या विदन् सद्भिर्मानिताः सन्मानिताः महान्तः तेषां उक्त्या जानन् मादृशां त्वन्माहात्म्यं दुरितच्छित् दुरितनिवर्तकं इति अवेत्य त्वां भजे॥

यास्तेजः कथिताध्वयो दिनकरश्रीस्तेयकेलीभृत-
स्त्रीस्तेपुः किल रक्षसामसुषु चापास्तेषु लङ्कारणे।
आस्तेनापि रथेन दुर्लभजवाः प्राप्तेः प्रियस्य द्विप-
स्तास्ते तावदिषू रघूद्वह ममोपास्ते मनः श्रेयसे ॥ ७६ ॥

याः इषवः तेजः कथिताध्वयः दिनकरश्रीस्तेयकेलीभृतः लङ्कारणे रक्षसां असुषु अपास्तेषु स्त्रीः रक्षस्त्रीः तेपुः तासां तापं अकुर्वन् आः इत्याश्चर्ये तेनापि प्रसिद्धवेगशालिनापि रथेन गरुडेन दुर्लभजवाः प्राप्तेः प्रियस्य प्राप्तिरिति कंसभार्यो तस्याः प्रियस्य कंसस्य ते तव ताः पूर्वोक्तविशेषेण विशिष्टाः इषूः तावत्प्रथमतः मम मनः श्रेयसे उपास्ते ॥

ये वेदैर्विदुरस्थिराणि भुवनान्यावेधसो विष्टपा-
त्ते वेगेन तरन्ति यस्य कथया नावेव सिन्धुं भवम्।
धावेयुर्युधि यस्य कार्मुकगुणारावेण दूरेऽरयो
भावेनालघुभक्तिना रघुभुवां सेवे तमेवेश्वरम् ॥ ७७ ॥

ये वेदैः आवेधसः विष्टपात् आब्रह्मलोकभुवनानि अस्थिराणीति विदुः ते वेगेन यस्य कथया सिन्धुं समुद्रं नावेव भवं संसारं तरन्ति। यस्य कार्मुकगुणारावेणारवेण अरयः युधि धावेयुः तं रघुभुवां राघवाणां ईश्वरं अलघुभक्तिना भावेन सेवे ॥

योऽयानि सरतामयानि युधि येनायानि लङ्केश्वर-
श्लाघातत्परतां नयन्ति यशसामोघा यदीया जगत्।

मोघादन्यमियुं कृतार्णवमदव्याघातमाविभ्रतं

मेघाभं तमहं भजे परिवृढं वैखानसानां प्रियम् ॥ ७८ ॥

यः स्मरतां अघानि पापानि अघानि हतवान्। युधि येन लङ्केश्वरः अघानि हतः। यदीयाः यशसां ओघाः जगत् श्लाघातत्परतां नयन्ति । कृतार्णवमदव्याघातं कृतसमुद्रमदभङ्गं मोघादन्यं अमोघं इयुं आविभ्रतं मेघाभं वैखानसानां प्रियं परिवृढं प्रभुं भजे ॥

रक्षत्वक्षयमङ्गलप्रदपदस्त्र्यक्षप्रसादोन्मिष-

द्रक्षःश्रीवृतपङ्क्तिकंधरभुजावृक्षच्छिदापण्डितः।

अक्षय्यप्रबलप्रतापसचिवानृक्षप्लवंगान्नय-

न्नक्षत्रेशसदृक्षचारुवदनः स क्षत्रियग्रामणीः ॥ ७९॥

अक्षयमङ्गलप्रदपदः अक्षयमङ्गलं मोक्षः। तथाक्षप्रसादोन्मिषद्रक्षःश्रीवृतपङ्क्तिकंधरभुजावृक्षच्छिदापण्डितः त्र्यक्षः परमेश्वरः तस्य प्रसादेन अनुग्रहेण उन्मिषन्ती वृद्धिमती या रक्षःश्रीः तया परिवृतः पङ्क्तिकंधरः रावणः तस्य भुजा एव वृक्षाः तेषां छिदा छेदः। भुजाच्छिदाशब्दौ आकारान्तौ। तस्मिन् पण्डितः समर्थः। नक्षत्रेशसदृशचारुवदनः अक्षय्यप्रबलप्रतापसचिवान् ऋक्षप्लवंगान्नयन् क्षत्रियग्रामणीः स रामः रक्षतु ॥

रथ्यायां निलये सतां सदसि वा मिथ्यावचो यद्ब्रुवे

तथ्यालापमपि त्यजामि कुशले वथ्यावहेत्यो गतिम्।

कथ्या तन्मम दुर्गतिर्भवति योन्मथ्यावहातुं च तां

कथ्यादित्यकुले कृतोदयमिनं तिथ्यां नवम्यां भजे ॥ ८० ॥

रथ्यायां निलये गृहे सतां सदसि वा यत्कारणात् मिथ्यावचः अनृतं ब्रुवे ब्रवीमि। यः कुशले पथि गतिं आवहेत्। तं तथ्यालापमपि त्यजामि। तत्तस्मात्कारणात् कथ्या दुःसहा या मम दुर्गतिः भवति तां उन्मथ्यावहातुं नवम्यां तिथ्यां कथ्यं श्लाघ्यं यदादित्यकुलं तस्मिन् कृतोदयं कृतावतारं इनं प्रभुं भजे। 'इनः सूर्ये प्रभौ' इत्यमरः॥

राकानाथनिभाननं वसुमतीतोकाभिरामाकृतिं

पाकारातिपुरःसरामरसदः शोकापनोदक्षमम्।

कोकानन्दनवंशजन्नतपरीपाकावकृष्टोदयं

केकावन्नवपिञ्छनीलवपुषं लोकामहे चेतसि ॥ ८१ ॥

राकानाथनिभाननं वसुमतीतोकाभिरामाकृतिं वसुमतीतोकः सीता। पाकारातिपुरःसरामरसदः शोकापनोदक्षमं पाकारातिः इन्द्रः। कोकानन्दनः सूर्यः तस्य वंशजव्रतपरीपाकावकृष्टः उत्पन्नः उदयः यस्य तम्। केकावन्नवपिञ्छनीलवपुषं केकावन्तः मयूराः तेषां नवपिञ्छानि नूतनबर्हाणि तद्वत् नीलशरीरं चेतसि चित्ते लोकामहे ॥

राकेन्दुप्रतिमाननस्य महिमा हा केन वा वर्ण्यते
लोके यत्र दयारसोऽजनि महान्काकेऽपि सान्द्रागसि ।
एकेनैव शरेण येन समरे नाकेशसूनुर्हतः
शोकेनाकुलचेतसां भुवि नृणां साकेतवासी गतिः ॥ ८२ ॥

राकेन्दुप्रतिमाननस्य महिमा लोके केन वा वर्ण्यते । न केनापीत्यर्थः । हा यत्र रामे सान्द्रागसि सीताविषयमहदपराधवति काकेऽपि काकरूपधरे जयन्तेऽपि महान् दयारसः अजनि । येन समरे नाकेशसूनुः वाली एकेनैव शरेण हतः । भुवि शोकेनाकुलचेतसां नृणां साकेतवासी गतिः ॥

रूपं यस्य वदन्ति दत्तमदनक्षेपं दुरापं परै-
श्चापं राक्षसमण्डलक्षयकरं कोपं च यादृच्छिकम् ।
शापं कोकवधूवियोगजननं व्यापन्नरक्षापरं
भूपं तं बलभग्नभार्गवमहाटोपं नमस्कुर्महे ॥ ८३ ॥

यस्य रूपं दत्तमदनक्षेपं कृतमन्मथनिन्दम् । परैर्दुरापं चापं यादृच्छिकं कोपं च राक्षसमण्डलक्षयकरमिति वदन्ति । यस्य शाप पत्निवधक्रुद्धभृगुशापं कोकवधूवियोगजननं कोकवधूश्चासौ विश्च विः पक्षी तं योजयति पुरुषेण संयोजयतीति कोकवधूवियोगः सूर्यः तद्वंशोऽपि सः तस्मिन् जननं जनयतीति जननं जन्मोत्पादकमिति [जनाः] वदन्ति । व्यापन्नरक्षापरं शरणागतसंरक्षणधुरंधरं बलभग्नभार्गवमहाटोपं स्वबलाजितपरशुराममहागर्वं तं भूपं नमस्कुर्महे ॥

रोषान्धस्य दशाननस्य शिरसां दोषां च यस्त्रिंशतं
पूषां च द्युतिनाशुगेन हृतवान्घोषाङ्किते संगरे ।
एषाङ्गीक्रियतां ममाञ्जलिपुटी दोषान्निमार्ष्टि कृता
शेषाङ्के शयितस्य तत्रभवतो वेषान्तरेणामुना ॥ ८४ ॥

यः रोषान्धस्य दशाननस्य शिरसां दोषां च । बाहूनामित्यर्थः । त्रिंशतं शिरांसि दश बाहवः विंशतिः आहत्य त्रिंशतं घोषाङ्किते गर्जनायुक्ते संगरे युद्धे पूषां च द्युतिना सूर्यसदृशकान्तिना आशुगेन बाणेन हृतवान् । दोषान् निमार्ष्टि कृता निवृत्तकेन शेषाङ्के शयितस्य तत्रभवतः महाविष्णोः वेषान्तरेणामुना रामेण एषा ममाञ्जलिपुटी अङ्गीक्रियताम् । प्रार्थनायां लोट् ॥

लीलादारितमन्मथारिधनुषे सालावलीलाविने
शीलावर्जिततापसाय विशिखज्वालावलीढाब्धये ।

नीलाद्रिप्लवगार्चिताङ्घ्रियुगलीमूलाय लङ्कापतेः
कालायाकलयामि भूमितनयाहेलासखायाञ्जलिम् ॥ ८५ ॥

लीलादारितमन्मथारिधनुषे अनायासखण्डितशैवचापाय शालावलीलाविने छेदिने शीलं सद्भावः येनार्जिताः तापसाः यस्य तस्मै विशिखज्वालावलीढाब्धये अवलीढः पीतः। नीलाद्रिप्लवगार्चिताङ्घ्रियुगलीमूलाय लङ्कापतेः कालाय। भूमितनया सीता। हेला-सखाय क्रीडासुहृदे। अञ्जलिं आकलयामि ॥

वाचावारितमप्यभीक्ष्णमहह प्राचामृषीणां मता-
नाचारानपहाय धावति मनो नीचावतीर्णे पथि।
हा चापल्यहतस्य तन्नियमने का चातुरी मे ततो
याचाम्यानय मे वशं त्विदमिति त्वा चापपाणे विभो ॥ ८६॥

मे मनः वाचावारितमपि प्राचां ऋषीणां मतानाचारान् अपहाय त्यक्त्वा नीचावतीर्णे पथि नीचगम्ये पथि अभीक्ष्णं पुनः धावति गच्छति। अहह आश्चर्यम्। चापल्यहतस्य मम तन्निय-मने तस्य मनसः नियमने स्थिरीकरणे का चातुरी। सामर्थ्यं नास्तीत्यर्थः। हा इति खेदे। ततः तस्मात् कारणात् हे चापपाणे विभो इदं पूर्वोक्त मनः मे वशं नय इति त्वा त्वां याचामि प्रार्थयामि ॥

वाक्यानामुचितं पदं हृदय वाल्मीक्यानना्निर्यतां
कोक्यानन्दकृदन्वयं भज नमोवाक्या सुरेन्द्रानुजम्।
केक्यारूढसुराभिरूपवपुषं पाक्याब्धिमक्ष्णौजसा
नाक्याराध्यपदं च जीवपरयोरैक्यावबोधाप्तये ॥ ८७ ॥

हे हृदय। संबोधनम्। वाल्मीक्याननात् वाल्मीकिमुखात् निर्यतां निर्गच्छतां वाक्यानां पदानां उचितं योग्यं पदं स्थानं कोकानन्दकृदन्वयं सूर्यवंशं सुरेन्द्रानुजं उपेन्द्रं केक्या-रूढः सुब्रह्मण्यः तस्य इव अभिरूपवपुषं अक्ष्णौजसा अक्षयात्मतेजसा पाक्याब्धिं शो-षितसमुद्रं नाकिनः देवाः तैः आराध्यपदं रामं जीवपरयोः जीवात्मपरमात्मनोः ऐक्याव-बोधः अद्वैतज्ञानं तस्याप्तये प्राप्तये नमोवाक्या भज ॥

वासेनातिजुगुप्सितेषु नगरेष्वासेतुवाराणसि
प्रासे बद्धरुचिर्न चैव कृतवानासेवनं ते विभो।
त्रासे सत्यधुनातिघोरनरकाद्दासेदुपस्त्वां मम
व्यासेधस्तव किं क्षमो रघुपते दासेषु कर्तुं कृपाम् ॥ ८८ ॥

आसेतुवाराणसि काशीरामेश्वरपर्यन्तेषु अतिजुगुप्सितेषु अतिनिन्दितेषु। नगरवासस्य नि-षिद्धत्वादिति भावः। [नगरेषु वासेन सहित इति शेषः।] प्रासे भक्षणे बद्धरुचिः बद्धादरः सन्

अहं हे विभो ते आतेरनं न चैव कृतवान्। अधुनातियोरनरकान् त्रासे सति हे रघुपते त्वां आवेदुषः प्रपन्नस्य मम दासेषु कर्तुं व्यासेधः निषेधः क्षमः किम्॥

विद्ध्वा यः कुहनामृगं विरहितं वध्वा निरीक्ष्योटजं
बुद्ध्वा पक्षिमुखात्प्रियां रिपुहृतां बद्ध्वाब्धिमम्भोनिधौ।
रुद्ध्वा शत्रुपुरीं प्लवंगमभटैः क्रुद्ध्वा रणायागता-
न्युद्ध्वारीनजयत्स मे रघुपतिर्विध्वाकृतिः स्याद्गतिः॥ ८९॥

यः कुहनामृगं मारीचं विद्ध्वा वध्वा सीतया विरहितं उटजं निरीक्ष्य पक्षिमुखात् जटायुषो मुखात् प्रियां रिपुहृतां रावणहृतां बुद्ध्वा ज्ञात्वा अम्भोनिधौ आलिं सेतुं बद्ध्वा शत्रुपुरीं लङ्कां प्लवंगमभटैः रुद्ध्वा रणाय आगतान् अरीन् क्रुद्ध्वा युद्ध्वा अजयत् सः विध्वाकृतिः विष्णुरूपी। 'विधुः श्रीवत्सलाञ्छनः' इत्यमरः। रघुपतिः गतिः स्यात्॥

विध्वादित्यविलोचनः समिति यो विद्ध्वा बलात्कैटभं
मध्वाघातमपि प्रकल्प्य जलधौ दध्मान शङ्खं वहन्।
लब्ध्वा जन्म रघोः कुले निहतवान्व्यध्वावतीर्णस्थितिं
वध्वामोषकमाशरं हरतु मे स ध्वान्तमन्तर्गतम्॥ ९०॥

विध्वादित्यलोचनः चन्द्रसूर्यलोचनः यः समिति बलात् कैटभं विद्ध्वा हत्वा मध्वाघातमपि तदाख्यासुरवधमपि प्रकल्प्य जलधौ शङ्खं वहन् दध्मौ। रघोः कुले जन्म लब्ध्वा सन् व्यध्वावतीर्णस्थितिं दुर्मार्गगामिनं वध्वामोषकं सीतापहर्तारं आशरं रावणं निहतवान् जघान सः मेऽन्तर्गतं ध्वान्तं पापं हरतु। प्रार्थनायां लोट्॥

वीरेऽप्यर्पितशासनो नृपरिपौ यो रेणुकासंभवे
यो रेजे दशकंधरस्मयहरं तारेशमप्यर्दयन्।
पारेसिन्धु निशाचराः समिदलंकारेण येनाहता
नौरेतस्य कथा भवाब्धितरणे सारेति मोदामहे॥ ९१॥

यः नृपरिपौ रेणुकासंभवे वीरेऽपि परशुरामेऽपि अर्पितशासनः। यः दशकंधरस्मयहरं तारेशमपि वालिनमपि अर्दयन् पीडयन्। येन पारेसिन्धु निशाचराः रावणादयः समिदलंकारेण युद्धवीरेण। येनेत्यस्य विशेषणमेतत्। एतस्य रामस्य कथा भवाब्धितरणे सारा दृढा नौ इति मोदामहे॥

वेदान्ते हृदि यद्व्रजन्ति मुनयो नादान्तवेद्यात्मकं
खेदान्ताय कृतस्तवं शतमखश्रीदान्तकाम्भोधिपैः।
वेदाङ्गोपममैथिलीकुचतटस्वेदाम्बुलेशाङ्कितं
मोदाम्भोधिविहारदं मनसि तत्पादाम्बुजं पातु माम्॥ ९२॥

मुनयः वेदान्ते ब्रह्मशास्त्रे नादान्तवेद्यं बिन्दुस्वरूपेण वेद्यः आत्मा यस्य तथोक्तं यत्पादाम्बुजं खेदान्ताय जन्मखेदनिवृत्तये हृदि भजन्ति शतमखः इन्द्रः श्रीदान्तः विष्णुः कः ब्रह्मा। 'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे । मयूरेऽग्नौ च पुंसि स्यात्' इति मेदिनी । अम्भोधिपः समुद्रः एतैः कृतस्तवं वेदाह्नोपममैथिलीकुचतटस्वेदाम्बुलेशाङ्कितं मनसि मोदाम्भोधिविहारदं तत्पादाम्बुजं मां पातु ॥

व्यग्रा मन्मथवह्निना मनसिजोदग्राकृतिं प्राप्य यं
विग्रा शूर्पणखा कृता निजवपुस्युग्रा सुमित्राभुवा ।
स ग्रावर्षिवधूकृदङ्घ्रिरजसा सग्राहकूर्माण्डजं
न्यग्राक्षि पयसां मतप्य कृतवान्नृग्रामणीः पातु नः ॥ ९३ ॥

मनसिजोदग्राकृतिं मन्मथवद्रूपिणं यं निजवपुषि उग्रा । क्रूरशरीरेत्यर्थः । शूर्पणखा राक्षसी प्राप्य मन्मथवह्निना व्यग्रा सती पीडिता सती सुमित्राभुवा लक्ष्मणेन विग्रा विगतनासिका। 'वेर्ग्रो वक्तव्यः' इति नासिकाशब्दस्य ग्र इत्यादेशः । कृताङ्घ्रिरजसा ग्रावर्षिवधूकृत् ग्रावाणं ऋषिवधूं करोतीति ग्रावर्षिवधूकृत् अहल्याशापनिवृत्तिकर्ता सग्राहकूर्माण्डजं पयसा पतिं न्यग्राक्षिं अल्पसरितं कृतवान् सः नृग्रामणीः नृश्रेष्ठः पातु नः ॥

व्याजानाकलितानि योगिहृदयाम्भोजानि यस्यास्पदं
पूजा यस्य जनाय यच्छति तपोभाजामलभ्यं पदम् ।
यो जानात्युदधिं विशोषयितुमप्योजायमानैः शरै
राजानं तमहं भजे त्रिजगतां श्रीजानकीनायकम् ॥ ९४ ॥

यस्य व्याजानाकलितानि निष्कपटानि योगिहृदयाम्भोजानि आस्पदम् । यस्य पूजा जनाय तपोभाजां तपस्विनां अलभ्यं पदं यच्छति । यः उदधिं ओजायमानैः तीक्ष्णैः शरैः विशोषयितुं जानाति । त्रिजगतां राजानं श्रीजानकीनायकं सीतापतिं तं रामं अहं भजे ॥

शम्बालंकृतपाणिवर्णितशरस्तम्बाय पाथोनिधेः
जम्बालीकरणपवे जनकजाबिम्बाधरास्वादिने ।
अम्बानाथजुपान्नजेन मरुतां संबाध उत्कात्मने
कुम्भाकारकपिव्रजाय करुणालम्बाय तस्मै नमः ॥ ९५ ॥

शम्बालंकृतपाणिः इन्द्रः तेन वर्णितः शरस्तम्बः शरसमूहः यस्य । पाथोनिधेः समुद्रस्य जम्बालीकरणे जम्बालीकरणं पङ्कीकरणम् । जनकजाबिम्बाधरास्वादिने मरुतां देवानां संबाधे संमर्दे अम्बानाथजुषा सचिवेन अब्जजेन ब्रह्मणा उत्कात्मने उत्कः परमात्मस्वरूपं यस्य। रावणवधानन्तरं ब्रह्मा रामं अस्तौषीदिति रामायणकथा । कुम्भाकारकपिव्रजाय अतिनिबिडवानरसेनासमावृताय । 'कुम्भा सुगहना वृतिः' इत्यमरः । करुणालम्बाय तस्मै नमः ॥

शारीरद्युतिरेखया रुचिरया दूरीकृताम्भोधरं
वारीशस्मयभञ्जनं घनकृपाशारीविहारद्रुमम्।
गौरीनाथधनुर्द्रुहं पदरजोनारीकृतप्रस्तरं
मारीचद्विषमार्तरक्षणकलापारीणमीडे विभुम् ॥ ९६ ॥

रुचिरया शारीरद्युतिरेखया शरीरस्येयं शारीरा शरीरसंबन्धिनी या द्युतिः कान्तिः तस्याः रेखया दूरीकृताम्भोधरं वारीशस्मयभञ्जनं घनकृपाशारीविहारद्रुमं शारी पक्षिविशेषः। गौरीनाथधनुर्द्रुहम्। पदरजोनारीकृतप्रस्तरम्। शिलीभूतां अहल्यां पादधूल्या परिशुद्धामकार्षीदित्यर्थः। मारीचद्विषम्। आर्तरक्षणकलापारीणं विभुं ईडे स्तौमि। 'ईड स्तुतौ'॥

शीलालंकृतये हरीशसखये सालागजालच्छिदे
कालायाधिशराय शक्रतनये शैलाकृपा सेनया।
हेलानद्धजलाकराय कलये नीलाङ्गकायाञ्जलीं
छीलाकृत्तनिशाटनायकशिरःकीलालधाराकिरे ॥ ९७ ॥

शीलालंकृतये शीलं सच्चरितं अलंकृतिरलंकारः यस्य तस्मै। हरीशसखये वानरेशस्य सुग्रीवस्य मित्राय। 'यमानिलेन्द्रार्कविष्णुसिंहांशुगजवाजिषु। शुकाहिकपिभेकेषु हरिः' इत्यमरः॥ सालागजालच्छिदे सप्ततालप्रभेत्रे शक्रतनये वालिनि कालाय अधिशराय शैलाकृपा शिलाहारिण्या सेनया हेलानद्धजलाकराय नीलाङ्गकाय लीलाकृत्तनिशाटनायकशिरःकीलालधाराकिरे लीलया अनायासेन कृत्तानि च्छिन्नानि निशाटनायकशिरांसि रावणशिरांसि तान्येव कीलालानि जलानि तेषां धाराः ताः किरतीति तथोक्ताय॥

श्रीपादन्यसनेन यो मुनिवधूशापापनोदं व्यधा-
त्सोपानं त्रिदिवस्य सेतुमकृताकूपारगर्भे च यः।
कोपादस्रमुचं रणे दशमुखं व्यापादयामास य-
श्चापालंकरणः स मेऽस्तु शरणं भूपालचूडामणिः ॥ ९८ ॥

यः श्रीपादन्यसनेन दिव्यचरणस्पर्शेन मुनिवधूशापापनोदं अहल्याशापनिवृत्तिं व्यधात् चकार। यः अकूपारगर्भे समुद्रमध्ये त्रिदिवस्य स्वर्गस्य सोपानं तत्प्रापकं सेतुं अकृत। यः रणे कोपात् अस्रमुचं दशमुखं व्यापादयामास चापालंकरणः सः भूपालचूडामणिः मे शरणं अस्तु॥

श्रीहीनं व्यथयन्ति ये धनमदाद्देहीति याहीति ता-
न्वाहीकानिव न सराम्यपि पतीन्दोहीयसीनां गवाम्।
देहान्तीरितमन्तरेण ददते यो हीहितं देहिनां
पाहीति ब्रुवतो रघूद्वह दयावाहो स सेव्योऽसि मे ॥ ९९ ॥

ये नराः धनमदात् श्रीहीनं दरिद्रं एहि आगच्छ याहि गच्छ इति व्यथयन्ति पीडयन्ति तान् दोहीयसीनां पयस्विनीनां गवां अधिपतीनपि। इदमुपलक्षणम् । अतिसंपन्नानपि वार्हीकानिव वेदबाह्यानिव न स्मरामि। यः रामः देहीति ईरितमन्तरेण याच्ञां विनैव देहिनां प्राणिनां ईहितं अभीष्टं ददते ददाति। 'दद दाने' । लटेकवचनम् ।हे रघूद्वह पाहीति ब्रुवतः मे दयावाही दयालुः त्वं सेव्योऽसि ॥

श्रुत्वा वेदशिरांसि तन्निगदितं मत्वा यथावन्नरः
स्मृत्वाभीक्ष्णमिदं लभेत विशयं हित्वात्मसाक्षात्कृतिम् ।
यत्त्वाह क्रममित्थमागमशिरस्तत्त्वावबोधोदये
सत्वाकार तदेव राम सुलभं न त्वामनत्वा नृणाम् ॥ १०० ॥

नरः वेदशिरांसि वेदान्तानि श्रुत्वा गुरुमुखात् श्रवणं कृत्वा यथावत् साकल्येन अभीक्ष्णं पुनः पुनः स्मृत्वा मननं कृत्वा विशयं संशयं हित्वा आत्मसाक्षात्कृतिं मोक्षं लभेत इति निगमः वेदः इत्थमेव क्रममाह तत्त्वावबोधोदये जगन्मिथ्या ब्रह्म सत्यमिति ज्ञानोत्पत्तौ सत्त्वाकार सद्रूपेण प्रकाशितरूप हे राम पूर्वोक्तमोक्षप्राप्तिरपि त्वामनत्वा प्रणम्य न त्वदुपासनां विना कदाचिदपि अन्योपायेन मोक्षप्रसक्तिर्नास्तीत्यभिप्रायः ॥

संन्यासे नियतात्मभिः स्ववगमं वन्याविहारप्रियं
मुन्याराधनतत्परं वसुमतीकन्यासहायं भजे ।
तन्यादेष शुभान्यनन्यसदृशंमन्याशरेन्द्रादृता-
पन्यायक्षितिलोकरक्षणकलाधन्यायमानो विभुः ॥ १०१ ॥

संन्यासे वैराग्ये नियतात्मभिः निश्चलचित्तैः अवगमं अवगन्तुं योग्यं वन्या वनसमूहः तत्र विहारप्रियं मुन्याराधनतत्परं वसुमतीकन्यासहायं भजे । अनन्यसदृशंमन्याः अहंकारवन्तः ये आशरेन्द्राः राक्षसा रावणादयः तैः आदृतः आदरेण कृतः अपन्यायः यस्मिन् तस्य क्षितिलोकस्य भूलोकस्य रक्षणकलाधन्यायमानः रक्षणविद्याप्रवीणः एषः विभुः शुभानि तन्यात् कुर्यात् ॥

सत्राणार्थमजातमजस्य नृपतेः पुत्रायमाणो हरिः
सत्रासान्विधुरान्स्व केवलमसावत्रावनीमण्डले ।
सुत्रामप्रमुखैर्मरुद्भिरखिलैः सत्रा जवादेयिवा-
न्यत्रासन्नरकाश्च नारकिजनास्तत्रापि नस्त्रायताम् ॥ १०२ ॥

सत्राणार्थं सत्परित्राणार्थं अजातमजस्य नृपतेः दशरथस्य पुत्रायमाणो पुत्रवदाचरमाणः भर्ता हरिः सत्रासान् भयसहितान् अत एव विधुरान् दुःखितान् अत्रावनीमण्डले केवलं

न त्रायतां किंतु सुत्रामप्रमुखैः मरुद्भिः इन्द्रादिदेवैः सत्रा साकं अवात् एयिवान् आगतः सन् यत्र यस्मिन् लोके नरकाः निरयाः नारकिजनाः तत्रापि नः त्रायताम् ॥

संजातं सवितुः कुलादुपनिपत्कुञ्जाधिवासिद्विपं
भञ्जानं वपुषा नवाम्बुदमहःपुञ्जावलेपं भजे।
मञ्जावर्पितहस्तमस्ततटिताशिञ्जारुचा कार्मुके
कंजानुक्रियमाणलोचनरुचिं तं जानकीवल्लभम् ॥ १०३ ॥

सवितुः सूर्यस्य कुलात् संजातं उपनिपत्कुञ्जाधिवासिद्विपं उपनिषद्रहस्यवासिनं वपुषा शरीरेण नवाम्बुदमहःपुञ्जावलेपं नीलाम्बुदकान्तिपुञ्जगर्वं भञ्जानं तिरस्कुर्वन्तं अस्ततटिता तटितोऽपि अधिककान्त्या शिञ्जारुचा ज्याकान्त्या मञ्जौ मनोज्ञे कार्मुके धनुषि अर्पितहस्तं कंजानुक्रियमाणलोचनरुचिं कंजं पद्मं तं जानकीवल्लभं रामं भजे ॥

संजज्ञे शुभधीः सकृद्दिविपदां भञ्जन्रिपूनायुधं
गुञ्जच्छिञ्जिनि संहितेषु च वहन्कंजच्छदाक्षो हि यः।
संजल्प्यं निगमैः शिरीषसुमनःकिञ्जल्करेणुद्युतिं
तं जप्याख्यमुमाधवेन करुणापुञ्जस्वरूपं भजे ॥ १०४ ॥

शुभधीः शुभं जगतां कर्तुं धीः यस्य तथोक्तः। दिविषदां देवानां रिपून् भञ्जन् गुञ्जच्छिञ्जिनि ज्याशब्दयुते धनुषीत्यध्याहर्तव्यम्। संहितेषु बाणं आयुधं चापादि च वहन् कंजच्छदाक्षः पद्मपत्राक्षः यः संजज्ञे निगमैः संजल्प्यं शिरीषसुमनःकिञ्जल्करेणुद्युतिं उमाधवेन जप्या आख्या यस्य तं करुणापुञ्जस्वरूपं दयाराशिरूपं भजे ॥

साधारण्यलसत्कृपो नतिकरे साधावसाधावपि
क्रोधाकृष्टधनुश्च्युतास्त्रशिखिनामेधायमानाम्बुधिः।
आधारो यशसामवाप्तसरयूरोधामखानां विधौ
मेधामेधयतु स्तुतो रघुपतिर्मे धातृमुख्यैः सुरैः ॥ १०५ ॥

नतिकरे नम्रे साधौ असाधावपि साधारण्यलसत्कृपः साधारण्येन सामान्येन। निर्विशेषेणेति यावत्। लसन्ती कृपा यस्य स तथोक्तः क्रोधाकृष्टधनुश्च्युतास्त्रशिखिनां क्रोधेन कोपेन आकृष्टं यत् धनुः तस्मात् च्युतस्य अस्त्रस्य आग्नेयास्त्रस्य शिखिनां एधायमानाम्बुधिः एधायमानः काष्ठवत् आचरित अवाप्तसरयूरोधामखानां सरय्वाः रोधा तटं तत्र मखाः यागाः। 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः। अवाप्ताः सरयूरोधामखाः यैस्ते। दीक्षितानामित्यर्थः। विधौ करणविषये आधारः धातृमुख्यैः ब्रह्मादिभिः सुरैः स्तुतः रघुपतिः रामः मे मेधां प्रज्ञां एधयतु वर्धयतु ॥

सुप्रज्ञातबलोऽर्कजेन कपिनाप्यप्रत्ययध्वंसना-
स्त्वप्रस्थानपथार्पणाय जलधौ क्षिप्रप्रकीर्णाशुगः ।
विप्रत्राणपरो विरोधिनगरीव प्रच्छिदाक्रुच्छरः
स प्रष्ठो रघुवंशलब्धजनुषां त्र्यप्रक्षयायास्तु नः ॥ १०६ ॥

अप्रत्ययध्वंसनात् दुन्दुभिकलेवरक्षेपसप्तसालप्रभेदना अनिश्चयनिवारणेन अर्कजेन कपिनापि सुग्रीवेणापि प्रज्ञातबलः स्वप्रस्थानपथार्पणाय स्वसेनागमनाय जलधौ समुद्रे क्षिप्रप्रकीर्णाशुगः । विप्रत्राणपरः विरोधिनगरीव प्रच्छिदाक्रुच्छरः शत्रुनगरसालभिद्बाणः रघुवंशलब्धजनुषां रघुवंश्यनृपाः*। प्रष्ठः अग्रगामी । 'प्रष्ठोऽग्रगामिनि', इति निपातः । स रामः नः त्र्यप्रक्षयाय पापक्षयाय अस्तु ॥

सुत्रामप्रमुखैर्दशाननचमूवित्रासितैरर्थितः
पुत्रायेष्टिकृतोऽभवद्दशरथान्मित्राभिजातान्वये ।
पित्रानृण्यविधित्सया दयितया सत्रानुजेनापि यः
सत्रावासमवापितः किमितरैः स त्रातुमस्मानलम् ॥ १०७ ॥

यः दशाननचमूवित्रासितैः रावणसैन्यवित्रस्तैः सुत्रामप्रमुखैः इन्द्रादिभिः अर्थितः पुत्राय पुत्रं प्राप्तुं इष्टिकृतः दशरथात् मित्राभिजाताः सूर्यवंश्याः रघवः तेषां अन्वये वंशे अभवत् । पित्रानृण्यविधित्सया पितृऋणनिवृत्त्यर्थे दयितया सीतया अनुजेन लक्ष्मणेन सत्रा साकं सत्रावासं सत्राणां यागानां आवासं स्थानीभूतं अवापितः प्राप्तः इतरैः विष्ण्वादिभिः किम् । सः रामः अस्मान् त्रातुं अलं पर्याप्तम् ॥

सेतुर्येन समस्तपापदलनाहेतुर्निबद्धोऽर्णवे
जेतुर्यस्य रणे रिपूपशमने चातुर्यमन्यादृशम् ।
धातुर्यत्प्रकृतिर्गिरा प्रकटिता यातुप्रभौ पातिते
जातु द्रष्टुममुं लभेय किमहं हा तुद्यते मे मनः ॥ १०८ ॥

येन समस्तपापदलनाहेतुः समस्तपापनिवृत्तिहेतुः सेतुः अर्णवे समुद्रे निबद्धः । जेतुर्जयशीलस्य यस्य रणे रिपूपशमने शत्रुहननविषये चातुर्यं सामर्थ्यं अन्यादृशमदृष्टचरम् । यातुप्रभौ राक्षसप्रभौ पातिते सति यत्प्रकृतिः यस्य रामस्य प्रकृतिः यथातथ्यं धातुः ब्रह्मणः गिरा प्रकटिता । इमं रामं जातु कदाचित् द्रष्टुमहं लभेय किं इति मे मनः तुद्यते दुःखितं भवति । हा इति खेदे ॥

सेवित्वा कपयोऽपि यं मुमुचिरे त्रैविध्यबोधं विना
यो विष्णोस्तनुभेद एव धरणावाविर्बभूव स्वयम् ।

सावित्रान्वयजं तमाशरचमूलावित्वरावच्छरं
देवि त्वं भज धारणे हरधनुर्द्वैविध्यविद्यागुरुम् ॥ १०९ ॥

कपयोऽपि यं रामं सेवित्वा त्रैविध्यबोधं विना श्रवणमननादिश्रमं विना मुमुचिरे मुक्ता अभवन् । विष्णोः हरेः तनुभेद एव यः भरणी स्वयं रामरूपेण आविर्बभूव । सावित्रान्वयजं आशरचमूलावित्वरावच्छरं राक्षससैन्यनाशे अतिवेगयुक्तबाणं हरधनुर्द्वैविध्यविद्यागुरु शिवचापभञ्जनप्रवीणं त रामं हे देवि मते भज ॥

सोमेनोपमितानने दशमुखक्षेमेतरप्रापके
भूमेरात्मजयानुजेन च गुणारामेण संसेविते ।
वामे धन्व करे शरं तदपरे रामे दधाने घन-
श्यामे जाग्रति रक्षणार्थमितरा का मे गतिः क्ष्मातले ॥११०॥

सोमेन चन्द्रेण उपमिताननें । दशमुखक्षेमेतरप्रापके दशमुखस्य रावणस्य क्षेमेतरं नाशः तत्प्रापके । भूमेरात्मजया सीतया गुणारामेण गुणशालिना अनुजेन च लक्ष्मणेन च संसेविते वामे करे धनुः तदपरे अवामे पाणौ शरं दधाने घनश्यामे रामे रक्षणार्थे जाग्रति सति क्ष्मातले भूतले मे इतरा रामाभिन्ना का गतिः । न कापि इत्यर्थः । राम एव मां रक्षेदित्यर्थः ॥

स्वर्वीणाधरवन्दितेन रणभूदर्वीकरेणेषुणा
निर्वीरां कृतवान्निशाचरपतेर्गुर्वीडनीयां पुरीम् ।
खर्वीभावितसर्ववैरिविभवां कुर्वीत मे संपदं
गुर्वीमेधितमित्रबान्धवजनामुर्वीकुमारीपतिः ॥ १११ ॥

स्वर्वीणाधरवन्दितेन नारदवन्दितेन रणभूदर्वीकरेणेषुणा रणभूमिदर्वीकरवत् अतिघोरः इषुः तेन बाणेन निशाचरपतेः रावणस्य गुर्वीडनीया गुरुणा बृहस्पतिना ईडनीयां स्तुत्यां पुरीं लङ्कां निर्वीरां वीररहिता कृतवान् । उर्वीकुमारीपतिः सीतापतिः श्रीरामः खर्वीभावितसर्ववैरिविभवां खर्वीभावितः अल्पीकृतः सर्ववैरिविभवः यया गुर्वीं एधितमित्रबान्धवजनां संपदं मे कुर्वीत ॥

हता यस्य रामस्य आशुगहता बाणहता अरिचमूः शत्रुसैन्यम् । स्वारिति अव्ययम् । स्वर्ग भेजे जगाम । नुः मनुष्यस्य भेतव्यकरी भयंकरी भवरुक् संसारव्याधिः निर्भेषजा चिकित्सारहिता येन रामेण अस्यते निरस्यते । 'असु क्षेपणे' । कर्मणि लट् । प्रथमपुरुषैकवचनम् । खगतनौ वायसरूपिणि मघोनः इन्द्रस्य अर्भे अर्भके जयन्ते दर्भेण कुशेन अस्त्रयुजा अस्त्रकार्यं कुर्वता सुन्दरमणीनिर्भेदिना ताटकाघातिना अमुना अजसुतस्य दशरथस्य गर्भेण वयं सेश्वराः सनाथाः ॥

स्तोमाय त्रिदिवौकसामुपहृतक्षेमाय हत्वा रिपू-
न्रामाय प्रथमानसुन्दरगुणग्रामाय तस्मै नमः ।
श्यामाय त्रिपुरारिचापदलनोद्दामाय लङ्कापुरी-
भीमाय क्षितिकन्यकारमणिनः कामाय कोदण्डिने ॥ ११३ ॥

रिपून् हत्वा त्रिदिवौकसां देवानां स्तोमाय संघाय उपहृतक्षेमाय उपहृतः क्षेमः येन तस्मै । प्रथमानसुन्दरगुणग्रामाय श्यामाय त्रिपुरारिचापदलनोद्दामाय लङ्कापुरीभीमाय क्षितिकन्यकारमणिनः सीतायाः कामाय कामरूपाय कोदण्डिने रामाय तस्मै नमः ॥

हर्यक्षेभतरक्षुखड्गचमरीकिर्यच्छभल्लाकुलं
निर्यद्भोगि वनं गिरा पितुरगाद्धुर्यः स्वधर्मस्य यः ।
निर्यत्नं खरदूषणत्रिशिरसः स्वर्यद्धता लेभिरे
पर्यस्यत्वहिमांशुवंशजनुषां वर्यः स पापानि नः ॥ ११४ ॥

स्वधर्मस्य धुर्यः निर्वाहकः यः पितुः गिरा हर्यक्षेभतरक्षुखड्गचमरीकिर्यच्छभल्लाकुलं सिंहगजव्याघ्रचमरीवन्यवराहाच्छभल्लाकुलं निर्यद्भोगि निर्यन्तः संचरन्तः भोगिनः सर्पाः यस्मिन् तत् वनं अगात् । निर्यत्नं प्रयत्नं विना यद्धताः येन रामेण हताः खरदूषणत्रिशिरसः स्वः स्वर्गे लेभिरे प्रापुः । अहिमांशुवंशजनुषां सूर्यवंश्यानां वर्यः सः नः पापानि पर्यस्यतु निवर्तयतु ॥

हन्तुं प्राक्तनदुष्कृतानि जगतां मन्तुं भृशानित्यतां
कन्तुं जेतुममुत्र चेह समुपारन्तुं फलेष्वादरात् ।
यन्तुं चेन्द्रियजातमागमशिरो गन्तुं च वक्त्राद्गुरो-
स्तन्तुं चण्डकरान्वयस्य कलये तं तुङ्गचापं प्रभुम् ॥ ११५ ॥

प्राक्तनदुष्कृतानि प्राग्जन्मार्जितपापानि हन्तुं जगतां भृशानित्यतां मन्तुं भवगन्तुं कन्तुं विषयासक्तिं जेतुं अमुत्र परलोके इह फलेषु आदरात् समुपारन्तुं इन्द्रियजातं यन्तुं वशीकर्तुं गुरोः आचार्यस्य वक्त्रात् आगमशिरः तत्त्वशास्त्रं गन्तुं तुङ्गचापं चण्डकरान्वयस्य तन्तुं प्रभुं कलये ध्यायामि ॥

क्षोणिस्थस्य यदर्चया किल पदश्रेणिर्भवेन्नाकिनां
गाणिक्येन सदोचिता गणयितुं माणिक्यमालानिभा ।
प्राणिश्रोत्रसुखावहा सुरनदीवेणीस्मयोत्सारिणी
पाणिश्लिष्टधनुः स मेऽस्तु शरणं तूणीभृतांसो विभुः ॥११६॥

इति श्रीरामभद्रदीक्षितविरचितो रामविषयिकाष्टप्रासः समाप्तः ।

यदर्चया यस्य रामस्य अर्चया पूजया नाकिनां देवानां गाणिक्येन गणिकासमूहेन सदा गणयितुं उचिता माणिक्यमालानिभा माणिक्यरत्नप्रोतमालासदृशा प्राणिश्रोत्रसुखावहा श्रोतृजनश्रोत्रसतोषकारिणी सुरनदीवेणीस्मयोत्सारिणी गङ्गाप्रवाहगर्वभञ्जिनी अखिलपदप्राप्तिः सुप्तिङन्ताद्यखिलपदप्राप्तिः । कवनशक्तिरिति यावत् । यद्वा अखिलपदप्राप्तिः अखिलानां ब्रह्मादिदेवानां वा पदप्राप्तिः सत्यलोकादिपुण्यलोकप्राप्तिः वा भवेत् । पाणिश्लिष्टधनुः सशरचापहस्तः तूणीभृतांसः सः विभुः रामः मे शरणं अस्तु ॥ एतद्ग्रन्थे शार्दूलविक्रीडितं वृत्तम्—'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात्॥

श्रीमल्लक्ष्मणजानकीसहचर श्रीरामचन्द्रप्रभो
मद्वाञ्छां शृणु मन्मनोऽभिरमता त्वत्पादपङ्केरुहे ।
नीलाम्बुदरुचाविने नम इदं तुभ्यं दयाम्भोनिधे
संतानाख्यजुषे दयार्द्रमनसे पापौघविद्वेषिणे ॥

त्रिशिरनगरवर्ये काचिदभ्यासशाला द्रविडसहितनामा वर्तते ज्ञप्तिपालैः ।
उशनधिषणसाम्यैः सद्भिराचार्यमुख्यैर्नटनृपतिजाता नन्दनीया सुधीभिः ॥

तत्रस्थेन पण्डितेन सेतुशास्त्रिणा टीकेयं कृता ।

---

## वासुदेवकविरचितं

# वासुदेवविजयम्[1] ।

स्वकृतपदचन्द्रिकाख्यव्याख्यासमेतम् ।

---

प्रथमः सर्गः ।

विघ्नेशभारतीव्यासगुरुशाब्दिकमूर्तये ।
नमोऽस्तु पत्यै भूतानां सदानन्दचिदात्मने ॥
मत्स्यकच्छपभूदारनृसिंहवटुविग्रहम् ।
नौमि रामत्रयीकृष्णकल्किरूपमधोक्षजम् ॥

---

१. अयं च वासुदेवकविः केरलदेशे पुरुवनग्रामे प्रादुरभूदिति धातुकाव्यप्रारम्भश्लोकव्याख्यातः प्रतीयते. कालस्तु न निश्चितः. एतद्ग्रन्थरचनेनास्य महावैयाकरणत्वं प्रतीयते, यतः सर्गत्रयात्मकेनानेन सकलाष्टाध्यायी कृतार्थीकृता.

कुन्दसूनमनोहारिमन्दहासविराजितम् ।
नन्दगोपकुलोत्तंसमिन्दिरारमणं भजे ॥
काव्यं मया वासुदेवविजयाख्यमकारि यत् ।
व्याख्यापि तस्य तन्वीयं क्रियते पदचन्द्रिका ॥

कृतार्थता यस्य पदाम्बुजं सदा निषेवमाणं वृणुतेऽचिरात्स्वयम् ।
हृदा दधत्तं वसुदेवनन्दनं पुने गिरस्तच्चरितामृतोर्मिभिः ॥ १ ॥

अहं तं वसुदेवनन्दनं हृदा दधत् तच्चरितामृतोर्मिभिः गिरः पुने शोधयामि। यस्य पदाम्बुजं सदा निषेवमाणं पुरुषं कृतार्थता अचिरात् स्वयं वृणुते ॥

समस्तवित्तामधिजग्मुषः स्वतो यतः प्रजेशाः श्रुतिमध्यगीषत ।
तितिक्षमाणापि समं क्षमाप तं नृपीभवद्दैत्यभरार्दिता विधिम् ॥ २ ॥

क्षमा तं विधिं ब्रह्माणमाप आश्रयत् । समं सर्वं तितिक्षमाणापि सहमानापि नृपीभवद्दैत्यभरार्दिता अनृपा नृपा भवन्तीति नृपीभवन्तस्ते दैत्या एव भरस्तेन पीडिता । यतः प्रजेशाः श्रुतिं अध्यगीषत अधीतवन्तः । स्वतः स्वभावेन अथवा सर्वात्मभूतादन्तर्यामिणः समस्तवित्तां सर्वज्ञत्वं अधिजग्मुषः प्राप्तवतः ॥—इह पाणिनीयसूत्रे चत्वारो भागाः परिकल्पिताः । प्रथमद्वितीया[ध्याया]त्मक आद्यः । तृतीयाध्यायात्मको द्वितीयः । चतुर्थपञ्चमाध्यायात्मकस्तृतीयः । अवशिष्टाध्यायात्मकश्चतुर्थः । तत्र युगपदधिक्रियन्ते—अध्यगीषतेति । 'इङ् अध्ययने' । इङिकावधिपूर्वावेव प्रयुज्येते । लुङि 'च्लि लुङि' इति च्लिः । 'च्लेः सिच्' 'विभाषा लुङ्लृङोः' इति गाङादेशे, 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इति सिचो ङित्वे 'घुमास्थागा–'[आदि]नेत्वं 'आदेशप्रत्यययोः' इति षत्वम् । तितिक्षमाणेति । 'तिज निशातने' । 'गुप्तिज्किद्भ्यः सन्' इति सन्प्रत्ययः । स च 'निन्दाक्षमाव्याधिप्रतिकारेषु सन्निष्यते' इति क्षमायाम् । पञ्चमाध्यायान्तं वक्ष्यमाणानां प्रकृत्युपपदोपाधिविकारागमवर्जं प्रत्ययसंज्ञा । स च 'प्रत्ययः' 'परश्च' इति धातोः प्रातिपदिकाद्वा परः स्यात् । 'सनाद्यन्ता धातवः' इति धातुसंज्ञा । 'सन्यङोः' इति सनन्तस्य द्विर्वचनम् । लटः शानच् । कृदन्तत्वात्प्रातिपदिकत्वम् । स्त्रीत्वविवक्षायां स्त्रियाम् 'अजाद्यतष्टाप्' इति टाप् । तदन्तत्वात् 'ङ्याप्प्रातिपदिकात्' इत्यधिकृत्य 'स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्' इति सुप् । अधिजग्मुष इति । 'गम्लृ गतौ' अधिपूर्वः । लिटः क्वसुः 'गमहन–'आदिना उपधालोपः । 'लिटि धातोरनभ्यासस्य' इति द्विर्वचनम् । तच्च हलादीनां धातूनां 'एकाचो द्वे प्रथमस्य' इति प्रथमस्यैकाचः स्यात् । 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञा । 'कुहोश्चुः' इत्यभ्यासस्य चुत्वम् । समस्तविदिति । 'सत्सूद्विष–' इति क्विप् । 'दित्यदित्यादित्य–' इति ण्यः । ['तद्धितेष्वचाम्–' इति] आदिवृद्धिः । 'वृद्धिरादैच्' इति वृद्धिसंज्ञा ॥

मीमांसमानं निगमार्थवर्तनीरनुद्विजित्री समितेः शुचाथ सा।
कार्श्यं दधत्यार्तिभरात्प्रणत्य तं जगद्धिते जाग्रतमार्चिचद्गिरा॥ ३॥

अथ सा तं प्रणत्य गिरा आर्चिचत् स्तुतवती। निगमार्थवर्तनीः वेदार्थमार्गान् मीमांसमानं जगद्धिते जाग्रतं तात्पर्यवन्तं शुचा हेतुना समितेः सभायाः अनुद्विजित्री भयं अगमयन्ती आर्तिभरात् पीडातिशयेन हेतुना कार्श्यं दधती॥—अनुद्विजित्रीति। 'ओ विजी भयचलनयोः'। ततस्तृच्। इडागमः। 'विज इट्' इति इडादेस्तृचो ङित्वात् 'क्ङिति च' इति गुणाभावः। 'अदेङ्गुणः' इति गुणसंज्ञा। 'ऋन्नेभ्यो ङीप्' इति ङीप्। मीमांसमानमिति। 'मान पूजायाम्'। 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' इति मानेर्जिज्ञासायां सनभ्यासस्येकारस्य दीर्घश्च। दधतीति। 'डुधाञ् दानधारणयोः'। लट्। 'जुहोत्यादिभ्यः श्लुः' इति शपः श्लुः। 'प्रत्ययस्य लुक्श्लुलुपः' इति श्लुसंज्ञा। 'श्लौ' इति द्विर्वचनम्। 'उगितश्च' इति ङीप्। 'उभे अभ्यस्तम्' इत्यभ्यस्तसंज्ञायाम्। 'नाभ्यस्ताच्छतुः' इति नुमभावः। आर्चिचत्। 'अर्च पूजायाम्'। चुरादि। लुङि चङ्। 'चङि' इति द्विर्वचनम्। तत्र 'अजादेर्द्वितीयस्य' इति द्वितीयस्यैकाचः स्यात्। तत्र 'नन्द्राः संयोगादयः' इति रेफस्य न भवति। 'हलोऽनन्तराः संयोगः' [इति संयोगसंज्ञा।] जाग्रतमिति। 'जागृ निद्राक्षये'। लटः शता 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायां नुमभावः॥

रजोगुणेनोर्णविता निजं महो धियं दधद्विश्वसतत्त्वदृश्वरीम्।
सिसृक्षितं संतनुषे त्वमीक्षया विभो कथं नूर्णुवितासि मे शुचम्॥ ४॥

हे विभो, त्वं सिसृक्षितं स्रष्टुमिष्टं विश्वं ईक्षया ईक्षणेन संकल्पमात्रेण संतनुषे करोषि तथा सति मे शुचं कथं नु ऊर्णुवितासि छादयितासि। रजोगुणेन निजं महः तेजः ऊर्णविता छादयिता विश्वसतत्त्वदृश्वरीं विश्वस्य सतत्त्वं पारमार्थिकं रूपं द्रष्ट्रीं धियं दधत्॥—ऊर्णवितेति। 'ऊर्णुञ् छादने'। 'विभाषोर्णोः' इतीडादेः प्रत्ययस्य वा ङित्वम्। ङित्वे उवङ्। अङित्वे गुणः। संतनुषे [इति]। 'थासः से' 'सार्वधातुकमपित्' इति ङित्वे विकरणस्य गुणाभावः। सिसृक्षितमिति। 'धातोः कर्मणः समानकर्तृकादिच्छाया वा' इति सन्। सतत्त्वदृश्वरीमिति। 'दृशेः क्वनिप्' 'वनो र च' इति ङीपि रेफादेशः। परमेश्वरस्य जगत्सिसृक्षात्मिका मायावस्था ईक्षणकामतपोवि············कीर्पादिशब्दैरधीयते 'स ऐक्षत' इत्यादयः श्रुतयः॥

बह्वन्युदित्वा खलु या बभूव युद्दिवीह ये चक्रभृता निजघ्निरे।
मयि द्विषस्ते जनिमेत्य तन्वते तनुं वृषस्य द्विपदीमनङ्किकाम्॥ ५॥

बहूनि वक्तव्यानि उदित्वा उक्त्वा खलु या युत् युद्धं तारकामयाख्यं दिवि बभूव इह युधि ये चक्रभृता निजघ्निरे ते द्विषः असुराः मयि लोकरूपिण्यां जनिं जन्म एत्य वृ-

पस्य धर्मस्य द्विपदीं पादद्वययुतां तनुं अनङ्घ्रिकां पादरहितां तन्वते । धर्ममशेषं नाशयन्ति । द्वापरे युगेऽपि धर्मो द्विपात् ॥—निजघ्निरे इति । 'असंयोगाल्लिट्कित्' इति किद्वद्भावात् 'गमहनजन–' इत्युपधालोपः । बभूवेति । 'इन्धिभवतिभ्यां च' इति लिटः किद्वद्भावाद्गुणाभावः । उदित्वेति । 'वद व्यक्तायां वाचि' अस्मात् क्त्वा । 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा' इति कित्त्वे 'वचिस्वपियजादीनां किति' इति यजादित्वात्संप्रसारणम् । 'इग्यणः संप्रसारणम्' 'क्त्वातोसुन्कसुनः' इत्यव्ययसंज्ञा । द्विपदीमिति । द्वौ पादावस्य इति बहुव्रीहिः । 'संख्यासुपूर्वस्य' इत्यकारलोपः समासान्तः । 'पादोऽन्यतरस्याम्' इति वा ङीपि 'पादः पत्' ॥

सुधाभुजोऽपि न्यजिघृक्षदोजसा यः कालनेमिः स हि कंसतामयन् ।
जिगीषया संकुटितापथा तिसृष्वाक्रीडते संप्रति लोकसीमसु ॥ ६ ॥

स हि कालनेमिः संप्रति कंसतामयन् प्राप्नुवन् जिगीषया जेतुमिच्छया तिसृषु लोकसीमसु लोकानामन्तेषु अपि आक्रीडते यः सुधाभुजो देवान् अपि ओजसा न्यजिघृक्षत् निग्रहीतुमैच्छत् । अपथा अमार्गेण संकुटिता कौटिल्येन गन्ता । 'कुट कौटिल्ये' ॥—न्यजिघृक्षदिति । 'ग्रह उपादाने' । 'धातोः कर्मणः–' इति सन् । 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' इति सनः कित्वम् । 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इति संप्रसारणम् । 'संप्रसारणाच्च' इति पूर्वरूपत्वम् । जिगीषयेति । 'इको झल्' इति सनः कित्वात् गुणाभावः । 'अज्झन[गमां सनि]' इति दीर्घः । तिसृष्विति । 'न षट्स्वस्रादिभ्यः' इति ङीप्प्रतिषेधः । सीमस्विति । 'मनः' इति ङीप्प्रतिषेधः ॥

न कोऽप्यशस्त्रीयदितः पुरा पुमान्न चायशस्काम्यदुवाह नो मुदम् ।
न धैर्यलक्ष्म्या समगंस्त स प्रतानसावचिच्छित्सत यस्य वैभवम् ॥ ७ ॥

असौ कंसः यस्य पुंसः वैभवं अचिच्छित्सत छेत्तुमैच्छत् स तादृशः पुमान् कोऽपि कश्चिदपि इतः पुरा वर्तमानकालात् प्राक् न अशस्त्रीयत् आत्मनः शस्त्रमैच्छत् । न च अयशस्काम्यत् आत्मनः यशः ऐच्छत् । मुद न उवाह । धैर्यलक्ष्म्या न समगंस्त संगतवान् । प्रतान् प्रकर्षेण ताम्यन् ॥—अचिच्छित्सतेति । 'हलन्ताच्च' इति सनः कित्त्वम् । समगंस्तेति । 'गम्ऌ गतौ' । 'वा गमः' इति सिचः कित्त्वविकल्पः । कित्त्वाभावपक्षे अनुनासिकलोपाभावः । अशस्त्रीयदिति । 'सुप आत्मनः क्यच्' इतीच्छायां क्यच् । अयशस्काम्यदिति । 'काम्यच्च' इतीच्छायां सुपः काम्यच् । 'पाशकल्पककाम्येषु' इति सकारः । उवाहेति । 'वह प्रापणे' । 'लिट्यभ्यासस्योभयेषाम्' इति यजादित्वात्संप्रसारणम् ॥

अनुग्रहं मय्यपशर्मणि प्रभो कृपीष्ट भित्सीष्ट ममापदं भवान् ।
असृपुपत्कस्त्वदृते परः सुखं निजौरसीयन्कृपणं तदार्तिहृत् ॥ ८ ॥

हे प्रभो, भवान् मयि अनुग्रहं कृषीष्ट कुरुतात्। अपशर्मेणि अपगतं शर्म यस्याः। मम आपदं दुर्जनमरणलक्षण मित्सीष्ट अपनयतात्। त्वदृते परः अन्यः कः पुरुषः कृपणं दीनं जनं निजौरसीयन् निजं औरसं पुत्रमिवाचरन् तदार्तिहृत् तस्य पीडां हरन् सुखं असूषुपत् स्वापितवान्। आर्त्यतिशये हि स्वापो दुर्लभः॥—मित्सीष्टेति। 'लिङ्सिचावात्मनेपदेषु' इति लिङः कित्त्वाद्गुणाभावः। कृषीष्टेति। 'उश्च' इति कित्त्वाद्गुणाभावः। निजौरसीयन्निति। 'उपमानादाचारे' इति कर्मणः परः क्यच्। अपशर्मणीति। 'अनो बहुव्रीहेः' इति ङीप्प्रतिषेधः। असूषुपदिति। 'ञिष्वप् शये'। 'हेतुमण्यन्तः चङ्'। 'स्वापेश्चङि' इति संप्रसारणम्। लघूपधगुणः। उपधाह्रस्वः। द्विर्वचनम्। 'दीर्घो लघोः'॥

पयायमानामपि तापदायिनीं भृशायितार्तिग्लपितां गिरं भुवः।
कृपायमाणोऽथ निशम्य चिन्तया क्षणं स तूष्णीमकृतासिकां विभुः॥९॥

अथ स विभुः भुवः गिरं निशम्य चिन्तया हेतुना तूष्णीं आसिकां अकृत कृतवान्। पयायमानां पय इवाचरति पयायते तादृशीमपि तापदायिनीं भृशायितार्तिग्लपितां अभृशा भृशा भूता भृशायिता। कृपायमाणः कृपावान्॥—अकृतेति। 'उश्च' इति सिचः कित्त्वम्। पयायमानामिति। 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्। 'पयसस्तु विभाषा' इति सलोपविकल्पः। 'पयस्यमानाम्' इति वा पाठः। भृशायितेति। 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' इत्यर्थे क्यङ्। कृपायमाण इति। 'लोहितादिडाज्भ्यः क्यष्' इत्यत्यर्थ्येर्थे (?) क्यष्॥

निश्चित्य सोऽर्थं सहपार्वतीपतिः सुरैस्तथाधार्मिकराजया भुवा।
कष्टायमानस्य जनस्य शासितुस्तपस्यतां पत्युरगात्पदं हरेः॥ १०॥

स ब्रह्मा अर्थं कर्तव्यं वस्तु निश्चित्य हरेः पदं क्षीराब्धिमगात्। सहपार्वतीपतिः सुरैस्तथा अधार्मिकराजया भुवा च सह। अधार्मिकाः अधर्मं चरन्तो राजानो यस्याः। कष्टायमानस्य पापं कर्तुं यतमानस्य जनस्य शासितुः तपस्यतां तपश्चरतां पत्युः॥—कष्टायमानस्येति। 'कष्टाय क्रमणे' इति क्यङ्। तपस्यतामिति। 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ्। '[त]पसः परस्मैपदं च'। अधार्मिकराजयेति। 'अधर्माच्चेति वक्तव्यम्' इति ठक्। 'डाबुभाभ्यामन्यतरस्याम्' इत्यन्नन्तात् बहुव्रीहेर्डाप्। पार्वतीपतीति। 'पर्वमरुद्भ्यां तप्' इति मत्वर्थीयस्तप्। तस्यापत्य पार्वती। 'अनुपसर्जनात्' इत्यधिकृत्य 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः' इति ङीप्॥

स्वान्याहत स्त्रैणमुरांसि यद्द्विषां नित्यं न चोदायत यत्परो जनः।
सोषुप्यमाणं स तमेकजागृविं वावश्यमानो जगतां शमस्तवीत्॥ ११॥

स तं हरिं अस्तवीत् स्तुतवान्। यद्द्विषा यस्य शत्रूणां स्त्रैणं स्त्रीसमूहः स्वानि उरांसि आहत अताडयत्। यत्परो यद्भक्तो जनो नित्यं न उदायत परदोषाणासूचयच्च। सोषुप्यमाण पुनः पुनः स्वपन्तं एकजागृविं प्रधानजागरूकम्। जगतां शं सुखं वावश्य-

मानः भृशमिच्छन् ॥—आह्वतेति । 'आङो यमहनः', 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्' इति तङ् । 'हनः सिच्' इति सिचः किस्वात् अनुनासिकलोपः । उदायतेति । 'यमो गन्धने' इति सिचः किस्वादनुनासिकलोपः । गन्धनं सूचनम् । सोषुप्यमाणमिति । स्वपेर्यङ् । 'स्वपिस्यमिव्येञां यङि' इति संप्रसारणम् । वावश्यमान इति । 'वश कान्तौ' । कान्तिरिच्छा । यङि 'न वशः' इति संप्रसारणाभावः । जागृविमिति । 'जॄशॄस्तॄजागृभ्यः क्विन्' औणादिकः ॥

पापठ्यमानस्य ऋचश्चतुष्पदाश्चेकीयमानस्य विधेरथात्मनि ।
वैरायमाणेषु विकाषिणा मघोरूष्मायमाणेन वचोऽन्वगृह्यत ॥ १२ ॥

अथ मघोः विकाषिणा हिंसकेन मधुसूदनेन विधेः ब्रह्मणः आत्मनि बुद्धौ वचो अन्वगृह्यत अनुगृहीतम् । चतुष्पदः पादचतुष्टययुक्ता ऋचः पापठ्यमानस्य पौनःपुन्येन पठतः । चेकीयमानस्य भृशं पूजयतः । वैरायमाणेषु वैरं कुर्वाणेषु । ऊष्मायमाणेन ऊष्माणमुद्वमता ॥—'बाष्पोष्मभ्यामुद्वमने' इति क्यङ् । 'अट्कुप्वाङ्–' इत्यादिना णत्वम् । वैरायमाणेष्विति । 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इति क्यङ् । चतुष्पदा इति । 'संख्यासुपूर्वस्य' इत्यकारलोपः । 'टाबृचि' पादान्तादृचि वाच्यायां टाप् । चेकीयमानस्येति । 'चायृ पूजानिशामनयोः' । यङि 'चायः की' इति कीआदेशः । विकाषिणेति । 'कष हिंसायाम्' । 'वौ कष–' इति घिनुण् ॥

स्फीतां दधत्प्रीतिमुपायतावनिं य एव पाथोधिकुमारिकामिव ।
वाचं तदीयामथ सोऽदितात्मभूर्यथासुखायिष्टतरां त्रिविष्टपीम् ॥ १३ ॥

अथ स आत्मभूः ब्रह्मा तदीयां विष्णुसंबन्धिनीं वाचं अदित उक्तवान् य एव पाथोधिकुमारिकामिव लक्ष्मीमिव अवनिं उपायत परिणीतवान् । स्फीतां प्रवृद्धां प्रीतिं दधत् । यया वाचा त्रिविष्टपीं त्रिभुवनं असुखायिष्टतरां अतिशयेन सुखमन्वभूत् ॥—उपायतेति । 'उपाद्यमः स्वकरणे' इति तङ् । 'विभाषोपयमने' इति सिचः किस्वम् । अदितेति । 'दाधा घ्वदाप्' इति घुसंज्ञा । 'स्थाघ्वोरिच्च' इति किस्वमित्वं च । असुखायिष्टतरामिति । 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङ् । 'अकृत्सार्वधातुकयोः–' इति दीर्घः । कुमारिकामिति । 'वयसि प्रथमे', 'वयस्यचरम इति वक्तव्यम्' इति ङीप् । 'केऽणः' इति ह्रस्वः । त्रिविष्टपीमिति । समाहारे द्विगुः । 'द्विगोः' इति ङीप् । स्फीतामिति । 'स्फायी ओप्यायी वृद्धौ' क्तः । 'स्फायः स्फी निष्ठायाम्' इति स्फीआदेशः । 'क्तक्तवतू निष्ठा' ॥

क्षेत्रस्य भक्तीः सुधियां शतप्रभा द्राक्कोटिकाण्डाश्च हरन्त्यहंयवः ।
ये जागरित्वापथि भूरवेहि तान्प्रस्तीमपापानसुरान्प्रमापितान् ॥ १४ ॥

हे भूः, तान् असुरान् प्रमापितान् हतान् अवेहि । ये अपथि अमार्गे जागरित्वा जागरूका भूत्वा सुधियां क्षेत्रस्य भक्तीः भागान् द्राक् झटिति हरन्ति । शतप्रभाः शतेन

१. 'क्षीत' इति पाठः.

रूपभैः क्रीताः कोटिकाण्डाः काण्डकोटिप्रमाणाः । काण्डः प्रमाणविशेषः मानदण्डः । अहंयवः अहंकारिणः प्रस्तीमं घनीभूतं पापं येषाम् ॥—जागरित्वेति । 'न क्त्वा सेट्' इति किरवाभावाद्गुणः । शतरूभा इति । 'तेन क्रीतम्' इति ठक् । तस्य 'अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' इति लुकि 'अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि' [इति] न ङीप् । अभावे टाप् । कोटिकाण्डा इति । 'प्रमाणे द्वयसज्–' इति विहितस्य 'प्रमाणे लो द्विगोर्नित्यम्' इति लुकि कृते 'काण्डान्तात्क्षेत्रे' इति ङीप्प्रतिषेधः । प्रस्तीमेति । 'स्त्यै ष्ट्यै शब्दसंघातयोः' । क्तः । 'स्त्यः प्रपूर्वस्य' इति सप्रसारणम् । 'प्रस्त्योऽन्यतरस्याम्' इति पक्षे मकारः । अहंयव इति । 'अहंशुभमोर्युस्' मत्वर्थीयः । भूरिति । 'नेयङुवङ्स्थानावस्त्री' इति नदीसंज्ञाभावाद्ध्रस्वाभावः । [प्रमापितानिति ।] 'हन्त्यर्थाश्च' इति चुरादिणिच् । 'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्वे पुक् ॥

आप्यानशीतांशुरुचौ नमस्यतः सुरक्षिताहो शयितोऽपि पीनदोः ।
हव्यं सुरैरादयिता श्रृतं हुतं जनिष्यते स त्वयि विष्टरश्रवाः ॥ १९ ॥

स विष्टरश्रवास्त्वयि भूलोके जनिष्यते । अहो अनन्ते शयितः सुप्तोऽपि नमस्यतो नमस्कुर्वतो जनान् सुरक्षिता । आप्यानशीतांशुरुचौ । आप्यानः प्रवृद्धः । रुचिः शोभा । पीनदोः पृथिवबाहुः । श्रृत हुतं हव्यं सुरैरादयिता उपयोजयिता ॥—शयित इति । 'शीङ् स्वप्ने' । क्तः । 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' इति किरवाभावे गुणः । नमस्यत इति । 'नमोवरिवश्चित्रङः क्यच्', 'नमसः पूजायाम्' इति क्यच् । शीतेति । 'श्यैङ् गतौ' । क्तः । 'द्रवमूर्तिस्पर्शयोः श्यः' इति सप्रसारणम् । श्रृतमिति । 'श्रा पाके' । क्तः । 'श्रृत पाके' इति व्यवस्थितविभाषा । धातोः श्रृआदेशः । क्षीरहविषोर्नित्यम्, अन्यत्र न स्यात् । आप्यानेति । 'स्फायी ओप्यायी वृद्धौ' क्तः । 'प्यायः पी' इति व्यवस्थितविभाषया पीआदेशः । अनुपसर्गस्य नित्य सोपसर्गस्य न स्यात् । सुरैरिति । 'गतिबुद्धी–' इत्यत्र 'अत्ति खाद्योः प्रतिषेधो वक्तव्यः' इत्यणिकर्तुः कर्मत्वाभावः । विष्टरश्रवा इति । विष्टरो वृक्षोऽश्वत्थस्तद्रूपत्वेन श्रूयते इति । 'अश्वत्थश्चास्मि वृक्षाणाम्' इति भारते । 'वृक्षासनयोर्विष्टरः' इति मूर्धन्यः ॥

माहा द्विदाम्नीर्बलतः पयोभराद्द्व्यूध्नीरिवोत्पुच्छयमानतर्णकाः ।
जातः शुभंयोर्वसुदेवतः प्रभुस्त्राता घटोध्नीर्व्रजसीम्नि वर्त्स्यति ॥ २० ॥

प्रभुर्वसुदेवतो जातो माहा गास्त्राता व्रजसीम्नि वर्त्स्यति वर्धिष्यते । बलतः बलेन हेतुना द्विदाम्नीः द्वे दामनी यासां पयोभरात् क्षीरातिशयाद्धेतोः द्व्यूध्नीरिव द्वे ऊधसी आपीने यासाम् । उत्पुच्छयमानतर्णकाः पुच्छमुदस्यन्तस्तर्णका यासाम् । घटोध्नीः घट इव ऊधो यासाम् । शुभंयोः शुभान्वितात् ॥—उत्पुच्छयमानेति । 'पुच्छभाण्डचीवराण्णिङ्',

---

१. 'गौः सौरभेयी माहेयी माहा सुरभिरर्जुनी' इति हैमः. २. 'नाम्नीः' इति पाठः.

'पुच्छाद्युदसने पर्यसने वा' इति णिङ् । द्विशाम्रीरिति । 'दामहायनान्ताच' इति संख्यादेर्डीप् । घटोध्नीरिति । 'ऊधसोऽनङ्' समासान्तः । 'बहुव्रीहेरूधसो ङीष्' इत्यूध्नीरिति । 'संख्याव्ययादेर्ङीप्' इति संख्यादित्वाद् ङीप् ॥

विमिश्रयन्विश्वमिदं यशोभरैः पेपीयमानैर्भगवान्भुजंगराट् ।
अमर्षितस्यापदि नो मधुद्विपस्तस्याप्रियत्वेन जनुर्ग्रहीष्यते ॥ १७ ॥

भुजंगराट् अनन्तो भगवान् तस्य मधुद्विषो अप्रियत्वेन अग्रजत्वेन जनुर्जन्म ग्रहीष्यते । पेपीयमानैः क्रियासमभिहारेण वर्धमानैर्यशोभरैरतिशयितैर्यशोभिः इदं विश्वं विमिश्रयन् मिश्रं कुर्वन् नोऽस्माकमापदि अमर्षितस्य अक्षान्तस्य । विमिश्रयन्निति । 'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' इति करणे णिच् । पेपीयमानैरिति । 'धातोरेकाचो हलादेः', 'क्रियासमभिहारे यङ्' पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः । 'लिड्यङोश्च' इति धातोः पीआदेशः । 'मृषस्तितिक्षायाम्' इति सेटो निष्ठाया[मि]: । कित्त्वाभावात् गुणः । अप्रियेति । 'घञर्थे च' इत्यग्रशब्दाद्भावे घः ॥

चङ्क्रम्यमाणानसदध्वनौजसा शोशूयमानान्समरे जिघांसतः ।
तान्दन्दशूकान्सहकृत्वरी हरेर्माया्ग्र्यधाम्न्येष्यति नन्दतो जनिम् ॥ १८ ॥

माया हरेः सहकृत्वरी सहकारिणी सती नन्दतो नन्दगोपात् जनिं जन्म एष्यति । दन्दशूकान् हिंस्रान् असुरान् समरे जिघांसतः असदध्वना दुर्मार्गेण चङ्क्रम्यमाणान् कौटिल्येन गच्छतः ओजसा शोशूयमानान् भृशं वर्धमानान् अग्र्यधाम्नि अग्र्यं श्रेष्ठं धाम प्रभावो यस्याः ॥—चङ्क्रम्यमाणानिति । 'क्रमु पादविक्षेपे' । 'नित्यं कौटिल्ये गतौ' इति गत्यर्थात् कौटिल्य एव यङ् । 'नुगतोऽनुनासिकान्तस्य' इत्यभ्यासस्य नुक् । दन्दशूकानिति । 'दंश दंशने' । 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' इति धात्वर्थगर्हायामेव यङ् । 'यजजपदशां यङः' इत्यूकः । अग्र्यधाम्नीति । 'अग्राद्यत्' 'तत्र भवः' इत्यर्थे 'अन उपधालोपिनोऽन्यतरस्याम्' इति वा ङीप् । 'अल्लोपोऽनः', 'अलोऽन्त्यात्पूर्व उपधा', 'अदर्शनं लोपः' । शोशूयमानानिति । 'विभाषा श्वेः' इति लिड्यङोर्वा संप्रसारणम् । 'शेश्वीयमानान्' इति वा पाठः ॥

उद्द्योतितं येन विपत्तमःसु वः प्रागप्यतिप्रद्युतितस्य शार्ङ्गिणः ।
तस्याद्य नः पालयितुं व्रजेत गां साहायकेनैधयितुं मुदं सुराः ॥ १९ ॥

हे सुराः, यूयं साहायकेन सहायेन व्यापारेण तस्य शार्ङ्गिणः मुदं एधयितुं वर्धयितुं गां भुवं व्रजेत गच्छेत । येन शार्ङ्गिणा वः विपत्तमःसु विपत्स्वेव तमःसु प्रागपि उद्द्योतितं प्रज्वलितं अत्यन्ततेजस्विना भूतं अद्य नः पालयितुं अतिप्रद्युतितस्य अतिशयेन प्रद्योतितुमारब्धस्य ॥—उद्द्योतितमिति । 'द्युती दीप्तौ' । भावे क्तः । 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' इति सेटो निष्ठायाः पक्षे कित्त्वाभावः । प्रद्युतितस्येत्यादिकर्मणि कित्त्वपक्षः । साहायकेनेति । 'सखाऽपगायनरूपवर्णाद्भ्यः...क्षेनस्तेनारोमस्त्रचवर्मवर्णचूर्णचुरादिभ्यो णिच्' इति

चुरादिभ्यः स्वार्थे णिच्। एधयितुमिति। 'हेतुमति च' इति स्वतन्त्रस्य कर्तुः प्रेरकः, तद्व्यापारे प्रेषणादौ वाच्ये णिच्। साहायकेनेति। 'सहायाद्वा' इति वुञ्॥

महीयमानस्य महीं व्रजेज्जगद्गोपायितुं कामयितुर्मनुष्यताम्।
ऋतीयमानस्य धृतिं सपर्यया देवस्य शिश्वाययिषद्द्युयौवनम्॥२०॥

द्युयौवन स्वर्गयुवतिसमूहः देवस्य सपर्यया पूजया धृतिं मुदं शिश्वाययिषत् वर्धयितुमिच्छत् महीं व्रजेत् गच्छतु। जगत् गोपायितुं रक्षितुं मनुष्यता कामयितुरेषणशीलस्य॥—महीयमानस्येति। 'महीङ् पूजायाम्'। 'कण्ड्वादिभ्यो यक्'। गोपायितुमिति। 'गुपूधूपविच्छिपणिपनिभ्य आयः'। ऋतीयमानस्येति। ऋती सौत्रो धातुः घृणायां वर्तते। 'ऋतेरीयङ्'। कामयितुरिति। 'कमेर्णिङ्'। शिश्वाययिषदिति। श्वेर्णिजन्तात् सनि शतृणि च। 'संश्वडोः' इति संप्रसारणे विकल्पः। यौवनेति। युवतिशब्दात् भिक्षादिषु पाठात् विषये पुंवद्भावात्तिप्रत्ययनिवृत्तिः। 'अन्' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपाभावः॥

पादाब्जधूल्या पवितां विधाय गां यशो गुफित्वा विभवोऽपि भूयसि।
अजोऽतृषित्वासुरभारजा रुजो भुवो लुचित्वाशु पदं स्वमेष्यति॥२१॥

अजो विष्णुरेवं कृत्वा आशु स्व पदमेष्यति प्राप्स्यति। किं कृत्वा। पादाब्जधूल्या श्रीपादारविन्दपरागेण गां भूमिं पवितां विधाय यशो गुफित्वा प्रथितं कृत्वा भूयसि बहुतरेऽपि विभवे अतृषित्वा स्पृहामकृत्वा भुवः असुरभारजाः [रुजः] पीडाः लुचित्वा अपनीय॥—पवितामिति। क्तः। 'पूङश्च' इति वेट्। 'पूङः क्त्वा च' इति कित्वाभावः। गुफित्वा इति। 'गुफ गुम्फ ग्रन्थे'। 'नोपधात्थफान्ताद्वा' इति पाक्षिकः कित्वाभावः। लुचित्वेति। 'लुञ्चु अपनयने'। क्त्वा। 'वञ्चिलुञ्च्यृतश्च' इति वा कित्वप्रतिषेधः। अतृषित्वा इति। 'ञितृष पिपासायाम्'। 'तृषिमृषिकृशेः काश्यपस्य' इति सेटः क्त्वाप्रत्ययस्य वा कित्वम्। एष्यति। 'स्यतासी लृलुटोः' इति लृटि स्यः॥

कृत्वेति दिद्योतिषु निर्मनोरुजं हृदिस्पृशा सार्वगिराविचाचलिः।
गोप्ता सतां तत्स सदस्ततोऽश्वयीदतिद्यु वेधा निजधाम चित्रगुः॥२२॥

स वेधाः तत् सदः तां सभामिति सार्वगिरा सर्वस्मै हितया गिरा निर्मनोरुजं मनोरुजाया मनःपीडायाः निर्गतं कृत्वा ततः तस्मात् स्थानात् निजधाम अश्वयीत् गतवान्। सतां स्वधर्मनिरतानां गोप्ता। अविचाचलिः स्थिरबुद्धिः। चित्रगुः चित्राः गावो यस्य। दिद्योतिषु द्योतितुमिच्छु। हृदिस्पृशा मनोहरया हृदि स्पृशतीति। अतिद्यु द्यामतिक्रान्तम्॥—दिद्योतिष्विति। 'रलो व्युपधाद्धलादेः संश्च' इति सेटः सनः पाक्षिके कित्वाभावे गुणः। सार्वगिरेति। [सर्वस्मै हिता। 'सर्वपुरुषाभ्यां णढञौ' इति णप्रत्यये आदिवृद्धिः।] 'गॄ शब्दे'। संपदादित्वात् क्विप्। 'अपृक्त एकाल्प्रत्ययः' इत्यपृक्तसंज्ञा। 'वेरपृक्तस्य' इति वेर्लोपः। 'तत्पुरुषः समानाधिकरणः कर्मधारयः' इति कर्मधारयसंज्ञा। 'पुंवत्कर्मधारय—'

इति पूर्वपदस्य पुंवद्भावः । निजधामेति । विशेषणसमासः । 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्युपसर्जनसंज्ञा । 'उपसर्जनपूर्वम्' इति निजशब्दस्य पूर्वनिपातः । निर्मनोरुजमिति । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः । 'एकविभक्ति चापूर्वनिपाते' इति मनोरुजां शब्दस्योपसर्जनसंज्ञा । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञायां सुप् । वेधा इति । 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति प्रातिपदिकसंज्ञा । चित्रगुरिति । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । अतिगु । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम् । 'एच [इग्घ्रस्वादेशे'] इति ह्रस्वादेशे 'स्थानेऽन्तरतमः' 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' । गोप्ता इति । 'आयादय आर्धधातुके वा' इति तस्य पाक्षिक आयः । हरिस्पृशेति । 'हृगुभ्यां डेरुपसंख्यानम्' इत्यलुक् । अविचाचलिरिति । चलेर्यङ् । 'सहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ' ॥

> ऐन्द्रीं पुरीमाजुहुवे चकासती या शूरसेनेषु विभाति नीवृति ।
> गुण्येषु पुण्या मधुरेति पूरभूत्तत्रोग्रसेनः किल पार्थिवाग्रणीः ॥ २३ ॥

मधुरा इति प्रसिद्धा या पूरैन्द्रीं पुरीमाजुहुवे स्पर्धया आहूतवती । तत्र उग्रसेनः पार्थिवाग्रणीः राजश्रेष्ठः अभूत् किल । शूरसेनेषु नीवृति जनपदे चकासती शोभमाना विभाति (दीप्यमाने) । गुण्येषु गुणवत्सु पुण्या शुद्धकरी ॥—शूरसेनेष्विति । शूरसेनानां राज्ञां निवास इति विगृह्य 'तस्य निवासः' इत्यण् । तस्य 'जनपदे लुप्' । 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृत्यर्थवदेव लिङ्गसंख्ये । गुण्येष्विति । यत्प्रकरणे 'अन्येभ्योऽपि दृश्यते' इति यत्प्रत्ययः । यानि विशेषणानि तेषां युक्तवद्भावाभावः (?) । पार्थिवाग्रणीरिति । 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण् । 'तस्येश्वरः' इत्यर्थे । 'अग्रग्रामाभ्यां नयतेर्णो वक्तव्यः' इति णत्वम् । नीवृतीति संपदादित्वाद्वृतेः क्विप् । 'नहिवृति-' इति नेर्दीर्घः । आजुहुवे इति । 'ह्वेञ् स्पर्धायामाह्वाने' । 'अभ्यस्तस्य च' इति द्विर्वचनात् पूर्वं संप्रसारणम् ॥

> ऊवुस्तथान्ये न नृपा वृपापि नो ववौ यथोवाय यशःपटं गुणैः ।
> सोऽविद्धचेता विषयेण तेन वा निजेव पत्नी पतिवत्त्यभून्मही ॥ २४ ॥

स उग्रसेनो गुणैरागाभिगामिकैः सांग्रामिकैश्च यशःपटं यश एव पटं यथा उवाय वयति-स्म, तथा अन्ये नृपाः न ऊवुः उतवन्तः । वृषा इन्द्रः तथा नो ववौ न उतवान् । विषयेण विषयैः शब्दादिभिरविद्धचेताः अनभिभूतचित्तः । तेन निजा पत्नीव मही पतिवत्नी सभर्तृका अभूत् ॥—विषयेणेति । 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' इति जात्यर्थस्य वा बहुवद्भावः । विद्धेति । 'न संप्रसारणे संप्रसारणम्' इति पूर्वे परस्य संप्रसारणे कृते पूर्वस्य प्रसक्तं प्रतिषिध्यते । उवायेति । 'वेञ् तन्तुसंताने' । 'वेञो वयिः' इति 'लिटि वयो यः' इति यकारस्य संप्रसारणं प्रतिषिध्यते । ऊवुरिति । 'वश्चान्यतरस्यां किति' इति यकारस्य वा वकारः । ववाविति । 'वेञः' इति संप्रसारणद्वयं प्रतिषि-

धत्ते । पतिवत्नीति । पतिशब्दान्मतुप् । 'अन्तर्वत्पतिवतोर्नुक्' । नान्तत्वादुगित्वान्ङीप् । पत्नीति । 'पत्युर्नो यज्ञसंयोगे' इति पतिशब्दस्य नकारः, नान्तत्वान्ङीप् ॥

प्रवाय कीर्तिं सिचयं दिशोऽमुना प्रवाय सम्यक्परिवीय वा दिवम् ।
बभूव राजन्सहजोऽस्य देवकः प्रज्याय सन्तं सुजनं निषेविता ॥ २५ ॥

अस्य उग्रसेनस्य सहजो देवको बभूव । कीर्तिं सिचयं वस्त्रं प्रवाय अमुना सिचयेन दिशः प्रवाय आच्छाद्य दिवं च सम्यक् परिवीय परिवीतां कृत्वा राजन् दीप्यमानः प्रज्याय सन्तं जरद्भूय वर्तमानं सुजनं निषेविता वृद्धसेवकः ॥—प्रवायेति । 'ल्यपि च' इति वेञः संप्रसारणाभावः । प्रज्यायेति । 'ज्या वयोहानौ'। 'ज्यश्च' इति ल्यपि सप्रसारणप्रतिषेधः । प्रवायेति । वेञः सप्रसारणे 'व्यश्च' इति ल्यपि संप्रसारणाभावः । परिवीयेति । 'विभाषा परेः' इति वेञो ल्यपि सप्रसारणम् । 'हलः' इति दीर्घत्वेन तुग् बाध्यते ॥

पूतक्रतायीं च मनुं च मानवीं वृषाकपायीं च करिष्यती तिरः ।
उल्लालसामास गुणैरकृत्रिमै रतेः सपत्नीव सुतास्य देवकी ॥ २६ ॥

अस्य देवकस्य देवकी नाम सुता उल्लालसामास भृशं शुशुभे । अकृत्रिमैः स्वाभाविकैर्गुणैरेतास्तिरःकरिष्यती तिरःकर्तुमारब्धा । पूतक्रतायीं पूतक्रतोरिन्द्रस्य स्त्रियं शचीं मनुं मनोः स्त्रियं शतरूपां च, मानवीं मनोः ऽपत्यं देवहूतिम्, वृषाकपायीं वृषाकपेः स्त्रियं च श्रियं गौरीं वा । रतेः सपत्नीव तया सदृशी ॥—उल्लालसामासेति । लसः (?) । 'कास्प्रत्ययादाममन्त्रे लिटि' इति लिटि आम्प्रत्ययः । 'कास्यनेकाच इति वक्तव्यम्' । 'सुलुम्पायर्थः' । सपत्नीति । 'नित्यं सपत्न्यादिषु' इति निपात्यते । समानः पतिरस्या इति विग्रहः । पतिशब्दस्य नकारः । समानस्य सत्वं ङीप् । पूतक्रतायीमिति । 'पूतक्रतोरै च' इति ङीप् । ऐकारादेशश्च । वृषाकपायीमिति । 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' इति ङीबैकारादेशौ । 'हरविष्णू वृषाकपी' । मनुमिति । 'मनोरौ वा' इति ङीप्सहितयोरौकारैकारयोरभावे पाक्षिके रूपम् । मानवीमिति । मनोरपत्यमित्यण् । देवकीमिति । देवकस्यापत्यं देवकी । 'अत इञ्', 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः । 'इतो मनुष्यजातेः' इति ङीप् । देवकी ॥

गार्गीव विज्ञानचणा यशश्चयैः श्येनीः कटाक्षोष्ठमृदुस्मितैर्दिशः ।
गौरीगरिष्ठा शबलीर्वितन्वती सैधांबभूवाद्भुतकामनीयका ॥ २७ ॥

सा देवकी एधांबभूव ववृधे । गार्गी गर्गस्य गोत्रापत्यमिव विज्ञानचणा ज्योतिषाविज्ञानेन प्रसिद्धा । यशश्चयैः दिशः श्येनीः श्वेतवर्णा वितन्वती । कटाक्षोष्ठमृदुस्मितैः दिशः शबलीः चित्रवर्णा वितन्वती । गौरीगरिष्ठा गौरीव गुरुतरा । अद्भुतकामनीयका । कामनीयकं कमनीयत्वम् ॥—एधांबभूवेति । 'इजादेश्च गुरुमतोऽनृच्छः' इति आम् । आमो मित्वमदन्तत्वात् 'आमः' इति लुक् । कृत्संज्ञायां प्रातिपदिकत्वे सु, तस्य 'अव्य-

यादाप्सुपः' इति सुपो लुक् । 'स्वरादिनिपातमव्ययम्' इत्यव्ययसंज्ञा । अम्आमिति स्वरादिषु पठ्यते । गार्गीति । 'गर्गादिभ्यो यञ्', 'यञश्च' इति ङीप् । श्येनीरिति । श्येतो गुणोऽस्यास्तीति श्येतः।'गुणवचनेभ्यो मतुपो लुगवक्तव्यः' । 'वर्णादनुदात्तात्तोपधात्तो नः' इति वा ङीप् । तकारस्य नकारः ।(श्यामलीरिति) अन्यतो ङीप् । गौरीति । 'षिद्गौरादिभ्यश्च' इति ङीप् । कामनीयका इति । 'योपधाद्गुरूपोत्तमाद्वुञ्' । भावकर्मणोः ॥

स्वःस्त्रैणसौस्त्राभिमतिं सतीतरा विध्याय तत्रे कुलधर्मसंपदम् ।
सा जागरामास निषेवणे हरेरासांबभूवात्मसु पुण्यशालिनाम् ॥ २८ ॥

सा स्वःस्त्रैणसौस्त्राभिमतिं स्वर्गस्त्रीसमूहस्य सुस्त्रीत्वाभिमानं विध्याय संवृतं चकार । सतीतरा अतिशयेन साध्वी कुलधर्मसंपदं स्वकुलधर्मसम्बृद्धिं तत्रे ररक्ष । हरेर्निषेवणे जागरामास तत्परा बभूव । पुण्यशालिनां आत्मसु आसांबभूव उपविवेश ॥—जागरामासेति । 'उषविदजागृभ्योऽन्यतरस्याम्' इत्याम् । तत्र इति । 'आदेच उपदेशेऽशिति' इत्यात्वम् । लिटः कित्वे आतो लोपः । 'द्विर्वचनेऽचि' इति स्थानिवद्भावाद् द्विर्वचने पुनरप्यात्लोपः । विध्यायेति । 'न ध्यो लिटि' इत्यात्वाभावः । 'लिट्यभ्यासस्यो[भयेषाम्]' इति संप्रसारणम् । णलि 'अचो ञ्णिति' इति वृद्धिः । [सौस्त्रमिति ।] सुस्त्रीशब्दाद्युवादित्वादण् भावे ॥

विदांकुरु श्रीमति पुत्रि नो गिरः स्फारादरेति प्रतिपित्सुरागमान् ।
गुरोः सदाध्यापयतोऽनुशासनं नम्रेण मूर्ध्ना बिभरांचकार सा ॥२९॥

सा गुरोः इति अनुशासनं नम्रेण मूर्ध्ना सदा बिभरांचकार धृतवती । हे पुत्रि, नः गिरः विदांकुरु जानीहि । इति स्फारादरा स्फारः प्रचुरः । प्रतिपित्सुः ज्ञातुमिच्छुः । आगमानध्यापयतः नः ॥—न इति । 'अस्मदो द्वयोश्च' इति वा बहुत्वम् । बिभरांचकारेति । 'डुभृञ् धारणपोषणयोः' । 'भीह्रीभृहुवां श्लुवच्च' इति वा आम् । श्लुवद्भावाद्द्विर्वचनम् । 'कृञ्चानुप्रयुज्यते लिटि' इति लिडन्ताः कृञ्वस्तय आम्प्रत्ययस्य पश्चात्प्रयुज्यन्ते । विदांकुर्विति । 'विद ज्ञाने' । 'विदांकुर्वन्त्वित्यन्यतरस्याम्' इति निपातनम् । लोट्याम्प्रत्ययः । गुणाभावः । लोटो लुक् । 'कृञो लोट्परस्यानुप्रयोगश्च न केवलं प्रथमपुरुषबहुवचनान्तः । 'सर्वाण्येव लोड्वचनान्यन्यत्र प्रयुज्यन्ते' इति वृत्तौ । स्फारेति । 'स्फुरतिस्फुलत्योर्घञि' इति एच आकारः । अध्यापयत इति । 'क्रीङ्जीनां णौ' इति एचः स्थाने आकारः ॥

गुणैर्यदीयैरतृपन्दिवौकसो व्यभ्रक्षदुच्चैर्न च पुण्यकर्म यः ।
अमूमुपायंस्त यदोः स जन्मना विभूषयन्नानकदुन्दुभिः कुलम् ॥३०॥

स आनकदुन्दुभिरमूं देवकीमुपायंस्त परिणीतवान् । यदीयैर्गुणैर्दिवौकसोऽप्यतृपन् जहृषुः । यश्च उच्चैर्महदन्तःकरणशुद्धिद्वारकमुक्तिप्रदं पुण्यकर्म न व्यभ्रक्षत् अर्थकामफलन-

१. 'कृन्मेजन्तः' इत्यव्ययसंज्ञा इति तत्त्वम्.

तया लघूकृतवान्। 'ये स्वधर्मे दहन्ति धीराः कामार्थहेतवे' इति भागवते। जन्मना यदोः कुलं विभूषयन् यदुकुलालंकारभूतः॥—दिवौकस इति। देवानां बहुना प्रसर्थशब्दनिवेशे 'सरूपाणामेकशेष एकविभक्तौ' इति एक एव शिष्यते अन्येषां निवृत्तिः। उपायंस्तेति। 'चिल लुङि'। 'च्लेः सिच्'। सिचः कित्वाभावपक्षे अनुनासिकालोपाभावः। अद्दृपन्निति। 'स्पृशमृशकृषतृपदृपां सिज्वावक्तव्यः' इति सिजभावपक्षे च्लेरङ्। अधुक्षदिति। 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशः। 'दादेर्धातोर्घः' इति हस्य घः। 'एकाचो बशो भष्–' इत्यादिना घस्य चर्त्वम्॥

गर्गेण निर्व्यूढविवाहसंस्कृती तौ चक्रवाकाविव वत्सलौ मिथः।

वात्स्यादि गार्ग्याविव दंपती गतौ वाडव्यमाश्लिक्षदुदश्रु हर्षुलम्॥३१॥

तौ दंपती वात्स्यादि वाडव्यं ब्राह्मणसमूहः यथोचितमाश्लिक्षत् आलिलिङ्ग। वात्सी च वात्स्यायनश्च वात्स्यौ। गार्ग्याविव। गार्गी च गार्ग्यायणश्च गार्ग्यौ। गर्गेण कुलगुरुणा निर्व्यूढविवाहसंस्कृती कृतविवाहसंस्कारौ। चक्रवाकाविव। जन्मान्तरवासनया वत्सलौ स्निग्धौ। चक्रवाकश्च चक्रवाकी च चक्रवाकौ। उदश्रु स्नेहात् उद्गतबाष्पं हर्षुलं हर्षयुक्तम्॥—गार्ग्याविति। 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः' इति वृद्धः शिष्यते। 'अपत्यं पौत्रप्रभृति गोत्रम्'। अपत्यमन्तर्हितं वृद्धम्। वात्स्योति। 'स्त्री पुंवच्च' इति यूना सहवचने वृद्धा स्त्री शिष्यते। तस्याः पुमर्थवद्भावश्च। चक्रवाकाविति। 'पुमान् स्त्रिया' इति पुमान् शिष्यते। हर्षुलमिति। 'हर्षेरुलच्' औणादिकः। आश्लिक्षदिति। 'श्लिष आलिङ्गने' इति क्सः॥

अतूतुपत्तां कबरीधृतस्रजं कंसः कनिष्ठामुपलाल्य देवकीम्।

अदर्शतां सादरमानुकूलिकौ पुत्रौ दधानौ पितरौ कृतार्थताम्॥ ३२॥

कंसः कनिष्ठां तां [देवकीं] उपलाल्य अतूतुपत् तोषयति स्म। कबरीधृतस्रजं [कबरी] केशरचना। पितरौ माता पिता च। आनुकूलिकौ अनुकूलं वर्तमानौ। पुत्रं दुहितरं च पुत्रौ सादरमदर्शताम् अपश्यतां कृतार्थतां दधानौ॥—पुत्राविति।'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इति पुत्रः शिष्यते। दुहिता निवर्तते। पितराविति। 'पिता मात्रा' इति पितावशिष्यते। अदर्शतामिति। 'न दृशः' इति क्साभावे 'इरितो वा' इत्यङ्। 'ऋदृशोऽङि गुणः'। 'उरण् रपरः'। अतूतुपदिति। 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङ्। 'णौ चङ्युपधाया ह्रस्वः'। 'चङि' इति द्विर्वचनम्। कबरीति। 'जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु' इति ङीष्॥

बाष्पायमाणौ श्वशुरौ प्रणम्य तौ शौरिर्वियोगार्त्युपदातृचेतसौ।

वस्त्यात्तदीयादथ साधितार्थया जन्यान्वितो बन्धुतया निरैयत॥ ३३॥

अथ शौरिः जन्यया भार्यया सह तौ श्वशुरौ श्वशुरं श्वश्रूं च प्रणम्य तुरीयात् चतुर्थात् गृहात् निरैयत निर्गतवान् । बाष्पायमाणौ बाष्पमुद्वमन्तौ वियोगग्लानिपरदातृचेतसौ । उपदातं क्षयं गन्त् । साधितार्थया बन्धुतया बन्धुसमूहेन अन्वितः । अथो विवाहः ॥—श्वशुराविति । 'श्वशुरः श्वश्र्वा' इति श्वशुरः शिष्यते । 'श्वशुरस्योकाराकारलोपश्च वक्तव्यम्' इति ऊङि श्वश्रूः । साधितेति । 'सिध्यतेरपारलौकिके' इत्यात्वम् । उपदातेति । 'दीङ् क्षये' । 'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्वम् । बन्धुतयेति । 'ग्रामजनबन्धुसहायेभ्यस्तल्' ॥

शोणीर्वद्गर्गा धवलाश्च बर्करान्पट्टश्च दासीर्गुणशालि हास्तिकम् ।
पुत्र्यै पिता यौतकमुन्मनीभवन्नदिक्षदश्वान्रथकट्यया सह ॥ ३४ ॥

पिता पुत्र्यै यौतकं स्त्रीधनं अदिक्षत् दत्तवान् । किं तत् । शोणीः धवलाश्च बद्गः गाः वृषभांश्च । बर्करान् तरुणान् पशून् तरुणीश्च । पट्टः दासीश्च । गुणशालि हास्तिकं हस्तिनां हस्तिनीनां च समूहम् । अश्वान् अश्वाश्च । रथकट्यया रथसमूहेन सह । उन्मनीभवन् उत्कीभवन् ॥—[गा इति ।] 'ग्राम्यपशुसंघेष्वतरुणेषु स्त्री' इति स्त्री शिष्यते । तत्तुबर्करानिति(?) । अश्वानिति । 'अनेकशफेष्विति वक्तव्यम्' इति पुमान् शिष्यते । शोणीरिति । 'शोणात्प्राचाम्' इति वा ङीष् । पट्टीरिति । 'वोतो गुणवचनात्' इति वा ङीष् । हास्तिकमिति । 'अचित्तहस्तिधेनोष्ठक्' समूहे हस्तिनी । प्रातिपदिकात्तु 'भसाढे तद्धिते पुंवद्भावो वक्तव्यः' । रथकट्ययेति । 'इनित्रकट्यचश्च' इति रथात् कट्यच् । पुत्र्यै इति । गौरादिः । केचिच्छार्ङ्गरवादिपाठात् ङीनिति । अन्यस्त्वाह—पुत्राद्वेति पुत्रा पुत्रीति ॥

व्यतिप्रभानो विविधस्तदोच्चकैस्तत्रैधते माङ्गलिकः स निस्वनः ।
रथेन कंसप्रगृहीतरश्मिना जायापतीभ्यामथ निर्ययै शनैः ॥ ३५ ॥

तदा तत्र माङ्गलिकः मङ्गलार्थो विविधो निस्वनः उच्चकैः एधते स्म । व्यतिप्रभानः अन्योन्यविनिमयेन प्रकर्षेण शोभमानः । अथ जायापतीभ्यां रथेन शनैः निर्ययै निष्क्रान्तम् । कंसप्रगृहीतरश्मिना कंसः सारथ्यमकरोत् ॥—एधते इति । 'एध वृद्धौ' । 'भूवादयो धातवः' इति धातुसंज्ञा । 'उपदेशेऽजनुनासिक इत्' इति अकारस्येत्संज्ञायाम् 'तस्य लोपः' इति लोपः । 'अनुदात्तङित आत्मनेपदम्' । निर्ययै इति । 'भावकर्मणोः' इत्यात्मनेपदम् । व्यतिप्रभानः । 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम् ॥

शस्त्रापगोरं चलतां पदोद्धतं रजो भटानामदधत्प्रभां रवेः ।
क्ष्वेला च वादित्रनिनादमांसला घनाघनानां निनदं निरास्थत ॥ ३६ ॥

भटानां पदोद्धतं रजः रवेः प्रभां अदधत् अपिबत् । शस्त्रापगोरं शस्त्राण्युद्यम्य चलतां गच्छतां क्ष्वेला सिंहनादः च घनाघनानां वर्षाकालमेघानां निनदं निरास्थत निर-

सवि स्म । वादित्रनिनादमांसला ॥—अदधदिति । 'धेट् पाने' । 'विभाषा धेट्श्व्योः' इति चङ् । 'टुटूं इति चकारस्येत्संज्ञा । निरास्थतेति । 'असु क्षेपणे' । 'उपसर्गादस्यत्यूह्योर्वा वचनम्' इति तङ् । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङ् । 'अस्यतेस्थुक्' । मृत्वापगोरमिति । 'द्वितीयायां च' इति णमुल् । 'अपगुरो णमुलि' इति वा आत्वम् । 'मृत्वापगामम्' इति वा पाठः । रज इति । 'रजकरजनरजःसूपसंख्यानम्' इति रश्वेर्नलोपः ॥

पद्गाः सलीलं व्यतिजग्मुरुत्सुकाः परस्परं व्यत्यभवंश्च वेगिनः ।
अन्योन्यमुच्चैर्व्यतिदध्वनुः पथि न्यविक्षतान्तः परमोत्सवो नृणाम् ॥ ३७ ॥

पद्गाः पद्भ्यां गच्छन्तः पदातयः पथि सलीलं व्यतिजग्मुः क्रियाविनिमयेन गतवन्तः । परस्परं व्यतिभवंश्च क्रियाविनिमयेनाभवंश्च । अन्योन्यमुच्चैर्व्यतिदध्वनुः शब्दं चक्रुश्च । उत्सुकाः वेगिनः । परमोत्सवः नृणां अन्तः अन्तःकरणं न्यविक्षत ॥—व्यतिजग्मुरिति । 'न गतिहिंसार्थेभ्यः' इति तङ्ङभावः । 'इतरेतरान्योन्योपपदाच्च' इति तङ्ङभावः । व्यत्यभवंश्चेति । 'परस्परोपपदाच्चेति वक्तव्यम्' इति तङ्ङभावः । न्यविक्षतेति । 'नेर्विशः' इति तङ् । पद्गा इति । इति हलन्तपक्षः (सूत्रप्रायायाः) । 'न विभक्तौ तुस्माः' इति जसः सकारस्येत्संज्ञया अभावः ॥

विलापयित्री जनमुग्रसेनजं द्राग्भापयित्री भृशमस्य पञ्चताम् ।
निश्चापयन्ती निकटे तदा वियत्युच्चैरुदस्थादशरीरिणीति गीः ॥ ३८ ॥

तदा वियति वक्ष्यमाणप्रकारा उच्चैः अशरीरिणी गीः निकटे उदस्थात् जनं विस्मापयित्री उग्रसेनजं कंसं भृशं भापयित्री भीतिं कर्त्री अस्य पञ्चतां निश्चापयन्ती निश्चितां कुर्वती ॥—'चित्र् चयने'। 'चिस्फुरोर्णौ' इति वा आत्वम् । भापयित्रीति । 'ञिभी भये'। 'आदिर्ञिटुडवः' इति ञेरित्संज्ञा । 'बिभेतेर्हेतुभये' इति वा आत्वम् । विस्मापयित्रीति । 'नित्यं स्मयतेः' इत्यात्वम् ॥

द्राप्सीः स्म मा शीर्ष्णि हि कंस तेऽर्पितः स्वृप्तान्तकस्त्वाममतिर्विजेष्ट मा ।
अस्या भवानीसदृशोऽष्टमः सुतो विक्रेष्यते ते स्वबलेन जीवितम् ॥ ३९ ॥

हे कंस, त्वं मा द्राप्सीः मा दृपः । सृप्ता ईश्वरेण अन्तकः ते शीर्ष्णि मूर्धनि अर्पितः हि एव अमतिः अज्ञानं त्वां [मा] विजेष्ट परिभूत् । अस्याः अष्टमः सुतः ते जीवितं स्वबलेन विक्रेष्यते विक्रीतं करिष्यति । भवानीसदृशः पार्वतीतुल्यायाः ॥—विक्रेष्यते इति । 'परिव्यवेभ्यः क्रियः' इति तङ् । भवानीति । 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' इति ङीषानुकौ । सृप्तेति । 'सृजिदृशोर्झल्यमकिति' इत्यमागमः । 'विदश्चोऽन्यतरस्याम्' । द्राप्सीरिति । 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति वा अमागमः । 'रथादिभ्यश्च' इति इट्निषेधः । [शीर्ष्णीति ।] 'शीर्षंश्छन्दसि' ॥

संशृण्वतस्तामवृधद्गिरं हृदि क्रुदारदक्षिद्वयमाशु रक्तिमा ।
घर्माम्बु कंसस्य तदासिचत्तरां स्रुतोऽङ्गरागोऽलिपताखिलं वपुः ॥४०॥

तदा तां गिरं संशृण्वतः कंसस्य हृदि क्रुत् क्रोधः अवृधत् ववृधे । अक्षिद्वयं रक्तिमा रक्तत्वं आशु आरत् प्राप्तः । घर्माम्बु अखिलं वपुः असिचत्तरां अतिशयेन सिक्तमकरोत् । स्रुतः अङ्गरागः अलिपत लिप्तमकरोत् ॥—असिचत्तरामिति 'लिपिसिचिह्वश्च' इत्यङ् । अलिपतेति 'आत्मनेपदेष्वन्यतरस्याम्' इत्यङ् । अवृधदिति । 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इत्यङ् । आरदिति । 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ् ॥

रजोविलिप्तीं तनुमुद्वहन्बलक्रीतीं विधास्यन्निजजीवितस्थितिम् ।
स शङ्खभिन्नीर्नृपतिर्द्विषां तनूः कर्तारमुग्रं करवालमाददे ॥ ४१ ॥

स नृपतिः उग्रं करवालं आददे । रजोविलिप्तीं अल्पेन रजसा विलिप्तां तनुं उद्वहन् । निजजीवितस्थितिं बलक्रीतीं बलेन क्रीतां विधास्यन् । द्विषां तनूः शङ्खभिन्नीः कर्तारम् ॥ आददे इति । 'डु दाञ् दाने' । 'आङो दोऽनास्यविहरणे' इति तङ् । बलक्रीतीमिति । 'क्रीतात्करणपूर्वात्' इति ङीप् । रजोविलिप्तीमिति । 'क्तादल्पाख्यायाम्' इति ङीप् । शङ्खभिन्नीरिति । 'बहुव्रीहेश्चान्तोदात्तात्' इति ङीप् ॥

मनोज्ञगात्री मधुरारुणाधरा शातोदरी चन्द्रमुखी पृथुस्तना ।
नृपेण दोष्णा सहजा जिघांसुना शीर्षण्यवाल्षु हठादगृह्यत ॥ ४२ ॥

शातं कृशम् । चन्द्रमुखीति । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति वा ङीप् । मनोज्ञगात्रीति । 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति वा ङीप् । शातोदरीति । 'नासिकोदरोष्ठजङ्घादन्तकर्णश्रृङ्गाच्च' इति वा ङीप् । मधुरारुणाधरेति । 'न क्रोडादिबह्वचः' इति ङीप् । प्रतिषेधे टाप् । शीर्षण्येति । 'शरीरावयवाद्यत्' इति शिरश्शब्दाद्यत् । 'ये च तद्धिते' 'वा केशेषु [शिरसः शीर्षन्नादेशो वक्तव्यः'] इति शीर्षन्नादेशः । 'ये चाभावकर्मणोः' इति प्रकृतिभावः । दोष्णेति । 'पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु' इति दोषन्नादेशः ॥

अनासिका शूर्पणखा कृता न किं रामेण नो वा किमहानि ताटका ।
खले ब्रुवत्येवमवाङ्मुखी सती तस्मिन्नशेषा जनताथ सारुदत् ॥ ४३ ॥

तस्मिन् एवं ब्रुवति अशेषा सा जनता अवाङ्मुखी सती अरुदत् । रामेण शूर्पणखा अनासिका किं न कृता । ताटका नो वा किमहानि इति खले ॥—अरुददिति । 'रुदिर् अश्रुविमोचने' । 'इरितो वा' इत्यङ् । अनासिकेति । 'सहनञ्विद्यमानपूर्वाच्च' इति ङीष्प्रतिषेधः । शूर्पणखेति । 'नखमुखात्संज्ञायाम्' इति ङीष्प्रतिषेधः । अवाङ्मुखीति 'दिक्पूर्वपदान्ङीप्' इति ङीप् ॥

---

१. 'अघानि' इति युक्तम्.

उपस्थिते पाणिगृहीत्युपप्लवे भयं समाश्वद्धृदि पत्युरुच्चकैः।
महान्विमर्शोऽप्युदपादि रोपणं ततः स विद्वानिति कंसमाख्यत॥ ४४॥

पाणिगृहीत्युपप्लवे पत्नीविनाशे उपस्थिते पत्युः हृदि भयं उच्चकैः समाश्वत् ववृधे। महान् विमर्श उदपादि उपपन्नो विततः कंसमिति आख्यत रोपणं विद्वान्॥—समाश्वदिति। 'जूस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यः' इति वा अङ्। उदपादि 'चिण् ते पदः' इति च्लेश्चिण्णादेशः। पाणिगृहीतीति पाणिर्गृहीतोऽस्या इति 'पाणिगृहीत्यादीनामर्थविशेषे ङीष्वक्तव्यः'॥

उत्तिष्ठसे कर्मणि किं जुगुप्सिते संदिह्य धर्मे त्वयि तिष्ठते जनः।
संक्रीडतां कीर्तिरदूषितैव ते का वा त्वरैषा ह्यवतिष्ठते वशे॥ ४५॥

त्वं जुगुप्सिते निन्दिते कर्मणि किं उत्तिष्ठसे ईहसे। जनः धर्मे संदिह्य त्वयि तिष्ठते निर्णयहेतुत्वेनाश्रयति। ते कीर्तिः अदूषितैव संक्रीडताम्। का वा त्वरा एषा। वशे अधीने अवतिष्ठते हि॥—संक्रीडतामिति। 'क्रीडोऽनुसंपरीभ्यश्च' इति तङ्। अवतिष्ठते इति। 'समवप्रविभ्यः स्थः' इति तङ्। तिष्ठते इति। 'प्रकाशनस्थेयाख्ययोश्च' इति तङ्। उत्तिष्ठस इति। 'उदोऽनूर्ध्वकर्मणि' 'उद ईहायामिति वक्तव्यम्' इति तङ्॥

अदीपि कोपः कुत एष नह्यसौ न स्यादशिश्वीत्यधुनास्ति निर्णयः।
प्रसोष्यते चेदपि ते जगज्जितः कलौ भवेच्चिन्तयितुं महीपते॥ ४६॥

हे महीपते, ते कुतः कस्माद्धेतोः एष कोपः अदीपि दीप्तोऽभूत्। असौ अशिश्वी शिशुना विनाभूता न स्यादिति अधुनापि न हि निर्णयोऽस्ति। प्रसोष्यते चेदपि ते चिन्तयितुं कलौ भवेत्। जगज्जितः॥—अदीपीति। 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति च्लेस्ते चिण्। [अशिश्वीति।] 'सख्यशिश्वीति भाषायाम्' इति निपातनम्। 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति सुलोपः। प्रसोष्यत इति। 'षूङ् प्राणिप्रसवे'। 'धात्वादेः षः सः'। निर्णय इति। 'णीञ् प्रापणे'। 'णो नः' 'उपसर्गादसमासेऽपि' इति णत्वम्। भवेदिति। 'अतो येयः'। 'लोपो व्योर्वलि' इति यलोपः। जगज्जित इति क्विप्। 'वेरपृक्तस्य' इति वेर्लोपः। महीपते इति। 'एङ्ह्रस्वात्संबुद्धेः' इति हल्लोपः॥

अस्या वधात्पुण्यमहीरुहो रुषा च्छायां भवानच्छिदुरां स मा च्छिदत्।
कीर्तिं मनस्तापहृतं विसृत्वरीं ह्रीच्छेन्न को दुर्यशसामलीमसः॥ ४७॥

भवान् अस्या वधात् कीर्तिं मा स्म च्छिदत् छिन्नां कुरु। पुण्यमहीरुहः छायाम्। अच्छिदुरां च्छेदनशीला च्छिदुरा। मनस्तापहृतं विसृत्वरीं विसरणशीलां स्वतः। अमलीमसः को दुर्यशसा न ह्रीच्छेत् लज्जेत। दुर्यशसा मलीमस इति वा॥—विसृत्वरीमिति। 'इण्नशजिसर्तिभ्यः क्वरप्' इति क्वरपि 'ह्रस्वस्य पिति कृति तुक्' इति तुगा-

गमः । 'आद्यन्तौ टकितौ' । अच्छिदुरामिति । 'संहितायाम्' इत्यधिकृत्य 'छे च' इति तुक् । मा च्छिददिति । 'आङ्माङोश्च' इति नित्यं तुक् । ह्रीच्छेदिति । 'ह्रीच्छ लज्जायाम्' । 'दीर्घात्' इति तुक् । रुपा च्छायामिति । 'पदान्ताद्वा' इति तुक् ॥

न्यस्याशु पाणावसिमुज्ज्वलं रये गव्याद्विजस्त्रीजनरक्षणदक्षिणम् ।
अक्रय्यमक्षय्यमुपेयुषा यशो रक्ष्ये हि भाव्यं प्रभुणा दयालुना ॥ ४८ ॥

पाणौ उज्ज्वलं असिमाशु रये न्यस्य (लोट्) स्थापय । गव्याद्विजस्त्रीजनरक्षणदक्षिणम् । गव्या गोसमूहः । रक्षणो रक्षणम् । प्रभुणा रक्ष्ये जने विषये दयालुना भाव्यं अवश्यं भवितव्यम् हि अक्षय्यं क्षेतुमशक्यं अक्रय्यं क्रयार्थरहितं यशः उपेयुषा ॥—न्यस्येति । 'इको यणचि' इति इकारस्य यकारः । पाणौ असिमिति । 'एचोऽयवायावः' इति औकारस्यावादेशः । गव्येति । 'खलगोरथात्' इति यप्रत्यये 'वान्तो यि प्रत्यये' इति ओकारस्यावादेशः । भाव्यमिति । 'ओरावश्यके' इति ण्यति वृद्धौ 'धातोस्तन्निमित्तस्यैव' इत्यावादेशः । क्षय्येति । 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेशो निपात्यते । अक्रय्यमिति । 'क्रय्यस्तदर्थे' इत्ययादेशो निपात्यते । रय इति । 'एकः पूर्वपरयोः' इत्यधिकृत्य 'आद्गुणः' इति एकादेशः । तस्य 'अन्तादिवच्च' इति सुप् आदिवद्भावः । पदसंज्ञा ॥

नारीवधान्न न्यवृतत्स तद्गिरः कद्रूजहिंस्रः श्रुतवानपीदृशीः ।
तां संहितोरूं युवतिं सरोरुदां शौरीर्व्यमार्क्षीत्कुररीमिवेक्षिता ॥ ४९ ॥

सः कंसः ईदृशीः तद्गिरः श्रुतवानपि नारीवधात् न न्यवृतत् निवृत्तः । शौरीः । कुररीमिव सरोरुदां भृशायमानरोदनसहितां युवतिं ईक्षिता व्यमार्क्षीत् विमर्दं कृतवान् । संहितोरूमिति । संहितावूरू यस्याः । कद्रूजहिंस्रः सर्पवद्धिंसाशीलः ॥—कुररीमिति । 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । संहितोरूमिति । 'संहितशफलक्षणवामादेश्च' इत्यूङ् । कद्रू इति 'संज्ञायाम्' इति कद्रूशब्दादूङ् । नारीति 'शार्ङ्गरवाद्यञो ङीन्' 'नृनरयोर्वृद्धिश्च' इति ङीन् । युवतिमिति । 'तद्धिताः' इत्यापञ्चमाध्यायमधिकृत्य 'यूनस्तिः' इति स्त्रियां तिः [‘सर्वतोऽक्तिन्नर्थादित्येके' इति ङीप् ।] रोरुदेति । यङन्तादप्रत्यये यलोपः ॥

यः साधु मन्त्रैरुपतिष्ठते हरिं तद्भावपूतानपि वोपतिष्ठते ।
चित्ते तदीये ह्युपतिष्ठते क्षमा सैतादृशस्योत्तपते कथं पुनः ॥ ५० ॥

यो मन्त्रैः करणैः हरिं साधु उपतिष्ठते पूजयति अपि वा तद्भावपूतान् विष्णुभक्त्या शुद्धात्मनः उपतिष्ठते तैर्मैत्रीं करोति । तदीये चित्ते हि क्षमा उपतिष्ठते संनिधत्ते । सा क्षमा एतादृशस्य दुष्टस्य चित्ते कथं पुनरुत्तपते प्रकाशते ॥—हरिमुपतिष्ठत इति । 'उपान्मन्त्रकरणे' । उपतिष्ठते । 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वक्तव्यम्' इति तङ् । उपतिष्ठत इति 'अकर्मकाच्च' इति तङ् । उत्तपत इति 'उद्विभ्यां तपः' इति तङ् ॥

प्राज्ञान्कचित्संशृणुते न खल्वसौ संपश्यतेऽक्ष्णा बत नान्तरेण वा ।
नो वा सतः संह्वयते तितंसितं संहप्य कित्वाह्वयते परं सुरान् ॥११॥

असौ क्वचिदप्यवस्थायां प्राज्ञान् न खलु संशृणुते । अन्तरेण अक्ष्णा मनसा वा न संपश्यते वीक्षते बत । आत्मनः तितंसितं चिकीर्षितं सतः सज्जनान् न वा संह्वयते । किंतु संहप्य हृष्टो भूत्वा परं केवलं सुरानाह्वयते स्पर्धया आह्वानं कुरुते ॥—संशृणुत इति । 'समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः' इति कर्मविवक्षायामात्मनेपदम् । संपश्यत इति । 'दृशेश्चेति वक्तव्यम्' इति तङ् । 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥' संह्वयत इति । 'निसमुपविभ्यो ह्वः' इति तङ् । आह्वयते इति । 'स्पर्धायामाङः' इति तङ् ॥

असै ततोऽस्या वितरीतुमात्मजानुग्रामुपेत्याप्यधुनैष संविदम् ।
मृत्योरुपेतात्परिपाल्यये सतीमेतां वराकीमथ सोऽभ्युपैतु वा ॥ १२ ॥

ततः तस्मात् एषोऽहं अस्याः आत्मजान् अस्मै वितरीतुं दातुमुग्रां संविदं प्रतिज्ञामुपेत्यापि एतां अधुना उपेतात् आसन्नात् मृत्योः परिपाल्ये । स मृत्युः अथ कालान्तरे अभ्युपैतु वा । सतीं वराकीं मन्दाम् ॥—उपेत्येति । 'प्लुतुकोरपिद्धः' इत्येकादेशस्यासिद्धत्वात् तुक् । अधुनैष इति । 'वृद्धिरेचि' इति वृद्धिः । अभ्युपैतु इति ।'एत्येधत्यूठ्सु' इति वृद्धिः । वराकीमिति । 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' 'षः प्रत्ययस्य' इतीत्संज्ञा ॥

कृतस्मितेनौजसिकोऽथ शारुकः क्षितीश्वरः साहसिकोऽथ शौरिणा ।
अनाहतामौचत गां विपद्यहो न कुण्ठभावं मतिमानुपार्च्छति ॥१३॥

अथ कृतस्मितेन शौरिणा स क्षितीश्वरः गां वाचं औचत उक्तः । औजसिकः ओजसा वर्तमानः । साहसिकः सहसा वर्तमानः । शारुको हिंसाशीलः । अनाहतां सत्यार्थाम् । मतिमान् विपद्यपि कुण्ठभावं न उपार्च्छति प्राप्नोति । अहो ॥—औचत इति । वदेर्यकि संप्रसारणम् । 'आटश्च' इति वृद्धिः । उपार्च्छतीति 'उपसर्गादृति धातौ' इति वृद्धिः । गामिति । 'औतोऽम्शसोः' इत्याकारादेशः । औजसिकः साहसिकः । 'ओजःसहोऽम्भसा वर्तते' इति ठक् ॥

अपत्यमस्या भवते समस्तमप्यदायि राजन्ननुगृह्यतामियम् ।
भवाव्यथी दीव्य पुरीह दीव्यता. जनेन मा क्लाम्य यसार्थसाधने॥९५॥

हे राजन्, अस्याः समस्तमप्यपत्यं भवते अदायि दत्तम् । इयमनुगृह्यताम् । त्वं अव्यथी अव्यथनशीलः भव । इह पुरि मधुरायां दीव्यता दिवीवाचरता जनेन सह दीव्य शोभस्व । मा क्लाम्य । अर्थसाधने यस यत्नं कुरु ॥—अदायीति । 'चिण् भावकर्मणोः' इति तशब्दे च्लेश्चिण् । अनुगृह्यतामिति । 'सार्वधातुके यक्' इति यक् । भवेति । 'कर्तरि शप्' इति शप् । दीव्येति । 'दिवादिभ्यः श्यन्' । क्लाम्येति । 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' इति श्यन् । यसेति । 'यसु प्रयत्ने' । 'यसोऽनुपसर्गात्' इति श्यन्विकल्पः । दीव्यतेति । 'अधिकरणाच्चेति वक्तव्यम्' इति आचारे क्यच्[1] ॥

संयस्यतः साधुहिते भियं निजामाधुन्वतीमानकदुन्दुभेर्गिरम् ।
शृण्वन्नृपस्तत्क्षणमक्ष्णुवन्मदः सोऽमित्यवक्प्रोज्झितजामिधिप्सकः॥९६॥

आनकदुन्दुभेः गिरं शृण्वन् स नृपः तत्क्षणं अविलम्बेन ओं तथास्तु इत्यवक् उक्तवान् । साधुहिते संयस्यतः यतमानस्य । निजां भियं आधुन्वतीं कम्पयन्तीम् । अक्ष्णुवन्मदः व्याप्नुवन्मदो यस्य । प्रोज्झितजामिधिप्सकः । प्रोज्झिता जाम्याः स्वसुः धिप्सा हिंसेच्छा येन ॥—संयस्यत इति 'संयसश्च' इति वा श्यन् । आधुन्वतीमिति । 'धूञ् कम्पने' । 'स्वादिभ्यः श्नुः' । शृण्वन्निति । 'श्रुवः शृ च' इति श्नुः शृ इत्यादेशश्च । अक्ष्णुवन्मद इति । 'अक्षू व्याप्तौ' । 'अक्षोऽन्यतरस्याम्' इति श्नुः । सोऽमिति । 'सोऽचि लोपे चेत्पादपूरणम्' इति सुलोपः । 'ओमाङोश्च' इति पररूपत्वम् । साधुहित इति । 'हितयोगे चतुर्थी वक्तव्या' । 'चतुर्थी तदर्था–' इति समासः । 'जामिः स्वसृकुलस्त्रियोः' ॥

भिन्द्युर्गिरीनप्यधिकुर्वते च ये जगन्ति रुन्धन्त्यपि मण्डलं दिशाम् ।
दर्पं बलारेरपि तक्ष्णुवन्त्यलं प्रकुर्वते यान्सदराः सुरा अपि ॥९७॥
धिन्वन्ति ये बन्धुजनं तुदन्ति ये शोच्यान्कथं भव्यदृशो भवादृशः ।
स्तुत्वेति कंसं व्यतनोदथो मतिं गन्तुं सुषामानकदुन्दुभिर्गृहान्॥९८॥

द्वयोरन्वयः । अथो आनकदुन्दुभिः कंसं इति स्तुत्वा गृहान् गन्तुं मतिं व्यतनोत् । सुषामा शोभनं सान्त्ववचनं यस्य । कथं स्तुत्वा । ये गिरीनपि भिन्द्युः, ये च जगन्ति अधिकुर्वते अभिभवन्ति, दिशां मण्डलमपि रुन्धन्ति, बलारेरपि दर्पं अलं तक्ष्णुवन्ति तनूकुर्वन्ति यान् सुराः सदराः सभयाः प्रकुर्वते सेवन्ते, बन्धुजनं धिन्वन्ति प्रीणयन्ति, ते भवादृशः त्वादृशः कथं शोच्यान् अस्मादृशान् तुदन्ति व्यथयन्ति । भव्यदृशः कुशलमेव पश्यन्तः ॥—प्रकुर्वत इति । 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' इति सेवने तङ् । अधिकुर्वत इति । 'अधेः प्रसहने' इति अभिभवे तङ् । प्रसह-

1. 'दीव्यतीति दीर्घस्तु प्राचः प्रामादिकः' इति नामधातुप्रक्रियायां सिद्धान्तकौमुदी.

नमभिभवः पराजयो वा। तक्ष्णुवन्तीति। 'तनूकरणे तक्षः' इति वा श्नुः। अनेकार्था धातवः। तुदन्तीति। 'तुदादिभ्यः शः' 'अतो गुणे' इति पररूपत्वम्। रुन्धन्तीति। 'रुधादिभ्यः श्नम्'। व्यवनोदिति। 'वनादिकृभ्य उः'। धिन्वन्तीति। [हिवि] [धिवि] [जिवि] प्रीणनार्थाः। 'धिन्विकृण्व्योर च' इति उप्रत्ययः। अकारश्चान्तादेशः। अतो लोपस्य स्थानिवद्भावाद्गुणाभावः। मिन्धुरिति 'मिधा वस्' 'उस्यपदान्तात्' इति पररूपत्वम्। [मुरामेति।] 'मुरामादिषु च' इति पत्वम्॥

मित्रैश्चटचटदिति त्रुटितोरुहारैः संमर्दतः स निजधाम विवेश रूपम्।
केलीसमीकरतखाड्गिकसत्व्यमानचर्मावली पटपटायितपाटिताशम् ॥५९॥

स मित्रैः स[ह] निजधाम विवेश। रूपं प्रशस्तं विवेश। संमर्दतः हेतोः चटचटदिति त्रुटितोरुहारैः। केलीति समीकं युधं(?)। खाड्गिकाः खड्गायुधाः ..............। क्रियाविशेषणम्॥—चटचटदिति। 'नित्यवीप्सयोः' इति द्विर्वचनम्। 'तस्य परमाम्रेडितम्'। 'नाम्रेडितस्यान्त्यस्य तु वा' इत्यच्छब्दस्य इतेरिकारस्य च पररूपैकादेशाभावः। तकारेकारयोः पररूपविकल्पः। पटपटायितेति। पट इत्यस्य 'डाचि बहुलं द्वे भवत इति वक्तव्यम्' इति टिलोपात् पूर्वं द्विर्वचनम्। 'नित्यमाम्रेडिते डाचीति वक्तव्यम्' इति पूर्वान्त्यतकारस्योत्तरादिपकारस्य च पररूपमेकादेशः। निजधामेति। 'गाहिरुहिविशां कर्म'(?) इत्यधिकरणस्य कर्मसंज्ञा॥

स्वस्त्रीजनांश्चात्मरुचा क्षिपन्तीं हस्तौ लसन्माङ्गलिकौ दधानाम्।
ह्रीणां नवोढां जगतोऽभिनन्द्यां तां पर्यगृह्णन्मुदिताः पुरंध्र्यः॥ ६०॥

पतिपुत्रवत्यः स्त्रियो मुदिताः तां नवोढां पर्यगृह्णन्। आत्मरुचा स्वस्त्रीजनानपि क्षिपन्तीम्, लसन्माङ्गलिकौ हस्तौ दधानाम्, लसन्ति माङ्गलिकानि दर्पणादीनि ययोः। ह्रीणां लज्जिताम्। जगतः अभिनन्द्याम्॥—पर्यगृह्णन्निति। 'क्र्यादिभ्यः श्ना' 'श्नाभ्यस्तयोरातः' इत्यालोपः। च आत्मेति। 'अकः सवर्णे दीर्घः' इति द्वयोरेकादेशो दीर्घः। 'तुल्यास्यप्रयत्नं सवर्णम्'। जनानिति। जन अम्। 'प्रथमयोः पूर्वसवर्णः' इति द्वयोः पूर्वसवर्णदीर्घ एकादेशः। 'तस्माच्छसो नः पुंसि' इति सकारस्य नकारः। हस्ताविति। 'नादिचि'। पूर्वसवर्णदीर्घप्रतिषेधः। पुरंध्र्य इति। पुरं गृहं धरतीति .................. पूर्वरूपैकादेशः। ऊढेति। वहेर्निष्ठायां संप्रसारणम्। 'संप्रसारणाच्च' इति पूर्वरूपम्। जगतोऽभीति। 'एङः पदान्तादति' इति पूर्वरूपत्वम्॥

आचार्याण्यो मातुलान्यश्च दाक्ष्यो गार्गायण्यो ब्रह्मबन्ध्वो गणक्यः।
रम्भोर्वश्च क्षत्रियाण्यस्तरुण्यः शूद्र्यः शूद्रा मोमुदामासुरुच्चैः॥ ६१॥

एताः स्त्रियः उच्चैः मोमुदामासुः पुनः पुनर्मुमुदिरे। आचार्याण्यः आचार्याणां स्त्रियः। मातुलान्यः मातुलानां स्त्रियः। दाक्ष्यः दक्षस्य अपत्यानि। गार्गायण्यः गर्गगोत्रसंभूताः। गणक्यः गणकानां स्त्रियः। क्षत्रियाण्यः क्षत्रियकुलजाः। शूद्र्यः शूद्राणां भार्याः।

शूद्राः शूद्रजात्युत्पन्नाः । रम्भोरवः रम्भोपमा ऊरवो यासाम् । तरुण्यः यौवनवत्यश्च ॥ —आचार्याण्य इति । 'इन्द्रवरुण–'इत्यादिना ङीषानुकौ । मातुलान्य इति । 'पितृव्यमातुलमातामहपितामहाः' इति मातृशब्दात् भ्रातरि डुलच् निपात्यते । 'उपाध्यायमातुलाभ्यां वा' इति पक्षे ङीषानुकौ । दाक्ष्य इति । 'अत इञ्' अपत्यार्थे, 'इतो मनुष्यजातेः' इति ङीष् । गार्गायण्य इति । 'गर्गादिभ्यो यञ्' इति गोत्रे यञ् । 'यञश्च' 'प्राचां ष्फ तद्धितः' इति वा ष्फः । षित्वात् ङीष् । अम्बष्ठ्य इति । 'ऊङुतः' इत्यूङ् । गणक्य इति । 'पुयोगादाख्यायाम्' इति ङीष् । शूद्रा इति । जातिविवक्षायाम् 'शूद्रा चामहत्पूर्वा' इति टाप् ॥

ततो विसृज्याश्वपतादि शौरिर्दैत्यारिपादाब्जविलातृचेताः ।
गर्गं च गार्ग्यं च ननाम दाक्षिं गार्ग्यायणादींश्च मुनींस्त्रिवेदान् ॥ १२ ॥

ततः शौरिः आश्वपतादि जनजातं विसृज्य मुनीन्ननाम । अश्वपतीनां समूहः आश्वपतम् । गर्गं च गार्ग्यं च । गर्गस्य गोत्रापत्यम् । दाक्षिं दक्षस्यापत्यम् । गार्ग्यायणादीन् । गर्गस्य युवापत्यं गार्ग्यायणः । त्रिवेदान् त्रीन् वेदान् अधीतवन्तः । दैत्यारीति । विलातृ विलयनशीलम् ॥—आश्वपतमिति । 'समर्थानां प्रथमाद्वा' इति स्वार्थिकेभ्यः प्राक्तनानां प्रत्ययानां सूत्रेषु प्रथमानिर्दिष्टः शब्दः प्रकृतित्वेनाधिक्रियते । 'प्राग्दीव्यतोऽण्' इत्यपवादविषयं परिहृत्याण् भवतीति परिभाष्यते । संख्याकालाविद्याविवक्षितौ । 'तस्य समूहः' इत्यण् । 'अश्वपत्यादिभ्यश्च' इत्यण् । पत्युत्तरपदाण्ण्यस्य बाधकम् । दैत्येति । 'तस्यापत्यम्' इत्यर्थे 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' । त्रिवेदानिति । 'तदधीते तद्वेद' इत्यण् । तस्य 'द्विगोर्लुगनपत्ये' इति लुक् । गार्ग्यमिति । 'तस्यापत्यम्' इत्यधिकृत्य 'गर्गादिभ्यो यञ्' इति गोत्रापत्ये यञ् । 'एको गोत्रे' इति गर्गशब्द एव प्रकृतिः । 'अपत्यं पौत्रप्रभृति गोत्रम्' । गार्ग्यायणेति । 'यञिञोश्च' इति युवापत्ये फक् । 'गोत्राद्यून्यस्त्रियाम्' इति युवप्रत्ययस्य,गोत्रप्रत्ययान्तं पदं प्रकृतिर्नियम्यते । 'जीवति तु वंश्ये युवा' इति चतुर्थापत्यादेर्युवसंज्ञा । दाक्षिमिति । अपत्यार्थे 'अत इञ्' । विलातृ इति । 'लीङ् श्लेषणे' । 'विभाषा लीयतेः' इति वा आत्वम् । 'विलेतृ' इति वा पाठः ॥

गार्गीयास्ते साधु गार्गीयमाणाश्चाजीगर्तिश्चाथ दाक्षायणाश्च ।
वैश्वामित्रात्रेयकौपीतकेया मार्काण्डेयः सोऽपि मैत्रेयनामा ॥ १३ ॥
नाडायनो बादरिकश्च तस्मै व्यासश्च कानीनमुनिर्गरीयान् ।
माण्डूकिरेषां तनयाश्च पौत्रा महाशिषोऽनाष्टमिका वितेरुः ॥ १४ ॥

द्वयोरन्वयः । ते तस्मै साधु महाशिषः वितेरुर्दत्तवन्तः । गार्गीयाः गर्गयुवापत्यभूतगार्ग्यायणशिष्याः । गर्गस्य कुत्सितयुवापत्यं चापि । आजीगर्तिरजीगर्तस्यापत्यम् । अथेति समुच्चये । [दाक्षायणा इति ।] दाक्षस्य पूजितं गोत्रापत्यं च । वैश्वामित्रात्रेयकौपीतकेयाः । विश्वामित्रस्यापत्यम् । आत्रेयः अत्रेरपत्यम् । कौपीतकेयः कुपीतकस्यापत्यम् । मार्काण्डेयः मृकण्डोरपत्यम् । मैत्रेयनामा सोऽपि । मित्रयोरपत्यं मैत्रेयः । नाडायनः नडस्य

गोत्रापत्यम् । बादरिकः बदरिकानु(राण्यु)ञ्छन् व्यासश्च कानीनमुनिः । कन्याया अपत्यं ऋषिः । गरीयान् गुरुतरः । माण्डूकिः मण्डूकापत्यम् । एषां तनयाश्च पौत्राः पुत्राणां पुत्राश्च । अनाष्टमिकाः । आष्टमिकः अष्टम्यां अधीतवान् ॥—गार्गीया इति । गार्ग्यायणशब्दात् 'वृद्धाच्छः' इति शैषिके छप्रत्यये विवक्षिते 'फक्फिञोरन्यतरस्याम्' इति युवप्रत्ययस्य फको लुक् । 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति वृद्धसंज्ञा । 'वृद्धाच्छः' शैषिकः । 'यूनश्च कुत्सायां [गोत्रसञ्ज्ञेति वाच्यम्]' इति युवसंज्ञा । आजीगर्तिरिति 'बाह्वादिभ्यश्च' इतीञ् । दाक्षायणः । 'वृद्धस्य च पूजायाम्' इति वा युवसंज्ञायाम् 'यञिञोश्च' इति यूनि फक् । वैश्वामित्रेति । 'मित्रे चर्षौ' इति पूर्वपदस्य दीर्घे विश्वामित्रः । तस्मात् 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण् । आत्रेयेति । 'इतश्चानिञः' इति ढक् । कौपीतकेयेति 'विकर्णकुषीतकात्काश्यपे' इति ढक् । मार्कण्डेय इति । 'शुभ्रादिभ्यश्च' इति ढक् । 'केलोपोऽकद्वाः' इति उकारलोपः । मैत्रेयेति । 'गृष्ट्यादिभ्यश्च' इति ढञ् । 'कैकयमित्त्रयुप्रलयानां यादेरियः' । नाडायन इति । 'नडादिभ्यः फक्' गोत्रापत्ये । व्यास इति । 'असु क्षेपणे' । व्याङावुपसर्गौ । पचाद्यच् । वि वेदान् विभज्य आ समन्तात् शिष्येषु अस्यति इति । अथवा अस्मादेव धातोर्विपूर्वात् करणे घञ् । कानीनेति । 'कन्यायाः कनीन च' इत्यण् । कनीनादेशश्च । माण्डूकिरिति । 'ढक्च मण्डूकात्' इति ढक् । पौत्रा इति । 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इति अस्य अनृषित्वादनन्तरापत्ये पुत्रशब्दादञ् । बादरिक इति । 'उञ्छति' इति ठक् । अनाष्टमिका इति । 'अध्यायिन्यदेशकालात्' इति ठक् ॥

द्वैमातुरादिसुरसंघतनोरसोढुर्दैतेयदुर्विलसितानि गवेश्वरस्य ।
चेतो हरेर्विदधती पदयोर्गुणैः स्वैः पत्युर्मनोऽहरदथो अतुलैर्वधूः सा ६९

अथो सा वधूः स्वैर्गुणैः पत्युः मनः अहरत् । अतुलैः । चेतः हरेः पदयोः विदधती । द्वैमातुरादिसुरसंघतनोः । द्वैमातुरो गणपतिः । दैतेयदुर्विलसितानि असोढुः । गवेश्वरस्य गवामीश्वरस्य ॥—द्वैमातुरेति । द्वयोर्मात्रोरपत्यमित्यर्थे 'मातुरुत्संख्यासंभद्रपूर्वायाः' इत्यण् । उत्वं च । दैतेयेति । 'कृदिकारादक्तिनः' इति वा ङीषि 'स्त्रीभ्यो ढक्' इति ढक् । तनोरिति । 'ङसिङसोश्च' इति पूर्वरूपत्वम् । असोढुरिति । 'ऋत उत्' इति द्वयोरेक उकारो रपरः । 'रात्सस्य' [इति सलोपः] । पत्युरिति । 'ख्यत्यात्परस्य' इति ङसोऽकारस्य उकारः । मनोऽहरदिति । 'ससजुषो रुः' 'अतो रोरप्लुतादप्लुते' इति रोरुकारः । चेतो हरेरिति । 'हशि च' इति रोरुकारः । गवेश्वरस्येति । 'अवङ् स्फोटायनस्य' इति गोरवङादेशः । 'ङिच्च' इत्यन्तस्य । अथो अतुलैरिति । 'ओत्' इति प्रगृह्यसंज्ञायाम् 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावः ॥

आनर्च यो महदृषीन्गुणसंपदा स्वं पर्यष्करोच्च विदधे च मतिं गवेन्द्रे ।
स्कुन्वन्द्युलोकमपि कीर्तिभरेण सैष तामन्वरुध्यत कथं सदृशीं न शौरिः

स एष शौरिः सदृशीं तां कथं न अन्वरुध्यत अनुवर्तते स्म । यः महदृषीन् महत

ऋर्पीन् आनर्च । गुणसंपदा स्वं पर्यष्करोत् अलंकृतवांश्च । गवेन्द्रे गवामिन्द्रे कृष्णे मतिं विरचे च । कीर्तिभरेण द्युलोकमपि स्कुन्वन् आवृण्वन् ॥—[स्कुन्वन्निति।] 'स्कुञ् आवरणे' । 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च' इति श्नुः । गवेन्द्र इति । 'इन्द्रे च नित्यम्' इत्यवङादेशः । महत्त्यर्पीन् इति । 'आन्महतः-' इत्यात्वे 'ऋत्यकः' इति प्रकृतिवद्भावो ह्रस्वश्च । द्युलोकमिति । 'दिव उत्' इति वस्य उकारः । एष तामिति । 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सुलोपः । सैष इति । 'सोऽचि-' इति सुलोपः । पर्यष्करोदिति । 'सुट् कात्पूर्वः' इत्यधिकृत्य 'संपर्युपेभ्यः करोतौ भूषणे' 'अडभ्यासव्यवायेऽपि' इति सुट् । 'सिवादीनाम्-' इति वा षत्वम्(?) । अन्वरुध्यतेति । 'अनो रुध कामे' इति रुधेर्दिवादित्वमात्मनेपदित्वं च ॥

पैतृष्वस्त्रीयाश्च मातृष्वसेयाः कुल्याः स्वस्रीयाश्च कात्याणिनेयाः ।
ये भ्रातृव्या ये श्वशुर्याः कुलीनाः कौ[र]व्या ये चापि माहाकुलीनाः ९७
ये वा गर्गा ये च दासेरदेश्यास्ताक्षण्याद्या ये पुनर्दौष्कुलेयाः ।
सर्वाञ्छौरिर्वृत्तसर्वागमस्तानार्चीदुच्चैर्दैष्टिकोऽनुप्रधानम् ॥ ९८ ॥

द्वयोरन्वयः । शौरिस्तान् सर्वान् अनुप्रधानं प्रधानानुपूर्व्येण उच्चैः आर्चीत्पूजितवान् । ये कुल्याः कुलापत्यानि । पैतृष्वस्त्रीयाः पितुः स्वसुरपत्यानि । कुलशब्देन भेदात् कुल्य उच्यते । मातृष्वसेयाः मातृष्वसुरपत्यानि । स्वस्रीयाश्च स्वसुरपत्यानि च । काल्याणिनेयाः कल्याणीनामपत्यानि च । भ्रातृव्या भ्रातॄणामपत्यानि च । ये च कुलीनाः कुलापत्यानि च श्वशुर्याः श्वशुरापत्यानि । ये च माहाकुलीनाः महाकुलापत्यानि च कौरव्याः ये वा गर्गाः कुत्सितानि गर्गापत्यानि । ये च दासेरदेश्याः दासीपुत्रप्रायाः । ये पुनः दौष्कुलेयाः दुष्कुलापत्यानि । ताक्षण्याद्याः तक्षापत्यप्रभृतयः । तान् । वृत्तसर्वागमः । वृत्तमधीतम् । दैष्टिको दिष्टमस्तीति मत्या युक्तः ॥—पैतृष्वस्त्रीया इति । 'पितृष्वसुश्छण्' । इत्यपत्यार्थे छण् प्रत्ययः । मातृष्वसेयाः । 'मातृष्वसुश्च' इति 'ढकि लोपः' । ढकि लोपोऽयम् । कुल्या इति । 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' इति यत् । स्वस्रीया इति । 'स्वसुश्छः' । काल्याणिनेया इति । 'कल्याण्यादीनामिनङ्' इति ढक् । इनङादेशश्च । भ्रातृव्या इति । 'भ्रातुर्व्यच्च' । श्वशुर्या इति । 'राजश्वशुराद्यत्' कुलीना इति । 'कुलात्खः' । कौरव्येति । 'कुर्वादिभ्यो ण्यः' इति ण्यः । ('कुरुनादिभ्यो ण्यः') इति ण्यप्रत्ययोऽन्योऽपि तद्राजसंज्ञोऽस्ति । तस्य बहुषु लुक् । अयं तु श्रूयत एव । माहाकुलीना इति । 'महाकुलादञ्खञौ' । गर्गा इति । 'गोत्रस्त्रियाः कुत्सने ण च' । गोत्राभिधायिनः शब्दाण्णढकौ । दासेरेति । 'क्षुद्राभ्यो वा' इति ढ्रक् । ताक्षण्येति । 'सेनान्तलक्षणकारिभ्यश्च' इति ण्यः । कारिणः कारवः । दौष्कुलेया इति । 'दुष्कुलाड्ढक्' । वृत्तेति । 'गेरध्ययने वृत्तम्' । दैष्टिकेति । 'अस्तिनास्ति दिष्टं मतिः' । अनुप्रधानमिति आनुपूर्व्येऽव्ययीभावः ॥

पुपाण धर्मं न तपांसि तप्या मा वत्स चेतश्च विधेहि कृष्णे ।
य ईदृगस्मै नमते स्वयं द्रागभीष्टमुक्त्वैवमहास्त गर्गः ॥ ९९ ॥

गर्गे एवमुक्त्वा अहास्त गतवान्—'हे वत्स, त्वं धर्मं पुपाण वर्धय । तपांसि न [मा] तप्याः आर्जय । अपि तु आर्जय एव । चेतः च कृष्णे विधेहि । यः पुरुषः ईदृग्भवति अस्मै अभीष्टं द्राक् स्वयं नमते ॥—पुपाणेति । 'पुष पुष्टौ' । 'क्र्यादिभ्यः श्ना' 'हलः श्नः शानज्झौ' इति श्नाप्रत्ययस्य शानच् । तप्या इति । 'तप संतापे' । 'तपस्तपःकर्मकस्यैव' इति कर्तुः कर्मवद्भावः । नमते इति । 'कर्मवत्कर्मणा तुल्यक्रियः' इति कर्मवद्भावे 'न दुहस्नुनमां यक्चिणौ' इति यगभावः ॥

अथ चेदयश्च कुरवश्च भृशमपचिता विचक्रिरे आत्तकुतुकम् ।
अपरे च ततो निरगुर्व्यकुर्वत च शब्दमुच्चकैः ॥ ७० ॥

अथ चेदयः चेदिराजाः, कुरवः कुरुकुलजातनृपाः, तथा अपरे च आत्तकुतुकं विचक्रिरे विविधमचेष्टन्त । भृशं अपचिताः पूजिताः ते ततो निरगुश्च । उच्चकैः शब्दं व्यकुर्वत विविधमकुर्वत च ॥—[व्यकुर्वतेति ।] 'वेः शब्दकर्मणः' इति तङ् । विचक्रिरे इति । 'अकर्मकाच्च' इति तङ् । चेदय इति । 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति 'जनपदशब्दात्क्षत्रियादञ्' इत्यनोऽपवाद इदन्तत्वात् ञ्यङ्प्रत्यये 'ते तद्राजाः' इति तद्राजसंज्ञायाम् 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति लुक् । कुरव इति । 'कुरुनादिभ्यो ण्यः' इति ण्यप्रत्ययोऽपत्यार्थे । बहुषु लुक् । 'क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्' ॥

ब्रह्मण्यबुद्धिरथ विश्वजनीनशीलः शौवस्तिकेषु मतिमादधदातिथेयः ।
उच्चैस्तरर्द्धि निजधाम तया स शौरिस्तत्पारिषद्यचरितःसुखमध्युवास ७१

अथ स शौरिः तया सह तत् निजधाम स्वगृहं सुखं अध्युवास । ब्रह्मण्यबुद्धिः ब्राह्मणेभ्यो हिता बुद्धिर्यस्य । विश्वजनीनं विश्वजनहितं शीलं यस्य । शौवस्तिकेषु भवेषु कार्येषु मतिमादधत् । आतिथेयः अतिथिषु साधुः । पारिषद्यचरितः परिषदि साधु चरितं यस्य । उच्चैस्तरर्द्धि उच्चैस्तरा ऋद्धिर्यत्र ॥—ब्रह्मण्येति । 'खलयवमाषतिलवृषब्रह्मणश्च' इति हितार्थे यत् । विश्वजनीनेति । 'आत्मन्विश्वजनभोगोत्तरपदात् खः' । शौवस्तिकेषु । 'श्वसस्तुट् च' इति वा ठञ् तुडागमश्च । आतिथेय इति।'पथ्यतिथिवसतिस्वपतेर्ढञ्' 'तत्र साधुः' इत्यर्थे । पारिषद्येति । 'परिषदो ण्यः' । उच्चैस्तरेति । 'अद्रव्यप्रकर्षे' इत्युक्त्वा अमुप्रत्ययाभावः ॥

इति वासुदेवकृतौ वासुदेवविजयकाव्ये पदचन्द्रिकाख्यया व्याख्यया समेतः प्रथमः सर्गः ।

---

द्वितीयः सर्गः ।

कृष्णाङ्घ्रिभक्तेरुपचस्करेऽथो भिक्षूंश्च काषायपटानभक्त ।
कर्तव्यमात्रे पटिमानमाटीत्सा देवकी लाक्षिकपाणिपादा ॥ १[1] ॥

---

१. अस्मिन्वृत्ते छन्दो न ज्ञायते. टीकायामपि मूलतोऽन्यूनानतिरिक्तानि पदानि दृश्यन्ते.

अथो सा देवकी कृष्णाङ्घ्रिभक्तेः उपचस्करे स्वतः सतीं तां सातिशयामकरोत् । काषायपटान् भिक्षून् अभक्तासेवत च । कषायेण रक्तं काषायम् । कर्तव्यमात्रे कर्तव्ये कृत्स्ने पटिमानं वैदग्ध्यम् । आटीत् प्राप्ता । लाक्षिकपाणिपादा लाक्षया रक्तं पाणिपादं यस्याः तत्सदृशं वा । उपमानाद्धविष्यतीति व्युत्क्रम् (?) ॥—उपचस्करे इति । प्रतियत्ने तङ् । 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु' इति सुट् । सतो गुणान्तराधानं प्रतियत्नः । 'ऋतश्च संयोगादेर्गुणः' इत्यत्र 'संयोगोपधग्रहणं कृञर्थम्' इति गुणः । 'कृञः प्रतियत्ने' इति कर्मणि षष्ठी । कर्तव्येति । 'धातोः' इत्या तृतीयाध्यायसमाप्तेरधिकारः । 'तत्रोपपदं सप्तमीस्थम्' इति सप्तम्यन्तस्योपपदसंज्ञा । 'कृदतिङ्' इति तिङ्व्यतिरिक्तानां प्रत्ययानां कृत्संज्ञा । 'वासरूपोऽस्त्रियाम्' इति त्र्यधिकारविहितप्रत्ययवर्जमसमानरूपस्यापवादप्रत्ययस्य वौत्सर्गबाधकत्वम् । 'कृत्याः प्राङ्ण्वुलः' इति कृत्यसंज्ञा । 'डुकृञ् करणे' । 'तव्यत्तव्यानीयरः' इति तव्यत् । तव्यो वा स्वरे भेदः । काषायेति । 'तेन रक्तं रागात्' इत्यण् । शुक्लस्य वर्णान्तरापादानमिह रञ्जेरर्थः । लाक्षिकेति । 'लाक्षारोचनाशकलकर्दमाट्ठक्' ॥

व्यनेष्ट लोभं विभवं विनिन्ये प्रत्यण्किरन्नो मनसापि किंचित् ।
सापन्नसत्त्वा च बभूव काले महोपसर्येव विशेषदृश्या ॥ २ ॥

सा लोभं व्यनेष्ट विशमितवती । विभवं धनं विनिन्ये । धर्मार्थवं विनियुक्तवती किंचित्प्राणिजातं मनसापि नो प्रत्यक्किरत् हिंसितवती । उचिते काले आपन्नसत्त्वा गर्भिणी च बभूव । उपसर्या प्रथमगर्भग्रहणे प्राप्तकाला महा गौरिव विशेषदृश्या विशेषदर्शनीया ॥—विनिन्ये इति । 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इति व्यये आत्मनेपदम् । व्यनैष्टेति । 'कर्तृस्थे चाशरीरे कर्मणि' इति तङ् । उपसर्येति । 'उपसर्या काल्या प्रजने' इति निपातनायत् । दृश्येति । 'ऋदुपधाच्चाकृपिचृतेः' इति क्यप् । प्रत्यक्किरदिति । 'कॄ विक्षेपे' । 'हिंसायां प्रतेश्च' इति सुट् ॥

पश्यन्पतिस्तामनुमेयगर्भामर्यो बुधानामनवद्यचर्यः ।
प्रजा न लभ्येति निजां प्रतिज्ञां स्मरन्नसावार्तिमगादसह्याम् ॥ ३ ॥

अनुमेयगर्भां तां पश्यन् असौ पतिः वसुदेवः प्रजा न लभ्या इति असह्यां आर्तिं अगात् । निजां प्रतिज्ञां स्मरन् । बुधानां अर्यः प्रधानभूतः । अनवद्यचर्यः । अवद्यं दोषः । चर्या व्यापारः ॥—अनुमेयेति । 'अचो यत्' । लभ्येति । 'पोरदुपधात्' इति यत् । असह्यामिति । 'शकिसहोश्च' इति यत् । चर्येति । 'गदमदचरयमश्चानुपसर्गे' इति यत् । अवद्येति । 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' इति यनिपात्यते । अर्य इति । 'अर्यः स्वामिवैश्ययोः' इति यनिपात्यते ॥

वह्नौ शुचामाकलयन्नथ स्वं धर्म्ये पुरोपक्रमते स मार्गे ।
अचायदप्याक्रममाणमर्कमर्कस्त कृष्णापचितौ विशिष्य ॥ ४ ॥

अथ स धर्म्ये धर्मादनपेते मार्गे उपक्रमते पुरा अप्रतिबन्धेनावर्तत। आक्रममाणं उद्यन्तं अर्कं अचायत् पूजितवांश्च। 'आदित्यस्य सदा पूजाम्' इति स्मृतिः। कृष्णापचितौ विष्णुपूजाया विरोध्य अर्कस्त उत्सेहे। स्वं आत्मानं दुर्घा वह्यं वहनकरणभूतं आकलयन् निश्चिन्वन्॥—अर्कस्त इति। 'वृत्तिसर्गतायनेषु क्रमः' इति सर्गे तङ्। सर्ग उत्साहः। उपक्रमते इति। 'उपपराभ्याम्' इति वृत्तौ तङ्। वृत्तिरप्रतिबन्धः। आक्रममाणमिति। 'आङ उद्गमने' इति तङ्। 'ज्योतिरुद्गमन इति वक्तव्यम्'। वह्यमिति। 'वह्यं करणम्' इति यत्॥

प्रच्छायकारस्करमस्कराढ्ये मेध्ये कृतापस्किरणैररण्ये।

सुखास्पदे शुम्भति विष्किरौघैरगोस्पदे संस्त्वदबोधि गर्गः॥ ५॥

अरण्ये सन् वर्तमानः गर्गः तत् गर्गोत्पत्तिलक्षणं वस्तु अबोधि ज्ञातवान्। प्रच्छायकारस्करमस्कराढ्ये प्रकृष्टच्छायैः कारस्करैः मस्करैः वेणुभिश्च समृद्धे। मेध्ये शुद्धे। कृतापस्किरणैः विष्किरौघैः पक्षिसमूहैः शुम्भति शोभमाने। सुखास्पदे सुखस्य स्थानभूते। अगोस्पदे महत्त्वात् गवामसन्तासंभवविशिष्टे॥—कृतापस्किरणैरिति। 'कॄ विक्षेपे'। 'अपाच्चतुष्पाच्छकुनिष्वालेखने'। 'हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्' इति जीविकार्थे सुट्। गोष्पदमिति। 'गोष्पदं सेवितासेवितप्रमाणेषु' इति असेविते सुट्। सुखास्पदमिति। 'आस्पदं प्रतिष्ठायाम्' इति सुट्। विष्किरेति। 'विष्किरः शकुनिर्विकिरो वा' इति विपूर्वात् किरतेः 'इगुपध[ज्ञाप्रीकिरः कः]' इति कप्रत्यये सुट् निपात्यते। मस्करेति। 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' इति सुट्। कारस्करेति। 'कारस्करो वृक्षः' इति सुट्। अबोधीति। 'दीपजन—' इत्यादिना कर्तरि चिण्॥

कयापुभीयादिमसूक्तविद्याविचक्षणक्ष्मासुरतः पदास्त्वात्।

परस्पराशस्यसुशस्यमार्गोद्वारेण निर्याय ह माधुरेण॥ ६॥

सक्षौद्रकुस्तुम्बुरुयावकादीनाश्चर्यविश्वान्क्रयिकान्सरम्भान्।

विच्छायतो वीवधिकानगच्छत्सार्थान्विचायन्नपरस्परान्सः॥ ७॥

सः स्वात् पदात् माधुरेण मधुरामभिनिष्क्रमता द्वारेण निर्याय अपरस्परान् विच्छायतः संततमविच्छेदेन [ग]च्छतः सार्थान् विचायन् पश्यन् स [अ]गच्छत् ह। कयापुभीयादिमसूक्तविद्याविचक्षणक्ष्मासुरतः। कयापु भीयं आदिमं आदौ भवं येषां तानि सूक्तानि एव विद्या तस्यां विचक्षणाः क्ष्मासुरा यस्मिन्। परस्पराशस्यसुशस्यमार्गात् परस्परं अशस्य अहिंसनीयं अहिंसकं वा सुशस्यं सुतरां प्रशंसनीयं मार्गं मृगसमूहो यत्र। सक्षौद्रकुस्तुम्बुरुयावकादीन् क्षौद्रं मधु, कुस्तुम्बुरु धान्यकम्। आश्चर्यविश्वान् विश्वो गमनम्। क्रयिकान् क्रयेण जीवतः। सरम्भान् रम्भो वैणवो दण्डः। वीवधिकान् वीवधेन पर्याहारेण जीवतः॥—अशस्येति। 'शसु हिंसायाम्'। '[त]कि-

१. कयाशुभीयेति पुस्तकस्थपाठः काशिकानुसारेण कयापुभीयः कृतः.

शसिचतियतिजनीनामुपसंख्यानम्' इति यत् । सुरास्येति । 'शंसिदुहिगुहिभ्यो वा इति वक्तव्यम्' इति क्यप् । 'अनिदितां–' इति नलोपः । कुस्तुम्बुरु इति । 'कुस्तुम्बुरूणि जातिः' इति सुट् । अपरस्परानिति । 'अपरस्पराः क्रियासातत्ये' इति सुट् । आश्चर्येति । 'चरेराङि चागुरौ' इति यत्प्रत्यये 'आचर्यः' । 'आश्चर्यमनित्ये' इति सुट् निपात्यते । कयाणुभीयमिति । 'भर्ता च्छः सूक्तसाम्नोः' इति मत्वर्थे छः । आदिमेति 'आदेश्चेति वक्तव्यम्' इति मः । माधुरेणेति । मधुरा[मभिनिष्क्रामति] 'अभिनिष्क्रामति द्वारम्' इत्यण् । मधुरामभिनिष्क्रामतीत्यत्र द्वारं करणं स्वातन्त्र्येण विवक्ष्यते । क्षौद्रेति । 'क्षुद्राभ्रमरवटरपादपादञ्' तेन कृते सञ्ज्ञायाम् । वीवधिकानिति । 'विभाषा विवधवीवधात्' इति ष्ठन् । तेन जीवतीत्यर्थे । विश्नेति । 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति नङ् । 'च्छ्वोः शूड्–' इति शः । 'शात्' इति चुत्वाभावः । क्रयिकानिति । 'वस्नक्रयविक्रयाट्ठन्' तेन जीवतीत्यर्थे । राम्भेति । रम्भशब्देन वंशो बोध्यते ततोऽण् । विचक्षणेति । 'चक्षिङः ख्याञ्' । इत्यत्र 'असनयोश्च प्रतिषेधो वक्तव्यः' इति ख्याञभावः ॥

दर्पोच्छलद्विक्रममाणवाहां स्वपस्कराकाक्षसुरथ्यरथ्याम् ।
व्यवस्करामेत्य पुरीमवोचच्छौरिं हरिश्चन्द्रसदृक्षमेवम् ॥ ८ ॥

स गर्गः पुरीं मधुरामेत्य शौरिं वसुदेवं एवं अवोचत् । दर्पोच्छलद्विक्रममाणवाहां विक्रममाणाश्चरन्तो वाहा अश्वा [ यस्याम् ] स्वपस्कराकाक्षसुरथ्यरथ्याम् स्वपस्करा शोभमानरथाङ्गयुक्ता अकाक्षा कुत्सिताक्षरहिता सुरथ्या शोभने रथ्यौ रथं वहद्भिरश्वैर्युक्ता रथ्या रथसमूहो यस्याम् । व्यवस्करां पुरीषाद्यमेध्यरहिताम् । हरिश्चन्द्रसदृक्षम् ॥—विक्रममाणेति 'वेः पादविहरणे' इति तङ् । व्यवस्करेति । 'वर्चस्केऽवस्करः' इति सुट् । स्वपस्करेति । 'अपस्करो रथाङ्गम्' इति सुट् । हरिश्चन्द्रेति । 'प्रस्कण्वहरिश्चन्द्रावृषी' इति सुट् । काक्षेति । 'का पथ्यक्षयोः' इति कोः कादेशः ॥

बृहस्पतौ वत्स धियोप यस्त्वं कृत्ये स नोपक्रमसे किमर्थम् ।
पुष्योऽद्य नः पुंसवनस्य कालः प्राप्तश्च पौषेऽहनि तद्विधेयम् ॥ ९ ॥

हे वत्स, यः धिया बृहस्पतौ उप सुराचार्यादधिकः स त्वं किमर्थं कृत्ये वस्तुनि विषये न उपक्रमसे आरभसे । अद्य पुष्यः नः पुंसवनस्य कालः प्राप्तश्च । तत् पौषे पुष्ययुक्तचन्द्रयुक्ते अहनि तत् विधेयम् ॥—उपक्रमस इति । 'प्रोपाभ्यां समर्थाभ्याम्' इति तङ् । पुष्ये इति । 'पुष्यसिद्धौ नक्षत्रे' इति क्यप् । 'नक्षत्रेण युक्तः कालः' इत्यण् । 'यस्येति च' इत्यलोपः । 'पुष्यतिष्ययोर्नक्षत्राणि' यकारलोपो वक्तव्यः । पुष्य इति । 'लुबविशेषे' इत्यणो लुप् । 'लुपि युक्तवद्व्यक्तिवचने' । कृत्ये इति । 'विभाषा कृवृषोः' इति क्यप् । बृहस्पताविति । 'पारस्करप्रभृतीनि च संज्ञायाम्' 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' । बृहन्तो देवाः । उपेति । 'उपोऽधिके च' इति कर्मप्रवचनीयत्वे 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी'॥

स्तोकात्प्रकृष्टोऽपि कर्पन्नवध्यान्यो यातुधर्मा क्रमते मुमूर्षन् ।
कंसः क्रियाणां सहसाकृतानां फलानि भोक्ता स पचेलिमानि ॥ १० ॥

सः कंसः सहसाकृतानां क्रियाणां पचेलिमानि स्वयमेव पक्वानि फलानि भोक्ता यः यातुधर्मा यातूनां राक्षसानां धर्म इव धर्म आचारो यस्य तादृशः सन् क्रमते कौटिल्येन वर्तते । स्तोकात्प्ररुष्टः अल्पेन कारणेन भृशं रुष्टः क्रुद्धः । अवध्यान् गुर्वादीन् अपि कर्षन् हिंसन् मुमूर्षन् संभावितमरणः ॥—क्रमत इति ।'अनुपसर्गाद्वा' इति तङ् । पचेलिमानीति ।'केलिमर उपसंख्यानम्' 'कर्मकर्तरि चायमिष्यते' । अवध्यानिति ।'हनो वा यद्वधश्च वक्तव्यः' इति यद्वधादेशौ । स्तोकात्प्ररुष्टेति । 'करणे च स्तोका–'इत्यादिना पञ्चमी । 'स्तोकान्तिक–'इति समासः । 'अलुगुत्तरपदे' इत्यलुगधिकारः प्रागानङः । उत्तरपद इत्यापादान्तम् । 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक् । सहसाकृतानामिति । 'ओजःसहोम्भस्तमसस्तृतीयायाः' इत्यलुक् । मुमूर्षन्निति । 'आशंसायामुपसंख्यानम्' इति सन्[१]। सा च प्रयोक्तृधर्मः । हनि 'पूर्ववत्सनः' इत्यात्मनेपदस्य नावकाशः । 'नहि शदिम्रियतिमात्रमात्मनेपदनिमित्तं किं तर्हि शिदाद्यपि इत्युक्तेः । यातुधर्मेति । 'धर्मादनिच्केवलात्' इत्यनिच् समासान्तः ॥

अजर्यमार्यैः सह संगतं तत्कान्येव कर्माण्यवजानते ते ।
श्वःश्रेयसं त्वाप्स्यति सर्पिरादेर्ये जानते तेन पदं विपत्त्याः ॥ ११ ॥

ते आर्यैः सदाचारपरैः सह तत् चिराभ्यस्तं संगतं कान्येव कर्माणि अवजानते अपह्नुवते । अजर्यं न जर्यमिति त्वा श्वःश्रेयसं भद्रं आप्स्यति । ये सर्पिरादेः घृतादिना होमसाधनेन जानते प्रवर्तन्ते ते विपत्त्याः आपदः पदं न भजन्ति । 'जपतां जुह्वतां चापि विनिपातो न विद्यते' इति स्मृतिः ॥—अवजानत इति । 'अपह्नवे ज्ञः' इति तङ् । जानत इति । 'अकर्मकाच्च' इति तङ् । 'ज्ञोऽविदर्थस्य करणे' इति षष्ठी । अजर्यमिति । 'अजर्यं संगतम्' इति यत् । आर्यैति । 'ऋहलोर्ण्यत्' । श्वःश्रेयसमिति । मयूरव्यंसकादिसमासः । 'श्वसो वसीयःश्रेयसः' इत्यच्समासान्तः ॥

संजानते ब्रह्मरहस्यमग्र्यं विरिञ्चभूये विगतस्पृहा ये ।
तान्भ्रूणहत्यामपि निघ्नतस्त्वं स सत्यवद्यान्भज नित्यमित्यान् ॥ १२ ॥

स त्वं तान् नित्यं भज । कान् । ये अग्र्यं ब्रह्मरहस्यं वेदस्य रहसि भवं तात्पर्यं संजानते सम्यग्विदन्ति । विरिञ्चभूये ब्रह्मत्वे विगतस्पृहाः । भ्रूणहत्यामपि निघ्नतः । सत्यवद्यान् सत्यवादिनः । इत्यान् अनुगन्तव्यान् ॥—संजानते इति । 'संप्रतिभ्यामनाध्याने' इति तङ् । सत्यवद्यानिति । 'वदः सुपि क्यप् च' इति यत् । विरिञ्चभूये इति । 'भुवो भावे' इति क्यप् । भ्रूणहत्यामिति । 'हनस्त च' इति भावे क्यप् । इत्यानिति । 'एतिस्तुशास्वृदृजुषः क्यप्' । ससत्यवद्यान् इति एकपदत्वपक्षे सत्यवचनयुक्तान् । अग्र्यमिति । 'अग्राद्यत्' । रहस्यमिति । 'दिगादिभ्यो यत्'॥

उक्त्वेत्यृषिः कारितयोग्यकर्मा शौरिं समापृच्छ्य सभृत्यभार्यम् ।
साहस्रखेयान्नगरात्सुमेधास्तं मार्ग्यशोकं कलयन्स्वधामैत् ॥ १३ ॥

---

१. दिवि इति पुस्तकस्थः पाठः काशिकानुसारं शदिकृतः.

ऋषिः इति उक्त्वा कारितयोग्यकर्मा पुंसवनादि कारयित्वा शौरिं समापृच्छ्य नगरात् स्वग्राम ऐत् गतवान् । सभृत्यभार्यं भृत्यभार्यासहितं मार्ग्यशोकं कलयन् अपनेय दुःखं चिन्तयन् । साहस्रखेयात् साहस्रं सहस्रपरिमितेन धनेन हेतुना निर्वृत्तं खेयं परिखा यत्र ॥—खेयादिति । 'खनु अवदारणे' । 'ई च खनः' इति खनेः क्यप् । अन्त्यस्य च ई-त्वम् । भृत्येति । 'भृञोऽसंज्ञायाम्' इति क्यप् । भार्येति । 'ऋहलोर्ण्यत्' । मार्ग्येति । 'मृजेर्विभाषा' इति क्यप् । तदभावे 'ऋहलोर्ण्यत्' । पक्षे वृद्धिः कुत्वं च । 'मृज्य' इति पाठे क्यपि 'क्ङिति च' इति मृजेर्वृद्धेर्लघूपधगुणस्य प्रतिषेधः । साहस्रमिति । 'तेन निर्वृत्तम्' इत्यण् ॥

मासे सुतं वैजननेऽथ सूतमादाय शौरिर्वदमानमद्यौत् ।
तमात्मनालक्षतमं कुराजं भिद्योद्ध्यकल्पं व्यथितोऽमृषोद्यः ॥ १४ ॥

अथ शौरिः वैजनने प्रसवयोग्ये मासे सूतं सुतमादाय तं कुराजं कुत्सितं राजानं अद्यौत् अभिगतवान् । वदमानं भासमानम् । आत्मनालक्षतमं लक्षसंख्यापूरकं बहुपरिवार-युक्तम् । भिद्योद्ध्यकल्पं नदविशेषद्वयवत् दुर्निवारम् । व्यथितः । अमृषोद्यः मृषावादर-हितः ॥—वदमानमिति । 'भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः' इति शानच् । अमृषोद्य इति । 'राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः' इति क्यन्निपात्यते । भि-द्योद्ध्येति । 'भिद्योद्ध्यौ नदे' इति क्यन्निपात्यते । आत्मनालक्षतममिति । 'नित्यं शता-दिमासार्धमाससंवत्सराच्च' इति तमडागमः । 'आत्मनश्च पूरणे' इत्यलुक् । वैजनन इति । विजननशब्दात् 'ज्योत्स्नादिभ्य उपसंख्यानम्' इति अण् मत्वर्थीयः । अद्यौत् । 'द्यु अभिगमने' ॥

संस्त्यानया सिध्यरुचः शुचास्य प्रष्ठस्य शिष्टेषु गविष्ठिरस्य ।
प्रणाय्यगृह्योऽतिविनीयधामाप्यप्रेष्ट सत्योद्यतया स कंसः ॥ १५ ॥

स कंसः अस्य सत्योद्यतया सत्यवादितया अति अतिशयेन अप्रेष्ट प्रीतोऽभूत् । प्र-णाय्यगृह्यः असंमत जनपक्ष्यः । विनीयधामा विनीयस्य पापस्य आस्पदमपि । संस्त्या-नया घनीभूतया शुचा सिध्यरुचः पुष्यनक्षत्रवद् म्लानशोभस्य । शिष्टेषु प्रष्ठस्य पुरोगमस्य । गवि वाचि स्थिरस्य ॥—[विनीयेति ।] 'विपूयविनीयजित्या मुञ्जकल्कहलिषु' इति कल्के क्यन्निपात्यते । गृह्येति । 'पदास्वैरिबाह्यापक्ष्येषु च' इति पक्षभावे क्यप् । प्रणाय्येति । 'प्र-णाय्योऽसंमतौ' इति ण्यदायादेशनिपातनम् । गविष्ठिरस्येति । 'गवियुधिभ्यां स्थिरः' इति षत्वम् । अलुक् च निपातनात् । संस्त्यानेति । 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वम् । प्रष्ठस्येति । 'प्रष्ठोऽग्रगामिनि' इति षत्वम् ।

अवीवचच्चेति तथा व्यथां मा युग्येन यायाः ससुतः समीत्सन् ।
अश्राव्यपादानमनष्टमो वां न ह्यात्मजन्मा मम मित्र भीतेः ॥ १६ ॥

---

१ 'कुल्य' इति पुस्तकगतः पाठः. २ 'पथ्याः' इति पुस्तकगतः पाठः.

स इति अवीवचद्य उक्तवांश्च । हे मित्र बन्धो, त्वं व्यर्थां मा तथाः कार्षीः । सद्युतः युग्येन वाहनेन यायाः गच्छ । समीर्त्सन् वर्धितुमिच्छन् । वां युवयोः अनष्टमः आत्मजन्मा पुत्रः मम भीतेः अपादानं हेतुः न अभ्रात्रि ॥—युग्येति । 'युग्यं च पत्रे' इति युजेः क्यप् कुत्वं च । अवीवचद्येति । 'वच परिभाषणे' । युजादिः । तथा इति । 'तनादिभ्यस्तथासोः' इति वा सिचो लुक् । समीर्त्सन्निति । 'ऋधु वृद्धौ' । संपूर्वः सन् । 'सनीवन्तर्ध[भ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्'] इति [प]क्ष इडभावः । 'अजादेर्द्वितीयस्य' इति र्धशब्दस्य द्विवचनम् । 'आप्ज्ञप्यृधामीत्' इतीत्वं रपरम्, अभ्यासलोपः । 'खरि च' इति चर्त्वम् । लटः शता ॥

संप्रावदन्तैव गुणांस्तवार्या विप्रावदन्तेह न केऽपि साधो ।
आलाप्यभाजां वचसां तथैषां ममाधुनैवान्ववदिष्ट चेतः ॥ १७ ॥

हे साधो, आर्याः तव गुणान् संप्रावदन्त एव । इह गुणेषु विषये न केऽपि विप्रावदन्त विरुद्धमवदन् । तथा आलाप्यभाजां आलापनाभाजां एषां जनानां वचसां मम चेतः अधुनैव अन्ववदिष्ट अनुवादमकार्षीत् । अनुः सादृश्ये ॥—संप्रावदन्तेति । 'व्यक्तवाचां समुच्चारणे' इति तङ् । अन्ववदिष्टेति । 'अनोरकर्मकात्' इति तङ् । विप्रावदन्तेति । 'विभा[षा] विप्रलापे' इति तङ् । आलाप्येति । 'आसुयुवपिरपिलपित्रपिचमश्च' इति ण्यत् ॥

अवश्यलाव्या दिविजा ममाद्य ये खेचरीं वाचमुदैरिरंस्ताम् ।
नूनं गृहेशूर इतीमके मां क्षिपन्ति वर्षेजजलानिवार्यम् ॥ १८ ॥

अद्य मम दिविजा देवा अवश्यलाव्या अवश्यमुच्छेदनीया ये तां खेचरीं वाचं अशरीरवाचं उदैरिरन् उदीरितवन्तः । इमके कुत्सिता इमे मां गृहेशूर इति क्षिपन्ति । नूनं वर्षेजजलानिवार्यं वर्षे जायते यज्जलं तेनानिवार्यम् ॥—अवश्यलाव्या इति । 'ओरावश्य[के]' इति ण्यत् । मयूरव्यंसकादिसमासः । 'लुम्पेदवश्यमः कृत्ये' इति मलोपः । खेचरीमिति । 'तत्पुरुषे [कृ]ति बहुलम्' इति सप्तम्या अलुक् । दिविजा इति । 'प्रावृट्शरत्कालदिवां जे' इति अलुक् । वर्षेजेति । 'विभाषा वर्षक्षरशरवरात्' इत्यलुक् ॥

अवागिरन्तैव यकृन्ति नृणां ये पूतनाद्या यमशिश्रियंस्ते ।
वाणीमकार्यैः प्रसितस्य तस्य न चेतसा संगिरते स्म शौरिः ॥ १९ ॥

शौरिः तस्य तादृशस्य कंसस्य वाणीं चेतसा न संगिरते स्म नाङ्गीकृतवान् । ये नृणां यकृन्ति एव कालखण्डान्येव अवागिरन्त भक्षितवन्तः, ते पूतनाद्या यं अशिश्रियन् आश्रितवन्तः । अकार्यैः प्रसितस्य अकार्येषु प्रसक्तस्य ॥—अवागिरन्तेति । 'गॄ निगरणे' । 'अवाद्ग्रः' इति तङ् । संगिरत इति । 'समः प्रतिज्ञाने' इति तङ् । अशिश्रियन्निति । 'णिश्रिद्रुस्रुभ्यः—' इति चङ् । अकार्यैरिति । 'ऋहलोर्ण्यत्' । 'प्रसितोत्सुकाभ्याम्—' इति तृतीया ॥

इदंवचोऽनुचरमाण ईते तस्मिन्स्वमादाय शिशुं निकाय्यम् ।
आनाय्यपूज्यो मधुरां प्रणाय्यस्तां नारदः स्मायति लोकपान्थः ॥२०॥

तस्मिन्शौरौ स्वं शिशुमादाय निकाय्यं गृहं ईते सति नारदः तां मधुरां आयति स्म प्राप्तवान्। इदंवचः अस्य वाक्यं अनुचरमाणे अनुत्क्रम्य वर्तमाने आनाय्यपूज्यः आनाय्योऽग्निविशेषः । तद्वत् पूज्यः । प्रणाय्यः निष्कामः तथापि लोकपान्थः लोकेषु पथो नित्यं गच्छन् ॥—अनुचरमाण इति । 'उदश्चरः सकर्मकात्' इत्यात्मनेपदम् । लटः शानच् । 'आनाय्योऽनित्ये' इत्याङ्पूर्वान्नयतेर्ण्यदायादेशौ । प्रणाय्य इति । 'प्रणाय्यो संमतौ' इति प्रपूर्वान्नयतेर्ण्यदायादेशौ । निकाय्येति । 'पाय्यसांनाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु' इति निवासे वाच्ये निपूर्वाच्चिनोतेर्ण्यदायादेशावादिकुत्वं च निपात्यते। लोकपान्थः। 'पन्थो ण नित्यम्' गच्छतीत्यर्थे ॥

सकुण्डपाय्यैर्विदिताग्निचित्यैश्चिन्वद्भिरग्नींश्च समूह्यमुख्यान् ।
अध्येतृभिः सम्यगृचां चरूणां पचैः कुशाग्रीयविशालधीभिः ॥ २१ ॥

वासिष्ठकालेयमुखेषु सामस्वधीतिभिर्ब्रह्मभिरन्वितां ज्ञैः ।
सवामदेव्येषु तथैव वास्त्रवैयाघ्रमुख्यैश्च रथैर्द्रढिष्ठैः ॥ २२ ॥

अभ्रेण खे संचरमाण आराद्विलेशयद्वेषिसमानजूतिः ।
प्राह्णेतनादित्यकरोपमस्तः पुरीं ददृश्वान्गजतावृतां सः ॥ २३ ॥

ज्ञैः विद्वद्भिः ब्रह्मभिः अन्विताम् । सकुण्डपाय्यैः तन्नामक्रतुविशेषसहितैः । विदिताग्निचित्यैः विदिता अग्निचित्या अग्निचयनं यैः । समूह्यमुख्यान् अग्नीन् चिन्वद्भिः । च ऋचां सम्यगध्येतृभिः । सवामदेव्येषु वासिष्ठकालेयमुखेषु सामसु अधीतृ(ति)भिः । कुशाग्रीयविशालधीभिः कुशाग्रीया कुशाग्रवन्निशिता विशाला वा धीर्येषाम्। चरूणां पचैः, तथैव रथैश्च अन्विताम् । वास्त्रवैयाघ्रमुख्यैः वस्त्रेण परिवृता वास्त्राः । व्याघ्रस्य विकारश्चर्म वैयाघ्रं तैः परिवृताः । तैश्च तैश्च द्रढिष्ठैर्दृढतरैः ॥ स पुरीं आरात् ददृश्वान् दृष्टवान् । अभ्रेण मेघेन खे संचरमाणः तद्वाहनतया चरन् विलेशयद्वेषिसमानजूतिः गरुडतुल्यवेगः । प्राह्णेतनादित्यकरोपमस्तः प्राह्णेतनः प्राह्णे भवः । स्ता जटा । गजतावृतां गजसमूहव्याप्ताम् ॥—कुण्डपाय्येति । 'क्रतौ कुण्डपाय्यसंचाय्यौ' इति निपातनम् । समूह्येति । 'अग्नौ परिचाय्योपचाय्यसमूह्याः' इति निपातनम् । 'समूह्यं चिन्वीत पशुकामः' इति श्रुतिः । अग्निचित्येति । 'चित्याग्निचित्ये च' इति भावे यकारस्तु निपात्यते । अध्येतृभिरिति । 'ण्वुल्तृचौ' इति तृच् । पचैरिति । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यच् । पचतीति पचः । ज्ञैरिति । जानातीति ज्ञः । 'इगुपधज्ञाप्रीकिरः कः'। वासिष्ठेति । वसिष्ठेन दृष्टं 'दृष्टं साम' इत्यण् । कालेयेति । 'कलेर्ढक्'। कलिना दृष्टम् । वामदेव्येति । तेन दृष्टमित्यर्थे 'वामदेवाड्ड्यड्ड्यौ' । वास्त्रेति । 'परिवृतो रथः' इत्यण् । [वैयाघ्रेति ।] 'आतश्चोपसर्गे'

इति व्याजिघ्रतेः कः। व्याघ्रः। 'द्वैपवैयाघ्रादञ्'। कुशाग्रीयेति। 'कुशाग्राच्छः'॥ संचरमाण इति। 'समस्तृतीयायुक्तात्' इत्यात्मनेपदम्। प्राक्तनेनेति। 'घकालतनेषु कालनाम्नः' इति वा सप्तम्या अलुक्। बिलेशयेति। 'अधिकरणे शेतेः' इत्यच्। 'शयवासवासिष्वकालात्' इति वा अलुक्। गजतेति। 'गजाच्च वक्तव्यम्' इति तल्। तलन्तं नित्यं स्त्री। दध्यानिति। 'दधेश्चेति वक्तव्यम्' इति कसोर्वा इट्॥

आष्टानपूपान्पललं च शूल्यं क्षैरेयमौदश्वितमश्नतान्धः।
या दाधिकाद्यं च जनेन पूर्णा रराज कौमारवधूत्ककान्ता॥ २४॥

या पुरी जनेन पूर्णा रराज। अष्टानपूपान् क्षैरेयं क्षीरेण संस्कृतं औदश्वितं उदश्वितिसंस्कृतं दाधिकाद्यं दधिसंस्कृतं दाधिकं तदादि च अन्धः अन्नं च अश्नता कौमारवधूत्ककान्ता अपूर्वपतीः कुमारीरुपपन्नाः कौमाराः ते च ते वधूत्काश्च कान्ता यत्र। अथवा अपूर्वपतयः पतीनुपपन्नाः कुमार्यः कौमार्यः ताश्च ता वध्वश्च तासु उन्मनसः कान्ता यत्र॥—कौमारेति। 'कौमारापूर्ववचने' इत्यण्। शूल्यमिति। 'शूलोखाद्यत्' [इति यत्।] दाधिकेति। 'दध्नष्ठक्'। औदश्वितमिति। 'उदश्वितोऽन्यतरस्याम्' इति ठगणौ। क्षैरेयमिति। 'क्षीराड्ढञ्'॥

रुच्यं फलं संप्रददे ह किंचिद्दास्या मिथः कश्चन कौलटेरः।
शारावमन्नं दददेऽपरस्यै यत्रापरः स्मेरमुखस्तदानीम्॥ २५॥

यत्र कश्चन कौलटेरः कुलटाया अपत्यं रुच्यं शोभनं किंचित् फलं मिथो रहसि दास्या संप्रददे दास्यै दत्तवान्। अपरः कौलटेरः अपरस्यै दास्यै शारावं शरावे उद्धृतम् अन्नं स्मेरमुखः सन् दददे दत्तवान्॥—दास्येति। 'अशिष्टस्य व्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम्'। संप्रददे इति। 'दाणश्च सा चेच्चतुर्थ्यर्थे' इति तङ्। सेति तृतीया। कौलटेर इति। कुलटाशब्दात् शीलहीनस्त्रीवचनात् 'क्षुद्राभ्यो वा' इति द्रक्। 'कौलटेयः' इति पाठे 'कुलटाया वा' इति ढक्। शारावमिति। 'तत्रोद्धृतममत्रेभ्यः' इत्यण्॥

वाह्याङ्क(ङ्ग)णं यत्र सराजपुत्रकौर्जस्विराजन्यकराजकाढ्यम्।
प्राज्यौष्ट्रकौरभ्रकवाडवाश्वीयौत्सिक्तकाण्डीरककौन्तिकाद्यम्॥ २६॥

यत्र मधुरायां वाह्याङ्क(ङ्ग)णं बहिर्देशभवमङ्क(ङ्ग)णं एवंविधमभवत्। सराजपुत्रकौर्जस्विराजन्यकराजकाढ्यं राजपुत्रसमूहसहितेन ऊर्जस्विना बलवता राजन्यकेन राजन्यसमूहेन राजकेन राजसमूहेन च समृद्धम्। प्राज्येति। औष्ट्रकं उष्ट्रसमूहः। औरभ्रं उरभ्रसमूहः। उरभ्रो मेषः। वाडवं वडवासमूहः। अश्वीयमश्वसमूहः। काण्डीरकाः काण्डसंज्ञायुधयुक्ताः। कौन्तिकाः कुन्तायुधाः। प्राज्याः प्रभूता एते यत्र॥—वाह्येति। 'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्' इति भवार्थे ष्यञ्। बहिषष्टिलोपश्च। 'अव्ययानां भमात्रे टिलोपः' इत्यस्यानित्यत्वज्ञापकमेतत्। वाडवेति। 'खण्डिकादिभ्यश्च' इत्यञ्। अश्वीयेति।

'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति छः । औष्ट्रादिषु 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्' राजके 'नस्तद्धिते' इति टिलोपः । आद्यमिति । 'दिगादिभ्यो यत्' इति यत् । काण्डीरेति । 'काण्डाण्डादीरन्नीरचौ' इतीरन्मत्वर्थीयः ॥

तं पौरुषीः षट्पुरुषास्तथान्याः क्रान्त्वोपयान्तं परिखा मुनीन्द्रम् ।
दिदृक्षमाणं नृपतिं विविद्वान्द्वास्थोऽन्वजिज्ञासदवेक्ष्य दूरात् ॥ २७ ॥

द्वास्थः तं मुनीन्द्रं दूरादवेक्ष्य अन्वजिज्ञासत ज्ञातुमैच्छत् । नृपतिं दिदृक्षमाणं विविद्वान् ज्ञातवान् । पौरुषीः पुरुषप्रमाणाः तथा अन्याश्च परिखाः क्रान्त्वा अतिक्रम्य उपयान्तं समीपं आगच्छन्तम् ॥—दिदृक्षमाणमिति । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । अन्वजिज्ञासदिति । 'नानोर्ज्ञः' इति तदभावः । पौरुषीरिति । 'पुरुषहस्तिभ्यामण्च' । षट्पुरुषा इति । प्रमाणे विहितस्य द्वयसजादेशस्य 'प्रमाणे लो द्विगोर्नित्यम्' इति लुकि 'पुरुषात्प्रमाणेऽन्यतरस्याम्' इति ङीबभावे टाप् । 'षट्पुरुषीः' इति वा पाठः । विविद्वानिति । विरेर्ज्ञानार्थात्क्वसुः ॥

कंसं कृतातिथ्यविधिं सजन्यं शुश्रूषमाणं मुनिरित्यवादीत् ।
न शीयते मे त्वयि सौहृदय्यं तत्प्रत्यशुश्रूषिषमीप्सितं ते ॥ २८ ॥

स मुनिः कंसं इति अवादीत् । 'मे त्वयि सौहृदय्यं न शीयते नावगच्छति । तद् ते अभीप्सितं प्रत्यशुश्रूषिषम् प्रतिश्रोतुमैच्छम् । कृतातिथ्यविधिम् । जन्यं जनस्य जल्पम् । शुश्रूषमाणं श्रोतुमिच्छन्तम् ॥—प्रत्यशुश्रूषिषमिति । 'प्रत्याङ्भ्यां श्रुवः' इति तदभावः । शीयते इति । 'शदेः शितः' इति तङ् । 'पाघ्रा' इति शीयादेशः । आतिथ्येति । 'अतिथेर्ञ्यः' तादर्थ्ये । जन्यमिति । 'मतजनहलात् करणजल्पकर्षेषु' इति जल्पे य[त्] । सौहृदय्यमिति । ब्राह्मणादित्वात् ष्यञ् । हृदादेशाभावपक्षः ॥

ऋजुत्वदोषान्म्रियसे पुरा त्वं जानासि न स्वं विषमस्थमेवम् ।
स्वसुःपतिः स्थाण्डिलसंमितस्ते भूकाश्यपश्चक्रभृतः पितायम् ॥ २९ ॥

ऋजुत्वदोषात् आर्जवमेव दोषस्तस्माद्धेतोः म्रियसे पुरा आशु प्राणांस्त्यक्ष्यसि । स्वमात्मानमेवं विषमस्थं कृच्छ्रे वर्तमानं न जानासि । ते अयं स्वसुःपतिर्वसुदेवश्चक्रभृतः पिता भूकाश्यपः । यो यो भगवतः पिता दशरथादिः स स भूकाश्यपः स्थाण्डिलसमितः व्रतवशात् स्थण्डिले शायी स्थाण्डिलः ॥—म्रियस इति । 'म्रियतेर्लुङ्लिङोश्च' इति तङ् । विषमस्थमिति । 'सुपि स्थः' इति कः । 'स्थे च भाषायाम्' इत्यलुक्प्रतिषेधः । स्वसुः पतिरिति । 'विभाषा स्वसृपत्योः' इति षष्ठ्या अलुक् । स्थाण्डिलेति । 'स्थण्डिलाच्छयितरि व्रते' ॥

संविद्धि मातापितरौ तवेमौ यदूंश्च गोपांश्च नृपादितेयान् ।
प्रस्थं सुधां नन्दनमाश्रितानां त्वं कालनेमिं स्वसखांश्च दैत्यान् ॥ ३० ॥

हे नृप, तव इमौ मातापितरौ तथा अन्यान् यदूंश्च गोपांश्च आदितेयान् संविद्धि अवेहि। त्वं आत्मानं कालनेमिं तन्नामकमसुरेश्वरं संविद्धि। युधां युद्धानां प्रस्थं प्रतिष्ठते इति प्रस्थः। आश्रितानां नन्दनम्। स्वसंस्थान् प्रलम्बादींश्च दैत्यान् संविद्धि॥—आदितेयानिति। 'कृदिकारादक्तिनः'। 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीपन्तात् 'स्त्रीभ्यो ढक्'। मातापितराविति। 'आनङृतो द्वन्द्वे' इत्यानङ्पूर्वपदस्य। प्रस्थमिति। 'आतश्चोपसर्गे' इति कः॥

कः कालनेमेरितरो हि कण्ठेकालाङ्घ्रिभागी निपुणः समित्याम्।

मित्रेषु साधुः प्रियमां स मे त्वां संपश्यतो मुञ्चति हा न चेतः॥३१॥

कालनेमेरितरः को ह्येवंविधः, कण्ठेकालाङ्घ्रिभागी शिवपादभजनशीलः। समित्यां युधि निपुणः। मित्रेषु साधुश्च स कालनेमिः। हा विषीदामि। त्वां संपश्यतः मे चेतो न मुञ्चति। प्रियमां अहंप्रियो यस्य॥—मित्रेषु समित्यामिति। 'साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः' इति सप्तमी। तत्त्वकथने न भवति। कण्ठेकालेति। 'सप्तमीविशेषणे बहुव्रीहौ' इति सप्तम्यन्तस्य पूर्वनिपातः। 'अमूर्धमस्तकात् स्वाङ्गादकामे' इति सप्तम्या अलुक्। कण्ठेकालस्याङ्घ्री भजते सेवत इति कण्ठेकालाङ्घ्रिभागी। 'संपृचानुरुधा—' इति भजधातोर्घिनुणि 'चजोः कु घिण्यतोः' इति कुत्वम्। प्रियमामिति। 'त्वमावेकवचने' इति समास एकार्थस्यास्मदो मपर्यन्तस्य मादेशः॥

वित्ताश्चतुर्विंशतिरङ्घ्रिहस्ता यस्याशरेन्द्रः स हि चैद्य एषः।

स विप्रचित्तिः शृणु मागधोऽसौ यः संहितोऽभूज्जरया गुरुस्ते॥३२॥

यस्य चतुर्विंशतिरङ्घ्रिहस्ता वित्ताः ख्याताः। स आशरेन्द्रो ह्येवैष चैद्यश्चेदिराजः शिशुपालः त्वं शृणु। स प्रसिद्धो विप्रचित्तोऽसुरस्ते गुरुरसौ मागधो मगधराजो जरासंधः। यो जरया संहितोऽभूत्॥—अङ्घ्रिहस्ता इति। 'अधिकरणैतावत्त्वे च' इति द्वन्द्वेकत्वाभावः। मागध इति। 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इत्यपत्येऽण्। 'तस्य राजन्य[प]त्यवत्'। रावणो हि चतुष्पात्। उक्तं [च] रामायणे—'रावणो विंशतिभुजश्चतुष्पान्मानमन्दिरः' इति॥

इन्द्राबृहस्पत्युपक्लृप्तमन्त्रा उत्साहिनोऽग्नीवरुणौ तथान्ये।

सुरा भवन्तं बत हन्तुकामाः प्रबोधयांचक्रुरधोक्षजं तम्॥ ३३॥

अग्नीवरुणौ तथा अन्ये सुराश्च भवन्तं हन्तुकामाः तमधोक्षजं प्रबोधयांचक्रुः। बत खिन्दे(खेदे)। इन्द्राबृहस्पत्युपक्लृप्तमन्त्राः। मन्त्रो गुप्तिवादः। उत्साहिनः॥—प्रबोधयांचक्रुरिति। 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' इति परस्मैपदम्। 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इति कृञोऽपि परस्मैपदम्। इन्द्राबृहस्पती इति। 'देवताद्वन्द्वे च' इत्यानङ्।

१. 'भजन' इत्यादर्शपाठः. २. 'तस्य राजनीत्येव' इति काशिकावृत्तिः.

अभीवरुणाविति । 'ईदग्नेः सोमवरुणयोः' इतीकारः । हन्तुकामा इति । 'तुं काममनसोरपि' इति लोपः ॥

स उत्पित्सो दैत्ययशोमृतानामुदेजयः सर्वनिलिम्पभीतेः ।
गोविन्द आधेरसतां ददोऽसौ हन्ताष्टमस्ते वसुदेवसूनुः ॥ ३४ ॥

सोऽसौ गोविन्दो अष्टमो वसुदेवसूनुस्ते हन्ता । दैत्ययशोमृतानामुत्पिबः । सर्वनिलिम्पभीतेरुदेजयः कम्पयिता । असतामाधेर्ददः ॥—उत्पिब इति । 'पाघ्राध्माधेट्दृशः शः' इति शः । उदेजय इति । 'एजृ कम्पने' । 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' इति शः । निलिम्पेति । 'नौ लिम्पेरिति वक्तव्यम्' इति शः । गोविन्द इति । 'गवादिषु विन्देः संज्ञायाम्' इति शः । दद इति । 'ददाति दधात्योर्विभाषा' इति शः ॥

प्रयुङ्क्ष्व काल्यान्फलिनानुपायान्प्रियाणि मित्राणि च दर्शयस्व ।
संक्ष्णुष्व बुद्धिं शृणु भोक्ष्यसे त्वं नैवान्यथा राज्यसुखं चिराय ॥ ३५ ॥

काल्यान् प्राप्तकालान् फलिनान्फलेन निश्चितान् उपायान् प्रयुङ्क्ष्व । प्रियाणि मित्राणि च दर्शयस्व च । तेषामात्मकर्मदर्शने अनुकूलो भव । बुद्धिं संक्ष्णुष्व निशितां कुरु । इदं शृणु । अन्यथा मदुक्ताकरणे त्वं राज्यसुखं चिराय नैव भोक्ष्यसे अनुभविष्यसि ॥—प्रयुङ्क्ष्वेति । 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' । 'स्वराद्यन्तोपसृष्टादिति वक्तव्यम्' इति तङ् । संक्ष्णुष्वेति । 'समः क्ष्णुवः' इति तङ् । भोक्ष्यस इति । 'भुजोऽनवने' इति तङ् । दर्शयस्वेति । 'णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने' इति तङ् । 'हृक्रोः—' इत्यत्र 'अभिवादिदृशोरात्मनेपद उपसंख्यानम्' इति कर्तुर्वा कर्मसंज्ञायां द्वितीया । [काल्यानिति 'तदस्य प्राप्तम्' इत्यधिकारे 'कालाद्यत्' इति यत् । फलिनानिति 'फलबर्हाभ्यामिनच्' इति मत्वर्थीय इनच्] ॥

द्यावाक्षमे संचरतः सदा मे दिवस्पृथिव्योरधिपोऽसि वुध्याम् ।
न भीषये नापि च गर्धये त्वां शक्त्याज्वलं नाप्यपलापयेऽहम्[1] ॥३६॥

त्वं मे पुरुषां असि वर्तसे । द्यावाक्षमे लोकेषु साकल्येन सञ्चरतः । दिवस्पृथिव्योरधिपः । अहं त्वां न भीषये, नापि च गर्धये व्यामोहये । नापि अपलापये (=अपलापये) न्यक्करोमि । शक्त्या ज्वलं ज्वलन्तम् ॥—भीषये इति । 'भीस्म्योर्हेतुभये' इति तङ् । गर्धये इति । 'गृधिवञ्च्योः प्रलम्भने' इति तङ् । अपलापये (अपलापये) इति । 'लियः संमाननशालीनीकरणयोश्च' इति तङ् । 'विभाषा लीयतेः' इत्यात्वे पुक् । ज्वलमिति । 'ज्वलितिकसन्तेभ्यो णः' इति णाभावे पचाद्यच् । द्यावाक्षमे इति । 'दिवो द्यावा' इति द्यावादेशः । दिवस्पृथिव्योरिति । 'दिवसश्च पृथिव्याम्' इति दिवसादेशः । सस्य दत्वादिविकाराभावोऽक्षारोच्चारणात् ॥

1. 'शक्त्याज्वलं नाप्यपलापयेऽहम्' इति न्याय्यः पाठः.

गन्तमायेनेति। 'ह्वावामश्च' इत्यण्। तमोपहेनेति। 'अपे क्लेशतमसोः' इति हन्तेर्डः। श्येनायत इति। 'क्यङ्मानिनोश्च' इति पुंवद्भावः। असेटेति। 'षिञ् बन्धने'। (लुङ्)॥

स तामसीबुद्धिररुष्करोक्तिः प्रणाशिकावृत्तिरथो तदीयम्।
कोपोत्थदुष्प्रेक्षमुखीतनुर्द्राक्शिशुं प्रसह्याच्युतशङ्कयाहन्॥ ४१॥

अथो स द्राक् तदीयं शिशुमच्युतशङ्कया प्रसह्य अहन् हतवान्। तामसीबुद्धिः तमोगुणविकाररूपा बुद्धिर्यस्य। अरुष्करोक्तिः अरुष्करी बाधाविधायिनी उक्तिर्यस्य। प्रणाशिकावृत्तिः जनानां प्रणाशयित्री वृत्तिर्यस्य। कोपोत्थदुष्प्रेक्षमुखीतनुः कोपोत्थानेन दुर्निरीक्षवदना मूर्तिर्यस्य॥—प्रणाशिकावृत्तिरिति। 'न कोपधायाः' इति पुंवद्भावप्रतिषेधः। तामसीबुद्धिरिति। 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवत्त्वाभावः। कोपोत्थेति। 'सुपि स्थः' इति योगविभागाद्भावे कः। दुष्प्रेक्षमुखीतनुरिति। 'स्वाङ्गाच्चेतोऽमानिनि' इति पुंवत्त्वाभावः॥

पुलोमजाजानिमुदोऽवसायो गोदं फलद्वैनयिकं स्वतातम्।
जनस्य शोकापनुदं स बद्ध्वा परम्परीणां श्रियमन्वबोभूत्॥ ४२॥

स स्वतातमुग्रसेनं बद्ध्वा परम्परीणां परांश्च परतरांश्चानुभवन्तीं क्रमप्राप्तां अन्वबोभूत् भृशमन्वभवत्। पुलोमजाजानिमुदः पुलोमजा जाया यस्य तस्येन्द्रस्य मुदः अवसायः अवसानकरः। गोदं गा ददतम्। फलद्वैनयिकं फलत् वैनयिकं विनयो यस्य। जनस्य शोकापनुदं शोकमपनुदन्तम्॥ [अवसाय इति। 'श्याद्व्यधास्रुसंस्र्वतीणवसा—' इत्यवपूर्वात् 'षोऽन्तकर्मणि' इत्यतो णः।] गोदमिति। 'आतोऽनुपसर्गे कः'। शोकापनुदमिति। 'तुन्दशोकयोः परिमृजापनुदोः' 'आलस्यसुखाहरणयोरिति वक्तव्यम्' इति कः। पुलोमजाजानिरिति। 'जायाया निङ्' समासान्तः। 'संज्ञापूरण्योश्च' इति [न] पुंवत्त्वम्। वैनयिकेति। 'विनयादिभ्यष्ठक्' स्वार्थे। परम्परीणामिति। 'परोवरपरम्परपुत्रपौत्रमनुभवति' इति खः॥

साधिष्ठसंतापकनीतिशाली धियो यदूनसाध्वितरा दधानान्।
सुखप्रदान्भागवतांश्च नृणां गोसंख्यवर्गीयजनं च सोऽद्वेट्॥ ४३॥

स यदून् भागवतान् भगवद्भक्तियेषां तांश्च गोसंख्यवर्गीयजनं च अद्वेट् द्वेष्टि स्म। साधिष्ठसंतापकनीतिशाली साधिष्ठाः साधुतमाः तेषां संतापिकी संतापाय समर्था या नीतिः तद्वान्। [साध्वितरा] अतिशयेन साध्वीः धियः दधानान्। नृणां सुखप्रदान्॥—[प्रदानिति।] 'प्रे दाज्ञः' इति कः। गोसंख्येति। 'समि ख्यः' इति कः। गोसंख्यवर्गीयेति। 'वर्गान्ताच्च' इति छः। संतापकनीतीति। 'पुंवत्कर्मधारयजातीयदेशीयेषु' इति पुंवत्त्वम्। साध्वितरा इति। 'वोतो गुणवचनात्' इति ङीप्। 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः'। 'तरप्तमपौ घः'। भागवतानिति। 'भक्तिः' इत्यण्॥

आस्याच भृत्यानयि भो निषेव्ये यश्चैत्रवैशाखमुखैः सदापि ।
मासैः स्वकार्यार्पणतो द्विपो मे तस्याद्य यद्वस्तु कुरुध्वमेतत् ॥ ४४ ॥

स भृत्यान् इति आस्यात् उक्तवांश्च । 'अयि भो मित्राणि, यः अहं चैत्रवैशाखमुखैः मासैरपि सदा स्वकार्यार्पणतः निषेव्ये सेवितो भवामि तस्य तादृशस्य मे अद्य द्विपः शत्रवो भवन्ति यदि [तर्हि] अस्तु भवतु । यूयमेतद्वक्ष्यमाणं कुरुध्वम् ॥—[कुरुध्वमिति ।] 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति तङ् । वैशाखेति । 'नक्षत्रेण युक्तः कालः' इत्यणि विशाखायुक्ता पौर्णमासीति वैशाखी 'सास्मिन् पौर्णमासीति' संज्ञायामण् । चैत्रेति । 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' इति ठगभावपक्षेऽण् । अस्त्वित्यव्ययं सासूयाङ्गीकारे ॥

माहेन्द्रमाग्नेयमृतव्यमैन्द्रं द्यावापृथिव्यं च चरुं निरुप्य ।
कायं च सौम्यं च सुरान्यजन्ते ये तान्द्विजानाहृत सामगाद्यान् ॥४५॥

यूयं तान् द्विजान् आहृत । सामगाद्यान् साम गायन्तीति सामगाः । चरुं निरुप्य निर्वापं कृत्वा । किं देवत्यम् । माहेन्द्रं महेन्द्रदेवताकम्, आग्नेयमग्निदेवत्यम्, ऋतव्यमृतुदेवत्यम्, ऐन्द्रं द्यावापृथिव्यं कायं कः प्रजापतिस्तद्देवत्यं च सौम्यं सोमदेवताकं च ॥—यजन्त इति । स्वरितेत्त्वादात्मनेपदम् । सामगेति । 'गापोष्टक्' । ऐन्द्रमिति । 'सास्य देवता' इत्यण् । कायमिति । 'कस्येत्' इत्यण्, इकारादेशश्च । माहेन्द्रमिति । 'महेन्द्राद् घाणौ च' इत्यण् । सौम्यमिति । 'सोमाट् ट्यण्' । ऋतव्यमिति । 'वाय्वृतुपित्रुषसो यत्' । द्यावापृथिव्यमिति । 'द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च' इति यत् । आग्नेयमिति । 'अग्नेर्ढक्' । 'प्राग्दीव्यतीयेषु तद्धितार्थेषु सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः' ॥

मिथ्यापि ये केचन कारयन्ते पदानि लोकेऽत्र यजन्ति वा ये ।
तान्दैत्यमुद्रानपि भावयध्वं तेऽपि स्फुटं नोऽपवदन्त एव ॥ ४६ ॥

अयि तान् दैत्यमुद्रां भावयध्वं गमयत । कान् । येऽत्र लोके पदानि मिथ्यापि कारयन्ते स्वरादिदुष्टमसकृदुच्चारयन्ति । ये वा यजन्ति परार्थं यागं कुर्वन्ति तान् । तेऽपि नः अस्मभ्यं अपवदन्ते क्रुध्यन्ति असूयवन्ति वा एव स्फुटम् ॥—कारयन्त इति । 'मिथ्योपपदात्कृञोऽभ्यासे' इति तङ् । अपवदन्त इति । 'अपाद्वदः' इति तङ् । न इति । क्रुधादिना सम्प्रदानसंज्ञा । भावयध्वमिति । 'भू प्राप्तौ' । 'णिचश्च' इति तङ् ॥

अपूपिकादं सुवितीर्णभैक्षं कैदार्यवत्कावचिकानुयातम् ।
अश्वीयवद्ब्रह्मकतैत्तिरोक्तं तृण्यामिवान्यानवमन्यमानम् ॥ ४७ ॥

[पि]तपक्षपाता[त्] मामुपेक्ष्य त्विर्णा अपितात् पक्षपाताद्धेतोः परेतपिण्डादनविन्दज्जीवं द- त्तिदतया परेभ्य दत्तस्य पिण्डस्य अदनेन लब्धजीवनं भवतु । काकवत् काकसमूह इव तदपि अनन्ते आकाशे अपितात् पक्षाभ्यां पातात् प्रेतपिण्डभक्षणलब्धजीवनं भ- वति । कीदृक् । आपूपिकादं अपूपसमूह आपूपिकम् । सुवितीर्णभैक्षं दत्तभिक्षासमूहम् । कैदार्यवत् । कैदार्यं केदारसमूहः । कावचिकानुयातम् । कावचिकं कवचिनां समूहः । अथीयवत् । अथीयमथसमूहः । तृण्यकतैत्तिरोत्कम् । तृह्यासत्ते तित्तिरिसमूहे उत्कम् । अ- न्यान् सर्वान् तृण्यामिव तृणसमूहमिवावमन्यमानम् ॥—काकेति । 'तस्य समूहः' इत्यण् । भैक्षमिति । 'भिक्षादिभ्योऽण्' । कैदार्येति । 'केदाराद्यञ्च' । कावचिकेति । 'ठञ् कवचिनश्च' । तैत्तिरेति । 'अनुदात्तादेरञ्' । आपूपिकेति । 'अचित्तहस्तिधेनोष्ठक्' । अथीयेति । 'केशा- श्वाभ्यां यञ्छावन्यतरस्याम्' इति छः । तृण्येति । 'पाशादिभ्यो यः' । तृण्येति । ['पद्दास्वे- रिवाग्राम्यपक्षेषु च' इति] प्रदेरस्वैरिणि क्यप् ॥

ऊर्ध्वं मुहूर्ताच्छृणुया यदि त्वमव्यथ्यमेकं द्विषतां भवन्तम् ।
निस्तृण्ढि मांसौदनिकान्किमन्यद्भाक्तान्नृपास्मानिति ते तमूचुः ॥ ४९ ॥

ते अमुमस्मिनूचुः । हे नृप, अन्यत् किं ब्रूमहे । त्वं मुहूर्तादूर्ध्वं द्विषतां मध्ये एक- मपि अव्यथ्यं व्यथार्हानं भवन्तं सन्तं यदि शृणुयाः, तर्हि अस्मान् निस्तृण्ढि जहि इति । मांसौदनिकान् येभ्यो नित्यं मांसौदनं दीयते । तथा भक्तं येभ्यो नित्यं दीयते । भक्तमन्नम् । ते भाक्ताः । न व्यथत इति अव्यथ्यः ॥—[अव्यथ्यमिति । 'राजसूयसूर्यमृषोद्य-' इति नञ्पूर्वाद्व्यथतेः यत् ।] शृणुया इति । 'लिङ् चोर्ध्वमौहूर्तिके' इति लोडर्थलक्षणे भ- विष्यति या लिङ् । लोडर्थः प्रैषादिः । मांसौदनिकानिति । 'श्राणामांसौदनाट्टिठन्' । 'तदस्मै दीयते नियुक्तम्' इत्यर्थे । भाक्तानिति । 'भक्तादणन्यतरस्याम्' इत्यण् ॥

उद्यच्छमानात्कदनाय कंसादुद्विग्नचित्ता यदवः सदाराः ।
प्रायेण वैराटकशैवमुख्यं देशान्तरं पादविका व्रजेयुः ॥ ५० ॥

यदवः कंसादुद्विग्नचित्ता भीतचित्ताः सदाराः प्रायेण बाहुल्येन वैराटकशैवमुख्यं वैराटकाः विराटनिवासः, शैवं शिवीनां विषयो देशः । तं देशान्तरमीयुः । यत कदनाय सं- कुलभाय उद्यच्छमानात् उद्यमं कुर्वाणात् । पादविकाः पद्भ्यां धावन्तः ॥—उद्यच्छमाना- दिति । 'समुदाङ्भ्यो यमोऽग्रन्थे' इत्यात्मनेपदम् । शैव इति । 'विषयो देशे' इत्यण् । भागवन्द्रोऽत्र विषयः । वैराटकेति । 'राजन्यादिभ्यो वुञ्' । पादविका इति । 'पर्पा- दिभ्यः ष्ठन्' 'पादः पत्' इति ... । ... । 'दीर्घं इणः किति' इत्यभ्यासस्य दीर्घः ॥

श्रेणसह(स्र)राभिर्गुणमण्डलीभिर्या रोहिणीति प्रितरा वितेने ।
शौरेर्वधूः सा निजभर्तृबन्धोर्नन्दस्य तावद्व्रजमन्ववात्सीत् ॥ ५१ ॥

या । शौरेः सा वधूः नन्दस्य व्रजमन्ववात्सीत् । या रोहिणीति प्रसिद्धा प्रितरा ज्ञानश्री .... सह(स्र)राभिर्गुणमण्डलीभिः ... प्रथीयसा ॥—[वितेने इति ।] 'डांडन्तां तयः'

इति तङ् । स्नितेति । 'स्त्यै ष्ट्यै शब्दसंघातयोः' । 'संस्त्याने स्त्यायतेर्ड्रट्' । टिलोपयलोपौ । ङीप् । 'द्विवचनविभज्योपपदेतरबीयसुनौ' इति स्त्रीशब्दात्तरप् । 'नद्याः शेषस्यान्यतरस्याम्' इति वा ह्रस्वः । श्रेयस्क(स्त)राभिरिति । प्रकर्षयोगात् प्राकृत्रीत्वस्याविवक्षायां सिद्धिः । ङीपि तु 'उगितश्च' इति ह्रस्वाभावपक्षे 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावः ॥

अन्यायतो रिक्थहरः क्षितीशो विम्यन्मृतेराशु पुनर्भगिन्याः ।
स स्त्रीतरायास्तनयान्सुपूतीननेष्ट पञ्चाप्यथ पञ्चभावम् ॥ १२ ॥

स क्षितीशः पुनर्भगिन्या द्वितीयादीन् पञ्चाप्याशु जातमात्रान् तनयान् पञ्चभावं निधनमनेष्ट प्रापितवान् । एवं षड्गर्भजन्मोक्तम् । अन्यायतो रिक्थहरः अन्यायेन द्रव्यं हरम् । मृतेर्बिभ्यत् । स्त्रीतराया अतिशयितायाः स्त्रियाः सुपूतीन् ॥—रिक्थहर इति । 'हरतेरनुद्यमनेऽच्' ॥

यद्भागिभाजोऽपि हि जानते ताञ्ज्ञेयं यदष्टादश यश्च पाता ।
विद्या भुजङ्गाधिपतिर्महात्मा स देवकीसप्तमगर्भ आसीत् ॥ १३ ॥

स भुजङ्गाधिपतिरनन्तो देवकीसप्तमगर्भ आसीत् । महात्मा महानात्मा यस्य । यद्भागिभाजो यद्भक्तान् भजन्तोऽपि यत् ज्ञेयं वस्तु तत् जानते हि । यश्च अष्टादश वेदोपवेदाङ्गोपाङ्गलक्षणा विद्याः पाता रक्षिता ॥—जानत इति । 'अनुपसर्गाज्ज्ञः' इति तङ् । महात्मेति । 'आन्महतः समानाधिकरणजातीययोः' इत्याकारः । अष्टादश इति । 'अष्टनः संख्यायामबहुव्रीह्यशीत्योः' । 'प्राक्शतादिति वक्तव्यम्' इत्याकारः ॥

महीयसीरूपतयोदिता या हृल्लेखसंसारभयापहर्त्री ।
या च त्रयोविंशतितत्त्वरूपा वर्णात्रिषष्टिश्च वपुर्यदीयम् ॥ १४ ॥
हृच्छोकहर्तुर्जगतां हरेः सा मायाज्ञया गर्भमथो अमुष्याः ।
तं रोहिणीमाप्य पुनः स्वजन्यै नन्दस्य दारानविशद्यशोदाम् ॥ १५ ॥

अथो सा माया हरेराज्ञया अमुष्यास्तं गर्भं रोहिणीमाप्य प्रापय्य पुनः स्वजन्यै आ-

हृल्लेखेति । 'हृदयस्य हृल्लेख[यदण्]लासेषु' इति हृदादेशः । हृच्छोकेति । 'वा शोकष्यञ्रोगेषु' इति वा हृदादेशः । महीयसीरूपतयेति । 'उगितश्च' इति ह्रस्वाभावपक्षः । आप्येति । आङ्पूर्वाल्ल्यप् । 'विभाषापः' इति णेरयादेशाभावपक्षे 'णेरनिटि' इति णेर्लोपः । 'आदित्रयं ह्रस्वदीर्घप्लुतभेदान्नवात्मकम् । दीर्घप्लुततया षट्कं परंतु द्वादशात्मकम् ॥ स्युः पञ्चविंशतिः स्पर्शा अन्तस्थानां चतुष्टयम् । षडूष्माणश्च चत्वारो यमा बिन्दुविसर्गलाः ॥ इतिषष्टिर्वर्णाः । दीर्घाश्चाष्टौ प्लुताश्चाष्टौ ह्रस्वाः पञ्च यमा नव । व्यञ्जनानि त्रयस्त्रिंशत् त्रिषष्टिर्वर्णजातयः ॥ ३ ॥'

धन्यं वितन्वन्नपरोदधिभ्यः क्षीरोदमुच्चैरथ शार्ङ्गधन्वा ।
दुराजपद्योपलभङ्गहृद्या विधास्यमानः श्रुतिपद्धतीस्ताः ॥ १६ ॥
पन्मिश्रतीर्थाम्बुकृतोदवासैर्जुष्यो मुनीन्द्रैः कलितोदकुम्भैः ।
सुरासुरग्रामणिदर्पदाता गर्भेऽभवद्देवकनन्दनायाः ॥ १७ ॥

अथ शार्ङ्गधन्वा देवकनन्दनाया गर्भे अभवत् सांनिध्यमकरोत् । इतरोदधिभ्यः क्षीरोदमात्मसांनिध्येन उच्चैर्धन्यं भाग्यवन्तं वितन्वन् । ताः श्रुतिपद्धतीः दुराजपद्योपलभङ्गहृद्या दुष्टा राजान एव पादौ विध्यन्त उपलास्तेषां भङ्गेन हृदयस्य प्रिया विधास्यमानः । मुनीन्द्रैर्जुष्यः सेव्यः । पन्मिश्रतीर्थाम्बुकृतोदवासैः पदमिश्रं तीर्थाम्बु गङ्गाजलं तत्र कृत उदवासो यैः । कलितोदकुम्भैः धृत उदकपूर्णकुम्भो यैः । सुरासुरग्रामणिदर्पदाता सुरासुरश्रेष्ठानां दर्पस्य प्रतिपादयिता खण्डयिता च ॥—पद्येति । 'विध्यत्यधनुषा' इति यत् । 'पद्यत्यतदर्थे' इति पादशब्दस्य पदादेशः । पद्धनीति । पादाभ्यां हन्यते इति कर्मणि क्तिन् । 'हिमकाषि हतिषु च' इति पदादेशः । बह्वादित्वात् ङीषन्तो वा । पन्मिश्रेति । 'वा घोषमिश्रशब्देषु' इति पद्भावः । क्षीरोदमिति । 'उदकस्योदः संज्ञायाम्' । 'संज्ञायामुत्तरपदस्योदकशब्दस्य उदादेशो भवतीति वक्तव्यम्' । उदवास उदधीति । 'पेषंवासवाहनधिषु च' इत्युदकशब्दस्य उदादेशः । उदकुम्भेति । 'समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानम् । मध्यमपदलोपश्च' । 'एकहलादौ पूरयितव्येऽन्यतरस्याम्' इत्युदादेशः । [सुरासुरग्रामणिदर्पदाता इति] 'इको ह्रस्वोऽङ्यो गालवस्य' इति वा ह्रस्वादेशः ॥

श्रमोदबिन्दुप्लपितास साध्वे हेतौ तथाप्यैदिधदात्मधर्मम् ।
भान्ती निकामं धृतवामनां तां तदादिति(ती)मन्वकरोद्दिवासौ ॥ १८ ॥

सा अल्पे हेतौ अपि श्रमोदबिन्दुप्लपिता आप्त पभूव । उदकस्य बिन्दव उदबिन्दवः । तथापि आत्मधर्ममैधिधदवर्धयत् । तदा निकामं भान्ती शोभमाना असौ धृतवामनां तामदिति(ती)मन्वकरोदिव ॥—ऐदिधदिति । 'विभाषोपपदेन प्रतीयमाने' इत्यात्मनेपदा-

1. 'इत्यादिषु 'विदुर्गावरा' इत्युदाहृतम् । वामिमूलम्' इति सिद्धान्तकौमुदी. एवं चेदमपि तदनुरोधेन बोध्यम्.

भावे परस्मैपदम् । भान्तीति । 'शेषात्कर्तरि परस्मैपदम्' । अन्वकरोदिति । 'अनुपराभ्यां कृञः' इति परस्मैपदम् । श्रमोदबिन्द्विति । 'मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च' इति वा उदादेशः । आसेत्यव्ययम् ॥

सुखाहरैर्वर्महरैः सगर्भ्यैः प्रलम्बमुख्यैश्च सहाश्रवैस्तैः ।
अभिक्षिपन्नक्षमकोऽर्चनार्हान्दृष्ट्वा स्वसुर्दीप्तिमखिन्त कंसः ॥ ५९ ॥

कंसः स्वसुर्दीप्तिं दृष्ट्वा अखिन्त खिन्नोऽभूत् । सगर्भ्यैर्भ्रातृभिस्तैः प्रलम्बमुख्यैश्च सह अर्चनार्हान् । पूजामर्हतः अभिक्षिपन् अभिभवन् । सुखाहरैः सुखाहरणशीलैः वर्महरैः कवचं हर्तुं सभाव्यमानवयोभिः । आश्रवैः वचनस्थितैः । अक्षमकः न विद्यमाना क्षमा यस्य ॥—अभिक्षिपन्निति । 'अभिप्रत्यतिभ्यः क्षिपः' इति परस्मैपदम् । वर्महरैरिति । 'वयसि च' इत्यच् । सुखाहरैरिति । 'आङि ताच्छील्ये' इत्यच् । अर्चनार्हानिति । 'अर्हः' इत्यच् । दीप्तिमिति । 'क्तिन्नाबादिभ्यः' । सगर्भ्यैरिति । 'सगर्भसयूथसनुताद्यन्' भवेऽर्थे । समाने गर्भे भव इति 'समानस्य च्छन्दसि' इति सः ॥

प्रोवाह चिन्तां परिमृष्यति स दैवाय कार्याद्विरराम भीतः ।
उपारमत्स्वान्न स दानमानैः सदोपरेमे विषयोपभोगात् ॥ ६० ॥

स सदा भीतश्चिन्तां प्रोवाह बभार, दैवाय परिमृष्यति स्म असूयति स्म, कार्यात् विरराम उपरतव्यापारोऽभूत्, दानमानैः स्वान् ज्ञातीन् नोपारमत् नावारयत्, विषयोपभोगात् उपरेमे निवृत्ते ॥—प्रोवाहेति । 'प्राद्वहः' इति परस्मैपदम् । परिमृष्यतीति । 'परेर्मृषः' इति परस्मैपदम् । विररामेति । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । उपारमदिति । 'उपाच्च' सकर्मकात् परस्मैपदम् । उपरेम इति । 'विभाषाकर्मकात्' इति परस्मैपदविकल्पः । कार्यादिति । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इत्यपादानसंज्ञायां पञ्चमी ॥

न वाजयान्यद्य वधादमुष्याः स्थेष्ठं यशो मे तनयं तु जातम् ।
विनाशयिष्यामि तदैव प(व)क्त्वेत्यासीदसौ तत्प्रसवप्रतीक्षः ॥ ६१ ॥

अहमद्यामुष्या वधात् मे स्थेष्ठ स्थिरतरं यशो न वाजयानि कम्पयानि । जातं तनयं तु तदैव प(व)क्त्वा गत्वा विनाशयिष्यामि इति चिन्तयन् असौ तत्प्रसवप्रतीक्षः तस्याः प्रसवं प्रतीक्षमाण आसीत् ॥—[प्रतीक्षमाणेति ।] 'ईक्षिक्षमिभ्यां चेति वक्तव्यम्' इति णः । वाजयानीति । 'वा गतिगन्धनयोः' । 'वो विधूनने जुक्' इति णौ जुगागमः । 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदम् । प(व)क्त्वेति । प(व)चुचश्चादयो गत्यर्थाः ॥

उद्बोधयन्नुक्तिभिरप्रमादं सोऽतिष्ठिपच्चाप्रसवात्तदन्ते ।
अशीतकं रक्षिजनं तथापि त्रासो मनस्तस्य पराचकार ॥ ६२ ॥

तदन्ते तस्याः समीपे आ प्रसवात् प्रसवपर्यन्तं रक्षिजनं अतिष्ठिपत् स्थापयामास ।

उक्तिभिरप्रमादमनवधानमुद्बोधयन् । अधीतकः [न] शीतकोऽलसः । तथापि तस्य मनः पराचकार अभ्यभवत् ॥—उद्बोधयन्निति । 'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' इति परस्मैपदम् । अतिक्षिपदिति । 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदम् ॥

द्रोहिक्षिपाकर्मठसुप्रवेष्टे गर्भं गते शंकरयाच्ञयाजे ।
स्तम्बेरमा भूवलयस्य धायाः प्रावीवृतन्द्राङ्मदवारिधाराः ॥ ६३ ॥

अजे शंकरयाच्ञया गर्भं गते भूवलयस्य धायाः भूवलयं दधतः स्तम्बेरमा दिग्गजा द्राक् मदवारिधाराः प्रावीवृतन्प्रवर्तितवन्तः । द्रोहिक्षिपाकर्मठसुप्रवेष्टे द्रोहिणो द्रोहशीलास्तेषां क्षिपायां निरासे कर्मठाः कर्मशूराः शोभनाः प्रवेष्टा भुजा यस्य ॥—स्तम्बेरमा इति । 'स्तम्बकर्णयो रमिजपोः' 'हस्तिसूचकयोरिति वक्तव्यम्' इत्यच् । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । शंकरेति । 'शमि धातोः संज्ञायाम्' इत्यच् । कर्मठ इति । 'कर्मणि घटोऽठच्' ॥

विलेशयेशोऽपि भरावभुग्नः किमप्यगर्वायत हर्षमाणः ।
मुदद्युतच्चेतसि देवतानामनर्तयन्ताप्सरसश्च तानि ॥ ६४ ॥

विलेशयेशोऽनन्तोऽपि किमप्यगर्वायत गर्ववान् अभवत् । भरावभुग्नः । हर्षमाणो हृष्टमनाः । देवतानां चेतसि मुत् संतोषोऽद्युतद् दीप्यते स्म । तानि दैवतानि कर्तॄणि अप्सरसोऽनर्तयन्त नर्तितवन्त्यश्च ॥—अनर्तयन्तेति । 'पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' इति परस्मैपदप्रतिषेधः । अगर्वायतेति । 'वा क्यषः' इति परस्मैपदमात्मनेपदं च । अद्युतदिति । 'द्युद्भ्यो लुङि' इति वा परस्मैपदम् । विलेशयेति । 'अधिकरणे शेतेः' इत्यच् । 'शयवासवासिष्वकालात्' इति वा सप्तम्या अलुक् । हर्षमाण इति । 'ताच्छील्यवयोवचनशक्तिषु चानश्' ॥

वनेचरास्त्रैष्टुभजागतादिप्रगाथविज्ञा मुनयः सशिष्याः ।
चिक्लृप्सति स्वस्थितये हरौ तं विवृत्सदानन्दथवोऽवीनयन्(?) ॥६५॥

हरौ स्वस्थितये स्वर्गस्य रक्षायै चिक्लृप्सति परिणन्तुमिच्छति सति मुनयः सशिष्यास्तमवानयन् स्तुतवन्तः । वनेचराः । त्रैष्टुभ जागतादिप्रगाथविज्ञाः । प्रगाथो मन्त्रविशेषः । त्रिष्टुबादिरस्येति त्रैष्टुभः । जगती आदिरस्येति जागतः । विज्ञाः निपुणाः । विवृत्सदानन्दथवः विवृत्सन् वर्धितुमिच्छन् आनन्दथुः सुखं येषाम् ॥—'वृद्भ्यः स्यसनोः' इति वा परस्मैपदम् । चिक्लृप्सतीति । 'लुटि च क्लृपः' इति वा परस्मैपदम् । वनेचरा इति । 'चरेष्टः' । त्रैष्टुभजागतेति । 'सोऽस्यादिरिति च्छन्दसः प्रगाथेषु' इत्यण् । 'त्रिष्टुबेव त्रैष्टुभम्' इति विवक्षिते 'छन्दसः प्रत्य[य]विधाने नपुंसकात्स्वार्थ उपसंख्यानम्' ॥ स्वस्थितये इति । क्लृपिसंपद्यमाने चतुर्थी वक्तव्या ॥

---

१. एवं पाठे छन्दो विचिन्त्यम्.

क्ककरीनिति। 'स्तम्बशकृतोरिन्' । फलेग्रहिरिति । फलानि गृह्णातीति। 'फलेग्रहिरात्मंभरिश्च' इति निपातितः ॥

पृथ्व्या रक्षाममि(पि) विदधतस्तं श्रियो वासभूमे-
दैत्यश्रीणां प्रविचलयितुः स्वःश्रियाः स्थापकस्य ।
देवस्त्रीणामभिभवहृतः संभवोत्थं प्रमोदं
विश्वस्यावेत्त्रिभुवनपतेर्व्यत्रसीच्चाति कंसः ॥ ६९ ॥

कंसः विश्वस्य तं प्रमोदं त्रिभुवनपतेः संभवोत्थमवेज्ज्ञातवान् । अति व्यत्रसीच्च बिभाय । पृथ्व्याः रक्षामपि विदधतः । श्रियः वासभूमेः । दैत्यश्रीणां प्रविचलयितुः कम्पयितुः । स्वःश्रियाः स्वर्गलक्ष्म्याः स्थापकस्य । देवस्त्रीणामभिभवहृतः परिभवं हरतः ॥— पृथ्व्या इति । 'यू स्त्र्याख्यौ नदी' इति नदीसंज्ञा । 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इत्यङ्गसंज्ञा । 'आण्नद्याः' इति [आटि] वृद्धियणादेशौ । दैत्यस्त्रीणामिति । 'नेयङुवङ्स्थानावस्त्री' 'वामि' इति विकल्पेन नदीसंज्ञायां नुट् । श्रियः, स्वःश्रिया इति । 'ङिति ह्रस्वश्च' इति वा नदीसंज्ञायामाड्वृद्धियणादेशः । अन्यत्रेयङ् । वासभूमेरिति । विकल्पेन नदीसंज्ञाभावे 'शेषो घ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणः । त्रिभुवनपतेरिति । 'पतिः समास एव' इति घिसंज्ञायां गुणः । स्त्रीणामिति । 'अस्त्री' इत्युक्त्वा परत्वान्नुट् ॥

कालिमन्याः कुर्वदाशाः स्वधाम्ना गां द्यांमन्यां चोल्लसन्मालभारी ।
बिभ्यन्मृत्योर्भावनादार्व्ययोगाच्छौरे रूपं शश्वदीक्षांबभूव ॥ ७० ॥

मृत्योर्बिभ्यत् स भावनाद्यार्ययोगात् शौरे रूपं शश्वद् ईक्षांबभूव प्रत्यक्षीकृतवान् । स्वधाम्ना आशाः कालिमन्या आत्मनः कालीं मन्यमानाः कुर्वत् । गां भूमिं द्यांमन्यां स्वर्गमात्मानं मन्यमानां कुर्वत् । उल्लसन्मालभारी उल्लसन्तीं मालां बिभ्रत् ॥—ईक्षांबभूवेति । 'दीर्घं च' इति गुरुसंज्ञा । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् । उल्लसन्मालभारीति । 'इष्टकेषीकामालानां चितमू(तू)लभारिषु' इति ह्रस्वः । 'इष्टकादिभ्यस्तदन्तस्यापि ग्रहणम्' । कालिमन्या इति । 'जानपद[कुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु]' इति ङीपि काली । 'आत्ममाने खश्च' । 'खित्यनव्ययस्य' इति ह्रस्वः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमा ह्रस्वो न बाध्यते । द्यांमन्यामिति । 'इच एकाचोऽम्प्रत्ययवच्च' इत्यमागमो द्वितीयैकवचनवच्च स्यात् । 'औतोऽम्शसोः' ॥

दाण्डां क्रीडां ये च मौष्टामकुर्वञ्छ्यैनंपातां शश्वदाखेटकेलीम् ।
ये वाचाटास्तेऽपि वाचंयमानां योग्यामापुः सात्त्विकीमेव वृत्तिम् ॥७१॥

तेऽपि जनाः सात्त्विकीमेव वृत्तिमापुः । के । ये दाण्डां मौष्टां च क्रीडामकुर्वन् । दण्डः प्रहरणमस्यां क्रीडायाम् । मुष्टिः प्रहरणमस्यां क्रीडायाम् । ये च शश्वदाखेटकेलीमकुर्वन् ।

अपिस्फवत्पुण्यकृतां प्रमोदं महोत्सवं प्रादित वल्लवेभ्यः।
भिक्षाचरोपाहृतमाजिजीवच्छौरेर्मुदं रोहिणिपुत्रजन्म॥ ९६॥

रोहिणिपुत्रजन्म रोहिणीपुत्रस्य रामस्य जन्म [पुण्यकृतां प्रमोदं हर्षमपिस्फवद्वीवृधत्, वल्लवेभ्यो गोपेभ्यो महोत्सवं प्रादित, शौरेर्मुदमाजिजीवत्।] भिक्षाचरोपाहृतं चरणेन भिक्षामर्जयद्भिः कथितम्॥—भिक्षा इत्यत्र इकारस्य 'ह्रस्वं लघु' इति लघुसंज्ञा प्राप्नोति। 'संयोगे गुरु' [इति गुरु]संज्ञैव भवति। 'आकडारादेका संज्ञा' इति नियमात्। 'गुरोश्च हलः' इत्यप्रत्ययः। 'भिक्षासेनादायेषु च' इति चरेष्टः। [अपिस्फवदिति। 'स्फायी वृद्धौ' इत्यस्माण्णिचि 'स्फायो वः' इति यकारस्य वकारे 'स्फावे' इत्यस्माल्लुङि च्लेश्चङि 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'चङि' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' 'शर्पूर्वाः खयः' इति सकारलोपे 'अभ्यासे चर्च' इति पकारादेशे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'सन्यतः' इत्यभ्यासाकारस्येत्वम्। 'आजिजीवदिति। आङ्पूर्वाज्जीवधातोर्णिचि लुङि चङि 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्' इत्युपधाह्रस्वाभावपक्षः।] वल्लवेभ्य इति। 'सुपि च' इति दीर्घे 'बहुवचने झल्येत्' इत्येत्वे च प्राप्ते 'विप्रतिषेधे परं कार्यम्' इति परत्वादेत्त्वमेव स्यात्। रोहिणिपुत्रजन्मेति। 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वः॥

ज्वरपूर्वसरा रुजः प्रशेमुः कलहाः स्त्रैणपुरःसराश्च गोष्ठे।
भुजगेशि निशाकराभिरामे द्विषतां शोककरे तदावतीर्णे॥ ९७॥

तदा भुजगेशि अनन्ते अवतीर्णे, गोष्ठे ज्वरपूर्वसरा ज्वरादयो रुजो रोगाः प्रशेमुः शान्ताः। स्त्रैणपुरःसराः कलहाश्च प्रशेमुः। स्त्रैणः। स्त्रीप्रियो जनः। निशाकराभिरामे चन्द्रवन्मधुरे। द्विषतां शोककरे शोककरणशीले। पुरःसर इति। 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति [टः।] पूर्वसरेति। 'पूर्वे कर्तरि' इति टः। शोककर इति। 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टः। निशाकरेति। 'दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु' इति टः। स्त्रैणेति। 'सप्तमे प्रयोजनयोट्भ्यः' इति नञ्। भुजगेशीति। 'ईश ऐश्वर्ये' क्विप्॥

यो वैरकारः स्वयमेव गोष्वभूत्तृणेढि नो स स्म शकृत्करीनपि।
नासीदकालेऽप्यफलेग्रहिर्द्रुमस्तदर्तवः कर्मकरा इवाभवन्॥ ९८॥

गोषु यो वैरकारोऽभूत् स स्वयमेव शकृत्करीनपि नो तृणेढि स्म वत्सानपि न हिंसितवान्। द्रुमोऽकालेऽपि अफलेग्रहिर्वन्ध्यो नासीत्। तदा ऋतवः कर्मकरा वैतनिका इवाभवन्॥ [कर्मकरा इति।] 'कर्मणि भृतौ' इति टः। वैरकार इति। 'न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु' इति टप्रतिषेधे 'कर्मण्य[ण्]'। श-

1. 'अविस्फवत्' इत्यादर्शे.

'कुक्करीनिति । 'स्तम्बशकृतोरिन्' । फलेग्रहिरिति । फलानि गृह्णातीति । 'फलेग्रहिरात्मंभरिश्च' इति निपातितः ॥

पृथ्व्या रक्षामपि(पि) विदधतस्तं श्रियो वासभूमे-
दैत्यश्रीणां प्रविचलयितुः स्वःश्रियाः स्थापकस्य ।
देवस्त्रीणामभिभवहृतः संभवोत्थं प्रमोदं
विश्वस्यावेत्त्रिभुवनपतेर्व्यत्रसीच्चाति कंसः ॥ ६९ ॥

कंसः विश्वस्य तं प्रमोदं त्रिभुवनपतेः संभवोत्थमवेत्ज्ञातवान् । अति व्यत्रसीच्च बिभाय । पृथ्व्याः रक्षामपि विदधतः । श्रियः वासभूमेः । दैत्यश्रीणां प्रविचलयितुः कम्पयितुः । स्वःश्रियाः स्वर्गलक्ष्म्याः स्थापकस्य । देवस्त्रीणामभिभवहृतः परिभवं हरतः ॥— पृथ्व्या इति । 'यू स्त्र्याख्यौ नदी' इति नदीसंज्ञा । 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इत्यङ्गसंज्ञा । 'आण्नद्याः' इति [आटि] वृद्धियणादेशौ । दैत्यश्रीणामिति । 'नेयङुवङ्स्थानावस्त्री' 'वामि' इति विकल्पेन नदीसंज्ञायां नुट् । श्रियः, स्वःश्रिया इति । 'ङिति ह्रस्वश्च' इति वा नदीसंज्ञायामाड्वृद्धियणादेशाः । अन्यत्रेयङ् । वासभूमेरिति । विकल्पेन नदीसंज्ञाभावे 'शेषो घ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणः । त्रिभुवनपतेरिति । 'पतिः समास एव' इति घिसंज्ञायां गुणः । स्त्रीणामिति । 'अस्त्री' इत्युक्त्वा परत्वान्नुट् ॥

कालिंमन्याः कुर्वदाशाः स्वधाम्ना गां द्यामन्यां चोल्लसन्मालभारी ।
बिभ्यन्मृत्योर्भावनादार्ढ्ययोगाच्छौरे रूपं शश्वदीक्षांबभूव ॥ ७० ॥

मृत्योर्बिभ्यत् स भावनादार्ढ्ययोगात् शौरे रूपं शश्वद् ईक्षांबभूव प्रत्यक्षीकृतवान् । स्वधाम्ना आशाः कालिंमन्या आत्मनः कालीं मन्यमानाः कुर्वत् । गां भूमिं द्यामन्यां स्वर्गमात्मानं मन्यमानां कुर्वत् । उल्लसन्मालभारी उल्लसन्तीं मालां बिभ्रत् ॥—ईक्षांबभूवेति । 'दीर्घं च' इति गुरुसंज्ञा । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् । उल्लसन्मालभारीति । 'इष्टकेषीकामालानां चिततूलभारिषु' इति ह्रस्वः । 'इष्टकादिभ्यस्तदन्तस्यापि ग्रहणम्' । कालिंमन्या इति । 'जानपद[कुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु]' इति ङीषि काली । 'आत्ममाने खश्च' । 'खित्यनव्ययस्य' इति ह्रस्वः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमा ह्रस्वो न बाध्यते । द्यामन्यामिति । 'इच एकाचोऽम्प्रत्ययवच्च' इत्यमागमो द्वितीयैकवचनवच्च स्यात् । 'औतोऽम्शसोः' ॥

दाण्डां क्रीडां ये च मौष्टामकुर्वञ्छ्यैनंपातां शश्वदाखेटकेलीम् ।
ये वाचाटास्तेऽपि वाचंयमानां योग्यामापुः सात्त्विकीमेव वृत्तिम् ॥७१॥

तेऽपि जनाः सात्त्विकीमेव वृत्तिमापुः । के । ये दाण्डां मौष्टां च क्रीडामकुर्वन् । दण्डः प्रहरणमस्यां क्रीडायाम् । मुष्टिः प्रहरणमस्यां क्रीडायाम् । ये च शश्वदाखेटकेलीमकुर्वन् ।

श्येनपातोऽस्यां क्रियायामिति [श्यैनंपाताम्] । ये च वाचाटाः । वाचंयमानां मुनीनां योग्याम् ॥—दाण्डा मौष्टामिति । 'तदस्यां प्रहरणमिति क्रीडायां णः' 'स्त्रियाम्' 'अ-[जाद्य]त[ष्टाप्]' इति टाप् । श्यैनंपातामिति । 'घञः सास्यां क्रियेति ञः' इति घञन्तात् पातशब्दात् कृद्ग्रहणे गतिकारकपूर्वस्य कारकत्वादञ् । 'श्येनतिलस्य पाते ञे' इति मुमागमः । वाचंयमानामिति । 'वाचि यमो व्रते' इति खच् । 'वाचंयमपुरंदरौ च' इति पूर्वपदस्यामागमो निपात्यते । वाचाटा इति । 'आलजाटचौ बहुभाषिणि' इ-त्याटच् । 'कुत्सित इति वक्तव्यम्' । 'यचि भम्' इति भसंज्ञायां कुत्वाभावः ॥

वर्मायितं मन्त्रकृतां मरुत्वतः क्लेशापहं दानवसत्त्वमेजयम् ।
स्वर्वासिनः सार्वमुदात्तवाङ्मयैः शर्वादयोऽस्तौषत शंयवो हरिम् ॥७२॥

शर्वादयः स्वर्वासिनो हरिमुदात्तवाङ्मयैर्वाग्विकारैरस्तौषत स्तुतवन्तः । मन्त्रकृतां मन्त्रद्रष्टॄणां वर्मायितं वर्मवदाचरितवन्तं रक्षकम् । मरुत्वतः क्लेशापहम् । दानवसत्त्वमेजयं दानवानां सत्त्वं हृदयं कम्पयन्तम् । सार्वं सर्वस्मै हितम् । शंयवः सुखातिशयवन्तः ॥—शर्वादयोऽस्तौषतेति । 'सुप्तिङन्तं पदम्' इति पदसंज्ञायां 'एङः पदान्तादति' इति पूर्व-रूपत्वम् । वर्मायितमिति । आचारक्यचि 'नः क्ये' इति पदसंज्ञायां नलोपः । शंयव इति । 'कंशंभ्यां बभयुस्तितुतयसः' इति युस् । 'सिति च' इति पदसंज्ञायामनुस्वारपर-सवर्णौ । मरुत्वत इति । मरुतोऽस्य सन्तीति मतुपि 'तसौ मत्वर्थे' इति भसंज्ञायां जश-भावः । शर्वादय इति । 'बहुषु बहुवचनम्' इति बहुवचनम् । हरिमिति । 'द्व्येकयोर्द्विव-चनैकवचने' इत्येकवचनम् । वाङ्मयैरिति । 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' इति विकारे मयट् । 'यरोऽनुनासिकेऽनुनासिको वा' । 'तद्धितप्रत्यये भाषायां नित्यवचनं कर्तव्यम्' ॥

अमरारिभरातुरक्षमासाध्वगदंकारपरंतपानुभावे ।
भगवत्यभिलाषकेऽवतारं भुवनं प्रीतिवशंवदं बभूव ॥ ७३ ॥

भगवति अवतारमभिलाषके सति भुवनं प्रीतिवशंवदं बभूव । अमरारिभरातुरक्षमासा-ध्वगदंकारपरंतपानुभावे अमरारय एव भरस्तेनातुरायाः क्षमायाः साधुर्दक्षो अगदंकारश्चि-कित्सकः । परेषां तापयिता चानुभावो यस्य । 'दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा भिषक् शुचिः' इति वाहटः ॥—वशंवदमिति । 'प्रियवशे वदः खच्' । 'अरुर्द्विषदजन्तस्य मुम्' । परंतपेति । 'द्विषत्परयोस्तापेः' इति खच् । अगदंकारेति । अगदं करोतीत्यण् । 'कारे सत्यागदस्य' इति 'अस्तु सत्यागदस्य कार इति वक्तव्यम्' इति मुमागमः ॥

इति सटीके वासुदेवविजये द्वितीयः सर्गः ।

---

तृतीयः सर्गः ।

नारायणे रात्रिमटाङ्गनानामसातये तत्र जनिष्यमाणे ।
मुर्क्तं सुरैर्नाकनगप्रसूनं पपात नक्षत्रपथादनल्पम् ॥ १ ॥

तत्र नारायणे जनिष्यमाणे प्रादुर्भविष्यति सति नक्षत्रपथात् अनल्पं नाकलगप्रसूनं स्वर्गेवृक्षकुसुमं पपात । सुर्भुक्तम् । अनल्पं बहु । रात्रिमटाङ्गनानां राक्षसस्त्रीणामसातये न सातयति सुखयतीत्यसातयः ॥—नक्षत्रपथादिति । 'कारके' इत्यधिकृत्य 'ध्रुवमपायेऽपादानम्' इत्यपादानसंज्ञा । 'अपादाने पञ्चमी' । रात्रिमटेति । 'रात्रेः कृति विभाषा' इति मुमागमः । असातय इति । 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसाति—' इति नञ्पूर्वात्सातेः सुखार्थाच्छः । 'नलोपो नञः' उत्तरपदे परे । अनल्पमिति । 'तस्मान्नुडचि' इति परस्य नुडागमः । नक्षत्रनाक इत्यत्र 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' इति नञः प्रकृतिभावः । नगेति । 'नगोऽप्राणिष्वन्यतरस्याम्' इति प्रकृतिभावश्च ॥

येषां पराजेषत वीर्यभूम्नो येभ्यः पुरान्तर्दधते च पूर्वम् ।
मुष्टिंधयेभ्योऽपि च दानवेभ्यस्तेभ्यस्तदा नाबिभियुर्दिविष्ठाः ॥ २ ॥

तदा दिविष्ठा देवास्तेभ्यो दानवेभ्यो नाबिभियुर्बिभ्यति स्म । ते पूर्वं येषां वीर्यभूम्नः पराजेषत विमुखीबभूवुः । मुष्टिंधयेभ्यो अत्यन्तबालेभ्योऽपि येभ्यः पुरा अन्तर्दधते अन्तरदधत ॥—दानवेभ्य इति । 'भीत्रार्थानां भयहेतुः' इत्यपादानसंज्ञा । [पराजेषत वीर्यभूम्नः इति । 'पराजेरसोढः'] इत्यपादानसंज्ञा । येभ्यः अन्तर्दधते । 'अन्तर्धौ येनादर्शनमिच्छति' इत्यपादानसंज्ञा । 'पुरि लुङ् चास्मे' इत्यनद्यतनभूतेऽपि लट् । दिविष्ठा इति । 'सुपि स्थः' इति कप्रत्यये 'हृद्द्युभ्यां च' इति सप्तम्या अलुकि 'अम्बाम्बगोभूमि—' इति मूर्धन्यादेशः । मुष्टिंधयेभ्य इति । 'नाडीमुष्ट्योश्च' इति खश् । [भूम्न इति 'पृथ्वादिभ्यः—' इतीमनिच्प्रत्यये 'बहोर्लोपो भू च बहोः' इति बहुशब्दस्य भूरादेशः प्रत्ययादिलोपश्च ॥]

बिभीहि मा देवकि ते सुतोऽयं संत्रास्यते त्वां स सगोत्रवर्ग्याम् ।
स्वस्त्यस्तु तुभ्यं सहभर्तृकायै विहाय इत्यानशिरे गिरोऽर्थ्याः ॥ ३ ॥

हे देवकि, मा बिभीहि । ते सोऽयं सुतः सगोत्रवर्ग्यां त्वां संत्रास्यते रक्षिष्यति । समानगोत्राणां वर्गे भवाः सगोत्रवर्ग्याः । सहभर्तृकायै तुभ्यं स्वस्त्यस्तु इति गिरो विहाय आकाशं आनशिरे व्याप्ताः । अर्थ्या अर्थादनपेताः ॥—सगोत्रवर्ग्यामिति । 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु' इति समानशब्दस्य सभावः । 'वोपसर्जनस्य' इति बहुव्रीह्यवयवस्य सहशब्दस्य सभावः । सहभर्तृकायै । 'प्रकृत्याशिषि' 'अगोवत्सहलेषु' इति सहशब्दस्य प्रकृतिभावः । 'नद्यृतश्च' इति कप् समासान्तः । अर्थ्या इति । 'धर्मपथ्यर्थन्यायादनपेते' इति यत् ॥

अथार्धरात्रे निविडैस्तमोभिरभ्रंलिहैरुच्छ्रलादिशो निकंसः ।
स्वारिंपचाममिपक्रमत्रं विष्कम्य सुष्वाप स रक्षिवर्गः ॥ ४ ॥

अथार्धरात्रे निकंसः कंसेन नियुक्तो रक्षिवर्गोऽस्त्रं विष्कम्य सशब्दं मुक्त्वा सुष्वाप ।

श्येनपातोऽस्यां क्रियायामिति [श्यैनंपाताम्] । ये च वाचाटाः । वाचंयमानां मुनीनां योग्याम् ॥—दाण्डां मौष्टामिति । 'तदस्यां प्रहरणमिति क्रीडायां णः' 'स्त्रियाम्' 'अ-[जाद्य]त[ष्टाप्]' इति टाप् । श्यैनंपातामिति । 'घञः सास्यां क्रियेति ञः' इति घञन्तात् पातशब्दात् कृद्ग्रहणे गतिकारकपूर्वस्य कारकत्वादञ् । 'श्येनतिलस्य पाते ञे' इति मुमागमः । वाचंयमानामिति । 'वाचि यमो व्रते' इति खच् । 'वाचंयमपुरंदरौ च' इति पूर्वपदस्यामागमो निपात्यते । वाचाटा इति । 'आलजाटचौ बहुभाषिणि' इत्याटच् । 'कुत्सित इति वक्तव्यम्' । 'यचि भम्' इति भसंज्ञायां कुत्वाभावः ॥

वर्मायितं मन्त्रकृतां मरुत्वतः क्लेशापहं दानवसत्त्वमेजयम् ।
स्वर्वासिनः सार्वमुदात्तवाङ्मयैः शर्वादयोऽस्तौषत शंयवो हरिम् ॥ ७२ ॥

शर्वादयः स्वर्वासिनो हरिमुदात्तवाङ्मयैर्वाग्विकारैरस्तौषत स्तुतवन्तः । मन्त्रकृतां मन्त्रद्रष्टॄणां वर्मायितं वर्मवदाचरितवन्तं रक्षकम् । मरुत्वतः क्लेशापहम् । दानवसत्त्वमेजयं दानवानां सत्त्वं हृदयं कम्पयन्तम् । सार्वं सर्वस्मै हितम् । शंयवः सुखातिशयवन्तः ॥—शर्वादयोऽस्तौषतेति । 'सुप्तिङन्तं पदम्' इति पदसंज्ञायां 'एङः पदान्तादति' इति पूर्वरूपत्वम् । वर्मायितमिति । आचारक्यचि 'नः क्ये' इति पदसंज्ञायां नलोपः । शंयव इति । 'कंशंभ्यां बभयुस्तितुतयसः' इति युस् । 'सिति च' इति पदसंज्ञायामनुस्वारपरसवर्णौ । मरुत्वत इति । मरुतोऽस्य सन्तीति मतुपि 'तसौ मत्वर्थे' इति भसंज्ञायां जश्त्वाभावः । शर्वादय इति । 'बहुषु बहुवचनम्' इति बहुवचनम् । हरिमिति । 'द्व्येकयोर्द्विवचनैकवचने' इत्येकवचनम् । वाङ्मयैरिति । 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' इति विकारे मयट् । 'यरोऽनुनासिकेऽनुनासिको वा' । 'तद्धितप्रत्यये भाषायां नित्यवचनं कर्तव्यम्' ॥

अमरारिभरातुरक्षमासाध्वगदंकारपरंतपानुभावे ।
भगवत्यभिलापकेऽवतारं भुवनं प्रीतिवशंवदं बभूव ॥ ७३ ॥

भगवति अवतारमभिलापके सति भुवनं प्रीतिवशंवदं बभूव । अमरारिभरातुरक्षमासाध्वगदंकारपरंतपानुभावे अमरारय एव भरस्तेनातुरायाः क्षमायाः साधुर्दक्षो अगदंकारश्चिकित्सकः । परेषां तापयिता चानुभावो यस्य । 'दक्षस्त्वीर्थात्तशाब्दार्यो रूढकर्मा भिषक् छिधिः' इति वाहटः ॥—वशंवदमिति । 'प्रियवशे वदः खच्' । 'अरुर्द्विषदजन्तस्य मुम्' । परंतपेति । 'द्विषत्परयोस्तापेः' इति खच् । अगदंकारेति । अगदंकरोतीत्यण् । 'कारे सत्यागदस्य' इति 'अस्तु सत्यागदस्य कार इति वक्तव्यम्' इति मुमागमः ॥

इति सटीके वासुदेवविजये द्वितीयः सर्गः ।

---

तृतीयः सर्गः ।

नारायणे रात्रिमटाङ्गनानामसातये तत्र जनिष्यमाणे ।
मुक्तं सुरैर्नाकनगप्रसूनं पपात नक्षत्रपथादनल्पम् ॥ १ ॥

तत्र नारायणे जनिष्यमाणे प्रादुर्भविष्यति सति नक्षत्रपथात् अनल्पं नाकनगप्रसूनं स्वर्गवृक्षकुसुमं पपात । सुरैर्मुक्तम् । अनल्पं बहु । रात्रिमटाङ्गनानां राक्षसस्त्रीणामसातये न सातयति सुखयतीत्यसातयः ॥—नक्षत्रपथादिति । 'कारके' इत्यधिकृत्य 'ध्रुवमपायेऽपादानम्' इत्यपादानसंज्ञा । 'अपादाने पञ्चमी' । रात्रिमटेति । 'रात्रेः कृति विभाषा' इति मुमागमः । असातय इति । 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसाति–' इति नञ्पूर्वात्सातेः सुखार्थाच्शः । 'नलोपो नञः' उत्तरपदे परे । अनल्पमिति । 'तस्मान्नुडचि' इति परस्य नुडागमः । नक्षत्रनाक इत्यत्र 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' इति नञः प्रकृतिभावः । नगेति । 'नगोऽप्राणिष्वन्यतरस्याम्' इति प्रकृतिभावः ॥

येषां पराजेषत वीर्यभूम्नो येभ्यः पुरान्तर्दधते च पूर्वम् ।
मुष्टिंधयेभ्योऽपि च दानवेभ्यस्तेभ्यस्तदा नाबिभियुर्दिविष्ठाः ॥ २ ॥

तदा दिविष्ठा देवास्तेभ्यो दानवेभ्यो नाबिभियुर्बिभ्यति स्म । ते पूर्वं येषां वीर्यभूम्नः पराजेषत विमुखीबभूवुः । मुष्टिंधयेभ्यो अत्यन्तबालेभ्योऽपि येभ्यः पुरा अन्तर्दधते अन्तरदधत ॥—दानवेभ्य इति । 'भीत्रार्थानां भयहेतुः' इत्यपादानसंज्ञा । [पराजेषत वीर्यभूम्नः इति । 'पराजेरसोढः'] इत्यपादानसंज्ञा । येभ्यः अन्तर्दधते । 'अन्तर्धौ येनादर्शनमिच्छति' इत्यपादानसंज्ञा । 'पुरि लुङ् चास्मे' इत्यनद्यतनभूतेऽपि लट् । दिविष्ठा इति । 'सुपि स्थः' इति कप्रत्यये 'हद्द्युभ्यां च' इति सप्तम्या अलुकि 'अम्बाम्बगोभूमि–' इति मूर्धन्यादेशः । मुष्टिंधयेभ्य इति । 'नाडीमुष्ट्योश्च' इति खश् । [भूम्न इति 'पृथ्वादिभ्यः–' इतीमनिच्प्रत्यये 'बहोर्लोपो भू च बहोः' इति बहुशब्दस्य भूरादेशः प्रत्ययादिलोपश्च ॥]

बिभीहि मा देवकि ते सुतोऽयं संत्रास्यते त्वां स सगोत्रवर्ग्याम् ।
स्वस्त्यस्तु तुभ्यं सहभर्तृकायै विहाय इत्यानशिरे गिरोऽर्थ्याः ॥३॥

हे देवकि, मा बिभीहि । ते सोऽयं सुतः सगोत्रवर्ग्यां त्वां संत्रास्यते रक्षिष्यति । समानगोत्राणां वर्गे भवाः सगोत्रवर्ग्याः । सहभर्तृकायै तुभ्यं स्वस्त्यस्तु इति गिरो विहाय आकाशं आनशिरे व्याप्ताः । अर्थ्या अर्थादनपेताः ॥—सगोत्रवर्ग्यामिति । 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु' इति समानशब्दस्य सभावः । 'वोपसर्जनस्य' इति बहुव्रीह्यवयवस्य सहशब्दस्य सभावः । सहभर्तृकायै । 'प्रकृत्याशिषि' 'अगोवत्सहलेषु' इति सहशब्दस्य प्रकृतिभावः । 'नद्यृतश्च' इति कप् समासान्तः । अर्थ्या इति । 'धर्मपथ्यर्थन्यायादनपेते' इति यत् ॥

अथार्धरात्रे निबिडैस्तमोभिरभ्रंलिहैरछन्नदिशे निकंसः ।
स्वारिंपचामत्रविपक्वमन्नं विष्वक्स्य सुष्वाप स रक्षिवर्गः ॥ ४ ॥

अथार्धरात्रे निकंसः कंसेन नियुक्तो रक्षिवर्गोऽन्नं विष्वक्स्य सशब्दं भुक्त्वा सुष्वाप ।

अभ्रंलिहैराकाशाटैर्होमैर्विबैस्तमोभिश्छन्नदिशे छादितदिशि । खारिंपचामत्रविपक्वं खारिंपचेषु पात्रेषु विपक्वम् । खारिं पचतीति खारिंपचः ॥—'परिमाणे पचः' [इति खश्]। 'खित्यनव्ययस्य' इति ह्रस्वः । पक्वमिति । 'पचो वः' इति निष्ठातस्य वः । अभ्रंलिहैरिति । 'वहाभ्रे लिहः' इति खश् । निकृत्त इति । 'अन्वादयः क्रुष्टाद्यर्थे तृतीया' इति गतिसमासः ॥

मितंपचं किंचिदरुंतुदं तां प्रसूतिजं दुःखमयांबभूव ।
चक्रं ललाटंतपभास्कराभं दधानमीशं शरणं गता सा ॥ ५ ॥

तां प्रसूतिजं दुःखं प्रसववेदना अयांबभूव प्राप्ता । सा ईशं विष्णुं शरणं गता । मितंपचमल्पं किंचित् अरुंतुदं पीडाकरं ललाटंतपभास्कराभं चक्रं दधानम् । ललाटं तपतीति तथा मध्याह्नार्कः ॥—मितंपचमिति । 'मितनखे च' इति खश् । अरुंतुदमिति । 'विध्वरुषोस्तुदः' इति खश् । संयोगान्तलोपः । ललाटंतप इति । 'असूर्यललाटयोर्दृशितपोः' इति खश् ॥

प्रियंवदं मित्रमिवानुरोधि द्विषंतपं देवमिव स्तुवानम् ।
इरंमदं ज्योतिरमुञ्चदभ्रं शनैः शनैः प्रावृषिकं ररास ॥ ६ ॥

प्रावृषिकं प्रावृषि जातमभ्रं शनैः शनैः ररास शब्दायते स्म । प्रियंवदमनुरोध्यनुवर्तनशीलं मित्रमिव । द्विषंतपं देवं स्तुवानमिव । द्विषतः तपतीति । इरंमदं ज्योतिरमुञ्चत् इरया जलेन माद्यतीति ॥—इरंमदमिति । 'उग्रंपश्येरंमदपाणिंधमाश्च' इति निपातनम् । प्रियंवदमिति । 'प्रियवशे वदः खच्' । द्विषंतपमिति । 'द्विषत्परयोस्तापेः' इति खच् । प्रावृषिकमिति । 'प्रावृष एण्यः' । 'प्रावृषिजम्' इति वा पाठे 'प्रावृट्शरत्कालदिवां जे' इति सप्तम्या अलुक् ॥

अधीतवन्तो विधिवद्गुरुभ्यः श्रुतीः सतीर्थ्यैः सह सेष्टि मत्याः ।
भूयात्सुखं देवकनन्दनाया हृदैवमाशासत तापसौघाः ॥ ७ ॥

तापसौघाः प्रशस्तास्तपस्विनो हृदैवमाशासत प्रार्थितवन्तः । देवकनन्दनायाः सुखं भूयात् इति गुरुभ्यः सतीर्थ्यैः समानतीर्थवासिभिः सह सेष्टि श्रुतीः [अधीतवन्तः] । सेष्टीति 'अव्ययं विभक्तिसमीप—' इत्यन्तार्थकसहशब्दस्याव्ययीभावसमासे 'अव्ययीभावे चाकाले' इति 'ग्रन्थान्ताधिके च' इति वा सहशब्दस्य सभावः । सतीर्थ्यैरिति । 'समानतीर्थे वासी' इति यत् । 'तीर्थे ये' इति समानशब्दस्य सभावः । तापसौघा इति । तपःशब्दात् 'अण्च' इत्यण् मत्वर्थीयः । 'प्रशंसावचनैश्च' इति समासः । मत्या इति । 'मतज-

सब्रह्मचारी नवमेघरुच्याः सोदर्यदेश्यो हरिदश्मभासाम् ।
तमालकान्तेः सदृगाननन्दत्प्रमोद्गमः कश्चन जंपती तौ ॥ ८ ॥

कश्चन प्रमोद्गमः तौ जंपती जायापती आननन्दत् आनन्दयामास । नवमेघरुच्याः सब्रह्मचारी हरिदश्मभासां मरकतत्विषां सोदर्यदेश्यः ईषदसमाप्तः समानोदर्यः । तमालकान्तेः सदृक् सदृशः ॥—सब्रह्मचारीति । ब्रह्म वेदः । तदध्य[य]नार्थं [य]द्व्रतं तदपि ब्रह्म तच्चरतीति [ब्रह्मचारी] । समानं ब्रह्म चर[तीति सब्रह्मचारी ।] 'व्रते' इति णिनिः । 'चरणे ब्रह्मचारिणि' इति समानस्य सः । सोदर्यदेश्य इति । समाने उदरे शयितः स्थितः इत्यर्थे 'सोदराद्यः' इति यत्प्रत्यये विवक्षिते प्रागेव 'विभाषोदरे' इति समानस्य सः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः । सदृगिति । 'दृग्दृशवतुषु' इति समानस्य सः । जंपती इति । राजदन्तादित्वात् पक्षे जायाशब्दस्य जंभावो दंभावश्च निपात्यते । परनिपातश्च ॥

इयानसावित्यपि कल्पकोट्या दुर्ज्ञानसौभाग्यविशेषसीमा ।
सुतः स तादृक्त्रिजगत्पवित्रमाहात्म्यभूमाजनि देवकीतः ॥ ९ ॥

देवकीतः स तादृक् सुतो अजनि । असौ इयान् इदंपरिमाणक इति कल्पकोट्या कल्पानां कोट्या अपि दुर्ज्ञानसौभाग्यविशेषसीमा । त्रिजगत्पवित्रमाहात्म्यभूमा ॥—देवकीत इति । 'जनिकर्तुः प्रकृतिः' इत्यपादानसंज्ञा । इयानिति । 'किमिदंभ्यां वो घः' । 'इदं किमोरीश्की' इतीशादेशः । तादृगिति । 'आ सर्वनाम्नः' इत्याकारादेशः । दुर्ज्ञानेति । 'आतो युच्' इति युच् ॥

कलानिधेः संतमसस्य हन्तुः पत्युः सतामात्ततरेरनन्ते ।
समुद्रियात्प्रादित मोदमाभ्यां विधोर्भवन्ती स्मितचन्द्रिका सा ॥ १० ॥

विधोर्विष्णोश्चन्द्राच भवन्ती स्मितचन्द्रिका आभ्यां जंपतिभ्यां मोदं प्रादित प्रददौ । कलानिधेः कलानां विद्यानां बिम्बषोडशांशानां च निधेः । संतमसस्य व्याप्ततमसोऽज्ञानस्य, तिमिरस्य च, हन्तुः । सतां साधूनां, नक्षत्राणां च, पत्युः । अनन्ते शेषे, आकाशे च, आत्ततरेः । समुद्रियात् समुद्रोद्भवात् ॥—विधोरिति । 'भुवः प्रभवः' इत्यपादानसंज्ञा । आभ्यामिति । 'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानसंज्ञा । 'चतुर्थी संप्रदाने' । समुद्रियादिति । भवे 'समुद्राभ्राद् घः' ॥

पुरंदराश्मद्युतिचौर्यधुर्यविष्वद्र्यगक्षाममहःप्रवाहम् ।
तिर्यक्स्फुरत्सारसनप्रभोर्मीसौदामनीनूतनवारिवाहम् ॥ ११ ॥
सर्वंसहादुर्विषहामनस्यसर्वंकषं सर्वपथीनवीर्यम् ।
यथामुखीनं मुकुरं रमायाः श्रीकौस्तुभं प्रत्युरसं दधानम् ॥ १२ ॥

सब्रह्मचारी नवमेघरुच्याः सोदर्यदेश्यो हरिदश्मभासाम् ।
तमालकान्तेः सदृगाननन्दत्प्रभोद्गमः कश्चन जंपती तौ ॥ ८ ॥

कश्चन प्रभोद्गमः तौ जंपती जायापती आननन्दत् आनन्दयामास । नवमेघरुच्याः सब्रह्मचारी हरिदश्मभासां मरकतत्विषां सोदर्यदेश्यः ईषदसमाप्तः समानोदर्यः । तमालकान्तेः सदृक् सदृशः ॥—सब्रह्मचारीति । ब्रह्म वेदः । तदध्य[य]नार्थं [य]द्व्रतं तदपि ब्रह्म तच्चरतीति [ब्रह्मचारी] । समानं ब्रह्म चर[तीति सब्रह्मचारी ।]- 'व्रते' इति णिनिः । 'चरणे ब्रह्मचारिणि' इति समानस्य सः । सोदर्यदेश्य इति । समाने उदरे शयितः स्थितः इत्यर्थे 'सोदराद्यः' इति यत्प्रत्यये विवक्षिते प्रागेव 'विभाषोदरे' इति समानस्य सः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः । सदृगिति । 'दृग्दृशवतुषु' इति समानस्य सः । जंपती इति । राजदन्तादित्वात् पक्षे जायाशब्दस्य जंभावो दंभावश्च निपात्यते । परनिपातश्च ॥ .

इयानसावित्यपि कल्पकोट्या दुर्ज्ञानसौभाग्यविशेषसीमा ।
सुतः स तादृक्त्रिजगत्पवित्रमाहात्म्यभूमाजनि देवकीतः ॥ ९ ॥

देवकीतः स तादृक् सुतो अजनि । असौ इयान् इदंपरिमाणक इति कल्पकोट्या कल्पानां कोट्या अपि दुर्ज्ञानसौभाग्यविशेषसीमा । त्रिजगत्पवित्रमाहात्म्यभूमा ॥—देवकीत इति । 'जनिकर्तुः प्रकृतिः' इत्यपादानसंज्ञा । इयानिति । 'किमिदंभ्यां वो घः' । 'इदं किमोरीश्की' इतीशादेशः । तादृगिति । 'आ सर्वनाम्नः' इत्याकारादेशः । दुर्ज्ञानेति । 'आतो युच्' इति युच् ॥

कलानिधेः संतमसस्य हन्तुः पत्युः सतामात्तरतेरनन्ते ।
समुद्रियात्प्रादित मोदमाभ्यां विधोर्भवन्ती सितचन्द्रिका सा॥१०॥

विधोर्विष्णोश्चन्द्राच्च भवन्ती स्मितचन्द्रिका आभ्यां जंपतिभ्यां मोदं प्रादित प्रददौ । कलानिधेः कलानां विद्यानां विम्बषोडशांशानां च निधेः । संतमसस्य व्याप्ततमसोऽज्ञानस्य, तिमिरस्य च, हन्तुः । सतां साधूनां, नक्षत्राणां च, पत्युः । अनन्ते शेषे, आकाशे च, आत्तरतेः । समुद्रियात् समुद्रोद्भवात् ॥—विधोरिति । 'भुवः प्रभवः' इत्यपादानसंज्ञा । आभ्यामिति । 'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानसंज्ञा । 'चतुर्थी संप्रदाने' । समुद्रियादिति । भवे 'समुद्राभ्राद् घः' ॥

पुरंदराश्मद्युतिचौर्यधुर्यविप्वग्वगक्षाममहःप्रवाहम् ।
तिर्यक्स्फुरत्सारसनप्रभोर्मीसौदामनीनूतनवारिवाहम् ॥ ११ ॥
सर्वंसहादुर्विषहामनस्यसर्वंकषं सर्वपथीनवीर्यम् ।
यथामुखीनं मुकुरं रमायाः श्रीकौस्तुभं प्रत्युरसं दधानम् ॥ १२ ॥

प्रतीपवृत्तैर्गरुडाश्मदण्डसध्र्यग्भिरिन्द्रारिषु बाहुदण्डैः ।
सम्यक्षु सक्तैश्चरितेषु भान्तं हृदे समेषामपि रोचमानैः ॥ १३ ॥

क्षेमंकरैः पुण्यवतामरीणां भयंकरैर्नित्यमनन्यदास्यैः ।
पनायितं वैतनिकैरिवास्त्रैः क्षीरार्णवानूपविहारलोलम् ॥ १४ ॥

कदर्थितानर्थमनन्यदर्थं स्वाभ्यां स्वधामेत्य नवं नुवानम् ।
दृग्भ्यां न धारू न परं तमेतौ जगन्ति चानन्दरसे न्यमाङ्क्षुः ॥ १५ ॥

तं दृग्भ्यां धारू साधु पिबन्तौ एतौ देवकीवसुदेवौ न परं केवलं न अपि तु जगन्ति च आनन्दरसे न्यमाङ्क्षुः न्यमज्जयन् । स्वाभ्यामात्मभ्यां स्वधाम स्वदेहं अपह्नुवानं प्रकाशयन्तम् । पुरंदराश्मद्युतिचौर्यधुर्यविष्वद्र्यगक्षमामहःप्रवाहम् । पुरंदराश्मा इन्द्रनीलः । विष्वद्र्यक् समन्ततो व्याप्नुवत् । सारसनप्रभोर्मीसौदामनीनूतनवारिवाहम् । सारसनं काञ्ची । सर्वंसहादुर्विषहामनस्यसर्वंकषम् । सर्वंसहा भूमिः । आमनस्यं दुःखम् । सर्वपथीनवीर्यं सर्वपथं व्याप्नुवत् । प्रत्युरसं उरसि श्रीकौस्तुभं दधानम् । रमाया यथामुखीनं मुखप्रतिबिम्बदर्शनाधिकरणं मुकुरम् । बाहुदण्डैर्भान्तम् । इन्द्रारिषु प्रतीपवृत्तैः प्रतिकूलव्यापारैः । गरुडाश्मसध्र्यग्भिः मरकतदण्डसदृशैः सध्र्यङ् सहायः । सम्यक्षु शुभेषु चरितेषु सक्तैः समेषां सर्वेषामपि हृदे रोचमानैः चित्तं स्वविषये स्पृहां कारयद्भिः । अस्त्रैः चक्राद्यायुधैः पनायितं स्तुतं वैतनिकैः वेतनेन जीवद्भिरिव । पुण्यवतां क्षेमंकरैः । अरीणां नित्यं भयंकरैः । अनन्यदास्यैः आस्यान्तररहितैः । क्षीरार्णवानूपविहारलोलम् । अनूपं जलप्रायो देशः । कदर्थितानर्थम् । कदर्थीकृता अनर्था आपदो येन । अनन्यदर्थम् ॥—हृदे इति । 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानसंज्ञा । स्वाभ्यामिति । 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इति संप्रदानसंज्ञा । पुरंदरसर्वंसहेति । 'पूःसर्वयोर्दारिसहोः' इति खच् । क्षेमंकरैरिति । 'क्षेमप्रियमद्रेऽण् च' इति खच् । विष्वद्र्यगिति । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति क्विन् । 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' इत्यद्र्यादेशः । [सम्यक्ष्विति । 'समः समि' । तिर्यगिति 'तिरसस्तिर्यलोपे च' । सध्र्यग्भिरिति 'सहस्य सध्रिः' ।] प्रतीपेति । प्रतिगता आपोऽस्मिन्निति । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्याकारस्य ईकारः ॥ 'आदेः परस्य' । अनूपेति । 'ऊदनोर्देशे' इत्यूकारः । अनन्यदास्यैरिति । 'अषष्ठ्यतृतीयास्थस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु' इति दुगागमः । अनन्यदर्थमिति । 'अर्थे विभाषा' इति दुक् । कदर्थितेति । कुत्सितोऽर्थः कदर्थः । 'कोः कत्तत्पुरुषेऽचि' इति कदादेशः । चौर्येति । ब्राह्मणादिपाठात् ष्यञ् । सौदामनीति । सुदाम्ना पर्वतेन एकदिक् । 'तेनैकदिक्' इत्यण् । 'टिड्ढाणञ्–' इति ङीप् । नूतनेति । 'न वसनूनतनस्नाश्च' इति स्वार्थे तनप्रत्ययो नू आदेशश्च । सर्वपथीनेति । 'तत्सर्वादेः पथ्यङ्ग' इति खः । यथामुखीनमिति । 'यथामुखसंमुखस्य दर्शनः खः' । वैतनिकैरिति । वेतनेन जीवतीति ठक् ।

प्रत्युरसमिति । 'विभक्त्यर्थेऽव्ययीभावः' । 'प्रतेरुरसः सप्तमीस्थात्' इति समासान्तोऽच् । धारु इति । 'दाधेट्सिशदसदो रुः' ताच्छीलिकः ॥

ये कद्वदाः कोष्णवधूकुचैकश्राद्धाः कवोष्णानि पलान्यदन्तः ।
सकत्तृणारण्यजुषोऽभवंस्तेऽप्यकापथाः कापुरुषास्तदानीम् ॥ १६ ॥

ये कापुरुषाः कुत्सिताः पुरुषास्तदानीं भगवदाविर्भावसमये अकापथाः सन्मार्गस्था अभवन् । कुत्सितः पन्थाः कापथः । तद्रहिताः । कीदृशाः । कद्वदा गर्ह्यवादिनः । कोष्णवधूकुचैकश्राद्धाः । प्रभूतश्रद्धाः । कवोष्णानि ईषदुष्णानि पललानि अदन्तः । कत्तृणारण्यजुषः । कत्तृणं तृणविशेषः ॥—कद्वदा इति । 'रथवदयोश्च' इति कोः कद्भावः । कत्तृणेति । 'तृणे च जातौ' इति कद्भावः । कापथेति । 'का पथ्यक्षयोः' इति कादेशः । कोष्णेति । 'ईषदर्थे' इति कादेशः । कापुरुषा इति । 'विभाषा पुरुषे' इति कादेशः । कवोष्णानीति । 'कवं चोष्णे' इति कवादेशः । श्राद्धा इति । 'श्रद्धार्चाभ्यां' ... 'श्रद्धार्चावृत्तिभ्यो णः मत्वर्थीयः ॥

ऊदूढहर्षा ननृतुर्मयूरा व्यह्नेऽपि पद्मा व्यरुचन्प्रफुल्लाः ।
वीरुत्ततिर्भृङ्गकुलैररंसीदामोदमुद्वोढुमिवानुसर्याः(?) ॥ १७ ॥

मयूरा उदूढहर्षा ननृतुः । व्यह्ने अपि अहनि अतीतेऽपि पद्माः प्रफुल्ला व्यरुचन् शोभन्ते स्म । विगतमह्नोव्यह्नः । वीरुत्ततिः भृङ्गकुलैरामोदं सौरभ्यं हर्षं चोद्वोढुमनुसर्या(?) इव॥—मयूरा इति । मह्यां रौतीति रौतेरचि टिलोपः । महीशब्दस्य मयूभावः । 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारलोपौ । धातोस्तदर्थातिशयेन योगः तदुच्यते पञ्चविधं निरुक्तम् ॥' 'पृषोदरादीनि यथोपदिष्टम्' इति लोपविकारादयः । व्यह्न इति । 'संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ' इत्यह्नादेशाभावे रूपम् । उदूढेति । वहेः क्तः । यजादित्वात्संप्रसारणम् । 'हो ढः' 'झषस्तथोर्धोऽधः' इति तस्य धः । तस्य ['ष्टुना ष्टुः' इति] ष्टुत्वम् । 'ढो ढे लोपः' । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' । उद्वोढुमिति । 'सहिवहोरोदवर्णस्य' इत्योकारः । ढलोपः । वीरुदिति । विविधं रोहतीति क्विप् । [न्यं]कादित्वात् हस्य धः । 'अन्येषामपि दृश्यते' इति दीर्घः । प्रफुल्ल इति । 'ञि फला विशरणे' । 'ञीतः क्तः' । 'ति च' इति अकारस्य उकारः ॥

यायावरा लाक्षणिकाः कठाश्च कौशिक्यनुब्राह्मणिपैप्पलादाः ।
ये तैत्तिरीयाः क्रमकाः समे ते विश्वंभरं तुष्टुवुरार्त्विजीनाः ॥१८॥

ते समे सर्वे विप्रा विश्वंभरं तुष्टुवुः । के । यायावराः । 'अग्निहोत्रकमात्रस्तु यात्राशीलो द्विजो हि यः । याचमानः क्रमाद्धर्णान् स हि यायाव[रः] स्मृतः ॥' लाक्षणिका इति । लक्षणमधीतवन्तो ज्ञातवन्तो वा । द्वावर्थावत्रानुवर्तेते । क्रमकाः क्रममधीयाना विदन्तो वा । कठाः कठेन प्रोक्तमधीयाना विदन्तो वा । कौशिक्यनुब्राह्मणिपैप्पलादाः । कौशिकिनः कौशिकेन प्रोक्तं कल्पमधीयाना विदन्तो वा । अनुब्राह्मणिनः । अनुब्राह्मणमधी-

यानाः। पैप्पलादं पिप्पलादप्रोक्तं छन्दोऽधीयानाः। तैत्तिरीयाः तित्तिरिप्रोक्तं छन्दोऽधीयानाः विदन्तो वा। आर्त्विजीनाः ऋत्विजमर्हन्तो यागयोग्याः। ऋत्विक्कर्मार्हा वा ॥—विश्वंभरमिति। 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' इति खच्। यायावरा इति। यातेर्यङ्। 'यश्च यङः' इति वरच्। लाक्षणिका इति। 'तदधीते तद्वेद' इत्यधिकृत्य 'क्रतूक्थादिसूत्रान्ताट्ठक्' इति 'वसन्तादिभ्यष्ठक्'... 'थनुसूर्लक्ष्यलक्षणे च(?)' इति ठक्। क्रमका इति। 'क्रमादिभ्यो वुन्'। अनुब्राह्मणीति। 'अनुब्राह्मणादिनिः'। पैप्पलादा इति। पिप्पलादशब्दात् 'तेन प्रोक्तम्' इत्यण्। छन्दसि तदन्तात् 'छन्दोब्राह्मणानि च तद्विषयाणि' इति वचनात् अध्येतृवेदितोरुत्पन्नस्य 'प्रोक्तात् लुक्' इति लुक्। तैत्तिरीया इति। 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' तदन्तादणुत्पन्नस्य प्रत्ययस्य लुक्। कौशिकीति। 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः'। तदन्तादुत्पन्नस्य 'प्रोक्ताल्लुक्'। 'छन्दोब्राह्मणानि च' इति चकारात् कल्पसूत्राणामपि केषांचित् तद्विषयता। कठा इति। 'कलापिवैशंपायनान्तेवासिभ्यश्च' इति वैशंपायनान्तेवासित्वाण्णिनिः। तस्य 'कठच[र]काल्लुक्' तदन्तात्तथा तद्विषयादुत्पन्नस्य प्रत्ययस्य 'प्रोक्तात् लुक्।' आर्त्विजीना इति। 'यज्ञर्त्विग्भ्यां घखञौ'। 'तत्कर्मार्हन्तीत्युपसंख्यानम्' ॥

औदुम्बरे वैदिशनैम्बमुख्ये देशेऽवसन्ये स जनंगमौघाः।
ये चाधिकौशाम्बिजनास्तदानीमाकस्मिकीं प्रीतिमयासिषुस्ते ॥१९॥

ते जना अपि तदानीमाकस्मिकीमविद्यमानहेतुकां प्रीतिमयासिषुः। ये औदुम्बरे वैदिशनैम्बमुख्ये च देशे तन्नामकेषु देशेषु अवसन्। अधिकौशाम्बि कौशाम्ब्यामवसन्। ते जनंगमौघाः। जनंगमाश्चण्डालाः ॥—जनंगमा इति। 'गमश्च' इति खच्। औदुम्बर इति। उदुम्बरा अस्मिन्सन्तीति तथा। 'तदस्मिन्नस्तीति देशे तन्नाम्नि' इत्यण्। कौशाम्बीति। कुशाम्बेन निर्वृत्ता इति तथा। 'तेन निर्वृत्तम्' इत्यण्। नैम्बेति। निम्बानां निवास इति। 'तस्य निवासः' इत्यण्। वैदिशेति। विदिशाया नगर्या अदूरभवं नगरं वैदिशम्। 'अदूरभवश्च' इत्यण्। आकस्मिकमिति। अकस्माच्छब्दो विनयादिः स्वार्थे ठक् ॥

पाण्ड्यैः कलिङ्गैः कुरुभिः प्रसिद्धा वसुंधरा सर्वगशक्तिसारे।
जाते हरौ तारपतावुदीते कुमुद्वतीव स्म चकास्तिरूपम् ॥ २० ॥

हरौ जाते वसुंधरा चकास्तिरूपं स्म। प्रशस्त[म]शोभत। तारपतौ उदीते कुमुद्वतीव पाण्ड्यैः कलिङ्गैः कुरुभिर्जनपदैः प्रसिद्धा अलंकृता। सर्वगशक्तिसारे सर्वं गच्छति व्याप्नोति इति सर्वगः। 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः' इति गमेः कर्मण्युपपदे डः। 'डित्यभस्यापि' इति टिलोपः। पाण्ड्यैः कलिङ्गैः कुरुभिः इति। पाण्ड्यादीनां निवास इत्यर्थे उत्पन्नस्याणो 'ज[न]प[दे] लुप्' इति लुप्। 'लुपि युक्तवद्व्यक्तिवचने' इति पुंस्त्वं बहुत्वं च। 'पाण्डोर्जनपदशब्दात् क्षत्रियात् ड्यण्वक्तव्यः' इति पाण्ड्यशब्दः। कुमुद्वतीति। 'कुमुदनडवेतसेभ्यो ड्मतुप्'। डित्वाट्टिलोपः। 'झयः' इति वत्वम्। चकास्तिरूपमिति। 'प्रशंसाया रूपप्' ॥

तापिच्छनीकाशरुचि प्रतीचि स्वैरैरिमर्मौविधि पुंसि रागात् ।
स शत्रुहः स्तादिति वक्तुकामः स्वय व्यलज्जिष्ट विविच्य गर्गः ॥२१॥

गर्गः प्रतीचि सर्वप्रत्यगात्मनि पुंसि रागात् स शत्रुहः शत्रूणां हन्ता भूयादिति वक्तुकामः सन् विविच्य स्वयं व्यलज्जिष्ट लज्जते स्म । तापिच्छनीकाशरुचि तमालसदृशकान्तौ स्वैरैरिमर्मौविधि असुराणां मर्मवेधकर्तरि ॥—शत्रुह इति । 'आशिषि हनः' इति डः । मर्मौविधीति । मर्मपूर्वकाद्व्यधधातोः क्विपि । 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इति पूर्वपदस्य दीर्घः । संप्रसारणम् । नीकाश इति । पचाद्यच् । 'इकः काशे' इति दीर्घः । प्रतीचीति । 'चौ' इति दीर्घः ॥

दन्तावलेन्द्रं सुचिरेण बाष्पपाथःपरीवाहततस्तुराषाट् ।
विमुच्य विश्वावसुविप्लुतः सन्नातिष्ठदष्टापदविष्टराग्र्यम् ॥ २२ ॥

तुराषाट् सुचिरेण दन्तावलेन्द्रं ऐरावतं विमुच्य विश्वावसुविप्लुतः सन् अष्टापदविष्टराग्र्यं स्वर्णसिंहासनमातिष्ठत् आक्रम्य स्थितवान् बाष्पपाथःपरीवाहततः ॥—दन्तावलेति । 'दन्तशिखात्संज्ञायाम्' इति मत्वर्थीयो [व]लच् । 'वले' इति दीर्घः । विश्वावस्विति । 'विश्वस्य वसुराटोः' दीर्घः । परीवाहेति । 'वाहेर्भावे घञ्' । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । अष्टापदेति । 'अष्टनः संज्ञायाम्' इति दीर्घः । तुराषाडिति । तुरं वेगवन्तं सहते इति 'छन्दसि सहः' इति ण्विः । छन्दसा अपि लोके भवन्तीति 'अन्येषामपि दृश्यते' इति दीर्घः ॥

क्षिप्नुः सुदर्पात्पुरुहूतपक्ष्यान्कंसः पतिघ्नीमथ पाणिरेखाम् ।
दारैर्दधद्भिः सहितोऽजशक्त्या मूर्छां तदानर्च्छ कुमारघाती ॥ २३ ॥

अथ तदा कंसः अजशक्त्या विष्णुमायया हेतुना मूर्छामानर्च्छ प्राप्तवान् । पतिघ्नीं पाणिरेखां दधद्भिः दारैः सहितः । सुदर्पात् दर्पसमृद्धेर्हेतोः पुरुहूतपक्ष्यान् इन्द्रपक्षभवान् क्षिप्नुर्निरसनशीलः । कुमारघाती ॥—[कुमारघातीति ।] 'कुमारशीर्षयोर्णिनिः' । पतिघ्नीमिति । हन्तेः 'लक्षणे जायापत्योष्टक्' । हूतेति । हूतमाह्वानम् । ह्वयतेः क्तः । यजादित्वात् संप्रसारणम् । 'अङ्गस्य' इत्यासप्तमाध्यायपरिसमाप्तेरधिकारः । 'हलः' इति दीर्घः । सुदर्पादिति । समृद्धावव्ययीभावः ॥

तमीशितारं तिसृणां गतीनां सुखाय नृणामुररीकृताङ्गम् ।
चतुर्दशानां प्रभवं तनूजं विद्यापदानां पितरौ तनु(नुतः) स्म ॥ २४ ॥

[पितरौ देवकीवसुदेवौ तनूजमात्मजं नुतः स्म तुष्टुवतुः ।] तिसृणां सत्त्वरजतमोमयीनां [गतीनां]ईशितारम् । नृणां सुखाय उररीकृताङ्गम् । चतुर्दशानां विद्यापदानां स्था[नभूतम्]। [गतीनामिति ।]'ह्रस्वनद्यापो नुट्' इति नुट् । 'नामि' इति दीर्घः । तिसृणामिति । 'न तिसृचतसृ' इति दीर्घाभावः । नृणामिति । 'नृ च' इति दीर्घः । चतु[र्दशानाम्] इति । ['षट्चतुर्भ्यश्च

[इति नुट्।'नोपधायाः' इति दीर्घः ।] ईशितारमिति । 'ईश ऐश्वर्ये' । तृच् ।'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृ[पोतृ]प्रशास्तॄणाम्' इति दीर्घः ॥

बंहिष्ठ[धामानमुपेयिवांसं मनुष्यलोकं] पुरुषं महान्तम् ।
प्रशासितारं परिपन्थिनस्तमित्यब्रुवातां प्रियकारमुर्व्याः ॥ २५ ॥

तमित्यब्रुवाताम् । [बंहिष्ठधा]मानमतिप्रवृद्धतेजसम् । मनुष्यलोकमुपेयिवांसं प्राप्नुवन्तम् । महान्तं पुरुषम् । [परि]पन्थिनः प्रशासितारम् ॥ [उर्व्याः प्रियकारम् ।] बंहिष्ठधामानमिति । 'सर्वनामस्थाने चासंबुद्धौ' इति दीर्घः । उपेयिवांसमिति । ['उ]पेयिवाननाश्वाननूचानश्च' इति क्वस्वन्तो निपातितः । ['उगिदचां सर्वनामस्थाने धातोः' इति नुम् । 'सान्तमहतः संयोगस्य' इति । महान्तमिति । महधातोरौणादिकेऽतिप्रत्यये शतृवद्भावे चोगित्वान्नुमि 'सान्तमहतः–' इति दीर्घः ।] प्रशासितारमिति तृजन्तस्य दीर्घः । प्रियकारमिति । 'क्षेमप्रियमद्रेऽण् च' इति कृञोऽण् ॥

[1]................................................................ ।
................................................................ ॥ २६ ॥
................................................................ ।
................................................................ ॥ २७ ॥

सुहृन्मनोजूर्तिकृतस्तथापि तस्मान्मदीयान्वयनाशवांशः ।
हस्तिघ्नतो भोजपतेर्भयं नो भनक्ति मूर्तं हृदयं शुचैव ॥ २८ ॥

तथापि तस्माद् भोजपतेर्भयं नो हृदयं भनक्ति मम करोति । सुहृन्मनोजूर्तिकृतः । जूर्तिः ज्वरः पीडा । मदीयान्वयनाशवांशः मदीयस्य वंशस्य नाशं वाञ्छतः । हस्तिघ्नतः हस्तिनं हन्तुं समर्थात् शुचैव मूर्तं मूर्च्छायुक्तम् ॥—हस्तिघ्नत इति । 'शक्तौ हस्तिकपाटयोः' इति टक् । 'गमहन[जनखनघसां लोपः क्ङित्यनङि'] इत्युपधालोपः । वांश इति । 'वाञ्छि इच्छायाम्' । क्विप् । 'छ्वोः शूडनुनासिके च' इति छकारस्य शकारः । जूर्तीति । 'ज्वर रोगे' । 'स्त्रियां क्तिन्' 'ज्वरत्वरस्रि(स्रि)व्यविमवामुपधायाश्च' इति वकारस्य उपधाया अकारस्य स्थाने ऊठ् । मूर्तमिति । 'मुर्च्छा मोहसमुच्छ्राययोः' । क्तः । 'राल्लोपः' इति छलोपः । 'न ध्याख्या[पॄमूर्छिमदाम्'] इति नत्वाभावः । भनक्तीति । 'भञ्जो मर्दने' । 'रुधादिभ्यः श्नम्' 'श्नान्नलोपः' इति धातुनकारस्य लोपः ॥

स्वमुत्तमर्णाय यथाधमर्णस्तस्मै कुमारान्वत धारयामः ।
तस्य स्मरन्तः स्पृहयामहे न स्वजीवितायापि शपामहे ते ॥ २९ ॥

यथा अधमर्ण उत्तमर्णाय स्वं धनं धारयति तथा तस्मै कुमारान् धारयामः । एव वयं

1. अत्र. श्लोकद्वयं मन्त्राग्रे त्रुटितम्.

तस्य स्मरन्तः स्वजीवितायापि] न स्पृहयामहे इच्छामः । ते शपामहे शरीरं स्पृशाम इति शपथं कुर्महे शपथं शापयितुं इच्छामः ॥—ते इति । 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इति संप्रदानसंज्ञा । तस्मै इति । 'धारेरुत्तमर्णः' इति तत्तुल्यत्वात्संप्रदानसंज्ञा । स्पृहयामहे इति (स्वजीवितायापीति) । 'स्पृहेरीप्सितः' इति संप्रदानसंज्ञा । [तस्येति 'अधीगर्थदयेशां कर्मणि' इति षष्ठी] ॥

निषेवितो झाईरपाणिघाद्यैः कौक्षेयकक्रूरतराग्रहस्तः ।
पुरायमेति श्रुतसंभवस्ते क्रुधं धियोऽन्धंकरणीं दधानः ॥ ३० ॥

अयं ते श्रुतसंभवः श्रुतत्वात्संभवः पुरा ऐति शीघ्रमागमिष्यति । धियो अन्धंकरणीमन्धीभावकरणभूतां क्रुधं दधानः । कौक्षेयकक्रूरतराग्रहस्तः । कौक्षेयकः खड्गः । झाईरपाणिघाद्यैर्निषेवितः । झईरवादनं शिल्पमस्येति झाईरः ॥—पाणिघाद्यैरिति । पाणितल्योर्मिथो घट्टनेन वादनं कुर्वन्तः पाणिघाः । 'पाणिघताडघौ शिल्पिनि' । अन्धंकरणीमिति । 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' । कौक्षेयकेति । कुक्षिशब्दात् 'कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु' इति ढकञ् । यौगिकोऽपि रूढः । झाईर इति । 'मड्डुकझर्झरादणन्यतरस्याम्' इति शिल्पेऽण् ॥

भक्तेष्वभिव्यक्तमिदं पिधाय बालोचितं रूपमुरीकुरुष्व ।
परिष्वजेमह्यचिराद्विभो त्वां गोपायितुं क्वापि पुनर्लपामः ॥ ३१ ॥

त्वमिदं रूपं पिधाय आच्छाद्य बालोचितं रूपमुरीकुरुष्वाङ्गीकुरुष्व । हे विभो, त्वामचिरात् परिष्वजेमहि तथा प्रार्थयामहे । पुनः क्वापि गोपायितुं रक्षितुं लपामः । भक्तेषु अभिव्यक्तम् । [अभिव्यक्तमिति ।] 'अञ्ज्व्यक्तिम्रक्षणकान्तिगतिषु क्तः' । 'अनिदितां हल उपधायाः क्ङिति' इति नलोपः । परिष्वजेमहीति । 'दंशसञ्जस्वञ्जां शपि' इति नलोपः ॥

नादेयतोयागमदुर्निवारः पौरस्त्यपाकाहतिदृष्टकर्मा ।
क्रुध्यन्नहेतावपि नाथ सद्यो माभिद्रुहत्त्वां सहसा स कंसः ॥३२॥

हे नाथ, कंसः सहसा त्वां मा अभिद्रुहद् । नादेयतोयागमदुर्निवारः । नद्यां भवं नादेयम् । पौरस्त्यपाकाहतिदृष्टकर्मा पुरस्ताज्जातानां शिशूनां हनने दृष्टं कर्म यस्य । अहेतावपि सद्यः क्रुध्यन् तान् प्रति क्रोध कुर्वन् ॥—सद्य इति । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति संप्रदानसंज्ञा । त्वामिति । 'क्रुधद्रुहोरुपसृष्टयोः कर्म' इति कर्मसंज्ञायां द्वितीया । नादेयमिति । 'नद्यादिभ्यो ढक्' । पौरस्त्येति । 'दक्षिणापश्चात्पुरसस्त्यक्' ॥

येऽस्मभ्यमैक्षन्त विपद्द्रुहृद्भ्यः कार्तान्तिकाः पुण्यसुकर्मभाग्भ्यः ।
दशाद्विपादोरगताक्ष्र्यमाहुस्ते त्वानुरज्यन्मनसः सुपानम् ॥ ३३ ॥

ये कार्तान्तिका दैवज्ञाः पृष्टा अस्मभ्यमैक्षन्त अस्माकं शुभाशुभं पर्यालोचितवन्तः । ते त्वां सुपानं अक्रूरेण रक्षणीयमाहुः । विपद्द्रुहृद्भ्यः विपादनशीलं हृदयं येषाम् ।

पुत्र्यसुकर्मभाग्भ्यः पुत्रनिमित्तं सुकर्म भजद्भ्यः । दराद्विपादोरगताक्ष्यमनुरज्यन्मनसः स्वयमेवानुरागं दधद् मनो येषाम् ॥—अस्मभ्यमिति । 'राधीक्ष्योर्यस्य विप्रश्नः' इति संप्रदानसंज्ञा । कार्तान्तिका इति । कृतान्तो दैवम् । 'तद्वेद' इति ठक् । उरगेति । उरसा गच्छतीति 'गमेर्डः' । 'उरसो लोपश्च' । अनुरज्यदिति । 'कुषिरजोः प्राचां श्यन्परस्मैपदं च' कर्मकर्तरि । पुत्र्येति । 'पुत्राच्छ च' इति यत् । सुकर्मभाग्भ्य इति । 'भजो ण्विः' ॥

अथानुरागस्यदविह्वलाभ्यां ताभ्यां प्रतिश्रुत्य तथेति वाञ्छाम् ।
स्नन्त्वेव सौहार्दभरेण देवस्तावूचिवानञ्चितमुग्धहासः ॥ ३४ ॥

अथ देवो वाञ्छां तथा इति ताभ्यां प्रतिश्रुत्य सौहार्दभरेण स्नन्त्वा इव तौ ऊचिवान् उक्तवान् । अनुरागस्यदविह्वलाभ्यां स्यदो वेगः । अञ्चितमुग्धहासः । अञ्चितः पूजितः ॥—ताभ्यामिति 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' इति संप्रदानसंज्ञा । अनुरागेति । 'भावे' घञ् । 'घञि च भावकरणयोः' इति लोपः । स्यदेति । स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते । ['स्यदो जवे' ।] अञ्चितेति । 'नाञ्चेः पूजायाम्' इति नलोपाभावः । स्नन्त्वेति । 'क्त्वि स्कन्दिस्यन्दोः' इति नलोपाभावः ॥

प्राच्येऽपि वामङ्ग भवोभयस्मिन्सुतोऽभवं दिव्यवपुः प्रसद्गुः ।
तत्रत्यमुन्मीलयितुं मयेदं वृत्तं सुखं ह्यस्त्यमिवापि रूपम् ॥ ३५ ॥

अङ्ग, अहं वां युवयोः [प्राच्ये] प्राग्भवे भवोभयस्मिन् जन्मद्वयेऽपि सुतोऽभवम् । दिव्यवपुः दिविभवम् । प्रसद्गुः प्रसादशीलः । तत्रत्यं तत्र भवं वृत्तं ह्यस्त्यमिव गतदिवसजातमिव सुखमुन्मीलयितुं मया इदं रूपं आपि प्राप्तम् ॥—दिव्यप्राच्येति । 'द्युप्रागपागुदक्प्रतीचो यत्' । तत्र[त्य]मिति । 'अव्ययात्त्यप्' । 'अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः । [निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा ॥'] ह्यस्त्यमिति । 'ऐषमोह्यःश्वसोऽन्यतरस्याम्' इति त्यप् ॥

भक्त्यै [प]रिक्रीतमुपाददानं वपुः शिशूनामुचितं पिता तम् ।
तत्प्रेरितात्मा नवराङ्कवत्वक्पर्यङ्किकाया जगृहे कराभ्याम् ॥ ३६ ॥

पिता तं नवराङ्कवत्वक्पर्यङ्किकायाः कराभ्यां जगृहे । राङ्कवी रङ्कुसंबन्धिनी । शिशूनामुचितं वपुरुपाददानम् । भक्त्यै भक्त्या परिक्रीतम् । तत्प्रेरितात्मा अन्तर्यामिणा तेन प्रेरितबुद्धिः ॥—भक्त्यै इति । 'परिक्रयणे संप्रदानमन्यतरस्याम्' इति वा संप्रदानसंज्ञा । कराभ्यामिति । 'साधकतमं करणम्' इति करणसंज्ञायां 'कर्तृकरणयोस्तृतीया' इति तृतीया । राङ्कवेति । 'रङ्कोरमनुष्येऽण्च' ॥

आढ्यंभविष्णुः प्रमदेन गच्छन्पथा प्रियंभावुकतां गतेन ।
स नन्दगोष्ठाय ददर्श मार्गे दीव्यन्तमूर्मीन्यमुनाप्रवाहम् ॥ ३७ ॥

नन्दगोष्ठाय पथा गच्छन् स मार्गे यमुनाप्रवाहं ददर्श । प्रमदेन आढ्यंभविष्णुः अ-

नाम्नः समृद्धो भूतः । प्रियंभावुकतां गतेन प्रियतां प्राप्तेन । ऊर्मीन् दीव्यन्तमूर्मीभिः क्रीडन्तम् ॥—ऊर्मीनिति । 'दिवः कर्म च' इति कर्मसंज्ञा । मार्गे इति । 'आधारोऽधिकरणम्' इत्यधिकरणसंज्ञायां 'सप्तम्यधिकरणे च'। आढ्यमविष्णुरिति । प्रियंभावुकेति । 'कर्तरि भुवः खिष्णुच्खुकञौ' आढ्यादिषूपपदेषु । गोष्ठायेति । गावस्तिष्ठन्त्यस्मिन्निति 'घञर्थे कविधानम्' इति कः । 'अम्बाम्बगोभूमि' इति षत्वम् ॥

अध्यास्त यं नक्रकुलं स्थवीयो द्विपोऽप्यमङ्क्त्वा न यमुत्ततार ।
नभस्पृगूर्मिस्तितरीषतोऽस्य हरेर्दधत्स्यैकपदीमदात्सः ॥ ३८ ॥

स यमुनाप्रवाहस्तितरीषतस्तरितुमिच्छतोऽस्य वसुदेवस्यैकपदीं मार्गमदात् । नभःस्पृगूर्मिः । हरेर्दधस्य हरिं दधतः । यं स्थवीयः स्थूलतरं नक्रकुलमध्यास्तावर्तत । यं द्विपोऽपि अमङ्क्त्वा नोत्ततार ॥—यमिति । 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मसंज्ञा । नभस्पृगिति । 'स्पृशोऽनुदके क्विन्' । अमङ्क्त्वेति । 'जान्तनशां विभाषा' इति वा नलोपाभावः । द्विप इति द्वाभ्यां करेणास्येन च पिवतीति । 'सुपि' इति योगविभागात् कः ॥

तावज्जनित्वा व्रजनाथपत्न्या मनो जनस्याभिनिविश्य देव्या ।
अभाजि निद्राच्छलतोऽर्थबोधः शक्त्या हरेः प्रागशिषद्यथा सः ॥३९॥

तावत् हरेः शक्त्या देव्या मायया व्रजनाथपत्न्या जनित्वा निद्राच्छलतो जनस्य मनो अभिनिविश्यार्थबोधो विषयज्ञानं अभाजि छन्नः । स हरिर्यथा प्रागशिषत् नियुक्तवान् ॥—मन इति । 'अभिनिविशश्च' इति कर्मसंज्ञा । अभाजीति । 'भञ्जेश्च चिणि' इति वा नलोपः । 'अभञ्जि' इति वा पाठः । अशिषत् । 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ् । 'शास इदङ्हलोः' इति इत्वम् । 'शासिवसिघसीनाम्' इति षत्वम् ॥

जहि द्विषो वत्सक शाधि लोकानित्यात्मनाशंसुरथात्मजं स्वम् ।
शौरिर्यशोदाशयने न्यधात्तामादत्त चोत्तानशयां कुमारीम् ॥ ४० ॥

अथ शौरिः स्वमात्मजं यशोदाशयने न्यधात् । तामुत्तानशयामुत्तानत्वेन शयानां कुमारीमादत्त च । हे वत्सक, द्विषो जहि वध्याः, लोकान् शाधि इति आत्मना आशंसुरिच्छुः ॥—शाधीति । 'शा हौ' इति शासः शादेशः । 'असिद्धवदत्राभात्' इति शाभावस्यासिद्धत्वात् 'हुझल्भ्यो हेर्धिः'। जहीति 'हन्तेर्जः' इति ही जादेशः । उत्तानशयामिति । 'उत्तानादिषूपसंख्यानम्' इत्यच् । 'पुंवत्कर्मधारय–' इति पुंवत्त्वम् ॥

गत्वा दधृग्धाम ततः स्वपत्न्या निधाय पल्यङ्कतले शिशुं ताम् ।
विरत्य कृत्यान्निगलार्पिताङ्घ्रिः सुखी स तत्पूर्ववदन्ववात्सीत् ॥ ४१ ॥

स ततो धाम स्वगृहं गत्वा स्वपत्न्याः पल्यङ्कतले तां शिशुं निधाय कृत्यात् विरत्य विरतो भूत्वा पूर्ववत् तद्धामान्ववात्सीत् । दधृक् प्रगल्भः । निगलार्पिताङ्घ्रिः । सुखी स्व-

स्थचित्तः ॥—तदिति । 'उपान्वध्याङ्वसः' इति कर्मसंज्ञा । दधृगिति । 'ऋत्विग्दधृक्स्रगुष्णिगञ्चुयुजिक्रुञ्चां च' इति क्विन्प्रत्ययान्तो निपातितः । गत्वेति । 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इति नलोपः । अनुस्वारोत्तमा अनुनासिका इति प्रातिशाख्ये । अनुदात्तोपदेशा अनुनासिकान्ता यमिरमिनमिगमिहनिमन्यतयः । विरम्येति । 'वा ल्यपि' इति मलोपः । मान्तानां विकल्पेन अन्येषां नित्यम् ॥

स्वरेण पुर्यन्तगताथ बाला सा तादृशेनातितरामरोदीत् ।
स्वापेन काष्ठैः सदृशः शयानः स यादृशाबुध्यत रक्षिवर्गः ॥ ४२ ॥

अथ सा बाला तादृशेन स्वरेण अतितरां अरोदीत् । यादृशा स रक्षिवर्गोऽबुध्यत । पुर्यन्तगता पुर्यन्तं गच्छता स्वरेण । स्वापेन निद्रया काष्ठैः सदृशः शयानः ॥—तादृशेनेति । 'सदादिषु दृशोऽनालोचने कञ्च' इति कञ् । यादृशेति । कञ्चेति चकारात् क्विन् । सदृश इति । 'समानान्ययोश्चेति वक्तव्यम्' इति कञ् । 'दृग्दृशवतुषु' इति समानस्य सादेशः । तादृशादयो रूढिशब्दाः । पुर्यन्तगता इति । 'गमः क्वौ' 'गमादीनामिति वक्तव्यम्' इति मलोपे तुक् ॥

नालोकयत्किंचन नाशृणोद्वा न चावदत्किंचन कंचनापि ।
जातत्वराभीतिरुपेत्य कंसं प्राबूबुधत्स प्रसवं भगिन्याः ॥ ४३ ॥

स रक्षिवर्गः किंचन वस्तु नालोकयत्, नाशृणोत् वा, कंचनापि किंचन नावदत्, जातत्वराभीतिः उपेत्य कंसं भगिन्याः प्रसवं प्राबूबुधत् निवेदयामास ॥—प्रसवमिति । 'कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञायां 'कर्मणि द्वितीया' । किंचनेति । 'तथायुक्तं चानीप्सितम्' इति कर्मसंज्ञा । कंचनेति । 'अकथितं च' इति कर्मसंज्ञा । कंसमिति । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति कर्मसंज्ञा । जातेति । 'जनसनखनां सञ्झलोः' इत्याकारादेशः ॥

जाजायमानेन भयेन नभ्राडतायताथो सहसोत्थितश्च ।
मित्रध्रुगादीनवभाक्प्रकम्पः कंसः समाभ्रच्च जवादरिष्टम् ॥ ४४ ॥

अथो कंसो जाजायमानेन भृशं जायमानेन भयेन नभ्राट् शोभारहितः अतायत अकारि । सहसा उत्थितश्च जवादरिष्टं सूतिकागृहं समाभ्रत् गतवांश्च । मित्रध्रुक् । मित्रेभ्यो द्रुह्यति इति । आदीनवभाक् आदीनवः क्लेशः प्रकम्पः ॥—मित्रध्रुगिति । 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' इति क्विप् । आदीनवभागिति । 'भजो ण्विः' । जाजायमानेति । यङ् । 'ये विभाषा' इत्याकारः । 'जञ्जन्यमानेन' इति वा पाठः । अतायतेति यङ् । 'तनोतेर्यकि' इति वा आकारः । 'अतन्यत' इति वा पाठः ॥

कुमारजीवादमवेक्ष्य कंसं क्रव्यात्सदृक्षं तरसाजिहानम् ।
सा देवकी संपरिपस्वजेऽमां प्रलापिनी चातितरामरोदत् ॥ ४५ ॥

सा देवकी तरसा आजिहानमागच्छन्तं कंसमवेक्ष्याजां कन्यारूपां महामायां संपरिषस्वजे दृढं परिरब्धवती, अतितरां अरोदच । कुमारजीवादं जीवमत्तीति । क्रव्यात्सदृक्षं राक्षसतुल्यम् । प्रलापिनी प्रलपनशीला ॥—परिषस्वज इति । 'प्रादयः' 'उपसर्गाः क्रियायोगे' इत्युपसर्गसंज्ञा । 'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्' इति षत्वम् । अवेक्ष्येति । 'गतिश्च' इति गतिसंज्ञायां 'कुगतिप्रादयः' इति समासः । जीवादमिति । 'अदोऽनन्ने' इति विट् । क्रव्यादिति । 'क्रव्ये च' इति विट् । सदृक्षमिति । 'कसश्च वक्तव्यः' इति क्सः । 'दृक्षे चेति वक्तव्यम्' इति समान्यस्य सभावः ॥

सुकर्मणः क्ष्माविबुधान्हविर्दुघास्तथार्जुनीर्गाः स निहन्ति सत्कपम् ।
अनाम्नसुत्रामककाङ्क्षितापदं न लालपा सा तमचीकरत्क्रपाम् ॥ ४६ ॥

सा लालपा भृशा(?) तं कंसं कृपां नाचीकरत् कारयामास । सत्कपं सतः कपयति पीडयति इति । अनाम्नसुत्रामककाङ्क्षितापदं आम्ना अन्नं उच्चारः सुत्रामा ग्रामणीः श्रेष्ठो येषां सुत्रामका देवास्तैः काङ्क्षिता आमयस्य । सु कर्मणः क्ष्माविबुधान्, तथा हविर्दुघा अर्जुनीर्गाश्च, निहन्ति स्म हतवान् । शोभनं कुर्वन्तीति सुकर्माणः । हविर्दुहन्तीति हविर्दुघाः ॥—तमिति । 'हृक्रोरन्यतरस्याम्' इति वा कर्मसंज्ञा । य इति । 'स्वतन्त्रः कर्ता' इति कर्तृसंज्ञा । तिङाभिहितत्वात् तृतीयाभावः । लालपेति । 'तत्प्रयोजको हेतुश्च' इति हेतुसंज्ञा कर्तृसंज्ञा च । हेतुत्वाण्णिचो निमित्तं कर्तृत्वाच्च तिङ्प्रत्ययः । नेति । 'प्राग्रीश्वरान्निपाताः' इत्यधिकृत्य 'चादयोऽसत्वे' इति निपातसंज्ञा । 'स्वरादिनिपातमव्ययम्' 'अव्ययादाप्सुपः' इति सुपो लुक् । हविर्दुघा इति । 'दुहः कब्घश्च' इति कप् । घकारश्चान्तादेशः । सुत्रामेति । 'त्रैङ् पालने' । 'आतो मनिन्क्वनिब्वनिपश्च' इति मनिन् । सुकर्मण इति । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । सत्कपमिति । 'क्विप्च' इति क्विप् । सुत्रामकेति । 'स एषां ग्रामणीः' इति कन् ॥

शूत्कुर्वता तीव्रमसाधुकारिणा कंसेन सा रोषभयातुरीसता ।
दीनामसत्कृत्य सहोदरां हठादग्राहि कन्या जगतामलंकृतिः ॥ ४७ ॥

कंसेन सहोदरां देवकीमसत्कृत्यानादृत्य सा कन्या हठादग्राहि । तीव्रं शूत्कुर्वता । असाधुकारिणा । रोषभयातुरीसता(?) रोषभयातुरीभवता । दीनाम् । जगतामलंकृतिः ॥—आतुरीसतेति । 'अभूततद्भावे' इति च्विः । 'ऊर्यादिच्विडाचश्च' इति गतिसंज्ञा । शूत्कुर्वतेति । 'अनुकरणं चानितिपरम्' इति गतिसंज्ञा । असत्कृत्येति । 'आदरानादरयोः सदसती' इति गतिसंज्ञा । अलंकृतिरिति । 'भूषणेऽलम्' इति गतिसंज्ञा । असाधुकारिणेति । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । सहोदरामिति । सहशब्दोऽत्र समानार्थे ॥

इमां मृदित्वा सुहृदां पुरस्कृतस्तेभ्यः कणेहत्य ददान ईप्सितम् ।
अनस्तमितार्दयितासि सुत्वनस्तामित्यदःकृत्य निरास सोऽश्मनि ॥४८॥

अदःकृत्य कर्तव्याकर्तव्यं निश्चित्य तामश्मनि निरास चिक्षेप । इमां मृदित्वा संचूर्ण्य ।

[अनस्तमित्य] मृतिमप्राप्य सुत्वनो यागसंबन्धिस्नानं कृतवतो यज्वनोऽदेयितास्मि पीडयिष्यामि। सुहृदां पुरस्कृतः पूजितः। तेभ्य ईप्सितं वस्तु कणेहत्य श्रद्धां प्रतिहत्य ददानः॥—[कणेहत्येति।] 'कणेमनसी श्रद्धाप्रतीघाते' इति गतिसंज्ञा। पुरस्कृत इति। 'पुरोऽव्ययम्' इति गतिसंज्ञा। अनस्तमित्येति। 'अस्तं च' इति गतिसंज्ञा। अदःकृत्येति। 'अदोऽनुपदेशे' इति गतिसंज्ञा। सुत्वन इति। 'सुयजोर्ङ्वनिप्' ॥

सुरवैरिवनानि भर्ष्टुरेनामनुजां बाल्यतिरोहितानुभावाम्।
स तिरस्कृतभीः प्रमोदभूम्ना क्षिपमाणः स विभाति सिंहनादी ॥४९॥

एनां क्षिपमाणो विभाति स्म। सुरवैरिवनानि भर्ष्टुरनुजाम्, बाल्यतिरोहितानुभावाम्। प्रमोदभूम्ना तिरस्कृतभीः सिंहनादी सिंहवन्नदन्॥—तिरोहितेति। 'तिरोऽन्तर्धौ' इति गतिसंज्ञा। तिरस्कृतेति। 'विभाषा कृञि' इति वा गतिसंज्ञा। सिंहनादीति। 'कर्तर्युपमाने' इति णिनिः। [अनुजामिति।] अनुपश्चाज्जायते इति 'अन्येष्वपि दृश्यते' इति डः। भर्ष्टुरिति। 'आर्धधातुके' इत्यधिकृत्य 'भ्रस्जो रोपधयो रमन्यतरस्याम्' इति रेफोपधयो रमादेशः॥

अभ्रे ततो निजचिकीर्षितमालुनानां
सब्रह्मचारिमहसं नवमेघभायाः।
तां ब्रह्मवादिविमलात्मगुहैकसिंही
साक्षाचकार सहसा सह तां स कंसः॥ ५०॥

ततः स कंसः सहसा तामभ्रे आकाशे साक्षाचकार दृष्टवान्। निजचिकीर्षितमालुनानां छिन्दन्तीं नवमेघभायाः सब्रह्मचारिमहसं श्यामवर्णाम्। ब्रह्मवादिविमलात्मगुहैकसिंहीं ब्रह्मवादिनामपूर्णमन्यताभिन्नवेद्यप्रधानशुभाशुभकर्मवासनालक्षणमलत्रयरहित आत्मा बुद्धिरेव गुहा तत्राद्वितीयतया स्फुरन्तीं सह तां हसेन हासेन सह वर्तमानाम्॥—साक्षाचकारेति। 'साक्षात्प्रभृतीनि च' इति गतिसंज्ञा। ब्रह्मवादीति। ब्रह्मणि(?) वदतीति णिनिः। ब्रह्मचारीति। 'व्रते' इति णिनिः। चिकीर्षितमिति। सनोऽकारस्य 'अतो लोपः' इत्यकारस्य लोपः। सिंहीमिति। जातिलक्षणो ङीष्॥

आत्तायुधाहितजनैः सह संयतित्री
शत्रोर्मनोरथशतान्यथ बेभिदित्री।
आकाशचारिवनिताभिरुपास्यमाना
साह स तन्मनसिकृत्य महान्तमर्थम्॥ ५१॥

अथ सा महान्तमर्थं मनसिकृत्य निश्चित्य तमाह स्म। अहितजनैः सह संयतित्री योद्धुमिच्छन्ती इव आत्तायुधा शत्रोः कंसस्य मनोरथशतानि बेभिदित्री भृशं भेत्री। आका-

इति प्रश्नार्थे मध्यमोत्तमयोः प्राप्तयोरुत्तममध्यमौ विधीयेते। ब्रुवे इति। 'अस्मद्युत्तमः' इत्युत्तमपुरुषः। हनिष्यतीति। 'शेषे प्रथमः' इति प्रथमपुरुषः॥

ग्रामेयकैर्नागरकैश्च लोकैर्निरीक्ष्यमाणा सह राजकीयैः।
कर्मन्दिवन्द्या प्रकथय्य सैवं तिरोदधेऽनु स्तनयित्नुपद्याम्॥ ९५॥

सा देवी एवं प्रकथय्य स्तनयित्नुपद्यां मेघमार्गमनु तिरोदधे। राजकीयैः राजसंबन्धिभिः ग्रामेयकैर्ग्रामभवैर्नागरकैः प्रवीणैर्नगरभवैश्च लोकैर्निरीक्ष्यमाणा कर्मन्दिवन्द्या कर्मन्दप्रोक्तभिक्षुसूत्रमध्यायिनः कर्मन्दिनः॥—[कर्मन्दीति।] 'कर्मन्दकृशाश्वादिनिः'। अनु स्तनयित्नुपद्यामिति। 'स्तन गदी देवशब्दे' चुरादिः। औणादिक इत्नुच्। ['अयामन्ताल्वाय्येत्न्विष्णुषु' इति णे]रयादेशः। पादाय हिता पद्या। 'शरीरावयवाद्यत्'। 'पद्यत्यतदर्थे' इति पद्भावः। [अन्विति।] 'कर्मप्रवचनीयाः' 'अनुर्लक्षणे' इति कर्मप्रवचनीयसंज्ञा। 'कर्मप्रवचनीययुक्ते द्वितीया'। प्रकथय्येति। कथयतेर्ल्यप्। 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। ग्रामेयकैरिति। 'कत्र्यादिभ्यो ढकञ्'। नागरकैरिति। 'नगरात्कुत्सनप्रावीण्ययोः' इति वुञ्। राजकीयैरिति। 'राज्ञः क च' इति छः। कथान्तादेशः॥

व्यामोहमन्ववसितेन हृदा नृपोऽपि
प्रक्षीय सोऽक्षितधियौ निगलाद्विमोक्षम्।
प्रापय्य शौरिमथ तां भगिनीं च वाक्यै-
रक्षीणसौहृदमपेतशुचावतानीत्॥ ९६॥

अथ स नृपोऽपि हृदा प्रक्षीय क्षीणचित्तो भूत्वा अक्षीणसौहृदं शौरिं तां भगिनीं च निगलात् विमोक्षं प्रापय्य वाक्यैरपेतशुचावतानीत्। व्यामोहं अनु व्यामोहेन अवसितेन संपन्नेन। अक्षितधियौ अदीनमनसौ॥—अन्विति। 'तृतीयार्थे' इति कर्मप्रवचनीयसंज्ञा। तद्योगे द्वितीया। प्रापय्येति। 'विभाषापः' इति णेरयादेशः। प्रक्षीयेति। 'क्षियः' इति ल्यपि दीर्घः। अक्षीणेति। कर्तरि 'निष्ठायामण्यदर्थे' इति दीर्घः। अक्षितेति। कर्तरि निष्ठा। 'वाक्रोशदैन्ययोः' इति वा दीर्घः॥

असकृत्कृतवृत्रहाभिषङ्गः सुकृतां सोमसुतामसोढसौख्यः।
गृहमेत्य स भागिनेयघाती द्रुतमाजूहवदात्मनः सहायान्॥ ९७॥

स गृहमेत्य द्रुतमात्मनः सहायान् आजूहवत् आह्वाययामास। असकृत्कृतवृत्रहाभिषङ्गः कृतेन्द्रपरिभवः। सुकृतां सोमसुतां सोमं सुतवतां सोमयाजिनामसोढसौख्योऽसोढतत्सुखः॥—भागिनेयघातीति। 'कर्मणि हनः' इति णिनिः। 'कुत्सितग्रहणं कर्तव्यम्'। वृत्रहेति। 'ब्रह्मभ्रूणवृत्रेषु क्विप्'। सुकृतामिति। 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति क्विप्। सोमसुतामिति। 'सोमे सुञः' इति क्विप्। आजूहवदिति। ह्वयतेर्णिच्। 'ह्वः संप्रसारणम्' इति

सन्परे णौ च संप्रसारणम् । संप्रसारणस्य बलीयस्त्वात् 'शाच्छासाह्वाव्यावेपां युक्' इति प्रागेव युङ् न भवति ॥

अघपूतनाबकमुखा बलिनः परिवादिनः सततमग्निचिताम् ।
नितरामपारिमुखिकेन नृणामधिपेन तेऽथ सदकारिषत ॥ ९८ ॥

अथ अघपूतनाबकमुखास्ते नृणामधिपेन नितरां सदकारिषत सत्कृताः । बलिनः । अग्निचितामग्निं चितवतां सततं परिवादिनोऽपवादशीलाः । अपारिमुखिकेन सौमुख्यवता ॥— अग्निचितामिति । 'अग्नौ चेः' इति क्विप् । सदकारिषतेति । कृञः कर्मणि लुङि 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इत्युपदेशेऽजन्तत्वाचिण्वद्भाव इडागमश्च । 'चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति । इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वलिनिमित्तो विघाती ॥' इति चिण्भावयोजनम् ॥

सुभृशमुपदिदीये मृत्युभीत्या मदीयं
हृदयमनु च यः स्वं वीर्यतोऽमंस्त विश्वम् ।
स्वजनमपरिमेयक्रौर्यमोजायमानं
नृपतिरथ स पश्यन्प्रण्यगादीत्प्रणेयम् ॥ ९९ ॥

अथ नृपतिः स्वजनं पश्यन् आलोकनेन संभावयन् प्रण्यगादीत् उक्तवान् । मदीयं हृदयं मृत्युभीत्या सुभृशमुपदिदीये क्षीणमभूत् । यश्च विश्वं वीर्यतः स्वमनु आत्मनो हीनममंस्त । अपरिमेयक्रौर्यम् । ओजायमानमोजस्विनं भवन्तम् । प्रणेयं वश्यम् ॥—[ओजायमानमिति ।] 'ओजसोऽप्सरसो नित्यम्' इति क्यङि सलोपः । अन्विति । 'हीने' इति कर्मप्रवचनीयसंज्ञा । उपदिदीये इति । 'दीङ् क्षये' । 'दीङो युडचि क्ङिति' इति युडागमः । परिमेयेति । 'माङ् माने' । 'अचो यत्' । 'ईद्यति' इत्याकारस्येकारः । प्रण्यगादीदिति । अड्व्यवायेऽपि नेर्गदादिषु णत्वमिष्यते ॥

सर्वोऽपि यानुप गुणैर्जगतीह तेषां
न स्थीयते नहि मया जननाद्वशे वः ।
तेभ्यश्च युष्मदप मे सुहृदोऽनुकार्यं
नैवास्ति वर्तनमभि स्थ च मां सहार्दाः ॥ ६० ॥

हे सुहृदः, इह जगति सर्वोऽपि जनो गुणैर्यानुप हीनो भवति मया तेषां वो वशेऽधीनत्वे आ जननात् जननमारभ्य नहि न स्थीयते । अपि तु स्थीयत एव । तेभ्यो युष्मत् अप तान् युष्मान् वर्जयित्वा मे अनुकार्यं कार्यं कार्ये वर्तनं च नैवास्ति । मामभि लक्षणीकृत्य सहार्दाः सस्नेहाः स्थ भवथ च ॥—उपेति । 'उपोऽधिके च' इति चकाराद्धीने कर्मप्रवचनीयसंज्ञा । अपेति । 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभिः' इति तद्युक्ते पञ्चमी । आ जननादिति । 'आङ्मर्यादावचने' इति कर्मप्रवचनी-

यसंज्ञा । अभीति । 'अभिरभागे' इति कर्मप्रवचनीयसंज्ञा । स्थीयते इति । 'घुमास्थागापाजहातिसां हलि' इति हलादौ क्ङित्यकारस्येकारः ॥

क्षीबा ये चारण्यकाः पा(प)र्वतीया दुर्देशस्थाः सन्ति सामुद्रका वा ।
यौष्माकीणेनैव वीर्येण सर्वेऽप्यासाकत्वं प्रापितास्तेऽक्लिशित्वा ॥११॥

ते सर्वेऽपि यौष्माकीणेन युष्मत्संबन्धिना वीर्येण अक्लिशित्वा अनायासेन [आस्माकत्वं] अस्मदीयत्वं प्रापिताः । के । ये आरण्यका अरण्ये भवाः । पा(प)र्वतीयाः पर्वते भवाः । दुर्देशस्था यवनादयः । ये वा सामुद्रकाः समुद्रे भवाः सन्ति ते क्षीबा वीर्यादिना मत्ताः ॥—सामुद्रका इति । 'धूमादिभ्यश्च' इति वुञ् । 'समुद्राभ्राद्घः'.. मनुष्ये च' । वुञिष्यते । आरण्यका इति । 'अरण्यान्मनुष्ये' । 'पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम्' इति वुञ् । शैषिकः । पा(प)र्वतीया इति 'पर्वताच्च' [इति छः ।] यौष्माकीणेनेति । 'युष्मदस्मदोरन्यतरस्यां खञ्च' इति खञ् । 'तस्मिन्नणि च युष्माकास्माकौ' इति युष्माकादेशः । आस्माकेति । अन्यतरस्यां ग्रहणादण् । तस्मिन्नस्माकादेशः । दुर्देशस्था इति । 'आतो लोप इटि च' इत्याकारलोपः । क्षीबा इति । 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निपातितः ॥

स्थेयात्स्वामी शक्रतः प्रत्यशत्रुः प्रम्लेयासुश्चास्य सर्वोपसर्गाः ।
प्रग्लायासुः शत्रवश्चेति मां प्रत्याशंसध्वे गृध्नवो यूयमेव ॥ १२ ॥

यूयमेव मां प्रति लक्षणीकृत्य इति आशंसध्वे इच्छथ । गृध्नव इच्छाधर्माणः । कथम् । अस्माकं स्वामी अशत्रुरनवसन्नः शक्रतः प्रति शक्रस्य प्रतिनिधिः सन् स्थेयात् । अस्य सर्वोपसर्गाः सर्वोपद्रवाः प्रम्लेयासुः म्लाना भूयासुश्च । शत्रवः प्रग्लायासुः ग्लामाः सन्तु च ॥—प्रतीति । 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति कर्मप्रवचनीयसंज्ञा । 'प्रतिनिधिप्रतिदाने च यस्मात्' इति तद्योगे पञ्चमी । 'प्रतियोगे पञ्चम्यास्तसिः' । स्थेयादिति । 'एर्लिङि' इति घुमास्थादीनामेकारः । प्रम्लेयासुरिति । प्रग्लायासुरिति । 'वान्यस्य संयोगादेः' इति वा एत्वम् । स्वामीति । 'स्वामिन्नैश्वर्ये' इति निपातितः ॥

कुतोऽध्युपेयाद्विपदीदृशानित्येतां धियं तावदतो विहाय ।
मृत्युं विहन्तुं मम यस्यत स्र प्राप्तामिमां यस्यत यस्यतेति ॥ १३ ॥

अतो युष्मानीदृशान् कुतः केन प्रकारेण विपत् अध्युपेयात् प्राप्नुयात् इत्येतां धियं तावद्विहाय मम प्राप्तामासन्नत्वेन श्रुतामिमां मृत्युं विहन्तु यस्यत यस्यतेति यस्यत स्म यत्नं यत्नं कुरुत ॥—अधीति । 'अधिपरी अनर्थकौ' इति कर्मप्रवचनीयसंज्ञा । धात्वर्थव्यतिरेकेणार्थस्यानभिधानात् संज्ञायाः प्रयोजनं स्वरोऽयम् । विहायेति । 'न ल्यपि' इति घुमास्थादीनामित्वाभावः । यस्यत स्मेति । 'अर्थाद्रे च' इति स्मे लोट् ॥

अतिसक्ततयैव मामकीने हितकृत्ये मम सा हि भागिनेयी ।
भुवि सुस्थमुपादिशद्रिपुं मे वितथाभूदशरीरिणी तु वाणी ॥ ६४ ॥

सा मम भागिनेयी स्वसुरपत्यं मामकीने हितकृत्येऽतिसक्ततयैव मे रिपुं भुवि सुस्थमुपादिशत् । अशरीरिणी तु वाणी तु वितथा असत्या अभूत् ॥—सुस्थमिति । 'सुः पूजायाम्' इति कर्मप्रवचनीयसंज्ञा । अतिसक्ततयेति । 'अतिरतिक्रमणे च' इति चकारात् पूजायां कर्मप्रवचनीयसंज्ञा । मामकीने इति । खञि 'तवकममकावेकवचने' इति अस्मदो ममकादेशः ॥

प्रणिजगदुरथासुरा नरेन्द्रं नृप किमिदं भवति ह्यधि त्रिलोकी ।
कमलभवमपि स्वजेत भीतिस्त्वयि रुषिते किमुताल्पकं कृतान्तम् ६५

अथ असुरा नरेन्द्रं प्रणिजगदुरुक्तवन्तः । हे नृप, किमिदं वैक्लव्यम् । त्रिलोकी भवति अधि हि भवत्स्वामिकं त्रैलोक्यम् । त्वयि रुषिते कमलभवमपि भीतिः स्वजेत आलिङ्गितु संभाव्यते । अल्पकं कृतान्तं किमुत ॥—अपीति । 'अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु' इति संभावनायां कर्मप्रवचनीयसंज्ञा । लिङ् च संभावने । अधीति । 'अधिरीश्वरे' इति कर्मप्रवचनीयसंज्ञा । भवतीति 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' इति सप्तमी ॥

ब्रूमो वयं संप्रति पश्य तावद्वित्रैर्दिनैरेव भवन्तमेत्य ।
निजेन दण्डेन भियापमित्य याचिष्यति स्वं न स जीवितं किम् ॥६६॥

वयं संप्रति ब्रूमः । पश्य तावत् । स कृतान्तो भिया द्वित्रैर्दिनैरेव भवन्तमेत्य निजेन दण्डेनापमित्य प्रहृत्य स्वं जीवितं किं न याचिष्यति । कृतान्तो भवन्तं याचित्वा निजेन दण्डेन भवदधीनं स्वजीवितं व्यतिभास्यति व्यतिहरिष्यते ॥—अपमित्येति । 'उदीचां माङो व्यतीहारे' इति उत्तरकाले क्त्वा विधीयते । गतिसमासे 'मयतेरिदमन्यतरस्याम्' इतीत्वम् ॥

विप्रैः सुराविक्रयिणां विरोपिभिश्चिन्वद्भिरग्नीन्रथचक्रचिन्मुखान् ।
आद्वत्यकर्मा यदि सोऽन्यभुव्यभूत्तस्याधिकुर्मः क्षयमञ्जसोष्णकाः ॥६७॥

स कन्यकोत्तया योतितो विष्णुर्यद्यन्यभुव्यभूत् तर्हि अञ्जसा तस्य क्षयमधिकुर्मः । विप्रैराद्वत्यकर्मा । सुराविक्रयिणां विरोपिभिः रथचक्रचिन्मुखान् अग्नीन् चिन्वद्भिरुष्णका उष्णमिव शीघ्रं कुर्वन्तः । अधिकुर्मः ॥—क्षयमिति । 'विभाषा कृञि' इत्यधेर्वा कर्मप्रवचनीयसंज्ञा । कर्मण्येवात्र द्वितीया । रथचक्रचिदिति । 'कर्मण्यग्न्याख्यायाम्' इति क्विप् । रथचक्रवच्चीयत इति सञ्ज्ञा । 'रथचक्रचितं चिन्वीत भ्रातृव्यवान्' इति श्रुतिः । सुराविक्रयिणामिति । 'कर्मणीनि विक्रयः' इति इनिः । कुत्सानिमित्तमिह कर्म । उष्णका इति । 'शीतोष्णाभ्यां कारिणि' इति कन् । अभूदिति । 'लुङ् लङ् लृङ्क्ष्वडुदात्तः' ॥

भूतार्थदृश्वन्नथ राजयुध्वन्नस्माभिरेतैः सहकृत्वभिस्ते।

न खल्वसाध्यो दिविजोऽपि सोऽजः किमु क्रशीयो मनुजत्वमीतः ॥ ६८ ॥

अयि भूतार्थदृश्वन् परमार्थं दृष्टवन्, राजयुध्वन् राज्ञो योधितवन् तैरस्माभिः सहकृत्वभिः सहकृतवद्भिः सहायभूतैर्दिविजोऽपि सोऽजस्तेन खलु असाध्यः, अपि तु मारयितव्य एव। क्रशीयः क्रशतरं मनुजत्वमीतः प्राप्तः। किमु ॥—भूतार्थदृश्वन्निति। कर्मण्युपपदे 'दृशेः क्वनिप्'। राजयुध्वन्निति। 'राजनि युधिकृञः'। युधिरन्तर्भावितण्यर्थत्वात् सकर्मकः। युध्यमानं राजानं यदापरः प्रेरयति युध्यस्वेति तदा युधिः प्रयोज्येन सकर्मकः। सहकृत्वभिरिति। 'सहे च' इति क्वनिप्। दिविज इति। 'सप्तम्यां जनेर्डः'। 'प्रावृट्शरत्कालदिवां जे' इत्यलुक्। अज इति। 'अन्येष्वपि दृश्यते' इति डः। ईत इति। 'ई गतौ'। 'निष्ठा' इति भूते क्तः ॥

त्वदनुजात्मजा साथवा प्रजा कथमिवैद्वपुस्तादृशं क्षणात्।

हृतविभूतयः शाम्बरीं सुरा न किमदीदृशन्मेह विश्वसीः ॥ ६९ ॥

अथवा त्वदनुजात्मजा सा प्रजा कथमिव तादृशं वपुः क्षणादैत् प्राप्ता। त्वया हृतविभूतयः सुराः शाम्बरीं मायां तादृशीं न किमदीदृशन् अदर्शयन्। इह अस्मिन्नर्थे मा विश्वसीः विश्वासं कार्षीः ॥—आत्मजेति। 'पञ्चम्यामजातौ' इति डः। प्रजेति। 'उपसर्गे च संज्ञायाम्' इति डः। त्वदनुजेति। त्वामनुजाता त्वदनुजा। 'अनौ कर्मणि' इति डः। अदीदृशन्निति। 'लुङि' इति भूते लुङ्। ऐदिति। 'अनद्यतने लङ्' 'आडजादीनाम्' इत्याडागमः। विश्वसीरिति। 'न माङ्योगे' इति अडाटोरभावः ॥

ये यज्वानः शुश्रुवांसः श्रुतीनामर्थाञ्शान्तिं सर्वदोपेयिवांसः।

तेषां घातः स्याज्जरद्ब्राह्मणानां घातो विष्णोस्ते यदस्यैकमूर्तिः ॥ ७० ॥

ये जरद्ब्राह्मणा यज्वान इष्टवन्तः श्रुतीनामर्थान् शुश्रुवांसः श्रुतवन्तः, सर्वदा शान्तिं मनोजयमुपेयिवांसः प्राप्तवन्तश्च, तेषां जरद्ब्राह्मणानां वृद्धानां ब्राह्मणानां घातो विष्णोर्घातः स्यात्। ते अस्य एकमूर्तिः प्रधानशरीरं यत् ॥—जरदिति। 'जीर्यतेरतृन्'। शुश्रुवांस इति। 'भाषायां सदवसश्रुवः' इति लिटः क्वसुः। उपेयिवांस इति। 'उपेयिवाननाश्वाननूचानश्च' इति निपातनम्। ब्राह्मणानामिति। ब्रह्मणोऽपत्यार्थेऽण्। अजातावेव [ति]टि लोपः ॥

खादित्वा तृणचयमाशितंभवं या

निर्मन्तुं ददति हविः समांसमीनाः।

प्रष्ठौहीरवनिप कूलमुद्रुजास्ता

हन्मो गाः परिभविनीः स्तनंधयीर्वा ॥ ७१ ॥

हे अवनिप, ता गाश्च हन्मः। समांसमीनाः प्रत्यब्दं सूयमानाः। प्रष्ठौहीः बाल्य एव गर्भिणीः। स्तनंधयीः अविवत्साश्च। कूलमुद्रुजाः कूलं भिन्दतीः। परिभविनीः अस्मत्परिभा-

करीः । या आशितं भवं तृप्तिसाधनभूतं निर्मन्तुं निरपराधं तृणचयं खादित्वा हविर्ददाति ॥— स्तनंधयीरिति । 'धेट् पाने' । 'नासिकास्तनयोर्ध्माधेटोः' इति खश् । धेटष्टित्वात् 'टिड्ढाणञ्–' इति ङीप् । कूलमुद्रुजा इति । रुजो भङ्गे । 'उदि कूले रुजिवहोः' इति खश् । आशितंभवमिति । 'आशिते भुवः करणभावयोः' इति करणे खच् । आशितस्तृप्तो भवत्यनेनेति । प्रष्ठौहीरिति । पञ्चमे षष्ठे वा वर्षे वहतीति ।'वहश्च' इति ण्विः । उपधावृद्धिः । प्रष्ठवाहशब्दात् ङीप् । 'वाह ऊठ्' इति वकारस्य संप्रसारणम् । 'एत्येधत्यूठ्सु' इति ऊठि पूर्वपरयोर्वृद्धिः । समांसमीना इति । 'समां समां विजायते' इति खः ॥

द्वैरात्रिका ये शिशवस्त्र्यहीना मास्या भुवि द्वैसमिकाः समीनाः ।
तान्पञ्चमास्यानपि च त्रिवर्षान्सर्वान्प्रहन्मोऽद्य तवापदर्थम् ॥ ७२ ॥

वयमद्य तव आपदर्थमापन्निवृत्तये तान् सर्वान् शिशून् प्रहन्मः । कान् । भुवि ये द्वैरात्रिका द्वेरात्री भूताः । त्र्यहीनाः । त्रीण्यहानि भूताः । मास्याः मासं भूताः । द्वैसमिकाः द्वैसमे भूताः । समीनाः समा भूताश्च शिशवः सन्ति तान् । तथा पञ्चमास्यान् पञ्च मासान् ता[न्] । अपि च त्रिवर्षान् त्रीणि वर्षाणि भूतांश्च ॥—मास्यानिति । 'मासाद्वयसि यत्खञौ' इति यत् । पञ्चमास्यानिति । 'द्विगोर्यप्' । समीना इति । 'समायाः खः' । द्वैसमिका इति । 'द्विगोर्वा' इति खाभावपक्षे ठञ् । द्वैरात्रिका इति । 'रात्र्यहःसंवत्सराच्च' इति ठञ् । त्र्यहीना इति । तेनैव खः । त्रिवर्षानिति । 'चित्तवति नित्यम्' इति ख‍ठञोर्लुक् ॥

न तेऽस्त्यभिज्ञा सहकुष्ठलाधिपं विजेष्यते संयति राजकं भवान् ।
न वाभिजानासि विकत्थिनः सुरान्यदप्रतिस्तब्धपराक्रमोऽजयः ॥७३॥

ते अभिज्ञा स्मृतिर्नास्ति किम् । भवान् संयति सहकुष्ठलाधिपं कुत्सितस्थलाधिपतिसहितं तं राजकं राजसमूहं विजेष्यते जितवान् । नाभिजानासि वा । विकत्थिनः श्लाघाशीलान् सुरान् अप्रतिस्तब्धपराक्रमोऽनभिभूतपराक्रमः सन् अजय इति यत् ॥—विजेष्यते इति । 'अभिज्ञावचने लृट्' इत्यनद्यतनभूते लृट् । अजय इति । 'न यदि' इति लृडभावे लङ् । कुष्ठलेति । 'विकुशमिपरिभ्यः स्थलम्' इति षत्वम् । अप्रतिस्तब्धेति । 'प्रतिस्तब्धनिस्तब्धौ च' इति षत्वाभावो निपात्यते ॥

इदमपि तवाभिज्ञातं यत्क्षणे[न] दिशांपती-
नपि युधि भवान्भङ्क्ष्यत्येषां हरिष्यति वा वसु ।
तितनिषसि यत्कस्त्वं श्वासो निवारयिता ततः
परिपरि परं धर्माधर्मावपास्य बलीयसः ॥ ७४ ॥

इदं तवाभिज्ञातमपि भवान् युधि दिशांपतीन् अपि क्षणेन भङ्क्ष्यति भग्नवान् । एषां वसु हरिष्यति वा हृतवांश्च । यत् तितनिषसि ततः तस्मात् श्वासः प्राणन् सन् को नि-

वारयिता न कोऽपि । धर्माधर्मौ परं केवलं वर्धीयसः परिपरि अतिबलवन्तं परिहृत्य वर्तेते इत्यपास्य जानीहि ॥—भङ्क्ष्यति । हरिष्यतीति । 'विभाषा साकाङ्क्षे' इति यच्छब्दसहिते केवले चाभिज्ञावचने उपपदे वा लृट् । तत इति । 'वारणार्थानामीप्सितः' इत्यपादानसंज्ञा । श्वास इति । 'श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च' इति णः । परिपरि इति । 'परेर्वर्जने' 'असमासे चेति वक्तव्यम्' इति द्वित्वम् । 'पञ्चम्यपाङ्परिभिः' ॥

अर्घ्यां शंभोर्भावयित्वा मृडानीं लेभे तस्माद्रावणः प्रागभीष्टम् ।
आयान्त्यायःशूलिकात्पार्श्वकान्वा संप्रत्यर्था पश्य न न्यायवृत्तान् ॥७५॥

प्राक् रावणो विश्रवसोऽपत्यं शंभोरर्घ्यामर्घे वर्तमानां मृडानीं भावयित्वा तस्मादभीष्टं लेभे । संप्रति आयःशूलिकान् तीक्ष्णोपायेनार्थानन्विच्छतः पार्श्वकान् वा अनृजुना उपायेनार्थानन्विच्छतश्च । अर्था आयान्ति । पश्य । न तु न्यायवृत्तान् ॥—अर्घ्यामिति । 'अर्घाद्यत्' शैषिकः । पार्श्वकानिति । 'पार्श्वेनान्विच्छति' इति कन् । आयःशूलिकानिति । 'अयःशूलदण्डाजिनाभ्यां ठक्ठञौ' । शंभोरिति । डप्रकरणे 'मितद्र्वादिभ्य उपसंख्यानम्' इति डः । 'भू प्राप्तौ' आत्मनेपदी । शं कल्याणं भूतवान् उपपन्नवानिति । रावण इति । 'शिवादिभ्योऽण्' इति गणे 'विश्रवणरवणौ' इति पाठात् विश्रवसो रवणादेशः ॥

निग्राहिता सोऽपि सुधारसान्धो दांशिष्यते येन पतन्पदोस्ते ।
जगद्भुजाविक्रमजेन तेऽद्य प्रभावभूम्ना परिभाविषीष्ट ॥ ७६ ॥

यः पुरुषस्ते पदोः पतन् न दांशिष्यते स सुधारसान्धः सुधारसाशनोऽपि निग्राहिता हनिष्यते । भवद्भुजाविक्रमजेन प्रभावभूम्ना अदो जगत् परिभाविषीष्ट परिभूयताम् ॥—विक्रमजेति । 'पञ्चम्यामजातौ' इति डः । दांशिष्यत इति । 'स्यसिच्' इति चिण्वद्भावः । परिभाविषीष्टेति । सीयुटि । निग्राहितेति । तासौ ॥

इत्युक्तवत्यै स सहायतायै प्रीणन्पराघ्यांनि [वसूनि] वाग्मी ।
ददेऽवराघ्यांनि च राष्ट्रियानि द्वैप्यानि मध्यानि च पार्वतानि ॥ ७७ ॥

स इति उक्तवत्यै सहायतायै सहायस्यं समूहाय प्रीणन् तां तोषयितुं वसूनि रत्नानि ददे दत्तवान् । वाग्मी प्रशस्तवाक् । कानि । पराघ्यांनि उत्तमार्घ्यानि अवराघ्यांनि अधमार्घ्यानि मध्यानि समानि राष्ट्रियानि राष्ट्रे भवानि द्वैप्यानि समुद्रसमीपद्वीपे भवानि पार्वतानि पर्वते भवानि च ॥—[पार्वतानि] इति । 'विभाषामनुष्ये' इति छाभावपक्षेऽण् । राष्ट्रियाणीति । 'राष्ट्रावारपाराद् घखौ' । पराघ्यांनीति । अवराघ्यांनीति । 'परावराधमोत्तमपूर्वाच्च' इति यत् । मध्यानीति । मध्यशब्दात् 'अ सांप्रतिके' इत्यप्रत्ययः । द्वैप्यानीति । 'द्वीपादनुसमुद्रं यञ्' । वाग्मीति । 'वाचो ग्मिनिः' मत्वर्थीयः ॥

देवद्रीचा दोःपटिम्नाप्रदिष्टानत्यन्तीनांस्तांस्तथादिश्य वश्यान् ।
राक्षद्विष्णोर्घातुकाम्भीरुकः सन्स न्यध्यासीत्तन्मयं विश्वमेतत् ॥ ७८ ॥

स तान् तथा आदिश्य शश्वत् विष्णोर्भीरुकः सन् एतत् विश्वं तन्मयं विष्णुमयं न्यध्यासीत् दृष्टवान् । देवद्रीचा देवान् प्राप्नुवता दोःपटिम्ना सामर्थ्येन अन्नदिष्ठान् अमृदुतमान् । अत्यन्तीनान् अत्यर्थं गमनशीलान् । वश्यान् वशंप्राप्तान् । घातुकान् दैत्यहननशीलान् ॥—अत्यन्तीनानिति । 'अवारपारात्यन्तानुकामं गामी' इति खः । वश्यानिति । 'वशं गतः' इति यत् । भीरुक इति । 'भियः क्रुकन्निति वक्तव्यम्' । 'भीलुकः' इति वा पाठः ॥

अध्वनीनकथिताननुश्रृण्वन्नन्दगोपसुतसंभवजन्यान् ।
उत्सवान्व्रजपदे हरिमर्च(य)ञ्जायया स मुमुदे वसुदेवः ॥ ७९ ॥

स वसुदेवो जायया सह मुमुदे । व्रजपदे अध्वनीनकथितान् नन्दगोपसुतसंभवजन्यान् तेन जातान् उत्सवान् अनुश्रृण्वन् हरिमर्च(य)न् पूजयन् ॥—अध्वनीनेति । 'अध्वनो यत्खौ' । अनुश्रृण्वन्निति । 'श्रु श्रवणे' । अस्माल्लट् । 'लः परस्मैपदम्' इति परस्मैपदसंज्ञा । 'शेषात्कर्तरि परस्मैपदम्' । मुमुद इति । 'तङानावात्मनेपदम्' इत्यात्मनेपदसंज्ञा । 'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः' इति प्रथमपुरुषसंज्ञा । 'शेषे प्रथमः' इति प्रथमपुरुषः । 'तान्येकवचनद्विवचनबहुवचनान्येकशः' इत्येकवचनसंज्ञा । 'द्व्येकयोर्द्विवचनैकवचने' इत्येकवचनम् । स इति । 'सुपः' इति वचनसंज्ञा । 'विभक्तिश्च' इति सुपां तिङां च विभक्तिसंज्ञा । 'त्यदादीनामः' इति विभक्तावकारादेशः । जाययेति । 'आङि चापः' इत्येकारः । 'परः संनिकर्षः संहिता' इति संहितासंज्ञायां 'एचोऽयवायावः' इत्ययादेशः । वसुदेव इति । 'विरामोऽवसानम्' इत्यवसानसंज्ञायां 'खरवसानयोर्विसर्जनीयः' ॥

इति वासुदेवकृते वासुदेवविजयकाव्ये पदचन्द्रिकाख्यया व्याख्यया समेतस्तृतीयः सर्गः ।

---

# धातुकाव्यम् ।

स्मरत हरेर्मधुरतरं मुरलीनिनदामृतं हि शब्दमयम् ।
पदयुगलं च भवान्या महिषारेर्मुक्तिनिलयशालिन्याः ॥

गुरुपादाब्जसंसेवानितान्तविमलाशयैः ।
सतीर्थ्यैरेव लिख्यन्ते धातुकाव्यार्थलोचनाः ॥

अथ वासुदेवकविविरचितस्य [वासुदेवविजयाभिधस्य] काव्यरत्नस्य शेषभागपूरणाय चिकीर्षितं प्रतिजानीते—

उदाहृतं पाणिनिसूत्रमण्डलं प्राग्वासुदेवेन तदूर्ध्वतोऽपरः ।
उदाहरत्यद्य वृकोदरोदितान्धातून्क्रमेणैव हि माधवाश्रयात् ॥ १ ॥

वासुदेवेन प्राक् पाणिनिसूत्रमण्डलमुदाहृतम् । अथापरस्तदूर्ध्वतो धातूनुदाहरति इत-

न्वयः। वासुदेवो नाम केरलेषु पुरवनग्रामजन्मा कश्चिद् द्विजन्मा। पाणिनेः सूत्राणि पाणिनिसूत्राणि तेषां मण्डलं समूहः उदाहृतवनुदाहरणैः प्रकाशीकृतवान्। अपर इत्यौद्धत्यपरिहाराय नामानुक्तिः। तदूर्ध्वत इति सप्तम्यर्थे तसिः। तस्य सूत्रोदाहरणस्योर्ध्वभागे धातूनुदाहर्तेत्यर्थः। अन्योदाहरणकाव्येषु क्वचिद्प्यदृष्टमिदमितीहातिशयं प्रतिपादयति—क्रमेणैवेति। अयं भावः—अस्ति तावद्दुर्लभप्रयोगाणामखिलधातूनाम क्रमेणाप्येकत्रावगमे जिज्ञासूनां महानुपयोगः। इह पुनः क्रमेणैवोदाहरणादेतस्मिन् प्रकरणभागे एतावति योऽयं धातुरिति सम्यगवगम्यमाने श्रोतृजनस्य कौतुकातिशयः किमु वक्तव्य इति। हिशब्देन च क्रमेणैवेत्यस्यानुवृत्तत्वं सूचयतान्यान्यपि गणविभजनादीनि दुष्करतराण्यद्भुतान्यत्र भविष्यन्तीति सूचयति॥ ननु धातुपाठानां बहुलत्वात् कोऽयं क्रमोऽस्मिन्नाश्रीयत इत्यत्राह—वृकोदरोदितानिति। भीमसेनप्रणीतानित्यर्थः। न च भीमसेनप्रणीतत्वं प्रसिद्धिमात्रत्वादप्रामाणिकमिति मन्तव्यम्। 'तस्माद् भीमसेनस्याप्ययमेव पाठो युक्तः' इति पुरुषकार एव कथितत्वात्। ननु भीमसेनपाठस्यापि मैत्रेयादिधातुवृत्तिभेदकृतैः मतभेदादिभिः व्याकुलत्वात् दुःसाधमुदाहरणमित्याशङ्क्याह—माधवाश्रयादिति। माधवो नाम धातुवृत्तिकारः। तेन तद्रचितो ग्रन्थो लक्षणीयः। तद्रूपस्याश्रयस्यावलम्बस्य सद्भावादयमुदाहरति। अतो न दुःसाधत्वमिति। किं च। माधवस्य लक्ष्मीवल्लभस्य मधुकुलावतीर्णस्य पूर्णब्रह्मणः आश्रयात् सर्वात्मना शरीरकरणात् वत्करणैवेदं क्रियते। अतो न दुःसाधत्वमिति भावः। अपि च। माधव एवाश्रयः प्रतिपाद्यः। तस्माद्धेतोरेवेदं क्रियते। अतो माधवविषयकथाकथनचिन्तनार्थमेव क्रियमाणत्वात् सदोषमपि खेदाय न भवतीति भावः। एवं च माधवाश्रयादित्यनेनेष्टदेवतानुस्मरणमपि कृतं वेदितव्यम्। 'कलहिंसाप्रबन्धार्थो वीरमत्तयादयो रसाः। त्रिभिर्दिनैः कृतं कर्म त्रिभिः सर्गैश्च कथ्यते॥ अक्रूरयोगो यात्रादिचापच्छेदान्तचेष्टितम्। मल्लयोगादिकं सान्तपर्यन्तं च त्र्यहे कृतम्॥ धातुपाठे च भूवादिर्भूयान् भवति तत्र च। अगणः प्रथमो भागो वृताद्यो गणवान् परः॥ अनयो रगणो भागः प्रथमः सर्ग उच्यते। द्वितीयभागमारभ्य तुदाद्यन्तं द्वितीयके॥ रुधादितश्चुराद्यन्तं तृतीयेनोपवर्ण्यते। व्यज्यते गणभेदादिः कथाभेदादिलाञ्छनैः॥ तात्पर्यभेदाद्योज्यन्ते तुल्यार्था अपि धातवः॥'

अथैवंभूतं काव्यमारभते—

स गान्दिनीभूरथ गोकुलैर्वितं स्पर्धालुचीगाथितकार्यबाधिनम्।
द्रक्ष्यन्हरिं नाथितलोकनायकं देधे मुदास्कुन्दितमन्तरिन्द्रियम्॥ २॥

अथ स गान्दिनीभूर्हरिं द्रक्ष्यन् अन्तरिन्द्रियं मुदास्कुन्दितं देधे। अथ श्रीकृष्णानयनार्थं कंसनियोगानन्तरं स तत्तादृशभगवद्भक्तिशाली गान्दिनीतो भवत्युत्पद्यते इति गान्दिनीभूरक्रूरः। गान्दिनी श्वफल्कभार्या। द्रक्ष्यन्निति भविष्यत्प्रत्ययस्यासन्नभविष्यत्काल-

१. 'शरणाकरणात्' पाठः. २. 'माभिन्न' पाठः.

परत्वाद् द्रष्टुमारम्भ(?)इत्यर्थः । भोक्ष्यमाण आचरतीतिवत् । अन्तरिन्द्रियं मनः । तदानीमाभ्यन्तरतमे भगवद्रूपे एवात्यावेिष्टत्वेन बहिर्मनोवृत्तीनामसत्त्वायत्वात् अन्तरीन्द्रियत्वमेव मनसो जातमिति भावः । मुदि संतोषे समुद्रस्थानीये आस्कुन्दितमाप्लुतं स्नातं निमग्नमित्यर्थः । मुदायां स्कुन्दितमिति वा । हलन्तादपि वा टाप् स्यात् इत्याकारान्तस्यापि मुदा शब्दस्य सद्भावात् । अथवा मुदा हेतुना उत्प्लुत्य गतं कृतनर्तनमित्यर्थः । यद्वा मुदा करुर्या उद्धृतमुन्नमितं वांधितमिति यावत् । कीदृशं हरिं इत्यत्राह—गोकुलैधितं गोकुले प्रवृद्धम् । गोकुलं गोष्ठः । स्पर्धालुधीगाधितकार्यबाधिनं स्पर्धालूनां स्पर्धावतां धियि बुद्धौ गाधितं प्रतिष्ठितं लब्धस्थानमित्यर्थः । लिप्सितं वा कार्यं बाधितुं शीलं यस्य तम् । नाधितलोकनायकं नाधितलोकस्य उपतप्तजनस्य नाथकमीशितारं रक्षकमित्यर्थः । नाधितस्य प्रार्थितस्य निजलोकस्य आशीरूपेणानुग्रहितारं वा ॥—गान्दिनीभूरिति । गान्दिन्या भवत्युत्पद्यत इति गान्दिनीभूः । १ भू सत्तायाम् । उदात्तः परस्मैभाषः । अस्मात् 'क्विप् च' इति क्विप् । एधितमिति । २ एध वृद्धौ । एतदादयः कत्थान्ता उदात्ता अनुदात्तेतः । अस्मात् 'गत्यर्थाकर्मक–'इत्यादिना कर्तरि क्तः । स्पर्धालुरिति । ३ स्पर्ध संघर्षे । संघर्षः पराभिभवेच्छा । पराभिभवस्य धात्वर्थान्तर्भावादकर्मकः । अस्माद् 'गुरोश्च हलः' इत्यप्रत्यये स्पर्धा । स्पर्धो ठात्यादत्ते मितद्वादित्वाड्डुः । ४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । आत्मयापनास्थानलाभश्च प्रतिष्ठा । एकत्र स्थापनं संदर्भो वा ग्रन्थः । संदर्भः शब्दविषयोऽर्थविषयोऽपि । अस्मात् कर्तरि कर्मणि वा क्तः । कार्यबाधिनमिति । ५ बाधृ लोडने[1] । लोडनं प्रतिघातः । अस्मात् 'सुप्यजातौ णिनिः' इति णिनिः । नाधितलोकनाथकमिति । ६ नाधृ ७ नाथृ याच्ञोपतापैश्वर्याशीःषु । ऐश्वर्यमाधिपत्यं नियन्तृत्वं च । 'नृति-नन्दि-नार्दि-नक्कि-नाटि-नाधृ-नाथृ-नृवर्जिताः सर्वे नादयो णोपदेशाः' इत्युक्त्या द्वावप्यणोपदेशौ । आद्यो णोपदेश इत्येके । आद्यात् कर्तरि कर्मणि वा क्तः । द्वितीयाण् ण्वुल् । दधे । ८ दध धारणे । लिट् । स्कुन्दितम् । ९ स्कुदि आप्रवणे । आप्रवणमाप्लवनमुत्प्लुत्य गमनं वा । उद्धरणं वा । अस्मादिदित्वान्नुमि प्राग्वत् क्तः ॥

यद्यस्य भगवतीयान् प्रेमातिशयः तर्हि कथं पूर्वमेव न प्रस्थितवान् इत्यत्राह—

**प्रश्विन्दिताशं यशसा पुराप्यसौ विवन्दिपुरस्तं नतमन्दिनं विभुम् ।**
**स्वमन्दिरात्स्पन्दितुमेव नाशकत्कंसात्परिक्लिन्दितसज्जनाद्भिया ॥ ३ ॥**

अपिरुभयत्र योजनीयः । असौ पुरा अपि तं विभुं विवन्दिपुरपि स्वमन्दिरात् स्पन्दितुमेव नाशकत् । असावक्रूरः पुरापि पूर्वं विवन्दिपुर्वन्दितुमिच्छुः । इच्छापिविरोधे स्पन्दितुं किंचिदपि चलितुं नाशकत् न शक्तोऽभूत् । कीदृशम् । यशसा प्रश्विन्दिताशं प्रश्विन्दिताः सम्यग्धवलीकृता आशा दिशो येन तम् । नतमन्दिनं नतान् नमनकर्तॄन् मन्दयितुं सुखयितुं कल्याणवतः कर्तुं वा शीलं यस्य तम् । कंसात् भिया । हेतौ तृतीया ।

---

1. 'लोटने' पाठः.

कीदृशान्। परिक्लिन्दितसज्जनात्। परिक्लिन्दिताः परिदेविताः सज्जना येन तस्मात्॥—प्रश्विन्दितेति। १० श्विदि श्वैत्ये। णिजन्तात् कर्मणि क्तः। विवन्दिषुरिति। ११ वदि अभिवादनस्तुत्योः। प्रणतिपूर्वकमाशीर्वचनं नतिमात्रं वाभिवादनम्। अस्मात् सन्नन्तात् 'सनाशंसभिक्ष उः' इत्युप्रत्ययः। नतभन्दिनमिति। १२ भदि कल्याणे सुखे च। कल्याणं कल्याणवद्भावः। अस्माण्णिजन्ताण् णिनिः। मन्दिरादिति। १३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। स्वप्न आलस्यम्। अस्मादधिकरणार्थे 'इषि-मदि-मुदि-खिदि-छिदि-भिदिमन्दि' इत्यादिना किरच्। स्पन्दितुमिति। १४ स्पदि किंचिच्चलने। तस्मात् 'शकधृष-'इत्यादिना तुमुन्। परिक्लिन्दितेति। १५ क्लिदि परिदेवने। अस्माण्णिजन्तात् कर्मणि क्तः॥

अस्य संतोषातिशयं दर्शयति—

मुदा स चेतो ददे चिरं हरौ स्वादात्सुरैः स्वर्दितमङ्गलोर्दने।
अकूर्दतेवास्य पुरः स्वखूर्दकैर्वनान्तगूर्दी रिपुगोदसूद्यसौ॥ ४॥

स मुदा चिरं हरौ चेतो ददे। मुदा हेतुना ददे समर्पितवान्। स्वादात् माधुर्यात् हेतोः सुरैः स्वर्दितमङ्गलोर्दने स्वर्दितानि आस्वादितानि मङ्गलरूपाण्यूर्दनानि क्रीडनानि यस्य तस्मिन्। मनोलयस्यातिशयमाह—असौ अस्य पुरः स्वखूर्दकैरकूर्दतेव। असौ हरिः स्वखूर्दकैः स्वकीयैः क्रीडकैर्वयस्यैरित्यर्थः। सहार्थे तृतीया। अकूर्दत क्रीडितवान्। वनान्तगूर्दी वनान्ते वनमध्ये गूर्दितुं क्रीडितुं शीलं यस्य सः। रिपुगोदसूदी रिपूणां गोर्दं क्रीडां सूदितुं हिंसितुं शीलं यस्य॥—मुदा। १६ मुद हर्षे। अस्मात् संपदादि क्विप्। ददे। १७ दद दाने। धारणे च कल्पद्रुमे। अस्माल्लिटि 'न शसदद-' इत्येत्वाभ्यासलोपाभावः। स्वादात्। १८ स्वद १९ स्वर्द आस्वादने। आस्वादमनुभवः। 'धात्वादेः षः सः'। स्वदेर्घञ्। स्वर्दितेति कर्मणि क्तः। अनयो राधः षोपदेशः। अन्यो नः। 'अदन्त्य(?)पराः सादयः षोपदेशाः। स्मिङ्-स्विदि-स्वदि-स्वञ्जि-स्वपयश्च' इत्युक्तेः। ऊर्दनेति। २० उर्द माने क्रीडायां च। अस्माल्ल्युटि। 'उपधायां च' इति दीर्घः। अकूर्दतेति। २१ कुर्द २२ खुर्द २३ गुर्द २४ गुद क्रीडायामेव। कुर्देर्लङ्। खूर्दकैः खूर्देर्ण्वुल्। वनान्तगूर्दी। रिपुगोदसूदी। गूर्देर्णिनिः। गुदेश्च घञ्। २५ षूद क्षरणे। निःसरण तदा हिंसार्थेऽप्यस्ति अस्माण्णिनिः॥

गभीरनिर्ह्रादमथास्थितो रथं ह्लादादनुस्वादितकृष्णसत्कथः।
पृदाकुजिद्वेगमयत्नतो ययौ वियोयुतत्काननजोतिनाध्वना॥ ५॥

अथ स रथमास्थितोऽयत्नतो वियोयुतत् काननजोतिनाध्वना पृदाकुजिद्वेगं ययौ। आस्थितः आरुह्य स्थितः। अयत्नतोऽप्रयासेन। वियोयुतत् काननजोतिना वियोयुतता अत्यर्थं भासमानेन काननेन जोतितुं भासितुं शीलं यस्य तेन। पृदाकुजिद्वेगम्। पूत्कारा-

१. 'दन्त्याजन्तसादयः' इति फलितोऽर्थः.

दिकुत्सितशब्दकरणात् पृदाकुः सर्पः । तं जयतीति पृदाकुजित् गरुडः । तस्य वेग इव वेगो यस्य इति क्रियाविशेषणं रथविशेषणं वा । गभीरनिर्ह्रादं गभीरो निर्ह्रादो ध्वनिः यस्य तं रथम् । ह्रादादनुस्वादितकृष्णसत्कथः । ह्रादात् सुखेन हेतुना अनुस्वादिताः पुनः पुनश्चर्व्यमाणाः कृष्णस्य सत्कथाः येन सः ॥—निर्ह्रादमिति । २६ ह्राद अव्यक्ते शब्दे । अस्माद् घञ् । ह्रादात् । २७ ह्रादी सुखे च । चादव्यक्तशब्देऽपि । अस्मादपि घञ् । अनुस्वादितेति । २८ स्वाद आस्वादने । कर्मणि क्तः । पृदाकुरिति । २९ पर्द कुत्सिते शब्दे । अस्मात् 'पर्देर्नित्संप्रसारणमल्लोपश्च' इत्याकुप्रत्ययो रेफस्य संप्रसारणं पकारस्थिताकारस्य लोपश्चायत्नतः । ३० यती प्रयत्ने । अस्माद् 'यजयाचयत-'इति नङ्प्रत्ययः । वियोगुतदिति । ३१ युतृ ३२ जुतृ भासने । युतेः यङ्लुगन्ताच्छता । जोतिना । जुतेर्णिनिः ॥

एवं गोकुलं प्रति प्रस्थितोऽक्रूरो निजेप्सितप्रतिबन्धमाशङ्कमानः प्रार्थयते—

स वेथते साखिलवेथितं विधिं प्रश्रन्थितग्रन्थनधीरकत्थनः ।
अतेन्मुरारिर्मम चिन्मयोऽन्तिके च्योतन्दिशः प्रक्ष्युतितैः सितामृतैः ६

स विधिं वेथते स्म । विधिमीश्वरं वेथते स्म प्रार्थितवान् । अखिलवेथितं सर्वजनैः प्रार्थितमिति विधिविशेषणं प्रधानकर्म वा । प्रश्रन्थितग्रन्थनधीः प्रकर्षेण श्रन्थितं शिथिलीभूतं ग्रन्थनं कौटिल्यं यस्यास्तादृशी धीर्यस्य सः । अकत्थनः । न कत्थनमात्मश्लाघाशीलं यस्य सः । अस्य विष्णोः श्लाघाशील इति वा । प्रार्थनीयमेवाह—मुरारिर्ममान्तिके अतेत् सततं गच्छेत् । चिन्मयो ज्ञानस्वरूपः । प्रक्ष्युतितैः स्मितामृतैर्दिशश्च्योतन् । प्रश्च्युतितैर्गलितैः । च्योतन् आसिञ्चन् ॥—वेथत इति । ३३ विथृ ३४ वेथृ याचने । विथेः 'लट् स्मे' इति भूते लट् । वेथितम् वेथेः कर्मणि क्तः । प्रश्रन्थितेति । ३५ श्रथि शैथिल्ये । तच्च विशिष्टता अगाधता वा । अस्मात् कर्तरि क्तः । ग्रन्थनेति । ३६ ग्रथि कौटिल्ये । शाठ्यं वक्रता वा तत् । अस्माल्ल्युट् । अकत्थन इति । ३७ कत्थ श्लाघायाम् । सा च परविषया स्वविषया च स्यात् । अस्माद् 'अनुदात्तेतश्च-' इति युच् । अत्र युजन्तोक्त्या तवर्गान्तानुदात्तेतां समाप्तिः सूचिता । अतेदिति । ३८ अत सातत्यगमने । इतः शुन्धन्ता उदात्ताः उदात्तेतः । अस्माल्लिङ् । उदात्तेत् प्रकरणारम्भकद्योतकमिदम् । चिन्मय इति । ३९ चिती संज्ञाने । तच्च चैतन्यं स्मरणं च । भट्टमिते(?) ज्ञानमात्रं च । अस्मात् संपदादिक्विबन्तान्मयट् । तद्रूप इति केचित् । इति कौमुद्युक्तेः । ताद्रूप्ये मयट् । च्योतन् । ४० च्युतिर् आसेचने । आर्द्रीभवनं तत् । अस्माच्छता । प्रश्च्युतितैरिति । ४१ श्च्युतिर् क्षरणे । सुतिस्तत् । अस्मात् कर्तरि क्तः ॥

कंसं प्रति हितानुक्तिदोषेण प्रार्थनप्रतिबन्धमाशङ्क्य परिहरति—

ममन्थ विश्वं सुजनानकुन्थकान्प्रपुन्थ्य बन्धूनपि लुन्थति स यः ।
स भोजराड्य हरिं मिमन्थिषुः प्रमान्थनं सेधतु को निषेत्स्यति ॥ ७ ॥

१. 'प्रार्थितप्रतिबन्ध' पाठः.

यो विश्वं ममन्थ क्षोभितवान् । अकुन्थकान् सुजनान् प्रपुन्थ्य बन्धूनपि लुन्थति स अकुन्थकान् अहिंसकान् प्रपुन्थ्य हिंसित्वा क्लेशयित्वा वा लुन्थति स हतवान् । स मोऽ-उराट् अद्य हरिं मिमन्थिषुः प्रमान्थनं सेधतु कः निषेत्स्यति । मिमन्थिषुर्हन्तुमिच्छुः । प्रमान्थनं हिंसां सेधतु प्राप्नोतु ॥—ममन्थेति ।४२ मन्थ विलोडने । क्षोभणं तत् । अस्मा-ल्लिट् । अकुन्थकानिति । ४३ कुथि ४४ पुथि ४५ लुथि ४६ मथि ४७ मान्थ हिंसासंक्लेशनयोः । कुन्थेर्ण्वुल् । प्रपुन्थ्येति । पुन्थेर्ल्यप् । लुन्थति । लुन्थेर्भूते लट् । मि-मन्थिषुः । मन्थेः सनि उप्रत्ययः । प्रमान्थनम् । मान्थेर्ल्युट् । सेधतु । ४८ षिध गत्याम् । अतिसर्गे प्राप्तकाले वा लोट् । निषेत्स्यति । ४९ षिधू शास्त्रे माङ्गल्ये च । शास्त्रं शा-सनं शासन शासनमात्र वा । माङ्गल्यं मङ्गलक्रिया । अस्माल्लृट् ॥

पलान्यखाद्यानि खदन्वदद्वपुर्गदन्नवाच्यानि रदन्सतां मनः ।

नदन्मदार्दितसंक्षयोऽधुना क्षणं खलो नर्दतु गर्दभस्वरैः ॥ ८ ॥

खल एषोऽधुना गर्दभस्वरैः क्षणं नर्दतु । गर्दभस्वरैर्गर्दभसदृशैः स्वरैः । क्षणं 'का-लाध्वनोः' इति द्वितीया । नर्दतु शब्दं करोतु । अखाद्यानि पलानि खदन् अभक्ष्याणि मांसानि भक्षयन् । अत एव वदद्वपुः स्थिरीभवद्देहः । अवाच्यानि गदन् सतां मनः र-दन् विलिखन् पीडयन् मदात् नदन् । अत एव आर्दितसंक्षयः आर्दितः प्राप्तः सर्वैः प्रा-र्थितो वा संक्षयो नाशो यस्य सः ॥—अखाद्यानीति ।५० खाद्द भक्षणे । अस्माद् ण्यत् । खदन्निति । ५१ खद स्थैर्ये हिंसायां च । चाद्भक्षणेऽपि । वदन्निति । ५२ बद स्थैर्ये । गदन्निति । ५३ गद व्यक्तायां वाचि । रदन्निति । ५४ रद विलेखने । तच्च विदा-रणं क्षोभण वा । नदन्निति । ५५ णद अव्यक्ते शब्दे । 'णो नः' एभ्यः शता । आर्दितेति । ५६ अर्द गतौ याचने च । अस्मात् कर्मणि क्तः । नर्दत्विति । ५७ नर्द ५८ गर्द शब्दे । नर्दतेरतिसर्गे लोट् । गर्दभ इति । 'कृशृशलिगर्दिभ्योऽभच्' इत्यभच्-प्रत्ययः ॥

अतर्दकास्त्वद्य विकर्दमाशयाः प्रखर्दवृत्तैरसमन्तितान्तिकाः ।

श्रुतान्दुकैश्चित्तगजेन्द्ररोधिनस्तुष्यन्तु सन्तो गुणबिन्दुलोलुपाः ॥ ९ ॥

सन्तोऽद्य तुष्यन्तु । अतर्दका अहिंसकाः । विकर्दमो विगतदोष आशयो येषां ते । प्रखर्दवृत्तैः क्रूरव्यापारैरसमन्तितमसंबद्धमान्तिकं येषां ते । श्रुतान्दुकैः शास्त्ररूपैरन्दुकैः पादकटकैः चित्तरूपं गजेन्द्रं रोद्धुं शीलं येषां ते । गुणस्य बिन्दौ लेशे लोलुपाः सतृष्णाः ॥—अतर्दका इति । ५९ तर्द हिंसायां । ण्वुल् । विकर्दमेति । ६० कर्द कुत्सिते शब्दे । बाहुलकात् औणादिकोऽमच् । प्रखर्देति । ६१ खर्द दन्दशूके । दन्दशूक इति तत्कर्तृकं

दंशनमुक्तम् । अस्मात् पचाद्यच् । असमन्तितेति । ६२ अति ६३ अदि बन्धने । अन्तेः कर्मणि क्तः । अन्दुकेति । 'अन्दूदृम्भूकफेलूकर्कन्धूदिधिषू' इत्यूप्रत्ययान्ता अन्देः स्वार्थे कनि । 'केऽणः' इति ह्रस्वः । इन्द्रेति । ६४ इदि परमैश्वर्ये । अस्माद् 'ऋज्रेन्द्र–'इत्यादिना निपातितो रन् । बिन्दुरिति । ६५ बिदि अवयवे । बाहुलकादुप्रत्ययः ॥

मनोज्ञगण्डं तमनिन्दिताननं नन्दात्मजं शारदचन्द्रशीतलम् ।
पराक्रमत्रन्दनकन्दितासुरं संक्रन्दनक्रन्दितमीक्षितास्महे ॥ १० ॥

वयं तं नन्दात्मजमीक्षितास्महे द्रक्ष्यामः । तद्दिवसे एव भगवद्दर्शनानिश्चयात् लुट्प्रयोगः । मनोज्ञगण्डमित्यादीनि त्रीणि विशेषणानि स्पष्टानि । पराक्रमत्रन्दनकन्दितासुरं पराक्रमरूपेण त्रन्दनेन चेष्टया कन्दिता रोदिता असुरा येन तम् । संक्रन्दनक्रन्दितमिन्द्रेण बहुकृत्वः स्वरक्षणार्थमाहूतम् ॥—गण्डम् । ६६ गडि वदनैकदेशे । अस्मात् पचाद्यच् । वदनैकदेश इति तदारम्भक्रियोक्ता । अनिन्दितेति । ६७ णिदि कुत्सायाम् । कर्मणि क्तः । नन्देति । ६८ टुनदि समृद्धौ । समृद्धिर्हर्षे पर्यवस्यति । पचाद्यच् । चन्द्रेति । ६९ चदि आह्लादे । दीप्तौ च । 'स्फायि-तञ्चि-वञ्चि-शकि-क्षिपि क्षुदि-सृपि-तृपि-दृपि-वन्दि-उन्दि-श्विति-वृति-अजि-नी-पदि-मदि-मुद-खिदि-छिदि भिदि-मन्दि-चन्दि-दहि-दसि-दम्भि-वसि-वाशि-शीङ्-हसि-सिधि-शुभिभ्यो रक्' इति रक् । त्रन्दनेति । ७० त्रदि चेष्टायाम् । ल्युट् । कन्दितेति । ७१ कदि ७२ क्रदि ७३ क्लदि आह्वाने रोदने च । कन्देर्णिजन्तात् क्तः । संक्रन्दनेति । 'रमि-क्रन्दि-क्रुपि-हृदिभ्यः' इति नन्द्यादिपाठाल्ल्युट् । क्रन्दितमिति । क्रन्देः कर्मणि क्तः ॥

अक्लिन्दनीयाञ्शुधितात्मनो जनान्प्रशीकते यः करुणावलोकनैः ।
तमुत्तमश्लोकमवेक्ष्य तत्स्तुतिद्रेकैरुपप्रेकयितास्मि दिक्ततम् ॥ ११ ॥

यः करुणावलोकैः शुधितात्मनो जनान् प्रशीकते । शुधितः शुद्ध आत्मा मनो येषां तान् प्रशीकते नितरां सिञ्चति । अक्लिन्दनीयान् परिदेवयितुमनर्हान् । अहं तमुत्तमश्लोकमवेक्ष्य तत्स्तुतिद्रेकैर्दिक्ततमुपप्रेकयितास्मि । तत्स्तुतिद्रेकैस्तस्य स्तुतिरूपैर्द्रेकैः शब्दैरुपप्रेकयितास्मि शब्दयिष्यामि ॥—अक्लिन्दनीयानिति । ७४ क्लिदि परिदेवने । अस्माण्णिजन्तादनीयर् । शुधितेति । ७५ शुन्ध शुद्धौ । अस्मात् कर्तरि क्तः । 'अनिदिताम्' इति नकारस्य लोपः । अतादय उदात्ता उदात्तेतः । प्रशीकत इति । ७६ शीकृ सेचने । एतदादयः श्लाघ्यन्ता उदात्ता अनुदात्तेतः । अस्माल्लट् । आत्मनेपदारम्भसूचकस्तशब्दः । अवलोकनैरिति । ७७ लोकृ दर्शने । ल्युट् । उत्तमश्लोकमिति । ७८ श्लोकृ सघाते । स च ग्रन्थनम् । तच्च कर्मगतं कर्तृगतं वा । अस्मात् कर्मणि घञ् । द्रेकैरिति । ७९ द्रेकृ ८० ध्रेकृ शब्दोत्साहयोः । शब्दोत्साह इत्येके । उत्साहो वृद्धिरौद्धत्यं वा । द्रेकैर्घञ् । उपप्रेकयितास्मि । ध्रेकेर्लुट् ॥

स एवमादीन्विमृशन्नरेकधीरसेकत स्रेकितमानसो हरौ।
दुःस्रङ्कमाश्रङ्क्य हरेः पदं जनः प्रश्लङ्कते कुत्र रुजं क शङ्कते॥१२॥

स एवमादीन् विमृशन् असेकत गतवान्। अरेकधीररेकाशङ्का धीर्यस्य सः। हरौ स्रेकितमानसो गतमना जनो दुःस्रङ्कं हरेः पदमाश्रङ्क्य कुत्र रुजं प्रश्लङ्कते क शङ्कते। दुःस्रङ्कं दुष्प्रापं आश्रङ्क्य प्राप्य कुत्र रुजं पीडां प्रश्लङ्कते प्राप्नोति। न कापीत्यर्थः। क कार्ये॥—अरेकेति। ८१ रेकृ शङ्कायाम्। घञ्। असेकत। ८२ सेकृ ८३ स्रेकृ ८४ स्रकि ८५ श्रकि ८६ श्लकि गत्यर्थाः। सेकेर्लङ्। स्रेकितेति। स्रेकेः कर्तरि क्तः। दुःस्रङ्कमिति। स्रङ्केः 'ईषद्दुःसुषुकृच्छ्रा' इत्यादिना खल्। आश्रङ्क्येति। श्रङ्केर्ल्यप्। प्रश्लङ्कत इति श्लङ्केर्लट्। शङ्कत इति। ८७ शकि शङ्कायाम्। लट्॥

फलाङ्कितान्वङ्कितवल्लिमङ्कितान्वनप्रदेशानुरुकाककोकिलान्।
वृकावृतान्मुग्धचकोरकूजितानुड्डीनकङ्कानयमत्यवङ्कत॥१३॥

अयं वनप्रदेशान् अत्यवङ्कत अतिक्रान्तवान्। फलाङ्कितान् फलैश्चिह्नितान्। वङ्कितवल्लिमङ्कितान् वङ्किताभिः कुटिलाभिर्वल्लिभिर्लताभिर्मङ्कितान् मण्डितान्। मुग्धं चकोरकूजितं येषु तान्। उड्डीनाः कङ्काः येषु तान्॥—अङ्कितेति। ८८ अकि लक्षणे। कर्मणि क्तः। वङ्कितेति। ८९ वकि कौटिल्ये। कर्तरि क्तः। मङ्कितानिति। ९० मकि मण्डने। कर्मणि क्तः। काक इति। ९१ कक लौल्ये। इच्छायां च द्रुमे। अस्माद् बाहुलकात् कर्तरि घञ्। कोकिलः। ९२ कुक ९३ वृक आदाने। 'सलि-कलि-अनि-महि-भडि-भण्डि-शण्डि-पिण्डि-तुण्डि-कुकि-भूभ्य इलच्'। इति कुकेरिलच्। वृकेति। वृकेरिगुपधत्वात् कः। चकोरेति। ९४ चक तृप्तौ प्रतिघाते च। अस्मात् 'कठिचकिभ्यामोरन्' इत्योरन्। कङ्केति। ९५ ककि ९६ वकि ९७ श्वकि ९८ त्रकि ९९ ढौकृ १०० त्रौकृ १०१ ष्वष्क १०२ वष्क १०३ मस्क १०४ टिकृ १०५ टीकृ १०६ तिकृ १०७ तीकृ १०८ रघि १०९ लघि गत्यर्थाः। कङ्केः पचाद्यच्। अत्यवङ्कतेति। वङ्केर्लङ्॥

प्रश्वङ्कनोत्र्यङ्कितत‍द्रथस्वनाददौकि भीतैरपि नो शिखावलैः।
विष्वक्परित्रौकितलोचनैः स्थितं विष्वष्कमाणाम्बुदनादशङ्कया॥१४॥

शिखावलैः प्रश्वङ्कनोत्र्यङ्कितत‍द्रथस्वनाद्भीतैरपि नो अढौकि। शिखावलैर्मयूरैः। प्रश्वङ्कनेन वेगगमनेन उत्र्यङ्कितादुद्गतात् तद्रथस्वनात्। नो न अढौकि गतम्। विष्वष्कमाणाम्बुदनादशङ्कया विष्वक्परित्रौकितलोचनैः स्थितम्। विष्वष्कमाणस्य वेगेन गच्छतो मेघस्य नाद इति शङ्कया विष्वक् परितः परित्रौकिते संचारिते लोचने यैः तथाभूतैः॥—प्रश्वङ्कनेति। श्वङ्केर्ल्युट्। उत्र्यङ्कितेति। त्रङ्केः कर्तरि क्तः। अढौकीति। भावे चिण्। परित्रौकितेति। त्रौकेः णिचि कर्मणि क्तः। विष्वष्कमाणेति। ष्वष्केः शानच्। 'सुब्धातुष्ठिवुष्वष्कतीनां न' इति धात्वादेः षः साभावः॥

अवस्कि रोहिद्भिरमस्कि विष्किरैरटेकि गोधाभिरटीकि पन्नगैः ।
अरङ्घि कोलैर्लघु तद्रथस्वनात्प्रबुध्य सिंहैः पुनरङ्घितं तदा ॥ १५ ॥

तद्रथस्वनात् रोहिद्भिरवस्कि धावितम् । विष्किरैरमस्कि पक्षिभिरुद्गतम् । गोधाभिरटेकि गतम् । पन्नगैरटीकि अपसृतम् । कोलैर्लघु अरङ्घि शीघ्रं गतम् । सिंहैः पुनः प्रबुध्य तदा अङ्घितम् । अन्येषां गतिराक्षिप्ता निन्दिता वा ॥—अवस्कि, अमस्कि, अटेकि, अटीकि, अरङ्घि । वस्कादीनां पञ्चानां भावे लुङि चिण् । लङ्घिवति । 'रङ्घिलङ्घयोर्नलोपश्च' इत्युप्रत्ययः । अङ्घितम् । ११० अघि १११ वघि ११२ मघि गत्याक्षेपे । गतौ गमनारम्भे चैके । मघि कैतवे च । अङ्घेः साध्यभावे क्तः ॥

प्रवङ्घमानस्य च तस्य सत्वरं विमङ्घनस्याधिकराघितात्मनः ।
निकाममुल्लाघतनोः समत्यगात्प्रद्राघिता श्लाघ्यगुणस्य वर्तनी ॥ १६ ॥

सत्वरं प्रवङ्घमानस्य तस्य प्रद्राघिता वर्तनी समत्यगात् च । प्रवङ्घमानस्य सम्यग्गच्छतः प्रद्राघिता अत्यर्थमायता समत्यगात् अतिक्रान्ता । विमङ्घनस्य विगतं कैतवं यस्य तस्य । अधिकराघितात्मनोऽधिकं राघितः समर्थ आत्मा मनो यस्य तस्य । निकाममुल्लाघतनोः उल्लाघा निर्गतरोगा तनुर्यस्य तस्य ॥—प्रवङ्घमानस्येति । वङ्घेः शानच् । विमङ्घनस्य । मङ्घेर्ल्युट् । राघितेति । ११३ राघृ ११४ लाघृ ११५ द्राघृ सामर्थ्ये । द्राघृ आयामे च । स च दैर्घ्यं क्रियासमर्थनं वा । राघेः कर्तरि क्तः । उल्लाघेति । 'अनुपसर्गात्फुल्लक्षीब–'इति लाघेर्निपातितः । प्रद्राघितेति । द्राघेः कर्तरि क्तः । श्लाघ्येति । ११६ श्लाघृ कत्थने । अस्मात् कर्मणि ण्यत् । शीकादय उदात्ता अनुदात्तेतः ॥

अफक्कतातक्यगुणेन तङ्कता खलश्ववुक्कापरुषे पुरेऽमुना ।
फेनैः कखन्तीमिव तां कलिन्दजां संतीर्य वृन्दावनमैक्ष्यनोखितम् ॥ १७ ॥

अफक्कता अमुना तां कलिन्दजां संतीर्य वृन्दावनमैक्षि । अफक्कता मन्दगमनमसद्व्यापारं वा कुर्वता । अतक्यगुणेन । अतक्याः अपरिहसनीया गुणा यस्य तेन । खलश्ववुक्कापरुषे पुरे तङ्कता । खला एव श्वानस्तेषां वुक्काभिर्भषणैः परुषे पुरे तङ्कता कृच्छ्रेण जीवता । कीदृशीं कलिन्दजामित्यत्राह—फेनैः कखन्तीं हसन्तीमिव । कीदृशं वृन्दावनमित्यत्राह—अनोखितं क्वचिदप्यशुष्कम् ॥—अफक्कतेति । ११७ फक्क नीचैर्गतौ । शिक्षयन्ता उदात्ता उदात्तेतः । नीचैर्गतिर्मन्दगमनमसद्व्यापारो वा । अस्मात् परस्मैपदारम्भद्योतकः शता । अतक्येति । ११८ तक हसने । अस्मात् कर्मणि 'तकिशसिचतियतिजनीनां यद्वाच्यः' इति यत् । तङ्कता । ११९ तकि कृच्छ्रजीवने' । शता वुक्केति । १२० वुक्क भषणे । भषणं श्वरवः । 'गुरोश्च हलः' इत्यप्रत्ययः । १२१ कख हसने । शत्रन्तान्ङीप् । अनोखितम् । १२२ ओखृ १२३ राखृ १२४ लाखृ १२५ द्राखृ १२६ ध्राखृ शोषणालमर्थयोः । ओखेः कर्तरि क्तः ॥

वृन्दावनं विशिनष्टि चतुर्दशभिः—

अराखितत्वग्भिरलाखितच्छदैः प्रद्राखिताध्राखिफलैश्च शाखिभिः ।
प्रश्लाखितं प्रोखितसत्वमुङ्खितं खगैर्वखन्मारुतवङ्खिसौरभम् ॥ १८ ॥

शाखिभिः प्रश्लाखितं व्याप्तम् । कीदृशैरित्यत्राह—अराखितत्वग्भिः । अराखिता अशुष्का त्वग् येषां तैः । अलाखितास्तरुणाश्छदा येषां तैः । प्रद्राखितानि अत्यन्तपर्याप्तानि अध्राखीन्यशोषणशीलानि फलानि येषां तैः । प्रोखितसत्वम् । प्रोखितानि इतस्ततो गच्छन्ति सत्वानि जन्तवो यस्मिंस्तत् । खगैरङ्खितं प्राप्तम् । वखन्मारुतवङ्खिसौरभम् । वखता सचरता वायुना सह गमनशीलं सौरभं सौरभ्यं यस्य तत् ॥—अराखितेति । राखेः कर्तरि क्तः । अलाखितेति । लाखेः क्तः । प्रद्राखितेति । द्राखेः क्तः । अध्राखीति । ध्राखेर्णिनिः । शाखीति । १२७ शाखृ १२८ श्लाखृ व्याप्तौ । शाखेरप्रत्ययान्ताद्व्रीह्यादित्वादिनिः । प्रश्लाखितम् । श्लाखेः क्तः । प्रोखितेति । १२९ उख १३० उखि १३१ वख १३२ वखि १३३ मख १३४ मखि १३५ णख १३६ णखि १३७ रख १३८ रखि १३९ लख १४० लखि १४१ इख १४२ इखि १४३ ईखि १४४ वल्ग १४५ रगि १४६ लगि १४७ अगि १४८ वगि १४९ मगि १५० तगि १५१ त्वगि १५२ श्रगि १५३ श्लगि १५४ इगि १५५ रिगि १५६ लिगि गत्यर्थाः । उखेः कर्तरि क्तः । उङ्खितमिति । उङ्खेः कर्मणि क्तः । वखदिति । वखेः शता । वङ्खीति । वङ्खेर्णिनिः ॥

मखत्कपोतं मदमङ्खिबर्हिणं नखत्पिकं नङ्खितखञ्जनोत्करम् ।
रखच्छशं रङ्खितरङ्कु रिङ्खितद्विपं लखत्केसरिलङ्खदारवम् ॥ १९ ॥

मखन्त उद्गच्छन्तः कपोता यस्मिंस्तत् । मदेन मङ्खन्तो गमनशीला बर्हिणो यस्मिंस्तत् । नखन्तः संचरन्तः पिकाः यस्मिंस्तत् । नङ्खितः संचरन् खञ्जनानामुत्करो यस्मिंस्तत् । रखन्तः शशा यस्मिंस्तत् । रङ्खिता रङ्कवो यस्मिंस्तत् । रिङ्खिताश्चलिता द्विपा यस्मिंस्तत् । लखद्भ्यः इतस्ततो गच्छद्भ्यः केसरिभ्यो लङ्खनुद्गच्छन्नारवो यस्मिंस्तत् ॥—मखेः शता । मङ्खेर्णिनिः । नखेः शता । नङ्खेः क्तः । रखेः शता । रङ्खेः क्तः । लखिलङ्खयोः शता ॥

एखचकोरोत्करमिङ्खितं शुकैः प्रेङ्खल्लतावल्गनरङ्गमण्डपम् ।
विलङ्गदेणं शबराङ्गनाजनप्रवङ्गितं मङ्गलधेनुतङ्गितम् ॥ २० ॥

एखन्त उद्गच्छन्तश्चकोरोत्कराः यस्मिंस्तत् । शुकैरिङ्खितं प्राप्तम् । प्रेङ्खन्त्याश्चलन्त्या लतारूपायाः नर्तक्याः वल्गनस्य नर्तनस्य रङ्गमण्डपम् । विलङ्गन्तो विशेषेण गच्छन्त एणा यस्मिंस्तत् । शबराङ्गनाजनैः प्रवङ्गितं प्राप्तम् । मङ्गलधेनुतङ्गितं मङ्गलरूपाभिर्धेनु-

१. 'चकोरोत्सराः' इति पाठः.

भिरुतङ्खितं व्याप्तम् ॥—एखदिति । इखेः शता । इङ्खितम् । इङ्खेः कर्मणि क्तः । प्रेङ्खदिति । ईङ्खेः शता । वल्गनेति । वल्गेर्ल्युट् । रङ्गेति । रङ्गोः गच्छन्त्यस्मिन् प्रेक्षकाणां मनांसीति । 'हलश्च' इति संज्ञायामधिकरणे घञ् । अङ्गेः प्राप्तोत्स्वयवानित्यङ्गम् । प्राग्वद् घञ् । अस्मात् 'अङ्गात् कल्याणे' इति पामादिपाठान्मन्वर्थीयो नः । प्रवङ्गितमिति । वङ्गेः कर्मणि क्तः । मङ्गलेति । 'मङ्गोरलच्' इत्यलच् । तङ्गोः कर्मणि क्तः ॥

त्वङ्गत्खगश्रङ्गितपक्ष्ममारुतश्लङ्गद्रजोराजिभिरिङ्गिताम्बरम् ।
रिङ्गत्प्रियालिङ्गितभृङ्गसंगमत्वङ्गत्प्रसूनं रवितापयुङ्गितम् ॥ २१ ॥

त्वङ्गतां डयमानानां खगानां श्रङ्गितैश्चलितैः पक्ष्ममारुतैः श्लङ्गन्तीभी रजोराजिभिरिङ्गितं व्याप्तमम्बरं यस्मिंस्तत् । रिङ्गन्त्या चलन्त्या प्रियया लिङ्गितानां मृगाणां संगमेन त्वङ्गन्ति चलन्ति प्रसूनानि यस्मिंस्तत् । रवितापेन युङ्गितं वर्जितम् ॥ त्वङ्गदिति । त्वङ्गेः शता । श्रङ्गेः कर्तरि क्तः । श्लङ्गेः शता । इङ्गेः कर्मणि क्तः । रिङ्गदिति । रिङ्गेः शता । आलिङ्गितेति । आङ्पूर्वत्वादाश्लेषार्थत्वम् । कर्मणि क्तः । त्वङ्गदिति । त्वगि कम्पने । अस्माच्छता । युङ्गितमिति । **१५७ युगि १५८ जुगि १५९ बुगि** वर्जने । युङ्गेः कर्मणि क्तः ॥

विजृङ्ग्य वुङ्ग्यं गुणसंघदङ्घका अलङ्घितानन्दरसात्तघर्घनाः ।
सुमङ्घिताः शिङ्घितपुष्पसौरभा यद्वर्चमानाः पशुपाः प्रसेचिरे ॥ २२ ॥

पशुपाः यत् प्रसेचिरे यत् वृन्दावनं प्रसेचिरे सम्यक् सेवितवन्तः । कीदृशा इत्यत्राह— वुङ्ग्यं विजृङ्ग्य गुणसंघदङ्घकाः । वर्जनीयं वर्जयित्वा गुणसंघस्य दङ्घकाः पालकाः । अलङ्घितस्य अशुष्कस्य परिपूर्णस्य आनन्दस्य रसेनास्वादनेनात्तं स्वीकृतं घर्घनं हासो यैस्ते । सुष्टु मङ्घिताः मण्डिताः । शिङ्घित आघ्रातः पुष्पाणां सौरभो यैस्ते ॥—विजृङ्ग्येति । जृङ्गेर्ल्यप् । वुङ्ग्यमिति । वुङ्गेर्ण्यत् । दङ्घका इति । 'दघि पालने त्यागे च द्रुमे । अस्माण्ण्वुल् । अलङ्घितेति । लघि शोषणे' । कर्तरि क्तः । घर्घनेति । **१६० घर्घ** हसने । ल्युट् । सुमङ्घिताः । **१६१ मघि** मण्डने । कर्तरि क्तः । **१६२ शिघि** आघ्राणे । कर्मणि क्तः । फक्कादय उदात्ता उदात्तेतः । वर्चमाना इति । **१६३ वर्च** दीप्तौ । ईजन्ता उदात्ता अनुदात्तेतः । अस्माच्छानच् । प्रसेचिरे । **१६४ पच** सेचने सेवनेऽपि । लिट् ॥

सुलोचना यत्र शचीसमप्रभाः अशाश्वचुः श्वचितसौरभाः कचे ।
सकञ्चुकाः काञ्चनकाञ्चिभूषिता व्रजाङ्गना निर्मचनेन नर्मणा ॥ २३ ॥

यत्र व्रजाङ्गना निर्मचनेन नर्मणा अशाश्वचुः । निर्मचनेन निर्गतं मचनं शाठ्यं यस्मात् तेन । नर्मणा सह अशाश्वचुः इतस्ततश्चरितवत्यः । कचे केशे श्वचितं व्याप्तं सौरभं यासां ताः । सुलोचना इत्यादि विशेषणचतुष्कं स्पष्टम् ॥—सुलोचना । **१६५ लोचृ** दर्शने । करणे

---

१. स्वार्थणिचमाश्रित्य 'घाघनाः' इति पठनीयम्. २. धातुपाठे तु 'घघ हसने' इत्युपलभ्यते.

ल्युट्। शचीति। १६६ शच व्यक्तायां वाचि। इन्नन्तात् 'कृदिकारादक्तिनः' इति ङीप्। अशाश्वचुः। १६७ श्वच १६८ श्वचि गतौ। यङ्लुगन्तात् श्वचेर्लङि 'सिजभ्यस्त–' इति झेर्जुस्। श्वञ्चितेति। श्वञ्चेः कर्तरि क्तः। कचेति। १६९ कच बन्धने। दीप्तौ च द्रुमे। यूनां मनो बध्नातीति पचाद्यच्। कञ्चुकेति। १७० कचि १७१ काचि दीप्तिबन्धनयोः। कञ्चेः बाहुलकादुक्प्रत्ययः। काञ्चनेति। काञ्चीति। काञ्चेरनुदात्तेत्त्वाद्युच्। औणादिक इन्नपि। मचनेति। १७२ मच १७३ मुचि कल्कने। मचीलेके। मुचेसन्ये। कल्कनं दम्भः। शाठ्यं कत्थनं वा। लोकरञ्जनार्थं साध्वाचारो दम्भः। मचेर्ल्युट्॥

अमुञ्चनैर्मञ्चितचित्तपञ्चितत्रयीमतप्रस्तुचितैः शुभार्जकैः।
समृञ्जितं कन्दमभृक्तसत्फलान्यदद्भिरेकत्र यदेजितं जनैः॥ २४॥

यद् एकत्र शुभार्जकैर्जनैरेजितम्। शुभस्य पुण्यस्य तत्फलभूतस्य ब्रह्मज्ञानस्य वा अर्जकैः। एजितं शोभितम्। अमुञ्चनैः। न मुञ्चनं दम्भः शाठ्यमात्मश्लाघा वा येषां तैः। मञ्चितचित्तपञ्चितत्रयीमतप्रस्तुचितैः मञ्चिते हरौ धारिते पूजिते उच्छ्रते वा चित्ते पञ्चितेन व्यक्तीकृतेन त्रयीमतेन वेदान्तसिद्धान्तेन प्रस्तुचितैः प्रसन्नैः। समृञ्जितं कन्दमभृक्तसत्फलानि चादद्भिः। समृञ्जितमभिपक्वम्। अभृक्तानि अनभिपक्वानि। कालपक्वानीति यावत्॥—अमुञ्चनैरिति। मुञ्चेर्ल्युट्। मञ्चितेति। १७४ मचि धारणोच्छ्रायपूजनेषु। कर्मणि कर्तरि वा क्तः। पञ्चितेति। १७५ पचि व्यक्तीकरणे। कर्मणि क्तः। प्रस्तुचितैः। १७६ ष्टुच प्रसादे। कर्तरि क्तः। [अर्जकैः]। १७७ ऋज गतिस्थानार्जनोर्जनेषु। अर्जनोपार्जनेष्विति वा पाठः। अर्जनं स्वीकारः। ऊर्जनं शक्तिप्राप्तिः प्राणनं वा। आङ्पूर्वाद् ऋजेर्ण्वुल्। समृञ्जितम्। १७८ ऋजि १७९ भृजी भर्जने। भर्जनं पाकः। ऋञ्जेः कर्मणि क्तः। अभृक्तेति। भृजेः प्राग्वत् क्तः। ईदित्त्वादनिट्त्वम्। एजितम्। १८० एजृ १८१ भ्रेजृ १८२ भ्राजृ दीप्तौ। एजेः कर्तरि क्तः॥

अभ्रेजि विभ्राग्भिरनीजितैश्च यत्कदाप्यशोचद्भिरशेषजन्तुभिः।
चुकोच यत्रोत्कुचिताङ्गमुन्मुदः क्रौञ्चोऽपि लुञ्चन्हृदि सम्यगार्तताम् २९

यदशेषजन्तुभिरभ्रेजि च। अभ्रेजि शोभितम्। विभ्राग्भिः विशेषेण शोभमानैः। अनीजितैरकुत्सितैः। कदाप्यशोचद्भिः सदा संतुष्टैः। यत्र क्रौञ्चोऽपि हृद्यार्ततां सम्यग्लुञ्चन्मुदः उत्कुचिताङ्गं चुकोच। क्रौञ्चः पक्षी लुञ्चन्नपनयन्नुत्कुचितान्युच्चैः कुचितानि कुटिलीभूतान्यङ्गानि यस्मिन् तथेति उत्कोचनक्रियाविशेषणम्। चुकोच उच्चैः कूजितवान्॥—अभ्रेजि। भ्रेजेर्णिजन्तात् कर्मणि चिण्। विभ्राग्भिः। भ्राजेः क्विपि 'चोः कुः' इति कुत्वम्। भ्रश्चादिषत्वं तु राजेरनन्तरपठितस्यैव। अनीजितैः। १८३ ईज गतिकुत्सनयोः। कर्मणि क्तः। वर्चादयः पचिवर्ज्यमुदात्ता अनुदात्तेतः। अशोचद्भिः। १८४ शुच शोके। वजान्ता उदात्ता उदात्तेतः। अस्माच्छता। चुकोच। १८५ कुच शब्दे तारे। गताविन्येके। अस्माल्लिट्। उत्कुचितेति। १८६ कुञ्च १८७ क्रुञ्च गतिकौटिल्याल्पीभावयोः। गतेः

कौटिल्ये द्रव्यस्याल्पीभावे चेत्यर्थः । 'गतिकौटिल्ययोः' इति द्रुमे । कुञ्चेः कर्तरि क्तः । क्रौञ्च इति । क्रुञ्चेः 'ऋत्विग्दधृग्–' इत्यादिना किनि क्रुङ् । अस्मात् पुनः प्रज्ञादित्वादण् । लुञ्चन् । १८८ लुञ्च अपनयने । शता । सम्यगिति । १८९ अञ्चु गतिपूजनयोः । 'ऋत्विग्' इत्यादिना किन् । 'क्विन्प्रत्ययस्य कु.' इति कुत्वम् ॥

आवक्रचञ्चूपुटतञ्चदारवत्वञ्चत्खगम्रुक्तशिखैर्लताद्रुमैः ।

अम्लुक्तरश्मौ शशिना निमुम्रुचे निमुम्लुचेऽर्केण च यत्र संततम् २६

यत्र शशिना निमुम्रुचे । अर्के(र्के)ण च निमुम्लुचे । उभयोरस्तमितमित्यर्थः । कीदृशे वने । लताद्रुमैरम्लुक्तरश्मौ अप्रविष्टरश्मौ । कीदृशैर्लताद्रुमैः । आवक्रचञ्चूपुटतञ्चदारवत्वञ्चत्खगम्रुक्तशिखैः । ईषद्वक्रचञ्चूमध्यात् तञ्चता उद्गच्छता आरवेण शब्देन सह त्वञ्चद्भिर्गच्छद्भिः खगैर्म्रुक्ताः प्राप्ताः शिखाः अग्राणि येषां तैः ॥—आवक्रेति । १९० वञ्चु १९१ चञ्चु १९२ तञ्चु १९३ त्वञ्चु १९४ म्रुञ्चु १९५ म्लुञ्चु १९६ म्रुचु १९७ म्लुचु गत्यर्थाः । वञ्चेः 'स्फायितञ्चि–' इत्यादिना रकिनेलोपश्च । चञ्चूः इति । चञ्चेः 'पटिचटिचञ्चिभ्यश्च' इति भोजोक्त्या उप्रत्ययः । 'अप्राणिजातेश्च' इत्यूङ् । तञ्चत्–त्वञ्चदिति । तञ्चेः त्वञ्चेश्च शता । म्रुक्तेति । म्रुञ्चेः कर्मणि क्तः । अम्लुक्तेति । म्लुञ्चेः कर्तरि क्तः । निमुम्रुचे निमुम्लुचे । म्रुचिम्लुच्योर्भावे लिट् । निपूर्वत्वाद्द्वयोरस्तमयार्थत्वम् ॥

समम्रुचत्क्षीरमथाग्लुचद्घृतं चुकोज वासांसि चुखोज मानसम् ।

समग्लुचत्केलिषु सज्जमानधीः स यत्र गुञ्जन्मणिनूपुरो हरिः ॥ २७ ॥

हरिर्यत्र क्षीरं समम्रुचदचोरयत् । अथ घृतं अग्लुचज्जहार । वासांसि चुकोज हृतवान् । मानसं चुखोज । व्र(व्र)जवासिनां हृदयं लीलाभिरपहृतवानित्यर्थः । यत्र केलिषु सज्जमानधीर्गुञ्जन्मणिनूपुरः स समग्लुचत् । सज्जमाना संलग्नन्ती धीर्यस्य सः । गुञ्जन्तौ क्वणन्तौ मणिनूपुरौ यस्य सः । समग्लुचत् सञ्चचार ॥—समम्रुचत् । १९८ ग्रुचु १९९ ग्लुचु २०० कुजु २०१ खुजु स्तेयकरणे । म्रुचेः 'जृस्तम्भु–' इत्यादिना लुङ्यङ् । अग्लुचत् । ग्लुचेः प्राग्वदङ् । चुकोज-चुखोज । कुजेः खुजेश्च लिट् । समग्लुचत् । २०२ ग्लुञ्चु २०३ षस्ज गतौ । 'षचे' इत्यप्येके । षस्जेर्लक्षणया संनादार्थता । ग्लुञ्चेरङि नलोपः । सज्जमानेति । 'यदभिप्रायेषु सज्जते' इति भाष्यप्रयोगादात्मनेपदम् । तेन शानच् । गुञ्जदिति । २०४ गुजि अव्यक्ते शब्दे । शता ॥

सुरार्चिते म्लेच्छजनैर्दुरासदे श्रीलाञ्छिताङ्के सितपुष्पलाञ्छिते ।

यत्र स्थिते वाञ्छितदे हरिद्रुमे तदाञ्छितह्रीच्छनमास्त नन्दनम्॥२८॥

---

१. 'चोकुः' इत्येतद्रूपास्यासिद्धत्वेन 'चोः कुः' इत्यस्योपन्यासो युक्तः. २. 'नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्च षाट्टवर्गस्तवर्गजः ॥' इत्यभियुक्तोक्त्या धातूनां नकारोपधत्वात्.

यत्र हरिद्रुमे स्थिते तत् नन्दनमाञ्छितह्रीच्छनमास्त । हरिद्रुमे हरिरूपे हरिचन्दने च नन्दनं नन्दनोद्यानमाञ्छितह्रीच्छनं आञ्छितमायतं ह्रीच्छनं लज्जा यस्य तत्। हरिद्रुमं विशिनष्टि—सुरार्चिते सुरैर्देवैः पूजिते। म्लेच्छजनैर्दुरासदे प्राकृतजनैर्दुष्प्रापे। श्रीलञ्छिताङ्गे श्रिया लक्ष्म्या शोभया च लञ्छितमङ्कितमङ्गं यस्य तस्मिन्। स्मितपुष्पलाञ्छिते स्मितैरेव पुष्पैः स्मितैर्विकसितैः पुष्पैश्च लाञ्छिते। वाञ्छितदे ईप्सितदे॥—अर्चितेति। २०५ अर्च पूजायाम्। 'अर्च' इत्येके। अर्चेः कर्मणि क्तः। म्लेच्छेति। २०६ म्लेछ अव्यक्ते शब्दे। स चास्पष्टशब्दः। अपशब्दो वा। म्लेच्छेः पचाद्यच्। लञ्छितेति। २०७ लछ २०८ लाछि लक्षणे। लञ्छेः कर्मणि क्तः। 'छे च' इति तुक्। पूर्वत्र 'दीर्घात्' इति तुक्। लाञ्छितेति। लाञ्छेः कर्मणि क्तः। वाञ्छितेति। २०९ वाछि इच्छायाम्। कर्मणि क्तः। आञ्छितेति। २१० आछि आयामे। कर्तरि क्तः। ह्रीच्छनम्। २११ ह्रीछ लज्जायाम्। ल्युट्। प्राग्वत्तुक्॥

अहूर्णचित्ताः परिमूर्च्छितव्रताः स्फूर्णामया अप्रयुशः कृतोञ्छनाः।
भजन्ति यां व्युष्टिमतोऽपि भूयसीं ध्रजन्ति यद्भ्रञ्जनमात्रतो जनाः॥२९॥

ईदृशा यां व्युष्टिं भजन्ति जनाः। यद्भ्रञ्जनमात्रतोऽपि भूयसीं ध्रजन्ति। व्युष्टिं फलम्। यद्भ्रञ्जनमात्रतो यस्य वृन्दावनस्य भ्रञ्जनमात्रतः प्राप्तिमात्रेण। ध्रजन्ति प्राप्नुवन्ति। कीदृशा इत्यत्राह—अहूर्णचित्ताः अहूर्णमकुटिलं चित्तं येषां ते। परिमूर्छितव्रताः परिमूर्छितं परिपूर्णं व्रतं येषां ते। स्फूर्णामयाः स्फूर्णो विस्मृता आमया यैस्ते। अप्रयुशोऽप्रमत्ताः। कृतोञ्छनाः वृत्त्यर्थं कृतमुञ्छनं धान्यानां पृथक्पृथगादानं यैस्ते॥—अहूर्णेति। २१२ हुर्छा कौटिल्ये। इह कौटिल्यमपसरणमित्येके। कर्तरि क्तः। आदित्वादनिट्त्वम्। परिमूर्छितव्रताः। २१३ मूर्छा मोहसमुच्छ्राययोः। 'गुरोश्च हलः' इत्यप्रत्यये मूर्छा। तस्मात् 'तदस्य संजातम्' इति तारकादित्वादितचि मूर्छितम्। स्फूर्णेति। २१४ स्फुर्छा विस्मृतौ। कर्मणि क्तः। अप्रयुशः। २१५ युछ प्रमादे। अस्मात् क्विपि 'च्छ्वोः शूड्—' इति छस्य शः। उञ्छनेति। २१६ उछि उञ्छे। उञ्छो धान्यानां पृथक्पृथगादानम्। अस्माल्ल्युट्। व्युष्टिमिति। २१७ उछी विवासे। स च समाप्तिः। प्रायेण विवन्धनवर्जनातिक्रमेषु च द्रुमे। अस्मात् क्तिन्। ध्रजन्ति। २१८ ध्रज २१९ ध्रजि २२० धृज २२१ धृजि २२२ ध्वज २२३ ध्वजि गतौ। 'व्रजि' इत्येके। ध्रजेर्लट्। भ्रञ्जेर्ल्युट्॥

अथ वनवर्णनमुपसंहृत्याक्रूरस्य प्रवृत्तिमाह—

प्रध्रज्य मोदं स दधृञ्ज तद्वनं ध्वजोद्गतिध्वञ्जितकूजदण्डजम्।
स्वर्गोपमं सार्जितपुण्यसंचयो गभीरगर्जद्रथतर्जिताम्बुदः॥३०॥

स मोदं प्रध्रज्य तद्वनं दधृञ्ज। प्रध्रज्य प्राप्य दधृञ्ज प्राप। ध्वजोद्गतिध्वञ्जितकूजदण्डजं ध्वजस्योद्गत्योर्ध्वगमनेन ध्वञ्जिता गताः कूजन्तो अण्डजाः यस्मात्तत्। सार्जितपु-

ण्यसंचयोऽर्जितपुरुतार्धः । गभीरगर्जद्रथतर्जिताम्बुदः गभीरं यथा तथा गर्जता शब्दायमानेन रथेन तर्जितो भर्त्सितोऽम्बुदो येन सः ॥—प्रध्रज्येति । ध्रजेर्ल्यप् । दध्रुंज ध्रुर्जोलिट् । ध्वजेति । ध्वजेः पचाद्यच् । ध्वज्रितेति । ध्वञ्जेः कर्तरि क्तः । कूजदिति । २२४ कूज अव्यक्ते शब्दे । शता । स्वर्गेति । २२५ अर्ज २२६ पर्ज अर्जने । सुष्ठु अर्जते । अर्जेर्घञि वार्तिकमते न्यङ्क्वादित्वात् कुत्वम् । सर्जितेति । पर्जेः कर्मणि क्तः । [गर्जदिति]। २२७ गर्ज शब्दे । मेघशब्दे द्रुमे । अस्माच्छता । तर्जितेति । २२८ तर्ज भर्त्सने । कर्मणि क्तः ॥

अकर्जितोऽसौ हरिखर्जनोत्कधीरजत्पशुव्रातमजेन तेजितम् ।
लसत्खजाकं व्रजमासदत्क्रमादखञ्जितैरेजितचामरैर्हयैः ॥ ३१ ॥

असौ हयैः क्रमात् व्रजमासददपगतोऽभूत् । अकर्जितोऽमीतो दुःखरहितो निश्चलबुद्धिश्च । हरिखर्जनोत्कधीः । हरेः खर्जने पूजायामुत्का धीर्यस्य सः । अजत्पशुव्रातमजन्तो गच्छन्तः पशुव्राता यस्मिंस्तत् । अजेन तेजितं पालितम् । लसत्खजाकं लसन्तः खजाका मन्थनदण्डा यस्मिंस्तत् । अखञ्जितैरपङ्गुभिः । एजितचामरैरेजिताः कम्पिताश्चामरा येषु तैः ॥—अकर्जित इति । २२९ कर्ज व्यथने । तच्च भयदुःखं चलनं च । अस्मात् कर्तरि क्तः । खर्जनेति । २३० खर्ज पूजने । मार्जने च द्रुमे । ल्युट् । [अजदिति] । २३१ अज गतिक्षेपणयोः । शता । तेजितम् । २३२ तेज पालने । कर्मणि क्तः । खजाकेति । २३३ खज मन्थे । 'खजेराकः' इत्याकप्रत्ययः । अखञ्जितैः । २३४ खजि गतिवैकल्ये । कर्तरि क्तः । एजितेति । २३५ एजृ कम्पने । कर्तरि क्तः ॥

विस्फूर्जदक्षीणघनाघनोपमक्षीजा लजन्तस्त्रिदशानलाञ्जितान् ।
लाजादिहोतृष्वपि लज्जनप्रदा यस्मिन्विनेशुर्जजनेषु दानवाः ॥ ३२ ॥

दानवा यस्मिन् जजनेषु विनेशुः । यस्मिन् व्रजे । जजनेषु युद्धेषु । कीदृशा इत्यत्राह—विस्फूर्जदक्षीणघनाघनोपमक्षीजाः । विस्फूर्जद्भिः स्तनयद्भिः, अक्षीणैः पूर्णैर्घनाघनैर्मेघैरुपमा यस्य तादृशः क्षीजोऽव्यक्तशब्दो येषां ते । अलाञ्जितान् कैरप्यभर्त्सितांस्त्रिदशाल्लजन्तो भर्त्सयन्तः । लाजादिहोतृष्वपि लज्जनप्रदा भर्त्सनप्रदाः ॥—विस्फूर्जदिति । २३६ टु ओ स्फूर्जा वज्रनिर्घोषे । शता । अक्षीणेति । २३७ क्षि क्षये । कर्तरि क्तः । 'निष्ठायामण्यदर्थे' इति दीर्घे 'क्षियो दीर्घात्' इति निष्ठानत्वम् । क्षीजेति । २३८ क्षीज अव्यक्ते शब्दे । घञ् । लजन्त इति । २३९ लज २४० लजि भर्त्सने । २४१लाज २४२ लाजि भर्त्सने । भर्जने चेति लीलाशुकः । लजेः शता । अलाञ्जितान् । लाजेः कर्मणि क्तः । लाजेति । लाजेः कर्मणि घञ् । लज्जनेति । लजेर्ल्युट् । जजनेषु । २४३ जज २४४ जजि युद्धे । जजेर्ल्युट् ॥

---

१. 'वज्रनिष्पेषे' इति पाठः.

जहर्ष जज्ञातुजितस्थलैरसौ वृषैरतुङ्गैर्गजगञ्जिभिर्वृतम्।
गर्जत्खरं गृञ्जितधेनुमोमुजद्वत्सोत्करं मुञ्जदजं वजन्व्रजम् ॥ ३३ ॥

असौ व्रजं वजञ्जहर्ष । वजन् प्राप्नुवन् । कीदृशं व्रजम् । वृषैर्वृतं व्याप्तम् । कीदृशैर्वृषैः। जज्ञातुजितस्थलैः जज्ञया परस्परयुद्धेन तुजितानि पीडितानि स्थलानि यैस्तैः। अतुङ्गैर्नराणामहिंसकैः । गजगञ्जिभिर्गज इव शब्दायमानैः । कीदृशं व्रजम्। गर्जत्खरं गर्जन्तः शब्दायमानाः खरा यस्मिंस्तम्। गृञ्जितधेनुमोमुजद्वत्सोत्करं गृञ्जिताः हुंकारवं कुर्वाणा धेनवो नवप्रसूता गावो यस्मिंस्तच्च। मोमुजतः पुनः पुनः शब्दायमाना वत्सोत्करा यस्मिंस्तच्च। मुञ्जदजं मुञ्जन्तो नदन्तोऽजाश्छागा यस्मिंस्तं च ॥—जज्ञेति। जजेः 'गुरोश्च—' इत्यकारः। तुजितेति। २४५ तुज हिंसायाम्। कर्मणि क्तः। अतुङ्गैः। २४६ तुजि पालने च। प्राणने च द्रुमे। अच्। गजेति। २४७ गज २४८ गजि २४९ गृज २५० गृजि २५१ मुज २५२ मुजि शब्दार्थाः। गज मदने च। मज मजि इत्यप्येके। शब्दायते माद्यति वेत्यर्थं गजेरच् । गर्ज्ञाति। गञ्जेः 'कर्तर्युपमाने' इति णिनिः। गर्जदिति। गृजेः शता। गृञ्जितेति। गृञ्जेः कर्तरि क्तः। मोमुजदिति। मुजेर्यङ्लुकि शता। मुञ्जदिति मुञ्जेः शता। वजन्। २५३ वज २५४ व्रज गतौ। वजेः शता। व्रजेः 'गोचरसंचर—' इत्यादिना घः ॥

मार्गात्स दृष्ट्वा हरिपादलाञ्छनं व्यवेष्टतोर्व्यां महनीयचेष्टितः।
तत्केलिसंगोष्टितलोष्टमानमद्वने मरुद्धट्टितपोस्फुटद्द्रुमे ॥ ३४ ॥

मार्गात् स हरिपादलाञ्छनं दृष्ट्वोर्व्यां महनीयचेष्टितो व्यवेष्टत । मार्गात् मार्गमतिक्रान्तवान्। व्यवेष्टत विलुठितवान्। महनीयचेष्टितो महनीयं चेष्टितं व्यापारो यस्य सः। वने तत्केलिसंगोष्टितलोष्टमानमत्। तस्य भगवतः केल्या संगोष्टितं संघातीकृतं लोष्टमिटकाखण्डम्। कीदृशे वने। मरुद्धट्टितपोस्फुटद्द्रुमे। मरुद्धट्टिता वायुभिः कम्पिताः। अत एव पोस्फुटतः अत्यर्थं दलन्तो द्रुमा यस्मिंस्तस्मिन्॥—मार्गादिति। २५५ अट्ट अतिक्रमहिंसयोः। दान्ता उदात्ता अनुदात्तेतः। दोपधस्तोपधो वायम्। टोपधोऽपि द्रुमे। अस्मात् क्विपि संयोगान्तलोपः। व्यवेष्टत। २५६ वेष्ट विलुठने। अकर्मकः। ठङ्। चेष्टितेति। २५७ चेष्ट चेष्टायाम्। अस्मात् सिद्धभावे क्तः। गोष्टितेति। २५८ गोष्ट २५९ लोष्ट सघाते। गोष्टेर्णिजन्तात् कर्मणि क्तः। लोष्टमेति। पचाद्यच्। घट्टितेति। २६० घट्ट चलने। कर्तरि क्तः। पोस्फुटदिति। २६१ स्फुट विकसने। यङ्लुगन्तात् शता ॥

अनन्कुमार्गेषु शुभाध्वनैव वन्मनन्भृशोत्कण्ठितगोपिके हरौ।
स पापमुन्भिर्वहेड्भिरुन्मर्दरनेठितां क्ष्मां पुनरप्यहिण्डत ॥ ३५ ॥

स उन्मर्दरनेठितां क्ष्मां पुनरप्यहिण्डत । उन्मर्दैरुद्धतमर्दैरनेठितामर्पीडितामहिण्डता-

गच्छत् । कीदृशः । कुमार्गेषु अनन्नगच्छन् । शुभाध्वना एव वनसहाय एव गच्छन् । भृशोत्कण्ठितगोपिके हरौ भ्रमन् भृशमुत्कण्ठिता गोपिका यस्मिंस्तस्मिन् । सोत्कण्ठस्मृतिमान् । कीदृशैरुन्मदैः । पापमुन्भिः पापस्य पालकैः । बुधहेड्भिः बुधानां बाधकैः ॥—अनन्निति । २६२ अठि गतौ । अस्मात् क्विपि संयोगान्तलोपे अन् । तस्मान्नञसमासे नुट् । वृन्निति । २६३ वठि एकचर्यायाम् । सा चासहायगमनम् । प्राग्वत् । क्विप् । भ्रमन्निति । २६४ मठि २६५ कठि शोके । अत्र शोकः सोत्कण्ठस्मरणम् । उत्कण्ठामात्रे त्वकर्मकः । मण्ठेः प्राग्वत् क्विप् । संयोगान्तलोपश्च । उत्कण्ठितेति । कण्ठेः कर्तरि क्तः । पापमुन्भिः । २६६ मुठि पालने । क्विप् । बुधहेड्भिः । २६७ हेठ विबाधायाम् । २६८ एठ च । हेठेः क्विप् । अनेठिताम् । एठेः कर्मणि क्तः । अहिण्डत । २६९ हिडि गत्यनादरयोः । लङ् ॥

प्रहुण्डितानैक्षत चारुकुण्डलान्प्रवण्डितार्थानविमण्डिताशयान् ।
स भण्डिलो भोजनृपालपिण्डभुक्प्रमुण्डितांस्तत्र जनानतुण्डकान्॥३६॥

भण्डिलः स तत्र प्रहुण्डिताञ्जनानैक्षत । भण्डिलो दूतः । प्रहुण्डितान् संघातीभूतान् । चारुकुण्डलान् चारूणि कुण्डलानि येषां तान् । प्रवण्डितार्थान् प्रवण्डिताः सम्यक् विभक्ता अर्थाः पुरुषार्था धनानि वा येषां तान् । अविमण्डिताशयान् । अविमण्डितोऽविभक्त आशयो येषां तान् । एकमनस्कानित्यर्थः । प्रमुण्डितान् अत्यन्तशुद्धान् । अतुण्डकान् अहिंसकान् । पिण्डमन्नम् ॥—प्रहुण्डितानि[ति] । २७० हुडि संघाते । कर्तरि क्तः । कुण्डलेति । २७१ कुडि दाहे । 'मृदिमण्डिकुण्डिकन्दिभ्योऽलच्' इत्यलच् । प्रवण्डितेति । २७२ वडि विभाजने । २७३ मडि च । द्वौ वेष्टनेऽपीत्येके । वण्डेः कर्मणि क्तः । अविमण्डितेति । मण्डेः कर्मणि क्तः । भण्डिल इति । २७४ भडि परिभाषणे । तच्च परितो भाषणम् । सनिन्दवचनं वा । परिहास इत्येके । अस्मात् 'सलिकल्यनिभटिमण्डितण्डिभ्य इलच्' इतीलच् । पिण्डेति । २७५ पिडि संघाते । पचाद्यच् । प्रमुण्डितान् । २७६ मुडि मार्जने । शुद्धिन्यग्भावौ तत् । कर्तरि क्तः । अतुण्डकान् । २७७ तुडि तोडने । दारणं हिंसनं वा तत् । अस्माण्ण्वुल् ॥

अमुण्डितोच्चण्डगतीनशण्डनान्कुमार्गवैतण्डिकपण्डितावृतान् ।
स तानकण्डान्दधिखण्डनादिकस्वधर्मसक्तान्गतहेडमानमत् ॥ ३७ ॥

स तान् गतहेडमानमत् । गतहेडं गतावज्ञं यथा तथा नमस्कृतवान् । कीदृशान् । अमुण्डितोच्चण्डगतीन् अस्वीकृतक्रूरव्यापारान् । अशण्डनान् न शण्डनं परिपीडा येषां तान् । कुमार्गवैतण्डिकपण्डितावृतान् असन्मार्गस्य वैतण्डिकाः खण्डनैकपरा ये पण्डितास्तैरावृतान् मिश्रान् । अकण्डान् मदरहितान् । दधिखण्डनादिकस्वधर्मसक्तान् दधिखण्डनादिके दधिमथनादिके स्वधर्मे सक्तान् ॥—अमुण्डितेति । २७८ मुडि वरणे । स्वीकारस्तत् । हरण इत्येके । कर्मणि क्तः । उच्चण्डेति । २७९ चडि कोपे । पचाद्यच् ।

क्रूरत्वार्थौ लक्षणया। शण्डनेति। २८० शडि रुजायां संघाते च। ल्युट्। वैतण्डिकेति। २८१ तडि ताडने। अस्माद् 'गुरोश्च' इत्यकारे वितण्डा परपक्षस्य ताडनं निरसनं तया दीव्यति व्यवहरतीति वैतण्डिकः॥—पण्डितेति। २८२ पडि गतौ। प्राग्वदकारे पण्डा ज्ञानं गत्यर्थानां ज्ञानार्थत्वात्। अस्मात् तारकादित्वादितचि पण्डितः। अकण्डान्। २८३ कडि मदे। घञ्। खण्डनेति। २८४ खडि मन्थे। ल्युट्। हेडेति। २८५ हेडृ २८६ होडृ अनादरे। हेडेर्घञ्॥

अहोडनीयान्पशुपालयानसौ अपश्यदानन्दपयोधिवाडितः।
सुपाकविद्रालिफलालिभिर्द्रुमैः स्निग्धानविध्राडितचारुशालिकान्॥३८॥

असौ पशुपालयानपश्यत्। कीदृश इत्यत्राह—आनन्दपयोधिवाडितो मोदपयोधावाप्लुतः। कीदृशान् इत्यत्राह—अहोडनीयान् अनादर्तुमयोग्यान्। सुपाकविद्रालिफलालिभिर्द्रुमैः स्निग्धान्। सुपाकेनातिपक्वतया विशरणशीलाः फलानां आलयो येषां तैर्द्रुमैः स्निग्धान् निविडान्। अविध्राडितचारुशालिकान् अविध्राडिता अविशीर्णमञ्जरीयुक्ता अत एव चारवः शालयो येषु तान्। 'शेषाद्विभाषा' इति कप्॥—अहोडनीयानिति। होडेरनीयर्। वाडितेति। २८७ वाडृ आप्लाव्ये। आप्लवनं तत्। कर्तरि क्तः। विद्रालि। २८८ द्राडृ २८९ ध्राडृ विशरणे। द्राडेर्णिनिः। 'डलयोरुक्तिभेदस्तु डकारो नाक्षरान्तरम्' इत्युक्त्या डस्य लः। अविध्राडितेति। ध्राडेः कर्तरि क्तः। शालीति। २९० शाडृ श्लाघायाम्। डलयोरभेदाल्लकारः। अस्मादौणादिक इन्। अट्टादय उदात्ता अनुदात्तेतः॥

पशुपालयानेव वर्णयति पञ्चदशभिः(सप्तभिः)—

प्रशौटदुस्रागणयौटितान्तिकान्मेटद्वृषाम्रेडितघोषमेदुरान्।
अम्लेटकैश्चाकटुचाटुभाषितैरटैः पटत्संरटिताञ्जनोत्करैः॥३९॥

प्रशौटद्भिर्गर्वायमाणैरुस्रागणैर्गोगणैः। यौटितं संबद्धमन्तिकं येषां तान्। मेटतां मायतां वृषाणामाम्रेडितेन पुनः पुनः कृतेन घोषेण नर्दनेन मेदुरान् पूर्णान्। जनोत्करैः पटत्संरटितान् पटत् व्याप्नुवत् संरटितं शब्दो येषां तान्। कीदृशैः। अम्लेटकैरमाद्यद्भिः। अकटु अतीक्ष्णं चाटु प्रियं भाषितं येषां तैः। अटैः संचरद्भिः॥—प्रशौटदिति। २९१ शौटृ गर्वे। गण्यन्ता उदात्ता उदात्तेतः। अस्माच्छता। यौटितेति। २९२ यौटृ बन्धे। कर्मणि क्तः। मेटदिति। २९३ मेटृ २९४ म्रेडृ २९५ म्लेटृ उन्मादे। मेटेः शता। म्रेडेः कर्मणि क्तः। आङ्पूर्वत्वादुक्तयर्थः। अम्लेटकैः। म्लेटेर्ण्वुल्। अकटु इति। २९६ कटे वर्षावरणयोः। चटे इत्येके। कटेः 'कटिबन्धिभ्यश्च' इत्युप्रत्ययः। चाटूति। 'दसनिजनिचरिचटिरहिभ्यो ञुण्'। अटैः। २९७ अट २९८ पट गतौ। अटेः पचाद्यच्। पटेः शता। संरटितेति। २९९ रट परिभाषणे। 'नपुंसके भावे क्तः'॥

लाटार्हशाटीवटितैर्वटुव्रजैर्वृतान्खलैश्चाकिटितान्प्रखेटकैः ।
अशेटनीयैः सुधियामसेटकैर्युताञ्जटाझाटधरैश्च केश्चन ॥ ४० ॥

वटुव्रजैर्वृतान् व्याप्तान् । कीदृशैः । लाटार्हशाटीवटितैः । लाटार्हाभिर्बाल्ययोग्याभिः शाटीभिर्वस्त्रैर्वटितैर्वेष्टितैः । प्रखेटकैः खलैरकिटितांश्च । प्रखेटकैस्त्रासकैः । अकिटितान् अत्रासितान् । कैश्चन जटाझाटधरैश्च युतान् । जटाझाटो जटासंघः । कीदृशैः । सुधियामशेटनीयैरत्यन्तमादर्तव्यैः । स्वयं चान्येषामसेटकैरादरद्भिः ॥—लाटेति । ३०० लट बाल्ये । घञ् । शाटीति । ३०१ शट रुजाविशरणगत्यवसादनेषु । घञन्तात् 'जातेरस्त्रीविषयाद्–' इति ङीप् । वटितैः । ३०२ वट वेष्टने । कर्मणि क्तः । वटुरिति । 'वटिचटिचाञ्चिभ्यश्च' इति भोजोक्त्या तस्मादेव उन् । अकिटितान् प्रखेटकैरिति । ३०३ किट ३०४ खिट त्रासे । त्रासनायामित्यर्थः । भीमार्थे च द्रुमे । कर्मणि क्तः । ण्वुल् च । अशेटनीयैः । ३०५ शिट ३०६ षिट अनादरे । शिटेरनीयर् । असेटकैः । षिटेर्ण्वुल् । जटाझाटेति । ३०७ जट ३०८ झट संघाते । जटेरच् । झटेर्घञ् ॥

क्वचिद्भटाधिष्ठितवेदिकातटान्क्वचिच्च खट्वाविहरन्नटीजनान् ।
क्वचिच्च पेटीशतपूर्णहाटकान्क्वचित्सटालोटनलोलघोटकान् ॥ ४१ ॥

भटैरधिष्ठित आस्थितो वेदिकानां तट उन्नतप्रदेशो येषु तान् । खट्वायां विहरन्तः क्रीडन्तो नटीजना येषु तान् । पेटीशतेषु पूर्णानि हाटकानि हेमानि येषु तान् । सटानां गलरोम्णां लोटनेन क्षोभणेन लोलाश्चलन्तो घोटका अश्वा येषु तान् ॥—भटेति । ३०९ भट भृतौ । भृतिर्वेतनप्राप्तिः । अस्मात्पचाद्यच् । तटेति । ३१० तट उच्छ्राये । अच् । खट्वेति । ३११ खट काङ्क्षायाम् । 'अशिप्रुषिलटिकणिखटिविशिभ्यः क्वन्' इति क्वन् । नटीति । ३१२ णट नृत्तौ । हिंसायां च द्रुमे । नृत्तिर्नर्तनम् । तच्चात्र नटव्यापारः । अस्मादचि जातिङीप् । पेटीति । ३१३ पिट शब्दसंघातयोः । घञन्ताद् गौरादिङीष् । हाटकानिति । ३१४ हट दीप्तौ । संज्ञायां ण्वुल् । बाहुलकाद् वृत्वाभावः । सटेति । ३१५ षट अवयवे । अजन्ताट्टाप् । लोटनेति । ३१६ लुट विलोटने । 'लुल' इत्यन्ये । लुटेर्ल्युट् । लोलेति । लुलेरच् ॥

चेटैर्विटैश्चानुगतानचेटकैरेटत्पशूत्केटिरजःकटन्मलान् ।
प्रकण्टिताशोदयदंशुमण्डितैरकुण्डरत्नैर्मुडिताऽर्कदीधितीन् ॥ ४२ ॥

चेटैर्विटैश्चानुगतान् व्याप्तान् । कीदृशैः । अचेटकैरनाक्रोशकैः । परेषामनिन्दकैः । एटद्भ्यः पशुभ्य उत्केटिभिरूर्ध्वं गच्छद्भी रजोभिर्हेतुभिः कटद्गच्छन् मलं पापं येभ्यस्तान् । अकुण्डरत्नैरकुण्ठैरविकलैः संपूर्णै रत्नैः पद्मरागादिरत्नैर्मुडिता मर्दिता तिरस्कृतार्कप्रभा येषु तान् । कीदृशै रत्नैः । प्रकण्टिताशोदयदंशुमण्डितैः । प्रकण्टिताश्च व्याप्तदिक्कं

१. 'विरुजा' पा०. २. 'विशासे' पा०.

यथा तयोदयद्भिरुद्रच्छद्भिरंशुभिर्ममण्डितैरलंकृतैः ॥—चेटैरिति। ३१७ चिट परप्रेष्ये। अच्। विटैः। ३१८ विट शब्दे। इगुपधत्वात् कः। अवेटकैः। ३१९ विट आक्रोशे। ण्वुल्। एटदिति। ३२० इट ३२१ किट ३२२ कटी गतौ। इटैः शता। पश्चात्कोटीति। 'बहुलमाभीक्ष्ण्ये' इति णिनिः। कटदिति। कटेः शता। प्रकण्टितेति। 'इदितं कटिनिच्छन्ति केचिदन्ये तमेदितम्। इधातुमत्र प्रश्लिष्टमधातुं वा परे जगुः॥' इत्युक्तेः कटेरिरत्वपक्षे कर्मणि क्तः। उदयदिति। इधातुप्रश्लेषपक्षे शता। मण्डितैः। ३२३ मडि भूषायाम्। कर्मणि क्तः। अकुण्ठेति। ३२४ कुडि वैकल्ये। अच्। मुण्डितेति। ३२५ मुड ३२६ पुड मर्दने। कर्मणि क्तः॥

अचुन्बनुन्मुण्डितपुण्डरीकभृत्सरःश्रियो रुण्डकलुण्डनोज्झितान्।
अस्फोटदभ्र्यस्फटिकादिभाजनान्पाठोत्सुकैश्चावठरैर्लसन्मठान्॥ ४३॥

अचुण्ट्यनल्पीभवन्त्यनुन्मुण्डितान्यखण्डितानि। अविकसितानीति यावत्। पुण्डरीकाणि बिभ्रति यानि सरांसि तैः श्रीः शोभा येषां तान्। तथा रुण्डकानां चोराणां लुण्डनेन चौर्येणोज्झितास्त्यक्तान्। अस्फोटन्त्यभिन्नानि अभ्र्याणि श्रेष्ठानि स्फटिकादिभाजनानि येषां तान्। पशुपाटयान् अवठरैरमूर्खैः पाठोत्सुकैर्लसन्मठांश्च। पाठो विद्याभ्यासः। मठो गृहविशेषः॥—अचुण्टिति। ३२७ चुडि अल्पीभावे। क्विप्। अनुन्मुण्डितेति। ३२८ मुडि खण्डने। पुडीत्येके। मुण्डेः कर्मणि क्तः। पुण्डरीकेति। 'पर्परीकादयश्च' इत्यत्र 'मृद्वीकतिन्तिडीक-बाह्लीक-वल्मीक-करमलीक-पुण्डरीक-चञ्चरीक-प्रतीक-समीक-पूतिकादयश्च' इत्यत्र(?) भोजेन निपातितः। रुण्डक-लुण्डनेति। ३२९ रुटि ३३० लुटि स्तेये। 'रुठि लुठि' इत्येके। 'रुडि लुडि' इत्यपरे। ण्वुल्ल्युटौ। अस्फोटदिति। ३३१ स्फुटिर् विशरणे। स्फुट स्फुटि स्फुटे इत्येके। स्फुटेः शता। स्फटिकेति। 'अलिकलिदलिस्फटिकाभ्यश्च' इति भोजोक्त्या स्फटेः किकन्। पाठेति। ३३२ पठ व्यक्तायां वाचि। घञ्। अवठरैरिति। ३३३ वठ स्थौल्ये। अस्मादौणादिकोऽरप्रत्ययः। मठेति। ३३४ मठ ३३५ कठ मदनिवासयोः। मठेर्घनर्थे कः॥

वनाश्रयत्वेऽपि सकाठपर्यठद्रठन्मृगालीहठकर्मवर्जितान्।
रोठन्नृशंसालुठितैरनोठकैर्वृतान्घनाढ्यैर्मणिपीठसंश्रयैः॥ ४४॥

वनाश्रयत्वे सकाठं समदं यथा तथा पर्यठन्त्याः चरन्त्याः रठन्त्याः शब्दायमानाया मृगाल्या हठकर्मणा क्रूरकर्मणा वर्जितान्। मणिपीठसंश्रयैर्घनाढ्यैर्वृतान्। कीदृशैः। रोठन्नृशंसालुठितैः। रोठद्भिर्हिंसकैर्नृशंसैः क्रूरैरलुठितैरपीडितैरनोठकैरन्येषामहिंसकैः॥—काठेति। कठेर्घञ्। पर्यठदिति। 'अठ गतौ' इत्यप्येके। शता। रठदिति। ३३६ रठ परिभाषणे। [रट इत्येके।] शता। हठेति। ३३७ हठ प्लुतिशठत्वयोः। बलात्कार इत्येके। पचाद्यच्। रोठदिति। ३३८ रुठ ३३९ लुठ ३४० उठ उपघाते। ऊठेत्येके। रुठेः शता। अलुठितैरिति। लुठेः कर्मणि क्तः। ओठकैरिति। उठेर्ण्वुल्। पीठेति। ३४१ पिठ हिंसासंक्लेशनयोः। घञर्थे कः। 'अन्येषामपि दृश्यते' इति दीर्घः॥

विपिनाध्वकेपनादहैर्न व्यग्लेपि च। विपिनाध्वनो वनमार्गस्य केपनात् सचरणादहैर्न व्यग्लेपि न विशेषतः ग्लानीभूतम्। कीदृशस्य। अस्तेपितोऽगतः आनन्दातिशयो यस्य तस्य॥ —अतिष्टेपि। ३६२ तिपृ ३६३ तेपृ ३६४ ष्टिपृ ३६५ ष्टेपृ क्षरणार्थाः। 'धिपृ धेपृ' इत्येके। तेपृ कम्पने च। स्तुभान्ता अनुदात्तेतः उदात्तास्तिपिवर्जम्। विपेलुँङ्। वेपितेति। प्रस्तिपितेति। अस्तिपितेति। तेप्यादीनां त्रयाणां कर्तरि क्तः। व्यग्लेपि। ३६६ ग्लेपृ दैन्ये। भावे लुङि चिण्। विपिनेति। ३६७ टुवेपृ कम्पने। वेपितुर्योर्हस्वश्च' इतीनच्। केपनात्। ३६८ केपृ ३६९ गेपृ ३७० ग्लेपृ च। चकाराद् कम्पने गतौ च। केपेर्ल्युट्॥

अगेपनोऽग्लेपत स व्रजं यदा रविस्तदामेपत पश्चिमां दिशम्।
प्ररेपितात्कोरकतां सरोरुहादलेपि भृङ्गैः कुमुदं त्रपान्वितैः॥ ४८॥

स यदा व्रजमग्लेपत तदा रविः पश्चिमां दिशममेपत गतवान्। अगेपनो निश्चलधीः। तदा च त्रपान्वितैर्भृङ्गैः कोरकतां प्ररेपितात् प्राप्तात् सरोरुहात् कुमुदमलेपि प्राप्तम्॥— अगेपनेति। गोपेः 'अनुदात्तेतश्च—' इति युच्। अग्लेपत ग्लेपेर्लङ्। अमेपतेति। ३७१ मेपृ ३७२ रेपृ ३७३ लेपृ गतौ। मेपेर्लङ्। प्ररेपितात्। रेपेः कर्तरि क्तः। अलेपि। लेपेः कर्मणि लुङि चिण्। त्रपेति। ३७४ त्रपूष् लज्जायाम्। 'षिद्भिदादिभ्योऽङ्' इत्यङि त्रपा॥

सभ्या वर्णयत्यष्टभिः—

सकम्पहेरम्बसमानलम्बनाः समाव्रजन्नम्बितघण्डिकास्तदा।
प्रलम्बसास्नाः कवरत्विषो वृषा अक्षीबिताः क्षीबतयातिशीभराः॥४९॥

तदा वृषाः समाव्रजन् वनादागतवन्तः। कीदृशा इत्याह—सकम्पं हेरम्बेण गणेशेन समानं लम्बनं शब्दो येषां ते। अक्षीबिताः अतिप्रगल्भाः क्षीबतया मत्तत्वेनातिशीभरा नितरां रम्याः। अम्बिताः शब्दिता घण्टिका येषां ते। प्रलम्बा अवस्रस्ता [सास्ना येषां ते]। कवरा नानारूपा त्विट् येषां ते॥—सकम्पेति। ३७५ कपि चलने। घञ्। हेरम्बेति। ३७६ रबि ३७७ लबि ३७८ अबि शब्दे। ३७९ लबि अवस्रंसने च। हे इत्येवं रम्बते इति हेरम्बः। रम्बेः कर्मण्यण्। लम्बनेति। लम्बेर्ल्युट्। अम्बितेति। अम्बेः कर्तरि क्तः। प्रलम्बेति। अवस्रंसनार्थात् लम्बेः पचाद्यच्। कबरेति। ३८० कबृ वर्णे। बाहुलकादरप्रत्ययः। अक्षीबिताः। ३८१ क्लीबृ अधार्ष्ट्ये। कर्तरि क्तः। क्षीबतयेति। ३८२ क्षीबृ मदे। 'अनुपसर्गात्फुल्लक्षीब—' इति निष्ठायामिडभावो ऽपधं निपातितः। शीभराः। ३८३ शीभृ कत्थने। ३८४ चीभृ च। पृषोदरत्वात्॥

प्रचीभ्यरेभैः पदयोऽम्भसांनिधिरम्भणस्तम्भिभिरागता व्रजम्।
अस्तम्भिनाः प्राप्य शिशून्स्तनम्भनात्जृम्भहर्षा ल्लिलिहुः सदास्नम्१०

पशवः प्रचीभ्यरेभैः सह प्रजमागताः प्रचीभ्याः प्रशंसनीया रेभाः शब्दास्तैः। कीदृशैः। अम्भसां निधेः समुद्रस्य प्ररम्भणं शब्दं स्तम्भयितुं रोद्धुं शीलं येषां तैः । अस्कम्भिताः शिशून् प्राप्य उज्जृम्भहर्षाः सशल्मनं लिलिहुः । अस्कम्भिताः प्रतिबन्धरहिताः । उज्जृम्भो वर्धमानो हर्षो यासां ताः । सशल्मनं शल्मनेन सहितं यथा तथा । शल्मनं श्लाघा । लिलिहुः । शिशून् विशिनष्टि—सजम्भनान् जम्भनेन सहितान् । जम्भनं जृम्भा ॥ —प्रचीभ्येति । चीभेर्ण्यन् । रेभैः । ३८५ रेभृ शब्दे । अभि रभि इत्येके । रेभेर्घञ् । अम्भसामिति । अम्भेरसुन् । अम्भसांनिधीति 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । प्ररम्भणेति । रम्भेर्ल्युट् । स्तम्भिभिरिति । ३८६ ष्टभि ३८७ स्कभि प्रतिबन्धे । स्तम्भेर्णिजन्ताण्णिनिः । अस्कम्भितः । स्कम्भेः कर्तरि क्तः । सजम्भनान् । ३८८ जभि ३८९ जृभि गात्रविनामे । आद्य इदिदित्येके । जम्भेर्ल्युट् । रधिजभोरचीति नुम् । उज्जृम्भेति । जृम्भेः पचाद्यच् । सशल्मनम् । ३९० शल्भ कत्थने । ल्युट् ॥

वल्भप्रगल्भाः पथिकाश्च तत्क्षणं सुश्रम्भणस्तोभयुतानगुर्गृहान् ।
गोपायतां धर्ममधूपितात्मनां जल्पान्विमुच्याभवदुद्यमो जपे ॥ ९१ ॥

पथिकाश्च तत्क्षणं गृहान् अगुः । यथा गावस्तथा पान्था अपि तं कालमभिव्याप्य संध्याववितिरितपर्यन्त(?)मागताः । कीदृशाः । वल्भे भोजने प्रगल्भाः समर्थाः । कीदृशान् गृहान् । सुश्रम्भणस्तोभयुतान् समीचीनपाकव्यापारयुक्तान् । [ततश्च] धर्मं गोपायतामधूपितात्मनां जल्पान् विमुच्य जपे उद्यमोऽभवत् । गोपायतां परिरक्षताम् । अधूपितोऽसंतप्त आत्मा मनो येषां तेषां सतामित्यर्थात् ॥—वल्भेति । ३९१ वल्भ भोजने । घञ् । प्रगल्भाः । ३९२ गल्भ धार्ष्ट्ये । पचाद्यच् । सुश्रम्भणेति । ३९३ श्रम्भु पाके । ल्युट् । स्तोभेति । ३९४ ष्टुभु स्तम्भे । अयं व्यापारार्थे प्रसिद्धः । अस्माद् घञ् । तिपादयोऽनुदात्तेतः । तिपिवर्जमुदात्ताः । गोपायतामिति । ३९५ गुपू रक्षणे । स्तम्भान्ता उदात्ता उदात्तेतः । अस्मात् 'गुपूधूपविच्छिपणिपनिभ्य आयः' इत्यायप्रत्ययान्तः शता । अधूपितेति । ३९६ धूप संतापे । कर्तरि क्तः । जल्पान् । ३९७ जल्प ३९८ जप व्यक्तायां वाचि । जप मानसे च । जल्पेर्घञ् । जप इति । 'व्यधजपोरनुपसर्गे' इत्यप् ॥

चेपुः सपन्तोऽसचितां प्रियां प्रियाः संध्येति रेपुः कललापिनः शुकाः ।
श्येनाश्चुपित्वा तुतुपुः कपोतकान्काकानतुम्पन्नभितुत्रुपुः शशान् ॥ ९२ ॥

प्रियाः सपन्तोऽसचिता प्रियां चेपुः । प्रियाः पादप्रणामादिभिर्नमिला अरचितां प्रियां सान्त्वयामासुः । कललापिनः शुकाः संध्या इति रेपुर्व्यक्तमवदन् । श्येनाश्चुपित्वा कपोतकांस्तुतुपुः । पश्चात्सैव्यथ विघ्नयः श्येनाश्चुपित्वा मन्दं गत्वा तुतुपुरपीडयन् । काकान् अतुम्पन् विव्यधुः । शशानभितुत्रुपुरहिंसन् ॥—चेपुरिति । ३९९ चप सान्त्वने । लिट् । सपन्तः । ४०० षप समवाये । षपेर्लट् । समवायः संबन्धः सम्यगवबोधो वा । षपेः शता । असचितान् । षचेः कर्तरि क्तः । रेपुः । ४०१

रप ४०२ लप व्यक्तायां वाचि । रपेलिट् । कललापिनः । लपोणिनिः । चुपित्वा । ४०३ चुप मन्दायां गतौ । अस्मात् 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा । तुतुपुः । ४०४ तुप ४०५ तुम्प ४०६ त्रुप ४०७ त्रुम्प ४०८ तुफ ४०९ तुम्फ ४१० त्रुफ ४११ त्रुम्फ हिंसार्थाः । तुपेलिट् । अतुम्पन् । तुम्पेर्लङ् । अभितुत्रुपुः । त्रुपेर्लिट् ॥

अत्रुम्प्यधामानमिनं प्रतोफितुं प्रतुम्फशीलान्मिलतोऽथ राक्षसान् ।
अत्रोफकास्त्रुम्फितुमुद्यता जलैर्वापीमपर्पन्नरफन्नदीं द्विजाः ॥ १३ ॥

अथ द्विजाः अत्रुम्प्यधामानमिनं प्रतोफितु मिलतः राक्षसान् जलैस्त्रुम्फितुमुद्यताः वापीमपर्पन् । नदीमरफन् । अत्रुम्प्यमहिंस्यं धाम तेजो यस्य तमिनं सूर्यं प्रतोफितुं हिंसितुं मिलतः संघीभवतो राक्षसान् मन्देहनाम्नो जलैः संध्याजलिभिस्त्रुम्फितुं हन्तुमपर्पन्नगच्छन् । केचित् नदीमरफन्नगच्छन् । कीदृशाः द्विजाः । अत्रोफका अहिंसकाः । कीदृशान् राक्षसान् । प्रतुम्फशीलान् । प्रतुम्फो हिंसनं शीलं येषां तान् ॥—अत्रुम्प्येति । त्रुम्पेर्ण्यत् । प्रतोफितुम् । तुफेस्तुमुन् । प्रतुम्फेति । तुम्फेर्घञ् । अत्रोफकाः । त्रुफेर्ण्वुल् । त्रुम्फितुम् । त्रुफेस्तुमुन् । अपर्पन्निति । ४१२ पर्प ४१३ रफ ४१४ रफि ४१५ अर्व ४१६ पर्व ४१७ लर्व ४१८ बर्व ४१९ मर्व ४२० कर्व ४२१ खर्व ४२२ गर्व ४२३ शर्व ४२४ षर्व ४२५ चर्व गतौ । अर्वादयो नोपधा इत्येके । पर्पेर्लङ् । रफेश्च लङ् ॥

हयैः सुरम्फैर्द्रुतमर्वतो रवेः पर्वद्भिरालर्व्यत रक्तिमा करैः ।
मबर्व्य शैलानुपमर्व्य पद्मिनीं प्रकर्व्य चाशाः श्रमशोणितैरिव ॥१४॥

सुरम्फैर्हयैर्द्रुतमर्वतो रवेः पर्वद्भिः करैः रक्तिमा आलर्व्यत । सुरम्फैः शोभनगमनशीलैः । अर्वतः गच्छतः । पर्वद्भिः प्रसरद्भिः । करैः रश्मिभिः । रक्तिमा रक्तत्वम् । आलर्व्यत सम्यगव्यापि । शैलान् मबर्व्य, पद्मिनीमुपमर्व्य, आशाः प्रकर्व्य च, श्रमशोणितैरिव । शैलाग्रगमनेन पद्मिनीप्राप्त्या सर्वदिक्संचारेण च जातेन परिश्रमेण शोणितैरिव ॥—सुरम्फेरिति । रम्फेर्घञ् । अर्वैः शता । पर्वेश्च । आलर्व्यत । कर्मणि लङ् । बर्वमर्वकर्वीणां ल्यप् ॥

अखर्वि शैलाग्रमगर्वि सौधभूरशर्वि शाखाशिखरं च रश्मिभिः ।
ऊर्ध्वप्रसर्पान्न तु चर्विता मही दिकुम्भितेऽर्के परिलुम्भिताम्बुजे ॥१५॥

रश्मिभिः शैलाग्रमखर्वि । सौधभूरगर्वि । शाखाशिखरं च अशर्वि । सर्वत्र प्रासरि-तैः । अर्के परिलुम्भिताम्बुजे दिकुम्भिते ऊर्ध्वप्रसर्पात् मही न तु चर्विता । परिलुम्भितानि आहिंसानि अम्बुजानि येन तादृशे अर्के दिशाच्छादिते सति । ऊर्ध्वगमनात् हेतोर्मही रश्मिभिः न प्राप्ता अभवत् । अगर्वि । अशर्वि । एषु कर्मणि चिण् । प्रसर्पेति ।

सर्वधर्म् । चर्वेः कर्मणि क्तः । कुम्बितेति । ४२६ कुबि आच्छादने । प्राग्वत् क्तः । परिलुम्बितेति । ४२७ लुबि ४२८ तुबि अर्दने । लुम्बेः प्राग्वत् क्तः ॥

वियोगसंतुम्बितकोकचुम्बिता संतापस्तब्धापि जगाद तद्वधूः ।

मा त्वां स्मरः स्तम्भतु शोभनाकृते चिन्ता न शुम्भेन्न च सुम्भतु व्यथा ९६॥

वियोगसंतुम्बितकोकचुम्बिता तद्वधूः संतापस्तब्धा अपि जगाद । वियोगेन भविष्यता संतुम्बितेनार्दितेन कोकेन चुम्बिता तद्वधूस्तस्य कोकस्य वधूः स्वय संतापेन स्तब्धा पीडिता अपि जगाद । हे शोभनाकृते भासमानाकृते, प्रिय, त्वां स्मरो मा स्तम्भतु पीडयतु । चिन्ता न शुम्भेत् न स्फुरतु । पीडयतु वा । व्यथा न च सुम्भतु ॥—संतुम्बितेति । तुबेः कर्मणि क्तः । ४२९ चुबि वक्त्रसंयोगे । प्राग्वत् क्तः । स्तब्धा । ४३० ष्टुभु ४३१ ष्टुम्भु हिंसार्थौ । षिभु षिम्भु इत्येके । ष्टभेः प्राग्वत् क्तः । स्तम्भेर्लोट् । शोभदिति । ४३२ शुभ ४३३ शुम्भ भाषणे । हिंसायां च । भासन इत्येके । तुम्भेत्यन्ये । शुभेः शता शुम्भेर्लिङ् । सुम्भेर्लोट् । गुपादय उदात्ता उदात्तेतः ॥

प्रघिण्य भूपाः परिघुण्य मालिकाः प्रघृण्य घोणापुटघूर्णिचन्दनम् ।

पणाय्यरूपाः पनिताकृतीन्ययुर्भामिन्य एवाक्षमया स्वकामुकान् ॥ ९७॥

भामिन्य एव भूपाः प्रघिण्य मालिकाः परिघुण्य घोणापुटघूर्णिचन्दनं प्रघृण्य च अक्षमया स्वकामुकान् ययुः । भामिन्यः प्रणयकुपिताः स्त्रियः । एवेत्यप्यर्थे । भूपा मालिकाः चन्दनं च गृहीत्वेत्यर्थः । घोटापुटं नासान्तर्भागं घूर्णयति भ्रमयतीति तथा । कीदृश्यः । पणाय्यं स्तुत्यं रूपं यासां ताः । कीदृशान् कामुकान् । पनिता स्तुता आकृतिर्येषां तान् ॥—प्रघिण्य । परिघुण्य । प्रघृण्येति । ४३४ घिणि ४३५ घुणि ४३६ घृणि ग्रहणे । इदित्वाद् नुमि ङ्त्वं ल्यप् । घोणे । ४३७ घुण ४३८ घूर्ण भ्रमणे । घुणेरचिक्रोडादिनिपातनात् टाप् । घूर्णीति । घूर्णेर्णिजन्ताण्णिनिः । पणाय्येति । ४३९ पण व्यवहारे स्तुतौ च । ४४० पन च । पन स्तुतावेव । 'गुपूधूप–' इत्यायान्ताण्ण्यत् । पनितेति । पनेः कर्मणि क्तः । भामिन्यः । ४४१ भाम क्रोधे । घञन्तान्मत्वर्थीय इनिः । अक्षमयेति । ४४२ क्षमूष् सहने । षित्वादङ् । कामुकानिति । ४४३ कमु कान्तौ । कान्तिरिच्छा । 'लषपत–' इत्यादिना उकञ् । घिण्यादय उदात्ता अनुदात्तेतः ॥

अणद्दिशः केलिरणैर्मनोज्ञया वाण्या भणन्तो मणिभूषणोत्कणाः ।

वनात्कुमाराः क्वणिताभ्र्यवेणवो व्रणद्विषाणभ्रणिताभ्रमाययुः ॥ ९८ ॥

कुमाराः वनात् क्वणिताभ्र्यवेणवो व्रणद्विषाणभ्रणिताभ्रमाययुः । व्रणता शब्दायमानेन विषाणेन भ्रणितं शब्दितमभ्रमाकाशं यस्मिन् तथा आययुः । कीदृशा बालाः । केलिरणैः अणद्दिशो अध्यन्त्यः शब्दायमाना दिशो येषां ते । मनोज्ञया वाण्या भणन्तः । मणिभूषणैः उत्कणाः सशब्दाः । क्वणिता अभ्र्या वेणवो येषां ते ॥—अणदिति । ४४४ अण ४४५ रण ४४६ वण ४४७ भण ४४८ मण ४४९ कण ४५० क्वण

४५१ व्रण ४५२ भ्रण ४५३ ध्वण शब्दार्थाः। धण इत्येके। अणेः शता। मणीति। मणेरौणादिक इन्। उत्कणा। कणेरप्। क्वणितेति। क्वणेः कर्तरि क्तः। व्रणदिति। व्रणेः शता। भ्रणितेति। भ्रणेः प्राग्वत् क्तः॥

ध्वणच्छिशून्घाणसमोणिताशुभाञ्शोणान्पृथुश्रोणिजनो दुदोह च।
प्रश्लोणितान्प्रैणनविभ्रणत्क्षितीननुल्वणान्धेनुगणान्कनत्स्तनान्॥५९॥

पृथुश्रोणिजनो धेनुगणान् दुदोह। गोपस्त्रीजनो नवसूतान् पशुगणान् अदुहत्(?)। कीदृशान्। ध्वणच्छिशून् शब्दायमाना बाला येषां तान्। घाणसमोणिताशुभान् घाणेन शब्देन सम्यगोणितमपनीतमशुभं यैस्तान्। शोणान् रक्तवर्णकपिलप्रायान्। प्रश्लोणितान् एकत्र संघातीभूतान्। प्रैणनेन गत्या विभ्रणन्ती शब्दायमाना क्षितिर्येषां तान्। अनुल्वणान् सौम्यान्। कनन्तः शोभमानाः स्तना येषां तान्॥—ध्वणदिति। ध्वणेः शता। घाणेति। घाणेर्घञ्। ओणितेति। ४५४ ओणृ अपनयने। कर्मणि क्तः। शोणान्। ४५५ शोणृ वर्णगत्योः। पचाद्यच्। श्रोणीति। ४५६ श्रोणृ संघाते। ४५७ श्लोणृ च। श्रोणेरिन्। प्रश्लोणितान्। श्लोणेः कर्तरि क्तः। प्रैणनेति। ४५८ पैणृ गतिप्रेरणश्लेषणेषु। ['पैणृ' इत्यपि कश्चित्पठ्यते।] ल्युट्। विभ्रणदिति। ४५९ भ्रण शब्दे। वण इत्येके। भ्रणेः शता। 'रषाभ्याम्' इति णः। उल्वणेति। वणेः पचाद्यच्। कनदिति। ४६० कनी दीप्तिकान्तिगतिषु। शता। स्तनेति। ४६१ स्तन ४६२ वन शब्दे। पचाद्यच्॥

वनाद्वनं सानुममन्द्रमन्गुहं व्याधोत्करोऽहंमतिर्मीमिताशयः।
चान्तामिषश्छान्तजलः फलावलीं जान्त्वा झमञ्जेमनमक्रमीद्गुहाम्॥६०॥

वनाद् वनं सानुं चामन्, गृहं द्रमन्, व्याधोत्करः चान्तामिषः, छान्तजलः, फलावलीं जान्त्वा जेमनं झमन् गुहामक्रमीत्। अमन् संचरन्। द्रमन् प्राप्नुवन्। चान्तं भक्षितं मांसं येन सः। छान्तं पीतं जलं येन सः। जान्त्वा भुक्त्वा। जेमनं दृष्टं आहारम्। झमन्नदन्। अक्रमीत् प्रविवेश। अहंमतिः अज्ञानं तेन मीमितः प्राप्तः आशयो यस्य सः॥—वनादिति। वनेरच्। वननिति। ४६३ वन ४६४ षण संभक्तौ। अर्थनिर्देशमात्रेण पुनः पठितस्य वनेरप्यच्। सानुमिति। 'दृसनि' इति सनेः ञुण्। अमन्। ४६५ अम गत्यादिषु। आद्युक्तेः शब्दसंभक्तिरोगेषु। अस्माच्छता। द्रमन्। ४६६ द्रम ४६७ हम्म ४६८ मीमृ गतौ। मीम शब्देऽपीत्येके। द्रमेः शता। अहम्मतिः। हम्मेर्भावे क्विप् शप् च। हम्मतिर्ज्ञानम्। नञ्समासः। मीमितेति। मीमेः कर्मणि क्तः। चान्तेति। छान्तेति। ४६९ चमु ४७० छमु ४७१ जमु ४७२ झमु अदने। जिमेति चैके। चमिछम्योः कर्मणि क्तः। जान्त्वा। जमेः क्त्वा। झमन्। झमेः शता। जेमनम्। जिमेर्ल्युट्। अक्रमीत्। ४७३ क्रमु पादविक्षेपे। लुङ्॥

१. 'मानाः' इति पाठः.

अन्तस्थया कौतुकमूर्च्छया व्रजं तदायतासौ वयमानवात्सकम् ।
पयः प्रदोहादिरताः प्रमय्य तं प्रैक्षन्त नूलनाचयितं कुतूहलात् ॥ ११ ॥

असौ तदा अन्तस्थया कौतुकमूर्च्छया व्रजमायत आगच्छत् । कीदृशं व्रजम् । वयमानं ततस्ततो गच्छत् वात्सकं वत्ससमूहो यस्मिंस्तम् । पयः प्रदोहादिरता जनाः प्रमय्य नूलाचयितं तं कुतूहलात् प्रैक्षन्त । प्रमय्य प्राप्य नूलया आचयितं आगतम् ॥—आयतेति । ४७४ अय ४७५ वय ४७६ पय ४७७ मय ४७८ चय ४७९ तय ४८० णय गतौ । पय इत्यप्येके । 'तय णय रक्षणे च' इत्येके । अयेर्लङ् । वयेः शानच् । पयेर्मुन् । मयेर्ल्यप् । आचयित । चयेः कर्तरि क्तः ॥

प्रतय्य किंचिन्नयितो गृहान्तिकं ददर्श धन्यः स दयालुमीश्वरम् ।
गोदोहदेशे रयितं सहाग्रजं तमूतसत्कीर्त्तिमपूतिभिर्गुणैः ॥ १२ ॥

धन्यः स किंचित् प्रतय्य गृहान्तिकं नयितः दयालुमीश्वरं सहाग्रजं ददर्श । प्रतय्य चरित्वा । नयितः प्राप्तः । कीदृशमीश्वरम् । गोदोहदेशे रयितमुपगतम् । अपूतिभिर्गुणैरूतसत्कीर्तिम् । सुरभिभिः सर्वेन्द्रियानन्दिभिः स्वगुणरूपैर्गुणैस्तन्तुभिरूता कृता सती प्रशस्ता कीर्तिरूपा पटी येन तम् । प्रतय्येति । तयेर्ल्यप् । नयितः । णयेः कर्तरि क्तः । दयालुमिति । ४८१ दय दानगतिरक्षणहिंसादानेषु । 'स्पृहिगृहिपतिदयि-'इत्यादिनालुच् । रयितम् । ४८२ रय गतौ । कर्तरि क्तः । ऊतेति । ४८३ ऊयी तन्तुसंताने । कर्मणि क्तः । अपूतिभिरिति । ४८४ पूयी विशरणे दुर्गन्धे च । क्तिन् ॥

ईश्वरं विशिनष्टि चतुर्दशभिः—

प्रक्नोपयन्तं मुरलीं महीभरक्ष्मायं बलस्फीतसुपीनदोर्युगम् ।
अशेपतां भ्रूशलनैर्वलद्दृशा प्रवल्हमानं प्रियवल्लवीशुचम् ॥ १३ ॥

मुरलीं प्रक्नोपयन्तं शब्दयन्तं महीभरक्ष्मायं महीभरस्य क्ष्मायं विधूनयितारं त्यक्तारं बलेन स्फीतमतिस्थूलं दोर्युगं यस्य तम् । भ्रूशलैर्भ्रुवोश्चलनैरशेपतामशेषस्य नायितारं पालकम् । वलद्दृशा । वलन्त्या संचरन्त्या दृशा प्रियवल्लवीशुचं प्रवल्हमानं छादयन्तम् ॥—प्रक्नोपयन्तमिति । ४८५ क्नूयी शब्दे उन्दे च । अस्माण्णिचि 'अर्तिह्री-' इत्यादिना पुकि शता । भरक्ष्मायं । ४८६ क्ष्मायी विधूनने । कर्मण्यण् । स्फीतसुपीनेति । ४८७ स्फायी ४८८ ओप्यायी वृद्धौ । द्वयोः कर्तरि क्तः । अशेपतां । ४८९ तायृ संतानपालनयोः । क्विपि 'लोपो व्योः' इति यलोपः । शलनैरिति । ४९० शल चलनसंवरणयोः । ल्युट् । वलदिति । ४९१ वल ४९२ वल्ह संवरणे संचरणे च । अनुदात्तेता तङोऽनित्यत्वाद्वलेः शता । प्रवल्हमानमिति । वल्लवीति वल्लेः शानच् । औणादिकोऽवश्च ॥

मामल्यमानं सितमल्लिकावलीमाभाल्यदैत्याधिपभल्लनोद्धुरम् ।
कलोरुकल्लोलकलिन्दजाजले बालैस्तयूभिः सह देवनोत्सुकम् ॥ १४ ॥

स्मितमल्लिकावल्लीं मामल्यमानं पुनः पुनः धारयन्तम् आमाल्यानामहिंसानां दैत्याधिपानां भल्लने हिंसने उद्धुरमुद्युक्तम् । तयूभिः क्रीडकैर्बालैः सह कलाः शब्दायमानाः उरवो महान्तः कल्लोला यस्मिंस्तादृशे कलिन्दजाजले देवनोत्सुकं क्रीडनोत्सुकम् ॥—मामल्यमानमिति । ४९३ मल ४९४ मल्ल धारणे । मलेर्यङ् । मल्लिकेति । मल्लेः 'संज्ञायाम्' इति ण्वुल् । आमाल्येति । ४९५ भल ४९६ भल्ल परिभाषणहिंसादानेषु । भलेर्ण्यत् । भल्लनेति । भल्लेर्ल्युट् । कलेति । ४९७ कल शब्दसंख्यानयोः । पचाद्यच् । कल्लोलेति । ४९८ कल्ल अव्यक्ते शब्दे । 'बहुलमन्यत्रापि' इत्योलच्प्रत्ययः । तयूभिरिति । ४९९ तेवृ ५०० देवृ देवने । तेवेः 'क्विपि शूट्' इत्यूठि अयादेशः । देवनेति । देवेर्ल्युट् ॥

सेव्यं सतां शंकरगेव्यमब्जभूग्लेव्यं सुरैः पेव्यममेव्यमुन्मदैः ।
प्रम्लेवितं रेवितवत्समण्डलीं मव्यद्भिराभीरजनैरसूर्क्ष्यकैः ॥ ६५ ॥

सतां सेव्यं सेवितव्यं शंकरेण गेव्यं सेवनीयम् अब्जभुवा ग्लेव्यं सेव्यं सुरैः पेव्यं सेवितुं शक्यम् उन्मदैरमेव्यं सेवितुमशक्यम् आभीरजनैः प्रम्लेवितं सेवितम् । कीदृशैः । रेवितानामुत्प्लुत्य गच्छतां वत्सानां मण्डलीं मव्यद्भिर्बध्नद्भिः । असूर्क्ष्यकैरन्योन्यमीर्ष्यामकुर्वद्भिः ॥—सेव्यं, गेव्यं, ग्लेव्यं, पेव्यं, अमेव्यमिति । ५०१ षेवृ ५०२ गेवृ ५०३ ग्लेवृ ५०४ पेवृ ५०५ मेवृ ५०६ म्लेवृ सेवने । पञ्चानां ण्यत् । प्रम्लेवितं । म्लेवेः कर्मणि क्तः । रेवितेति । ५०७ रेवृ प्लवगतौ । प्लवगतिः प्लुतगतिः । अयादय उदात्ता अनुदात्तेतः । मव्यद्भिः । ५०८ मव्य बन्धने । अयान्ता उदात्ता उदात्तेतः । असमाच्छता । सूर्क्ष्यकैः । ५०९ सूर्क्ष्य ५१० ईर्क्ष्य ५११ ईर्ष्य ईर्ष्यार्थाः । सूर्क्ष्येर्ण्वुल् ॥

राधाकृतेर्ष्याकलहावलोकनादीर्ष्यां हयन्त्या रमया प्रमोदितम् ।
प्रशुच्य सोमं कृतहर्यतैर्नुतं समालितं फुल्लसरोजमालया ॥ ६६ ॥

राधाकृतेर्ष्याकलहावलोकनात् राधाकृतस्य ईर्ष्याकलहस्य दर्शनादीर्ष्यां अक्षमां हयन्त्या प्राप्नुवत्या रमया प्रमोदितं सोमं प्रशुच्य कृतहर्यतैर्नुतं प्रशुच्याभिषुत्य कृतो हर्यतो यज्ञो यैस्तैः । फुल्लसरोजमालया समालितं विभूषितम् ॥—ईर्ष्या । ईर्ष्या इति । 'गुरोश्च हलः' इत्यकारः । हयन्त्या । ५१२ हय गतौ । 'भक्तिशब्दयोः' इत्येके । शत्रन्तान्ङीप् । प्रशुच्येति । ५१३ शुच्य अभिषवे । अभिषवो निष्पीडनस्नपनसुरासन्धानमथनादिः । ल्यप् । हर्यतेति । ५१४ हर्य गतिकान्त्योः । अस्मात् 'भृमृदृशियजिपर्विलिनमिहर्यिभ्योऽतच्' इत्यतच् । समालितं । ५१५ अल भूषणपर्याप्तिवारणेषु । कर्मणि क्तः । फुल्लेति । ५१६ ञिफला विशरणे । तच विशीर्णत्वम् । विकसनम् । 'अनुपसर्गात्फुल्ल—' इत्यादिना निपातितः ॥

उन्मीलनसंमीलनलीलया दृशोरुन्मीलितसंमीलितविश्वविष्टपम् ।
पिच्छव्यना पीलितनीलकुन्तलं शीलेन संकीलितलोकमानसम् ॥ ६७ ॥

दृशोरुन्मीलनस्मीलनलीलयोन्मीलननिमीलनरूपया लीलयोत्स्मीलितं प्रकाशितम् क्ष्मीलितं तिरोहितं च सर्वविश्वं येन तम् । पिच्छस्रजा पीलितं बद्धं नीलकुन्तलं येन तम् । शीलेन संकीलितं बद्धं वशीकृतं लोकमानसं येन तमीश्वरम् ॥—उन्मीलनस्मीलनेति । ५१७ मील ५१८ श्मील ५१९ स्मील ५२० क्ष्मील निमेषणे । संकोचनं तत् । मीलस्मीलाभ्यां ल्युट् । उत्स्मीलितक्ष्मीलितेति । स्मीलक्ष्मीलाभ्यां णिजन्ताभ्यां कर्मणि क्तः । पीलितेति । ५२१ पील प्रतिष्टम्भे । रोधनं तत् । कर्मणि क्तः । नीलेति । ५२२ णील वर्णे । इगुपधत्वात् कः । शीलेनेति । ५२३ शील समाधौ । समाधिर्निष्ठाकरणम् । घञ् । संकीलितेति । ५२४ कील बन्धने । कर्मणि क्तः ॥

सन्मार्गसंकूलिषु शूलदायिनं दहन्तमेनांसि च तूलपूलवत् ।
मूलं फलं वाप्यदतामचुल्लतां प्रफुल्लभक्त्युन्नतिचिल्लचेतसाम् ॥ ६८ ॥
अवेलितानां प्रतिचेलधारिणामकेलिलोले हृदि बद्धखेलनम् ।
फणीश्वरक्ष्वेलरुधं प्रवेल्लितस्रजं मुहुः पेलववातफेलनात् ॥ ६९ ॥

सन्मार्गसंकूलिषु सन्मार्गनिरोधशीलेषु दुष्टेषु । शूलदायिनं पीडाकरम् । तूलपूलवदेनांसि दहन्तं च । प्रतिचेलधारिणां प्रतिचेलानि वल्कलादीनि दधानानां यमिनामकेलिलोले हृदि बद्धखेलनं कृतपीडनम् । मूलं फलं वा अपि अदतां भक्षयताम् अचुल्लतामनाविष्कृताभिप्रायाणां प्रफुल्लया विकसितया भक्त्युन्नत्या चिल्लचेतसामार्द्रीभवन्मनसामवेलितानां केनाप्यचलितानां फणीश्वरक्ष्वेलरुधं कालियस्य विषं रुन्धन्तम् । पेलवस्य मृदोर्वातस्य फेलनाच्चलनात् मुहुः प्रवेल्लितस्रजं दोलायमानवनमालम् ॥—सन्मार्गसंकूलिष्विति । ५२५ कूल आवरणे । णिनिः । शूलेति । ५२६ शूल रुजायां संघाते च । घञ् । तूलपूलवत् । ५२७ तूल निष्कर्षे । निष्कोषणं तत् । ५२८ पूल संघाते । द्वयोर्घञ् । मूल फलम् । ५२९ मूल प्रतिष्ठायाम् । ५३० फल निष्पत्तौ । द्वयोः पचाद्यच् । अचुल्लताम् । ५३१ चुल्ल भावकरणे । शता । प्रफुल्लेति । ५३२ फुल्ल विकसने । पचाद्यच् । चिल्लेति । ५३३ चिल्ल शैथिल्ये भावकरणे च । अच् । अवेलितानाम् । ५३४ वेल्ल ५३५ चेल ५३६ केल ५३७ खेल ५३८ क्ष्वेल ५३९ वेल्ल चलने । वेलेः कर्मणि क्तः । चेलेति । चेलेरच् । केलीति । केलेरिन् । खेलनमिति । खेलेर्ल्युट् । द्वयोः क्रीडार्थत्वं धातूनामनेकार्थत्वात् । क्ष्वेलेति । क्ष्वेलेर्घञ् । प्रवेल्लितेति । वेल्लेः कर्तरि क्तः । पेलवेति । ५४० पेल ५४१ फेल ५४२ शेल गतौ । 'कुडिकितिपणिपेलपल्लिवल्लिगालिभ्योऽवक्' इति पेलेरवक् । फेलनात् फेलेर्ल्युट् ॥

सुमार्गशेलात्स्खलतां खलात्मनां गलच्छिदार्थं सलितं महीतलम् ।
दलत्तनुप्रश्वलितान्परान्प्रतिप्रश्वल्लिताखोडसुदर्शनायुधम् ॥ ७० ॥

सुमार्गशेलात् सन्मार्गगमनात् स्खलतां चलतां खलात्मना गलच्छिदार्थं महीतलं सलितं प्राप्तं युद्धे दलत्तनु विदीर्यमाणदेहं यथा भवति तथा प्रश्वलितान् आशु गतान् परान्

प्रति प्रश्लितमाशु गमितमखोडमप्रतिहतगति अखञ्जं सुदर्शनायुधं येन तम् ॥—शैलादिति। शेलेर्घञ् । स्खलताम् । ५४३ स्खल संचलने । प्रतिघातेऽप्यस्ति । शता । खलेति । ५४४ खल संचये । पचाद्यच् । गलेति । ५४५ गल अदने । अच् । सलितम् । ५४६ पल गतौ । कर्तरि क्तः । दलदिति । ५४७ दल विदारणे । शता । प्रश्वलितान् । ५४८ श्वल ५४९ श्वल्ल आशुगमने । श्वलेः कर्तरि क्तः । प्रश्वल्लितेति । श्वल्लेर्णिजन्तात् कर्मणि क्तः । अखोडेति । ५५० खोल् ५५१ खोर्ऋ गतिप्रतिघाते । खोलेरच् । डलयोरभेदाड्डः ॥

अखोरधौरत्पतगेन्द्रवाहनं त्सेविनां तित्सरिपां निराडिनम् ।
क्मरन्मनोदुर्गममभ्रमेचकं वभ्रद्वधूविभ्रमवृष्टिमभ्रितम् ॥ ७१ ॥

अखोरमप्रतिहतगति यथा तथा धौरच्चतुरं गच्छत् पतगेन्द्रवाहनं यस्य तम् । त्सेविनां तित्सरिपां व्याजकरणेच्छां निरसितुं शीलं यस्य तम् । क्मरतां कुटिलाना मनसो दुर्गमम् । अभ्रमिव मेचकम् । वभ्रन्तीनां चरन्तीनां वधूनां विभ्रमवृष्टिमभ्रित प्राप्तम् ॥—अखोरेति । खोरेः पचाद्यच् । धौरदिति । ५५२ धोर्ऋ गतिचातुर्ये । शता । तित्सरिपेति । ५५३ त्सर छद्मगतौ । समन्तादकारः । क्मरदिति । ५५४ क्मर हूर्च्छने । कौटिल्यं तत् । शता । अभ्रेति । ५५५ अभ्र ५५६ वभ्र ५५७ मभ्र ५५८ चर गत्यर्थाः । अभ्रेः पचाद्यच् । वभ्रेः शता । मभ्रेः कर्मणि क्तः ॥

संचारनिष्ठ्यूतनखेन्दुचन्द्रिकं लोके जयन्तं सकलैकजीवनम् ।
अपीवितां नाप्यतिमीवितां श्रितं तनुं सुतीवोरुमनीवमध्यमाम् ॥ ७२ ॥

पूर्वार्धः स्पष्टः । न अपीवितामतिमीवितामपि तनुं श्रितम् । अपीवितां कृशाम् । अतिमीवितां अतिस्थूलाम् । कीदृशीं तनुम् । सुतीवौ सम्यक् पीनावूरू यस्यास्ताम् । अनीवं कृशं मध्यमं मध्यप्रदेशो यस्यास्ताम् ॥—संचारेति । चारेर्घञ् । निष्ठ्यूतेति । ५५९ ष्ठिवु निरसने । आस्यान्निःसारणं तत् । 'सुब्धातुष्ठिवुष्वष्कतीनां न' इति सत्वाभावः । कर्मणि क्तः । जयन्तम् । ५६० जि जये । जय उत्कर्षप्राप्तिः । जीवनम् । ५६१ जीव प्राणधारणे । ल्युट् । अपीविताम् । अतिमीविताम् । ५६२ पीव ५६३ मीव ५६४ तीव ५६५ णीव स्थौल्ये । पीविमीव्योः कर्तरि क्तः । तीविनीव्योरिगुपधत्वात्कः ॥

प्रष्ठ्यूतगोपीशुचमूर्णपूतनं तूर्णानसं धूर्णबकादिदानवम् ।
दुदूर्विषून् धूर्वितुमेव गूर्वणं मूर्वन्तमापूर्वितपर्वताध्वरम् ॥ ७३ ॥

प्रष्ठ्यूता निरस्ता गोपीनां शुक् येन तम् । ऊर्णा हिंसिता पूतना येन तम् । तूर्णं चूर्णीकृतमनः शकटं येन तम् । धूर्णाः हताः बकादिदानवाः येन तम् । दुदूर्विषून् हन्तुमिच्छून् । धूर्वितुं हन्तुमेव गुर्वणमुद्यमं मूर्वन्तं बध्नन्तं परिगृह्णन्तमित्यर्थः । आपूर्वितः संपूरितो निर्वर्तितः पर्वताध्वरो येन तम् ॥—प्रष्ठ्यूतेति । ५६६ क्षिवु ५६७ क्षेवु निरसने ।

कर्मणि क्तः । ['क्षयूतगोर्वी'इति पाठे क्षेवुधातुर्बोध्यः ।] ऊर्वेति । ५६८ उर्वी ५६९ तुर्वी ५७० थुर्वी ५७१ दुर्वी ५७२ धुर्वी हिंसार्थाः । ऊर्वेः कर्मणि क्तः । 'लोपो व्योर्वलि' वलोपे । 'रदाभ्यां' इति नत्वम् । 'र्वोरुपधाया दीर्घ इकः' । तूर्णदूर्णेति । तुर्वीथुर्व्योः प्राग्वत् क्तः । दुदूर्विषून् । दुर्वेः सन्युप्रत्ययः । धूर्वितुं । धुर्वेस्तुमुन् । गूर्वणम् । ५७३ गुर्वी उद्यमने । ल्युट् । मूर्वन्तं ।५७४ मुर्वी बन्धने । शता । अपूर्वितेति । ५७५ पुर्व ५७६ पर्व ५७७ फर्व ५७८ मर्व पूरणे । अन्त्यो गतौ च द्रुमे । पूर्वेः कर्मणि क्तः । पर्वतेति । 'भमृदृशि' इत्यादिना पर्वेरतच् ॥

अफर्विताकाङ्क्षितमर्वकं सतां मांसादिसंचर्वकदुष्टभर्वकम् ।
कर्वद्वधूकेलिरसेन खर्वितं गर्वार्वकं शर्वपरेण सर्वताम् ॥ ७४ ॥

सतामफर्वितस्यापूर्णस्याकाङ्क्षितस्य मर्वकं पूरकम् । मांसादेः संचर्वकाणां दुष्टानां भर्वकं हन्तारम् । कर्वन्तीनां दृप्यन्तीनां वधूनां केलिरसेन खर्वितं मायन्तम् । शर्वपरेण हिंसापरेण सर्वतां लोकं हिंसतां गर्वस्यार्वकं नाशकम् ॥—अफर्वितेति । फर्वेः कर्तरि क्तः। मर्वकम् । मर्वेर्ण्वुल् । संचर्वकम् ।५७९ चर्व अदने । ण्वुल् ।भर्वकम् ।५८० भर्व हिंसायाम् । ण्वुल् । कर्वदिति । ५८१ कर्व ५८२ खर्व ५८३ गर्व दर्पे । आद्य ईदिदित्येके । तस्माच्छता । खर्वितम् । खर्वेः कर्तरि क्तः । गर्वेति । गर्वेर्घञ् । अर्वकमिति । ५८४ अर्व ५८५ शर्व ५८६ षर्व हिंसायाम् । अर्वेर्ण्वुल् । सर्वेति । शर्वेर्घञ् । सर्वताम् । सर्वेः शता ॥

विश्वेन्वितं स्वल्मधुपिन्विताङ्गकं मिन्वन्तमुच्चैः कृपयैव निन्वकान् ।
हिन्वन्तमाभीरकुलं विलासिनीर्दिन्वन्तमाधिन्वितदेवमण्डलम् ॥ ७५ ॥

विश्वस्मिन्निन्वितं व्याप्तं सर्वैः प्रीणितं वा । स्वल्मधुना पिन्वितानि सिक्तानि अङ्गकानि यस्य तम् । कृपया कृपामृतेन एव निन्वकान् सेवकान् उच्चैरधिकं मिन्वन्तं सिञ्चन्तम् । आभीरकुलं हिन्वन्तं प्रीणयन्तम् । विलासिनीर्दिन्वन्तं तोषयन्तम् । आधिन्वित सम्यक्प्रीणितं देवमण्डलं येन तम् ॥—इन्वितमिति । ५८७ इवि व्याप्तौ । प्रीणने चैके । इदित्त्वान्नुम् । कर्तरि क्तः । पिन्वितमिति । ५८८ पिवि ५८९ मिवि ५९० णिवि सेचने । सेवन इत्येके । पिन्वेः कर्मणि क्तः । मिन्विन्तम् । मिन्वेः शता । निन्वकान् । निन्वेर्ण्वुल् । हिन्वतम् । दिन्वन्तम् । ५९१ हिवि ५९२ दिवि ५९३ धिवि ५९४ जिवि प्रीणनार्थाः । हिन्विदिन्व्योः शता । आधिन्वितेति । धिन्वेः कर्मणि क्तः ॥

जिन्वन्तमुर्वी निजरिण्वनैः सतां रण्वन्तमन्तर्भवधन्वपादपम् ।
कृण्वन्तमाश्चर्यगतीरमूर्तिदं जगन्त्यवन्तं त्रिदशोपधावितम् ॥ ७६ ॥

निजरिण्वनैरात्मीयसंचारैरुर्वी जिन्वन्तं प्रीणयन्तम् । सतामन्तर्मनो रण्वन्तं प्राप्नुवन्तम् । भवरूपे धन्वनि मरुभूमौ पादपं छायाकरं वृक्षम् । आश्चर्यगतीः कृण्वन्तं कुर्वन्तम्

अमूर्तिदं बन्धाभावस्य मोक्षस्य दातारम्। जगन्ति अवन्तं रक्षन्तम्। त्रिदशैरुपधावितं स्तुतं सेवितं वा ॥—जिन्वन्तम्। जिन्वेः शता। रिण्वनैः। ५९५ रिवि ५९६ रवि ५९७ धवि गत्यर्थाः। रिण्वेर्ल्युट्। रण्वन्तम्। रण्वेः शता। धन्वेति। 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति धन्वेः कनिन्। कृण्वन्तम्। ५९८ कृवि हिंसाकरणयोश्च। चाद् गतौ। शता। अमूतीति। ५९९ मव बन्धने। क्तिनि 'ज्वरत्वर—' इत्यूठ्। अवन्तमिति। ६०० अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादहनभाववृद्धिषु। 'दानभागवृद्धिषु' इति वा पाठः। अस्माच्छता। मव्यादय उदात्ता जयतिवर्जमुदात्तेतः। उपधावितम्। ६०१ धावु गतिशुद्ध्योः। शुद्धिः शोधना। जवे च दुर्गे। उपपूर्वत्वात् स्तुत्यर्थता। उदात्तः स्वरितेत्। अस्मात् कर्मणि क्तः॥

ईदृशं भगवन्तं दृष्टवतोऽक्रूरस्य भाग्यमभिनन्दति—

संधुक्षमाणमरिधिक्षकमूष्मजालं
संवृक्ष्यवेदमतशिक्षकभिक्षुगम्यम्।
संक्लेशितस्वकथदक्षणदीक्षितं तं
प्रेक्ष्यैप जन्मफलमीपितवान्महात्मा ॥ ७७ ॥

एष तं प्रेक्ष्य जन्मफलमीपितवान् प्राप्तवान्। कीदृशमित्याह—अरीणां धिक्षकं क्लेशकं दाहकं वा। ऊष्मजालं प्रतापं संधुक्षमाणं संदीपयन्तम्। ऊष्मान्तधातुजालमत्रारभ्यत इति भाति। संवृक्ष्यं सवरणीयं परिग्राह्यं यत् वेदमतं तस्य शिक्षकैरभ्यासकैर्भिक्षुभिर्गम्यम्। संक्लेशिता सम्यक्कथिता स्वकथा यैस्तेषां दक्षणे वर्धनायां जीवने वा दीक्षितं संप्राप्तमतम्॥—संधुक्षमाणमिति। ६०२ धुक्ष ६०३ धिक्ष संदीपनक्लेशनजीवनेषु। धापान्ता उदात्ता अनुदात्तेतः। धुक्षेः शानच्। धिक्षकमिति। धिक्षेर्ण्वुल्। संवृक्ष्येति। ६०४ वृक्ष वरणे। ण्यत्। शिक्षकेति। ६०५ शिक्ष विद्योपादाने। ण्वुल्। भिक्षु इति। ६०६ भिक्ष याच्ञायामलाभे लाभे च। क्लेशे व्यक्तायां वाचि चेत्येके। 'सनाशंसभिक्ष उः' इति उः। संक्लेशितेति। ६०७ क्लेश अव्यक्तायां वाचि। बाधन इत्येके। उपतापे च दुर्गे। कर्मणि क्तः। दक्षणेति। ६०८ दक्ष वृद्धौ शीघ्रार्थे च। ल्युट्। दीक्षितमिति। ६०९ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु। 'अस्यार्थे व्रतसंप्राप्तिस्तद्देशाः कथिता इमे। सा च मौण्ड्यात् क्वचित् क्वापि दीक्षणीयादिकेज्यया॥ उपनीत्या क्वचित् क्वापि नियमग्रहमात्रतः। क्वचिद् गुर्वादिनन्दे तं व्रतमस्त्विति शासनात्॥ ······दीक्षते वाग्मी यजमानस्तु माणवः। तपसे च महानार्थ्यं तप आदिशना व्रतम्॥' अस्माद्दीक्षेः कर्तरि क्तः। प्रेक्ष्येति। ६१० ईक्ष दर्शने। ल्यप्। ईपितवानिति। ६११ ईष गतिहिंसादर्शनेषु। क्तवतुः॥

भाषितुं स खलु हर्षवर्षितो गोपितुं समुचितं च नाशकत्।
येषणात्सहरिजेषसंभ्रमात्तेषितस्मृतिरपेषितो रथात्॥ ७८ ॥

स खलु हर्षेनार्पितो हर्षेण वर्षितः स्निग्धीभूतः पूर्णः सन् भाषितुं समुचितं च गेषितुमन्वेष्टुं नाशकत्। येषणात्तहरिजेषसंभ्रमात् येषणात्तेन प्रयत्नलब्धेन हरिजेषेण श्रीकृष्णप्राप्त्या जातात् संभ्रमाद्धेतोर्नेषितस्मृतिर्गतस्मृती स्यात् अपेषितोऽपगतोऽवतीर्णवान्॥—भाषितुम्। ६१२ भाष व्यक्तायां वाचि। तुमुन्। वर्षितः। ६१३ वर्ष स्नेहने। स्नेहनं स्निग्धीभावः। कर्तरि क्तः। गेषितुम्। ६१४ गेषृ अन्विच्छायाम्। ग्लेषृ इत्येके। गेषेस्तुमुन्। येषणेति। ६१५ येषृ प्रयत्ने। ल्युट्। जेषेति। ६१६ जेषृ ६१७ णेषृ ६१८ पेषृ ६१९ प्रेषृ गतौ। जेषेर्घञ्। नेषितस्मृतिः। अपेषितः। नेष्पेष्योः कर्तरि क्तः॥

सुप्रेषितान्पथि सरेषवृके सहेषं
हेषास्तकासरमदानतिभासुराङ्गान्।
नासोत्थरासलसितान्नसितेन दाम्ना
सूतो ययाम समराम्यसितांस्तुरंगान्॥ ७९॥

सूतः सारथिर्नसितेन सम्यग्वर्तनात् कुटिलेन दाम्ना तुरंगान् ययाम बबन्ध। कीदृशान्। सरेषवृके, सशब्दवृके पथि मार्गे सहेषं सशब्दं यथा तथा सुप्रेषितान् सम्यक् चरित्वा गतान्। हेषया शब्देनास्तो निरस्तः कासराणां महिषाणां मदो यैस्तान्। अतिभासुराङ्गान्। नासोत्थेन रासेन शब्देनाश्वस्वभावजेन शोभितान्। समरेऽभ्यसितानभीतान्॥—सुप्रेषितानिति। प्रेषेः कर्तरि क्तः। रेषेति। ६२० रेषृ ६२१ हेषृ ६२२ ह्रेषृ। अव्यक्ते शब्दे। अत्र रेषिर्वृकशब्दे हेषिरश्वशब्दे ह्रेषेति चाश्वशब्दे पठितव्यम्। रेषेर्घञ्। हेषेरकारः। इषेश्च। कासरेति। ६२३ कासृ शब्दकुत्सायाम्। रोगजे कुत्सितशब्देऽयं प्रसिद्धः। शब्दमात्रे शोमार्येऽप्याह भट्टिः। 'मुन्दिकन्दिमन्दिमन्थिमञ्जिपञ्जिपिञ्जिपिटिकाशिकुटिकुशिकदिवेदिभ्योऽरन्' इति भोजोक्त्या कासेररन्। भासुरेति। ६२४ भासृ दीप्तौ। 'भञ्जभासमिदो घुरच्' इति भासेर्घुरच्। नासेति। ६२५ णासृ ६२६ रासृ शब्दे। नासेरकारः। रासेर्घञ्। नसितेति। ६२७ णस कौटिल्ये। कर्तरि क्तः। अभ्यसितान्। ६२८ भ्यस भये। प्राग्वत् क्तः॥

आशंसितासितमुदितो भुवनग्रसिष्णुं
विष्णुं तमेनमसतां ग्लसमानमीहाम्।
अक्रूर एत्य बहुधागतमंहितांहा
गर्हाञ्झितोऽपतदगल्भतमे पदाब्जे॥ ८०॥

अक्रूर एनं तं विष्णुमेत्याशंसितासितमुदितोऽगल्भतमे पदाब्जेऽपतत्। अगल्भतमेऽत्यन्तमगर्हणीये। कीदृशः। बहुधा गतं मंहितं प्रवृद्धमंहो यस्य सः। गर्हयोज्झितः। कीदृशम्। भुवनस्य ग्रसिष्णुं संहर्तारम्। असतामीहां चेष्टामिच्छां वा ग्लसमानं ना-

शयन्तम् ॥—आशसितेति । ६२९ आङः शसि इच्छायाम्। नोपधोऽयमित्येके । कर्मणि क्तः । ग्रसिष्णुः । ६३० ग्रसु ६३१ ग्लसु अदने । 'भुवश्च' इति चकारादिष्णुच् । ग्लसेः शानच् । ईहाम् । ६३२ ईह चेष्टायाम् । बहुधेति । ६३३ बहि ६३४ महि वृद्धौ । 'बंहेर्नलोपश्च' इत्युप्रत्ययः । 'संख्याया विधार्थे धा' इति धाप्रत्ययः । मंहेः कर्तरि क्तः । अंह इति । ६३५ अंह गतौ । औणादिकोऽसुन् । गर्हेति । ६३६ गर्ह ६३७ गल्ह कुत्सायाम् । गर्हेरकारः । गल्हेर्ण्यत् ॥

बर्हप्रबल्हसमलंकृतिरालिलिङ्ग
प्रोत्थाप्य वर्हकनिवल्हदुतं तमीशः ।
प्लीहायितासुरभरक्षतिवेहितोर्वी-
भैषज्यजेहपरया निजबाहयैव ॥ ८१ ॥

ईशस्तं प्रोत्थाप्य निजबाहया एव आलिलिङ्ग । कीदृशः । बर्हप्रबल्हेन बर्हश्रेष्ठेन समलंकृतिर्यस्य सः । कीदृशम् । वर्हकाणां हिंसकानां निवल्हेन हिंसया दुतमुपतप्तम् । कीदृश्या बाहया । प्लीहायितानां गुल्मरोगवदाचरतामसुराणां भरक्षतौ वेहितायाः सप्रयत्नाया उर्व्याः भैषज्यजेहे चिकित्साकरप्रयत्ने परया तत्परया ॥—बर्हप्रबल्हेति । ६३८ बर्ह ६३९ बल्ह प्राधान्ये । द्वयोः पचाद्यच् । वर्हकनिवल्हेति । ६४० वर्ह ६४१ वल्ह परिभाषणहिंसाच्छादनेषु । दाने च दुमे । परिभाषणमत्र वचनवादः । वर्हेर्ण्वुल् । वल्हेर्घञ् । प्लीहायितेति । ६४२ प्लिह गतौ । 'श्वमुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्' इति प्लिहेः कनिनि दीर्घो निपातितः । वेहितेति । ६४३ वेहृ ६४४ जेहृ ६४५ वाहृ प्रयत्ने । वेहृ इत्येके । जेहिर्गतौ च । वेहेः कर्तरि क्तः । जेहेर्घञ् । वाहेरचि टाप् ॥

द्राहितः शुभपथप्रकाशने सस्वजेऽथ तमनूह्यवैभवः ।
गाढमैत्र्यरसगृह्यमाणधीर्भूषणग्लहनघुंषितो बलः ॥ ८२ ॥

अथ बलस्तमक्रूरं सस्वजे आलिङ्गितवान् । कीदृशः । शुभपथप्रकाशने सन्मार्गप्रवर्तने द्राहितः उन्निद्रः । अनूह्यमतर्क्यं वैभवं यस्य सः । गाढेनातिमात्रेण मैत्र्यरसेन बन्धुत्वाह्लादेन गृह्यमाणा वशीक्रियमाणा धीर्यस्य सः । भूषणानां ग्लहनेन धारणेन घुंषितः कृतकान्तिः ॥—द्राहितेति । ६४६ द्राहृ निद्राक्षये । क्षेपे चेत्येके । कर्तरि क्तः । प्रकाशनेति । ६४७ काशृ दीप्तौ । ल्युट् । ऊह्येति । ६४८ ऊह वितर्के । ण्यत् । गाढेति । ६४९ गाहू विलोडने । क्षोभणं तत् । लक्षणया जलावतरणेऽपि । भावे क्तः । गृह्यमाणेति । ६५० गृहू ग्रहणे । ६५१ ग्लहू च । गृहेः कर्मणि शानच् । ग्लहनेति । ग्लहेर्ल्युट् । घुंषितेति । ६५२ घुषि कान्तिकरणे । घषि इत्येके । घषे स्वन्दे । घुषादय उदात्ता अनुदात्तेतः । कर्तरि क्तः ॥

घोषन्नृपः पङ्कजाक्षस्तमूचे पापश्रेणीतक्षणे त्वष्टृधर्मा ।
उक्षन्नेनं मन्दहासेन रक्षन्निक्षन्निक्षन्त्वब्दवीस्तृक्षिताघाः ॥ ८३ ॥

पङ्कजाक्षस्तमूचे । कीदृशः । घोषन्त्यः शब्दायमाना भूपा यस्य सः । पापश्रेण्यास्तक्षणे तनूकरणे त्वष्टेव तक्ष्ण इव धर्मो व्यापारो यस्य सः । एनमक्रूरं मन्दहासेनोक्षन्नार्द्रीकुर्वन् । तृक्षिताघा गताघाः बल्गीर्निक्षन् चुम्बन्॥—घोषदिति । ६५३ घुषिर् अविशब्दने । क्रदित्येके । अर्हान्त्वा उदात्तेतः शिपिवर्जमनुदात्ताः । आविष्कृताभिप्रायं वचनं विशब्दनम् । तद्यतिरिक्तेऽर्थेऽयं धातुः । स चार्थः शब्दमात्रं वा यथाप्रयोगमन्यो वा । अस्माच्छता । पङ्कजाक्षः । ६५४ अक्षू व्याप्तौ । संघाते च द्रुमे । अस्मादौणादिकेऽसन्तादक्षिशब्दात् समासान्तः षच् । तक्षणे । ६५५ तक्षू ६५६ त्वक्षू तनूकरणे । तक्षेर्ल्युट् । त्वष्टृ । 'नप्तृनेष्टृत्वष्टृ–' इत्यादिना तृन्नन्तो निपातितः । उक्षन् । ६५७ उक्ष सेचने । रक्षन् । ६५८ रक्ष पालने । निक्षन् । ६५९ णिक्ष चुम्बने । त्रिभ्यः शता । तृक्षितेति । ६६० तृक्ष ६६१ स्तृक्ष ६६२ णक्ष गतौ । तृक्षेः कर्तरि क्तः ॥

आस्तृक्षितोऽद्य वितनोषि महत्सुखं नो
नक्षत्रराडिव परं विकलङ्कवक्षाः ।
संमृक्षितोरुगुल्ममाक्षिकहृद्यवाच-
स्तक्षन्ति नाम शुचमिष्टकराः सपक्षाः ॥ ८४ ॥

हे अक्रूर, आस्तृक्षित आगतस्त्वमद्य नो महत् सुखं वितनोषि । नक्षत्रराट् चन्द्र इव । परं केवलं विकलङ्कवक्षा विकलङ्कं निर्दोषं वक्षो हृदयं यस्य सः । चन्द्रस्तु सकलङ्कमध्य इत्येव भेदः । तवास्मासु सुखकरणं न चित्रम् । यस्मात् संमृक्षितोरुगुल्ममाक्षिकहृद्यवाचः संमृक्षितः संघातीकृतः उरुगुलो माक्षिकं मधु च । ते इव हृद्यवाचो येषां तादृशाः प्रियतराः सपक्षा बन्धवः शुचं तक्षन्ति नाम च्छादयन्ति खलु॥—आस्तृक्षिता इति । तृक्षेः कर्तरि क्तः । नक्षत्रेति । 'अमिनक्षियजि–' इत्यादिना नक्षेस्त्रन् । वक्ष इति । ६६३ वक्ष रोषे । संघात इत्येके । संघातीभवन्त्यस्यीन्यत्रेति असुन् । संमृक्षेति । ६६४ मृक्ष संघाते । म्रक्ष इत्येके । मृक्षेः कर्मणि क्तः । माक्षिकेति । 'पिपीलिकेतिकहृदिकमक्षिकायए' इति भोजेन निपातिता मक्षिका । तस्मात् 'तेन कृतम्' इत्यर्थे अण् । तक्षन्ति । ६६५ तक्ष त्वचने । तच संवरणं त्वचो ग्रहणं वा । ग्रहणमात्रे च द्रुमे । पक्षेत्यप्येके । तक्षेर्लट् । पक्षेति । पक्षेरच् ॥

सूक्ष्ये त्वदीक्षा चिरकाङ्क्षिता नो वाञ्छाम्यमाङ्क्ष्याम्न तु नीचलोकान् ।
द्राक्षां जनो वाञ्छति नो फलानि ध्राङ्क्षद्धुध्वाङ्क्षविचूषितानि ॥ ८५ ॥

---

१. माधवस्तु 'कुन् शिल्पिसंज्ञयोः' इत्यनेन कुनि मक्षिकारूपसिद्धिमाह.

हे सूर्य आदरणीय सखे अक्रूर, त्वदीक्षा नश्वरकाङ्क्षिता। अहममाहृयान् काङ्क्षितुमयोग्यान् नीचलोकान् न तु वाङ्क्षामि द्रष्टुमिच्छामि। जनो द्राक्षां वाञ्छति। ध्राङ्क्षिघोरं शब्दायमानैर्बहुभिर्ध्वाङ्क्षैर्विचूषितानि पीतरसानि फलानि नो वाञ्छति॥—सूर्क्ष्येति। ६६६ सूर्क्ष आदरणे। ण्यत्। काङ्क्षितेति। ६६७ काक्षि ६६८ वाक्षि ६६९ माक्षि काङ्क्षायाम्। काङ्क्षेः कर्मणि क्तः। वाङ्क्षेर्लट्। माङ्क्षेर्ण्यत्। द्राक्षामिति। ६७० द्राक्षि ६७१ ध्राक्षि ६७२ ध्वाक्षि घोरवासिते च। चात् काङ्क्षायाम्। द्राङ्क्षेराकारे द्राक्षा। द्राक्षेति यवादौ निपातनान्नलोपः। ध्राङ्क्षदिति। ध्राङ्क्षेः शता। ध्वाङ्क्षैरिति। ध्वाङ्क्षैरचू। विचूषितानि। ६७३ चूष पाने। कर्मणि क्तः॥

तूषं तनोषि कमलस्य यथैव पूषा
खेदं च मूषसि कृपारसरूषितात्मन्।
शूषन्दृशोरमृतयूषमजूषकस्त्वं
भूषस्यनूषमतिरीषभुजां प्रियः क्ष्माम्॥ ८६॥

हे कृपारसरूषितात्मन् कृपातिशयेन रूषितो रञ्जितः आत्मा मनो यस्य तादृश हे अक्रूर, त्वं तूषं संतोषं तनोषि। पूषा सूर्यः कमलस्य यथा तथा। खेदं मूषसि हरसि च। त्वं क्ष्मां भूषसि अलंकरोषि। कीदृशस्त्वम्। तत्राह—दृशोः पानपात्रभूतयोरमृतयूषं घनीभूतामृतरसं शूषन्नुत्पादयन्। अजूषकोऽहिंसकः। अनूषा अन्येषामपीडाकरा मतिर्यस्य सः। ईषभुजामुञ्छवृत्तीनां प्रियः॥—तूषमिति। ६७४ तूष तुष्टौ। घञ्। पूषेति। ६७५ पूष वृद्धौ। 'श्वन्नुक्षन्–' इत्यादिना कनिनि निपातितः। मूषसि। ६७६ मूष स्तेये। लट्। रूषितेति। ६७७ लूष ६७८ रूष भूषायाम्। रूष आलेपन इत्येके। रूषेः कर्मणि क्तः। शूषन्निति। ६७९ शूष प्रसवे। स चाभ्यनुज्ञा। 'या पीडा भवसापि सीति(?)महती(ता) मौत्सुक्यपीडाविकाम्' इत्यत्र सौतेरुपादानार्थप्रयोगात् उपादानमपि प्रसवः। अस्माच्छता। यूषमिति। ६८० यूष हिंसायाम्। ६८१ जूष च। यूष्यते हिंस्यते पाकेनेति घञि यूषो घनीभूतः क्षीरादिः। अजूषकः। जूषेर्ण्वुल्। भूषसि। ६८२ भूष अलंकारे। लट्। अनूषेति। ६८३ ऊष रुजायाम्। पचाद्यचि नञ्समासः। ईषेति। ६८४ ईष उञ्छे। घञ्॥

इत्युक्तः सुरकापिखापिणमसावूचे जगच्छेपका-
निलं ते जपते झपादिवपुषे रक्षश्चमूशापिणे।
केदयादीन्वपणोत्सुकान्त्रपमते भूयोऽपि रोपिष्यते
रेपोऽन्यान्भपतो नमोऽस्तु कमलाकोष्णस्तनं जोपते॥ ८७॥

---

१. 'शशिते' इति पाठः.

इत्युक्तोऽसौ सुरकाषिणः सुरहिंसाशीलान् असुरान् खपितुं हिंसितुं शीलं यस्य तं श्रीकृष्णमूचे । किमूचे । तत्राह—झपादिवपुषे ते नमोऽस्तु । कीदृशाय । जगतः शेपकान् हिंसकान् नित्यं जपते हिंसते । रक्षश्वम्वाः शापिणे हननलीलाय । वपणे हिंसने उत्सुकान् केश्यादीन् प्रमपते हिंसते । अन्यान् भपतः श्वरवसमशब्दं कुर्वतः पिशुनोक्तिं वा कुर्वतो रेपो हिंसकान् भूयोऽपि रोपिष्यते हनिष्यते । कमलाया लक्ष्म्याः कोष्णस्तनं जोपते सेवमानाय ॥—सुरकापिखापिणमिति । ६८५ कप ६८६ खप ६८७ शिप ६८८ जप ६८९ झप ६९० शप ६९१ वप ६९२ मप ६९३ रुप ६९४ रिप हिंसार्थाः । कषिखप्योर्णिनिः । शिषेर्ण्वुल् । जपेः शता । झपेर्घञर्थे कः । शपेर्णिनिः । वपेर्ल्युट् । मपेः शता । रुपेर्लृटि शता । रिपेः 'अन्येभ्योऽपि दृश्यते' इति विच् । भपतः । ६९५ भप भर्त्सने । तच्चेह श्वरवः । पिशुनोक्तौ च द्रुमे । शता । उष्णेति । ६९६ उप दाहे । 'इणुसिञिदीङुष्यविभ्यो नक्' इति नक् । जेपते । ६९७ जिपु ६९८ विपु ६९९ मिपु सेवने । जिपेः शता ॥

वेपैर्मेप्यतमैः प्रपोपदशुभप्रश्नेपिभिः श्लेपति

प्रोष्यान्प्रुष्टजनान्क्रुपामृतपृपद्वर्षी भवान्दानवान् ।

सामर्पं परघर्षिणोऽपि हृषितास्त्वां नोपयान्त्याहवे

तोसह्रासविहीनशङ्खजनितह्रासाद्रसद्दिक्तटम् ॥ ८८ ॥

भवान् वेपैर्मत्स्यादिरूपैर्दानवान् श्लेपति भस्मीकरोति । कीदृशो भवान् । कृपारूपस्यामृतस्य पृपतं बिन्दुं वर्षितुं शीलं यस्य सः । कीदृशैर्वेपैः । मेप्यतमैः सर्वैरुपास्यतमैः । प्रपोपन्तं वर्धमानमशुभं प्रश्रेपितुं दग्धुं शीलं येषां तैः । कीदृशान् दानवान् । प्रोष्यान् भस्मीकर्तुं योग्यान् । प्रुष्टाः दग्धा जना यैस्तान् । सामर्पं सक्रोधं यथा तथा परान् घर्षितुमभिभवितुं शीलं येषां तेऽपि हृषिताः प्रविहता आहवे त्वां नो उपयान्ति । कीदृशं त्वाम् । तोसस्य शब्दस्य ह्रासेनाल्पतया विहीनो यः शङ्खस्तेन जनितात् ह्रासात् शब्दाद्धेतोः रसन्तः शब्दायमाना दिक्तटा यस्य तम् ॥—वेपैरिति । विपेर्घञ् । मिपेर्ण्यत् । प्रपोपदिति । ७०० पुप पुष्टौ । शता । प्रश्रेपिभिः । ७०१ श्रिपु ७०२ श्लिपु ७०३ प्रुपु ७०४ प्लुपु दाहे । श्रिपेर्णिनिः । श्लिपेः लट् । प्रुपेर्ण्यत् । प्रुपेः कर्मणि क्तः । पृपदिति । ७०५ पृपु ७०६ वृपु ७०७ मृपु सेचने । आद्यौ हिंसाक्लेशयोश्च । मृपु सहने च । मृपु हिंसाक्लेशनयोरित्येके । पृपेः 'वर्तमाने पृपद्बृहत्' इत्यतो निपातितः । वृषेर्णिनिः मृपेर्घञ् परघर्पिणः । ७०८ घृपु संघर्षे । णिनिः । हृपितः । ७०९ हृपु अलीके । तुष्टौ च द्रुमे । कर्तरि क्तः । 'हृषेर्लोमसु' इतीड्विकल्पः । तोसह्रासेति । ७१० तुस ७११ ह्रूस ७१२ ह्लस ७१३ रस शब्दे । ह्रसिरल्पीभावेऽपि । तुसिह्रूस्योर्घञ् । ह्लसेरपि घञ् । रसेः शता ॥

इत्यादिवादिनमजो लसितस्मितस्तं
संवार्य धर्मपथघस्मरदुर्जनोज्जः ।
जीमूतचर्चिरवझर्झरवाद्यहृद्यं
तेनैव चानुपिसितो निलयं पिपेस ॥ ८९ ॥

अज इत्यादिवादिनं त लसितस्मितः सन् सखे अलं स्तुत्वेति संवार्य तेन एवानुपिसितोऽनुगतः सन् निलयं पिपेस प्राप्तवान् । कीदृशोऽजः । धर्मपथघस्मराणां धर्ममार्गनाशकानां दुर्जनानामुज्ज उच्चैर्हिंसकः । कीदृशं निलयम् । जीमूतचर्चि मेघान् तर्जितुं शीलं यस्य तादृशो रवो यस्य तेन झर्झरवाद्येन हृद्यम् ॥—लसितेति । ७१४ लस श्लेषणक्रीडनयोः । शोभायां प्रसिद्धः । कर्तरि क्तः । घस्मरेति । ७१५ घस्ऌ अदने । 'सृघस्यदः क्मरच्' इति क्मरच् । उज्जः । ७१६ उर्ज ७१७ चर्च ७१८ झर्झ परिभाषणहिंसातर्जनेषु । जर्झेः क्विपि 'रात्सस्य' इति संयोगान्तलोपः । 'अत्वसन्तस्य' इति दीर्घस्तु धातुत्वान्न । जीमूतचर्चि । चर्चेः णिनिः । झर्झरः । अनुपिसितः । ७१९ पिसृ ७२० पेसृ गतौ । पिशृ पेशृ इत्येके । पिसेः कर्मणि क्तः । पेसेर्लिट् ॥

भूषापिशङ्गरुचिपेशलमात्ममित्र-
मक्रूरमागतमवेक्ष्य हसन्स नन्दः ।
संभाव्य साधु ससुतो निशि पर्यपृच्छ-
न्मेशोद्धुतारिमशकस्य नृपस्य वृत्तम् ॥ ९० ॥

स नन्द आत्ममित्रमक्रूरमागतमवेक्ष्य साधु संभाव्य हसन् ससुतो निशि नृपस्य वृत्तं पर्यपृच्छत् । कीदृशमक्रूरम् । भूषाणां पिशङ्गया रुच्या पेशलं मनोहरम् । कीदृशस्य नृपस्य । मेशेन कोपेन शब्देन वोद्धुतास्त्यक्ता अरिरूपा मशका येन तस्य ॥—पिशङ्गेति । 'पतेरङ्गच् पक्षिणि' 'विडादिभ्यः कित्' इत्यत्र 'कुरिपिटिमृदिपिशिभ्यः कित्' इति भोजोक्तेः पिशेरङ्गच् पेशलमिति । [औणादिके कलप्रत्यये बाहुलकाद्गुणः ।] हसन्निति । ७२१ हसे हसने । शता । निशीति । ७२२ णिश समाधौ । अधिकरणे संपदादि क्विप् । मेशेति । ७२३ मिश ७२४ मश शब्दे । रोषकृते च । शब्दकोपयोरिति दु-मोत्तया रोपकृतं रोष एव । मिशेर्घञ् । मशकस्य मशेः 'कुञ्ज्युल्लिसशयोः' इति वुन् ॥

१. 'जर्ज झर्झ चर्च एषां चवर्गीयान्तेषु पाठ उचितः । नत्विदोष्मान्तेषु' इति प्रौढमनोरमा ॥ नत्विहेति । केचित्तु—आद्यो दन्त्योपान्तः । द्वावप्यर्थसाम्यात्पठितौ—इत्याहुः ॥ 'मूर्धं स्थायस्यापि चवर्गतृतीयान्तत्वमिति मते चोप्यम्' इति चन्द्रस्वामी ॥ माधवोऽपि—मन्ने झर्झयोस्तुदादौ पठिष्यमाणयोरिह पाठः स्वा(श्व)र्थे इति दोषभेदेषुपुस्तकेषु । ऊष्मान्तेषु पाठोऽयानुरोपादिति मैत्रेयः' इति मन्येनाद्यस्योष्मान्तत्वमभिमिति । 'जर्स' इति पाठे 'अत्वसन्तस्य' इति दीर्घशङ्का स्यात्, 'जर्स' इति पाठे 'रात्सस्य' इत्यलोपभावो स्यात् । इति देश एव विराजन्तु ॥

सोऽप्यूचे शवतां गतस्य शशिवंशोत्थस्य भोजेशितु-
वृत्तं प्रस्तुतमत्र शस्त्रनिलये शस्तं च चापोत्सवम् ।
चाहेनामहितस्य चास्य निधनोद्योगं रहस्यूचिवा-
न्गन्तव्यं खलु रंहसेति च दृढामाज्ञां प्रभोरभ्यधात् ॥ ९१ ॥

सोऽपि भोजेशितुर्वृत्तमत्र शस्त्रनिलये चापोत्सवं प्रस्तुतं चोच उक्तवान् । कीदृशस्य कंसस्य । शवतां गतस्य मृतप्रायस्य शशिवंशादुत्थितस्य जातस्यास्य निधनोद्योगं च रहस्यूचिवान् । चाहेन दम्भेन शाठ्येन चामहितस्यापूजितस्य निन्दितस्य रंहसा गन्तव्यं खलु इति । प्रभोर्दृढामाज्ञामभ्यधात् चाभिहितवांश्च ॥—शवतामिति । ७२५ शव गतौ । अजन्तात्तल् । शशीति । ७२६ शश प्लुतगतौ । अजन्तान्मत्वर्थीय इनिः । शस्त्रेति । ७२७ शसु हिंसायाम् । 'सर्वधातुभ्यः ष्ट्रन्' इत्यौणादिकः ष्ट्रन् । शस्तम् । ७२८ शंसु स्तुतौ । हिंसायामित्येके । कर्मणि क्तः । 'अनिदिताम्' इति नलोपः । चाहेन । ७२९ चह परिकल्कने । घञ् । अमहितः । ७३० मह पूजायाम् । कर्मणि क्तः । रहसि । ७३१ रह त्यागे । रंहसा । ७३२ रहि गतौ । द्वयोरसुन् । दृढाम् । ७३३ दृह ७३४ दृहि ७३५ बृह ७३६ बृहि वृद्धौ । बृहिर् इत्येके । बृहि शब्दे च । स च गजशब्दः । दृहे 'दृढः स्थूलबलयोः' इति निपातितः क्तः ॥

तच्छ्रुत्वा परिदृंहितादरमसौ नन्दो बृहद्धोजनै-
र्यानैरप्युपबृंहितो विहितवान्प्रातः प्रयातुं मनः ।
गोविन्दस्तुहिनांशुरम्यवदनः कंसं जगद्दोहिनं
प्रोहिष्यञ्जगदर्हणीयमहिमा मोदेन निन्ये निशाम् ॥ ९२ ॥

असौ नन्दः परिदृंहितादरं परिवृद्ध आदरो यत्र तथा तच्छ्रुत्वा बृहद्धोजनैर्यानैरप्युपबृंहितः पूर्णः सन् प्रातः प्रयातुं मनो विहितवान् । गोविन्दो जगद् दोहितुं मर्दयितुं शीलं यस्य तादृशं कंसं प्रोहिष्यन्नधिकमर्दयिष्यन् निशां मोदेन निन्ये नीतवान् । जगतामर्हणीयो महिमा यस्य तादृशो गोविन्दः ॥—परिदृंहितेति । दृहेः कर्तरि क्तः । बृहदिति । बृहेः 'वर्तमाने पृषद्बृहद्' इति बृहेरतिर्निपातितः । उपबृंहित इति । बृंहेः कर्तरि क्तः । तुहिनेति । ७३७ तुहिर् ७३८ दुहिर् ७३९ उहिर् अर्दने । 'शेविदुह्योः' इति तुहेरिनच् । जगद्दोहिनमिति । दुहिरो णिनिः । प्रोहिष्यन्निति । उहिरो लृटः शता । अर्हणीयेति । ७४० अर्ह पूजायाम् । योग्यत्वेऽपि । अनीयर् । धुपादय उदात्तेतः शिविवर्जमुदात्ताः ॥

इति सव्याख्याने धातुकाव्ये प्रथमः सर्गः ।

---

द्वितीयः सर्गः।

एवमक्रूरस्य व्रजप्रातिरूपं पूर्वदिनवृत्तान्तमुक्त्वा द्वितीयदिनवृत्तान्तं वक्तुमारभते—

प्रद्योतनस्योदयमाप्य गोपाः श्वेतांशुकोन्मेदुरचारुवेषाः।
अखिन्नरुग्घोटकरुट्यमानमार्गा जवेनालुठिता निरीयुः॥ १॥

गोपाः प्रद्योतनस्योदयमाप्य जवेनालुठिता निरीयुः। प्रद्योतनः सूर्यः। उदयमाप्य लब्ध्वा इत्युदयमात्रस्य लाभत्वेनोक्त्या तेषां प्रस्थाने कौतुकातिशय उक्तः। अलुठिता अप्रतिहताः। कीदृशा इत्यत्राह—श्वेतांशुकेनोच्चैर्मेदुरः स्निग्धः पोषणशीलः चारुर्वेषो येषां ते। अखिन्ना अमुक्ता अगता रुक् शोभा प्रीतिर्वा येषां तैर्घोटकैरश्वैर्भिद्यमानमार्गाः॥— प्रद्योतनस्येति। ७४१ द्युत दीप्तौ। कृपूपर्यन्ता उदात्ता अनुदात्तेतः। अस्माद्युच्। श्वेतेति। ७४२ श्विता वर्णे। पचाद्यच्। उन्मेदुरेति। ७४३ ञिमिदा स्नेहने। 'भञ्जभासमिदो घुरच्'। अखिन्नेति। ७४४ ञिष्विदा स्नेहनमोचनयोः। मोहनयोरित्येके। खिदेः कर्तरि क्तः। रुगिति। ७४५ रुच दीप्तावभिप्रीत्यां च। भावे संपदादिक्विप्। घोटकेति। ७४६ घुट परिवर्तने। ण्वुल्। रुट्यमानेति। ७४७ रुट ७४८ लुट ७४९ लुठ प्रतिघाते। रुठेत्येके। रुटेः कर्मणि शानच्। लुटेः कर्तरि क्तः॥

दुष्टनिग्रहभक्तानुग्रहरूपप्रधानकार्यार्थं भगवतः प्रस्थानमाह—

कृष्णोऽपि तापोल्लुठिताङ्गशोभा आश्वास्य मारक्षुभिता महेलाः।
अनभ्यसंतोभककंसजीवसंस्राय पापध्वदयं प्रतस्थे॥ २॥

अथ कृष्णोऽपि मारेण क्षुभिताश्चलिताः महेला आश्वास्यानभ्यानामहिंस्यानां संतोभकस्य निहन्तुः कंसस्य जीवसस्राय प्राणं शिथिलीकर्तुं त्यक्तुं प्रतस्थे जगाम। पापध्वत् पापनाशकः। तापेनोल्लुठिता प्रतिहताङ्गशोभा यासां ताः। उल्लुठितेति॥—लुठेः कर्मणि क्तः। शोभेति। ७५० शुभ दीप्तौ। घञि टाप्। 'नाम्नि तु पुंस्त्वं प्रायिकम्' इति घञन्तस्यापि स्त्रीत्वम्। क्षुभितेति। ७५१ क्षुभ संचलने। तच्च पूर्वप्रकृतिविपर्यासो मथनं वा। आर्थे कर्तरि क्तः। अन्यत्र कर्मणि। अनभ्यसंतोभकेति। ७५२ णभ ७५३ तुभ हिंसायाम्। नभेः 'पोरदुपधात्' इति यत्। तुभेर्ण्वुल्। संस्रायेति। ७५४ स्रंसु ७५५ ध्वंसु ७५६ भ्रंसु अवस्रंसने। भ्रंशु इत्येके। ध्वंसु गतौ च। अय नाशने प्रसिद्धः। स्रसेर्घञ्। पापध्वदिति। ध्वसेः क्विपि सौ 'वसुस्रंसुध्वसु—' इति दः॥

अभ्रस्तविस्रम्भजुषा बलेन समं प्रवृत्तो भुवनाभिवृद्ध्यै।
अशर्धनैर्गोपकुलैः सहासौ ययौ कृपास्यन्दसुलक्ष्ममोदैः॥ ३॥

असौ गोपकुलैः सह ययौ। अभ्रस्तविस्रम्भजुषा बलेन समं भुवनाभिवृद्ध्यै प्रवृत्तः। अभ्रस्त अशिथिलं दृढं श्रीकृष्णे विस्रम्भं विश्वासं जुषते सेवते इति तथा तेन बलेन।

१. 'पुंभूम्नि चासुषु' इति मेदिनीतो, जीववाचिप्राणशब्दस्य बहुवचनान्तत्वेन 'प्राणान्' इत्युचितम्. २. 'त्याजयितुम्' इत्युचितं प्रतिभाति.

कीदृशैर्गोपकुलैः । अशर्धनैः कुत्सितशब्दमकुर्वाणैः । कृपास्यन्देन कृपामृतप्रवाहेण सम्यक्कृतो मोदो येषां तैः ॥—अश्रस्तेति । श्रंसेः कर्तरि क्तः । विस्रम्भेति । ७५७ स्रम्भु विश्वासे । घञ् । प्रवृत्त इति । ७५८ वृतु वर्तने । कर्तरि क्तः । अभिवृद्धये । ७५९ वृधु वृद्धौ । क्तिन् । अशर्धनैः । ७६० स्पृधु शब्दकुत्सायाम् । युच् । स्यन्देति । ७६१ स्यन्दू प्रस्रवणे । घञ् । सुकृप्तेति । ७६२ कृपू सामर्थ्ये । सामर्थ्यं शक्तिर्योग्यता वा । अन्तर्गतण्यर्थात् कर्मणि क्तः । 'कृपो रो लः' इति कुत्वम् । द्युताद्य उदात्ता अनुदात्तेतः । वृत् । द्युतादयो वृत्ता इत्यर्थः । वृदिति वृतेर्भूते क्विप् ॥

अतिप्रियस्य भगवतः प्रस्थाने गोपीनां वृत्तमाह—

गोपीघटाः प्रव्यथितास्तदानीं पृथूपतापप्रसमानचिन्ताः ।
मृदुस्वभावाः स्खदिताः स्मरास्त्रैः प्रक्षञ्जिते प्राणसमे विपेदुः ॥ ४ ॥

गोपीनां घटाः समूहास्तदानीं प्राणसमे प्रियतमे श्रीकृष्णे प्रक्षञ्जिते गते विपेदुः । कीदृश्यः । प्रव्यथिता भीताः, दुःखिता वा । पृथुनोपतापेन पीडया प्रसमाना वर्धमाना चिन्ता यासां ताः । अतीक्ष्णस्वभावाः । स्मरास्त्रैः स्खदिता विदारिताः ॥—घटा इति । ७६३ घट चेष्टायाम् । क्वचित्संगमादौ । एतदादयः फणान्ता 'घटादयो मितः' इति मितः । आदितस्त्वरान्तानां तु 'घटादयः षितः' इति षित्वम्, अनुदात्तत्वं च । घटेः षित्वात् । 'षिद्भिदादिभ्यः' इति संगच्छन्तेऽत्र समूहिन इत्यधिकरणेऽङ् । प्रव्यथितेति । ७६४ व्यथ भयचलनयोः । दुःखचलनयोरित्येके । कर्तरि क्तः । पृथु इति । ७६५ प्रथ प्रख्याने । विस्तारेऽप्यस्ति । 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' इत्युप्रत्ययः । प्रसमानेति । ७६६ प्रस विस्तारे । शानच् । मृदु इति । ७६७ म्रद मर्दने । म्रदेः प्राग्वदुप्रत्ययः । स्खदिता । ७६८ स्खद स्खदने । विदारणं तत् । ण्यन्तात् कर्मणि क्तः । मित्त्वाद्ध्रस्वः । प्रक्षञ्जितेति । ७६९ क्षजि गतिदानयोः । क्षज इत्येके । क्षञ्जेः कर्तरि क्तः ॥

दक्षापरेणास्तकृपेण तासामकान्दि चेतः कदनैः स्मरेण ।
शरीरमक्रान्दि वचोऽपि वेगादक्लान्दि चक्रे मरणत्वरापि ॥ ५ ॥

स्मरेण तासां चेतः कदनैर्वैक्लवीकरणैः । पीडाभिरिति यावत् । अकान्दि विक्लवीकृतम् । शरीरमक्रान्दि । वचोऽप्यक्लान्दि । उभयत्रापि पूर्ववदर्थः । मरणत्वरापि चक्रे । कीदृशेन । दक्षायां हिंसायां परेण त्यक्तकृपेण ॥—दक्षेति । ७७० दक्ष गतिहिंसनयोः । 'घटादिषु लिङ्गपूर्वपठिताः सर्वदा मितः । बहिःस्थस्येह पाठे तु मित्त्वमुक्तेऽर्थ एव हि ॥' इत्युक्तेर्वृद्ध्यर्थतया प्राक्पठितस्य दक्षेरनयोरर्थयोर्मित्त्वम् । षित्त्वादङ् । कृपेति । ७७१ क्रप कृपायां गतौ च । 'क्रपेः संप्रसारणं च' इति भिदादि पाठात् संप्रसारणमङ् च । अकान्दि । अक्रान्दि । अक्लान्दि । ७७२ कदि ७७३ क्रदि ७७४ क्लदि वैक्लव्ये । वैकल्य इत्येके । त्रयोऽप्यनिदित इत्यन्ये । इदितां कन्दादीनां णिजन्तात् कर्मणि चिणि

['चिण्णमुलो दीर्घोऽन्यतरस्याम्' इति दीर्घः ।] कदनैः । अनिदितः कदेर्ल्युट् । त्वरेति । ७७५ञित्वरा संभ्रमे । पित्वादङ् ॥

गोपीनां वचोवैक्लव्याद्युक्तिं प्रपञ्चयति—

ताः संज्वरन्तीर्गलदश्रुधारा विमोहशक्त्या हिडयन्वियोगः ।

मिथो निजार्तिं वटयांचकार हरेश्च चेष्टा भटयांचकार ॥ ६ ॥

वियोगस्ता विमोहशक्त्या हिडयन् बद्धाः कुर्वन् मिथो निजार्तिं वटयांचकार । हरेश्चेष्टाश्च भटयांचकार । उभयत्र भाषयांचकारेत्यर्थः ॥—संज्वरन्तीः । पीड्यमानाः । गलदश्रुप्रवाहाः । संज्वरन्तीरिति । ७७६ ज्वर रोगे । फणान्ता उदात्ता उदात्तेतः । ज्वरेः शतरि ङीप् । गलदिति । ७७७ गड सेचने । तच्च जलादेः पतनमात्रम् । गडेः शता । हिडयन् । ७७८ हेड वेष्टने । णौ मित्वाद्ध्रस्वः । 'एच इक्' । शता । वटयांचकार । भटयांचकार इति । ७७९ वट ७८० भट परिभाषणे । श्चेट(?) इत्येके । आयर्योणौ लिट् ॥

वियोगवह्निं नटयन्बतान्तर्धृतिं च नः प्रस्तकयन्गतोऽसौ ।

कृष्णः पुरस्त्रीश्चकयेदिदानीं नर्माणि चोक्त्वा कखयेद्रगामः ॥ ७ ॥

गोऽस्माकमन्तर्मनसि वियोगवह्निं नटयंश्चलयन् दीपयन्, धृतिं प्रस्तकयन् प्रतिहतां कुर्वंश्च गतोऽसौ कृष्ण इदानीं पुरस्त्रीश्चकयेत् तर्पयेत् नर्माण्युक्त्वा कखयेत् हासयेच्च । द्वयोः संभावने लिङ् । बतेति खेदे । इति वयं रगामः शङ्कामहे ॥—नटयन्निति । ७८१ णट नृत्तौ । पूर्वं नटव्यापारेऽयं धातुरुक्तः । अत्र तु नर्तनव्यापारश्चलनादिश्च नृत्तिः । तत्र मित्त्वम् । णट गताविसेके । नतावित्यन्ये । प्रस्तकयन् । ७८२ ष्टक प्रतिघाते । द्वयोर्णौ शता । चकयेत् । ७८३ चक तृप्तौ । कखयेत् । ७८४ कखे हसने । द्वयोर्लिङ् । रगामः । ७८५ रगे शङ्कायाम् । लट् ॥

श्रीकृष्णविरहदुःखं छादयितुमशक्ता काचिदाह—

लग्नं हृदन्ते ह्रगये कथं वा रागं कथं नु ह्लगयामि तापम् ।

असग्यमास्रं स्थगये कथं वा कगामि किंवा हरयेऽकिताय ॥ ८ ॥

अहं हृदन्ते लग्नं सक्तं रागं कथं वा ह्रगये च्छादयामि । तापं च कथं नु ह्लगयामि छादयामि । असग्यं छादयितुमशक्यमास्रमश्रुजालं कथं वा स्थगये च्छादयामि । रागतापयोरन्तःस्थत्वेनादृश्यत्वेऽपि तदुद्गतासोद्गमो दुर्वार एवेति भावः । अकिताय कुटिलं गताय व्याजेन प्रस्थिताय हरये हरिं प्राप्तुं किं वा कगामि करोमि । न किंचिदपि कर्तुं शक्यमित्यर्थः ॥—लग्नमिति । ७८६ लगे सङ्गे । 'क्षुब्धस्वान्तध्वान्त—' इत्यादिना क्तान्तो निपातितः । ह्रगये । ह्लगयामि । ७८७ ह्रगे ७८८ ह्लगे ७८९ षगे ७९० ष्टगे संवरणे । तच्चात्र तिरोधानमेव । स्थगेर्ण्यन्तस्य तिरोधापनार्थदर्शनात् । आयर्योर्णौ लट् । असग्यम् । सगेर्णौ ण्यत् । स्थगये । स्थगेर्णौ लट् । कगामि । ७९१ कगे नोच्यते ।

क्रियासामान्यार्थत्वादनेकार्थत्वाच्च 'अस्त्रायमर्थः' इति नोच्यते । नोच्यत. इत्यवचनमर्थं इत्यन्ये । अस्माल्लट् । अकिताय । ७९२ अक ७९३ अग कुटिलायां गतौ । अकेः कर्तरि क्तः ॥

पीडातिशयादक्रूरं शपन्ति—

अगन्मनीषः कणयन्मुकुन्दमस्मान्वियोगं रणयन्स दूतः ।

चणन्विषादं विशणन्विचिन्तां श्रणन्विमोहं श्रथितोऽस्तु सद्यः ॥ ९ ॥

मुकुन्दं कणयन् गमयन् । हेतौ शता । तस्माद्धेतोः । अस्मान् वियोगं रणयन् प्रापयन्। तत एव विषादं चणन्, विचिन्तां विशणन्, विमोहं श्रणन् । त्रिषु प्रयच्छन्नित्यर्थः । अस्तम्यमित्यर्थात् । स दूतः सद्यः श्रथितो हिंसितोऽस्तु । कीदृशः । अगन्ती कुटिलीभवन्ती मनीषा यस्य सः ॥—अगदिति । अगेः शता । कणयन् रणयन्निति । ७९४ कण ७९५ रण गतौ । द्वयोर्णौ शता । चणन् विशणन् श्रणन्निति । ७९६ चण ७९७ शण ७९८ श्रण दाने च । एषां शता । श्रथितः । ७९९ श्रथ ८०० श्लथ ८०१ क्नथ ८०२ क्रथ हिंसार्थाः । श्रथेः कर्मणि क्तः ॥

सर्वरक्षिणो भगवतः स्वरक्षादोषमाशङ्क्य परिहरन्ति—

[1]श्लथ्यात्मनां क्राथयताच्युतेन किं नाङ्गजो नः क्नथयन्नचालि ।

वनाम किं प्रज्वलितो हरेण सोऽद्यापि यद्विह्वलयन्ननङ्गः ॥ १० ॥

श्लथ्यात्मनां हिंस्यस्वरूपान् क्राथयता । 'जासिनिप्रहण–' इति कर्मणि षष्ठी । अच्युतेन नोऽस्मान् क्नथयन् हिंसन् अङ्गजः किं न अचालि कस्मान्न हिंसितः । हरेण प्रज्वलितः सोऽनङ्गोऽद्यापि विह्वलयति यत् यस्मात् तस्मात् किं वनाम करवाम । न किंचित् ॥—श्लथेर्ण्यत् । क्राथेर्णिजन्ताच्छता । 'जासिनिप्रहणनाटक्राथ–' इति निपातनाद्वृद्धिः । क्नथेर्णौ शता । श्लथादीनां णिजन्तानामपि हिंसामात्रमर्थः । जास्यादिसूत्रे हिंसायामित्युक्तेः । 'हन्त्यर्थाश्च' इति चुरादिपाठाद्वा । अचालि । चल च । हिंसार्थ इति शेषः । अस्मान्नी णिच् । वनाम । ८०३ वनु च नोच्यते । कणिमद्यमपि क्रियासामान्यार्थ इत्यर्थः । अस्माल्लोट् । प्रज्वलितः । ८०४ ज्वल दीप्तौ । णौ कर्मणि क्तः । विह्वलयति । ८०५ ह्वल ८०६ ह्मल चलने । ह्वलेर्णौ लट् ॥

भगवतो बाल्यकृत दुर्ललितलसभ्यादिदुर्विस्मरमित्याह—

प्र(अ)ह्मल्यनिन्तां स्मरयत्यसौ मां नन्दात्मजः संदरकः सद्मनाम् ।

अनादि येन श्रपितं पयोऽपि बालैर्मुहुः संनपितामुरेण ॥ ११ ॥

असौ नन्दात्मजो मां स्मरयति स्रोतकण्ठं ध्यापयति । सद्मना संदरको भीषयिता ।

---

१. अत्र पुस्तकद्वयेऽपि सर्वत्र 'श्लथ्यात्मना' इति पाठः. अथवछेलनाति इति पाठः.

प्र(अ)श्लत्यं चलयितुमशक्यं चित्तं यस्यास्ताम् । येन श्रपितं पक्कं पयोऽपि वाटैः प्रयोज्यैः कर्षैभिरनारि नायितम् । मुहुरिति काकाक्षिवदुभयत्रान्वेति । मुहुः संज्ञपिता मारिता असुरा येन तेन ॥—प्र(अ)श्लत्येति । श्लथेर्णौ ण्यत् । स्मरयति । ८०७ स्मृ आध्याने । सोत्कण्ठस्मरणं तत् । णौ लट् । संदरकः । ८०८ दृ भये । णौ ण्वुल् । अनारि । ८०९ नॄ नये । णौ चिण् । श्रपितम् । ८१० श्रा पाके । पाको विक्लित्तिः । श्रायतिश्रात्योर- त्रिमर्थे मित्वं णौ कर्मणि क्तः । संज्ञपितेति । मारणतोषणनिशामनेषु ८११ ज्ञा । निशा- मनं प्रदर्शना । निशातेष्विलेके । मारणार्थे कर्मणि क्तः ॥

तापशान्तावन्योपायं संभावयन्ति—

तनेव किं विज्ञपयेम मारं येनाच्युतं मज्ञपयेन्न बाणान् ।

करे सरोजं चलयन्न चाल्यः स किं मुरारिश्छदयेत्पुनर्नः ॥ १२ ॥

वयं तं मारमेव विज्ञपयेम तोषयेम । किम् । येन तोषणेनासावच्युतं प्रज्ञपयेत् प्रदर्श- येत् । बाणान् न प्रज्ञपयेत् निशातयेत् । स मुरारिर्लीलया करे सरोजं चलयन् नः छद- येत् किं प्राणनं वा कुर्यात् । अचाल्याः भावादन्यथाकर्तुं अन्यत्र हर्तुं नेतुं स्वाचिन्तितं क्षेप्तुं निरसितुं च वा न शक्याः ॥—विज्ञपयेदिति । तोषणे णिचि लिङ् । प्रज्ञपयेदिति । निशामननिशातनयोः । चलयन्निति । कम्पने । ८१२ चलिः । णौ शता । अचाल्यः । कम्पनादन्यत्र मित्वाभावे णिजन्ताण्ण्यत् । अन्यथाकरणं हरणं क्षेपो वा तत्रार्थाः । छद- येत् । ८१३ छदिर् ऊर्जने । पटनं प्राणनं वा तत् । छदेर्णौ लिङ् ॥

भगवतो दर्शनमेव प्रार्थयन्ते—

यद्वर्णने को लडयेन्न जिह्वां भक्तांश्च दुष्टान्मदयत्यलं यः ।

दृश्येत वेणुं ध्वनयन्कदा वा स नन्दसूनुः स्वनयन्कलापम् ॥ १३ ॥

यद्वर्णने को जिह्वां न लडयेत् क्षोभयेत् । यो भक्तान् दुष्टांश्चालं मदयति अत्यर्थं हर्षयति दैन्यति च । स नन्दसूनुर्वेणुं ध्वनयन् शब्दयन् कलापं स्वनयन् अवतंसीकुर्वन् कदा वास्माभिर्दृश्येत ॥—लडयेदिति । जिह्वोन्मथने ८१४ लडिः । उन्मथनं क्षोभणम् । तच्च जिह्वायाः । जिह्वायाः क्षोभणं वा । जिह्वायाः क्षोभणार्थे णिचि लिङ् । मदयति । ८१५ मदी हर्षग्लेपनयोः । ग्लेपनं दैन्यम् । लट् । ध्वनयन् । ८१६ ध्वन शब्दे । णौ शता । स्वनयन् । ८१७ स्वन अवतंसने च । चाच्छब्दे । णौ शता ॥

दर्शनप्रकार एव प्रार्थ्यते—

दलं दलं धैर्यभरं कटाक्षान्वलं वलं प्रस्खलयन्मनो नः ।

श्रपं श्रपं नर्मगिरा विषादं क्षपं क्षपं किं जनयेत्स मोदम् ॥ १४ ॥

मनः प्रस्खलयन् चलयन् स श्रीकृष्णः कटाक्षान् वलं वलं पुनः पुनः संचारयन् धैर्यस्य भारमतिशयं दलं दलं पुनः पुनर्विदारयन् नर्मगिरा श्रपं श्रपं पुनः पुनर्दग्धयन् विषादं

क्षपं क्षपं पुनः पुनर्विनाशयन् नो मोदं जनयेत् किम् ॥—दलं दलमित्यादिचतुर्षु 'दलि-वलि-स्खलि-त्रपि-क्षपयश्च' इति भोजोक्त्या मित्त्वे ण्यन्तादाभीक्ष्ण्ये णमुल् । 'नित्यवीप्सयोः' इति द्विरुक्तिः । 'चिण्णमुलो दीर्घोऽन्यतरस्याम्' इति दीर्घाभावे रूपम् । प्रस्खलयन् । स्खलेर्णौ शता । जनयेत् । घटादयो मितः । 'जनी-जॄष्-क्नसु-रञ्जोऽमन्ताश्च' इति णौ मित्त्वे जनेर्लिङ् ॥

श्रीकृष्णेन पूर्वं सुखितत्वादिदानीं पीडाधिक्यमित्याहुः—

वाग्भिर्विशङ्कां विजरय्य मारं परिक्नसय्य स्नसितत्रपेण ।
अराञ्जि येनाभिरमय्य गूढं वधूजनः स ज्वलयत्यलं नः ॥ १५ ॥

स्नसितत्रपेण । स्नसिता निरस्ता त्रपा येन तादृशेन । येन वाग्भिर्विशङ्कां विजरय्य नाशयित्वा मारं परिक्नसय्य दीपयित्वा वर्धयित्वा गूढमभिरमय्य वधूजनोऽराञ्जि रञ्जितः स श्रीकृष्णोऽस्मान् अलं ज्वलयति संतापयति ॥—विजरय्य । जॄषो णिजन्ताल्ल्यप् । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । परिक्नसय्य । क्नसेः प्राग्वत् ल्यप् । स्नसितेति । 'जनीजॄष्क्नसु—' इति पाठे णिजन्तात् कर्मणि क्तः । अराञ्जि । रञ्जेर्णौ चिणि 'चिण्णमुलोः—' इति दीर्घः । अभिरमय्य । अमन्ताण्णिचि प्राग्वत् ल्यप् । ज्वलयति । 'ज्वल-ह्वल-ह्मल-नमामनुपसर्गाद्वा' इति मित्त्वविकल्पान् मित्त्वपक्षे णिचि लट् ॥

हा ज्वालयन्ति ह्वलयन्ति चित्तमह्वाल्यवैरिह्मलकस्य लीलाः ।
अह्मालितात्मा नमयन्ननाम्यान्स ग्लापयत्यग्लपकः कुतो नः ॥ १६ ॥

अह्वाल्यवैरिह्मलकस्याक्षोभणीयशत्रुक्षोभकस्य तस्य लीलाश्चित्तं ज्वालयन्ति तापयन्ति, ह्वलयन्ति क्षोभयन्ति च । हा कष्टमह्मालितात्माक्षोभितमनाः । अनाम्यान् प्रह्वीकर्तुमशक्यान् नमयन् । अग्लपकोऽपीडकः स कुतो हेतोर्नो ग्लापयति पीडयति ॥—ज्वालयन्तीति । ज्वलेरमित्त्वे लट् । ह्वलयन्ति । ह्वलेर्मित्त्वे लट् । अह्वाल्येति । ह्वलेरमित्त्वे ण्यत् । ह्मलकस्य । ह्मलेर्णौ मित्त्वे ण्वुल् । अह्मालितेति । अमित्त्वे कर्मणि क्तः । नमयन् । अनाम्यान् । नमेः शतृण्यतौ । ग्लापयति । अग्लपकः । 'ग्ला-स्ना-वनु-वमां च' इति मित्त्वविकल्पे ग्लाधातोर्लिण्वुल् च ॥

भगवतो जलक्रीडादिषु स्वाभिमतसिद्धिं बकवधाद्यद्भुतकर्म चानुस्मृत्य तस्मिन्नेव मनो लीयत इत्याहुः—

यः स्नाप्यमानः स्नपयंस्तथास्मान्कृत्स्नं च वान्यं वनयन्नरंस्त ।
अवामयत्संवमितास्रजाग्रो बकेन तं कामयते मनो नः ॥ १७ ॥

योऽस्माभिः स्नाप्यमानः सिच्यमानोऽस्मान् स्नपयन् प्रतिषिञ्चन् कृत्स्नं वान्यमस्माभिः कारयितव्यं बहु कर्म वनयन् कारयंश्चारंस्त क्रीडितवान् । यो वमितास्रजा छर्दितरक्तेन बकेनावामयत् छर्दयामास तं नो मनः कामयते ॥—स्नाप्यमानः स्नपयन्निति । स्नाधातोर्णौ शानच्शतृ च । वान्यं वनयन्निति । वनेर्ण्यच्छतृ च । अवामयत् वमितेति ।

चमेर्णौ लङ्। कर्मणि क्थ। कामयते इति। 'न कम्यमिचमाम्' इत्यमित्त्वे णि- ङि वृद्धिः॥

दर्शनमेव प्रार्थयमाना विरमन्ति—

तमामयन्तं द्विपतस्तृणं गाः प्रचामयन्तं क्व निशामयेयम्।
निशम्यया मञ्जुगिरा कदा नः स यामयेद्वा यमनादिकार्ये॥ १८ ॥

तं क्व काले देशे वा निशामयेयं पश्येयम्। कीदृशं तम्। द्विपत आमयन्तं पीडयन्तम्। गास्तृणं प्रचामयन्तमादयन्तम्। स निशम्यया श्राव्यया मञ्जुगिरा कदा नो यमनादिकार्ये परिवेषणादिकर्मणि यामयेत् व्यापारयेत्॥—आमयन्तमिति। अमेर्णिचि शतरि मित्त्वाभावे दीर्घः। प्रचामयन्तमिति। चमेः प्राग्वत्। निशामयेयमिति। ८१८ 'शमो दर्शने' इत्यमित्त्वे णौ लिङ्। निशम्यया। अदर्शनार्थत्वेन मित्त्वे णिचि ण्यत्। यामयेत्। ८१९ 'यमोऽपरिवेषणे' इत्यमित्त्वे णौ लिङ्। व्यापारणात्रार्थः। यमनेति। परिवेषणार्थे णौ मित्त्वे ल्युट्॥

उक्तं गोपीविलासमुपसंहरति—

इत्याद्यवस्त्रादितमानसास्ता बालाः परिस्त्रादितधैर्यबन्धाः।
दुष्टानपस्त्रादयितुं प्रयाते कृष्णे विलेपुः फणिता विमोहम्॥ १९ ॥

कृष्णे दुष्टानपस्त्रादयितुं विदारयितुं प्रयाते सति। ता बाला विमोहं फणिताः प्राप्ता इत्यादि विलेपुः। कीदृश्यः। अवस्त्रादितं विदारितं मानसं यासां ताः। परिस्त्रादितो नाशितो धैर्यबन्धो यासां ताः॥—अवस्त्रादितेति। ८२० 'स्त्रदिर् अवपरिभ्यां च' इति मित्त्वनिषेधाण्णिचि दीर्घे कर्मणि क्तः। परिस्त्रादितेति तद्वत्। अपस्त्रादयितुमिति। 'अपावपरिभ्यश्चेत्येके' इत्यपात् परस्य स्त्रदेरमित्त्वे णिचि तुमुन्। फणिता इति। ८२१ फण गतौ। कर्तरि क्तः। इत् घटादिरितः। ज्वरादय उदात्ता उदात्तेतः॥

प्रस्थितस्य भगवतः श्रीकृष्णस्यावस्थामाह—

कृष्णोऽपि रेजे पथि गोपबालैर्भ्राजिष्णुभिर्भ्राशितपार्श्वदेशः।
विभ्लाशितेऽक्रूररथे सरामः स्यमत्पयोदस्वनभाजि तिष्ठन्॥ २० ॥

कृष्णोऽप्यक्रूररथे सरामस्तिष्ठन् पथि रेजे। भ्राजिष्णुभिः शोभनशीलैर्गोपबालैर्भ्राशितपार्श्वदेशः शोभितपार्श्वभागः। स्यमत्पयोदस्य शब्दायमानमेघस्य स्वनमिव स्वनं भजत्याश्रयति यस्तस्मिन् रथे॥—रेजे इति। ८२२ राजृ दीप्तौ। उदात्तः स्वरितेत्। अस्मात्लिटि 'फणां च सप्तानाम्' इत्येत्वाभ्यासलोपविकल्पः। ८२३ टुभ्राजृ ८२४ टुभ्राशृ ८२५ टुभ्लाशृ दीप्तौ। उदात्ता अनुदात्तेतः। भ्राजेः 'अलंकृञ्-' आदिना ताच्छील्ये इष्णुच्। भ्राशितभ्लाशितेति। द्वयोः कर्मणि क्तः। स्यमदिति। ८२६ स्यमु ८२७ स्वन ८२८ ध्वन शब्दे। क्षमान्ता उदात्ता अनुदात्तेतः। स्यमेः शता। स्वनेति 'स्वनहसोर्वा' इत्यप्। स्वनान्ताः सप्त फणादयः॥

गोपैर्ध्वनद्भिः समितैर्वृतोऽपि देवो न तस्ताम विचिन्त्य गोपीः ।
ज्वालेन तापेन चला जडाङ्गीरटालशोकट्वलितप्रतापाः ॥ २१ ॥

ध्वनद्भिः शब्दायमानैः समितैरविक्लवीभवद्भिर्गोपैर्वृतोऽपि देवो गोपीर्विचिन्त्य न तस्ताम अविक्लवीबभूव पीडित एवासीत् । ज्वालेन दीप्तेन तापेन संतापेन चलाः कम्पिताः । जडान्यसमर्थान्यङ्गानि यासां ताः । अटालेन पूर्णेन शोकेन ट्वलिता विक्लीभूताः प्रलापाः यासां ताः ॥—ध्वनद्भिरिति । ध्वनेः शता । समितैः । ८२९ षम ८३० ष्टम अवैक्लव्ये । समेः कर्तरि क्तः । तस्ताम । स्तमेर्लिट् । ज्वालेन । ८३१ ज्वल दीप्तौ । 'ज्वलितिकसन्तेभ्यः' इति णः । चलाः । ८३२ चल कम्पने । पचाद्यच् । जडेति । ८३३ जल धान्ये । धान्यमतैक्ष्ण्यम् । अच् । लडयोरभेदात् । अटालेति । ८३४ टल ८३५ ट्वल वैक्लव्ये । टलेर्णः । ट्वलेः कर्तरि क्तः ॥

स्थलीर्हली सन्नलिनीश्च तीर्त्वा पलन्हरिश्चात्मबलप्रपोलः ।
कुलीरशालह्वलिताम्बुपूरझलत्पतङ्गां यमुनामवासौ ॥ २२ ॥

पलन् हरिर्हली चोभौ स्थलीः सन्नलिनीश्च तीर्त्वा यमुनामवासौ । पलन् गच्छन् । स्थलीरकृत्रिमदेशान् । अवासौ प्राप्तौ । आत्मबलेन स्वबलेन प्रपोलो महान् । कुलीराणां कर्कटकानां शालेन गमनेन ह्वलिते चालिते अम्बुपूरे जलपूरे झलन्तो गच्छन्तः पतङ्गाः पक्षिणो यस्यां तां यमुनाम् ॥—स्थलीरिति । ८३६ ष्ठल स्थाने । अस्मादचि स्थलम् । स्थलशब्दात् 'जानपदकुण्डगोणस्थल—' इत्यादिना अकृत्रिमार्थे ङीपि स्थली । हलीति । ८३७ हल विलेखने । कर्षणं तत् । अचि हलं तस्मात् 'अत इनि' इतीनिः । नलिनीरिति । ८३८ णल गन्धे । बन्धन इत्येके । अस्मात् 'बहुलमन्यत्रापि' इति कठिनादिनधि नलिनम् । तस्मादिनौ ङीप् । पलन् । ८३९ पल गतौ । शता । बलमिति । ८४० बल प्राणने धान्यावरोधने च । धान्यावरोधनं कुसूलादिव्यापारः । अस्मादचि बलम् । प्रपोल इति । ८४१ पुल महत्त्वे । ज्वलादिणः । कुलीरेति । ८४२ कुल संस्त्याने बन्धुषु च । सतान इत्येके । संस्त्यानं संघातः । अस्मात् संघाती भवतीति 'कुलेश्च मोजः' इतीरक् । शालेति । ८४३ शल [ह्वल झल] ८४४ हुल ८४५ पत्ल गतौ । शलेर्घञ् । ह्वलितेति । ह्वलेः कर्तरि क्तः । झलदिति । झलेः शता । पतङ्गेति । 'पतेरङ्गच् पक्षिणि' इत्यङ्गच् ॥

यमुनां वर्णयति षड्भिः—

अहोलसत्त्वा रविरश्मिजालेऽप्यविक्रथन्ती तटपायिपाथाः ।
तापं मथन्ती कणिका वमन्ती भ्राम्यत्तरङ्गा क्षरति स्फुटं या ॥ २३ ॥

---

१. धातुपाठे तु 'घातने' इति पाठः. २. स्थलेति धातुपाठपाठः. ३. 'ह्वलतेर्झलतेश्च घटादिपठितत्वेऽह पाठो णविकल्पार्थः. घटादिपाठस्त्वर्थविशेषे मित्त्वार्थः इति बोद्धव्यम्' इति माधवग्रन्थानुरोधेन ह्वलझलौ पठितौ इति बोध्यम्.

या भ्राम्यत्तरङ्गा स्फुटं क्षरति। भ्राम्यन्तश्चलन्तस्तरङ्गा यस्यां सा क्षरति प्रवहति। अहोलसत्त्वा अहोलान्यहिंसकानि सत्त्वानि जलजन्तवो यस्यां सा रविरश्मिजालेऽप्यविक्कथन्त्यपच्यमानानुष्णीभवन्तीत्यर्थः। तटपाथिपाथाः तटं पथितुं गन्तुं शीलं यस्य तादृशं पाथो यस्याः सा। तापं मथन्ती क्षोभयन्ती त्यजन्ती। कणिकाः बिन्दून् वमन्ती उद्गिरन्ती॥—अहोलेति। हुल हिंसासंवरणगतिषु इत्येके। अस्माण्णः। अविक्कथन्ती। ८४६ कथे निष्पाके। शतरि ङीप्। तटपाथि। ८४७ पथे गतौ। णिनिः। असुन्नपि। मथन्ती। ८४८ मथे विलोडने। शतरि ङीप्। वमन्ती। ८४९ टुवमु उद्गिरणे। भ्राम्यदिति। ८५० भ्रमु चलने। 'वा भ्राशभ्लाश—' इति श्यनि शता। क्षरति। ८५१ क्षर संचलने। गलनं तत्। 'क्षर संचये' इति चैके। चलने च द्रुमे। समादय उदात्ता उदात्तेतः॥

सेहे च रामाजनखेलनं या कुचोरुसीदत्परिशद्गुतोया।

क्रोशैर्जनाः कोचगलान्मरालान्बोधन्ति यत्राम्बुरुहां विकासे॥ २४॥

या रामाजनखेलनं सेहे च। खेलनं क्रीडा। भगवत्क्रीडासुखमनुभूतवती। चेति चकारस्या[पि]र्थः। कुचोरुसीदत्परिशद्गुतोया कुचोरुभिः स्तनसक्थिभिस्तदाघातेन सीदत् पीड्यमानं परिशद्गु विशरणशीलं तोयं यस्यां सा इति लीलाया असह्यत्वे हेतुः। जना यत्राम्बुरुहां पद्मानां विकासे क्रोशै रोदनैः सव्याहानशब्दैर्वा मरालान् हंसान् कोचगलान् कुटिलीभवत्कण्ठान् बोधन्ति जानन्ति॥—सेहे इति। ८५२ षह मर्षणे। उदात्तोऽनुदात्तेत्। लिट्। रामेति। ८५३ रमु क्रीडायाम्। उदित्त्वमस्यानार्षम्। अनुदात्तोऽनुदात्तेत्। अस्माण्णे टाप्। सीददिति। ८५४ षद्लृ विशरणगत्यवसादनेषु। शतरि 'पाघ्राध्मा—' इति सीदादेशः। परिशद्रु इति। ८५५ शद्लृ शातने। तीक्ष्णीभावस्तत्। विदीर्णतायामित्येके। गतावप्यस्ति। 'दाधेट्सिशदसदः' इति रुः। क्रोशैः। ८५६ क्रुश आह्वाने रोदने च। घञ्। सदादयोऽनुदात्ता उदात्तेतः। कोचेति। ८५७ कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। अस्माण्णः। ८५८ बुध अवगमने। उद्बोधश्चानेऽस्यार्थो विलयमकर्मकः सकर्मकश्च। अस्माल्लट्। अम्बुरुहामिति। ८५९ रुह बीजजन्मनि। अस्मात् क्विप्। विकास इति। ८६० कस गतौ। विपूर्वत्वात् स्फुटनार्थता। अस्माद् घञ्॥ कुचादय उदात्ता उदात्तेतो रुहिवर्जम्॥

हिक्कद्भिर्क्कोशैः सुखमध्यमानैर्भृङ्गैरचद्भिर्मधु याचमानैः।

रेटत्तटा या खलु चातकैश्च चायं जलं प्रोथति दातुमुर्व्याम्॥ २५॥

या खलु चातकैरपि चायं प्रार्थनीयं जलं कणरूपं दातुमुर्व्यां प्रोथति पर्याप्नोति समर्था भवति। हिक्कद्भिर्जातिस्वभावप्राप्तमव्यक्तशब्दं कुर्वाणैः सुखं यथा तथाचमानैस्ततस्ततः संचरद्भिश्च। एतद्वयमृक्षविशेषणम्। अचद्भिर्याचमानैः मधु पुष्परसं याचमानैरिव च। एतद्वयं भृङ्गविशेषणम्। तादृशैर्ऋक्षैर्भृङ्गैश्च रेटत्तटा तन्नाद्यमानतटा। अनेन यमुनायाः सर्वजन्तूनां सुखकरत्वमुपकारित्वं चोक्तम्॥—हिक्कद्भिरिति। ८६१

हिक्क अव्यक्ते शब्दे । शता । अञ्चमानैः । अचद्भिः । ८६२ अञ्चु गतौ याचने च । अचु इत्येके । अचु गताविलन्ये । अञ्चेः शानच् । अचेः शता । याचमानैः । ८६३ टु याचृ याच्ञायाम् । डु याचृ इत्येके । शानच् । रेटदिति । ८६४ रेटृ परिभाषणे । याचने च द्रुमे । शता । चातकैः । ८६५ चते ८६६ चदे याचने । चतेण्वुल् । चायम् । चदेर्ण्यत् । प्रोथति । ८६७ प्रोथृ पर्याप्तौ । अयं शब्दार्थोऽपि । अपपूर्वस्तु मारणे हुंकरणे वा । अस्माल्लट् ॥

यमुनाया अतिपुण्यत्वं शैत्यातिशयं चाह—

नित्यं प्रमोहामिदितोरुमेदैः प्रमेधिता सद्भिरनिद्यमानैः ।
या नेदितोर्वीपरिशर्धिवीचीविमृद्धवृक्षादिविवोध्यशैत्या ॥ २६ ॥

या सद्भिर्नित्यं प्रमेधिता संगता । प्रमोहेणामिदितोऽपीडित उरुमेदो मेधा येषां तैः सद्भिः । अनिद्यमानैरकुत्स्यमानैः । नेदितोर्वी नेदितां समीपभूतामुर्वी भुवं परिशर्धितुमुन्दितुं सेक्तुं शीलं यासां ताभिर्वीचीभिर्विमृद्धैरुन्दितैर्वृक्षादिभिर्विबोध्यं शैत्यं यस्याः सा ॥—अमिदितेति । ८६८ मिदृ ८६९ मेदृ मेधाहिंसनयोः । मिथृ मेथृ इत्येके । मिधृ मेधृ इत्यन्ये । ८७० मेधृ संगमे च । मिदेः कर्मणि क्तः । अनिद्यमानैः । ८७१ णिदृ ८७२ णेदृ कुत्सासंनिकर्षयोः । निदेः कर्मणि शानच् । नेदितेति । नेदेः कर्तरि क्तः । परिशर्धि, विमृद्ध इति । ८७३ शृधु ८७४ मृधु उन्दने । शृधेर्णिनिः । मृधेः कर्तरि क्तः । विबोध्येति । ८७५ बुधिर् बोधने । तत्तु ज्ञानमेव । अस्माण्ण्यत् ॥

प्रबुन्ध्यवेणीजववेनमाना खातान्तिका चीवरिभिर्निषादैः ।
चाय्या व्ययद्दाशविलोकभेपभ्रेपज्झषा यासदयं स्पशन्ती ॥ २७ ॥

या भयं स्पशन्ती परिहरन्ती आसदशोभत । प्रबुन्ध्येन दर्शनीयेन वेणीजवेन प्रवाहवेगेन सह वेनमाना गच्छन्ती । चीवरिभिः पटचरवद्भिर्निषादैः खातान्तिका । चाय्या पूज्या । दर्शनीया वा । व्ययतां गच्छतां दाशानां विलोकेन यो भेपो भयं तेन भ्रेपन्तः सचरन्तश्चलन्तो झषा यस्यां सा ॥—प्रबुन्ध्येति । ८७६ उबुन्दिर् निशामने । दर्शनं तत् । ण्यत् । वेणीति । ८७७ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेनृ इत्येके । वादित्रग्रहणं वाद्यानां वादनार्थमादानम् । अस्मादौणादिके इनि 'कृदिकारादक्तिनः' इति ङीष् । वेनमाना । वेनेः शानच् । खातेति । ८७८ खनु अवदारणे । कर्मणि क्तः । चीवरिभिः । ८७९ चीवृ आदानसंवरणयोः । अनुदित्तित्येके । अस्मादुणादौ 'चित्वरच्छत्वर—' इत्यादिना निपातितश्चीवरशब्दः । अत इनिः । चाय्या । ८८० चायृ पूजानिशामनयोः । ण्यत् । व्ययदिति । ८८१ व्यय गतौ । शता । वित्तत्यागे तस्य नित्वं तद्वेन । दाशेति । ८८२ दाशृ दाने । 'दाशगोघ्नौ संप्रदाने' इत्यच् । भेपेति । ८८३ भेपृ भये । अगताविस्येके । पच् । भ्रेपदिति । ८८४ भ्रेपृ गतौ । भ्लेपृ इत्येके ।

८८५ श्लेषृ इत्यन्ये। श्रेषः शता। आसदिति। ८८६ अस गतिदीप्त्यादानेषु। अष इत्येके। असेर्लङ्। स्पशन्ति। ८८७ स्पश बाधनस्पर्शनयोः। पशेत्येके। पषेत्यन्ये। हिंसार्थे दोषसूचनं स्पशनम्। स्पशेः शतरि ङीप्॥

लापेण चाषांश्छपिताञ्झपित्वा प्रम्लक्ष्य भक्षन्ति यदम्बु नीचाः।
या दासते मोदममाह्यधाम्नां गूढाशयानामपि तापसानाम्॥ २८॥

नीचाश्छपितान् हिंसितांश्चाषान् वनकाकान् लापेणेच्छया झपित्वा आदाय संवृत्य च प्रम्लक्ष्य भक्षयित्वा यदम्बु यस्या जलं भक्षन्ति पिबन्ति। या तापसानामपि मोदं दासते ददाति। अमाह्यममेयं धाम येषां तेषाम्। गूढो गुप्त आशयो येषां तेषाम्। अनेन नीचानामुत्तमानां च सुखकरत्वमुक्तम्॥—लापेणेति। ८८८ लप कान्तौ। कान्तिरिच्छा। घञ्। चाषान्। ८८९ चष भक्षणे। कर्मणि घञ्। छपितान्। ८९० छप हिंसायाम्। कर्मणि क्तः। झपित्वा। ८९१ झप आदानसंवरणयोः। क्त्वा। प्रम्लक्ष्य। ८९२ म्लक्ष अदने। ८९३ म्रक्ष इत्येके। भक्षेत्यन्ये। म्लक्षेत्यपरे। भक्षन्ति। भक्षेर्लट्। दासते। ८९४ दासृ दाने। लट्। अमाह्येति। ८९५ माहृ माने। ण्यत्। गूढेति। ८९६ गुहू संवरणे। क्तः। हिक्कादय उदात्ताः स्वरितेतः॥

यमुनायामक्रूरस्य व्यापारं वक्तुमारभते—

अजं तमत्र स्वरथे निवेश्य श्रियं भरन्तीं हरिकान्तितुल्याम्।
धृतप्रमोदो दुरितापनेत्रीं स्नातुं नदीमाप स गान्दिनेयः॥ २९॥

स्पष्टार्थः श्लोकः। अजन्तधात्वारम्भोऽत्रेति च भाति॥—श्रियमिति। ८९७ श्रिञ् सेवायाम्। उदात्त उभयतोभाषः। 'क्विब्वचिप्रच्छिश्रिद्रुस्रुकटप्रुजुश्रां दीर्घोऽसंप्रसारणं च'[1] इति कर्मणि क्विप्। दीर्घश्च। भरन्तीम्। ८९८ भृञ् भरणे। पूरणेऽपीति भट्टिः। शतरि ङीप्। हरीति। ८९९ हृञ् हरणे। प्रापणं स्वीकारः स्तेयं नाशनं वा। अस्मादौणादिक इन्। धृतेति। ९०० धृञ् धारणे। कर्मणि क्तः। अपनेत्रीमिति। ९०१ णीञ् प्रापणे। प्रापणं गमना। तृचि ङीप्। भृञादयोऽनुदात्ता उभयतोभाषाः॥

धयन्दृशाग्लानरुचिं स कृष्णं म्लानिं त्यजन्यानमले जलान्ते।
निद्रायदिन्दीवरभाजि मज्जन्घ्राणधीस्तत्र च तं ददर्श॥ ३०॥

स दृशा कृष्णं धयन् पिबन्घ्राणधीरक्षधीरपि म्लानिं त्यजन्। पीडात्यागाद्धेतोः। जलान्ते मज्जन् तत्र च तत्रापि जले तं कृष्णं ददर्श। अग्लानरुचिमक्षीणशोभं यानं न्यक्कृतं निरस्तं मलं यस्मिन् जलान्ते निद्रायन्ति मीलयन्ति मुकुलितानि इन्दीवराणि भजतीति निद्रायदिन्दीवरभाक् तस्मिन्॥—धयन्निति। ९०२ धेट् पाने। शता। अग्लानेति।

---

१. 'स्पर्शनयोः' इति धातुपाठे. २. 'क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च' इति औणादिकपाठः.

९०३ ग्लै ९०४ म्लै हर्षक्षये । हर्षक्षयः शक्तिक्षयः । ग्लैधातोः कर्तरि क्तः । 'संयोगादेः—' इति निष्ठानत्वम् । म्लानिम् । म्लायतेः 'ग्लाम्लाज्याहाभ्यो निर्वाच्यः' इति निः । या- नेति । ९०५ द्यै न्यक्करणे । न्यग्विधान इत्येके । कुत्सिताङ्करणं तत् । कर्मणि क्तः । प्राग्वन्नत्वम् । निद्रायदिति । ९०६ द्रै स्वप्ने । शता । अध्राणेति । ९०७ ध्रै तृप्तौ । कर्तरि क्तः । धीरिति । ९०८ ध्यै चिन्तायाम् । क्विपि 'ध्याप्योः संप्रसारणम्' इतीत्वम् ॥

भगवद्दर्शनकौतुकेन जलादुन्मग्नस्यावस्थामाह—

रायद्भयस्त्यानरुचौ रथेऽपि तं भक्तिविष्ट्यापयिषुं स दृष्ट्वा ।
खाताशयोऽक्षाममुदा पुनश्च मग्नोऽन्यथापश्यदजानमीशम् ॥ ३१ ॥

स तं भक्तैः तिष्ट्यापयिषुं संघातीकर्तुं वर्धयितुमिच्छुं सन्तं रथेऽपि दृष्ट्वा । अक्षाममुदा पूर्णमोदेन पुनश्च पुनरपि मग्नः सन्नीशमन्यथा अपश्यत् । रायद्भयैः शब्दायमानाश्वैः स्त्यानरुचौ प्रवृद्धशोभे रथे खाताशयः स्थिरीभूतमना अगाधमना वा अजानमक्षयं नित्यम् ॥—रायदिति । ९०९ रै शब्दे । शता । स्त्यानेति । ९१० स्त्यै ९११ ष्ट्यै शब्दसंघातयोः । आद्यात् कर्तरि क्तः । नत्वम् । तिष्ट्यापयिषुम् । द्वितीयाण्णिजन्तात् सन्युः । 'स्तौतिण्योरेव—' इति षत्वम् । तदर्थमेव षोपदेशस्य पाठः । खातेति । ९१२ खै खदने । तच्च स्थैर्यहिंसे । 'खै खनने' इत्येव शंकराचार्यः । तस्मात् कर्तरि क्तः । अक्षामेति । ९१३ क्षै ९१४ जै ९१५ षै क्षये । क्षैधातोः कर्तरि क्ते 'क्षायो मः' इति मत्वम् । अजानम् । जैधातोर्ल्युट् ॥

अन्यथेत्युक्तं रूपं वर्णयति—

प्रसातकातर्यसुरोपगीतं पूज्यं शृतास्राणहविर्विशेषैः ।
अपातमाल्यं शयितं सुवानकाशत्विषि स्तातततौ फणीन्द्रे ॥ ३२ ॥

प्रसातकातर्यैः प्रक्षीणभयैः सुरैरुपगीतं स्तुतं शृतास्राणैः पक्वापक्वैश्चरुपुरोडाशक्षीरनवनीतादिरूपैर्हविर्विशेषैः पूज्यम् । अपातमशुष्कमम्लानं माल्यं यस्य तम् । सुवानकाशस्य सम्यक्शुष्ककाशमञ्जर्यास्त्विडिवातिधवला शोभा यस्य तस्मिन् । स्ताता वेष्टिता कुण्डलीकृता तनुर्यस्य तस्मिन् । फणीन्द्रे शयितम् । ईदृशमीशमपश्यदिति पूर्वेणान्वयः ॥—प्रसातेति । सायतेः कर्तरि क्तः । कातर्येति । ९१६ कै ९१७ गै शब्दे । कायतेः 'काराभ्यान्तरम्' इति भोजोक्ततरनिकातरः । तस्मात् ष्यञ् । उपगीतमिति । गायतेः शब्दविशेषार्थत्वात् सकर्मकात् कर्मणि क्तः । शृतेति । ९१८ श्रै ९१९ स्रै पाके । श्रायतेः 'शृतं पाके' इति निपातः । अस्राणेति । स्रैधातोः कर्तरि क्ते यण्वत्त्वान्नत्वम् ।

१. 'ध्यायतेः संप्रसारणं च' इति वार्तिकेनेति सारम्. यथाश्रुतस्य तु क्वनिपि संप्रसारणविधायकस्योणादिसूत्रस्य 'धीवा' इत्युदाहरणम्. २. 'श्रै श्रै' इति धातुपाठे.

अपातेति। ९२० पै ९२१ ओ वै शोषणे। पैधातोः कर्तरि क्तः। सुवानेति। वै॰ धातोः प्राग्वत् क्तः। ओदित्वान्नत्वम्। स्नातेति। ९२२ ष्टै वेष्टने। ९२३ ष्णै इत्येके। ष्णे शौच इत्यन्ये। स्नैधातोः कर्तरि क्तः॥

एतद्रूपं पश्यतोऽक्रूरस्य प्रवृत्तिमाह—

स्नातावदातः स पिबंस्तदाभां जिघ्रन्सुगन्धं विधमन्नघानि।
विष्ठन्निहाम्नायगमिष्टदं तमस्तौत्स्फुटेनाह्रुतधी स्वरेण॥ ३३॥

स स्नातावदातः स्नातश्चावदातश्च शुद्धः सन् तदाभां पिबन् सुगन्धं जिघ्रन्नघानि वि॰धमंस्त्यजन्निह तिष्ठन् स्फुटेन स्वरेण तमस्तौत् स्तुतवान्। आम्नायगं वेदगतम्। अह्रुता॰कुटिला धीर्यस्य सः॥—स्नातेति। ष्णै शौचे। कर्तरि क्तः। अवदातः। ९२४ दैप् शोधने। पकारः 'अदाप्' इति सामान्यग्रहणार्थः। शोधन शुद्धिः। अस्मात् कर्तरि क्तः। पिबन्। जिघ्रन्। विधमन्। तिष्ठन्। ९२५ पा पाने। ९२६ घ्रा गन्धोपा॰दाने। ९२७ ध्मा शब्दाग्निसंयोगयोः। इह शब्दः शब्दना। अग्निसंयोगश्च मुखवायुना लक्षणया विधूनने, संतापेन पूरणे च। ९२८ ष्ठा गतिनिवृत्तौ। चतुर्णां शतरि 'पाघ्रा—' इत्यादिना पिबाद्यादेशाः। आम्नायेति। ९२९ म्ना अभ्यासे। प्रायेणाङ्पूर्वः। कर्मणि घञ्। इष्टदेति। ९३० दाण् दाने। 'पाघ्रा—' इत्यादिसूत्रे दाणिति विशेषणार्थो णः। अस्मात् 'आतोऽनुपसर्गे कः'। अह्रुतेति। ९३१ ह्रु कौटिल्ये। कर्तरि क्तः। स्वरेणेति। ९३२ स्वृ शब्दोपतापयोः। अस्मात् 'क्षुब्धस्वान्त—' इति सूत्रे स्वरेति निर्देशादच्॥

स्मार्यं शुभद्वारमुपासरामि त्वत्पादमृच्छामि न मोहगर्तम्।
घृणास्तु ते विघ्रुतशूरदैत्यसुतास्रसिक्तायुध विश्वसोतः॥ ३४॥

अहं त्वत्पादमुपासरामि प्राप्नोमि मोहरूपं गर्तं न ऋच्छामि न प्राप्नोमि। द्वयोः 'आ॰शंसायां भूतवच्च' इति चकारात् प्रार्थनायां लट्। कीदृशं पादम्। स्मार्यं चिन्तनीयम्। शुभद्वारं सुखकरमित्यर्थः। विघ्रुतशूरदैत्यसुतास्रसिक्तायुधः विघ्रुतेभ्यो हिंसितेभ्यः शूर॰दैत्येभ्यः सुतैरस्रैः रक्तैः सिक्तमायुधं यस्य तादृश, हे विश्वसोतः, जगदन्तस्तत्कर्मसु अनुज्ञाकर्तः, ईश्वर इति वा। तव घृणा दया मयि अस्तु॥—स्मार्यमिति। ९३३ स्मृ चिन्तायाम्। ण्यत्। द्वारमिति। ९३४ वृ॑ वरण इत्यन्येके। घञ्। उपासरामि। ९३५ सृ गतौ। लट्। सरतेर्धावादेशस्तु द्रुतगतावेव। ऋच्छामि। ९३६ ऋ गति॰प्रापणयोः। लटि ऋच्छादेशः। गर्तम्। ९३७ गृ ९३८ घृ सेचने। 'असिहृभृघ्रणाभि॰वस्तृपूर्वानि-तस्तन' इति कर्मणि तन्। तत्र गरतेरपि ग्रहणात्। घृणा। 'इण भूनशङ्ग॰घृणादयः' इति औणादिको नक्। विघ्रुतेति। ९३९ ध्रु हूर्छने। कौटिल्ये उत्।

---

१. 'आघ्रा' इति पाठः. २. 'ह्रु' इति धातुपाठे.

हिंसार्थेऽप्यस्ति । कर्मणि क्तः । ९४० स्रु गतौ । स्रुतौ च द्रुमे । स्रु स्रु गताविल्येके । 'श्रुसि चिमिजां दीर्घश्च' इति क्रन् । स्रुतेति । स्रुधातोः कर्तरि क्तः । स्रोतः । ९४१ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञा । तव् ॥

श्रुत्यन्तवाचा ध्रुवया प्रदूनं घोरद्रवच्चक्रजिताज्ञितारिम् ।
स्मितार्द्रवक्त्रं गवमानभूपं गे त्वां घुताशं कुतशङ्खघोषैः ॥ ३१ ॥

अहं त्वां गे प्राप्तुं प्रार्थये । श्रुत्यन्तवाचोपनिषदा ध्रुवया नित्यया प्रदूनं ज्ञातम् । गत्यर्थांज् ज्ञानार्थता । घोरं यथा तथा द्रवता चक्रेण जिता अभिभूता अज्ञिता अन्यैरनभिभूता अरयो येन तम् । स्मितेन मन्दहासेनार्द्रवक्त्रम् । गवमानाः शब्दायमाना भूपा यस्य तम् । कुतशङ्खस्य शब्दायमानशङ्खस्य घोषैर्घुताशं शब्दितदिशम् ॥—श्रुतीति । ९४२ श्रु श्रवणे । 'श्रुयजिस्तुभ्यः करणे' इति क्तिन् । ध्रुवया । ९४३ ध्रु स्थैर्ये । बाहुलकात्कः । यद्वा 'ध्रुवमपाये' इति निर्देशात् साधुरिति माधवः । प्रदूनम् । ९४४ दु ९४५ द्रु गतौ । दोः कर्मणि क्तः । 'दुग्वोर्दीर्घश्च' इति निष्ठानत्वदीर्घौ । द्रवदिति । द्रुधातोः शता । जिताज्ञितेति । ९४६ जि ९४७ ज्ञि अभिभवे । 'जि ज्रि अभिभवे' इति लीलाशुकः । जिज्र्योः कर्मणि क्तः । धयत्यादयोऽनुदात्ताः परस्मैभाषाः । स्मितेति । ९४८ ष्मिङ् ईषद्धसने । नपुंसके भावे क्तः । गवमानेति । ९४९ गुङ् अव्यक्ते शब्दे । शानच् । गे इति । ९५० गाङ् गतौ । लोट् । घुतकुतेति । ९५१ घुङ् ९५२ कुङ् ९५३ उङ् ९५४ ङुङ् शब्दे । कुङ् अव्यक्तशब्दार्थ इति केचित् । द्वयोः कर्तरि क्तः ॥

स्तोत्रावमानैर्दुतवेणुवीणैश्च्युताशुभैर्व्योमचरैर्ज्युतं ते ।
प्रवे भवाब्धिप्लवमारुतानां धृतामयं भक्तिनिमेयमङ्घ्रिम् ॥ ३६ ॥

अहं भक्तिनिमेयं भक्त्या निमेयं व्यत्यसनीयं दानपूर्वं परिमाप्यं ते अङ्घ्रिं प्रवे प्राप्नोमि । कीदृशमङ्घ्रिम् । व्योमचरैर्देवैर्ज्युतं प्राप्तम् । आरुताना प्राप्तानां धृतामयं ध्वस्तपीडम् । कीदृशैर्व्योमचरैः । स्तोत्रेणावमानैः शब्दायमानैः । तथा दुताः शब्दिता वेणवो वीणा च येषां तैः । च्युतं गतमशुभं येषां तैः ॥—अवमानैः । उङ्धातोः शानच् । दुतेति । दुङः कर्तरि क्तः । च्युतेति । ९५५ च्युङ् ९५६ ज्युङ् ९५७ प्रुङ् ९५८ प्लुङ् गतौ । क्रुङ् इति चैके । प्लुङ् इति चान्ये । च्युङः कर्तरि क्तः । ज्युतम् । ज्युङः कर्मणि क्तः । प्रवे । प्रुङो लट् । प्लवम् । प्लुङः पचाद्यच् । आरुतानाम् । ९५९ रुङ् गतिरेषणयोः । रेषणं हिंसा । कर्तरि क्तः । धृतेति । ९६० धृङ् अवध्वंसने । कर्तरि क्तः । निमेयम् । ९६१ मेङ् प्रणिदाने । तच्च विनिमयः । प्रत्यर्पणं वा । अचो यत् ॥

दयस्व मां देव कृपाम्बुशीत प्यानौजसा त्रातजगत्रयं त्वाम् ।
पूतारिवलं मूतवलिं सुडीनौ तार्क्ष्ये स्थितं प्राप्य तरामि मायाम् ॥३७॥

---

१. 'ज्रि' इति धातुपाठे. २. 'दुङ्' इति धातुपाठे. ३. 'क्लुङ्' इति पाठः.

हे कृपाम्बुराशे देव, त्वं मां दयस्व रक्ष। अहं त्वां प्राप्य मायां तरामि। प्यानौजसा प्रवृद्धबलेन परिपालितजगत्त्रयम्। मूतो बद्धो बलिर्येन तम्। सुडीनौ शोभनडयने तार्क्ष्ये स्थितम्॥—दयस्वेति। ९६२ देङ् रक्षणे। लोट्। शीतेति। ९६३ श्यैङ् गतौ। कर्तरि क्तः। 'द्रवमूर्तिस्पर्शयोः श्यः' इति संप्रसारणम्। प्यानेति। ९६४ प्यैङ् वृद्धौ। प्राग्वत् क्तः। यण्वत्त्वान्नत्वम्। त्रातेति। ९६५ त्रैङ् पालने। कर्मणि क्तः। म्भिङ्गा-दयोऽनुदात्ता आत्मनेभाषाः। पूतेति। ९६६ पूङ् पवने। शोधनं तत्। कर्मणि क्तः। मूतेति। ९६७ मूङ् बन्धने। प्राग्वत् क्तः। सुडीनौ। ९६८ डीङ् विहायसा गतौ। क्तिन्। पूङादय उदात्ता आत्मनेभाषाः। तरामि। ९६९ तॄ प्लवनतरणयोः। अभिभवे च द्रुमे। प्लवनं जलादावमङ्क्त्वा गमनम्। उदात्तः परस्मैभाषः। अस्माल्लट्॥

अहं त्वां प्राप्य मायां तरामीत्युक्तम्। तत्र त्वत्कृपां विना त्वत्प्राप्तिरपि दुर्लभेत्याह—

जुगुप्सतेऽघाव्यसनं तितिक्षुर्मीमांसते ब्रह्म च यो दृढात्मा।
स खल्वबीभत्सितवृत्तिरर्चां तवारभेतापि कृपां लभेत॥ ३८॥

योऽघाज् जुगुप्सते अघं निन्दति। व्यसनं दुःखं तितिक्षुः क्षममाणो दृढात्मा च सन् ब्रह्म मीमांसते विचारयति। स खलु तवार्चामारभेत कृपां लभेत अपि। अबीभत्सित-वृत्तिः बीभत्सितमन्येषां चित्तविकारो न यस्यां तादृशी वृत्तिर्व्यापारो यस्य सः॥—जु-गुप्सत इति। ९७० गुप गोपने। ९७१ तिज निशाने। ९७२ मान पूजायाम्। ९७३ बध बन्धने। एषां क्रमात् निन्दायाम्, क्षमायाम्, पूजितविचारे, दुर्गन्धादिज-चित्तविकारे च सन्नुक्तः। नित्यसन्नन्तत्वसाधनाच्च धातोः पृथक्प्रयोगाभावात् गोपना-द्यर्थपाठो व्यर्थ इति हरदत्तादयः। 'गुप्तिज्किद्भ्यः सन्' इति सन्। एषामनुदात्तेत्त्वात् सन्नन्तस्यापि तङ्। ईदृशात् गुपेर्लट्। तितिक्षुरिति। तिजः सन्नुप्रत्ययः। मीमांसत इति। मानेः 'मान्बध—' इति सनि लट्। अबीभत्सितेति। बधेः सनि नपुंसके भावे क्तः। आरभेत। ९७४ रभ राभस्ये। उपक्रमस्तत्। तत्रायं प्रायेणाङ्पूर्वः। लभेत। ९७५ डु लभष् प्राप्तौ। द्वयोः संभावने लिङ्॥

त्वत्कृपया जितेन्द्रियाणां त्वं सुलभ इत्याह—

असक्तयोपैः पशुहदनशुद्धक्ष्वेदन्मृगास्कन्दवनान्तवासैः।
याभायकामैर्नमनाद्वृतावैः सप्योऽसि विष्णो यमिभिर्वितापैः॥ ३९॥

हे विष्णो, त्वं यमिभिः सप्योऽसि प्राप्योऽसि। असक्तयोपैरनालिङ्गितस्त्रीकैः। तदि-च्छाभावात् पशूनां हदनेन पुरीषोत्सर्गेण शुद्धः क्ष्वेदद्भिः अव्यक्तशब्दं कुर्वाणैः मृगैः शूरमृगैरस्कन्दोऽप्राप्तः, अनभिभूतो वा, वनान्ते वासो येषां तैः। याभादिषु रतादिष्व-कामैः॥—असक्तेति। ९७६ यभ्ज परिष्वङ्गे। कर्मणि क्तः। हदनेति। ९७७ हद पुरीषोत्सर्गे। 'नपुंसके भावे क्तः'। रभादयोऽनुदात्ता अनुदात्तेतः। क्ष्वेदादिति। ९७८

ञिंक्ष्विदा अव्यक्ते शब्दे । उदात्त उदात्तेत् । शता । अस्कन्नेति । ९७९ स्कन्दिर् गतिशोषणयोः । कर्मणि क्तः । याभेति । ९८० यभ विपरीते मैथुने । तच्च पुरुषायितम् । यभ मैथुन इत्येवैके । घञ् । नमनात् । ९८१ णम प्रह्वत्वे शब्दे च ड्डमे । ल्युट् । गतेति । ९८२ गम्लृ-९८३ सृप्लृ गतौ । गमेः कर्तरि क्तः । सृप्यः । सृपेः 'ऋदुपधाद्–' इति क्यप् । यमिभिः । ९८४ यम उपरमे । उदिदिति केचित् । 'यमः समुपनिविषु च' इति अबन्तान्मत्वर्थीय इनिः । वितापैः । ९८५ तप संतापे । घञ् ॥

अक्रूरस्य कृत्यशेषमाह—

त्यक्तार्तिरेवं तमसङ्गचेताः स्तुवन्नदृष्ट्वा च पुनः क्षणात्तम् ।
कृत्वा स कृत्यं दशनांशुगौरं कृष्णं ययौ दैत्यनिदाघमेघम् ॥ ४० ॥

स तमेवं स्तुवन् पुनस्तं क्षणाद्दृष्ट्वा च कृत्यमवश्यं कर्तव्यं कृत्वा, दशनांशुगार मन्दस्मितसितात्मानं कृष्णं रथस्थं श्रीकृष्णं ययौ प्राप । त्यक्ता आर्तिर्येन सः । असङ्गं चेतो यस्य सः । दैत्यरूपस्य निदाघस्य ग्रीष्मर्तोः मेघं वर्षितुम् । तन्नाशकमित्यर्थः ॥—त्यक्तेति । ९८६ त्यज हानौ । कर्मणि क्तः । असङ्गेति । ९८७ षञ्ज सङ्गे । घञ् । अदृष्ट्वा । ९८८ दृशिर् प्रेक्षणे । क्त्वा । दशनेति । ९८९ दन्श दशने । दशनशब्देन दन्तार्थेन तत्क्रिया लक्ष्यते । 'दंशेः करणे ल्युटि नलोपो वाच्यः' इति नलोपः । कृष्णमिति । ९९० कृष विलेखने । विलेखनमिहाकर्षणम् । 'कृषेर्वर्णे' इति नक् । निदाघेति । ९९१ दह भस्मीकरणे । घञ् । न्यङ्क्वादित्वात्कुत्वम् । मेघमिति । ९९२ मिह सेचने । अचि प्राग्वत् कुः । त्यजादयोऽनुदात्ता उदात्तेतः ॥

भगवतोऽक्रूरानुग्रहमाह—

मोहं चिकित्सन्वचसास्य कृष्णो दीदांसुचित्तस्य सुविस्मितस्य ।
जगाम शीशांसितशस्त्रहस्तैर्गोपैः सहासौ परिपक्वपुण्यैः ॥ ४१ ॥

असौ कृष्णो वचसास्य मोहं चिकित्सन्नपनयन् गोपैः सह जगाम । दीदांसुचित्तस्य दीदांसु ऋजूभवनशीलं चित्तं यस्य तस्य । शीशांसितशस्त्रहस्तैः । शीशांसितं तीक्ष्णीकृतं शस्त्रं हस्ते येषां तैः ॥—चिकित्सन्निति । ९९३ कित निवासे रोगापनयने च । अयमुदात्तेत् । सन्नन्तः । उदात्तेत्वाद् सन्नन्तस्य परस्मैपदमेव । अत्र निवासार्थो व्यर्थः । रोगापनयने हि सन्नुच्यते । संशयनिग्रहापनयनानाशनादयश्चास्यार्थाः । अस्मात् 'गुप्तिज्किद्भ्यः' इति सनि शता । दीदांसु इति । ९९४ दान अवखण्डने । ९९५ शान तेजने । इमावपि नित्यसन्नन्तौ स्वरितेतौ । दानेरार्जवे सनुक्तेः अवखण्डनोक्तिर्व्यर्था । दानेः 'सान्वप–' इति सनि उः । शीशांसितेति । शानेः निशातने प्राग्वत्सनि कर्मणि क्तः । परिपक्वेति । ९९६ डु पचष् पाके । कर्तरि क्तः । 'पचो वः' इति निष्ठानत्वम् ॥

१. 'ञिष्विदा' इति धातुपाठे. २. 'न्यङ्क्वादित्वा' इत्यादर्शे. ३. 'खण्डने' इति धातुपाठे.

ते संसचन्तो धृतभक्तिरागाः कृष्णेन कंसं मनसा शपन्तः ।
त्वेषन्मुखा इष्टिनिवापहीनां कष्टां पुरीं प्रापुरुदूढदर्पाः ॥ ४२ ॥

ते कृष्णेन संसचन्तः संबध्नन्तः पुरीं प्रापुः । त्वेषत् दीप्यमानं मुखं येषां ते । इष्टिनिवापहीनाम् । इष्टिर्देवपूजा निवापः पितृक्रिया ताभ्यां हीनाम् । अत एव कष्टां निन्दिताम् । संसचन्त इति । ९९७ षच समवाये । स च संबन्धः । शता । भक्तीति । ९९८ भज सेवायाम् । विभजने च द्रुमे । क्तिन् । रागेति । ९९९ रञ्ज रागे । घञ् । 'घञि च भावकरणयोः' इति नलोपः । शपन्तः । १००० शप आक्रोशे । शता । त्वेषदिति । १००१ त्विष दीप्तौ । शता । इष्टीति । १००२ यज देवपूजासंगतिकरणदानेषु । क्तिन् । 'वचिस्वपि–' इति संप्रसारणम् । निवापेति । १००३ डुवप् बीजसंताने । तच्च क्षेत्रे बीजानां विकरणम् । अयं केशखण्डनेऽपि । निपूर्वत्वात् पितृक्रियार्थता । घञ् । उदूढेति । १००४ वह प्रापणे । कर्मणि क्तः । यजादित्वात् संप्रसारणम् । पचादयोऽनुदात्ताः स्वरितेतः । पचिस्तूदात्तः ॥

ततो निवत्स्यन्दिवसोर्ध्वभागे चारूतकीर्त्यम्बरवीतलोकः ।
हरिः समाहूय वदन्सहायान्पुरस्य बाह्योपवनं शुशाव ॥ ४३ ॥

ततो हरिर्दिवसोर्ध्वभागे निवत्स्यन् निवासं करिष्यन् सहायान् समाहूय वदन् पुरस्य बाह्योपवनं शुशाव प्राप । कीदृशः हरिः । चारूतकीर्त्यम्बरवीतलोकः । चारु यथा तथा उतेन विस्तारितेन कीर्तिरूपेण वस्त्रेण वीतश्छादितो लोको येन सः । निवत्स्यन्निति । १००५ वस निवासे । अनुदात्त उदात्तेत् । 'स्यतः सद्य' इति शता । उतेति । १००६ वेञ् तन्तुसंताने । व्याप्तौ छादने चाह भट्टः । कर्मणि क्तः । वीतेति । १००७ व्येञ् संवरणे । प्राग्वत् क्तः । समाहूय । १००८ ह्वेञ् स्पर्धायां शब्दे च । शब्दः शब्दनं चाह्वानम् । ल्यप् । वेञादयोऽनुदात्ता उभयतोभाषाः । वदन् । १००९ वद व्यक्तायां वाचि । उदात्त उदात्तेत् । शतृ । शुशावेति । १०१० टु ओश्वि गतिवृद्ध्योः । उदात्तः परस्मैभाषः । लिट् । 'लिट्यभ्यासस्योभयेषाम्' इति संप्रसारणम् । वृद्धिः । यजादयो वृत्ताः । भ्वादयस्त्वनुवृत्ताः । तेन घुटुम्बादीनां षण्णिविधिः । इति क्रमभ्वादयो गताः ॥

अथ मधुरोपवनप्राप्त्यनन्तरं राजमार्गयानादितदिनशेषभाविनीमवस्थामाह—

अदन्मधुघ्नो द्विपते विसृज्य श्ववल्कजं विश्वमुदं दुहानः ।
मालेयदिग्धो जनदृष्टिलेह्यश्चक्षीमहीमां पुरमित्युपैत ॥ ४४ ॥

मधुघ्नः श्रीकृष्णः श्ववल्कजमयूरं द्विपते द्विषन्तं पोषयितुं विसृज्य अदन् भुञ्जानः सन् यदमिमां पुरं चक्षीमहि पश्येम इति । एवम्—सहायान् उक्त्वोपैतं समीपमगच्छत् । कीदृशः श्रीकृष्णः । मालेयेन चन्दनेन दिग्धो लिप्तः । अनेन निसर्गसुन्दराण्यपि तदा तदानीमनन्यसाधारणशोभातिशयमाह । अत एव जनदृष्टिलेह्य आस्वाद्यः, न तु दूर एव ।

अत एवानुक्तसिद्धामपि सर्वमनस्तुष्टिं स्पष्टयति—विश्वेषां सर्वेषां मुदं दुहानः पूरयन्। तद्रूपममृतं क्षारयन् वा ॥—अदन्निति । १०११ अद् भक्षणे । 'व्यत्यदन्ति वृका मेषान्' इत्यादौ हिंसार्थोऽपि । अस्माच्छता । मधुघ्न इति । १०१२ हन हिंसागत्योः । 'अमनुष्यकर्तृके च' इति टक् । अनुदात्तावुदात्तेतौ । द्विषते । १०१३ द्विष अप्रीतौ । शता । दुहानः । १०१४ दुह प्रपूरणे । प्रपूरणं पात्रादिपूरणार्थं क्षारणम् । तस्मात् शानच् । दिग्ध इति । १०१५ दिह उपचये । उपचयो लेपनम् । कर्मणि क्तः । लेह्य इति । १०१६ लिह आस्वादने । ण्यत् । द्विषादयोऽनुदात्ताः स्वरितेतः । चक्षीमहि । १०१७ चक्षिङ् व्यक्तायां वाचि । तत्र प्रायेणाङ्पूर्वोऽयं दर्शनार्थोऽपि । निमन्त्रणे लिङ् । उपैर्त । १०१८ ईर गतौ । कम्पने च द्रुमे[1] अस्माल्लङ् ॥

पुरावलोकनव्याजेन भक्तानुग्रहार्थं प्रस्थितस्य तस्य प्रवृत्तिमाह—

ईड्योऽयमीशः समुपास्तिशीलैराशासितः पीतपटीं वसानः ।
स्वीयैश्चकंसे कशनीयकासी रमोष्ठनिंसी नतचित्तनिञ्जी ॥ ४१ ॥

अयमीशः पीतपटीं वसानस्तदानीं विशेषरम्यां परिदधानः सन् स्वीयैः चकंसे संचारितवान् । पीतपटीं वसान इत्यनेन मनोहरत्वमुक्तम् । कीदृशः । ईड्यः स्तुत्यः । समुपास्तिशीलैराशासितः । समीचीनामुपास्तिं ध्यानं शीलयन्ति अभ्यस्यन्ति ये तैराशासित इष्टः । कशनीयान् शासनीयान् कसितुं शासितुं शीलं यस्य सः । रमाया ओष्ठं निंसितुं चुम्बितुं शीलं यस्य सः । नतानां चित्तं निञ्जयितुं शोधयितुं शीलं यस्य सः ॥—ईड्य इति । १०१९ ईड स्तुतौ । ण्यत् । ईश इति । १०२० ईश ऐश्वर्ये । पचाद्यचि ईशः । समुपास्तीति । १०२१ आस उपवेशने । उपपूर्वत्वात् सेवार्थत्वम् । क्तिन् । आशासितः । १०२२ आङ् शासु इच्छायाम् । उदित्त्वेके । कर्मणि क्तः । वसानः । १०२३ वस आच्छादने । शानच् । चकसे । १०२४ कसि गतिशासनयोः । कशेत्येके । कसेत्यन्ये । कंसेल्लिट् । कशनीयकासी । कशेरनीयर् । कसेर्णिनिः । रमोष्ठनिंसी । १०२५ णिसि चुम्बने । णिनिः । चित्तनिञ्जी । १०२६ णिजि शुद्धौ । अस्माण्ण्यन्ताण्णिनिः ॥

भगवद्दर्शनेन पौराणां स्वस्ववासनानुरूपं विकारं वक्तुमाह—

शिञ्जानपिञ्जानसुवर्णभूपासंपृञ्जितो वृज्यविवृञ्जिसेव्यः ।
पृक्ताग्रजः पृञ्जितगोपसूनुर्दृष्टोऽङ्घ्रिशायी स जनैर्युवद्भिः ॥ ४२ ॥

अङ्घ्रिशायी स पृक्ताग्रजः संयुक्ताग्रजः पृञ्जितगोपसूनुः संयुक्तगोपबालश्च सन् युवद्भिः कौतुकातिशयात् तत्र मिश्रीभवद्भिर्जनैर्दृष्टः । आसीदिति शेषः । कीदृगित्याह—शिञ्जानाभिरव्यक्तशब्दं कुर्वाणाभिः पिञ्जानाभिर्वर्णाधिक्येन पिङ्गलीभवन्तीभिः सुवर्णभूषाभिः संपृञ्जितः पिङ्गलीभूतो वृज्यविवृञ्जिसेव्यः वर्जनीयवर्जनशीलैः सद्भिः सेव्यः ॥—शिञ्जानपिञ्जानेति । १०२७ शिजि अव्यक्ते शब्दे । १०२८ पिजि वर्णे । पिङ्गलत्वं तत् ।

1. 'मद्रूप' इति पाठः. 2. 'आङःशस इच्छायाम्' इति पाठः.

तपर्चन इत्येके । अवयव इत्यन्ये। अव्यक्ते शब्द इत्यपरे । पृजि इत्यप्येके। शिञ्जिपिञ्ज्योः शानच् । पृङ्क्तेः कर्तरि क्तः । वृज्यविवृङ्क्तीति । १०२९ वृजी वर्जने । इदिदिति केचित् । तस्मात् क्यप् । इदित्त्वपक्षे णिनिः । पृक्तेति । पृञ्जितेति । १०३० पृजी संपर्चने । इदिदिति केचित् । द्वयोः कर्मणि क्तः । ईरादय उदात्ता अनुदात्तेतः । स्नुतः । १०३१ पृङ् प्राणिगर्भविमोचने । 'सुवः कित्' इति नुः । अप्यिशायी । १०३२ शीङ् स्वप्ने । उदात्तात्मनेभाषी । शीङो णिनिः । युवद्भिः । १०३३ यु मिश्रणे । अमिश्रणेऽप्येके । शता ॥

अत्यन्तभक्तानामवस्थानामाह—

केऽप्यल्परावं नुनुवुः खलेषु क्षुरक्ष्णुतात्मानममुं स्नुतास्राः ।
सोऽनूर्णुतोऽद्यौज्जनमुत्कुवत्या काञ्च्येव कामं स्तुवतां ब्रुवाणः ॥ ४७ ॥

केऽप्यमेयभाग्या अमुं स्नुतास्राः स्नुतं भक्तिक्लिन्नहृदयतया स्नुतो बाष्पप्रवाहो येषां तादृशाः । अत एव गद्गदेनाल्पो रावो यस्मिंस्तथा नुनुवुस्तुष्टुवुः । कीदृशम् । खलेषु दुर्जनेषु क्षुरवत् क्ष्णुतस्तेजितस्तीक्ष्णः आत्मा मनो यस्य तम् । भगवतो भक्तेषु कृपातिशयमाह—सोऽनूर्णुतोऽनाच्छन्नस्तस्य एवात्मानं प्रकाशयन् । कुवत्या क्वणन्त्या काञ्च्या स्तुवतां काममिष्टं युष्माकं भवत्विति ब्रुवाण इवार्थान् तेषामभिमुखमगच्छत् । जनान् तत्तत्कर्मसु सौति प्रेरयतीति जनसुत् । ईश्वर इति वा ॥—रावेति । १०३४ रु शब्दे । 'कृत्यल्युटो बहुलम्' इति बाहुलकात् घञ् । नुनुवुः । १०३५ णु स्तुतौ । लिट् । क्षुरेति । १०३६ टुक्षु शब्दे । 'ऋज्रेन्द्र–' इत्यादिना रनि निपातितः । क्षौति वपनकाले कृदिति स्वनतीति क्षुरः । क्ष्णुतेति । १०३७ क्ष्णु तेजने । कर्मणि क्तः । स्नुतेति । १०३८ ष्णु प्रस्रवणे। कर्तरि क्तः । यौत्यादय उदात्ताः परस्मैभाषाः । अनूर्णुत इति । १०३९ ऊर्णुञ् छादने । उदात्त उभयतोभाषः । कर्तरि क्तः । 'वाच्य ऊर्णोर्णुवद्भावः' इति णुधातुवदेकाच्त्वादनिट्त्वम् । अद्यौत् । १०४० द्यु अभिगमने । लङ् । 'उतो वृद्धिः–' इति वृद्धिः । जनसुत् । १०४१ षु प्रसवैश्वर्ययोः । प्रसवोऽनुज्ञा । 'या पीडा अवलापि सौति महतीर्मात्युस्त्यदुःखासिकाम्' इति प्रयोगादुत्पादनमपि प्रसवः । तस्मात् क्विप् । कुवत्या । १०४२ कु शब्दे । शतरि ङीप् । अनुदात्ताः परस्मैभाषाः । स्तुवताम् । १०४३ ष्टुञ् स्तुतौ । शता । ब्रुवाणः । १०४४ ब्रूञ् व्यक्तायां वाचि । शानच् । अनुदात्तावुभयतोभाषौ ॥

पुरान्तर्भागं गतस्य महामार्गप्राप्त्या सर्वमुक्तिजनानुग्रहमाह—

इत्यः स्वधीतोपनिषद्भिरेषामधीत्यरूपः स वियन्क्रमेण ।
इयज्जनं राजपथं समायाद्याताकुलोद्धातपताकमारात् ॥ ४८ ॥

स ईशो वियन् संचरन् क्रमेण राजपथं समायात् प्राप । कीदृशः । स्वधीतोपनिषद्भिर्वेदान्तपारगैरित्यः प्राप्तुं शक्यः । एषां ज्ञानिनामधीत्यं स्मरणीयं रूपं यस्य सः । कीदृशं राजपथम् । इयज्जनमियन्त इवन्तो गच्छन्तो जना यस्मिंस्तम् । तथा वातेन आकुला

1. 'उदस्तः' इति पाठः.

उद्भाताः पताका यस्मिंस्तम् ॥—इत्य इति । १०४५ इण् गतौ । 'एतिस्तु-' इति क्यप् । स्वधीतेति । १०४६ इङ् अध्ययने । कर्मणि क्तः । अधीत्येति । १०४७ इक् स्मरणे । 'इण्वदिक इति वाच्यम्' इति क्यप् । वियन् । १०४८ वी गतिव्याप्तिप्रजनकान्त्यसनखाद-नेषु । जन्मोपक्रमत्वात् गर्भग्रहणं प्रजनः । शता । इयदिति । वी ई इति प्रश्लेषादीधातोः शता । समायात् । १०४९ या प्रापणे । इह प्रापणं गतिः । लङ् । वातेति । १०५० वा गतिगन्धनयोः । 'गन्धनं सौरभ्यकरणम्' इति सहस्रनामभाष्ये । 'अर्दनं हिंसनं च गन्धनम्' इति लीलाशुकः । उद्भातेति । १०५१ भा दीप्तौ । द्वयोः कर्तरि क्तः ॥

भगवद्दर्शनोत्सुकानां नारीणामवस्थामाह चतुर्दशभिः—

स्नान्त्यस्तदा श्राणमुपाश्य चान्नं निद्रां गताः प्सातिपरास्तथान्याः ।
पान्त्यः शिशून्धान्यधनानि रान्त्यो लान्त्यश्च काश्चित्कुसुमानि दान्त्यः ४९
ख्यान्त्यः कथाः प्राणमुदां पतीनां निर्मान्त्य इष्टानि चटून्वचन्त्यः ।
नार्यो विदित्वोपगमं मुरारेरासन्गता राजपथं सुमृष्टम् ॥ ५० ॥

तदा नार्यो मुरारेरुपगमं विदित्वा सुमृष्टं सम्यक्शोधितं राजपथं गता आसन् । स्नान्त्यः स्नानं कुर्वन्त्यः । अन्याः श्राणं पक्वमन्नमुपाश्य भुक्त्वा निद्रां गताः । तथा—प्सातिपरा भोजनपराः । शिशून् पान्त्यो रक्षन्त्यः । धान्यधनानि रान्त्यः तत्तज्जनेभ्यो यच्छन्त्यः । लान्त्यः तान्येव तेभ्य आददानाश्च । काश्चित् कुसुमानि दान्त्यः लुनन्त्यः । कथाः ख्यान्त्यः कथयन्त्यः । प्राणमुदां पूर्णहर्षाणां पतीनामिष्टानि निर्मान्त्यः कुर्वाणाः । चटून् प्रियवाक्यानि वचन्त्यः भाषमाणाश्च । एवं तत्तत्प्रवृत्तिं कुर्वाणाः ॥—स्नान्त्य इति । १०५२ ष्णा शौचे । शतरि ङीप् । 'आच्छीनद्योर्नुम्' इति नुम् । श्राणम् । १०५३ श्रा पाके । पाकोऽत्र विक्लित्तिः । कर्तरि क्ते यण्वत्त्वाभत्वम् । निद्राम् । १०५४ द्रा कुत्सायां गतौ । सा च पलायनस्वापौ । स्वापे निपूर्वः । 'आतश्चोपसर्गे' इत्यङ् । प्साति । १०५५ प्सा भक्षणे । क्तिन् । पान्त्यः । रान्त्यः । लान्त्यः । दान्त्यः । ख्यान्त्यः । १०५६ पा रक्षणे । १०५७ रा दाने । १०५८ ला आदाने । द्वावपि दानार्थावित्येके । १०५९ दाप् लवने । १०६० ख्या प्रकथने । क्षा इत्यपि केचित् । एभ्यः शतरि ङीप् । प्राणेति । १०६१ प्रा पूरणे । कर्तरि क्ते नत्वम् । निर्मान्त्यः । १०६२ मा माने । माननिर्मा-णयर्थभावः । निष्पूर्वत्वादर्थभेदः । शतरि ङीप् । वचन्त्यः । १०६३ वच परिभाषणे । शतरि ङीपि स्यन्नभावात् 'आच्छीनद्योः' इति नुम् न । इणादयोऽनुदात्ताः परस्मैभाषाः । इङ् त्वात्मनेपदी । विदित्वा । १०६४ विद ज्ञाने । क्त्वा । आसन् । १०६५ अस भुवि । लङ् । सुमृष्टम् । १०६६ मृजू शुद्धौ । शोधना सा । कर्मणि क्तः ॥

विलम्बहेतोः समरोदन्या विलोक्य सुप्ता इव तस्थुरन्याः ।
उदश्वसन्प्राणमिवाप्य काश्चिद्दृष्ट्वा सलीलं मृदु जक्षतं तम् ॥ ५१ ॥

---

१. 'गतिप्रजनकान्त्यसनखादनेषु' इति पाठः.

संपर्चन इत्येके । अव्ययव इत्यन्ये । अव्यक्ते शब्द इत्यपरे । पृजि इत्यप्येके । शिजिपिञ्जयोः शानच् । पृञ्जेः कर्तरि क्तः । पृञ्जयन्निशिञ्जीति । १०२९ गृजी गर्जने । इदिदिति केचित् । तस्मात् नमु । इदित्वपक्षे णिनिः । गृञ्जेति । गृञ्जितेति । १०३० पृजी संपर्चने । इदिदिति केचित् । द्वयोः कर्मणि क्तः । ईरादय उदात्ता अनुदात्तेतः । सूनुः । १०३१ षूङ् प्राणिगर्भविमोचने । 'सुवः कित्' इति नुः । अभिशायी । १०३२ शीङ् स्वप्ने । उदात्तावात्मनेभाषौ । शीङो णिनिः । सुवद्भिः । १०३३ यु मिश्रणे । अमिश्रणेऽप्येके । शता ॥

अत्यन्तभक्तानामवस्थानामाह—

केऽप्यल्परावं नुनुवुः खलेषु क्षुरक्ष्णुतात्मानममुं स्नुतास्राः ।
सोऽनूर्णुतोऽद्यौज्जनयुत्कुवत्या काश्येव कामं स्तुवतां ब्रुवाणः ॥ ४७ ॥

केऽप्यमेयभाग्या अमुं स्नुतास्राः स्नुतं भक्तिविह्वलहृदयतया स्रुतो बाष्पप्रवाहो येषां तादृशाः । अत एव गद्गदेनाल्पो रावो यस्मिंस्तथा नुनुवुस्तुष्टुवुः । कीदृशम् । खलेषु दुर्जनेषु क्षुरवत् क्ष्णुततरतेजितस्तीक्ष्णः आत्मा मनो यस्य तम् । भगवतो भक्तेषु कृपातिशयमाह—सोऽनूर्णुतोऽनाच्छादनस्वरूप एवात्मानं प्रकाशयन् । कुवत्या क्वणन्त्या काश्या स्तुवतां कामामिष्टं युष्माकं भवत्विति ब्रुवाण इत्याद्यौत् तेषामभिमुखमगच्छत् । जनान् संसारकर्मसु यौति प्रेरयतीति जनयुत् । ईश्वर इति वा ॥—रावेति । १०३४ रु शब्दे । 'कृत्यल्युटो बहुलम्' इति बाहुलकात् घञ् । नुनुवुः । १०३५ णु स्तुतौ । लिट् । क्षुरेति । १०३६ टुक्षु शब्दे । 'ऋज्रेन्द्र—' इत्यादिना रनि निपातितः । क्षौति वपनकाले क्षुदिति स्वनतीति क्षुरः । क्ष्णुतेति । १०३७ क्ष्णु तेजने । कर्मणि क्तः । स्नुतेति । १०३८ ष्णु प्रस्रवणे । कर्तरि क्तः । यौत्यादय उदात्ताः परस्मैभाषाः । अनूर्णुत इति । १०३९ ऊर्णुञ् आच्छादने । उदात्त उभयतोभाषः । कर्तरि क्तः । 'वाच्य ऊर्णोर्णुवद्भावः' इति णुधातुवदेकाच्त्वादनिट्त्वम् । अद्यौत् । १०४० द्यु अभिगमने । लङ् । 'उतो वृद्धिः—' इति वृद्धिः । जनयुत् । १०४१ षु प्रसवैश्वर्ययोः । प्रसवोऽनुज्ञा । 'या पीडा भवतापि सौति महतीमांस्तु।मतुरुत्साहिकाम्' इति प्रयोगानुत्पादनमपि प्रसवः । तस्मात् क्विप् । कुवत्या । १०४२ कु शब्दे । शतरि ङीप् । अनुदात्ताः परस्मैभाषाः । स्तुवताम् । १०४३ ष्टुञ् स्तुतौ । शता । ब्रुवाणः । १०४४ ब्रूञ् व्यक्तायां वाचि । शानच् । अनुदात्तावुभयतोभाषौ ॥

पुरान्तर्भागं गतस्य महामार्गप्राप्त्या सर्वयुक्तिजनानुग्रहमाह—

इत्यः स्वधीतोपनिषद्भिरेषामधीत्यरूपः स नियन्क्रमेण ।
इयज्जनं राजपथं समायाद्व्राताकुलोऽज्ञातपताकगोशाः ॥ ४८ ॥

स ईशो नियन् गच्छन् क्रमेण राजपथं समायात् प्राप । कीदृशः । स्वधीतोपनिषद्भिर्वेदान्तपारगैरित्यः प्राप्यः शरण्यः । एषां ज्ञानिनामधीत्यं स्मरणीयं रूपं यस्य सः । कीदृशं राजपथम् । इयज्जनमियन्तः ईयन्तो गच्छन्तो जना यस्मिंस्तम् । तथा व्रातेन आकुला

१. 'ततस्ततः' इति पाठः.

उद्धाताः पताका यस्मिंस्तम् ॥—इय इति । १०४५ इण् गतौ । 'एतिस्तु–' इति क्यप् । स्वधीतेति । १०४६ इङ् अध्ययने । कर्मणि क्तः । अधीत्येति । १०४७ इक् स्मरणे । 'इण्वदिक इति वाच्यम्' इति क्यप् । वियन् । १०४८ वी गतिव्याप्तिप्रजनकान्त्यसनखाद-नेषु । जन्मोपक्रमत्वात् गर्भग्रहणं प्रजनः । वाता । इयदिति । वी ई इति प्रश्लेषादीधातोः शता । समायात् । १०४९ या प्रापणे । इह प्रापणं गतिः । लङ् । वातेति । १०५० वा गतिगन्धनयोः । 'गन्धनं सौरभ्यकरणम्' इति सहस्रनामभाष्ये । 'अर्दनं हिंसनं च गन्धनम्' इति लीलाशुकः । उद्भातेति । १०५१ भा दीप्तौ । द्वयोः कर्तरि क्तः ॥

भगवद्दर्शनोत्सुकानां नारीणामवस्थामाह चतुर्दशभिः—

स्नान्त्यस्तदा श्राणमुपाश्य चान्नं निद्रां गताः प्सातिपरास्तथान्याः ।

पान्त्यः शिशून्धान्यधनानि रान्त्यो लान्त्यश्च काश्चित्कुसुमानि दान्त्यः ४९

ख्यान्त्यः कथाः प्राणमुदां पतीनां निर्मान्त्य इष्टानि चटून्वचन्त्यः ।

नार्यो विदित्वोपगमं मुरारेरासन्गता राजपथं सुमृष्टम् ॥ ५० ॥

तदा नार्यो मुरारेरुपगमं विदित्वा सुमृष्टं सम्यक्शोधितं राजपथं गता आसन् । स्नान्त्यः स्नानं कुर्वत्यः । अन्याः श्राणं पक्वमन्नमुपाश्य भुक्त्वा निद्रां गताः । तथा—प्साति-परा भोजनपराः । शिशून् पान्त्यो रक्षन्त्यः । धान्यधनानि रान्त्यः तत्तज्जनेभ्यो यच्छन्त्यः । लान्त्यः तान्येव तेभ्य आददानाश्च । काश्चित् कुसुमानि दान्त्यः लुनत्यः । कथाः ख्यान्त्यः कथयन्त्यः । प्राणमुदां पूर्णहर्षाणां पतीनामिष्टानि निर्मान्त्यः कुर्वाणाः । चटून् प्रियवाक्यानि वचत्यः भाषमाणाश्च । एवं तत्तत्प्रवृत्तिं कुर्वाणाः ॥—स्नान्त्य इति । १०५२ ष्णा शौचे । शतरि ङीप् । 'आच्छीनद्योर्नुम्' इति नुम् । श्राणम् । १०५३ श्रा पाके । पाकोऽत्र विक्लित्तिः । कर्तरि क्ते यण्वत्त्वान्नत्वम् । निद्राम् । १०५४ द्रा कुत्सायां गतौ । सा च पलायनस्वापौ । स्वापे निपूर्वः । 'आतश्चोपसर्गे इत्यङ् । प्साति । १०५५ प्सा भक्षणे । क्तिन् । पान्त्यः । रान्त्यः । लान्त्यः । दान्त्यः । ख्यान्त्यः । १०५६ पा रक्षणे । १०५७ रा दाने । १०५८ ला आदाने । द्वावपि दानार्थावित्येके । १०५९ दाप् लवने । १०६० ख्या प्रकथने । क्शा इत्यपि केचित् । एभ्यः शतरि ङीप् । प्राणेति । १०६१ प्रा पूरणे । कर्तरि क्ते नत्वम् । निर्मान्त्यः । १०६२ मा माने । मानमिहा-न्तर्भावः । निष्पूर्वत्वादर्थभेदः । शतरि ङीप् । वचत्यः । १०६३ वच परिभाषणे । शतरि ङीपि सत्यकाराभावाद् 'आच्छीनद्योः' इति नुम् न । इणादयोऽनुदात्ताः परस्मैभाषाः । इङ् त्वात्मनेपदी । विदित्वा । १०६४ विद ज्ञाने । क्त्वा । आसन् । १०६५ अस भुवि । लङ् । सुमृष्टम् । १०६६ मृजू शुद्धौ । शोधना सा । कर्मणि क्तः ॥

विलम्बहेतोः समरोददन्या विलोक्य सुप्ता इव तस्थुरन्याः ।

उदश्वसन्प्राणमिवाप्य काश्चिद्दृष्ट्वा सलीलं मृदु जक्षतं तम् ॥ ५१ ॥

---

१. 'गतिप्रजनकान्त्यशनखादनेषु' इति पाठः.

अन्या मृदु मन्द जक्षत हसन्तं सलीलं तं दृष्ट्वा विलम्बहेतोः पूर्वमेव दर्शनाभावेन हेतुना समरोदत्। अन्या विलोक्य सुप्ता इव तस्थुः स्तब्धाः सत्य इव तस्थुः। काश्चित् प्राणमाप्य लब्ध्वा इव उदश्वसन्। उच्छ्वासमकुर्वन्॥—समरोददिति। १०६७ रुदिर् अश्रुविमोचने। लङि 'अड् गार्ग्यगालवयोः' इत्यडागमः। विरादय उदात्ता उदात्तेतः। सुप्ताः। १०६८ जि ष्वप् शये। 'हलन्त्यम्' इतीत्त्वप्रसङ्गात् 'ञि ष्वप् शये' इत्यपपाठः। अस्मात् कर्तरि क्ते 'वचिस्वपि—' इत्युत्वम्। उदश्वसन्। १०६९ श्वस प्राणने। उट्। प्राणम्। १०७० अन च। प्रपूर्वत्वाण्णत्वम्। जक्षतम्। १०७१ जक्ष भक्षहसनयोः। शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः। रुदादि पञ्चकं गतम्॥

तं जाग्रतं दीनदरिद्रपोषे चकासतं शासतमप्रशान्तान्।
देवं स्फुरद्दीधितिमम्बुजाक्ष्यो वेव्यानमालोक्य विमोहमापुः॥ ९२॥

अम्बुजाक्ष्यो वेव्यानं गच्छन्तं तं देवमालोक्य विमोहमापुः। कीदृशम्। दीनदरिद्रपोषे जाग्रतम्। दीनानामनाथानां दरिद्राणां च पोषणे वर्धने च जाग्रतमुन्निद्रम्। चकासतं स्वतः शोभमानम्। अप्रशान्तान्। पर्युदासे नञ्। शासतं शिक्षयन्तम्। स्फुरद्दीधितिं प्रसरत्कान्तिम्॥—जाग्रतमिति। १०७२ जागृ निद्राक्षये। शता। दरिद्रेति। १०७३ दरिद्रा दुर्गतौ। कः। चकासतम्। १०७४ चकासृ दीप्तौ। शासतम्। १०७५ शासु अनुशिष्टौ। विविच्य ज्ञापनं तत्। द्वयोः शता। प्राग्वन्नुमभावः। श्वसादय उदात्ताः परस्मैभाषाः। दीधितिम्। १०७६ दीधीङ् दीप्तिदेवनयोः। देवनं क्रीडाविजिगीषादि। अस्मात् क्तिनि ग्रहादित्वादिट्। वेव्यानम्। १०७७ वेवीङ् वेतिना तुल्ये। 'वी गतिप्रजनकान्त्यसनखादनेषु' इत्युक्तेन वेतिना तुल्येऽर्थे इत्यर्थः। अस्माच्छानच्॥

कदा न्वहं सस्मि समं रतान्ते प्रसंस्ततानेन वशानुगेन।
इत्यादि संबोभुवतोऽभिलाषांस्ता निह्नुवाना ददृशुस्तमीशम्॥ ९३॥

ताः 'अहं रतान्ते प्रसंस्तता निद्रां गतेन वशानुगेन स्वाधीनतां प्राप्तेनानेन सह कदा नु सस्मि स्वपिमि' इत्यादि संबोभुवत एवमायहमहमिकया पुनः पुनर्जायमानानभिलाषान् निह्नुवानाश्छादयन्त्यः सत्यः तमीशं ददृशुः॥—सस्मीति। १०७८ षस १०७९ संस्ति स्वप्ने। सशेर्लट्। प्रसंस्तता। सस्तेः शता। इदित्वात् सकारात्पूर्वे नुम्। वशेति। १०८० वश कान्तौ। कान्तिरिच्छा। 'वशिरण्योरुपसंख्यानम्' इत्यप्। वशादय उदात्ता उदात्तेतः। संबोभुवत इति। १०८१ चर्करीतं च इति सुत्रे यङ्लुकि शब्लुक्। परस्मैपदे ततः शता। निह्नुवानाः। १०८२ ह्नुङ् अपनयने। शानच्। अनुदात्त आत्मनेभाषः। लुग्विकरणं समाप्तम्॥

१. "प्रपूर्वादधुदर्थे 'दृश्य' इति पक्षः" इति पाठो भवेत्. २. 'पश्चि' इति पाठः. ३. 'अपनयने' इति धातुपाठस्थपाठः.

एवं रागाकुलासु स्त्रीषु भगवतो वृत्तिमाह—

जुह्वत्प्रियो भीरुजनं ह्रियार्तं पिप्रत्कृपाभारभृतैरपाङ्गैः ।
अमेयधामा स जहेऽघहानि ददज्जनेभ्यो मुदमादधानः ॥ ९४ ॥

जुह्वदिति । प्रियः स जहे । जुह्वतामग्निकर्मानुष्ठातृणां प्रियः स कृष्णो राजमार्ग एव किंचित् संचरितवान् । कीदृशः । कृपाभारेण भृतैः पूर्णैरपाङ्गैर्भीरुजनं स्त्रीजनं पिप्रत् संकटात् पालयन् ह्रिया लज्जया आर्तं व्याकुलं स्त्रीजनं जनेभ्यो भक्तजनेभ्योऽघहानि दुरितक्षयं ददत् प्रयच्छन् । मुदमानन्दातिशयमादधानश्च ॥—जुह्वदिति । १०८३ हु दानादानयोः । प्रीणनेऽपीति भाष्ये । दानमग्न्यादौ प्रक्षेपः तन्त्रेण । शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः । भीरु इति । १०८४ ञिभी भये ।'भियः क्रुक्लुकनौ' इति क्रुः । ह्रिया । १०८५ ह्री लज्जायाम् । भावे क्विप् । ह्वादयोऽनुदात्ताः परस्मैभाषाः । पिप्रत् । १०८६ पॄ पालनपूरणयोः । ह्रस्वान्त इत्येके । उदात्तः परस्मैभाषः । ह्रस्वान्तस्त्वनुदात्तः शता । भारभृतैः । १०८७ डुभृञ् धारणपोषणयोः । डु भृञ् इति द्रुमे । कर्मणि घञ् । क्तश्च । अनुदात्त उभयतोभाषः । अमेयेति । १०८८ माङ् माने शब्दे च । 'अचो यत्' । जहे । १०८९ ओ हाङ् गतौ । लट् । भृञादित्रय गतम् । अनुदात्तावात्मनेभाषौ । हानिम् । १०९० ओ हाक् त्यागे । 'ग्लाम्ला—' इति निः । अनुदात्तः परस्मैभाषः । ददत् । १०९१ डु दाञ् दाने । शता । आदधानः । १०९२ डु धाञ् धारणपोषणयोः । दानेऽपीत्येके । शानच् ॥

मथुरां प्राप्तस्य भगवतः स्वज्ञातीनां यदूनां प्रथमसंगममाह—

प्रणेनिजद्भिर्मतिमर्थतत्त्वं सुवेविजानैर्यदुभिः स विष्णुः ।
घर्मोष्मभिस्तत्र समारताग्रे नभस्तुरैस्तैः प्रधने प्रवीणैः ॥ ९५ ॥

स विष्णुस्तत्र तस्मिन्देशे तैर्यदुभिरग्रे समारत संगतोऽभूत् । कीदृशैर्यदुभिः । मतिं प्रणेनिजद्भिः शुद्धां परिपुष्टां च कुर्वाणैः । अर्थतत्त्वं पुरुषार्थानां सारासारतत्त्वं सुवेविजानैः सुतरां विभजद्भिः । घर्मोष्मभिर्ग्रीष्मसदृशप्रतापैर्नभस्तुरैर्मेघवद्वेगवद्भिः । प्रधने युद्धे प्रवीणैः ॥—प्रणेनिजद्भिः । १०९३ णिजिर् शौचपोषणयोः । शता । सुवेविजानैः । १०९४ विजिर् पृथग्भावे । शानच् । विष्णुः । १०९५ विष्लृ व्याप्तौ । उदिदित्येके । इरिदिति द्रुमे । 'विषेः किच' इति नुप्रत्ययः । निजादयोऽनुदात्ताः स्वरितेतः । धर्मेति । १०९६ घृ क्षरणदीप्त्योः । समारतेति । १०९८ ऋ गतौ । संपूर्वात् 'समो गम्यृच्छि—' इति तङ् । अनुदात्ताः परस्मैभाषाः । नभ इति । ११०० भस भर्त्सनदीप्त्योः । उदात्त उदात्तेत् । नञ्पूर्वात् क्विप् । तुरैरिति । ११०२ तुर त्वरणे । उदात्त उदात्तेत् । 'इगुपध—' इति कः । प्रधनेति । ११०४ धन धान्ये । अन्यमरणार्थादस्माद्घञर्थे कः । अयमप्युदात्त उदात्तेत् । वृत् । जुहोत्यादयो वृत्ताः । श्लुविकरण समाप्तम् ॥

---

१. अत्र '१०९७ हृ प्रसह्यकरणे १०९९ सृ गतौ' एते धातू नोदाहृतौ.
२. अत्र '११०१ कि ज्ञाने' नोदाहृतः. ३. अत्र '११०३ धिष शब्दे ११०५ जन जनने ११०६ गा स्तुतौ' एतेऽपि नोदाहृताः.

अथ रजकवधप्रसङ्गमाह—

दीव्यन्देवो विचिचस्युवमथ रजकं प्रैक्षतास्यूतमग्रे
छीव्यन्तं तत्रतत्र स्नुसितफलगणान्क्नोव्युपः प्योसहीनम् ।
तं प्रुष्यद्दृष्टिनृत्यद्रुपमपि च गतत्रासमुत्कुथ्यदङ्गं
पोथ्यं प्रोचे स्वरेण स्वजनविगुधितं क्षिप्यता पुष्पमाध्वीम् ॥९६॥

अथ दीव्यन् गच्छन् देवः क्रीडादि कुर्वन् हरिरग्रे आस्युतमागतं रजकं प्रैक्षत । कीदृक् देवः । क्नोव्युपः क्नसां कुटिलीभवतां व्युषः दाहकः । कीदृशं रजकम् । विचित्रस्युवम् । नानारूपं सूचिकर्म कुर्वन्तम् । स्नुसितान् भक्षितान् फलगणान् प्योसहीन विभागशून्यं यथा तथा तत्र तत्र ष्ठीव्यन्तं ष्ठीवनं कुर्वन्तम् । प्योसहीनमिति रजकविशेषण वा । अपि च पुष्पमाध्वीं क्षिप्यता निरसता स्वरेण तं प्रोचे । कीदृशं तम् । प्रुष्यन्त्यां ज्वलन्त्यां दृष्टौ नृत्यन्ती रुट् यस्य तम् । उत्कुथ्यत् पूतीभवदङ्गं यस्य तम् । पोथ्यं हिंसनीयम् । स्वजनेन विगुधित परिवृतम् ॥—दीव्यन्निति । ११०७ दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिगतिषु । व्यवहार उक्तिक्रियादिश्च । दिदि(दिवि)रैश्वर्यार्थ इति देवतान्तादिसूत्रे प्राह हरः । अस्मात् गत्यर्थे शता । देव इति । क्रीडादौ पचाद्यच् । विचित्रस्युवम् । ११०८ षिवु तन्तुसंताने । क्विपि ऊठ् । आस्युतम् । ११०९ स्निवु गतिशोषणयोः । कर्तरि क्ते 'ज्वरत्वरस्रिव्य–' इत्यूठ् । ष्ठीव्यन्तम् । १११० ष्ठिवु निरसने । आस्यान्निःसरणं तत् । शता । स्नुसितेति । ११११ ष्णुसु अदने । कर्मणि क्तः । १११२ ष्णुसु निरसने इति केचित् । क्न इति । १११३ क्नसु ह्वरणदीप्त्योः । क्विप् । व्युषः । १११४ व्युष दाहे । 'इगुपध–' इति कः । प्योसेति । प्युस विभाग इत्येके । घञ् । प्रुष्यदिति । १११५ प्रुष च । दाहे इति शेषः । शता । नृत्यदिति । १११६ नृती गात्रविक्षेपे । शता । त्रासेति । १११७ त्रसी उद्वेगे । घञ् । उत्कुथ्यदिति । १११८ कुथ पूतीभावे । दुर्गन्धीभावस्तत्(?) । शता । पोथ्यम् । १११९ पुथ हिंसायाम् । ण्यत् । विगुधितम् । ११२० गुध परिवेष्टने । कर्मणि क्तः । क्षिप्यता । ११२१ क्षिप प्रेरणे । तच्च निरसनम् । शता । पुष्पेति । ११२२ पुष्प विकसने । घञर्थे कः ॥

तिम्यन्मते स्तिम्यति नाम मन्मन स्तीम्यत्सु तद्व्रीलमृते वदाम्यहम् ।
देहि प्रभोः प्रेष्य मुसोहनाय मे जीर्णांशुकाय त्वमजीर्णमंशुकम् ॥९७॥

हे तिम्यन्मते आर्द्रीभवद्बुद्धे रजक, मन्मनः स्तीम्यत्सु आर्द्रीभवत्सु स्तिम्यति आर्द्रीभवति नाम । तत् तस्मादहं व्रीलं लज्जामृते वदामि । हे प्रभोः प्रेष्य (मुसोहनाय मे) जीर्णांशुकाय निष्पान्नाय मे मह्यं मुसोहनाय तन्त्यवत्सृत्यर्थमजीर्ण नवमंशुकं देहि । जीर्णांशुः क्षीणशोभः पाथो यस्य तस्य संबुद्धिर्वा ॥—तिम्यदिति । ११२३ तिम ११२४

1. 'स्तुतिमोदमदस्वप्नकान्तिगतिषु' इति धातुपाठस्थपाठः.

ष्टिम ११२५ ष्टीम आर्द्रीभावे । तीम इत्यप्येके । तिमैः शता । स्तिम्यति । ष्टिमेर्लट् । स्तीम्यतु । [1]संधिशाम्यात् तीम्यत्स्विति वा छेदः । ष्टीमितीम्योः शता । त्रीलम् । ११२६ व्रीड चोदने । चोदनं लज्जा । प्रेरणे च द्रुमे । घञ् । प्रेष्यः । ११२७ इष गतौ । ण्यत् । सुसोहनाय । ११२९ षुह चक्यर्थे । स च तृप्तिः । ल्युट् । सहेत्यप्येके । जीर्ण इति । झीर्ण इति । ११३० जॄष् ११३१ झॄष् वयोहानौ । द्वयोः कर्तरि क्तः । दिवादय उदात्ता उदात्तेतः क्षिपिवर्जम् ॥

रजकवाक्यमाह—

किं सूयसे गिरमदून नितान्तदीना
मुड्डीनकाकसम भूपतिधीनमेतत् ।
मीयस्व रीणनय मा क्षितिपालयेऽस्मि-
न्त्रीयस्व धार्ष्ट्यमिति दुर्मतिरीशमूचे ॥ ९८ ॥

हे अदून अपीडित, उड्डीनकाकसम, त्वं नितान्तदीनां गिरं सूयसे उत्पादयसि । एतत् त्वया याच्यमानमंशुकं भूपतिधीनं भूपाधारं तदायत्तम् । हे रीणनय गतविनय । अस्मिन् क्षितिपालये राजगृहे मा मीयस्व मृतो भव । धार्ष्ट्यं व्रीयस्व च्छादय । दुर्मतिरिति ईशमूचे ॥—सूयसे इति । ११३२ षूङ् प्राणिप्रसवे । प्राणिग्रहणमतन्त्रम् । अयमसूयार्थोऽपि । अस्माल्लट् । अदून । ११३३ दूङ् परितापे । स्वादय ओदित इति ओदित्त्वान्निष्ठानत्वम् । दीनाम् । ११३४ दीङ् क्षये । उड्डीनेति । ११३५ डीङ् विहायसा गतौ । गतिमात्रे च । धीनम् । ११३६ धीङ् आधारे । एषु कर्तरि क्तः । मीयस्व । ११३७ मीङ् हिंसायाम् । हिंसात्र मृतिः । लोट् । रीणेति । ११३८ रीङ् स्रवणे । प्राग्वत् क्तः । आलये । ११३९ लीङ् श्लेषणे । 'एरच्' । व्रीयस्व । ११४० व्रीङ् वृणोत्यर्थे । छादनं परिग्रहो वा तत् । लोट् । स्वादय ओदितः ॥

आपीय तद्गिरममाननिरीतरोषः
प्रीतिं श्यतोऽस्य स करेण शिरोधिमच्छात् ।
धर्मावसायजनदः खलु योऽजनिष्ट
दीप्तोष्मपूर्णभुजतूर्णविघूर्णवैरी ॥ ९९ ॥

स तद्गिरमापीय श्रुत्वा अमाननिरीतरोषोऽमानमनवधि यथा तथा निरीतो निर्गतो रोषो यस्य तादृशः सन् स्वस्य प्रीतिं श्यतस्तनूकुर्वतो वासोदानाभावेन नाशयतोऽस्य रजकस्य शिरोधिं करेणाच्छात् चिच्छेद । यः खलु धर्मावसायजनदो धर्मनाशकजनानामवखण्डिता सन् अजनिष्ट । दीप्तोष्मपूर्णेन भुजेन तूर्णं यथा तथा विघूर्णा हिंसिता वैरिणो येन सः ॥—आ-

१. 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति विसर्गलोपे 'मनः स्तीम्य' इति च्छेदः. पक्षान्तरे 'मनःतीम्य' इति बोध्यम्. २. 'चोदने लज्जायां च' इति धातुपाठः. ३. अत्र '११२८ षह चक्यर्थे' नोपयुक्तः.

पीयेति । ११४१ पीङ् पाने।ल्यप् । अमानेति । ११४२ माङ् माने । ल्युट् । निरी॰तेति । ११४३ ईङ् गतौ । कर्तरि क्तः । प्रीतिमिति । ११४४ प्रीङ् प्रीतौ । क्तिन् । अकर्मकोऽयम् । पूङादय आत्मनेपदिनः । पूङ् ङूङ् डीङ्वर्जमनुदात्ताः । श्यतः । ११४५ शो तनूकरणे । शता । 'ओतः श्यनि' इति लोपः । अच्छाव् । ११४६ छो छेदने । लुङि 'विभाषा घ्राधेट्शा–' इति सिज्लुक् । अवसायेति । ११४७ षो अन्तकर्मणि । जनद इति । ११४८ दो अवखण्डने । क्विप् । श्यत्यादयोऽनुदात्ताः परस्मैपदिनः । अजनिष्ट । ११४९ जनी प्रादुर्भावे । अयमुत्पादनायामपि । लुङ् । दीप्तेति । ११५० दीपी दीप्तौ । पूर्णेति । ११५१ पूरी आप्यायने । अकर्मकोऽयम् । द्वयोः कर्तरि क्तः । तूर्णेति । ११५२ तूरी गतित्वरणहिंसनयोः । त्वरणमात्रे च द्रुमे । अस्मात् क्तः । विघूर्णेति । ११५३ धूरी ११५४ गूरी हिंसागत्योः । धूरेः कर्मणि क्तः ॥

गूर्णेऽस्मिन्बहुजन्तुघूरिणि खले जूर्णैः शशंसे नृभिः
शौरिः शूरकगर्वचूरणपरः संतप्यमानः सताम् ।
देवौघस्य तपन्भुवं च पतितावावृत्तभूमाप्यसौ
वृत्तक्लेशलवैरकाश्यत समं संवाश्यमानैः स्वकैः ॥ ६० ॥

शौरिरस्मिन्खले गूर्णे हिंसिते सति जूर्णैर्द्वैविंधादित्र्द्धैर्नृभिर्जनैः शशंसे स्तुतः । बहुजन्तुघूरिणि सर्वजन्तुघूरिणि सर्वजन्तुहिंसाशीले । कीदृशः शौरिः । शूरकगर्वचूरणपरः शूरकाणां हिंसकानां स्तम्भनकर्तृणा च दर्पस्य दाहपरः । सतां संतप्यमान ईश्वरो देवौघस्य तपन् ईश्वरो भवन् भुवश्च पतिता ईशिता । इत्थंभूतोऽसौ(साव)वावृत्तभूमा अवि॰च्छादितैश्वर्योऽपि सन् वृत्तक्लेशलवैश्छादितक्लेशलेशैः । अत एव संवाश्यमानैः 'जय केशवाच्युत' इति शब्दायमानैः स्वकैः सममकाश्यत दीप्तोऽभूत् ॥—गूर्णेति । गूरेः कर्मणि क्तः । जन्तुघूरिणि । ११५५ घूरी ११५६ जूरी हिंसावयोहान्योः । घूरेर्णिनिः । जूर्णैः । जूरेः कर्तरि क्तः । शूरकेति । ११५७ शूरी हिंसास्तम्भनयोः । ण्वुल् । चूरणेति । ११५८ चूरी दाहे । ल्युट् । संतप्यमानः । ११५९ तप ऐश्वर्ये वा । तपिरस्मिन्नर्थे वा तङ्श्यनौ प्राप्नोतीत्यर्थः । कोपे च द्रुमे । शानच् । तपन् । तङ्श्यनोरभावेऽपि शता । पतिता । पत ऐश्वर्ये वा इत्येके । तस्मिन् पक्षे तृच् । वावृतेति । वृत्तेति । ११६० वृतु वरणे । केचित् पूर्वत्र [पठितं] वाग्रहणमस्यादि कृत्वा 'वावृतु वरणे' इत्याहुः । द्वयोः कर्मणि क्तः । क्लेशेति । ११६१ क्लिश उपतापे । घञ् । अकाश्यत । ११६२ काशृ दीप्तौ । लङ् । संवाश्यमानैः । ११६३ वाशृ शब्दे । शानच् । जन्यादय उदात्ता अनुदात्तेतः । तपिस्त्वनुदात्तः ॥

तन्मृष्यमाणास्त्वथ शुच्यदक्षकाभृत्याः सुनद्धं बहुरक्तमंशुकम् ।
विसृज्य शप्यन्त इमं प्रदुद्रुवुः कृष्णः प्रपेदे वसनान्यखेदवान् ॥ ६१ ॥

अथ भृत्यास्तत्स्वामित्वधारि[1] मृष्यमाणाः सहमानाः सुनद्धं भयानां निधाय सम्य-

---

१. 'विधाय' इति पाठः.

ग्यद्धं बहु अनल्पमंशुकं विसृज्य त्यक्त्वा इमं शप्यन्तो निन्दन्तः प्रद्रुद्रुवुः । शुच्यद्रङ्काः स्वेदादिभिः पूतीभवत्कुत्सिताङ्गाः । रक्तं कुसुम्भादिभिः कृतनानावर्णम् । कृष्णो वसनान्यंशुकानि प्रपेदे उद्धृतवान् ॥—मृष्यमाणा इति । ११६४ मृष तितिक्षायाम् । शानच् । शुच्यदिति । ११६५ ई शुचिर्[1] पूतीभावे । दुर्गन्धीभावस्तत् । शौचविशरणक्लेदेषु च द्रुमे । शता । द्वावुदात्तौ । सुनद्धम् । ११६६ णह बन्धने । कर्मणि क्तः । रक्तम् । ११६७ रञ्ज रागे । कर्तरि क्तः । शप्यन्तः । ११६८ शप आक्रोशे । शता । त्रयोऽनुदात्ताः । मृषादयः पञ्च स्वरितेतः । प्रपेदे । ११६९ पद गतौ । लिट् । खेदेति । ११७० खिद दैन्ये । घञ् ॥

प्राग्विद्यमानवसनेष्वधृतैकमीशो
बुद्ध्वा ददौ च रिपुयोधजयी निजेभ्यः ।
कंसानुरोध्यणनहृन्मतिमद्युगर्च्यः
शेषं व्यसृज्यत पटौघमलिश्यमानम् ॥ ६२ ॥

ईशो विद्यमानवसनेष्वनर्घवस्त्रेष्वेकं प्राक् अन्येभ्यः पूर्वमधृत परिहितवान्, बुद्ध्वा निजेभ्यो ददौ च । स्वीयानां तारतम्यमवगम्य दत्तवांश्च । शेषं पटौघं व्यसृज्यत त्यक्तवान् । कंसानुरोध्यणनहृत् कंसानुवर्तिनामणनहृत् प्राणहृत् । मतिमद्युगर्च्यो मतिमतां ज्ञानिनां युजां समाधिकर्तॄणामर्च्यः । अलिश्यमानमनल्पीभवन्तं पटौघम् ॥—विद्यमानेति । ११७१ विद सत्तायाम् । शानच् । बुद्ध्वा । ११७२ बुध अवगमने । ज्वलादिगतबोधतिवद्बोधो ज्ञानं चार्थः । तस्मात् क्त्वा । योधेति । ११७३ युध सम्प्रहारे । अच् । कंसानुरोधीति । ११७४ अनो रुध कामे । अनुपूर्वो रुधिः कामेऽर्थे तद्रूपतां भजते । तस्मादत्र तु णिनिः । अणनेति । ११७५ अण प्राणने । अन इत्येके । ल्युट् । मतीति । ११७६ मन ज्ञाने । क्तिन् । युगिति । ११७७ युज समाधौ । अकर्मकोऽयमिति माधवः । क्विप् । व्यसृज्यत । ११७८ सृज विसर्गे । स चोत्पादनत्यागौ । लङ् । अलिश्यमानम् । ११७९ लिश अल्पीभावे । शानच् । पदादयोऽनुदात्ता अण्यतिवर्जमनुदात्तेतः ॥

राध्यद्द्विपगुणोऽथ वायकवराद्दैत्याविदेषोऽप्युप-
च्छोषं तोपकृतोऽस्य दोपविततेराश्लिष्टलक्ष्मीस्तनः ।
शक्यन्गर्वमशक्यमानमनसामास्विद्यदास्योऽक्षुधं
क्षुध्यद्भक्तदमाप मालिकवरं शुद्धं स सिद्धेप्सितम् ॥ ६३ ॥

अथैष दैत्याविड् दैत्यच्छेत्ता वायकवरात् सौचिकश्रेष्ठात् तद्दत्तोष्णीषादिभी राध्यद्द्विपगुणः सिध्यन्मनोज्ञवेषः सन् तोपकृतोऽस्य दोपविततेर्नाशमपुपद्वर्धयत् । तदनन्तरं च स मालिकवरं मालाकारश्रेष्ठमाप । कीदृशः । अशक्यमानमनसामसहमानमनसां गर्वं शक्यन्

1. 'शुचिर्' अनादिर् धातुपाठे.

सह्मानः । आस्विद्यदास्य ईषत् स्विद्यन्मुखः । कीदृशं माल्लिकश्वरम् । अक्रुधं क्रोधहीनम् । क्षुध्यतां बुभुक्षमाणानां भक्तदमन्नप्रदम् । शुद्धं सिद्धमार्थितं च ॥—राध्यादिति । ११८० राधोऽकर्मकाद्वृद्धावेव । वृद्ध्यर्थ इव । अकर्मकादेव राधेः श्यन् । अस्य तु सिद्धिद्रोहदर्पपर्यालोचनादयोऽर्थाः । शता । दैत्याविद् । ११८१ व्यध ताडने । तच्च प्रायेण विदारणपर्यन्तम् । क्विपि 'नहि वृतिवृषि–'इत्यादिना दीर्घः । अपुपद् । ११८२ पुप पुष्टौ । अयमकर्मकोऽपि । इतो गणान्ताः पुषादयः । तेन 'पुषादिद्युतादि–' इत्यङ् । शोषतोषदोषेति । ११८३ शुप शोषणे । ११८४ तुप प्रीतौ । ११८५ दुप वैकृत्ये । वैकृत्यं विकृतता । त्रयाणां घञ् । आश्लिष्टेति । ११८६ श्लिप आलिङ्गने । कर्मणि क्तः । शक्यन् । अशक्यमानेति । ११८७ शाक विभाषितो मर्षणे । विभाषित इत्युभयपदीनां पूर्वाचार्यसंज्ञा । शतृशानचौ । आस्विद्यदिति । ११८८ ञि ष्विदा गात्रप्रक्षरणे । शता । अक्रुधम् । ११८९ क्रुध कोपे । भावे क्विप् । क्षुध्यादिति । ११९० क्षुध बुभुक्षायाम् । शता । शुद्धम् । सिद्धेति । ११९१ शुध शौचे । ११९२ षिधु संराद्धौ । संसिद्धिः सा । द्वयोः कर्तरि क्तः ॥

रद्धारये सोऽयमनश्वराय तृप्यन्मना दृप्तजनद्रुहेऽस्मै ।
मुग्धस्मितस्नोहिमुखाय मालां स्निह्यन्ददौ सादरमस्तवीच्च ॥ ६४ ॥

सोऽयमस्मै स्निह्यन्सादरं मालां ददौ अस्तवीच्च । कीदृशाय । अनश्वराय नित्याय । मुग्धस्मितस्नोहिमुखाय मुग्धस्मितोद्गिरणशीलं मुखं यस्य तस्मै । रद्धारये निहतशत्रवे । दृप्तजनद्रुहे दुष्टजनहन्त्रे । तृप्यन्मनाः प्रीणितान्तरात्मा ॥—रध्येति । ११९३ रध हिंसासंराध्योः । संराद्धिः पाकः । कर्मणि क्तः । अनश्वराय । ११९४ णश अदर्शने । 'इण्नश–' इति क्वरप् । तृप्यदिति । ११९५ तृप प्रीणने । तच्च तृप्तिस्तर्पणं च । शता । दृप्तेति । ११९६ दृप हर्षमोहनयोः । मोहनं गर्वः । मोचनयोरित्येके । कर्तरि क्तः । द्रुह इति । ११९७ द्रुह जिघांसायाम् । क्विप् । मुग्धेति । ११९८ मुह वैचित्त्ये । अविवेकस्तत् । कर्तरि क्तः । स्नोहीति । ११९९ ष्णुह उद्गिरणे । णिनिः । स्निह्यन् । १२०० ष्णिह प्रीतौ । शता । वृत् । विकल्पितेट उदात्तेतो रधादयो वृत्ताः ॥

अशाम्यदात्मापि तमी नमामि दमिप्रियं श्रान्तिहरं भवन्तम् ।
श्राम्यामि भोः क्षाम्य ममापराधं क्लान्तं मनो माद्यति दर्शनात्ते ॥६५॥

अहमशाम्यदात्मा अशान्तमना अपि त्वां नमामि । तमी त्वयि काङ्क्षाशीलः मरणेन पीडाशीलो वा । दमिप्रियं दमशीलानामिष्टम् । अहं श्राम्यामि अनवस्थितो भवामि । भवाब्ध्याविल्यर्थात् । भो मम अनादरादिकमपराधं क्षाम्य क्षमस्व । क्लान्तं त्वदादर्शनात् पीडितं मनस्ते दर्शनान् माद्यति । श्रान्तिहरं संसरणदुःखनिरासकम् ॥—अशाम्यदिति । १२०१ शमु उपशमे । शतरि 'शमामष्टानाम्–'इति दीर्घः । तमीति । १२०२ तमु

१. 'मरण' इति पाठः.

कान्त्वायाम् । ग्लानावेव प्रयोगः । मुरारिस्तु 'दृष्टुं बहूत्ताम्यति' इति काङ्क्षायामेवाह । 'शमिलयाम्यः' इति चिनुशु । दमीति । १२०३ दमु उपशमने । अयमकर्मकोऽपि । प्राग्वत् घिनुण् । धान्तीति । १२०४ श्रमु तपसि खेदे च । क्विन् । श्राम्यामि । १२०५ भ्रमु अनवस्थाने । अयमकर्मकः सकर्मकश्च लट् । क्षाम्येति । १२०६ क्षमू सहने । अयमपित् । लोट् । क्लान्तम् । १२०७ क्लमु ग्लानौ । कर्तरि क्तः । मादति । १२०८ मदी हर्षे । हर्षोऽत्र गर्वः । दन् । शमादयो वृत्ताः ॥

अस्तायासविजस्तविश्वतसनो निर्दस्तवासैर्नुतो
वेदव्योपकृदप्लुपो विसितधीकुस्यज्जनांहोबुसम् ।
मुस्तामोप्यमसः किटिस्त्वमसमो लुठ्यन्खलानोकसो
भृश्यभ्रंशनवर्शकाकृशदयस्तृष्णाहरो हृष्य मे ॥ ११ ॥

त्वं विसितधीकुस्यज्जनांहोबुसमप्लुपः । विसितया प्रेरितया धिया कुस्यतां संश्लिष्यतां जनानामंहोरूपं बुसमप्लुपो दग्धवानसि । कीदृशः।अस्तायासं लक्तप्रयासं यथा तथा विजस्तविश्वतसनः मोक्षितलोकक्षयः । निर्दस्तवासैर्निर्दस्त उपक्षीणो वासः स्तम्भो नम्रतामावो येषां तैः । नुतः । वेदव्योपकृद् व्यासरूपेण वेदानां विभागकृत् । असमोऽपरिमाणः परिमाणहीनो वा त्वं मुस्तामोपी मुस्ताखण्डी किटिर्वराहरूपो असमः परिणतवानसि । खलान् ओकसः स्थानात् लुठ्यन् क्षोभयन् । भृश्यद्भ्रंशनवर्शकाकृशदयो भृश्यतामधःपततां स्वभक्तानां भ्रंशस्याधःपतनस्य वर्शका छादयित्री अकृशा दया यस्य स तादृशस्त्वं मे हृष्य तुष्टो भव ॥—अस्तेति । १२०९ असु क्षेपणे । कर्मणि क्तः । आयासेति । १२१० यसु प्रयत्ने । घञ् । विजस्तेति । १२११ जसु मोक्षणे । कर्मणि क्तः । तसनेति । १२१२ तसु उपक्षये । ल्युट् । निर्दस्तेति । १२१३ दसु च । कर्मणि क्तः । वासेति । १२१४ वसु स्तम्भे । वस्तित्येके । वसेर्घञ् । शमादयः क्षमिदमि(मदि)वर्जमुदितः । व्योपेति । १२१५ व्युष विभागे । व्युसेति चैके । व्युषेर्घञ् । अप्लुप इति । १२१६ प्लुष दाहे । लुङि पुषाद्यङ् । विसितेति । १२१७ विस प्रेरणे । कर्मणि क्तः । कुस्यदिति । १२१८ कुस संश्लेषणे । शता । बुसम् । १२१९ बुस उत्सर्गे । इगुपधात् कः । मुस्तेति । १२२० मुस खण्डने । 'ध्वान्तध्वान्तलग्नपुतचित्तनिमित्तमुस्त—' इत्यादिना भोजेन क्ते निपातितः । मोपी । मुष इत्येके । णिनिः । असमः । १२२१ मसी परिणामे । परिमाणे इति द्रुमे । असम इति ।'समी परिणामे' इति दन्त्यादिरित्येके । तस्माल्लुङि पुषाद्यङ् । लुठ्यन् । १२२२ लुठ विलोडने । शता । ओकसः । १२२३ उच समवाये । 'ओक उचः के' इति निपातितः । भृश्यद्भ्रंशनेति । १२२४ भृशु १२२५ भ्रंशु अधःपतने । द्वयोः शतृल्युटौ । वर्शकेति । १२२६ वृश वरणे । ण्वुल् । अकृशेति । १२२७ कृश तनूकरणे । 'अनुपसर्गात्फुल्लक्षीबकृश—' इति निपातितः ।

१. 'विशाण्' इति पाठः. २. 'उपशमे' इति धातुपाठे. ३. 'विलोडने' इति पाठः.

तृष्णेति। १२२८ तृष पिपासायाम्। 'तृषिशुषिरसिभ्यः कित्' इति नन् प्रत्ययः। हृष्य। १२२९ हृष तुष्टौ। लोट्॥

रुष्यद्रिष्यदरातिडेपक विभो कोपादिगोपो न ते
किं चायोप्यविरोपिलोपक न वा लोभादिसंक्षोभिता।
नभ्यांस्तुभ्य विभो जयेति नुवते क्लिद्यन्प्रमेद्यद्रुजं
क्ष्विद्यन्नृद्धिमगृध्नवेऽपि स विमृश्याक्षीयमाणां ददौ॥ ९७॥

रुष्यतां कुप्यतां परान् रिष्यतां हिंसतां च रिपूणां डेपक क्षेपक हे विभो ते तव कोपादिभिर्गोपो व्याकुलत्वं न। किंच। अयोप्यविरोपिलोपक अयोप्यविरोपिनाममोहमोहयितॄणां लोपक मोहक, ते लोभादिसंक्षोभिता वा न। त्वं नभ्यान् हिंसान् तुभ्य हिंसय। विभो त्वं जयेति नुवते तस्मै क्लिद्यन् कृपया आर्द्रीभवन्। प्रमेद्यद्रुजं वर्धमानां पीडां क्ष्विद्यन् मोचयंश्च स विमृश्य स्वयमेव विचिन्त्य अगृध्नवेऽनिच्छवेऽक्षीयमाणामक्षीणामृद्धिं ददौ॥—रुष्यद्रिष्यदिति। १२३० रुष रोषे। १२३१ रिष हिंसायां चेत्सेके। द्वयोः शता। डेपक इति। १२३२ डिप क्षेपे। ण्वुल्। कोपादिगोप इति। १२३३ कुप क्रोधे। १२३४ गुप व्याकुलत्वे। द्वयोर्घञ्। अयोप्यविरोपिलोपकेति। १२३५ युपु १२३६ रुपु १२३७ लुपु विमोहने। क्रमेण ण्यणिनिण्वुलः। लोभादिसंक्षोभितेति। १२३८ लुभ गार्ध्ये। १२३९ क्षुभ संचलने। द्वयोर्घञ् णिनिश्च (?)। नभ्यान् तुभ्य। १२४० णभ १२४१ तुभ हिंसायाम्। यल्लोट् च। क्लिद्यन् प्रमेद्यन् क्ष्विद्यन्निति। १२४२ क्लिदू आर्द्रीभावे। १२४३ ञिमिदा स्नेहने। १२४४ ञिक्ष्विदा स्नेहनमोचनयोः। त्रयाणां शता। मिदेस्तु 'मिदेर्गुणः' इति गुणः। ऋद्धिम्। १२४५ ऋधु वृद्धौ। क्तिन्। अगृध्नवे। १२४६ गृधु अभिकाङ्क्षायाम्। 'त्रसिगृधि-' इति क्नुः। वृन्। पुषादयो दिवादयश्च वृत्ताः। दिवादयस्त्वत्रत्यत्कता इत्येके। तेन मृश्यति क्षीयते इत्यादावपि। तत्र मृशेर्ल्यप्। क्षीयतेः शानच्। शमादय उदात्ता उदात्तेतः॥

अथ कुब्जानुग्रहकथामाह—

सुन्वत्प्रियं तमथ रागसिताशिताम-
मारोन्मिताक्षनिचयास्तृतमानसान्ता।
कुब्जा कृतारिवल्लमैक्षत वृण्वती सा
पात्रं समीरधुतसौरभधूतभृङ्गम्॥ ९८॥

अथ सा कुब्जा सैरन्ध्री सुन्वत्प्रियं सुन्वन्तो यज्ञ कुर्वन्तो द्विजाः प्रिया यस्य तं श्रीकृष्णमैक्षत। कीदृशी कुब्जा। रागसिता रागेण बद्धा। शिताग्रेण मारोन्मितेन कामक्षितेनाक्षनिचयेनास्तृतं छादितं मानसान्तं यस्याः सा। तथा—समीरधुतेन वायुचलि-

१. 'रुष रिष हिंसायाम्' इति धातुपाठे. २. त्रयोऽप्यनुदितः पुस्तके.

तेन सौरभेण धृताः संभ्रान्ता भृङ्गा यस्मिंस्तत् तादृशं पात्रं वृण्वती स्वीकुर्वती । कीदृशं हरिम् । कृतारिपलं कृतं हिंसितमरिपलं येन तम् ॥—सुन्वदिति । १२४७ षुञ् अभिषवे । अभिषवो निष्पीडनस्नपनसुरासंधानस्नानादिः । शता । षिता । १२४८ षिञ् वन्धने । कर्मणि क्तः । शितेति । १२४९ शिञ् निशाने । प्राग्वत् क्तः । उन्मितेति । १२५० डुमिञ् प्रक्षेपणे । प्राग्वत् क्तः । निचयेति । १२५१ चिञ् चयने । 'एरच्' । आस्तृतेति । १२५२ स्तृञ् छादने । लक्षणया विक्षेपे । प्राग्वत् क्तः । कृतमिति । १२५३ कृञ् हिंसायाम् । प्राग्वत् क्तः । वृण्वती । १२५४ वृञ् वरणे । स्वीकारश्छादनं वा तत । शतरि ङीप् । धुतेति । धूतेति । १२५५ धुञ् कम्पने । धुञ् इत्येके । द्वयोः कर्मणि क्तः । स्वादय उभयतोभाषाः । अनुदात्ता धृञ्वर्जम् ॥

कन्दर्पेण दुता विलेपकुशला सा चान्तिकं हिन्वता
पृष्ठा तेन पृता विलेपनमदात्स्पार्याय लोकस्पृते ।
संप्राप्यो निजशक्तिराद्धतपसः साधोः स देवोऽपि ता-
मृज्वीकर्तुमुपानशे सुकृतिनीं प्रस्तिघ्नुवानः खलान् ॥ ६९ ॥

कन्दर्पेण दुता पीडिता सा च विलेपे तत्संपादने कुशला अन्तिकं हिन्वता प्राप्नुवता तेन पृष्ठा पृता प्रीणिता स्पार्याय प्रीणनीयाय लोकस्पृते लोकपालकाय भगवते विलेपनं कलभमदात् । निजशक्तिराद्धतपसो निजशक्त्या स्वस्य सेवाशक्त्या राद्धं सिद्धफलं तपो यस्य तस्य साधोः संप्राप्यः स देवोऽपि तामृज्वीकर्तुमृजुरेखां कर्तुमुपानशे समीपं प्राप । यतः—सा सुकृतिनी । कीदृशो देवः । खलान्प्रस्तिघ्नुवान आस्कन्दन्नभिभवन् ॥—दुतेति । १२५६ दु दु उपतापे । कर्मणि क्तः । हिन्वता । १२५७ हि गतौ वृद्धौ च । शता । पृता । १२५८ पृ प्रीतौ । कर्मणि क्तः । स्पार्याय । १२५९ स्पृ प्रीतिपालनयोः । ण्यत् । लोकस्पृते । स्पृ इत्येके । क्विप् । संप्राप्यः । १२६० आप्लृ व्याप्तौ । ण्यत् । शक्तीति । १२६१ शक्लृ शक्तौ । क्तिन् । राद्धेति । १२६२ राध १२६३ साध संसिद्धौ । राधेः कर्तरि क्तः । साधोः । 'कृवापाजिमिस्वदि साध्यशूभ्य उण्' इति साधेरुण्प्रत्ययः । द्वादयोऽनुदात्ताः परस्मैभाषाः । उपानशे । १२६४ अशू व्याप्तौ संघाते च द्रुमे । 'अश्नोतेश्च' इति नुट् । प्रस्तिघ्नुवानः । १२६५ ष्टिघ आस्कन्दने । शानच् ॥

ऋज्वीकर्तुमित्युक्तम् । ऋज्वीकरणप्रकारमाह—

तामाक्रम्य पदे पदेन चिबुके चाक्रिन्नुवन्पाणिना
चक्रे सघ्नुवतां वधे दधृगसावृज्वीं मनोज्ञाकृतिम् ।
किं चादभ्नुवतीमिमां मम गृहानेहीति याच्यापरा-
नेप्यानीत्यनुतस्तम्भकरुणः क्षिण्वन्कटाक्षैर्धृतिम् ॥ ७० ॥

---

१. 'निशावने' इति पाठः.

असौ तां पदे चरणे पदेनातिक्याक्रम्य चिबुके पाणिना चातिग्मुवत्तकमनृज्वीमवक्र-देहां मनोज्ञाकृतिं चक्रे । कीदृशः । सम्रुवतां हिंसतां वधे दधृक् प्रगल्भः । किं च 'मम गृहानेहि' इति याच्मापरामदभ्रुवतीं व्याजमकुर्वाणामव्याजभक्तामिमामेष्यामीत्युक्त्वा अमु-चत् । अत्र हेतुः—सम्र्द्धकरणः । कटाक्षैर्धृतिं धैर्यं क्षिण्वन् नाशयन् ॥—अतिक्येति । १२६६ तिक १२६७ तिग च । एतावप्यास्कन्दने । आशालयप् । अतिम्रुवन् । तिगेः शता । सम्रुवताम् । १२६८ षघ हिंसायाम् । शता । दधृक् । १२६९ञिधृषा प्रागल्भ्ये । 'ऋत्विग्दधृक्–' इति क्विप् । अदभ्रुवतीम् । १२७० दन्भु दम्भे । दम्भो लोकरञ्जनार्थे कर्मानुष्ठानम् । शतरि ङीप् । सम्र्द्धेति । १२७१ ऋधु वृद्धौ । अयमक-र्मकः सकर्मकश्च । कर्तरि क्तः । क्षिण्वन् । १२७३ रि १२७४ क्षि १२७५ चिरि १२७६ जिरि १२७७ दाश १२७८ दृ हिंसायाम् । 'एषु छान्दसेषु क्षिणोतुः सर्वथा लोकेऽस्ति' इत्युक्तस्य क्षेः शता ॥

कुब्जावैरूप्यहरणानन्तरं केऽपि भाग्यवन्तो भगवन्तं ज्ञातवन्त इत्याह—

> क्ष्मां दघ्नुवन्मखचमिव्यसनानि रिण्व-
>
> न्नृक्षिण्वतां चिरयणैरपथं जिरिण्वन् ।
>
> कंसं प्रदाश्यमतिदुर्द्रवमुद्दुदूषु-
>
> श्छन्दःश्रुतोऽपि स हि कैश्चिदबोधि लोके ॥ ७१ ॥

छन्दःश्रुतश्छन्दसि वेदे एव श्रुतः प्रसिद्धोऽपि स लोके मनुष्याणां मध्ये कैश्चित् भाग्य-वद्भिरबोधि ईश्वरत्वेन ज्ञात आसीत् । कीदृशः । क्ष्मां महीं दघ्नुवन् पालयन्, मखचमिनां क्रतुगसहभ्या(श)शिनां देवाना व्यसनानि दुःखानि रिण्वन् नाशयन्, ऋक्षिण्वतां हिंस-कानां चिरयणैर्वधैरपथं कुमार्गं जिरिण्वन् नाशयन् । प्रदाश्यं हिंस्यमतिदुर्द्रवमन्येषामसन्तं हिंसितुमशक्यं कंसमुद्दूपुरुच्चैरधिकं हिंसितुमिच्छुः ॥—दघ्नुवन्निति । १२७९ दघ घातने पालने च । शता । मखचमीति । १२८० चमु भक्षणे । णिनिः । रिण्वन् । रि क्षि इत्यादौ धातोः शता । ऋक्षिण्वताम् । 'आय ऋक्षीलेके' इत्युक्तस्य धातोः शता । चिरयणैः । चिरिधातोर्ल्युट् । जिरिण्वन् । जिरेः शता । दुर्द्रवम् । द्रुधातोः खल् । उद्दुदूषुः । दुदु इत्यपि केचित् । इत्यस्य सन्नुः । केचित् 'च्छ-न्दस्यह व्याप्तौ' इति पठित्वा दघादि लोकेऽप्याहुः । एतदेव च्छन्दःश्रुतोऽपीतिवादेन द्योतितम् । तिकादय उदात्तेतः । रिक्षिचिरिजिरदाशदृवर्जमुदात्ताः । दुद्रुत्वात्मनेभाषः । वृत् । स्वादयो वृत्ताः ॥

---

१. 'गतौ च' इति धातुपाठे. २. 'दम्भने' इति धातुपाठे. ३. धातुपाठे तु 'दृ' इत्येवो-पलभ्यते. तथाच 'दुर्दवम्' इत्येव पाठः स्यात्. ३. '१२७२ अह व्याप्तौ' नोदाहृतः.

एवं राजमार्गसंचारेण तत्रत्यभक्तानन्दमुक्त्वा गोपुरान्तर्गतानां सुकृतातिशयेन तत्प्राप्तिमाह—

तुदन्कुचरिताञ्शुभे प्रणुदमान इष्टं दिश-
न्प्रभृष्टपललान्क्षिपन्नरिमतिं कृषन्माधवः ।
ऋपन्नजुषत क्रमान्नगरगर्भमुद्वेजय-
न्नलग्नमनसः खलानवशलज्जमानाङ्गनम् ॥ ७२ ॥

माधवः क्रमात् तत्र तत्र विलम्बमानः ऋपन् गच्छन् नगरगर्भमभ्यन्तरप्राकारान्तर्भागमजुषतासेवताधितवान् । तत्रत्यजनं प्रीणितवानिति वा । कीदृशं कुर्वन्नित्यत्राह—कुचरितान् रजकादींस्तुदन् । मालाकारादीञ्शुभे प्रणुदमानः प्रेरयन् । तेषामेव इष्टं ददन्(त्) । प्रभृष्टं पक्वं पललं मांसं यैस्तान् दुष्टान् क्षिपन् प्रेरयन् निरस्यन् । अत एव अरिमतिं कृषन् विलिखन् विदारयन् । अलग्नमनसो दुर्व्यापारेषु अलग्नमलज्जितं मनो येषां तान् खलान् उद्वेजयन् भीषयन् कम्पयन् वा । एतानि षट् तत्कालविशेषणानि । कीदृशं नगरगर्भम् । भगवत्प्रेम्णा अवशा व्याकुला लज्जमानाः सलज्जा अङ्गना यस्मिंस्तम् ॥—तुदन्निति । १२८१ तुद व्यथने । शता । प्रणुदमानः । १२८२ णुद प्रेरणे । शानच् । दिशन् । १२८३ दिश अतिसर्जने । दानं तत् । शता । प्रभृष्टेति । १२८४ भ्रस्ज पाके । कर्मणि क्तः । कित्त्वात् संप्रसारणम् । 'स्कोः—' इति सलोपः । क्षिपन् । १२८५ क्षिप प्रेरणे । निरसननिन्दादयोऽपि प्रेरणभेदा एव । कृषन् । १२८६ कृष विलेखने । तदत्र हलकर्म । द्वयोः शता । तुदादयोऽनुदात्ताः स्वरितेतः । ऋपन् । १२८७ ऋपी गतौ । शता । उदात्त उदात्तेत् । अजुषत । १२८८ जुषी प्रीतिसेवनयोः । लङ् । उद्वेजयन् । १२८९ ओ विजी भयचलनयोः । प्रायेणोत्पूर्वः । अस्माण्णिचि शता । १२९० ओलजी १२९१ ओलस्जी व्रीडने । लजेः कर्तरि क्तः । लज्जमानेति । लस्जेः शानच् । सस्य जश्त्वम् । 'ओलजी ओलस्जी व्रीडने'[1] इति चान्द्रमतं माधवदूषितम् । जुषादय उदात्ता अनुदात्तेतः ॥

नगरगर्भं वर्णयति पञ्चभिः—

वृक्णव्याचरसोञ्छती फलगणानव्युच्छितायां निशि
भ्रान्ती नर्च्छति मिच्छिता सुजनता यत्रान्वितं जर्जती ।
चर्चन्ती कटु झर्झती बुधजनं दोषं त्वचिन्त्वर्चती
नित्यं भूपतिमुब्जनोज्झितमना यत्रास्ति तस्या सुखम् ॥ ७३ ॥

सुजनता सज्जनसमूहः । 'ग्रामजन—' इति तल् । 'स्मृतिद्विकेषु तदन्तविधिरिष्यते' इति जनान्तादपि । मिच्छिता क्लेशिता यद्यन्वितं न नर्च्छति गच्छति । कीदृशी सुजनता

1. 'व्रीडने' इति पाठः.

वृश्चणव्याचारसा। वृश्चणंदिछन्नो व्याचे व्याजे रस आग्रहो यस्याः सा। फलगणान् उञ्छती पृथक्पृथगाददाना। निशि अव्युच्छितायामनतिक्रान्तायां प्रलूये एव ख्वान्ती। एतैरत्युत्तमत्वमुक्तम्। हितं श्रेय एव अर्जती सर्वतो वदन्तीति कंससानिष्टत्वे हेतुः। खल्या खलसमूहो यत्र सुखं यथा तथा आस्त स्थितवती। कीदृशी खल्या। कटु क्रूरं चर्चन्ती परिभाषमाणा। बुधजनं झर्झती सतर्जयन्ती। भूपतिं राजानं दोषं त्वचित्वा आच्छाद्य नित्यं सर्वदा ऋचती प्रशंसन्ती। उब्जनोज्झितमनाः। उब्जनेनार्जवेनोज्झितं त्यक्तं मनो यस्याः सा॥—वृश्चणेति। १२९२ ओ व्रश्चू छेदने। कर्मणि क्तः। व्याचेति। १२९३ व्यच व्याजीकरणे। घञ्। उञ्छती। १२९४ उछि उञ्छे। शतरि ङीप्। 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः। अव्युच्छितायाम्। १२९५ उछी विवासे। अतिक्रमवन्धनवर्जनेषु च द्रुमे। कर्तरि क्तः। ऋच्छति। १२९६ ऋछ गतीन्द्रियप्रलयमूर्तिभावेषु। इन्द्रियप्रलयो मोहः। मूर्तिभावः काठिन्यम्। अस्माल्लट्। मिच्छिता। १२९७ मिछ उत्क्लेशे। स च पीडा। कर्मणि क्तः। अर्जती। चर्चती। झर्झती। १२९८ जर्ज १२९९ चर्च १३०० झर्झ परिभाषणसंतर्जनयोः। आयान्त्यावपि चान्ताविर्त्येके। एषां शतरि ङीप्। त्वचित्वा। १३०१ त्वच संवरणे। क्त्वा। ऋचती। १३०२ ऋच स्तुतौ। शतरि ङीप्। उब्जनेति। १३०३ उब्ज आर्जवे। ल्युट्। उज्झितेति। १३०४ उज्झ उत्सर्गे। दस्य धुत्वम्। कर्मणि क्तः॥

शत्रूक्षोभकरेफरीढितृपिता तृम्फाय तोपार्थिनो
राज्ञो नित्यमतुम्पकान्वितुफती बन्धूंश्च संतुम्फती।
युद्धेषूद्दृपिता हितेष्वदृफिता यस्मिन्नृफन्ती सुरा-
न्नृम्फार्हा पृतना स्थिता सुगुफितैर्माल्यैः कचान्गुम्फती॥ ७४॥

यस्मिन् पृतना स्थिता। पृतनां विशिनष्टि—शत्रूक्षोभकरेफरीढितृपिता। शत्रूणामुक्षोभकस्य मोहकस्य रेफस्य युद्धस्य रीढ्या कथनेनास्माभिरेवं शत्रूनाकुलीकृत्य युद्धं कृतमिति परस्परोक्त्या तृपिता सदा संतुष्टा। तोपार्थिनो हिंसेच्छो राज्ञस्तृम्फाय संतोषाय अतुम्पकान् अहिंसकान् सदा वितुफती हिंसती बन्धूंश्च संतुम्फती हिंसती। उद्दृपिताः उच्चैः क्लेशिताः शत्रवो येषु तेषु युद्धेषु अदृपिता अक्लेशिता अप्रयत्ना। सुरान् ऋफन्ती हिंसती। एवंरूपत्वात् ऋम्फार्हा भगवत्कृतं वधमर्हतीति ऋम्फार्हा। सुगुफितैः सम्यग्वद्धैर्माल्यैः कचान् गुम्फती बध्नती। अनेन तस्या जितशत्रुत्वमुक्तम्॥—उक्षोभकेति। १३०५ क्षुभ विमोहने। विमोहनं व्याकुलीकरणम्। ण्वुल्। रेफेति। १३०६ रिफ कत्थनयुद्धनिन्दाहिंसादानेषु। अस्माद् घञि रेफः। रीढीति। रिह इत्येके। क्तिन्। तृपिता। १३०७ तृप १३०८ तृम्फ तृप्तौ। प्रीणने द्रुमे। आद्यः तर्फेत्येके। तृपेः

१. 'भर्त्सनयोः' इति धातुपाठे. २. अयं च धातुर्दकारोपधः. दकारस्य भत्वं भवति धुसंनिधाने ततो जश्त्वम्. तेन 'उब्जिजिषति' इतीष्टसिद्धिरिति स्पष्टं द्वयवरट्सूत्रे भाष्ये.

विद्रोणनेष्वघुणिता मदघूर्णदक्षा
युद्धे सुरानपि खरोत्कुरिताः खुरन्तः ॥ ७६ ॥

यत्र मल्लाश्च शुनकाः श्वान इव उच्चैश्चुकुणुः शब्दमकुर्वन्। कीदृशाः। गुण्यसुगमस्य ईशस्य वध मुणन्तः प्रतिजानानाः। विद्रोणनेषु हिंसासु अघुणिता असंभ्रान्ताः। मदेन घूर्णन्ति भ्रमन्ति अक्षीणि येषां ते मदघूर्णदक्षाः। युद्धे सुरानपि खरोत्कुरिताः खरं परुषमुत्कुरितमुच्चैस्तरशब्दो येषां तादृशाः। खुरन्तश्छिन्दन्तः। अनेन पुरस्य दुःसेव्यत्वं द्योतितम् ॥—गुण्येति। १३३३ गुण कर्मणि शुभे। 'जनिकृतिपुणिभ्यः क्यप्' इति भोजोक्तेः क्यप्। मुणन्तः। १३३४ मुण प्रतिज्ञाने। शता। चुकुणुः। १३३५ कुण शब्दोपकरणयोः। उपकरणं वाद्यवादनसाधनभावः। लिट्। शुनकाः। १३३६ शुन गतौ। कुन्। विद्रोणनेषु। १३३७ द्रुण हिंसागतिकौटिल्येषु। ल्युट्। अघुणिताः। १३३८ घुण १३३९ घूर्ण भ्रमणे। घुणेः कर्तरि क्तः। घूर्णदिति। घूर्णेः शता। सुरान्। १३४० पुर ऐश्वर्यदीप्त्योः। 'इगुपध—' इति कः। उत्कुरितेति। १३४१ कुर शब्दे। 'नपुंसके भावे क्तः'। खुरन्तः। १३४२ खुर छेदने। शता ॥

कंसस्य सुखासनस्थानमिदमित्याह—

मुरादिबन्धुः क्षुरघोरचेताः पुरन्खलानां जनजीवबर्ही।
कंसः स्थितो यत्र ततर्ह लोकं स्तृढामरस्तृंहकरानभीच्छन् ॥७७॥

कंसो यत्र स्थितो लोकं ततर्ह हिंसितवान्। कीदृशः कंसः। मुरादयो बन्धवो यस्य सः। क्षुर इव घोरं चेतो यस्य सः। खलानां पुरन् अग्रे गच्छन्। श्रेष्ठ इत्यर्थः। जनजीवबर्ही जनजीवमुन्मूलयितुं सक्तुं शीलं यस्य सः। स्तृढा अर्दिता अमरा येन सः। तृंहकरान् हिंसाकरणशीलान् आभीक्ष्ण्येन इच्छन्। एतैः कंसस्य लोकहिंसायां सौकर्यमुक्तम् ॥—मुरेति। १३४३ मुर संवेष्टने। कः। क्षुरेति। १३४४ क्षुर विलेखने। खनने च द्रुमे। कः। घोरेति। १३४५ घुर भीमार्थशब्दयोः। घञ्। पुरन्। १३४६ पुर अग्रगमने। शता। जनजीवबर्ही। १३४७ वृह्रू उद्यमे। स चोन्मूलनम्। णिनिः। ततर्ह। १३४८ तृहू १३४९ स्तृहू १३५० तृन्हू हिंसार्थाः। इहू इत्यप्येके। तृहेर्लिट्। स्तृढेति। स्तृहेः कर्मणि क्तः। तृहेति। तृंहेर्घञ्। अभीच्छन्। १३५१ इष इच्छायाम्। केचिदुदितं पठन्ति। शता ॥

तत्रापि भाग्यवन्तो भगवन्तमद्भुतदृष्ट्यो दृष्टवन्त इत्याह—

गतनिमेषमुदैक्षि किलन्विभुः सुकृतिभिः स जगत्तिलकाकृतिः।
चिलितपीतपटेन चलन्निलन्नविलितोरुकृपां परितो दृशम् ॥ ७८ ॥

किलन् क्रीडन् स विभुः सुकृतिभिर्गतनिमेषं यथा तथा उदैक्षि उच्चैरधिकं दृष्टः।

१. 'उद्यमने' इति धातुपाठः. २. षोपदिष्टोऽयं पुस्तकद्वयेऽपि.

विभुं विशिनष्टि—चिल्लितपीतपटेन वेष्टितेन पीताम्बरेण चलन् विलसन् । जगत्तिलकाकृतिर्लोकालंकारभूतशरीरेहः । अविलितोरुकृपामविलिता अवंवृता प्रकाशिता उर्वी कृपा यस्यां तां दशं परित इलन् प्रेरयन् । एतैर्भक्तानन्दकरत्वमुक्तम् ॥—निमेषेति ।१३५२ मिष स्पर्धायाम् । अयमुन्मीलनार्थोऽपि । अस्माद्बन् । किलन् । १३५३ किल श्वैत्यक्रीडनयोः [श्वत्य इत्येके ।] शता । तिलकेति । १३५४ तिल स्नेहने । इगुपधात् केति कः । अस्मादिवार्थे कन् । चिल्लितेति । १३५५ चिल्ल वसने । कर्मणि क्तः । चलन् । इलन् । १३५६ चल विलसने । १३५७ इल स्वप्नक्षेपणयोः । द्वयोः शता । अविलितेति । १३५८ विल संवरणे । कर्मणि क्तः ॥

भक्तमनोनन्दाय अतिक्रूरेऽप्यत्र क्रीडितवानित्याह—

विलशयप्रतिमैर्निलिते पुरे स हि सुहृत्सु हिलन्नचरत्सुखम् ।
शिलितधान्यसिलप्रणतो हरिः प्रमिलतां हृदये लिखिताकृतिः ॥ ७९ ॥

स हरिः । हि प्रसिद्धौ । विलशयप्रतिमैः सर्पसमैर्दुष्टैर्निलिते गहनीभूते पुरे सुहृत्सु अक्रूरादिषु हिलन् स्वाभिप्रायं प्रकाशयन् यथा तथा अचरत् । कीदृशः । शिलितधान्यसिलप्रणतः शिलितं कणश आत्तं धान्यानां सिलं क्षेत्रविकीर्णबीजं यैस्तैः प्रणतः । प्रमिलतां स्वस्मिन् सम्यक् संश्लिष्यतां हृदये लिखिता तद्वत्स्थिरीभूता आकृतिः श्रीमूर्तिर्यस्य सः ॥—विलेति । १३५९ बिल भेदने । अस्याकर्मकत्वं स्वाम्याह । अस्मादिगुपधात् कः । निलिते । १३६० णिल गहने । कर्तरि क्तः । हिलन् । १३६१ हिल भावकरणे । अभिप्रायसूचनं तत् । शता । शिलितेति । १३६२ शिल १३६३ षिल उञ्छे । शिलेः कर्मणि क्तः । सिलेति । उञ्छ्यत इति सिलः । घञर्थे कः । प्रमिलताम् । १३६४ मिल श्लेषणे । शता । लिखितेति । १३६५ लिख अक्षरविन्यासे । कर्मणि क्तः ॥

अथ कंसस्यातिभयेन दृढध्यानसिद्धये धनुर्भञ्जनं कृतमित्याह—

ततोऽतिकुटिलाशयैः प्रपुटितैः कुचज्जीवितै-
र्गुजद्भिरपि सैनिकैः सुगुडितां डिपद्भिर्जनान् ।
सुधाच्छुरितविस्फुटस्मितरुचैव धैर्यं मुट-
न्धनुस्त्रुटनतो मनाक्प्रतुटनाय शालामगात् ॥ ८० ॥

ततो धनुस्त्रुटनतश्चापच्छेदनेन मनाक् प्रतुटनाय कंसस्य कलहं कर्तुं शालां धनुःशालामगात् प्राप्तः । कथमगात् । सुधया छुरिता लिप्ता विस्फुटा विकसिता प्रकाशिता या स्मितरुक् तयैव धैर्यं मुटन् प्रमर्दयन् नाशयन् । कीदृशीं शालाम् । सैनिकैर्भटैर्योद्धृभिः सुगुडितां सम्यग्रक्षिताम् । कीदृशैर्भटैः । अतिकुटिलाशयैर्वक्रचित्तैः । प्रपुटितैः सम्यगेकत्र संघातीभूतैः । जनान् डिपद्भिः क्षिपद्भिर्निरस्यद्भिः । गुजद्भिः सदा क्रन्दद्भिः ।

१. 'क्षेपणयोः' इति धातुपाठः.

कुचत्रीवितैः कुचत् संकुचितं गतप्रायं जीवितं प्राणा येषां तैः ॥—कुटिलेति । १३६६ कुट कौटिल्ये । इतः कुडन्ताः कुटादयः । अस्मात् 'गुणादिभ्यः कित्' इतीलच् । अत्र कित्वं वृथा । डित्वेनैव गुणाभावात् । प्रपुटितैः । १३६७ पुट संश्लेषणे । कर्तरि क्तः । कुचदिति । १३६८ कुच संकोचने । शता । गुजद्भिः । १३६९ गुज शब्दे । अव्यक्त इत्येके । शता । सुगुडिताम् । १३७० गुड रक्षायाम् । कर्मणि क्तः । डिपद्भिः । १३७१ डिप क्षेपे । शता । छुरितेति । १३७२ छुर छेदने । लेपनेऽपि दृष्टः । कर्मणि क्तः । विस्फुटेति । १३७३ स्फुट विकसने । कः । मुटन् । १३७४ मुट आक्षेपमर्दनयोः । शता । त्रुटनतः । १३७५ त्रुट छेदने । प्रायोऽस्य द्वैधीभावे वृत्तिः । ल्युट् । प्रतुटनाय । १३७६ तुट कलहकर्मणि । ल्युट् ॥

पोच्योऽयं चुडतेति केऽपि जुडतेत्यन्ये कडन्तोऽलुठ-
न्देवे स्वैर्लुलिते कुडत्विपि कुडद्धात्रे पुडित्वादरम् ।
ईशश्चाघुटितस्तुडन्खलमुदं रोषं थुडन्प्रस्फुड-
न्धाम स्वं स्फुरितो जगाम धनुषः पार्श्वे क्षणादस्फुलन् ॥८१॥

केऽपि भटाः 'अयं पोच्यश्छेद्यः । एनं सर्वे चुडत छिन्त' इत्येवं वदन्तः, अन्ये 'जुडत बध्नीत' इति वदन्तः, कडन्तो माद्यन्तः सन्तः स्वैरात्मीयैर्लुलिते संश्लिष्टे कुडत्विपि घनीभवच्छोभे कुडद्धात्रे शिशुभवद्देहेऽपि देवे आदरं बहुमानं पुडित्वा त्यक्त्वा अलुठन् सश्लिष्टाः संघातीभूता आसन् । ईशश्च ईशोऽपि अघुटितोऽप्रतिहतः खलमुदं तुडन् दारयन् नाशयन् रोषं थुडन्नाच्छादयन् स्वमसाधारणं धाम तेजः प्रभावं प्रस्फुडन् तिरोहितं कुर्वन् स्फुरितः शोभमानः अस्फुलन्नकम्पमानश्च सन् क्षणाच्छीघ्रं धनुषः पार्श्वे समीपं जगाम ॥—पोच्य इति । १३७७ पुड १३७८ चुड छेदने । पुडेर्ण्यत् । चुडत । चुडेर्लोट् । जुडत । १३७९ जुड बन्धने । लोट् । कडन्तः । १३८० कड मदे । शता । अलुठन् । १३८१ लुठ संश्लेषणे । लुडेत्येके । लुठेर्लङ् । लुलितेति । लुडेः कर्तरि क्तः । कुडदिति । १३८२ कुड घनत्वे । सान्द्रता तत् । शता । कुडदिति । १३८३ कुड बाल्ये । संघात इत्येके । भक्षणे च द्रुमे । शता । पुडित्वा । १३८४ पुड उत्सर्गे । क्त्वा । अघुटितः । १३८५ घुट प्रतिघाते । कर्तरि क्तः । तुडन् । १३८६ तुड तोडने । तच्च भेदनम् । शता । थुडन् । प्रस्फुडन् । १३८७ थुड १३८८ स्फुड संवरणे । कुड छुड इत्येके । आद्ययोः शता । स्फुरितः । १३८९ स्फुर १३९० स्फुल संचलने । स्फुर स्फुरणे । स्फुर सचलने इति केचित् । तत्र स्फुरणं शोभा । स्फुरेः कर्तरि क्तः । अस्फुलन् । स्फुलेः शता ॥

क्षौमेण स्फुडितं स्रजा निचुलितं चाम्रोड्यशोभं धनु-
र्गेहक्रोडतले स मोदकुलितो दृष्ट्वागुरिष्टं क्षणात् ।

1. 'चुट छुट' इति धातुपाठे. 2. 'जुट' इति धातुपाठे. 3. 'स्फुड' इति धातुपाठे.

नूत्वा किं भयधूतविद्रुतगुवल्लोकं तदा तद्ध्रुव-
त्कोण्दडं कुवमानमैक्षि दलितं भोजेश्वराकूतवत् ॥ ८२ ॥

स क्षौमेण स्फुडितं छादितं स्रजा निचुलितं संवृतं चैवंरूपमप्यत्रोज्ज्वशोभमनाच्छादनीयप्रभं धनुर्गेहक्रोडतले गृहस्य संवृतप्रदेशेऽन्तर्भागे दृष्ट्वा मोदे निमग्नः सन् क्षणात् शीघ्रमगुरिष्टोद्धृतवान् । नूत्वा किं बहुप्रशंसया किम् । न किंचित् कार्यम् । तदा ध्रुवत् स्थिरीभवत् तत् कोदण्डं भयधूतविद्रुतगुवल्लोकं भयेन धूतो वेपितो विद्रुतो धावितो गुवत् पुरीषमुत्सृजंश्च लोको जनो यस्मिञ्शब्दे तथा कुवमानं शब्दायमानं भोजेश्वरस्य कंसस्याकूतमभिप्राय इव दलितं खण्डितमैक्षि सर्वैर्दृष्टम् ॥—स्फुडितमिति । १३९१ स्फुड १३९२ चुड १३९३ व्रुड संवरणे । कुडेत्यप्येके । स्फुडेः कर्मणि क्तः । निचुलितम् । चुडेः प्राग्वत् क्तः । अत्रोज्ज्वेति । व्रुडेर्ण्यत् । क्रोडेति । कुडेर्घञ् । कुलितः । १३९४ कुंड १३९५ रुड निमज्जने इति चैके । कुडेः कर्तरि क्तः । व्रश्चादय उदात्ता उदात्तेतः । अगुरिष्ट । १३९६ गुरी उंद्यमने । उद्धरणं तत् । अयमुदात्तोऽनुदात्तेत् । लुङ् । नूत्वा । १३९७ णू स्तवने । क्तिन् । धूतेति । १३९८ धू विधूनने । क्तः । गुवदिति । १३९९ गु पुरीषोत्सर्गे । उवङ् । शता । ध्रुवत् । १४०० ध्रु गतिस्थैर्ययोः । ध्रुव इत्येके । द्वयोः सह शता । अनजन्तस्य सेट्त्वं भेदः । गुध्रू अनुदात्तौ । ध्रुव उदात्तः । णूप्रभृतयः परस्मैभाषाः । कुवमानम् । १४०१ कुङ् शब्दे । शानच् । आकूतेति । कूङित्येके । क्तः । वृत् । कुटादिर्वृत्तः ॥

अनेन धनुर्भङ्गेन कंसस्य महद् भयं जातमित्याह—

व्यापारेऽत्र तदामरानपि रियन्नाशा पियन्नाधित-
क्रौर्योत्क्षीणधनुष्प्रसूतनिनदः कंसे व्यकारीद्गरम् ।
येनानादरवान्धृतोऽपि स चलन्पृच्छन्किमित्युत्सृज-
न्धैर्यं मम्रमनाश्च हृद्रुजि चिरं भुञ्जाननस्त्वास्थिवान् ॥ ८३ ॥

तदा अत्रेदृशे व्यापारेऽमरानपि रियन्प्राप्नुवन्नाशा दिशः पियन्व्याप्नुवन्नाधितक्रौर्योत्क्षीणधनुष्प्रसूतनिनदः । आधितक्रौर्यः सम्यग्धारितक्रौर्यः, उत्क्षीण उद्धतः धनुषा प्रसूतः प्रेरितश्च यो निनदः स कंसे गरं विषं व्यकारीत्क्षिप्तवान् । अत्यन्तपीडामकरोदित्यर्थः । येन सोऽनादरवान्निरस्तबहुमानः सन् धृतोऽवस्थितोऽपि चलन्वेपमानः किमिदमिति पृच्छन्धैर्यमुत्सृजंस्त्यजन्हृद्रुजि मम्रमनाश्च चिरं भुञ्जाननोऽवनतमुखस्तस्थिवान्स्थितोऽभूत् ॥—व्यापार इति । १४०२ पृङ् व्यायामे । स च प्रवृत्तिमात्रम् । प्रायेण व्याङ्पूर्वोऽयम् । घञ् । अमरान् । १४०३ मृङ् प्राणत्यागे । अच् । कुङादय आत्मनेभाषा अनुदात्ताः । कुङ्वर्जम् । रियन् । पियन् । १४०४ रि १४०५ पि गतौ । द्वयोः शता । आधितेति । १४०६ धि धारणे । गताविति द्रुमे । कर्मणि क्तः । उत्क्षीणेति । १४०७ क्षि निवास-

१. 'कुड भृड निमज्जने' इति धातुपाठे. २. 'उद्यमे' इति पाठः.

गत्योः। कर्तरि क्तः। 'निष्ठायामण्यदर्थे' इति दीर्घः। 'क्षियो दीर्घात्' इति नत्वम्। प्रसृतेति। १४०८ पृ प्रेरणे। कर्मणि क्तः। व्यकारीत्। १४०९ कॄ विक्षेपे। लुङ्। गरम्। १४१० गॄ निगरणे। अच्। रियत्यादयः परस्मैभाषाः। अनादरेति। १४११ दृङ् आदरे। अत्रैव निपातनात् घञ्यवृद्धिः। धृतः। १४१२ धृङ् अवस्थाने। धारणे च हुमे। अनुदात्तावात्मनेभाषौ। पृच्छन्। १४१३ प्रच्छ ज्ञीप्सायाम्। तुद्। शता। 'ग्रहिज्या–' इति संप्रसारणम्। वृत्। किरादिर्वृत्तः। उत्सृजन्। १४१४ सृज विसर्गे। विसर्गः। उत्पादनं त्यागश्च। शता। मग्नेति। १४१५ टु मस्जो शुद्धौ। कर्तरि क्तः। रुजि। १४१६ रुजो भङ्गे। भावे क्विप्। भुग्नेति। १४१७ भुजो कौटिल्ये। कर्तरि क्तः॥

चापरक्षकेषु हतेषु कंसः पर्याकुलचित्तोऽपि मल्लयुद्धोद्योगमकरोदित्याह—

रोषच्छुप्तधियाथ रोष्टुमभितो योधान्द्विषद्रेशका-
नालिष्टानजितो जघान धनुषः खण्डेन मर्मस्पृशा।
ते विच्छायदशा दिवं प्रविविशुः कंसो विमर्शाकुलो
मल्लादीननुदत्परेद्यवि हरेरुत्सन्नशत्रोर्वधे॥ ८४॥

अथ अजितो रोषच्छुप्तधिया रोषेण छुप्तया स्पृष्टया धिया हेतुभूतया रोष्टुं हन्तुमभितः सर्वत आलिष्टानागतान् योधान् भटान् मर्मस्पृशा मर्मवेधिना धनुषः खण्डेन जघान। कीदृशान् योधान्। द्विषतां रेशकान् हिंसकान्। ते योधाः विच्छायदशा गच्छदशाः सन्तः दिवं भगवल्लोकं प्रविविशुः। कंसो विमर्शाकुलधिन्तया व्याकुलोऽपि मल्लादीन् परेद्यवि ऊर्ध्वदिने उत्सन्नशत्रोरपि हरेर्वधेऽनुदत प्रेरितवान्॥—छुप्तेति। १४१८ छुप संस्पर्शे। कर्मणि क्तः। रोष्टुम्। १४१९ रुश १४२० रिश हिंसायाम्। रुशेस्तुमुन्। रेशकान्। रिशेर्ण्वुल्। आलिष्टान्। १४२१ लिश गतौ। कर्तरि क्तः। मर्मस्पृशा। १४२२ स्पृश संस्पर्शने। 'स्पृशोऽनुदके–' इति क्विन्। विच्छायदिति। १४२३ विच्छ गतौ। 'गुपूधूपविच्छि–' इत्यायान्ताच्छता। प्रविविशुः। १४२४ विश प्रवेशने। लिट्। विमर्शेति। १४२५ मृश आमर्शने। स्पर्शनं तत्। घञ्। अनुदत्। १४२६ णुद प्रेरणे। लङ्। उत्सन्नेति। १४२७ षद्लृ विशरणगत्यवसादनेषु। कर्मणि क्तः। तयोः। १४२८ शद्लृ शातने। अस्माण्णिजन्तात् 'शदेरगतौ तः' इति भोजोक्तेः कुः। मस्जादयः उदात्तेतः। अनुदात्ता विच्छिवर्जम्॥

मिश्रैः संमिलमान एत्य नगरोद्यानं विमुञ्चन्भियं
गोपानां भयलोपिवागिभरवद्धाविलासानुलेरं वहन्।

1. 'स्पर्शने' इति पाठः. 2. 'शातेः' इति पाठः. कौमुद्यां तु 'रुशातिभ्यां क्रुन्। चाचरशातिः शत्रु मल्लादीः। पाठभ्रमात्' इत्युक्तम्.

चिर् विरेचने । शता । विविक्तेति । १४४२ विचिर् पृथग्भावे । कर्मणि क्तः । चुक्षोद । १४४३ क्षुदिर् संपेषणे । लिट् । उदयुङ्क्त । १४४४ युजिर् योगे । लङ् । 'अजादेरप्यजन्तादप्युपसर्गात्तङिष्यते' इति तङेव । रुधादयोऽनुदात्ताः [स्वरितेत उभयतोभाषाः] ॥

संच्छृण्णगात्रमथ शात्रवतर्दिनस्ते
चाणूरमुष्टिकमुखा वसनान्यकृन्तन् ।
इन्धानखेदमुदविन्त विशिष्टलोकः
पेक्ष्यत्सु माधवमभञ्जभुजेषु तेषु ॥ १ ॥

अथ ते चाणूरमुष्टिकमुखाः संच्छृण्णगात्रं सम्यक् दीप्तं गात्रं यस्मिन् तथा वसनानि मल्लयुद्धोचितानि अकृन्तन्नवेष्टन्त । शात्रवाणां शत्रूणां तर्दनं हिंसनमनादरो वा शीलं येषां ते मल्लाः । विशिष्टलोकः सज्जनस्तेषु माधवं पेक्ष्यत्सु संचूर्णयिष्यत्सु । हेतौ शता । इन्धानखेदं वर्धमानं दुःखं यस्मिन् तथा उदविन्त उच्चैर्विचारमकरोत् । अभञ्जभुजेषु भङ्गरहितः शक्तिक्षयरहितो भुजो येषां तेषु ॥—संच्छृण्णेति । १४४५ उच्छृदिर् दीप्तिदेवनयोः देवनं क्रीडाविजिगीषादि । 'दीप्तिवमनयोः' इत्येके । अस्मिन् कर्तरि क्तः । शात्रवतर्दिनः । १४४६ उतृदिर् हिंसानादरयोः । णिनिः । द्वावुदात्तौ । रुधादयः स्वरितेतः । इरितश्च । अकृन्तन् । १४४७ कृती वेष्टने । उदात्त उदात्तेत् । लङ् । इन्धानेति । १४४८ ञि इन्धी दीप्तौ । दीपनायामपि । उदात्तोऽनुदात्तेत् । अस्माच्छानच् । खेदम् । १४४९ खिद दैन्ये । घञ् । उदविन्त । १४५० विद विचारणे । लङ् । अनुदात्तावनुदात्तेतौ । विशिष्टेति । १४५१ शिष्लृ विशेषणे । उत्कर्षार्थत्वात् । अकर्मकात्स्मात् कर्तरि क्तः । पेक्ष्यत्सु । १४५२ पिष्लृ संचूर्णने । लृदि हेतौ शता । अभञ्जेति । १४५३ भञ्जो आमर्दने । घञ् । भुजेति । १४५४ भुज पालनाभ्यवहारयोः । अनुमतेऽपि । 'भुजन्युब्जौ पाण्युपतापयोः' इति निपातितः । शिषादयोऽनुदात्ता [उदात्तेतः] ॥

को नस्तृणेढि हिनसाम समुत्तमास्तै-
स्तं गोपसूनुमिति तैल्लवाचकगात्राः ।
संतकनद्धवसनाः परिवेगवृक्णा
रङ्गं समेत्य पपृचुः स्वजनांश्च मल्लाः ॥ २ ॥

को नोऽस्मांस्तृणेढि निहन्ति । न कोऽपि । तं गोपसूनुमाशु रुधिरैः समुत्तं क्लिन्नाङ्गं कृत्वा वयं हिनसाम मारयाम । मल्ला इति एवमुक्त्वा रङ्गं समेत्य स्वजनान् पपृचुर्योजितवन्तः । घोरता मल्लाः । संतकं संकोचितं यथा तथा नद्धं बद्धं वसनं यैस्ते । परिवेगेन भयेन कम्पेन वा वृक्णा दीनाः ॥—तृणेढीति । १४५५ तृह १४५६ हिंसि हिंसायाम् ।

ववेल्लेंट् । विनशाम । हिंसेलेंट् । सनुत्तम् । १४५७ उन्दी क्लेदने । कर्मणि क्तः । 'नुद-विदोन्द–' इति नत्वाभावे रूपम् । अंक्तेति । १४५८ अन्जू व्यक्तिम्रक्षणगतिषु । व्यक्तिः प्रकाशनम् । म्रक्षणं मिश्रीकरणम् । अस्मात्कर्मणि क्तः । संतक्तेति । १४५९ तन्चू संकोचने । तन्जू इत्येके । द्वयोस्तन्त्रेण कर्मणि क्तः । परिवेगेति । १४६० ओ विजी भयचलनयोः । घञ् । वृक्ताः । १४६१ वृजी वर्जने । वृती च द्रुमे । 'वृची वरणे' इति केचित् । कर्मणि क्तः । पपृचुः । १४६२ पृची संपर्के । सकर्मकोऽयं अदिनोक्तः । तस्माल्लिट् । रुधादय उदात्ता उदात्तेतः । वृत् । रुधादयो वृत्ताः । इति श्नम्-विकरणम् ॥

तन्वन्स[1]मन्नभुवि सातरसः स्वबन्धू-
नक्षण्वतां क्षितिकरो मुदमर्णवानः ।
कंसस्तृणीकृतरिपुर्घृणिमान्वतार्ति
मन्वान एकमथमन्नमलंचकार ॥ ४ ॥

अथ स कंसः स्वबन्धून् मन्नभुवि तन्वन् विस्तारेण निवेशयन् तत्तत्स्थानेषु कुर्वन् वा । वतार्ति प्रार्थितप्राप्तिं मन्वानः एकं मन्नमलंचकार अलंकृतवान् । सातरसो दत्तरसः । बन्धूनामित्यर्थात् । अक्षण्वतामहिंसकानां क्षितिकरः हिंसनकृत् । मुदमर्णवानः प्रापुवन् । घृणिमान्क्रोधवान् ॥—तन्वन् । १४६३ तनु विस्तारे । अयं कृञर्थेऽपि । अस्माच्छता । सातेति । १४६४ षणु दाने । कर्मणि क्ते । 'जनसन–' इति आत्वम् । अक्षण्वताम् । १४६५ क्षणु हिंसायाम् । १४६६ क्षिणु च । क्षणेः शता । क्षितीति । क्षिणेः क्तिन् । 'अनुदात्तोपदेश–' इति नलोपः । अर्णवानः । १४६७ ऋणु गतौ । शानच् । तृणीकृतेति । १४६८ तृणु अदने । पचाद्यर्थे कः । तृणम् । तस्मात् अभूततद्भावे इति च्विः । घृणीति । १४६९ घृणु दीप्तौ[2] । घण इत्येके । 'इगुपादिभ्यः' इति घृणेरिक् । तनादय उदात्ताः स्वरितेतः । वतेति । १४७० वनु याचने । वनेः कर्मणि क्तः । मन्वानः । १४७१ मनु अवबोधने । शानच् । उदात्तावनुदात्तेतौ । वनुः परस्मैपदीति चान्द्राः । अलंचकार । १४७२ डु कृञ् करणे । अनुदात्त उभयतोभाषः । अस्माल्लिट् । उविकरणं समाप्तम् ॥

अथ भगवतो रङ्गप्रवेशमाह—

क्रीणन्गुणैर्जनमतिं प्रियरूप ईशो
मांसश्रियां प्रमथकृत्सितपीतचेलः ।

---

१. 'अहरहला इत्येके । तेन तुन्सर्तीति सिद्धम्' इति कामधेनुः पाठः. २. 'दीप्तौ' इति धातुपाठे.

मोदस्कुतोऽथ कबरीं प्रयुनन्सरामः

क्रूनन्मृदङ्गमिह रङ्गमगादरिद्रूः ॥ ५ ॥

अथेशः कबरीं प्रयुनन् बध्नन् सरामो रामेण सहित इह अस्मिन् काले रङ्गमगात्। कीदृशः। गुणैर्जनमतिं क्रीणन् विनिमयन् वशीकुर्वन् मांसथ्रियां मांसपाचकानां तद्रक्षिणां प्रमयकृत् हिंसनकृत् सितपीतचेलो बद्धपीताम्बरो मोदे स्कुत आप्लुतः। अरिद्रूः शत्रुहिंसकः। क्रूनन्मृदङ्गम्। क्रूनन् शब्दायमानो मृदङ्गो यस्मिंस्तं रङ्गम् ॥—क्रीणन्निति। १४७३ डु क्रीञ् द्रव्यविनिमये। शता। प्रियेति। १४७४ प्रीञ् तर्पणे कान्तौ च। कान्तिः कामना। 'इगुपधज्ञाप्रीकिरः कः' इति कः। मांसथ्रियाम्। १४७५ श्रीञ् पाके। क्विप्। प्रमयेति। १४७६ मीञ् हिंसायाम्। 'एरच्'। सितेति। १४७७ षिञ् बन्धने। कर्मणि क्तः। स्कुतेति। १४७८ स्कुञ् आप्रवणे। आप्लवनं तत्। आवरण इत्येके। उद्धृतावित्ति द्रुमे। अस्मात्कर्तरि क्तः। युनन्। १४७९ युञ् बन्धने। शता। क्र्यादयोऽनुदात्ता उभयतोभाषाः। क्रूनदिति। १४८० क्नूञ् शब्दे। शता। अरिद्रूः। १४८१ द्रूञ् हिंसायाम्। इत्यप्येके। क्विप् ॥

द्वारं पुनन्पदतलेन स लूनवैरी

स्तीर्णाननं मदजलेन करीतुकामम्।

नागं ददर्श पटवूर्णमुखं धुनानं

कर्णौ शृणन्तमखिलानभिपूर्तरोषम् ॥ ६ ॥

स श्रीकृष्णः पदतलेन द्वारं पुनन् श्रीपादारविन्दं रङ्गद्वारे निदधानः सन्। तत्र करीतुकामं हिंसितुमिच्छु नागं कुवलयापीडाख्यं गजश्रेष्ठं ददर्श। लूनवैरी छिन्नशत्रुः। कीदृश नागम्। मदजलेन स्तीर्णाननं छन्नवक्त्रम्। पटवूर्णमुखं पटच्छादितं मुखं यस्य तम्। कर्णौ धुनानं कम्पयन्तम्। अखिलान् शृणन्तं हिंसयन्तम्। अभिपूर्तरोषं सपूर्णरोषम् ॥—पुनन्निति। १४८२ पूञ् पवने। पवनं शोधना। शतरि 'प्वादीनां ह्रस्वः' इति ह्रस्वः। लूनेति। १४८३ लूञ् छेदने। कर्मणि क्ते 'ल्वादिभ्यः' इति नत्वम्। स्तीर्णेति। १४८४ स्तॄञ् छादने। कर्मणि क्तः। करीतुकामम्। १४८५ कॄञ् हिंसायाम्। तुमुनि 'तुमः कामे मनस्यपि' इति मलोपः। वूर्णेति। १४८६ वॄञ् वरणे। भरण इत्यप्येके। धुनानम्। १४८७ धूञ् कम्पने। शानच्। क्र्यादय उदात्ता उभयतोभाषाः। शृणन्तम्। १४८८ शॄ हिंसायाम्। शता। अभिपूर्तेति। १४८९ पॄ पालनपूरणयोः। कर्तरि क्ते 'न ध्याख्यापॄमूर्छिमदाम्' इति नत्वाभावः ॥

तत्र स्परीतुमनसं रुपमावृणन्त-

मम्बष्ठमुन्मदभरं स भृणन्नभाषे।

त्वामेष संप्रति मृणामि दृणामि नागं
नो चेज्जृणत्तम नरानकृणन्नृणीहि ॥ ७ ॥

स तत्राम्बष्ठं हस्तिपकं भृणन् भर्त्सयन् बभाषे । कीदृशं हस्तिपकम् । स्परीतुमनस हन्तुकामम् । रुषमावृणन्तं स्वीकुर्वन्तं छादयन्तं वा । उन्मदभरमुद्धतदर्पातिशयम् । एषोऽहं त्वां संप्रति मृणामि हिंसयामि । नागं गजं दृणामि विदारयामि । हे जृणत्तम वृद्धतम, नो चेत् एतन्नेच्छसि चेत् । त्वं नरान् अकृणन् अहिंसन् ऋणीहि मार्गात् अपगच्छ ॥— स्परीतुमनसामिति । १४९० स्पृ हिंसायाम् । तुमुन् । प्रागवन्मलोपः । आवृणन्तम् । १४९१ वृ वरणे । शता । वृ वरणभरणयोरित्येके । भरम् । भृणन् । १४९२ भृ भर्त्सने । भरणे इति केचित् । 'ऋदोरप्' । शता च । मृणामि । १४९३ मृ हिंसायाम् । दृणामि । १४९४ दृ विदारणे । भये च द्रुमे । द्वयोर्लट् । जृणदिति । १४९५ जृ वयोहानौ । झृ इत्येके । जृणातेः शता । नरान् । १४९६ नृ नये । पचाद्यच् । अकृणन् । १४९७ कृ हिंसायाम् । शता । ऋणीहि । १४९८ ऋ गतौ । लोट् ॥

इत्थं हरौ गृणति हस्तिपकोऽपि कोपी
जीनोऽप्यहं न तु रिणामि भियेति वादी ।
पार्श्वे लिनन्गजमचोदयदुन्मदान्ध-
मव्लीनशक्तिमतिघोरजवं प्लिनन्तम् ॥ ८ ॥

हरौ इत्थं गृणति वदति सति, हस्तिपकोऽपि कोपी सन्, 'अहं जीनो वृद्धोऽपि भिया न तु नैव रिणामि गच्छामीति वादी वदनशीलो गजं पार्श्वे लिनन् श्लिष्टो भवन् अचोदयत् हन्तुं प्रेरितवान् । उन्मदान्धमुद्धतेन मदेनान्धम् । अव्लीनशक्तिमव्लीना आच्छादिता शक्तिर्यस्य तादृशं सन्तम् । अतिघोरजवं यथा तथा प्लिनन्तं गच्छन्तम् ॥— गृणतीति । १४९९ गॄ शब्दे । शता । गॄप्रभृतय उदात्ताः परस्मैभाषाः । जीनः । १५०० ज्या वयोहानौ । कर्मणि क्त 'ग्रहिज्या—' इति संप्रसारणे 'हलः' इति दीर्घे ल्वादित्वान्नत्वम् । रिणामि । १५०१ री गतिरेषणयोः । रेषणं वृकशब्दः । लट् । लिनन् । १५०२ ली श्लेषणे । शता । अव्लीनेति । १५०३ व्ली वरणे । गतौ क्षेपणे च द्रुमे । कर्मणि क्तः । प्लिनन्तम् । १५०४ प्ली गतौ । शता । वृत् । प्वादयो वृत्ताः । ल्वादिस्तु गणान्तः ॥

श्रीताशवृंहितजुषाभ्रिणता गजेन
प्रक्षेतुमन्नमनसा समनुद्रुतेन ।
बद्धः करेण भगवान्विहृतिं वृणानः
श्रभ्निनिबद्धममुमाशु तलैरमभ्नात् ॥ ९ ॥

१. अधातुपाठस्थोऽयम्.

प्रक्षेतुं हन्तुं समनुद्रुतेन वेगादनुगतेन गजेन करेण बद्धो भगवान् विहृतिं वृणानः स्वीकुर्वन् निबद्धं श्रभ्नन् विमोचयन्नमु गजं तलैराशु अमथात् ताडयामास । कीदृशेन गजेन । श्रीताशबृंहितजुषा श्रीताशं छादितदिक्तटं बृंहितं गर्जितं कुर्वता । अभ्रिणता अभीतेन ॥—श्रीतेति । १५०५ श्री वरणे । गतौ च द्रुमे । कर्मणि क्तः । अभ्रिणता । १५०६ भ्री भये । भरणे इति केचित् । शता । अस्य ल्वादित्वमप्यस्ति द्रुमे । प्रक्षेतुम् । १५०७ क्षीष् हिंसायाम् । तुमुन् । अज्ञेति । १५०८ ज्ञा अवबोधने । 'इगुपधज्ञाप्रीकिरः कः' इति कः । बद्धः । १५०९ बन्ध बन्धने । कर्मणि क्तः । ज्यादयोऽनुदात्ताः परस्मैभाषाः । वृणानः । १५१० वृङ् संभक्तौ । संभक्तिः स्वीकारः । उदात्त आत्मनेभाषः । शानच् । श्रभ्नन् । १५११ श्रन्थ विमोचनप्रतिहर्षयोः । प्रतिहर्षो न ज्ञातः । अस्माच्छता । अमथात् । १५१२ मन्थ विलोडने । लङ् ॥

तद्ग्रन्थनं परिहरन्गतिभिर्विकुथ्य
पृष्ठे करोन्मृदितपुच्छमकर्षदेनम् ।
भूयो निपात्य मृडितस्वजनः स गुध्न-
न्दन्तौ विकुष्य गजमुत्क्षुभितं व्यनभ्रात् ॥ १० ॥

स श्रीकृष्णो गतिभिः सचारभेदैस्तद्ग्रन्थनं तस्य बन्धनं परिहरन् वर्जयन् । एनं पृष्ठे विकुथ्य संश्लिष्य निलीय करोन्मृदितपुच्छं हस्तसचूर्णितलाङ्गूलं सन्तमकर्षत् । क्रियाविशेषणं वा । भूयो गुध्नन् कुप्यन्नुत्क्षुभितं गजं निपात्य दन्तौ विकुष्य उन्मील्य व्यनभ्रात् अहिंसीत् । मृडितस्वजनः सुखितबन्धुजनः ॥—ग्रन्थनमिति । १५१३ ग्रन्थ संदर्भे । श्रन्थमपि केचित् पठन्ति । ग्रन्थेर्ल्युट् । विकुथ्य । १५१४ कुन्थ संश्लेषणे । संक्लेशे इति केचित् । कुथ इत्येके । द्वयोस्तन्त्रेण ल्यप् । उन्मृदितेति । १५१५ मृद क्षोदे । संचूर्णनं तत् । कर्मणि क्तः । १५१६ मृड च । क्षोदे इति शेषः । सुखे चेति केचित् । सुखने इत्यन्ये । अस्मात् कर्मणि क्तः । गुध्नन् । १५१७ गुध रोषे । शता । विकुष्य । १५१८ कुष निष्कर्षे । स च बहिर्निःसारणम् । ल्यप् । उत्क्षुभितम् । १५१९ क्षुभ संचलने । कर्तरि क्तः । व्यनभ्रात् । १५२० णभ १५२१ तुभ हिंसायाम् । लङ् ॥

आधोरणानपि च दन्तवरेण तुभ्नन्
क्लिश्नन्मतिं पलसुरादिकमश्नतां सः ।
ध्रस्तं फलप्रकरमुध्रसितांश्च शाली-
न्प्राददद्भिरैष्यत गिरा परिविष्टपापैः ॥ ११ ॥

आधोरणान् हस्तिपकान् अपि च दन्तवरेण तुभ्नन् हिंसन् स श्रीकृष्णः ध्रस्तमुञ्छनेनार्जितं फलप्रकरमुध्रसितान् उञ्छनार्जितान् शालींश्च प्राददद्भिर्भक्षयद्भिः सद्भिर्गिरा ऐष्यत पुनः पुनः भृशं वा स्तुतोऽभूत् । कीदृशः श्रीकृष्णः । पलसुरादिकं मांसमद्यादिकम-

श्रतां दुष्टानां मतिं क्लिश्नन् पीडयन् । परिविष्टं विप्रयुक्तमपगतं पापं येषां तैः सद्भिः ॥—तुभ्नन्निति । तुभेः शता । क्लिश्नन् । **१५२२ क्लिशू** विबाधने । अश्नताम् । **१५२३ अश** भोजने । द्वयोः शता । ग्रस्तम् । उध्रसितान् । **१५२४ उध्रस** उञ्छे । उकार उदित्त्वे । मतद्वये कर्मणि निष्ठा । ऐष्यत । **१५२५ ईष** आभीक्ष्ण्ये । पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम् । तच्च प्रकरणादिप्राप्तायाः क्रियाया इत्यौचित्याज्ज्ञेयम् । अस्मात्कर्मणि लङ् । परिविष्टेति । **१५२६ विष** विप्रयोगे । कर्तरि क्तः ॥

प्रुष्णन्सतां प्रियमयं प्लुषिताङ्गरागः
पुष्णन्मुदं मृगदृशां रिपुधाम मुष्णन् ।
वक्त्रारविन्दखचितसितखौनदाभो
रङ्गं गतोंऽसभुवि दन्तवरं प्रगृह्णन् ॥ १२ ॥

अयं भगवान् अंसभुवि दन्तवरं प्रगृह्णन् रङ्गं गतः प्राप्तः । कीदृशः । सतां प्रियं प्रुष्णन् पूरयन् । प्लुषितः स्निग्धो निबिडो अङ्गरागो यस्य सः । रिपूणां धाम प्रतापं मुष्णन् । मृगदृशां मुदं पुष्णन् । वक्त्रारविन्दात् खचितेन नितान्तोत्पन्नेन स्मितेन खौनती नितान्तं उत्पद्यमाना आभा यस्य सः ॥—प्रुष्णन् । **१५२७ प्रुष १५२८ प्लुष** स्नेहनसेवनपूरणेषु[1] । मोहनदाहनयोप्याह शंकरः । प्लुषेः शता । प्लुषितेति । प्लुषेः कर्तरि क्तः । पुष्णन् । **१५२९ पुष** पुष्टौ । मुष्णन् । **१५३० मुष** स्तेये । द्वयोः शता । खचितेति । **१५३१ खच** भूतप्रादुर्भावे । भूतप्रादुर्भावो नितान्तोत्पत्तिः । खव इत्येके । हेठ इत्यप्येके । खचेः कर्तरि क्तः । खौनदिति । खवेरनुनासिकादौ झि परे ऊठ् । तस्य शता । ग्रन्थादय उदात्तेतः । क्लिशिविषिवर्जमुदात्ताश्च । प्रगृह्णन् । **१५३२ ग्रह** उपादाने । उदात्तः स्वरितेत् । अस्माच्छता । इति श्नाविकरणम् ॥

अथ मल्लरङ्गं गते भगवति कंसस्यावस्थामाह—

संचोरयन्तमरिगर्वमशेषभद्रं
चिन्तन्तमन्तकमिवाप्तमयन्त्र्यवीर्यम् ।
प्रस्फुण्डयन्नपि तमप्युपलक्ष्य कंस-
स्तत्रास कुन्दकसुलालितमिन्दितश्रीः ॥ १३ ॥

प्रस्फुण्डयन् परिहसन्नपि कंस आप्तं प्राप्तं तं श्रीकृष्णमन्तकमिवाभ्युपलक्ष्य दृष्ट्वा तत्रास भीतवान् । कुन्दकैः अनृतभाषिभिः सुलालिता मिन्दिता प्रवृद्धा श्रीर्यस्य सः । कीदृशं तम् । अरिगर्वं संचोरयन्तम् । अशेषभद्रमशेषाणां मङ्गलम् । चिन्तन्तं निरूपयन्तम् । अयन्त्र्यमसंकोच्यमनिवारणीयं वीर्यं यस्य तम् ॥—संचोरयन्तमिति । **१५३३ चुर** स्तेये । अकार उच्चर्यर्थः । 'णिचश्च' इति तङ् । चुरादेर्णेति मतं माधवदूषितं ते-

1. 'सेवन' इति धातुपाठः.

नोभयपदित्वमेव। अस्माच्चुरेर्णिचि शता। 'केचित्सर्वचुरादीनामनित्यण्यन्ततां जगुः। येषां विकल्पश्चेदं स्यात्तेषामेवेति माधवः ॥' चिन्तन्तम्। १५३४ चिति स्मृत्याम्। णिचि 'अनिदितां हल–' इति नलोपप्रसङ्गात् तन्निषेधार्थमिदित्त्वानुपयोगादिदितां णिजनित्यः। तेन णिजभावे शपि शता। अयक्ष्येति। १५३५ यत्रि संकोचने। णिजन्तादचो यत्। प्रस्फुण्डयन्। १५३६ स्फुडि परिहासे। स्फुटि इत्येके। स्फुण्डेः शता। अभ्युपलक्ष्य। १५३७ लक्ष दर्शनाङ्कनयोः। ल्यप्। कुन्दकेति। १५३८ कुदि अनृतभाषणे। कुट इत्येके। कुन्देर्ण्वुल्। सुलालितेति। १५३९ लड उपसेवायाम्। कर्मणि क्तः। मिन्दितेति। १५४० मिदि स्नेहने। मिद इत्येके। मिन्देः कर्तरि क्तः॥

ओलण्डिताद्रिरपि जालितदिव्यधामा
निष्पीडितारिरनुनाटितमर्त्यभावः।
अश्राथबाधितमनाः स निरीक्षकाणा-
मानन्दमन्तरपरत्परमूर्जयन्तम् ॥ १४ ॥

निरीक्षकाणामश्राथबाधितमना अप्रयत्नवशीकृतचित्तः सन् स भगवान् अन्तर्मनसि परमधिकमानन्दमपरत् पूरयामास। कीदृशः। ओलण्डिताद्रिः उत्क्षिप्तगोवर्धनोऽपि जालितदिव्यधामा छादितमानुषप्रभावः। अनुनाटितमर्त्यभावः अनुकृतमनुष्यस्वभावः। ऊर्जयन्तं बलीभवन्तमानन्दम्।।—ओलण्डितेति। जालितेति। निष्पीडितेति। अनुनाटितेति। १५४१ ओलडि उत्क्षेपणे। ओकार इदित्येके। १५४२ जल अपवारणे। १५४३ पीड अवगाहने। तच्च बाधनम्। बाधगाहनयोरिति द्रुमे। १५४४ नट अवस्यन्दने। तच्च नाट्येनार्थप्रकाशनम्। एषा कर्मणि क्तः। अश्राथेति। १५४५ श्रथ प्रयत्ने[1]। प्रस्थाने इति केचित्। 'एरच्'। 'एरजण्यन्तानाम्' इति मते घञ्। बाधितेति। १५४६ बध संयमने। बन्धे इति केचित्। बाधेः कर्मणि क्तः। अपरत्। १५४७ पॄ पूरणे। दीर्घोक्तिफलं परितेत्तीडणिच्येव स्यादिति णिज्विकल्पः। णिजभावे शपि धन्। ऊर्जयन्तम्। १५४८ ऊर्ज बलप्राणनयोः। शता॥

श्रीकृष्णदर्शनसंजातानन्दाना सभापणमाहाष्टभिः श्लोकैः—

संपक्ष्य तन्निजदृशैवमवर्णि लोकै-
रेषोऽजनिष्ट किल दुष्टविचूर्णनार्थम्।
अप्रार्थितो व्रजगृहेऽपि च पर्थितोऽभू-
दासम्बयज्ञनमतिं निजशाम्बरीभिः ॥ १५ ॥

लोकैर्निजदृशा तं संपक्ष्य परिगृह्य दृष्ट्वा एवमवर्णि कथितम्। एष दुष्टविचूर्णनार्थमजनिष्ट किल। अपि च व्रजगृहेऽप्रार्थितोऽप्रख्यातः सन् पर्थितः प्रक्षिप्तोऽभूत्। निज-

1. 'अयत्ने' इति पाठः.

शाम्बरीभिः स्वमायाभिर्जनमतिमासम्वयन् स्वसंबन्धां कुर्वन् ॥—संपक्ष्येति । १५४९ पक्ष परिग्रहे । ल्यप् । अवर्णि । १५५० वर्ण वर्णने । प्रेरणेऽपीति केचित् । भावे णिच् । विचूर्णनेति । १५५१ चूर्ण प्रेरणे । अस्य क्षोदनमप्यर्थः । तदेव वा प्रेरणमित्युक्तम् । अस्माल्लुट् । अप्रार्थितः । १५५२ प्रथ प्रस्थाने । क्षेपे च द्रुमे । कर्तरि क्तः । पर्थितः । १५५३ पृथ प्रक्षेपे । पथ इत्येके । कर्मणि क्तः । आसम्वयन् । १५५४ षम्ब संबन्धने । १५५५ शम्बेत्येके । साम्बेत्यन्ये । साम्बः शता । शाम्बरीभिः । शम्बेर्बाहुलकादरप्रत्यये शम्बरः । तस्येयं शाम्बरी ॥

सा पूतना च शिशुभक्षणकुट्टनोत्का
जघ्ने प्रपुट्टितकृपेण विचुट्टितार्घा ।
वात्यासुरः पुनरनट्टचविसुट्टकः स-
न्नेतेन लुण्ठितबलोऽजनि शाठितात्मा ॥ १६ ॥

एतेन सा पूतना जघ्ने । प्रपुट्टितालपीभूता कृपा यस्य तेन । शिशूनां भक्षणे कुट्टने छेदने चोत्कोत्सुका विचुट्टितमल्पीभूतं गतमर्घं यस्याः सा । पुनः—वात्यासुर एतेन लुण्ठितबलो मुषितबलोऽजनि जनितः । अनट्टचविसुट्टकः आदरणीयानामनादरकृत् सन् भवन् शाठितात्मा असस्कृतचित्तः ॥—भक्षणेति । कुट्टनेति । १५५६ भक्ष अदने । १५५७ कुट्ट छेदनभर्त्सनयोः । पूरणे इत्येके । द्वयोर्ल्युट् । प्रपुट्टितेति । विचुट्टितेति । १५५८ पुट्ट १५५९ चुट्ट अल्पीभावे । द्वयोः कर्तरि क्तः । अनट्टयविसुट्टकः । अट्ट १५६० पुट्ट १५६१ अनादरे । अल्पीभावे च द्रुमे । क्रमात् 'अचो यत्' इति यत्, ण्वुल् च । लुण्ठितेति । १५६२ लुण्ठ स्तेये । अनादरे च द्रुमे । शाठितेति । १५६३ शठ १५६४ श्वठ असस्कारगत्योः । श्वठि इति केचित् । संस्कारे च द्रुमे । आद्य आलस्ये च । लुण्ठिशठ्योः कर्मणि क्तः ॥

आश्वाठितारिकुलतुञ्जविपिञ्जशीलः
संपेसयन्गृहमसान्त्वयदेप गोपीः ।
सुश्वल्कनाः सुमधुरप्रियवल्कनाभिः
प्रस्नेहयन्न च कदाचिदसिस्मिटत्ताः ॥ १७ ॥

एष गृहं संपेसयन् प्राप्नुवन् गोपीरसान्त्वयत् । आश्वाठितस्यागतस्यारिकुलस्य तुञ्जविपिञ्जशीलो हिंसाग्रहणशीलः । हननशील इति यावत् । ताः सुमधुरप्रियवल्कनाभिः सुमधुरैः प्रियभाषणैः प्रस्नेहयन् स्निग्धाः कुर्वन् कदाचिदपि नासिस्मिटदनादृतवान् । सुश्वल्कनाः शोभनोक्तीर्गोपीः ॥—आश्वाठितेति । श्वठेः कर्तरि क्तः । तुञ्जविपिञ्जेति । १५६५ तुजि १५६६ पिजि हिंसाबलादाननिकेतनेषु । दाने च द्रुमे । तुञ्ज पिञ्ज इत्येके । तजि तुजि इत्यन्ये । तुजिपिञ्ज्योर्घञ् । संपेसयन् । १५६७ पिस गतौ ।

शता। असान्त्वयत्। १५६८ षान्त्व सामप्रयोगे। लङ्। सुश्वल्कनेति। १५६९ श्वल्क १५७० वल्क परिभाषणे। श्वल्कैर्ल्युट्। वल्कनाभिः। वल्केः 'ण्यास-श्रन्थः-' इति युच्। प्रक्लेदवर्न्। १५७१ ष्णिह स्नेहने। शता। असिस्मिटत्। १५७२ स्मिट् अनादरे। लुङि चङ्॥

कः स्माययेत विभुमेनमशिश्लिषद्यः
पन्थन्व्रजेऽत्र भवपिच्छनभाग्भिरेव।
छन्दंश्छुचं वरमशिश्रणदाश्रितानां
संताडनैर्वृषभदैत्यमखाडयच्च॥ १८॥

योऽत्र व्रजे पन्थन् संचरन् भवपिच्छनभाग्भिः संसारच्छेदभाग्भिरासन्नमुक्तिभिरेवाशिश्लिषत् स्वपक्षं प्रापितवान्। एनं विभुं कः स्माययेतानादियेत। आश्रितानां शुचं छन्दन् नाशयन् वरं प्रार्थितमशिश्रिणत् दत्तवान्। संताडनैः प्रहारैः वृषभदैत्यमखाडयत् विदारितवांश्च॥—स्माययेत। १५७३ स्मिङ् अनादरे इत्येके। डिलात्तङ्। अस्माङ्लिङ्। अट स्मिट गताविल्यप्यन्ये। अशिश्लिषत्। १५७४ श्लिष श्लेषणे। लुङि चङ्। पन्थन्। १५७५ पथि गतौ। शपि शता। पिच्छनेति। १५७६ पिच्छ कुट्टने। ल्युट्। छन्दन्। १५७७ छदि संवरणे। शपि शता। अशिश्रणत्। १५७८ श्रण दाने। प्रायेण विपूर्वः। अस्माल्लुङि चङ्। संताडनैः। १५७९ तड आघाते। शोभार्थश्च द्रुमे। ल्युट्। अखाडयत्। १५८० खड १५८१ खडि १५८२ कडि भेदने। अन्त्यो रक्षणे च द्रुमे। खडेर्लङ्॥

अर्धं व्यखण्डदचकण्डदघासुरादी-
न्धेनूरकुण्डदभिगुण्डितपीतचेलः।
किंच स्वगात्रमवकुण्ठयतो महाहे-
र्दर्पं चुखुण्ड विषमेष मुखाद्विवण्टन्॥ १९॥

किं च। अर्धं व्यखण्डत्, अघासुरादीन् अचकण्डत्। द्वयोरखण्डयदित्यर्थः। धेनूरकुण्डत् रक्षितवान्। अभिगुण्डितं वेष्टितं पीतचेलं येन सः। स्वगात्रमवकुण्ठयतश्छादयतः। महाहेः कालियस्य मुखात् विषं विवण्टन् विभाजयन्, छर्दयन् दर्पं चुखुण्ड खण्डितवान्॥—व्यखण्डदिति। खण्डेः शपि लङ्। अचकण्डत्। कण्डेर्णिचि चङ्। अकुण्डत्। १५८३ कुडि रक्षणे। शपि लङ्। अभिगुण्डितेति। १५८४ गुडि वेष्टने। रक्षणे चैके। कुठि इत्यन्ये। गुण्डेः कर्मणि क्तः। अवकुण्ठयतः। कुण्ठेः शता। चुखुण्ड। १५८५ खुडि खण्डने। णिजभावे लिट्। विवण्टन्। १५८६ वटि विभाजने। वडि इत्येके। वण्टेः शपि शता॥

१. 'छेदनादाभिः' पाठः. २. 'संपर्के' पाठः.

बर्हादिमण्डितसुभण्डितविग्रहोऽसौ
प्रच्छर्दितः किल बकेन च पुस्तितार्तिः ।
संवुस्तिते गिरिमखे परिचोद्य गोपा-
न्प्रानक्षयद्धरिमखं मदधक्कनार्थी ॥ २० ॥

बर्हादिमण्डितः सुभण्डितो भृशं कल्याणीभूतो विग्रहो यस्य सः । असौ बकेन प्रच्छर्दितः किल । पुस्तिता दत्ता: बकस्यार्तिर्येन सः । संवुस्तिते आदृते गिरिमखे गोपान् परिचोद्य प्रेरणं कृत्वा मदधक्कनार्थी इन्द्रस्य दर्पनाशनार्थी सन् हरिमखं प्रानक्षयदनाशयत्॥—मण्डितेति । १५८७ मडि भूषायां हर्षे च । सुभण्डितेति । १५८८ भडि कल्याणे । कर्तरि क्तः । प्रच्छर्दितः । १५८९ छर्द वमने । कर्मणि क्तः । पुस्तितेति । १५९० पुस्त १५९१ बुस्त दानादरयोः । अनादरे च द्रुमे । कर्मणि क्तः । संवुस्तितेति । प्राग्वत् क्तः । परिचोद्य । १५९२ चुद संचोदने । संचोदनं प्रश्नः प्रेरणा च । ल्यप् । प्रानक्षयत् । १५९३ नक्क १५९४ धक्क नाशने । नक्केर्लङ् । धक्कनेति । धक्केर्ल्युट् ॥

दुर्दान्तचक्वपशुपचुक्कनमभ्यरौत्सी-
त्प्रक्षालितक्षितितलातुलवर्षरोधी ।
संदोलयन्नविकपोलितमद्रिराजं
संचोलितं सुबहुमूलितशाखिवृन्दैः ॥ २१ ॥

अद्रिराजं गोवर्धनं संदोलयन्नुत्क्षिपन् प्रक्षालितक्षितितलं मार्जितभूतलमतुलं वर्षं रोद्धुं शीलं यस्य तादृशः सन् । पशुपानां चुक्कनं व्यथामरौत्सीत् निवारितवान् । दुर्दान्तचक्वः अशान्तपीडकः । अधिकपोलितमतिमहान्तं सुबहुभिर्मूलितैः प्ररूढैः शाखिवृन्दैः संचोलितमत्युच्छ्रितं चाद्रिराजम् ॥—दुर्दान्तचगिति । १५९५ चक्क १५९६ चुक्क व्यथने । चिक्क इति चके । चक्कः क्विप् । चुक्कनम् । चुक्केर्ल्युट् । प्रक्षालितेति । १५९७ क्षल शौचकर्मणि । कर्मणि क्तः । तलेति । १५९८ तल प्रतिष्ठायाम् । अच् । अतुलेति । १५९९ तुल उन्माने । कः । चुरादिणिचोऽनित्यत्वात् तदभावः । संदोलयन् । १६०० दुल उत्क्षेपे । शता । पोलितम् । संचोलितम् । मूलितम् । १६०१ पुल महत्वे । १६०२ चुल समुच्छ्राये । १६०३ मूल रोहणे । त्रिभ्यः कर्तरि क्तः ॥

काल्यप्रवेलनकरोऽयमबेलयद्रा-
गन्यांश्च तेलितकूपः खलु कंसचाल्यान् ।
संपालयेद्विमतलूप्यपशुल्वभूमा
क्ष्मानेप राम इव शूर्पनखाविचोटी ॥ २२ ॥

---

१. 'आदरानादरयोः' इति धातुपाठे.

आश्वर्तितो रणभुवं सवलोऽत्र रेजे
विश्वश्रिताभ्रकुहरे सति तूर्यनादे ॥ २४ ॥

तूर्यनादे विश्वश्रिताभ्रकुहरे व्याप्ताकाशे सति स च सबलः रणभुवमाश्वर्तितः प्राप्तोऽत्र रेजे । क्षम्पद्भियामभिमतः । क्षम्पन्ती क्षाम्यन्ती धीर्येषां तेषामिष्टः । कंसपीडया प्रक्षञ्जितानां कृच्छ्रेण जीवतां स्वजनानां चिन्तनेन जातरोषः ॥—क्षम्पदिति । १६२० क्षपि क्षान्त्याम् । शपि शता । प्रक्षञ्जितेति । आश्वर्तितेति । विश्वश्रितेति । १६२१ क्षजि कृच्छ्रजीवने । १६२२ श्वर्त गत्यां च । १६२३ श्वभ्र च । आद्ययोः कर्तरि क्तः । श्वभ्रेः कर्मणि क्तः । श्वभ्रि विदार्ये च द्रुमे ॥

चाणूर एनमथ विज्ञपयन्नृपाज्ञां
चण्डातकं सुयमयंश्चहको वभाषे ।
युध्यस्व भीतिरहितो वलयन्खलु त्वं
कीर्तिं चयस्व चपयापि नृपप्रसादम् ॥ २५ ॥

चाणूर एनं नृपाज्ञां विज्ञपयन् बोधयन् वभाषे । हेतौ शता । चण्डातकं मल्लयुद्धोचितं वासः सुयमयन् दृढं वेष्टमानो वध्नन् । चहकः शाठ्यकर्ता । वलयन् शक्तो भवन् । त्व भीतिरहितो युध्यस्व कीर्तिं चयस्व नृपप्रसादमपि चपय । द्वयोरार्जयेत्यर्थः ॥—इतः पूर्वं सप्त मितः । ज्ञप मिच्च । अस्य ज्ञानज्ञापने अर्थाविति स्थितम् । विज्ञपयन्निति । [१६२४ ज्ञप ज्ञानज्ञापनमारणतोषणनिशाननिशामनेषु ।] ज्ञपेः शता । सुयमयन् । १६२५ यम च परिवेषणे । तच्चात्र वेष्टनम् । चकारान्मिदित्यनुषङ्गः । अस्माच्छता । चहकः । १६२६ चह परिकल्कने । ण्वुल् । चप इत्येके । तस्य वा मित्त्वं द्रुमे । रहितः । १६२७ रह त्यागे । कर्तरि क्तः । वलयन् । १६२८ वल प्राणने । शता । चयस्वेति । चपयेति । १६२९ चिञ् चयने । णिच्युभयपदित्वेन त्रित्वफलाभावादस्य णिज्विकल्पः । तत्र णिचि 'चिस्फुरोर्णौ' इति वा आत्वे पुक् । अन्यत्र वृद्धिः । उभयत्र मित्त्वाद्ध्रस्वः । अणिचि णिचि च लोट् । मितो गताः । 'नान्ये मितोऽहेतौ' । अहेतुमण्यन्तेषु एभ्योऽन्ये मितो न स्युः । तेन चुरादिषु अमन्तादीनां मित्त्वं न ॥

वुद्धिर्न घट्टयतु तेऽस्तयतां जनानां
मध्ये न खट्टय वलं गजसट्टकोऽसि ।
न स्फिट्टयामि किमु चुम्वभिया स्थितोऽसि
किं पूलितात्मकृतपुंसनयात्र पुंसाम् ॥ २६ ॥

अस्तयतां सघातीभवतां जनानां मध्ये ते वुद्धिर्न घट्टयतु न चलतु । वलं न खट्टय

1. 'छजि' इति धातुपाठे. २. 'गत्याम्' इति धातुपाठे. ३. 'श्वभ्र' इति धातुपाठे.

तावेवारिः स्तुतां प्रपञ्चरहितां मिताक्षरां गिरमकीर्तदभापत । अरातिवर्धी शत्रुच्छेदी ॥—मुगाजितेति । १६४७ गज १६४८ मार्ज शब्दार्थौ । १६४९ मर्च चेत्यके । मार्जिः शुद्धौ च द्रुमे । गर्जेः कर्तरि क्तः । विमार्जनानि । मार्जेर्ल्युट् । मर्चयति । मर्चेः शता । घारितेति । १६५० घृ प्रस्रवणे । स्रावणे इत्येके । छादने च द्रुमे । अस्मात् कर्मणि क्तः । प्रपञ्चेति । १६५१ पचि विस्तारवचने । विस्तारमात्रे च द्रुमे । घञ् । तेजितेति । १६५२ तिज निशाने । कर्मणि क्तः । अकीर्तद । १६५३ कृत संशब्दने । 'ऋदुपधाचाक्लृपिचृतेः' इत्यत्र तपरत्वेन ऋदुपधस्य व्यावर्त्यत्वाण्णिचि त्वृदुपधत्वफलाभावादस्य णिज्विकल्पः । तत्र णिजभावे शपि लङ् । अरातिवर्धी । १६५४ वर्ध छेदनपूरणयोः । णिनिः ॥

किं कुम्व्यते सदसि लुम्बितवैभवोऽहं
बालोऽस्मि तुम्बितविरोधिभयाश्च यूयम् ।
प्रह्लापये किमपरं परिचुण्टितारि-
र्भूयोऽयमेलयति चेदिह को निषेद्धा ॥ २९ ॥

मया सदसि किं कुम्व्यते आच्छाद्यते । अत्र राजसदसि सर्वं प्रत्यक्षमेव वक्तव्यम्, न किंचिद्गूहनीयमस्ति । अहं लुम्बितवैभवोऽदृष्टसामर्थ्यो बालोऽस्मि । यूयं तुम्बितविरोधिभया नाशितशत्रुभयाश्च भवथ । अतोऽहमपरं किं प्रह्लापये । व्यक्तं वदामि । एतावदेव वदामि । परिचुण्टितारिश्छिन्नशत्रुरयं भूप एलयति युद्धार्थं प्रेरयति चेदिह लोके को निषेद्धा निषेत्स्यति । न कोऽपि ॥—कुम्व्यते इति । १६५५ कुबि आच्छादने । कुभि इत्येके । कुम्वेः कर्मणि लट् । लुम्बितेति । [तुम्बितेति ।] १६५६ लुबि १६५७ तुबि अदर्शने । अर्दने इति केचित् । कर्मणि क्तः । प्रह्लापये । १६५८ ह्लप व्यक्तायां वाचि । क्लप इत्येके । [लट् ।] परिचुण्टितारिः । १६५९ चुटि छेदने । कर्मणि क्तः । एलयति । १६६० इल प्रेरणे । लट् ॥

यद्वा भियात्र किमम्रक्षकसूरिसेव्यो
धर्मेतरम्यगनयम्रगयं हि राजा ।
अम्लेच्छलोकसहिते सदसीह तस्मा-
त्को मूसयिष्यति शिशूननिबर्हणीयान् ॥ ३० ॥

यद्वा अत्र भिया किम् । न किंचित् भेतव्यम् । अयं राजा धर्मेतरम्यक् अधर्मच्छेत्ता । अनयम्रक् अनयच्छेत्ता च । हि यस्मात्—अम्रक्षकाणां साधुशब्दभाषिणां सदाचाराणां सूरीणां सेव्यश्च । तस्मादम्लेच्छलोकसहिते सज्जनपूर्णेऽस्मिन् सदसि अनिबर्हणीयान् हन्तुमयोग्यान् शिशून् को मूसयिष्यति हनिष्यति । न कोऽपि । अतो न भेत-

१. 'शातने' इति पाठः.

न छादय । त्वं गजसहको गदहिंसकोऽसि । अहं त्वां न स्फिट्टयामि न हिनस्मि । त्व चुम्बभिया हिंसनभिया किमु स्थितोऽसि । अत्र लोके पुंसां पूलितात्मेन सघातीभूतेन अमेन कृतया पुंसनया देहाभिवर्धनेन स्वशक्तिप्रकाशने कि फलम् । न किंचित् ॥— घट्टयत्विति । १६३० घट्ट चलने । लोट् । अस्तयताम् । १६३१ अस्त संघाते । शता । स्तट्य । १६३२ खट्ट संवरणे । लोट् । सट्टकः । १६३३ षट्ट १६३४ स्फिट्ट १६३५ चुबि हिंसायाम् । आद्यो बलादाननिवासेषु च द्रुमे । अन्त्यश्चुम्बने च । सट्टेः ण्वुल् । स्फिट्टयामि । स्फिट्टेर्लट् । चुम्बेति । चुम्बेर्घञ् । व्यय व्यत्र क्षये इति चैके । आद्यः प्रेरणे च द्रुमे । पूलितेति । १६३६ पूल संघाते । कर्तरि क्तः । पुंसनया । १६३७ पुंस अभिवर्धने । युच् ॥

सौधे विटङ्कजुषि पश्यति धूसितोऽयं
राजारिकीटबलचूर्णनयातिपूज्यः ।
अर्क्येण तेन समरेष्वविशोठितस्त्वं
संशुण्ठिताहितमदेन विजोटितोऽसि ॥ २७ ॥

अथ राजा सौधे स्थितः पश्यति । विटङ्कजुषि कपोतपा(पा)ळकादिशिल्पशालिनि सौधे धूसितोऽलंकारैः कृतकान्तिः । अरिकीटानां दुर्बलशत्रूणां चूर्णनया संकोचनेनातिपूज्यः । तेन त्वं समरेषु विजोटितः प्रेरितोऽसि । समरेष्विति सर्वत्र योज्यम् । अर्क्येण स्तुत्येन । संशुण्ठितः शोषितो नाशितोऽहितमदो येन तेन । समरेष्वविशोठित आलस्यहीनस्त्वम् ॥—विटङ्केति । १६३८ टकि बन्धने । वीन् पक्षिणष्टङ्कयति शिलेन बध्नाति इति विटङ्कः । पचाद्यच् । धूसितः । १६३९ धूस कान्तिकरणे । धूष इत्येके । धूश इत्यन्ये । धूसेः कर्तरि क्तः । कीटेति । १६४० कीट वर्णे । नानावर्णो भवतीत्यर्थः । चूर्णनया । १६४१ चूर्ण संकोचने । युच् । अतिपूज्यः । अर्क्येण । १६४२ पूज पूजायाम् । १६४३ अर्क स्तवने । तापगत्योश्च द्रुमे । द्वयोर्ण्यत् । अविशोठितः । १६४४ शुठ आलस्ये । कर्तरि क्तः । संशुण्ठितेति । विजोटितेति । १६४५ शुठि शोषणे । १६४६ जुड प्रेरणे । द्वयोः कर्मणि क्तः ॥

इत्थं सुगाजितमृदङ्गविमार्जनानि
संवार्य मर्चयति घारितशङ्खमस्मिन् ।
कृष्णः प्रपञ्चरहितां धृततेजिताश्वै-
र्वीरैः स्तुतां गिरमकीर्तदरातिवर्धी ॥ २८ ॥

सुगाजितानां सम्यग्वादितानां मृदङ्गानां विमार्जनानि शब्दान् संवार्य अस्मिन् घाणूरे इत्थं घारितशङ्ख तत्कारङ्कं मर्चयति भाषमाणे सति कृष्णो धृततेजिताश्वैर्तनिशातीकृ-

१. 'पुस्त' इति धातुपाठे. २. 'पुल' इति धातुपाठे.

ताम्रैर्वीरैः स्तुतां प्रपञ्चरहितां मिताक्षरां गिरमकीर्तदभापत । अरातिवर्धी शत्रुच्छेदी ॥— मुमाजितेति । १६४७ गज १६४८ मार्ज शब्दार्थौ । १६४९ मर्च चेत्येके । मार्जिः शुद्धौ च द्रुमे । गर्जः कर्तरि क्तः । विमार्जनानि । मार्जेर्ल्युट् । मर्चयति । मर्चः शता । घारितेति । १६५० घृ प्रस्रवणे । स्रावणे इत्येके । छादने च द्रुमे । अस्मात् कर्मणि क्तः । प्रपञ्चेति । १६५१ पचि विस्तारवचने । विस्तारमात्रे च द्रुमे । घञ् । तेजितेति । १६५२ तिज निशाने । कर्मणि क्तः । अकीर्तत् । १६५३ कृत संशब्दने । 'ऋदुपधाच्चाक्लृपिचृतेः' इत्यत्र तपरत्वेन ऋदुपधस्य व्यावर्त्यत्वाण्णिचि लृदुपधत्वफलाभावादस्य णिज्विकल्पः । तत्र णिजभावे शपि लङ् । अरातिवर्धी । १६५४ वर्ध छेदनपूरणयोः । णिनिः ॥

किं कुम्भ्यते सदसि लुम्बितवैभवोऽहं
वालोऽसि तुम्बितविरोधिभयाश्च यूयम् ।
प्रह्लापये किमपरं परिचुण्टितारि-
र्भूयोऽयमेलयति चेदिह को निषेद्धा ॥ २९ ॥

मया सदसि किं कुम्भ्यते आच्छाद्यते । अत्र राजसदसि सर्वं प्रत्यक्षमेव वक्तव्यम्, न किंचिद्गूहनीयमस्ति । अहं लुम्बितवैभवोऽदृष्टसामर्थ्यो वालोऽस्मि । यूयं तुम्बितविरोधिभया नाशितशत्रुभयाश्च भवथ । अतोऽहमपरं किं प्रह्लापये । व्यक्तं वदामि । एतावदेव वदामि । परिचुण्टितारिश्छिन्नशत्रुरयं भूप एलयति युद्धार्थं प्रेरयति चेदिह लोके को निषेद्धा निषेत्स्यति । न कोऽपि ॥—कुम्भ्यते इति । १६५५ कुबि आच्छादने । कुभि इत्येके । कुम्बेः कर्मणि लट् । लुम्बितेति । [तुम्बितेति ।] १६५६ लुबि १६५७ तुबि अदर्शने । अर्दने इति केचित् । कर्मणि क्तः । प्रह्लापये । १६५८ ह्लप व्यक्तायां वाचि । क्लप इत्येके । [लट् ।] परिचुण्टितारिः । १६५९ चुटि छेदने । कर्मणि क्तः । एलयति । १६६० इल प्रेरणे । लट् ॥

यद्वा भियात्र किमम्रक्षकसूरिसेव्यो
धर्मेतरम्यगनयम्रगयं हि राजा ।
अम्लेच्छलोकसहिते सदसीह तस्मा-
त्को ध्रूसयिष्यति शिशूननिवर्हणीयान् ॥ ३० ॥

यद्वा अत्र भिया किम् । न किंचित् भेतव्यम् । अयं राजा धर्मेतरम्यक् अधर्मच्छेत्ता । अनयम्रक् अनयच्छेत्ता च । हि यस्मात्—अम्रक्षकाणां साधुशब्दभाषिणां सदाचाराणां सूरीणां सेव्यश्च । तस्मादम्लेच्छलोकसहिते सज्जनपूर्णेऽस्मिन् सदसि अनिवर्हणीयान् हन्तुमयोग्यान् शिशून् को ध्रूसयिष्यति हनिष्यति । न कोऽपि । अतो न भेत्त-

१. 'शातने' इति पाठः.

लोको हरेर्बलमचेतयमान एत-
द्युद्धं मृगेन्द्रशशदंशनवत्प्रदंसन् ।
संडापितः सदसि डेपितवृष्णिवीरे
भोजेन्द्रतन्त्रणविनिन्द्यममन्त्रतैवम् ॥ ३३ ॥

हरेर्बलमचेतयमानो जानल्लोक एतद् युद्धं मृगेन्द्रशशयोरन्योन्यदंशनवत् अतिविषमं प्रदंसन् पश्यन् । सदसि संडापितः संघातीभूतः सन् भोजेन्द्रतन्त्रणविनिन्दी कंसराज्यकार्यनिन्दाशील एवमममन्त्रत गूढमभाषिष्ट । डेपिताः संघातीभूता वृष्णिवीरा यस्मिन्॥—आकुस्मादात्मनेपदिनः । कुंस्मधातुपर्यन्तं णिच्यात्मनेपदिन एव । अचेतयमान इति । १६७३ चित संचेतने । तच्च ज्ञानम् । अस्माच्छानच् । दंशनेति । १६७४ दशि दंशने । ल्युट् । प्रदंसन् । १६७५ दसि [1]दंसनदर्शनयोः । दस इत्येके । दंसनं वर्मग्रहणम् । दशनदर्शनयोरित्यन्ये । अत्राकुस्मीयस्तङ्णिज्योग एवेति इदित्वाण्णिजभावे तङ् न । तेन दंसेः शपि शता । संडापितः । १६७६ डप १६७७ डिप संघाते । डापेः कर्तरि क्तः । डेपितेति । डिपेश्च पूर्ववत् क्तः । तन्त्रणेति । १६७८ तन्त्रि कुटुम्बधारणे । कुटुम्ब इति पृथक् धातुरित्येके । तन्त्रेर्ल्युट् । अमन्त्रत । १६७९ मन्त्रि गुप्तभाषणे । लुङि चङ् ॥

प्रस्पाश्य मुष्टिमभितर्जयते [2]प्रभर्त्स्यो
मल्लो [3]बिबस्तयिषुरेनम[4]गन्धनीयम् ।
किष्कयेत निष्कृपमनिष्कितकान्तिरेष
बालोऽमुना नृपतिलालनयाद्य कष्टम् ॥ ३४ ॥

मल्लो मुष्टिं प्रस्पाश्य दृढं गृहीत्वा एनं बिबस्तयिषुः पीडयितुमिच्छुरभितर्जयते भर्त्संयते । अगन्धनीयं पीडयितुमयोग्यम् । अद्य नृपतिलालनया राजेच्छया अमुना एष बालो निष्कृपं किष्कयेत हिंस्येत कष्टम् । अनिष्कितकान्तिरपरिमितकान्तिः । कीदृशो मल्लः । प्रभर्त्स्यस्तर्जयितुं योग्यः॥—प्रस्पाश्येति । १६८० स्पश ग्रहणश्लेषणयोः । ल्यप् । अभितर्जयते । १६८१ तर्ज १६८२ भर्त्स तर्जने । तर्जेर्लट् । प्रभर्त्स्यः । भर्त्सेर्ण्यत् । बिबस्तयिषुः । १६८३ बस्त १६८४ गन्ध अर्दने । बस्तेः सन्नुः । अगन्धनीयम् । गन्धेरनीयर् । किष्कयेत । १६८५ [5]किष्क हिंसायाम् । हिष्क इत्येके । किष्केः कर्मणि लिङ् । अनिष्कितेति । १६८६ निष्क परिमाणे । कर्मणि क्तः । लालनया । १६८७ लल ईप्सायाम् । युच् ॥

आकूणिताक्षमपि च स्मितत्तूणितास्यं
भ्रूणस्य शाठ्यजनयक्ष्यमवेक्ष्य गात्रम् ।

१. 'दर्शनदंशनयोः' इति धातुपाठे. २. 'प्रभर्त्स्यो' इति पाठः ३. 'रेनभ' इति पाठः. ४. 'गर्धनीयं' इति पाठः. ५. 'विष्क' इति धातुपाठे.

व्यम् ॥—अम्रक्षकेति । १६६१ म्रक्ष म्लेच्छने । अपशब्दनं तत् । ण्वुल् । धर्मेतरम्यक् । अनयमक् । म्यक्ष मक्ष छेदने इति चैके । द्वयोः क्विपि संयोगान्तलोपः । अम्लेच्छेति । १६६२ म्लेछ अव्यक्तायां वाचि । अपशब्दोक्तिः सा । अच् । बृसयिष्यति । १६६३ बृस १६६४ वर्ह हिंसायाम् । बृसेर्लृट् । अनिबर्हणीयान् । बर्हणीयर् ॥

खेदस्त्वियान्पटहगर्दनगर्जिताशे
रङ्गे सगर्धनसुगुर्दितवीरलोके ।
मञ्चाग्रपूर्विततृपे शिशुना रणं वः
स्यादेव मानपरिजंसकमीड्यधाम्नाम्[1] ॥ ३१ ॥

अस्माकमियास्तु खेदः । पटहानां गर्दनेन शब्देन गर्जिताशे शब्दितदिक्के सगर्धन साकाङ्क्षं सुगुर्दिताः पूर्वमेव स्थिताः वीरलोका यस्मिन् । मञ्चाग्रपूर्वितः पूर्वनिषण्णो नृपो यस्मिन् । ईदृशे रङ्गे ईड्यधाम्नां स्तुत्यप्रभावानां वो युष्माकं शिशुना रणं मानपरिजंसकं मानक्षयकरं स्यादेव ॥—गर्दनेति । गर्जितेति । गर्द गर्ज शब्दे । द्वयोर्ल्युट् कर्मणि क्तश्च । गर्धनेति । गर्ध अभिकाङ्क्षायाम् इति चैके । ल्युट् । गुर्दितेति । १६६५ गुर्द पूर्वनिकेतने । पूर्वनिकेतनं पूर्वव्यवहार इत्येके । निवासपूर्वभाव इत्यन्ये । अस्य दीर्घविकल्पः । क्रीडार्थश्चास्ति द्रुमे । अस्मात् कर्तरि क्तः । पूर्व पूर्वनिकेतने इति केचित् । अर्थः प्रागुक्त एव । प्राग्वत् क्तः । 'उपधायां च' इति दीर्घः । परिजंसकम् । १६६६ जसि रक्षणे । मोक्षणे इति केचित् । ण्वुल् । ईड्येति । १६६७ ईड स्तुतौ । ण्यत् ॥

इत्थं वदत्यसुरजासिनि पिण्डितायः-
स्थेमाथ रोपितमतिः प्रतिमल्लडेपी ।
प्रस्तुपितेन वपुषा हरिमाससाद
चाणूर आशु हलिनं खलु मुष्टिकोऽपि ॥ ३२ ॥

असुरजासिनि असुरहिंसके इत्थं वदति सति अथ चाणूरो रोपितमतिर्हरिमाससाद । हलिन मुष्टिकोऽपि । कीदृशः । पिण्डितायस इव स्थेमा स्थैर्यं यस्य सः । प्रतिमल्लडेपी प्रतिमल्लनिरासी । प्रस्तुपितेनातितुङ्गेन वपुषोपलक्षितः ॥—असुरजासिनीति । १६६८ जसु हिंसायाम् । क्तायामिड्विकल्पार्थादुदित्करणादस्य निष्ठिकल्पः । तस्माण्णिनिः । पिण्डितेति । १६६९ पिडि संघाते । हेतुमण्ण्यन्तात् कर्मणि क्तः । रोपितेति । १६७० रुप रोपे । रुट इत्येके । रोपेः कर्तरि क्तः । प्रतिमल्लडेपी । १६७१ डिप क्षेपे । णिनिः । प्रस्तुपितेति । १६७२ स्तूप समुच्छ्राये । कर्तरि क्तः ॥

---

१. 'म्रक्ष' इति धातुपाठे. २. 'नर्दन' इत्युभयपुस्तकस्थपाठो व्याख्यानुसार 'गर्दन' इति कृतः. ३. ह्रस्वोपधोऽयं धातुपाठे.

लोको हरेर्बलमचेतयमान एत-
न्युद्धं मृगेन्द्रशशादंशनवत्प्रदंसन् ।
संडापितः सदसि डेपितवृष्णिवीरे
भोजेन्द्रतन्त्रणविनिन्द्यममन्त्रतैवम् ॥ ३३ ॥

हरेर्बलमचेतयमानो जानल्लोक एतद् युद्धं मृगेन्द्रशशयोरन्योन्यदंशनवत् अतिविषमं प्रदंसन् पश्यन् । सदसि संडापितः संघातीभूतः सन् भोजेन्द्रतन्त्रणविनिन्दी कंसराज्यकार्यनिन्दाशील एवमममन्त्रत गुप्तमभाषिष्ट । डेपिताः संघातीभूता वृष्णिवीरा यस्मिन्॥—आकुस्मादात्मनेपदिनः । कुस्मधातुपर्यन्तं णिच्यात्मनेपदिन एव । अचेतयमान इति । १६७३ चित संचेतने । तच्च ज्ञानम् । अस्माच्चानच् । दंशनेति । १६७४ दशि दंशने । ल्युट् । प्रदंसन् । १६७५ दसि [1]दंसनदर्शनयोः । दस इत्येके । दंसनं वर्मग्रहणम् । दंशनदर्शनयोरित्यन्ये । अत्राकुस्मीयस्तङ्णिज्योग एवेति इदित्वाण्णिजभावे तङ् न । तेन दसेः शपि शता । संडापितः । १६७६ डप १६७७ डिप संघाते । डापेः कर्तरि क्तः । डेपितेति । डिपेश्च पूर्ववत् क्तः । तन्त्रणेति । १६७८ तत्रि कुटुम्बधारणे । कुटुम्ब इति पृथक् धातुरित्येके । तन्त्रेर्ल्युट् । अममन्त्रत । १६७९ मत्रि गुप्तभाषणे । लुङि चङ् ॥

प्रसार्य मुष्टिमभितर्जयते [2]प्रभर्त्स्यो
मल्लो विवस्तयिषु[3]रेनमगर्[4]न्धनीयम् ।
किष्क्येत निष्कृपमनिष्कितकान्तिरेष
बालोऽमुना नृपतिलालनयाद्य कष्टम् ॥ ३४ ॥

मल्लो मुष्टिं प्रसार्य दृढं गृहीत्वा एनं विवस्तयिषुः पीडयितुमिच्छुरभितर्जयते भर्त्सयते । अगन्धनीयं पीडयितुमयोग्यम् । अथ नृपतिलालनया राजेच्छया अमुना एष बालो निष्कृपं किष्क्येत हिंस्येत कष्टम् । अनिष्कितकान्तिरपरिमितकान्तिः । कीदृशो मल्लः । प्रभर्त्स्यस्तर्जयितुं योग्यः॥—प्रसार्येति । १६८० स्पश ग्रहणश्लेषणयोः । ल्यप् । अभितर्जयते । १६८१ तर्ज १६८२ भर्त्स तर्जने । तर्जेर्लट् । प्रभर्त्स्यः । भर्त्सेर्ण्यत् । विवस्तयिषुः । १६८३ वस्त १६८४ गन्ध अर्दने । वस्तेः सन्नुः । अगन्धनीयम् । गन्धेरनीयर् । किष्क्येत । १६८५ [5]किष्क हिंसायाम् । हिष्क इत्येके । किष्केः कर्मणि लिङ् । अनिष्कितेति । १६८६ निष्क परिमाणे । कर्मणि क्तः । लालनया । १६८७ लल ईप्सायाम् । युच् ॥

आकूणिताक्षमपि च स्तितत्तूणितास्यं
भ्रूणस्य शाठ्यजनयस्यमवेक्ष्य गात्रम् ।

1. 'दर्शनदंशनयोः' इति धातुपाठे. 2. 'प्रभर्त्स्यो' इति पाठः 3. 'रेतम' इति पाठः. 4. 'गर्धनीय' इति पाठः. 5. 'विष्क' इति धातुपाठे.

अस्या मनः क इव गूरयतेऽत्र मुष्टिं
नो खल्वशाम्यमिह लक्षयितुं क्षमाः स्मः ॥ ३१ ॥

अपि च भ्रूणस्यार्भकस्य बालस्य गात्रमवेक्ष्य क इव अस्या मनोऽविचारः सन् मुष्टिं गूरयते प्रहरणार्थमुद्यमयति । न कोऽपि । कीदृशं गात्रम् । आकूणिताक्षं स्वरूपानन्दानुभवादीषत्संकोचितनेत्रम्। स्मितत्णितास्यं मन्दहासपूरितमुखम्। शाश्यजनयक्ष्यं श्लाघ्यजनैर्यक्ष्यं पूज्यं च । तस्माद् वयमशाम्य द्रष्टुमयोग्य कर्म इह लक्षयितु द्रष्टुं नो नहिं क्षमाः स्मः शक्ता भवामः ॥—आकूणितेति। तूणितेति। १६८८ कूण संकोचने। १६८९ तूण पूरणे। द्वयोः कर्मणि क्तः। भ्रूणस्य। १६९० भ्रूण० आशंसायाम्। आशस्यते प्रार्थ्यते इति घञर्थे कः। शाश्येति। यक्ष्येति। १६९१ शठ श्लाघायाम्। १६९२ यक्ष पूजायाम्। द्वयोर्ण्यत्। स्यामनेति। १६९३ स्यम वितर्के। ल्युट्। गूरयते। १६९४ गूर उद्यमने। लट्। अशाम्यम्। १६९५ शम १६९६ लक्ष आलोचने। शामेर्ण्यत्। लक्षयितुम्। लक्षेस्तुमुन् ॥

कुत्स्या हि गालनपटा इव कष्टमेते
दुष्कीर्तिमालनपराः खलु कूटवृत्त्या।
तद्वञ्चनं निरसितुं नहि वर्षिताः स्मः
किं कुर्महे खलजना इह मादयन्ताम् ॥ ३२ ॥

एते गालनपटा इव दोषग्रहणात् कुत्स्या हि कष्टम्। कूटवृत्त्या व्याजव्यापारेण दुष्कीर्तिमालनपरा दुर्यशःसंपादने तत्पराः खलु वयम् । तेषां वञ्चन व्याजेन शिशुवधरूपं व्यापारं निरसितु नहि वर्षिताः शक्तिसंबद्धाः स्मो भवामः। अतो वयं किं कुर्महे । इह खलजनाः मादयन्तां तृप्ता भवन्तु ॥—कुत्स्या इति। १६९७ कुत्स अवक्षेपणे। ण्यत्। गालनेति। मालनेति। १६९९ गल स्रवणे। १७०० भल आभण्डने। आभण्डनमार्जनम्। द्वयोर्ल्युट्। कूटेति। १७०१ कूट अप्रदाने। अप्रसादे इत्यन्ये। अप्रसादकृत्त्वाद्व्याजः। कूटेरप्। १७०२ कुट्ट प्रतापने। इत्यन्ये। वञ्चनेति। १७०३ वञ्चु प्रलम्भने। ल्युट्। उदिदित्येके। तत्र णिजभावे सर्वत्रेड्विकल्पः। वर्षिताः। १७०४ वृष शक्तिबन्धने। तच्च गर्भाधानसामर्थ्यं शक्तिसबन्धे इति केचित्। अस्मात् कर्तरि क्तः। मादयन्ताम्। १७०५ मद तृप्तियोगे। लोट् ॥

इत्यादि वाच्यशतदेवनमध्य एव
लोकः समालपदगारितकृष्णवीर्यः।

१. 'आशाविशङ्कयोः' इति धातुपाठे. २. '१६९८ त्रुट छेदने' नोदाहृतः. ३. 'आप्रदाने' इति धातुपाठे.

कंसस्त्ववेदयमतिर्भयमानितोऽपि
निर्यावनः कुयुधि कुस्मयमान आस्त ॥ ३७ ॥

लोकोऽगारितकृष्णवीर्योऽज्ञातकृष्णवीर्यः सन् वाद्यशतदेवनमध्ये एव वाद्यशतस्य घोषमध्ये एव इत्यादि समालपत् । अवेदयमतिरज्ञमनाः कंसस्तु भयेन मानितः स्तब्धोऽपि कुयुधि कुत्सितयुद्धे निर्यावनो जुगुप्साहीनः कुस्मयमानः कुत्सित स्मयमान आस्त ॥—देवनेति । १७०६ दिवु परिकूजने । ल्युट् । अगारितेति । १७०७ गृ विज्ञाने । विज्ञापने इति द्रुमे । कर्मणि क्तः । वेदयेति । १७०८ चिद् वेदनाख्याननिवासनेषु । परिवादे चैके । वेदनं ज्ञानम् ।• 'अनुपसर्गाल्लिम्प–' इति शः । मानितः । १७०९ मान स्तम्भे । कर्तरि क्तः । यावनेति । १७१० यु जुगुप्सायाम् । ल्युट् । कुस्मयमानः । १७११ कुस्म नाम्नो वा कुत्सितस्मयने । कुत्सितस्मयनार्थो धातुरत्र पठितव्यः । तस्माण्णिचि शानचि कुस्मयमानः । कुस्ममिति नामपदाद्वा तत्करोतीति णिचि तत्सिद्धिरित्यर्थः । कुस्ममिति दृष्टं कुस्मयतिः (?) कारितमिति चेत् कोर्नित्यसमासत्वात् उपसर्गस्य च बाह्यत्वात् कारितमेव । एषामर्थो धातुखण्डे एव द्रष्टव्यः ॥

संचर्चयन्नपनयानथ वुक्कयिष्णुः
श्वेवोग्रशब्दनपरः कररुद्धकाणः ।
मल्लो जिजम्भिषुरसूदितवीर्यमीशं
मुष्ट्या जजास बहु पाशितवांश्च दोष्णा ॥ ३८ ॥

अथ मल्ल ईशं जिजम्भिषुर्नाशयितुमिच्छुर्मुष्ट्या जजास प्रहृतवान् । दोष्णा बहु बहुकृत्वः पाशितवान् बद्धवांश्च । कीदृशः । अपनयान् संचर्चयन्नावर्तयन् । श्वा इव बुक्कयिष्णुर्भषणशीलः । असूदितवीर्यमक्षीणवीर्यम् ॥—इतःपरं विकरणान्तरोक्ता एवोच्यन्ते । संचर्चयमिति । १७१२ चर्च अध्ययने । अस्माच्छता । लक्षणया आवर्तनार्थता । बुक्कयिष्णुः । १७१३ बुक्क भषणे । श्वरवस्तत् । इष्णुच् । शब्दनेति । १७१४ शब्द शब्दक्रियायाम् । ल्युट् । सोपसर्गस्त्वयमाविष्कृताविति द्रुमे । काणः । १७१५ कण निमीलने । एकनेत्रनिमीलने चेदम् । अस्मादच् । जिजम्भिषुः । १७१६ जभि नाशने । णिजभावे सनुः । असूदितेति । १७१७ सूद क्षरणे । कर्तरि क्तः । जजास । १७१८ जसु ताडने । णिजभावे लिट् । पाशितवान् । १७१९ पश बन्धने । पाशेः क्तवतुः ॥

द्रागामयन्निचटदस्थिकयाथ मुष्ट्या
प्रास्फोटयत्तमजितोऽपि च घाटिताङ्गम् ।
दिक्षेप हिंसयति देव्यममुं युधीति
संमोदमर्जयति घोषति नाकिलोके ॥ ३९ ॥

१. 'चेतना' इति धातुपाठे. २. 'विवासेषु' इति धातुपाठे. ३. 'णः' इत्युभयत्र पाठः.

अथ नाकिलोके 'एष देव्यं मर्दयितव्यं अमुं युधि हिंसयति हिनस्ति दिष्ट्या' इति घोषति स्वाभिप्रायं प्रकाशयति संमोदमर्जयति वर्धयति सति अजितोऽपि विचटदस्थिकया भिद्यमानास्थिसंचया मुष्ट्या द्राग् आमयन् पीडयंस्तं प्रास्फोटयत् भित्राङ्गमकरोत्। घाटिताङ्गं घनीभूताङ्गं प्रहारभेदेन संकुचिताङ्गं वा ॥—आमयन्निति। १७२० अम रोगे। शता। विचटदिति। १७२१ चट १७२२ स्फुट भेदने। चटेर्गणोक्तत्वेन चुरादिणिचोऽनित्यत्वात् शपि शता। प्रास्फोटयत्। स्फुटेर्लङ्। घाटितेति। १७२३ घट संघाते। भेदने चेत्येके। कर्तरि क्तः। हिंसयति। 'हन्त्यर्थाश्च'। एते च स्वार्थे णिचं भजन्तीत्यर्थः। तेन हिंसेर्णिचि लट्। चटस्फुटघटानामपि हन्त्यर्थत्वमिष्यते। दीप्त्यर्थानामपि स्वार्थिकणिजस्ति द्रुमे। देव्यम्। १७२४ दिवु मर्दने। परिकूजने इति केचित्। ण्यत्। अर्जयति। १७२५ अर्ज प्रतियत्ने। सेतो गुणान्तराधानं तत् (?)। आर्जनेऽप्यस्ति। अस्माच्छता। घोषति। १७२६ घुषिर् विशब्दने। शब्देन स्वाभिप्रायप्रकाशनं तत्। स्तुतौ च द्रुमे। अस्य णिज्विकल्पो भाष्योक्तः। तेन शपि शता ॥

आक्रन्दयत्सु निभृतं नृपु लासिताशे-
षोत्तंसभूषणविमोक्षणयार्हिताभौ।
आज्ञापनामिह विभाज्य नृपेण दृष्टौ
तौ शर्धनाय समयातयतां नियुद्धम् ॥ ४० ॥

नृषु निभृतं आक्रन्दयत्सु सततं रुदत्सु सत्सु तौ चाणूरकृष्णौ(?) आज्ञापनां विभाज्य दत्त्वा नृपेण दृष्टौ। शर्धनाय अन्योन्याभिभवार्थं नियुद्धं बाहुयुद्धं समयातयतां संस्कृतवन्तौ सविशेषं कृतवन्तौ। लासिताशेषाणां स्वकौशलालंकृतसर्वाङ्गाणामुत्तंसस्य च। अन्यालंकाराणां च युद्धार्थं त्यागेन आर्हिताभौ पूजनीयसविशेषशोभौ ॥—आक्रन्दयत्स्विति। १७२७ आङः क्रन्द सातत्ये। आङ्पूर्वः क्रन्दिः सातत्ये णिच भजते। शता। शबु(न्दु)क्तयाराह्वानरोदनयोः सातत्य चेदम्। लासितेति। १७२८ लस शिल्पयोगे। शिल्पोपयोगे इति केचित्। अस्मात् कर्मणि क्तः। उत्तंसेति। १७२९ तसि १७३० भूष अलंकारे। तसेर्घञ्। भूषणेति। भूषेर्ल्युट्। विमोक्षणया। १७३१ मोक्ष असने। युच्। आर्हितेति। १७३२ अर्ह पूजायाम्। कर्मणि क्तः। आज्ञापनाम्। १७३३ ज्ञा नियोगे। आङ्पूर्व एवायम्। अस्माद्युच्। विभाज्येति। १७३४ भज विश्राणने। दानं तत्। ल्यप्। शर्धनाय। १७३५ शृधु प्रसहने। अभिभवस्तत्। ल्युट्। समयातयताम्। १७३६ यत निकारोपस्कारयोः परिभवसंस्कारौ तौ। खेदे च द्रुमे। अस्माल्लङ् ॥

निर्यातितप्रहृतिमीशमविप्रहृत्य
मल्लोऽथ वासितविचारमचुच्यवत्तः।

१. 'अलंकरणे' इति धातुपाठे. २. अतन्त्रोऽयं धातुः. धातुपाठे नोपलभ्यते.

रोपान्ध्यभावितमस्थिभिरकल्पयत्तं
कृष्णोऽपि नाकिजनराकितलाग्यवीर्यः ॥ ४१ ॥

अथ स मल्लो निर्यातितप्रहार्तिं कृतप्रतीहारमीशमतितरां प्रहृत्य वासितविचारं छिन्नसंशयं यथा तथा अचुच्यवत् जहास । कृष्णोऽपि रोपान्ध्येन रोपकृतेन मूढत्वेन भावितं मिश्रीकृतं तमस्थिभिरकल्पयत् मिश्रीकृतवान् । नाकिजनेन सुरजनेन राकितमास्वादितं लाग्यमास्वादनीयं वीर्यं यस्य सः श्रीकृष्णः ॥—निर्यातितेति । नियथ धान्यादिप्रतिदाने । अस्मात् कर्मणि क्तः । वासितेति । १७३७ वस स्नेहनच्छेदापहरणेषु । 'उपहरणेषु' इतिभ्वा पाठः । तस्मात् प्राग्वत् क्तः । विचारेति । १७३८ चर संशयने । असंशये च द्रुमे । घञ् । अचुच्यवत् । १७३९ च्यु हसने । सहने इति केचित् । च्युस इत्यन्ये । च्यावयतेर्लुङि चङ् । भावितम् । १७४० भुवोऽवकल्कने । अस्यावकल्कने णिच् स्यात् । तच्च मिश्रीकरणम् । अन्ये तु चिन्तने विपाचनेऽवकल्कने चेत्याहुः । विपाचनम् । विपक्कीकरणम् । अस्मात् कर्मणि क्तः । अकल्पयत् । १७४१ कृपेश्च । मिश्रीकरणे णिच् स्यात् । अस्माल्लङ् । राकितेति । लाग्येति । १७४२ रक १७४३ लग आस्वादने । आद्योऽपि गान्त इत्येके । रक लघ इत्यन्ये । राकेः कर्मणि क्तः । लागेर्ण्यत् ॥

शौर्याश्चितेन धृतलिङ्गितचेलकेन
संमोदितो हलधरोऽपि च मुष्टिकेन ।
मुष्ट्या तुदन्मुहुरतित्रसदाशु दोर्भ्या-
मुध्रासयज्जननुतस्तममोचयच्च ॥ ४२ ॥

हलधरोऽपि च मुष्टिकेन संमोदितः संसर्गं प्राप्तो मुहुर्मुष्ट्या तुदन् दोर्भ्यामाशु अतित्रसत् गृहीतवान् वारितवान् वा अमोचयच्च । कीदृशेन मुष्टिकेन । शौर्येणाश्चितेनान्येभ्योऽधिकेन । धृतं लिङ्गितं मिश्रीकृतं चेलं येन तेन । उध्रासयद्भिरुञ्छवृत्तिभिर्जनैर्नुतः ॥—अश्चितेनेति । १७४४ अन्चु विशेषणे । व्यावर्तनं तत् । कर्मणि क्तः । लिङ्गितेति । १७४५ लिगि चित्रीकरणे । प्राग्वत् क्तः । संमोदितः । १७४६ मुद संसर्गे । कर्तरि क्तः । अतित्रसत् । १७४७ त्रस धारणे । तच्च ग्रहणं वारणं वा । लुङि चङ् । उध्रासयदिति । १७४८ उध्रस उञ्छे । उकार इदित्येके । उध्रसेः शता । अमोचयत् । १७४९ मुच प्रमोचने । लङ् ॥

दोर्भ्यां त्रासयतां प्रपोपितरुपां निर्दलिनोद्योगिनां
तेषां विक्रमणैरपाटि पटिमा शिक्षाप्यपोटि स्फुटम् ।

---

१. 'स्नेह' इति धातुपाठे. २. 'संशये' इति धातुपाठे.

स्थेमालोटि जवोऽप्यतुञ्जि लघिमा चाभिञ्जयपिञ्ज्यश्रमो
रोषोऽलुञ्जि रसो व्यभञ्जि बलवत्तालङ्घि चात्रस्यभीः ॥ ४३ ॥

दोर्भ्यां ग्रासयतां तत्तन्मर्मस्थानेषु गृह्णतां प्रपोषितरुषां सम्यग्धारितकोपानां परस्परं निर्दालनोद्योगिनां मुष्टिविदारणोद्योगिनां तेषां श्रीकृष्णरामचाणूरमुष्टिकानां विक्रमणैः पराक्रमैः पटिमा युद्धसामर्थ्यं अपाटि कथितम् । शिक्षा अभ्यासोऽपि स्फुटमपोटि उक्ता । स्थेमा देहस्थैर्यमलोटि । जवः प्रहारवेगोऽपि अतुञ्जि । लघिमा शीघ्रकारित्वं चाभिञ्जि । अश्रमः पीडाभावोऽपिञ्जि । रोषः कोपपौष्कल्यमलुञ्जि । रसो युद्धकौतुकं व्यञ्जि । बलवत्ता एतावत् बलमिति अलङ्घि । अभीर्भयाभावोऽत्रसि च । सर्वत्रापि भाषितं स्पष्टं प्रकाशितमित्यर्थः । एषां भाषार्थस्यापि सद्भावात् प्रकाशितमित्येव वार्थः ॥—'आ स्वदः सकर्मकात्' । अतः परं स्वि(स्वद)पर्यन्तेभ्यः कर्मसंभवे एव णिच् स्यात् । ग्रासयतामिति । १७५० ग्रस ग्रहणे । शता । प्रपोषितेति । १७५१ पुष धारणे । [कर्मणि क्तः ।] निर्दालनेति । १७५२ दल विदारणे । युच् । अपाटि । अपोटि । अलोटि । अतुञ्जि । अभिञ्जि । अपिञ्जि । अलुञ्जि । व्यभञ्जि । अलङ्घि । अत्रसि । इति । **१७५३ पट १७५४ पुट १७५५ लुट १७५६ तुजि १७५७ भिजि १७५८ पिजि १७५९ लुजि १७६० भजि १७६१ लघि १७६२ त्रसि १७६३ पिसि १७६४ कुसि १७६५ दशि १७६६ कुशि १७६७ घट १७६८ घटि १७६९ बृहि १७७० बर्ह १७७१ बल्ह १७७२ गुप १७७३ धूप १७७४ विच्छ १७७५ चीव १७७६ पुथ १७७७ लोकृ १७७८ लोचृ १७७९ णद १७८० कुप १७८१ तर्क १७८२ वृतु १७८३ वृधु** भाषार्थाः । एते एकविंशत् । भासार्था इत्येके । पुटिश्चूर्णनेऽपि द्रुमे । पटादिदशाना कर्मणि लुङि चिण् ॥

कश्चित्कष्टमविंसयद्रणमिमं कुंस्यं त्वया दंश्यतां
नाकुंश्यं परिघाटयेति च परेणोद्घण्टितोऽबृंहयत् ।
नाहं बर्हयितास्म्यबल्ह्यमपि भोः सर्वैरिदं गोप्यते
तांस्त्वं धूपय विच्छयन्क इव न त्वचीवनात्पोथयेत् ॥ ४४ ॥

तत्र प्रेक्षकेषु कश्चिदिमं रणं कष्टमसह्यमयोग्यमविंसयदकथयत् त्वया कुंस्य दंश्यता वक्तुं योग्यमुच्यताम् । अकुंश्यं न परिघाटय । अवक्तव्यं न वद इति परेणोद्घण्टित उक्तः । पूर्ववादी अबृंहयत् अकथयत । अहं न बर्हयितास्मि न वदिष्यामि । भोः हे भवन् अबल्ह्यमवाच्यमपि इदं सर्वैर्गोप्यते कथ्यते । त्वं तान् सर्वान् धूपय कथय । विच्छयन् कः इव त्वचीवनात् न पोथयेत् । एषु वदत्सु वदन् कान्वदुत्तया न वदेत् । सर्वोऽपि वदेदेव ॥—अविंसयदिति । विंसेर्लङ् । कुंस्यम् । कुंसेर्ण्यत् । दंश्यताम् । दंशेः कर्मणि लोट् । अकुंश्यम् । कुंशेर्ण्यत् । परिघाटय । घाटेर्लोट् । उद्घण्टितः । घण्टेः क-

मेणि क्तः । अमृंहयत् । वृंहेर्लङ् । वर्हयितास्मि । वर्हेर्लुट् । वल्ह्यम् । वल्हेर्ण्यत् । गोप्यते । गोपेः कर्मणि लट् । धूपय । धूपेर्लोट् । विच्छयन् । विच्छेः शता । चीवनेति । चीवेर्लुट् । पोथयेत् । पोथेर्लिङ् ॥

अलोचि चान्यैः समरेऽत्र कष्टतामलोकयन्दुष्यति नादयन्नपि ।
कोपः प्रभोः कोपयति प्रतर्क्यते पापश्च ही वर्त्मवर्धयज्जनः ॥ ४९ ॥

अन्यैश्चालोचि अन्यैरपि एवमुक्तम् । अत्र समरे कष्टतामलोकयन् अकथयन् नादयन् कथयन् अपि दुष्यति । कुतः । कोपयति वदति जने, प्रभोः कोपः प्रतर्क्यते सर्वैः प्रकाश्यते उह्यते वा वर्त्मवर्धयन् वक्तव्यमवदन् पापश्च भवति । ही का वात्र गतिः । खेदार्थो हीशब्दः ॥— अलोचीति । लोचेः कर्मणि लुङि चिण् । अलोकयन् । नादयन् । कोपयति । लोकेर्नादेः कोपेश्च शता । प्रतर्क्यते । तर्किरूहेऽपि । तस्मात्कर्मणि लट् । वर्त्म । वर्तेर्ण्यत् । अवर्धयन् । वर्धेः शता ॥

भीतिं रोटय लञ्जयानयमसत्त्वाचञ्चयतां दंसय
क्रौर्यं भ्रंशय रुंसयाल्पमतितां भाग्यक्षयं रुंशय ।
मानं शीकय नाट्याकरुणतां दुर्वासनां घुण्टय
भ्रान्तिं जुञ्जय(?) भूपतेरिति जना गूढं मिथोऽरङ्घयन् ॥४६॥

भीतिं रोटय । अनयं नयाभावं लञ्जय । असत्सु आचञ्चयतां प्रथमगण्यतां दंसय । क्रौर्यं भ्रंशय । अल्पमतितां रुंसय । भाग्यक्षयं रुंशय । मानं शीकय । अकरुणतां नाटय । दुर्वासनां घुण्टय । भ्रान्तिमन्यथा प्रतिपत्तिं जुञ्जय(?) । सर्वत्रापि अकथयन्नित्यर्थः । प्रकाशितवन्त इति वा । जना भूपतेर्भूपतिमधिकृत्य इति एवं गूढं अरङ्घयन् अकथयन् ॥—रोटय । लञ्जय । अञ्चयताम् । दंसय । भ्रंशय । रुंसय । रुंशय । शीकय । नाटय । घुण्टय । जुञ्जय । इति । १७८४ रुट १७८५ लजि १७८६ अजि १७८७ दसि १७८८ भ्रशि १७८९ रुसि १७९० रुशि १७९१ शीक[2] १७९२ नट १७९३ घुटि १७९४ जिचि[3] १७९५ रघि १७९६ लघि १७९७ अहि १७९८ रहि १७९९ महि चेति पञ्चदश चेके पठन्ति । १८०० लडि १८०१ तड १८०२ नड[4] चेत्यन्ये । अर्थः प्राग्वत् । तत्र रोट्याद्येकादशानां 'समुच्चयेऽन्यतरस्याम्' इति सर्वलकारस्थाने विहितो लोट् । अञ्चयेस्तु ण्यत् । अरङ्घयन्निति । 'समुच्चये सामान्यवचनस्य' इति अनुप्रयुक्तस्य रङ्घेर्लङ् । तेन लोडन्तानामपि भूतार्थता । अन्येषां भावणीयविशेषवाचित्वात् रङ्घेस्तदभावात् सामान्यार्थता ॥

वीर्यं दुरंहमभिरंहय मंहयाभां
मौग्ध्यं प्रलण्डय च तोडय निर्भयत्वम् ।

---

१. 'रुशि शीक रुसि' इत्ययं क्रमो धातुपाठे. २. 'शीक' इत्ययमत्रादिष्टधातुपाठे. ३. 'जि चि' इति द्वौ भिन्नौ धातू धातुपाठे. ४. 'नल' इति धातुपाठे.

संनाडयन्त्य इति पूरितरोजशङ्का
नार्यो हरेः समरकेलिमसिष्वदन्त ॥ ४७ ॥

दुरंहं वक्तुं दुष्करं वीर्यमभिरंह्य। आभामत्यद्भुतानङ्गशोभां मंह्य। मौग्ध्यं युद्धेऽपि मनोहरत्वं प्रलण्ड्य च। निर्भयत्वम्। अतिकूरमल्लगणावृतत्वेऽपि भयराहित्यम्। तोडय। चतुर्षु कथयतीत्यर्थः। हरेः हरिसंबन्धं इति संनाडयन्त्यः कथयन्त्यः पूरितरोजशङ्काः पूरितहरिहिंसाशङ्काः च सत्यः समरकेलिमनायासयुद्धमसिष्वदन्त आस्वादितवत्यः ॥—दुरंहमिति। अंहेः खलु। अभिरंह्य। मंह्य। प्रलण्ड्य। तोडय। रंह्यादिचतुर्णां प्राग्वच्छेद्। संनाडयन्त्यः। नाडेः शतरि ङीप्। एते भाषार्थाः समुदिता एकोनपञ्चाशत् ॥—पूरितेति। १८०३ पूरी आप्यायने। ईदित्त्वेन निष्ठायामनिट्त्वस्याणिच्येव संभवाण्णिज्विकल्पः। अस्मात् कर्मणि क्तः। रोजेति। १८०४ रुज हिंसायाम्। घञ्। असिष्विदन्त। १८०५ ष्वद् आस्वादने। संवरणे इत्येके। स्वादं इत्यन्ये। स्वदेश्चङ्। आष्वदीया गताः ॥

कृष्णोऽथ बाहुयुगलैर्बहु योजयन्तं
दोष्णा प्रपर्च्य रिपुमार्चत मुष्टिघातैः।
तच्चासहन्तममुमैरदलायिताय:
स्थैर्यं सुदूरमपवृक्तवृतिप्रभावः ॥ ४८ ॥

अथ कृष्णोऽपि बाहुयुगलैर्बहु अधिकं योजयन्तं बध्नन्तं रिपुं दोष्णा प्रपर्च्य बद्ध्वा मुष्टिघातैरार्चतोपचारं कृतवान्।समरे ह्यौचितत्वात्।प्रहार एवोपचारः। तत्प्रहरणमसहन्तममुं सुदूरमैरत् क्षिप्तवान् च। अलायितम् अविलापितमतिकठिनमय इव स्थैर्यं यस्य तम्। अपवृक्तवृतिरवर्जिताद्भुतिस्त्यक्तावरणः प्रकाशितः प्रभावो येन सः ॥—आ धृषाद्वा। इतः परं सु(यु)जादीनां धृषिपर्यन्तानां वा णिच् स्यात्। योजयन्तमिति। १८०६ युज १८०७ पृच संयमने। आद्यो योगे च द्रुमे। अन्त्यः संपर्चने च। योजेः शता। प्रपर्च्य। पर्चेर्ल्यप्। आर्चत। १८०८ अर्च पूजायाम्। अस्याणिचि तङेवेत्येके। तेन ताङि लङ्। असहन्तम्। १८०९ षह मर्षणे। अणिचि शपि शता। ऐरत्। १८१० ईर क्षेपे। गतौ च द्रुमे। शपि लङ्। अलायितेति। १८११ ली द्रवीकरणे। णिचि कर्मणि क्तः। अपवृक्तेति। १८१२ वृजी वर्जने। वृजेः कर्मणि क्तः। वृतीति। १८१३ वृञ् आवरणे। क्तिन् ॥

अजरद्वृषवद्विरिक्तपीडः पुनरभ्येत्य विशिष्टचित्ततापी।
प्रजहार हरिं रणेष्वतर्पन्सुदृढं छर्दितमन्युरप्रदर्भन् ॥ ४९ ॥

भगवता दूरे प्रक्षिप्तः स चाणूरो रणेषु अतर्पन् तृप्तिहीनः छर्दितमन्युः दीप्तकोपः। अप्रदर्भन् भीतिहीनः। अजरद्वृषवत् यौवनयुक्तो वृष इव विरिक्तपीडो गतपीडः सन्।

पुनरभ्येत्य हरिं सुहृदं प्रजहार ॥—अजरदिति । १८१४ जॄ वयोहानौ । १८१५ झि इत्येके । जृधातोः शता । विरिक्तेति । १८१६ रिच वियोजनसंपर्चनयोः । कर्तरि क्तः । विशिष्टेति । १८१७ शिष उसर्वोपयोगे । विपूर्वोऽतिशये । तस्मात् कर्तरि क्तः । तापी । १८१८ तप दाहे । णिनिः । रिच्यादयस्त्रयो णिजभावेऽनिटः । अतर्पन् । १८१९ तृप तृप्तौ । प्रीणने च द्रुमे । शपि शता । छर्दितेति । १८२० छृदी संदीपने । ईदित्त्वं नेति केचित् । अस्मात् कर्मणि क्तः । चृप छृप तृप दृप संदीपने इत्यपेके । अप्रदर्भन् । १८२१ दृभी भये । शता ॥

कृष्णोऽविश्रथितारिभीरभिमयन्दोष्णा ग्रथन्भ्रामय-
न्क्राथ्यं प्रोथितवानशीकितमतिं भूमावचीकन्नमुम् ।
मल्लोऽर्थ्यः स च हिंसितः पदमुपासात्सीद्धरेः शुन्धितः
तावत्स्वं बलमच्छदज्जुपितवान्मुष्टया हली मुष्टिकम् ॥ ९० ॥

कृष्णोऽविश्रथितारिभीस्त्यक्तशत्रुभयः सन्नभिमुखमयन् गच्छन् अमुं दोष्णा ग्रथन् बध्नन् भ्रामयंश्च भूमौ प्रोथितवान् अभिहतवान् । क्राथ्यं हिंस्यमशीकितमतिमसहनबुद्धिमचीकन्नसहमानोऽर्थ्यो हिंसनीयः स मल्लश्च हिंसितः । शुन्धितः शुद्धः सन् हरेः पदं श्रीविष्णुलोकमुपासात्सीत् प्राप्तवान् । तावत् तस्मिन्नवसरे हली स्वं निजं बलमच्छदन् मुष्टया मुष्टिकं जुपितवान् हिंसितवान् ॥—श्रथितेति । १८२३ श्रथ मोक्षणे । बन्धे च द्रुमे । हिंसायामिति केचित् । कर्मणि क्तः । अभिमयन् । १८२४ मी गतौ । शता । ग्रथन् । १८२५ ग्रथ बन्धने । शता । क्राथ्यम् । क्रथ हिंसायामिति स्वरितेतं केचिदाहुः । तस्माण्ण्यत् । अशीकितेति । १८२६ शीक आमर्षणे । १८२७ चीक च । आद्यः सेचने । शीकेः कर्तरि क्तः । अचीकन् । चीकेः शता । अर्थ्यः । १८२८ अर्द हिंसायाम् । स्वरितेत् । तस्माण्ण्यत् । हिंसितः । १८२९ हिसि हिंसायाम् । इदितोऽस्य युजादिफलं चिन्त्यम् । कर्मणि क्तः । उपासात्सीत् । १८३१ आङः षद पद्यर्थे । पद्यर्थो गतिः । लुङि सिचि वृद्धिः । शश्पोः सदेः ऌदित्वाल्लुङ्यङेवेति भेदः । शुन्धितः । १८३२ शुन्ध शौचकर्मणि । कर्माविवक्षया कर्तरि क्तः । अच्छदन् । १८३३ छद अपवारणे । स्वरितेदित्येके । शता । जुपितवान् । १८३४ जुप परितर्कणे । ऊहो हिंसा वा तत् । परितर्पणे इत्येके । अस्मात् क्तवतुः । अस्येदित्त्वाभावादिट् ॥

कूटाद्येषु हतेषु धावितमतिष्वन्येषु धावत्सु च
स्वैरं तत्र जनान्ग्रथन्विगलितश्रन्थान्कचान्ग्रन्थयन् ।
आपन्खेदमरिं तनञ्जनहितं चिक्रीड गोपैर्हरि-
स्तूर्योत्थो वितनन्ध्वनिर्दिवमगाद्धूतो यथा वादितः ॥ ९१ ॥

---

१. अत्र '१८२२ दृभ संदर्भे' इत्ययं धातुर्नोदाहृतः. २. अत्र '१८३० अर्ह पूजायाम्' नोदाहृतः.

कूटघातेषु हतेषु अन्येषु धावितमतिषु भिया कम्पितचित्तेषु धावत्सु सत्सु हरिर्गोपैः सह तत्र स्वैरं चिक्रीड । कथंभूतः । जनान् प्रयन् । विगलितश्रन्थान् कचान् प्रन्थयन् । अरिं खेदं आपन् लम्भयन् । जनहितं तनन् श्रद्दधानः इच्छन् । तूर्योत्थो ध्वनिर्वितनन् दीर्घीभवन् वादितः संदेशेन प्रेरितो दूत इव देवान् प्रति वक्तुं दिवमगात् ॥—धावितेति । १८३५ धूञ् कम्पने । कर्माविवक्षया अकर्मकत्वात् कर्तरि क्तः । प्रयन् । १८३६ प्रीञ् तर्पणे । शता । श्रन्थेति । १८३७ श्रन्थ १८३८ ग्रन्थ संदर्भे । आद्यो हिंसाया च इमे । श्रन्थेर्घञ् । ग्रन्थयन् । ग्रन्थेः शता । आपन् । तनन् । वितनन् । रिच्यादिवदनिट् । १८३९ आपॢ लम्भने । १८४० तनु श्रद्धोपकरणयोः । उपहृतौ श्रद्धोपघाते च इमे । 'उपसर्गाच दैर्घ्ये' । विभ्यः शता । १८४१ चन श्रद्धोपहननयोरिति चैके । वादितः । १८४२ वद संदेशवचने । स्वरितेत् । वचने च इमे । अस्मात् कर्तरि क्तः ॥

वचन्तो मानन्तो हरिविभवमानन्दमखिला
बभूवुर्गर्हन्तो मनसि नृपतिं मार्गितखलम् ।
स्त्रियश्चोत्कण्ठन्त्यो ददृशुरजितं मृष्टतनवः
नृपस्त्वेतन्नामर्षत रिपुजनाधर्षितबलः ॥ ९२ ॥

अखिलाः सर्वे जनाः हरेर्विभवं प्रभावं वचन्तः कथयन्तो बहुमान्यमानाश्चानन्दं बभूवुः प्रापुः । नृपतिं मनसि गर्हन्तो निन्दन्तो मार्गितखलमान्विष्टदुष्टजनं स्त्रिय उत्कण्ठन्त्यो रागविवशा अजितं ददृशुः । मृष्टतनवः स्वच्छीकृताङ्गाः । अलंकृताङ्गाश्च । नृपस्तु एतत् श्रीकृष्णप्रशंसादिकं न अमर्षत न सोढवान् । रिपुजनैरधर्षितबलोऽनभिभूतपराक्रमः ॥—वचन्तः । मानन्तः । १८४३ वच परिभाषणे । अनिट् । १८४४ मान पूजायाम् । द्वयोः शता । बभूवुः । १८४५ भू प्राप्तौ । आत्मनेपदी । भूधातुः प्राप्त्यर्थे वा णिज्वान् । णिजणिचोरात्मनेपदी च स्यात् । अणिच्यात्मनेपदं नेत्येके । तस्मालिट् । गर्हन्तः । १८४६ गर्ह निन्दने । शता । मार्गितेति । १८४७ मार्ग अन्वेषणे । कर्मणि क्तः । उत्कण्ठन्त्यः । १८४८ कठि शोके । प्रायेणोत्पूर्वं उत्कण्ठार्थः । अस्माच्छतरि ङीप् । मृष्टेति । १८४९ मृज शौचालंकारयोः । कर्मणि क्तः । अमर्षत । १८५० मृष तितिक्षायाम् । स्वरितेत् । लङ् । अधर्षितेति । १८५१ धृष प्रसहने । कर्मणि क्तः । 'वध बन्धने' इति केचिदाधृषीयेषु इच्छन्ति । आधृषीया गताः ॥

क्रुद्धेनाकथि चाप्यवर्यगणने शठ्येन भोः श्वठ्यतां
मन्त्री तौ प्रपटय्य पाशवटनैः पापौ विरह्यौ पुरात् ।
के मूढाः स्तनयित्नुनिर्गदनवत्तूर्यध्वनिं कुर्वते
मल्लौघोऽपतयद्रिपुं न तु पतां चक्रे स पातोचितः ॥ ९३ ॥

---

१. 'विनिन्दने' इति धातुपाठे.

क्रुद्धेन तेन अकथि अपि कथितम् । अपिशब्दः पूर्ववाक्यार्थसमुच्चये । न केवलं नामपर्यन्तं इत्येतावत् एवमुक्तं च । अवर्यंगणने अनोप्सितव्यानां गणने । शठ्येन प्रथममेव कथनीयेन भोः परिजनाः, मन्त्री श्वठ्यतां सम्यक् भाष्यताम् । पापौ तौ कृष्णरामौ पाशानां वटनैर्वेष्टनैः प्रपटय्य सम्यग्बद्ध्वा पुरात् विरह्यौ त्याज्यौ । न तु हननपरिश्रमो मा भूत् बहूनां संतोषादिदर्शनेन सविश्लेषवाद्यघोषश्रवणात् । कुपित आह । के मूढाः स्तनयित्नुनिर्गदनवत् मेघघोषवत् तूर्यध्वनिं कुर्वते । मल्लौघ एव अपतयत् परिपातोचितः वधयोग्यः । तु रिपुर्न पतांचक्रे न पतितः ॥—इतः परमदन्ताः । अकथि । १८५२ कथ वाक्यप्रबन्धे । णिजन्तात् कर्मणि चिण् । अतो लोपस्य स्थानिवत्वान्न वृद्धिः । अवर्यंति । १८५३ वर ईप्सायाम् । ण्यत् । गणने । १८५४ गण संख्याने । तच्च संख्याविज्ञानम् । भागशोऽवस्थानं च । अस्माल्ल्युट् । शठ्येन । १८५५ शठ १८५६ श्वठ सम्यगवभाषणे । शठेरचो यत् । श्वठ्यताम् । श्वठेः कर्मणि लोट् । प्रपटय्य । १८५७ पट १८५८ वट ग्रन्थे । 'वट वेष्टने' इत्येके । पटेर्ल्यप् । 'ल्यपि लघुपूर्वात्' इत्ययादेशः । वटनैः । वटेर्ल्युट् । विरह्यौ । १८५९ रह त्यागे । यत् । स्तनयित्नु इति । १८६० स्तन १८६१ गदी देवशब्दे । ईकारो द्विवचनकृतः । न त्वीदित्वार्थः । 'स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्' इति स्तनेरित्नुचि 'अयामन्ता' इत्ययादेशः । निर्गदनेति । गदेर्ल्युट् । अपतयत् । १८६२ पत गतौ वा । अयं गतौ वा णिज्वान् । तत्र णिचि लङ् । पतां चक्रे । णिजभावेऽप्यदन्तत्वेन अनेकाच्त्वादाम्प्रत्ययः । पातेति । पत गतौ वेत्यदन्तत्वं विकल्प्यत इति मते अनदन्तत्वे घञ् । 'पत ऐश्वर्यगत्योः' इति द्रुमे ॥

झटिति पपयन्त्वस्माद्गोपाः स्वरापयताधिकं
रचयत मुहुर्दण्डाघातं वनं कलयन्त्वमी ।
चहकमहितं नन्दं बद्ध्वास्य सारयतो धनं
हरत कृपकस्यारेस्तातं हत श्रथयत्तमम् ॥ ९४ ॥

गोपा झटिति अस्मात् पुरात् पपयन्तु गच्छन्तु । एतान् अधिकं स्वरापयत भर्त्सयत । [मुहुर्दण्डाघातं रचयत ।] अमी वनं कलयन्तु गच्छन्तु । नन्दं बद्ध्वा अस्य धनं हरत । चहकैः शाठ्यवद्भिर्महितं पूजितम् । सारयतो दुर्बलीभवतः । कृपकस्य दुर्बलस्य अरेः श्रीकृष्णस्य तातं वसुदेवं हत विगतप्राणं कुरुत । श्रथयत्तममतिदुर्बलम् ॥—पपयन्त्विति । १८६३ पप अनुपसर्गात् । अयमनुपसर्गो गत्यदन्तः । वन्य बाधासर्गेषु च द्रुमे । अस्मात् प्रार्थकाले लोट् । स्वरापयत । १८६४ स्वर आक्षेपे । 'कथादिपाति स्पायो(?)णौ पुग्लुक्त्वम्' इति शाकटायनसूत्रेण पुकि वृद्धिः । प्राग्वल्लोट् । रचयत । कलयन्तु । १८६५ रच प्रतियत्ने । कृमर्थे च द्रुमे । १८६६ कल गतौ संख्याने च । द्वयोर्लोट् । चहकेति । १८६७ चह परिकल्कने । भ्वुन् । महितम् । १८६८ मह पू-

ते मामद्य सभाजयन्ति भुवने यैरून्यते सत्पथो
न क्वापि ध्वनयन्तु वेदमुखरास्ते कूटनीया द्विजाः ।
इत्यूचे स हि केतयन्परिजनान्सेनापतीन्ग्रामय-
न्स्वामात्यान्कुणयन्भटांश्च गुणयन्नृणां मुदं स्तेनयन् ॥ ९७॥

यैः सत्पथः सन्मार्ग ऊन्यते त्यज्यते ते मामद्य समाजयन्ति प्रीणयन्ति पश्यन्ति सेवन्ते च । वेदमुखरा न क्वापि ध्वनयन्तु शब्द कुर्वन्तु । ते वेदाभ्यासशीला द्विजाः कूटनीयाः परितापनीयाश्च । स कंस इति ऊचे । हि किमर्थं परिजनान्केतयन्, सेनापतीन् ग्रामयन्, स्वामात्यान् कुणयन्, भटान् गुणयन् । आवयन्निति सर्वत्रार्थः । हेतौ शता । नृणां सर्वजनानां मुदं स्तेनयन्नपहरन् ॥—सभाजयन्तीति । १८८८ सभाज प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्येके । लट् । ऊन्यते । १८८९ ऊन परिहाणे । कर्मणि लट् । ध्वनयन्तु । १८९० ध्वन शब्दे । लोट् । कूटनीयाः । १८९१ कूट परितापे । परिदाहे इति केचित् । कूड दाहे इति हरदत्तः । कूटेरनीयर् । केतयन् । ग्रामयन् । कुणयन् । गुणयन् इति । १८९२ केत[1] १८९३ ग्राम १८९४ कुण १८९५ गुण चामन्त्रणे । चकारात् कूटेति च । केतादेः शता । १८९६ केत श्रावणे निमन्त्रणे च । श्रावणं समयोद्घोपणम् । निमन्त्रणमाज्ञा । १८९७ कुण संकोचने च । भासने च द्रुमे । स्तेनयन् । १८९८ स्तेन चौर्ये । शता ॥

तच्चाकर्ण्य सरोपमुत्पदयते सोत्तुङ्गमश्वं हरिः
प्रोत्तिष्ठन्नसिचर्मणी गृहितवान्कंसोऽपि मृग्योऽसताम् ।
द्रष्टॄणां कुहकोऽथ शूरयितृभिः स्तुत्योऽसिना वीरयां-
चक्रे स्थूलितभीतिरर्थितवधः सत्राशनैर्गर्वितैः ॥ ९८ ॥

हरिश्च तत् कंसवाक्यमाकर्ण्योत्तुङ्गमश्वं सरोपमुत्पदयते स्म उत्पतितवान् । कंसोऽपि प्रोत्तिष्ठन्नसिचर्मणी गृहीतवान् । असतां जरासंधादीनां मृग्योऽन्वेष्यः । अथ द्रष्टॄणां कुहको विस्मापकः सन्नसिना वीरयांचक्रे पराक्रमं चकार । शूरयितृभिः पराक्रमकृद्भिः स्तुत्यः । स्थूलितभीतिः परिवृद्धभयः सत्राशनैर्यज्ञहविर्भागभुग्भिर्देवैरर्थितवधः । गर्वितैरिदानीमेव कंसनाशात् स्वेष्टसिद्धिः स्यादिति अहंकृतैः ॥—आ गर्वादात्मनेपदिनः । उत्पदयते । १८९९ पद गतौ । लट् । गृहितवान् । १९०० गृह ग्रहणे । क्तवतुः । मृग्यः । १९०१ मृग अन्वेषणे । यत् । कुहकः । १९०२ कुह विस्मापने । ण्वुल् । शूरयितृभिः । १९०३ शूर १९०४ वीर विक्रान्तौ । शूरेस्तृच् । वीरयांचक्रे । वीरेर्लिट् । स्थूलितेति । १९०५ स्थूल परिबृंहणे । कर्तरि क्तः । अर्थितेति । १९०६ अर्थ याच्ञायाम्[2] । कर्मणि क्तः । सत्रेति । १९०७ सत्र संतानक्रियायाम् । संततं दीर्घकालतया क्रियत इति सत्रः । घञ् । गर्वितैः । १९०८ गर्व माने । कर्तरि क्तः । आगर्वीया गताः ॥

---

१. 'सङ्केत' इति पठितोऽयं धातुपाठे. २. 'उपयाच्ञायाम्' इति धातुपाठे.

आसूत्रयत्स हि तथाङ्गमसिप्रचारै-
र्मोमूत्रितारिरतिरूक्षणया रणेषु।
दुष्पारदुश्चरिततीरणकृद्यथेशो
नो चक्षमे पुटयितुं तमकत्रितोष्मा॥ ८९॥

ईशः पुटयितुं संसर्गं प्राप्तुं स्प्रष्टुं यथा नो नहि चक्षमे शक्तोऽभूत्, स तथा असिप्रचारैः खड्गभ्रमणैरङ्गमासूत्रयत् वेष्टितवान्। कीदृगीशः। दुष्पारदुश्चरिततीरणकृदपारदुरिताब्धिपारकः। अकत्रितोष्मा अकत्रितोऽशिथिलः पूर्ण ऊष्मा यस्य सः। कीदृशः कंसः। अतिरूक्षणया अतिक्रूरत्वेन मोमूत्रितारिः पुनः पुनः भृशं वा भीषितशत्रुवर्गः॥—आसूत्रयदिति। १९०९ सूत्र वेष्टने। लङ्। मोमूत्रितेति। १९१० मूत्र प्रस्रवणे। अस्मात् 'सूचिसूत्रि' इति यङन्तात् कर्मणि क्तः। रूक्षणया। १९११ रूक्ष पारुष्ये। युच्। निष्पारेति। १९१२ पार १९१३ तीर कर्मसमाप्तौ। पारेर्घञ्। तीरणेति। तीरेर्ल्युट्। पुटयितुम्। १९१४ पुट संसर्गे। तुमुन्। अकत्रितेति। १९१६ कत्र शैथिल्ये। कर्तरि क्तः॥

त्वां खञ्जयामि खलयन्त्वमुना जना मां
त्वं विष्टपं गरुडयन्हरिरेव चेत्किम्।
लोकोऽद्य घातयतु कृष्णमिति प्रलापी
तं [सं]पतन्नपि न खड्गयितुं स लेभे॥ ९०॥

अहं त्वां खञ्जयामि खञ्जं करोमि। जना अमुना मां खलयन्तु खलमाचक्षताम्। त्वं विष्टपं सर्वलोकं गरुडयन् गरुडेनातिकामन् साक्षात् श्रीहरिरेवासि चेत् मम तेन किम्। न शङ्कालेशोऽपि। लोकोऽद्य कृष्णं घातयतु कृष्णस्य वधं कथयतु। इति प्रलापी संपतन् स कंसः तं श्रीकृष्णं खड्गयितुं खड्गेन छेत्तुमपि न लेभे। उपायं न लब्धवान्॥—खञ्जयामीति। 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च'। एतदेव विवृणोति। 'तत्करोति तदाचष्टे'। खञ्जयामि करोत्यर्थे णिचि लट्। खलयन्तु। आख्यानार्थे णिचि लोट्। गरुडयन्निति। 'तेनातिक्रामति'। अस्मिन्नर्थे णिचि शता। 'धातुरूपं च'। कृदन्ताण्णिचि धातुरूपं भजन्ते। अनेन 'आख्यानात्कृतस्तदाचष्टे' इति णिच्। 'कृल्लुप्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' इत्येतदुक्तम्। तेन कृष्णस्य कर्मत्वम्, वधभावनिवृत्त्या हन्तेर्णत्वमूपल च। तस्माल्लोट्। घातयतु। खड्गयितुमिति। 'कर्तृकरणाद्धात्वर्थे'।

धाम्नोचैर्लजयन्विमिश्रितजने रङ्गे निपात्याथ तं
द्राक्सङ्ग्रामयमाणशत्रजकिणस्तोम्ये पपातोरसि ॥ ६१ ॥

इह चित्रिते कृतचित्रलेखने महामञ्चे स्थितः श्रीकृष्णः टोके वष्कयति पश्यति दोष्णा स्वयं चित्रयन्नाश्चर्यं कुर्वन् उदंस्य उच्चैराहत्य तस्य हस्तात् खड्गं वटयन् पृथकुर्वन्नमुमग्रहात् । अथ तं विमिश्रितजने रङ्गे निपात्य तस्योरसि द्राक् पपात । धाम्नोचैर्लजयन् प्रकाशमानः । सङ्ग्रामयमाणशत्रजकिणस्तोम्ये सङ्ग्रामयमाणानां युद्धकर्तॄणां शत्रजकिणैः स्तोम्ये श्लाघनीये वक्षसि ॥—वष्कयतीति । १९१७ वष्क दर्शने । शता। चित्रितेति । १९१८ चित्र चित्रीकरणे । आलेख्यकरणं तत् । कर्मणि क्तः । चित्रयन् । 'कदाचिद्दर्शने' । अद्भुतदर्शने चार्थे चित्रधातोर्णिच् । क्षणिकदर्शने । अस्माच्छता। उदंस्य । १९१९ अंस समाघाते । विभाजने च द्रुमे । ल्यप् । वटयन् । १९२० वट विभाजने । वटीत्येके । वटेः शता । लजयन् । १९२१ लज प्रकाशने । लजीत्येके । वण्टिलज्ज्योरिदित्वेऽप्यत्र पाठादस्त्वकार्यं पुगादि स्यादेवेति माधवः । मिश्रितेति । १९२२ मिश्र संपर्के । कर्तरि क्तः । सङ्ग्रामयमाणेति । १९२३ सङ्ग्राम युद्धे । अयमात्मनेपदी । शानच् । स्तोम्ये । १९२४ स्तोम श्लाघायाम् । यत् ॥

यो ह्यच्छिद्रित एव वीर्यशतकृत्तस्मिन्पतत्यन्धय-
न्पिष्टाङ्गः स ममार दण्डितखलस्येशस्य पादाङ्कितः ।
कृष्णोऽप्यश्रुजलाङ्कितेऽतिसुखयत्यामुच्य पुष्पोत्करं
देवौघे हृतदुःखने रसयति व्याकर्पदेनं क्षितौ ॥ ६२ ॥

योऽच्छिद्रित एवाविद्धकर्ण एव तस्मात् पूर्वमेव पूतनावधादिवीर्यशतकृत् हि । तस्मिन् पतति पिष्टाङ्गोऽन्धयन् मोहं प्राप्तः स कंसो ममार । दण्डितखलस्य पीडितदुष्टजनस्य श्रीकृष्णस्य पादे अङ्कितो मुदितः । तदा च कृष्णोऽपि देवौघे अश्रुजलेन अङ्किते चिह्निते पुष्पोत्करमामुच्य अतिसुखयति भृशं सुखमनुभवति हृतदुःखने हृतदुःखानुभवे रसयति भगवद्व्यापारमास्वादयति सति च । एनं कंसं क्षितौ व्याकर्षत् । कंसद्विष्यानां निजभक्तानां यदूनां पीडानिवृत्त्यर्थमेतत् ॥—अच्छिद्रितेति । १९२५ छिद्र कर्णभेदने । कर्णेति पृथग्धातुरित्येके । [कर्मणि क्तः।] अन्धयन् । १९२६ अन्ध दृष्ट्युपघाते । शता । दण्डितेति । १९२७ दण्ड दण्डनिपातने । कर्मणि क्तः । अङ्कित इति । अङ्कितेति । १९२८ अङ्क पदे लक्षणे च । १९२९ अङ्ग च । द्वयोः कर्मणि क्तः । अतिसुखयति । १९३० सुख १९३१ दुःख तत्क्रियायाम् । तत्क्रिया तदनुभवः । सुखेः शता । दुःखनेति । दुःखेर्ल्युट् । रसयति । १९३२ रस आस्वादनस्नेहनयोः । शता ॥

नित्यं व्ययापितमलो हृदि रूपयंस्तं
प्रच्छेदितप्रकृतिरच्छादितस्वरूपम् ।

---

१. 'वल्क' इति धातुपाठे.

ब्रह्माविशत्सुकृतलाभित एष कंस-
स्तत्पादसंव्रणितमूर्तिरवर्ण्यभाग्यः ॥ ६३ ॥

सुकृतलाभितः पूर्वजन्मान्ते भगवदवलोकनजातेन सुकृतेन प्रेरित-एष कंसस्तं नित्यं हृदि रूपयन् तत्स्वरूपं हृदि स्थिरीकुर्वन् व्ययापितमलः क्षपितसर्वदोषः। तेनैव प्रच्छेदितप्रकृतिः प्रक्षीणमायाजनितवासनाक्लेशः सन्नच्छादितस्वरूपमनावृतानन्दात्मकं ब्रह्माविशदैक्यमनुभूतवान्। यतः तदापि तत्पादसंव्रणितमूर्तिर्भगवच्छ्रीपादपरिक्षुण्णशरीरः। अवर्ण्यभाग्य इतरजनदुष्करकथनभाग्यविशेषः ॥—व्ययापितेति। १९३३ व्यय वित्तसमुत्सर्गे। कर्मणि क्तः। रूपयन्। १९३४ रूप रूपक्रियायाम्। सा च रूपस्य करणं दर्शनं वा। हेतौ शता। प्रच्छेदितेति। १९३५ छेद द्वैधीकरणे। अच्छदितेति। १९३६ छद अपवारणे इत्यप्येके। लाभितेति। १९३७ लाभ प्रेरणे। संव्रणितेति। १९३८ व्रण गात्रविचूर्णने। चतुर्णां कर्मणि क्तः। अवर्ण्येति। १९३९ वर्ण वर्णक्रियाविस्तारगुणवचनेषु। यत् ॥

प्रपर्णितदिशं रुचा क्षपितभूभृतोऽस्यानुजाः
सदोनिवसितं हरिं ययुरतूत्थिताज्ञाः क्रुधा।
अमूनधिकमोजयन्नखिलरङ्गमन्दोलय-
न्बलः स्फुटितदोर्बलानसमवधीरयज्जघ्निवान् ॥ ६४ ॥

अस्य कंसस्यानुजाः कङ्कन्यग्रोधादयः सदोनिवसितं सदसि स्थितं हरिं क्रुधा अतूत्थिताज्ञा अनादृतवर्मावरणा आययुः। रुचा निजदेहकान्त्या प्रपर्णिता हरितीकृता दिशो येन तं हरिं क्षपिता बहुकृत्वो हता भूभृतो नृपा यैस्ते। बलोऽमून् समवधीरयन् अनादरं कुर्वन् जघ्निवान् हतवान्। कथंभूतः। अधिकमोजयन् बाहुबलं प्रकाशयन्। अखिलरङ्गं रङ्गस्थान् अखिलजनान् अन्दोलयन् क्षोभयन्। अधीरान् कुर्वन्नित्यर्थः। स्फुटितदोर्बलान् विशीर्णबाहुबलान् ॥—प्रपर्णितेति। 'बहुलमेतन्निदर्शनम्'। एतच्चुरादावदन्तधातुप्रदर्शनं बहुलं ज्ञेयम्। तेनैतान्यपि सिद्धानीत्याह। १९४० पर्ण हरितभावे। अस्य हेतुमण्णिजन्तात् कर्मणि क्तः। क्षपितेति। १९४२ क्षप प्रेरणे। नाशनार्थोऽप्ययम्। अस्मात्कर्मणि क्तः। निवसितेति। १९४३ वस निवासे। कर्तरि क्तः। अतूत्थितेति। १९४४ तुत्थ आवरणे। कर्मणि क्तः। ओजयन्। अन्दोलयन्। शता। स्फुटितेति। कर्तरि क्तः। समवधीरयन्। शता। एते बहुलत्वात्सिद्धाः। ओजेर्बलदीप्ती। अन्दोलेश्चलनम्। स्फुटेः प्रकाशनविशरणे। अवधीरेरवज्ञा इति द्वुमे। एवं गन्धयतीति हिंसार्थः। अर्थयतीत्यतद् तेन साध्य इति हरः। अपानयतीत्यपान इत्यादौ आनयतिर्धात्वन्तरमिति योगशास्त्रे ॥

अथ स्ववर्ग्यभूतेन केनचिदचिमानुषकर्मणि कृते गोपकुमाराणां प्रहर्षातिशयं वर्णयति—

हस्तयमानाः पादयमाना गोपकुमारा नृत्तमकुर्वन्।
श्वेतयमानाश्चाश्वयमानास्तत्पुरमायन्केशवपक्ष्याः ॥ ६५ ॥

---

१. अत्र '१९४१ विष्य दर्शने' नोदाहृतः.

गोपकुमाराः हस्तयमानाः पादयमानाश्च हस्तं पादं हर्षातिशयेन विक्षिपन्तः सन्तः नृत्तं अकुर्वन् । केशवपक्ष्याः कंसभयात् देशान्तरं गता गताः(?)केचित् केचित्(?) श्वेतयमानाः श्वेताश्वेन चरन्तः । अन्ये अश्वयमानाः अश्वतरेण गच्छन्तश्च तत् पुरं मधुरापुरं आयन् आगतवन्तः ॥—हस्तयमानाः । पादयमाना इति । 'णिङ्ङ्गान्निरसने' इति द्वयोर्णिङ् । श्वेतयमानाः । अश्वयमाना इति । 'श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च' इति श्वेताश्वाश्वतरशब्दाभ्यां णिङ् । अश्वशब्दतरशब्दयोर्लोपश्च ॥

खला विपुत्कुकुरवद्भयार्ता ययुश्च संभाण्डयमानभृत्याः ।
भयेन संचीवरिताः स्थिता ये ते तु प्रविष्टा नगरं प्रहृष्टाः ॥ ६६ ॥

विपुच्छाः कुकुरा इव अधःकृतपुच्छाः श्वान इव भयार्ताः खलाः सभाण्डयमानभृत्याः समाचयमानाः उद्धार्य वस्तूनि एकीकृत्य बध्नन्तो भृत्याः येषां ते तथाभूताः सन्तो ययुः । ये सज्जना भयेन संचीवरिताश्चीवरमर्जितवन्तः परिहितवन्तो वा । पूर्वं स्थितास्ते तु प्रहृष्टा नगरं मधुरापुरं प्रविष्टाः ॥—विपुदिति । 'पुच्छादिषु धात्वर्थे' इत्येव सिद्धम् । 'पुच्छभाण्डचीवराण्णिङ्' इति न वक्तव्यम् । 'प्रातिपदिकाद्धात्वर्थे' इत्येव णिच्सिद्धेः बहुलोक्तयात्मनेपदविद्धेश्च । तत्र 'पुच्छादुदसने पर्यसने व्यसने वा' इति णिङि ततः 'क्विप् च' इति क्विप् । पुतं छादयतीति व्युत्पत्त्या पुच्छशब्दस्य संयोगान्तलोपे तकारशेषाद्विपुदिति स्यात् । सभाण्डयमानेति । 'भाण्डात्समाचयने' इति णिङि शानच् । सचीवरितेति । 'चीवरादार्जने परिधाने वा' इति णिङि कर्तरि क्तः ॥

इति धातुकाव्यव्याख्याने तृतीयः सर्गः ।

निहत्य कंसं मधुरानगर्यां निवेश्य राजानमथोग्रसेनम् ।
संप्रेष्य नन्दं विजहार कृष्णस्तत्रैव रामेण सहात्मगेहे ॥ ६७ ॥

क्वचित्सुयोज्या धात्वर्थाः क्वाप्ययोज्या उणादिषु ।
कचित्कथंचियोज्याः स्युर्वक्ष्यन्ते तत्र तत्र ते ॥ ६८ ॥

हलन्त्यमुपदेशेऽजित्यादिर्ञिटुडवस्तथा ।
एभिर्धात्वनुबन्धानां लोपे स्यात्प्रत्ययः पुनः ॥ ६९ ॥

हलन्त्यमिति लुप्येते स्वरार्थावन्तिमौ हलौ ।
तरौ लचौ नपौ चेति स्वरार्थाः प्रत्ययेषु षट् ॥ ७० ॥

आरूढो गरुडं भुजान्ततरलश्रीवन्यमालावलिः
क्ष्मामान्दोलितचामरान्तरगतः प्रोद्गीयमानोऽमरैः ।
चञ्चन्मीनसुपर्णकुण्डलधरो धाराधरश्यामलः
काले मे चरमे ममाक्षिपदवीमायातु नारायणः ॥ ७१ ॥

इति धातुकाव्यं समाप्तम् ।

# KÂVYAMÂLÂ.

A collection of old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhâṇas, Prahasanas, Chhandas, Alankâras &c.

## PART XI.

EDITED BY

PAṆḌIT S'IVADATTA

AND

KÂS'INÂTH PÂṆḌURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGAR" PRESS.

BOMBAY.

1895.

*Price 1 Rupee.*

॥ श्रीः ॥

# काव्यमाला।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः।

---

## एकादशो गुच्छकः।

---

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितः।

---

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः।

---

१८९५

---



---

मूल्यमेको रूप्यकः।

॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

---

एकादशो गुच्छकः ।

---

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितः ।

---

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

---

१८९५

---



---

मूल्यमेको रूप्यकः ।

# अनुक्रमणिका ।

पृष्ठं

१. श्रीदुर्वासोविरचितं त्रिपुरमहिमस्तोत्रम्, नित्यानन्द-
विरचितया व्याख्यया समन्वितम् .... .... .... १
२. खड्गशतकम्, सटीकम् .... .... .... .... ३२
३. श्रीदक्षिणामूर्तिविरचिता लोकोक्तिमुक्तावली .... .... ६१
४. श्रीनीलकण्ठदीक्षितप्रणीत आनन्दसागरस्तवः .... .... ७६
५. श्रीलोलिम्बराजकृतं हरिविलासम् .... .... .... ९४
६. गोस्वामिश्रीयुतजनार्दनभट्टप्रणीतं शृङ्गारशतकम् ....१३३
७. दैवतश्रीसूर्यकविविरचितं रामकृष्णविलोमकाव्यम्,
स्वकृतटीकया समेतम् .... .... .... ....१४७

# काव्यमाला।

## श्रीदुर्वासोविरचितं

# त्रिपुरामहिमस्तोत्रम्।

निलानन्दविरचितया व्याख्यया समन्वितम्।

श्रीश्रीविद्यानन्दनाथाङ्घ्रियुग्मं स्मृत्वा स्वान्तध्वान्तभानुप्रभावम्।
सर्वोत्कृष्टं क्रोधभट्टारकोक्तं स्तोत्रं श्रीमत्सुन्दरीशर्मिमहिम्नः॥
पूर्वै कैश्चिद्व्याकृतं नेति भीतो गूढार्थत्वादल्पबुद्धिस्तथापि।
शिष्टैरिष्टैरीरितोऽहं गुरुत्वया नित्यानन्दः सादरं व्याकरोमि॥
न शब्दशास्त्रव्युत्पत्तिर्न न्यायनिपुणा मतिः।
केवलं गुरुपादाब्जस्मृतिरत्र गतिप्रदा॥
त्रैलोक्यवन्द्यं गिरिजाभिनन्द्यं विज्ञानगम्यं वरदं वरेण्यम्।
विघ्नौघभङ्गाय च कार्यसिद्ध्यै विघ्नेश्वरं विश्वगुरुं नमामि॥
कुलारविन्दादकुलारविन्दं गत्वामृतौघैरनुषिच्यमानाम्।
रसारविन्दानि निजारविन्दे पुनः प्रयान्तीं प्रभजे परेशीम्॥

इह खलु सकलागमाचार्यचक्रवर्ती साक्षाच्छिव एवानसूयागर्भसंभूतः क्रोधभट्टारकाख्यदुर्वासा महामुनिः श्रीमहात्रिपुरसुन्दर्याः सानुभावं महिम्नःस्तोत्रं चिकीर्षुरादौ कूटत्रयदेवताभावनारूपं मङ्गलमाचरति—

श्रीमातस्त्रिपुरे परात्परतरे देवि त्रिलोकीमहा-
सौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम्।
उद्यद्भानुसहस्रनूतनजपापुष्पप्रभं ते वपुः
स्वान्ते मे स्फुरतु त्रिलोकनिलयं ज्योतिर्मयं वाङ्मयम्॥ १॥

---

१. अयं च दुर्वासा अत्रिमुनेरनसूयागर्भे संजातो दत्तात्रेयलघोदरः पुराणप्रसिद्ध एवेति टीकाकृत्. अनेन च कृतेषु ग्रन्थेष्वस्मदुपलब्धा ग्रन्थास्त्वेते—श्रीत्रिपुरामहिमस्तोत्रम्, मानसपूजनार्याद्विशती, कल्पसूत्रं च. २. अस्य ग्रन्थस्य क-संज्ञकपुस्तकं चातुर्वेदिकगौरीरामचन्द्रतनूजनाथूलालशर्मभिः, ख-संज्ञकपुस्तकं जयपुरराजगुरुश्रीलक्ष्मीदत्ततनूजश्रीदत्तशर्मभिर्दत्तमिति तेषामुपकृताः स्मः. ३. 'त्रिकोणनिलयं' ख.

हे श्रीमातः, ते वपुर्मे स्वान्ते स्फुरतु । कथंभूतं वपुः । उद्यद्भानुसहस्रनूतनजपापुष्पप्रभम् । पुनः कीदृशम् । त्रिलोकीमहासौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम्, त्रिलोकानिलयम्, ज्योतिर्मयम्, वाङ्मयं चेत्यन्वयः । हे श्रीमातर्हे श्रीजननि । हे त्रिपुरे त्रितयमात्ररूपे । परात्परतरे सूक्ष्मात्सूक्ष्मे । देवि दिव्यक्रीडारसपरे । त्रिलोकीमहासौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम् त्रिलोकी त्रयाणां लोकानां समाहारस्तस्या महासौन्दर्यमेवार्णवस्तन्मन्थनोद्भवायाः सुधायाः प्राचुर्यस्य यो वर्णोऽत्युज्ज्वलत्वं तद्वत्, इत्यनेन वाग्भवकूटदेवताभावना प्रतिपादिता । उद्यद्भानुसहस्रनूतनजपापुष्पप्रभम् उद्यद्भानवो बालार्कास्तेषां सहस्राणि नूतनजपापुष्पाणि च अनुदितसूर्यकालीनो जपापुष्पाणि च तेषां प्रभेव प्रभा यस्य, इत्यनेन कामराजकूटदेवताभावना प्रतिपादिती । ते श्रीमहात्रिपुरसुन्दर्याः । वपुः स्वरूपम् । स्वान्ते हृदये । मे उपासकस्य । स्फुरतु भावनागोचरं भवतु । त्रिलोकनिलयम् त्रिलोकं नितरां लीयते यस्मिन्, यच्छायायां मग्नं भवति । अथवा त्रिलोकस्य निलयमुत्पत्तिस्थानं कामकलारूपम् । वामकेश्वरतन्त्रादौ कामकलाक्षरादेव लक्ष्यादेरुक्तत्वात् । एतद्विवरणं कामराजकूटप्रभाववर्णने षष्ठश्लोके वक्ष्यति च । ज्योतिर्मयं ज्योतींषि सूर्याग्निसोमादीनि तन्मयम् । वाङ्मयं परापश्यन्तीमध्यमावैखरीरूपम् । तृतीयकूटस्य सौभाग्यप्रदत्वाज्ज्योतिर्मयत्वं सारस्वतत्वाद्वाङ्मयत्वं च ज्योतिषः सामयजुःशुक्लभास्वरत्वात् । अनेन तृतीयकूटभावना प्रतिपादिता । एव महात्रिपुरसुन्दरीरूपस्य त्रिविधभावनयावश्यं सौभाग्यं वाक्प्रदत्वं प्रतिपादितम् । अतः पर विद्योद्धारपक्षे व्याख्यानम् । तत्र श्री श्रीबीजम्, मा माया बीजम्, अतोऽतः परं त्रिपुरा त्रिबीजवती । बालाद्वयं तु संप्रदायबलात्, अन्तर्मुखैरेव ज्ञेयम् । ई प्रणवः । एतद्विवरणमष्टमश्लोकव्याख्याने स्फुटीभविष्यति । परात् मायाबीजात्परतरा लक्ष्मी श्रीबीजं देवीति सबुद्धिः । त्रिलोकी त्रिकूटा तस्यास्त्रितयमात्ररूपतया कूटत्रयेण लोकत्रयव्यापकता प्रसिद्धैव सौन्दर्यपदेन बालायास्तृतीयं कूटमुट्टङ्कितम् । अर्णवोद्भवसुधाप्राचुर्यवर्णोज्ज्वलमिति पदेन बालाया वाग्भवं सूचितं तस्यामृतमयत्वेन वाक्प्रदत्वात् । उद्यदादिपदेन बालायाः कामकूटत्वं संभावितं तस्य सिन्दूरवर्णत्वेन वश्यप्रदत्वात् । ते वपुरित्यनेन मायाबीजं स्वान्ते स्वस्या विद्याया अन्ते मे इत्यत्र माशब्देन श्रीबीजम् ईशब्दः कामकलावाचकः । एवंरूपं महाविद्याधीशषोडशाक्षरीस्वरूपं साधकस्य हृदये स्फुरत्विति । इदं सर्वथैव गोप्यमपि मया सांकेतिकशब्दैः शिष्टानां साधकानां परितोषार्थं प्रकटीकृतम् ॥

इदानीं मूलाधारचक्रस्थितां सकलविद्यामन्त्रचक्रकारणभूतां मूलाधारादिचक्रविभेदेन क्रमेण सहस्रदलकमलकर्णिकान्तर्महामध्यत्रिकोणसिंहासननिविष्टां चिद्रूपिणीं प्रस्तौति—

आदिक्षान्तसमस्तवर्णसुमणिप्रोते वितानप्रभे
ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्षोन्नते ।
ब्रह्माण्डाब्जमहासने जननि ते मूर्तिं भजे चिन्मयीं
सौषुम्णायतपीतपङ्कजमहामध्यत्रिकोणस्थिताम् ॥ २ ॥

हे जननि, सौषुम्णायतपीतपङ्कजमहामध्यत्रिकोणस्थितां ते मूर्तिं ब्रह्माण्डाब्जमहासनेऽहं भजे इत्यन्वयः । आदिक्षान्तसमस्तवर्णसुमणिप्रोते आद्योऽकारादयः, क्षान्ताः क्षकारान्ताः समस्ताः पञ्चाशद्वर्णाः स्वरव्यञ्जनात्मकास्त एव सुमणयो मुक्ताफलप्रायास्ते प्रोता गुम्फिता यस्मिन् । वितानप्रभे वितानवत्प्रभा शोभा यस्य, अत्युज्ज्वलत्वादतिविस्तृतत्वाच । ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्षोन्नते ब्रह्मादिप्रतिमाभिरभिकीलिता मण्डिताः षडाधाराणां षोडशदलद्विदलान्त······कक्षाः कर्णिकारूपमध्यप्रदेशास्तत्रोन्नते । ब्रह्माण्डाब्जमहासने ब्रह्माण्डं ब्रह्मरन्ध्रस्थानं तत्राब्जं नाम सहस्रदलं कमलं तत्र महासनं तदन्तर्गतकर्णिकामध्यवर्ति महात्रिकोणं तदेव महासनं तस्मिन् । मूर्तिं कुण्डलिनीरूपां चिन्मयीं ज्ञानात्मिकां सौषुम्णायतपीतपङ्कजमहामध्यत्रिकोणस्थितां सौषुम्णं सुषुम्णासंबन्धि आयतं विस्तृतं पीतं हरिद्राभं पङ्कजं कमलं तस्मिन्महामध्यं कर्णिकास्थानं तत्र त्रिकोणमकथादिवर्णमयत्रिरेखं तत्र स्थितां तत्रत्यबिन्दुरूपस्वयंभूलिङ्गं परिवेष्ट्य सार्धत्रिवलयेन भुजगीमिव सुप्तामिति । समस्तवर्णसुमणिप्रोत इति कोऽर्थः—ब्रह्माण्डाब्जमहासन नाम सहस्रदलं कमलं तस्य नालरूपा सुषुम्णानाडी मूलाधारचतुर्दलकमलान्तर्गतं त्रिकोणं कन्दरूपं षडाधारकमलपत्रेषु ते पञ्चाशद्वर्णाः स्थूलवर्णकारणभूता देहे प्राणप्रवेशावधि प्राणनिर्गमनकालपर्यन्तं सर्वदैव मणिवत्कीलितप्रायास्तिष्ठन्तीत्यर्थः । सांप्रदायिकैर्यदान्तर्मालया जपः क्रियते तदा सुषुम्णां सूत्रस्थाने परिभाव्यैकपञ्चाशन्मातृकावर्णान्मणीन्विभाव्य मूलाधारादिब्रह्मरन्ध्रपर्यन्तमकारादि क्षकारान्तं मनसा प्रजप्य पुनः 'क्षकारमारभ्य ब्रह्मरन्ध्रान्मूलाधारपर्यन्तं च प्रजप्य शतसंख्या समाप्यते, [ते]न विद्या वीर्यवती भवतीति । इदं परमरहस्यं गुह्याद्गुह्यं शिष्टानां साधकानां परितोषार्थमत्र लिखितं गुरुभिः क्षन्तव्यम् । यथाश्रुतोऽर्थस्तु मुनीनां योगीश्वराणां संभवत्येव । यदा योगाग्निना परिप्लुष्टानना कुण्डलिनी शक्तिर्मूलाधारादधोगतत्रिकोणादुत्थाय षडाधारभेदेन क्रमेण सुषुम्णारन्ध्रद्वारा सहस्रदलकमलं प्राप्य परिभ्रमति तदा तदन्तर्गतचिच्चन्द्रमण्डलप्लावितामृतबिन्दुरूपमातृकाक्षराणि सुषुम्णाख्यब्रह्मसूत्रद्वारा तत्तदाधारगततत्तद्देवताभिषेकपूर्वकमूलाधारत्रिकोणपर्यन्तं निरन्तरं परिगलन्ती तस्मिन्काले सहस्रदलकमलरूपवितानमध्यगतसुषुम्णाब्रह्मसूत्रे मुक्तामणिप्रोतस्वरूपता भातीति । षडाधारवर्णनं तत्तच्चक्रे चित्तनिवेशनफलं चोक्तं नागभट्टैः—'अथाधारषट्करहस्यान्यत्र वक्ष्ये सुषुम्णान्तरस्थानि संक्षेपतोऽहम्' इत्यादि, 'पुनरुत्थापनमप्ययोमृतस्य' इत्यन्तं त्रिपुरासारे पञ्चमपटलस्यादितो द्रष्टव्यमिति ॥

अतः परं सकलशब्दजालप्रकाशार्कसंकेतसारविद्यादिभूतं केवलं द्वादशस्वररूपं वाग्भवमभिवन्दनपूर्वकं प्रस्तौति—

वन्दे वाग्भवमैन्दवात्मसदृशं वेदादिविद्यागिरो<br>
भाषा देशसमुद्भवाः पशुगतारछन्दांसि सप्त स्वरान् ।<br>
तालान्पञ्च महाध्वनीन्प्रकटयत्यात्मप्रसारेण य-<br>
स्तद्बीजं पदवाक्यमानजनकं श्रीमातृके ते परम् ॥ ३ ॥

हे श्रीमातृके, तं तद्वाग्भवं बीजमहं वन्दे । कथंभूतम् । ऐन्दवात्मसदृशम् । पुनः कथंभूतं तत् । यदात्मप्रसारेणेदं सर्वं शब्दजालं प्रकटयति । पुनः कीदृशम् । पदवाक्यमानजनकम् । इत्यन्वयः । वन्दे अभिवादयामि । वाग्भवमृग्यजुःसाम्नामाद्यक्षरत्रयसमुदायरूपम् । ऐन्दवात्मसदृशम् इन्दोरिदमैन्दवं चन्द्रमण्डलं तस्यात्मा अमृतं तत्सदृशम्, वाग्भवस्याप्यमृतप्रायाक्षरत्वाविशेषात् । वेदादिविद्यागिरो वेदस्मृतिशास्त्रपुराणागमादीनां शब्दपारावाररूपाः । भाषाः संस्कृतप्राकृतपैशाचिकाः । देशसमुद्भवास्तत्तद्देशगतमनुष्याणां कवित्वव्यवहारक्षमाः । पशुगताः पशुपक्षिव्यवहारयोग्याः । छन्दांसि अनुष्टुबादीनि । सप्त स्वरान् निषादादीन् । तालान् ध्रुवादीन् । पञ्च महाध्वनीन् भेर्यादीन् । प्रकटयति व्यक्तीकरोति । आत्मप्रसारेण आत्मनोऽमृतस्य प्रसारः प्रस्रवणं तेन । यत् यस्मात् । सर्वं शब्दजालं प्रसरति । तत् तस्मात् । बीजं बीजप्रायम् । पदवाक्यमानजनकं पदमक्षरसमुदायरूपम्, वाक्यं पदसमुदायरूपम्, मानानि प्रत्यक्षानुमानोपमानशब्दादीनि, तेषां जनकं प्रादुर्भावकारकम् । श्रीमातृके सकलशब्दजालमातृभूते । पञ्चाशद्वर्णरूपायाः परमुत्कृष्टम् ॥

पूर्वं संकेतसारविद्यादिमं वाग्भवं प्रणम्येदानीं चतुर्विधपाण्डित्यमहाकाव्यरचनसामर्थ्यप्रदं बालाविद्यादिमं वाग्भवं प्रस्तौति—

त्रैलोक्यस्फुटमन्त्रतन्त्रमहिमां नाप्नोति शश्वद्विना
यद्बीजं व्यवहारजालमखिलं नास्त्येव मातस्तव ।
तज्जाप्यस्मरणप्रसक्तिसुमतिः सर्वज्ञतां प्राप्य कः
शब्दब्रह्मनिवासभूतवदनो नेन्द्रादिभिः स्पर्धते ॥ ४ ॥

हे मातः, तव तद्वाग्भवबीजं विना कोऽपि त्रैलोक्यस्फुटमन्त्रतन्त्रमहिमां शश्वन्नाप्नोति । किंच तव तद्बीजं विना लोकेऽखिलं व्यवहारजालं नास्त्येव । अन्यच्च तज्जाप्यस्मरणप्रसक्तिसुमतिः सन् सर्वज्ञतां प्राप्येन्द्रादिभिः सह को न स्पर्धते । अपि तु स्पर्धत(त ए)वेत्यन्वयः । त्रैलोक्यस्फुटमन्त्रतन्त्रमहिमां त्रैलोक्ये स्वर्गमृत्युपातालेषु स्फुटाः(टां) सुरासुरमनुष्यमनोरञ्जनयोग्याः(ग्या) मन्त्राणामुपरिष्टादुपदिष्टानाम्, तन्त्राणां पठितानाम्, महिमां सामर्थ्यम् । मन्त्राणां सामर्थ्यं शापानुग्रहकारिकम् । तन्त्रसामर्थ्यं व्याख्यातत्वम् । नाप्नोति कश्चिदपि नावगच्छतीत्यर्थः । शश्वन्निरन्तरम् । तद्बीजं विना वाग्भवबीजसाधनमन्तरेण । व्यवहारजालं तुलामानोपदेशनदानोपादानक्रयविक्रयशुद्धाशुद्धादिप्रकारम् । अखिलं सांसारिकपारमार्थिकम् । (तद्बीजं विना) । नास्त्येव न संभवत्येव । एवकारोऽप्यन्ययोगव्यवच्छेदार्थकः । मातर्जननि, तव वागीश्वर्याः । तज्जाप्यस्मरणप्रसक्तिसुमतिस्तस्य वाग्भवस्य जाप्यं विधियुक्तप्रकारेण स्मरणं यदा तदा शयनोपवेशनभ्रमणकालेऽपि मानसिकमेव तत्र प्रसक्तिस्तत्परता तया सुमतिः सर्वशास्त्राभिनिविष्टः । सर्वज्ञतां वागीश्वरताम् ।

१. 'प्रसक्त' ख. २. 'तेन्द्रा' ख.

प्राप्य लब्ध्वा । कः यःकश्चित् । शब्दब्रह्मनिवासभूतवदनः शब्दब्रह्म सकलप्राणिगतचैतन्यभूता चिच्छक्तिः । तस्या निवासभूत मन्दिरप्रायं वदनं यस्य । नकारोऽत्राप्रसक्तिनिरासकः । इन्द्रादिभिः सुरेशमुख्यैः सह स्पर्धते ईर्ष्यां कर्तुं क्षमते । 'अकारो वै सर्ववाक्' इति श्रुतेः ॥

पूर्वस्मिञ्श्लोके संपूर्णं वाग्भवं स्तुत्वेदानीं वाग्भवकूटोपरितनमात्रां कुण्डलिनीं प्रस्तौति—

मात्रा यात्र विराजतेऽतिविशदा तामष्टधा मातृकां
शक्तिं कुण्डलिनीं चतुर्विधतनुं यस्तत्त्वविन्मन्यते ।
सोऽविद्याखिलजन्मकर्मदुरितारण्यं प्रबोधाग्निना
भस्मीकृत्य विकल्पजालमखिलं मातः पदं तद्व्रजेत् ॥ ५ ॥

हे मातर्, अत्र या मात्रा विराजते तां कुण्डलिनीं शक्तिमष्टविधमातृकां च यो मन्यते, स तत्पदं व्रजेदित्यन्वयः । मात्रा या सामवेदाद्यक्षररूपा बीजाङ्कुरप्राया विश्वप्रपञ्चस्य मातृभूता । अत्र वाग्भवे । विराजते विद्योतते । अतिविशदा विस्पष्टा । तां मात्राम् । अष्टधा वशिन्यादिवर्गाष्टकरूपेण । मातृकामेकपञ्चाशद्वर्णमयीम् । शक्तिं सृष्टिस्थितिसंहृतिकर्मसमर्थाम् । कुण्डलिनीं सर्वप्राणिमूलाधारवासिनीम् । चतुर्विधतनुमग्निसूर्यसोमसमष्टिरूपेण, अग्निकुण्डलिनी मूलाधारे, सूर्यकुण्डलिनी हृदये, सोमकुण्डलिनी भ्रूमध्ये, समष्टिकुण्डलिनी मूलाधाराधोगतवाग्भवाकारत्रिकोणे । यः सांप्रदायिकः । तत्त्ववित् आराध्यमुखादवगाशेषपरमार्थः । मन्यते जानाति । भावयतीति यावत् । स एवं मननपरायणः । अविद्याखिलजन्मकर्मदुरितारण्यम् अविद्या सांसारिकी बुद्धिः, अखिलजन्मानि भावीनि द्विपदचतुष्पदोरगादीनि, अखिलकर्माणि संचितारब्धानि, अखिलदुरितानि ज्ञाताज्ञातकृतानि, तेषामरण्यं भयानकत्वात् । प्रबोधाग्निना विज्ञानानलेन भस्मीकृत्य निर्दग्ध्वा(ह्य) । विकल्पजालं कल्पनानानावासनाः । अखिलं सांसारिकपारमार्थिकम् । मातर्जननि । पदं स्थानम् । तदनिर्वचनीयम् । सर्व संमतम् । उक्तं च नागभट्टैः—'एतस्याः परतः परात् परतरं निर्वाणशक्तेः पदं शैवं शाश्वतमप्रमेयमचलं नित्योदितं निर्मलम् । तद्विष्णोः पदमित्युशन्ति सुधियः केचित्पदं ब्रह्मणः केचिद्धसपदं निरञ्जनपदं केचिन्निरालम्बनम् ॥' इति । व्रजेत् प्राप्नुयात् ॥

इदानीं संकेतसारविद्याया द्वितीयाक्षरं कामबीजत्वेन प्रस्तौति—

तत्ते मध्यमबीजमम्ब कलयाम्यादित्यवर्णं क्रिया-
ज्ञानेच्छादिमनन्तशक्तिविभवव्यक्तिं व्यनक्ति स्फुटम् ।
उत्पत्तिस्थितिकल्पकल्पिततनु स्वात्मप्रसारेण य-
त्काम्यं ब्रह्महरीश्वरादिविबुधैः कामं क्रियायोजितैः ॥ ६ ॥

१. 'यत्ते' ख.

हे अम्ब, तत्ते मध्यमबीजमादित्यवर्णं क्रियाज्ञानेच्छादिमुत्पत्तिस्थितिकल्पकल्पिततनु ब्रह्महरीश्वरादिविबुधैः काम्यं चाहं कलयामि। कथंभूतं तत्। यत्स्फुटमनन्तशक्तिविभवव्यक्तिं व्यनक्तीत्यन्वयः। तत् तस्मात्। ते संकेतसारायाः। मध्यमबीजं केवलेकाररूपम्। अम्ब जननि, कलयामि जानामि। आदित्यवर्णं बालार्कनिभम्। क्रियाज्ञानेच्छादिम् इच्छाशक्तिज्ञानशक्तिक्रियाशक्तीनां निदानभूतम्। एतासां कामकलाबिन्दुत्रयाविर्भूतत्वात्। अनन्तशक्तिविभवव्यक्तिम् अनन्तानां शक्तीनां विभवः सामर्थ्यं तस्य व्यक्तिर्ज्ञानम्। व्यनक्ति प्रकटीकरोति। स्फुटं प्रत्यक्षतया। उत्पत्तिस्थितिकल्पकल्पिततनु उत्पत्तिः सृष्टिः, स्थितिः पालनम्, कल्पः संहारः, तेषु कल्पिताः प्रादुर्भाविता वामाज्येष्ठारौद्रीप्रधानानि ब्रह्मविष्णुरुद्राणां तनवो येन। स्वात्मप्रसारेण स्वस्य कामकलाक्षरस्य, आत्मा धामत्रयरूपं बिन्दुत्रयम्, तस्य प्रसारः स्फुरणम्। इदमुपलक्षणम्—कामकलाक्षरस्य त्रितयमात्रकारणत्वेन इच्छा ज्ञानक्रिया वामाज्येष्ठारौद्रीप्रधाना ब्रह्मविष्णुरुद्राः सूर्यसोमाग्नयः अकारोकारमकाराः। लोकत्रयं पीठत्रयं लिङ्गत्रयं कालत्रयं वेदत्रयं वह्नित्रयं स्वरत्रयं च सर्वमुत्पन्नमित्यष्टादशश्लोके वक्ष्यति। यत् यस्मात्कारणात्। काम्यमुपास्यम्। ब्रह्महरीश्वरादिविबुधैः आदिशब्देन इन्द्रचन्द्रकुबेरसूर्याः। अन्यैश्च। कामं निश्चितम्। क्रियायोजितैः क्रियाः सृष्टिस्थितिसंहृतिरूपाः, तासु योजितैर्नियमितैः। एतद्विवरणं वामकेश्वरतन्त्रे विस्तरेणोक्तम्। मयात्र ग्रन्थगौरवभयान्न लिख्यते। अथवा कलयामि ककारलकारयुक्तं करोमि। तेन बालाया मध्यमबीजं कामराजाख्यं भवति॥

अत एव तत्कामराजबीजसामर्थ्यवर्णनपुरःसरं तमेव प्रणमति—

कामान्कारणतां गतानगणितान्कार्यैरनेकैर्मही-
मुख्यैः सर्वमनोगतानधिगतान्मानैरनेकैः स्फुटम्।
कामक्रोधसुलोभमोहमदमात्सर्यारिषट्कं च य-
द्बीजं [1]भ्राजयति प्रणौमि तदहं ते साधु कामेश्वरि॥ ७॥

हे कामेश्वरि, तव तद्बीजमहं प्रणौमि। तत् किंभूतम्। यत् कारणतां गतान् कामान् महीमुख्यैः कार्यैः सहाधिगतान्कामान्मानैः सह कामाद्यरिषट्कं च भ्राजयतीत्यन्वयः। कामान् ब्रह्मादिकानां सामर्थ्यरूपान्। कारणतां गतान् तत्तत्कार्यानुकूलान्। अगणितान् असंख्यातान्। कार्यैर्मनोगतैः। अनेकैर्नानाविधैः। महीमुख्यैः पृथिव्यादिकैः। सर्वमनोगतान्सर्वप्राणिचित्तस्थान्। अधिगताञ्ज्ञातान्। मानैः प्रत्यक्षादिभिः। अनेकैर्वेदशास्त्रपुराणोक्तैः। स्फुटं प्रव्यक्तम्। कामक्रोधसुलोभमोहमदमात्सर्यारिषट्कं ज्ञानिनामावरकत्वादरित्वमेतेषाम्। सांसारिकाणां स्थितिकारित्वम्। चकारः समुच्चये। यत् ककारलकारसहितं बीजं कामकूटम्। भ्राजयति पोषयति। प्रणौमि प्रकर्षेण नमस्करोमि। अहं स्तोत्रकर्ता ते बालास्वरूपायाः। साधु सर्वोत्कृष्टम्। कामेश्वरि कामकूटाधिदेवते॥

---

1. 'राजति संप्रणौमि तदहं ते कामराजाभिधम्' ख.

इदानीं सिंहावलोकनन्यायेन पुनरपि संकेतसारविद्यायाः कामकलारूपमध्यमबीजस्याखिलकामपूरकत्वेन विशिष्टज्ञानप्रकाशकत्वं प्रणवत्वं च प्रतिपादयति—

यद्भक्ताखिलकामपूरणचणस्वात्मप्रभावं महा-
जाड्यध्वान्तनिवारणैकतरणिज्योतिःप्रबोधप्रदम् ।
यद्वेदेषु च गीयते श्रुतिमुखं मात्रात्रयेणोमिति
श्रीविद्ये तव सर्वराजवशकृत्तत्कामराजं भजे ॥ ८ ॥

हे श्रीविद्ये, तव तत्कामराजमहं भजे । (तत् तस्मात्) यद्यस्मात् भक्ताखिलकामपूरणचणस्वात्मप्रभावम् । कथंभूतम् । जाड्यध्वान्तनिवारणैकतरणिज्योतिः । पुनः कथंभूतम् । प्रबोधप्रदम् । यद्वेदेषु मात्रात्रयेण 'ओम्' इति गीयते । अत एव श्रुतिमुखम् । पुनः कथंभूतम् । सर्वराजवशकृदित्यन्वयः । यत् यस्मात् । कामराजं द्वितीयम् । भक्ताखिलकामपूरणचणस्वात्मप्रभावं भक्तानामुपासकानाम्, अखिलाः सर्वे, कामा मनोरथाः, तेषां पूरणं संपादनम्, तत्र चणो दक्षः, स्वात्मप्रभावः स्वस्य कामकलाबीजस्य आत्मा बिन्दुत्रयम्, तस्य प्रभावः प्रकारः पूर्वोक्तवामादिब्रह्मादिदेवतात्रयं विद्यते यस्मिन् । महाजाड्यध्वान्तनिवारणैकतरणिज्योतिः महाजाड्यमज्ञानम्, तदेव ध्वान्तमन्धकारः, तस्य निवारणं विनाशनम्, तत्रैकमद्वितीयम्, तरणिज्योतिरिव तरणिः सूर्यः, तस्य ज्योतिःप्रकाशस्तद्वत् । प्रबोधप्रदं प्रकर्षेण बोधस्तत्त्वज्ञानं प्रददाति प्रकर्षेण निश्चयेनोत्पादयतीति । यत् यस्मात् । तुरीयस्वरूपम् । वेदेषु वेदाध्ययनारम्भसमयेषु । चकारः समुच्चये । गीयते उच्चार्यते । श्रुतिमुखं वेदादिभूतम् । मात्रात्रयेण अकारोकारमकाराक्षरत्रयेण । ओमिति । श्रीविद्ये संकेतसारे । तव त्र्यक्षर्याः । सर्वराजवशकृत् । सर्वे जीवाः राजानश्च, वशं करोति । तत् पूर्वोक्तम् । कामराजं कामराजसंज्ञम् । भजे सेवे । मात्रात्रयेणेति कोऽर्थः—कामकलाक्षरस्य बिन्दुत्रयात्मकत्वेन बिन्दुत्रयस्य सूर्यसोमाग्नित्वेन सोमासूर्याग्नीनामकारोकारमकारात्मता सर्वात्रागमेषु दृष्टेत्येतत्सर्वं त्रिकात्मकं कामकलाक्षरे विश्रान्तमिति प्रणवेनापि कामकलाक्षरमेव गीयत इति तात्पर्यम् ॥

अतः परं संकेतसारविद्यायास्तृतीयबीजस्योद्धारं कामकलानाम्यतां ब्रह्मात्मकतां चिद्रूपतां च प्रतिपादयति—

यत्ते देवि तृतीयबीजमनलज्वालावलीसंनिभं
सर्वाधारतुरीयबीजमपरं ब्रह्माभिधाशब्दितम् ।
मूर्धन्यान्तविसर्गभूषितमहौकारात्मकं तत्परं
संविद्रूपमनन्यतुल्यमहिम स्वान्ते मम द्योतताम् ॥ ९ ॥

---

१. 'पूर्णचरण' ख. २. 'शक्तिपरमब्रह्माभिधं शब्दितम्' ख. ३. 'महोकारा' ख. ४. 'सविद्रूप' ख.

हे देवि, तत्ते तृतीयं बीजं मम स्वान्ते द्योततामित्यन्वयः । यत् वक्ष्यमाणरूपम् । ते तव । देवि प्राग्वत् । तृतीयं तार्तीयम् । बीजं बीजाक्षरम् । अनलज्वालावलीसंनिभम् अनलस्य वह्नेः, ज्वालाः शिखाः, तासामावली श्रेणी, तस्या निभेव प्रभा विद्यते यस्मिन् । सर्वाधारतुरीयबीजं सर्वस्य विश्वस्याधारभूतं त्रिकोणरूपं तदेकाराक्षरं तस्य तुरीयमौकारः कारणम् । अपरं द्वितीयम् । ब्रह्माभिधाशब्दितं ब्रह्मेतिनाम्ना संकेतितम् । मूर्धन्यान्तविसर्गभूषितमहौकारात्मकम् मूर्धन्यं बिन्दुरन्ते मस्तके यस्य विसर्गभूषितं विसर्गेण बिन्दुभ्यां भूषितं युक्तं अत एव महौकारात्मकं महत्त्वं तस्य बिन्दुत्रयसहितत्वात् । तत् पूर्वोक्तम् । परमुत्कृष्टम् । पराख्यमिति यावत् । संविद्रूपं ज्ञानात्मकम् । अनन्यतुल्यमहिम अतुलप्रभावम् । स्वान्ते हृदये । मम तवाराधकस्य । द्योततां भासताम् ॥

इदानीं बालायास्तृतीयं बीजं पराशक्तिरूपेण नमस्करोति—

सर्वं सर्वत एव सर्गसमये कार्येन्द्रियाण्यन्तरा
तत्तद्दिव्यहृषीककर्मभिरियं संव्यश्नुवाना परा ।
वागर्थव्यवहारकारणतनुः शक्तिर्जगद्व्यापिनी
यद्बीजात्मकतां गता तव शिवे तन्नौमि बीजं परम् ॥ १० ॥

हे शिवे, इयं परा शक्तिस्तव यद्बीजात्मकतां गता तत्परं बीजमहं नौमि । किं कुर्वाणा । सर्गसमये सर्वतः सर्वं संव्यश्नुवाना । अन्तरा अनन्तरं तत्तद्दिव्यहृषीककर्मभिः सह कार्येन्द्रियाणि च संव्यश्नुवाना । इत्यन्वयः । सर्वं वस्तुजातम् । सर्वतः सर्वस्मात् । एवकारोऽत्रान्योन्याश्रयव्यवच्छेदकः । सर्गसमये सर्गादौ । कार्येन्द्रियाणि कर्मेन्द्रियाणि, ज्ञानेन्द्रियाणि च । अन्तरा तदनन्तरम् । तत्तद्दिव्यहृषीककर्मभिः । सह इति शेषः । तत्तत् तेषां तेषां दिव्यहृषीककर्मभिः शब्दादिभिर्वचनादिभिश्च सह संव्यश्नुवाना संव्याप्नुवाना । परा परमोत्कृष्टा । वागर्थव्यवहारकारणतनुः वाचामर्थानां च यो व्यवहारः प्रवृत्तिः, तत्र कारणं तनुर्यस्याः । शक्तिः प्राग्वत् । जगद्व्यापिनी कार्यकारणकर्तृत्वज्ञेयज्ञानशब्दवाच्यवचनवक्तृत्वादित्रितयमात्ररूपेण । यद्बीजात्मकतां सकारौकारबिन्दुत्रयसमुदायरूपेण । गता प्राप्ता । तव बालात्रिपुरानियायाः । शिवे कल्याणरूपे । तत् पराबीजम् । नौमि नमस्करोमि । बीजं प्राग्वत् । परं परासंज्ञम् । एतदुक्तं भवति—इयं परा शक्तिः सर्गसमये बिन्दुत्रयरूपकामकलाक्षरादाविर्भूय सर्वप्राणिसर्ववस्तुजीवजातकदम्बात्मकं यथा यथा समुत्थाय पश्चात्तत्तद्देवताधिष्ठितज्ञानकर्मेन्द्रियाण्युपस्थाप्य शब्दस्पर्शाद्यखिलविज्ञानरूपा सा पराबीजरूपतां प्राप्नोति तदस्याबीजं सर्वोत्कृष्टमिति ॥

पुनरपि पराबीजस्मरणेन परदेवतासाक्षात्कारो भवतीति दर्शयति—

अग्नीन्दुद्युमणिप्रभञ्जनधरानीरान्तरस्थायिनी
शक्तिर्ब्रह्महरीशवासवमुखामर्त्यासुरात्मस्थिता ।

1. 'सोऽपरेव' ख.

सृष्टस्थावरजङ्गमस्थितमहाचैतन्यरूपा च या
यद्बीजस्मरणेन सैव भवती प्रादुर्भवत्यम्बिके ॥ ११ ॥

हे अम्बिके, सैव भवती यद्बीजस्मरणेन प्रादुर्भवति तत्परं बीजं नौमीति पूर्वश्लोकस्थेनान्वयः । सैव का । यामीन्दुद्युमणिप्रभञ्जनधरानीरान्तरस्थायिनी अभिर्दुताशनः, इन्दुश्चन्द्रः, द्युमणिः सूर्यः, प्रभञ्जनो वायुः, धरा पृथ्वी, नीरं जलम्, आन्तरमाकाशम्, एतेषु स्थितिशीला । उक्तं चाभियुक्तैः—'त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं त्वं चेतनासि पुरुषे पवने बलं त्वम् । त्वं स्वादुतासि सलिले शुचिनि त्वमूष्मा निःसारमेतदखिलं त्वदृते यदि स्यात् ॥' इति । शक्तिः पूर्वोक्ता । ब्रह्महरीशवासवमुखामर्त्यासुरात्मस्थिता ब्रह्मा स्रष्टा, हरिर्विष्णुः, ईशः शिवः, वासव इन्द्रः, तन्मुखास्तदाद्या अमर्त्या देवाः, असुरा दैत्याः, तेषामात्मस्थिता आत्मनि सामर्थ्यरूपेण वर्तमाना । सृष्टस्थावरजङ्गमस्थितमहाचैतन्यरूपा सृष्टेषु स्थावरेषु जङ्गमेषु स्थितं वर्तमानं महाचैतन्यं जीवनमूलं तदेव रूपं यस्याः । च समुच्चये । या परा शक्तिः । यद्बीजस्मरणेन पराबीजचिन्तनेन । सैव या पराबीजतां प्राप्ता । भवती त्वमेव । प्रादुर्भवति प्रत्यक्षा भवति । अम्बिके प्रतिपालिके इति ॥

पुनरपि तदेव त्रिकात्मकं पराबीजं श्रीप्रदं वाक्सिद्धिप्रदं मोक्षप्रदं चेति प्रतिपादयति—

स्वात्मश्रीविजिताजविष्णुमघवश्रीपूरणैकव्रतं
यद्विद्याकवितावितानलहरीकल्लोलिनीदीपकम् ।
बीजं यत्त्रिगुणप्रवृत्तिजनकं ब्रह्मेति[1] यद्योगिनः
शान्ताः सत्यमुपासते तदिह ते चित्ते दधे श्रीपरे ॥ १२ ॥

हे श्रीपरे, ते तद्बीजमहमिह चित्ते दधे । तत्कथंभूतम् । उक्तरूपम्·········
······ ॥ स्वात्मश्रीविजिताजविष्णुमघवश्रीपूरणैकव्रतं स्वात्मश्रीः स्वस्यात्मा सकारोकारबिन्दुत्रयं तस्य श्रीर्विभूतिः । सामर्थ्यमिति यावत् । तया विजितानामजविष्णुमघोनां श्रीपूरणे संपत्तिसंपादने एकं व्रतं यस्य । यत् पराबीजमेव । विद्याकवितावितानलहरीकल्लोलिनीदीपकम् विद्याश्च कविताश्च विद्याकविताः, विद्याकविता एव वितानं तत्र लहर्य इव लहर्यः, तासु कल्लोलिनीव कल्लोलिनी तां दीपयति प्रकाशयतीति । बीजं पराबीजम् । यदुक्तरूपम् । त्रिगुणप्रवृत्तिजनकं त्रिगुणानां सत्त्वरजस्तमोगुणानां प्रवृत्तिं प्रचारं जनयत्युत्पादयतीति । ब्रह्मेति । मोक्षप्रदमिति । यद्बीजम् । योगिनो योगनिरताः । सत्यं शाश्वतम् । शान्ताः साधवः । उपासते निदिध्यासनयोगेन । तद्बीजम् । इह जन्मनि । ते परायाः । चित्ते हृदये । दधे भावयामि । श्रीपरे श्रिया वैभवेन परा सर्वोत्कृष्टेति ॥

पूर्वं 'वन्दे वाग्भवम्—' इत्यादि 'स्वात्मश्री—' इत्येतैर्दशभिः श्लोकैः संकेतसारबाला-

1. 'घटिः' ख. २. 'कल्लोलदीपाङ्कुरम्' ख.

विद्याबीजत्रयस्य क्रमेण सामर्थ्यं प्रतिपाद्येदानीं विद्याद्वयस्यान्यतरसंयुक्तबीजाराधनेन यथेष्टफलप्राप्तिं प्रतिपादयति—

एकैकं तव मातृके परतरं संयोगि वायोगि वा
विद्यादिप्रकटप्रभावजनकं जाड्यान्धकारापहम् ।
यन्निष्ठाश्च महोत्पलासनमहाविष्णुप्रहर्त्रादयो
देवाः स्वेषु विधिष्वनन्यमहिमस्फूर्तिं दधत्येव तत् ॥ १३ ॥

हे मातृके, एकैकं तव बीजं संयोगि वायोगि वा विद्यादिप्रकटप्रभावजनकं जाड्यान्धकारापहं च भवति । परतरं यन्निष्ठा महोत्पलासनमहाविष्णुप्रहर्त्रादयो देवाः स्वेषु विधिषु अनन्यमहिमस्फूर्तिं दधत्येवेत्यन्वयः ॥ एकैकमन्यतमविद्यायाः । तव त्र्यक्षर्याः । मातृके स्वरव्यञ्जनरूपे । परतरमुत्कृष्टादुत्कृष्टम् । संयोगि व्यञ्जनयुतम् । वा विकल्पे । अयोगि वा व्यञ्जनरहितं वा । विद्यादिप्रकटप्रभावजनकं विद्याश्चतुर्दशविद्याः, आदिशब्देन यस्य यदिष्टम्, तेषां प्रकटप्रभावः अलौकिको विस्तारः, तस्य जनकमुत्पादकम् । जाड्यान्धकारापहं जाड्यमज्ञानम्, त(देवान्धकारम् उत)दपहन्ति नाशयति तत् । यन्निष्ठा यदक्षरस्मरणतत्पराः । च समुच्चये । महोत्पलासनो ब्रह्मा । महाविष्णुर्विश्वपालकः, प्रहर्ता ईश्वरः, आदिशब्देनेन्द्रादयः, देवाः दिवि क्रीडातत्पराः । स्वेषु स्वस्वकर्तव्येषु विधिषु साङ्गोपाङ्गेषु अनन्यमहिमस्फूर्तिं अनन्यत्वं इतरानपेक्षत्वम्, महिमत्वं लोकोत्तरत्वम्, स्फूर्तिस्तत्तत्कार्यातिशायिनी तां प्राप्नुवन्त्येव । एवकारोऽत्र निश्चयाधायकः । तत्तस्मात् ॥

अतः परं पूर्वोक्तविद्याद्वयगतबीजत्रयं महाविद्याकूटत्रयं च यो जानाति, तस्य सामर्थ्यं प्रतिपादयति—

इत्थं त्रीण्यपि मूलवाग्भवमहाश्रीकामराजस्फुर-
च्छक्त्याख्यानि चतुःश्रुतिप्रकटितान्युत्कृष्टकूटानि ते ।
भूतर्तुश्रुतिसंख्यवर्णविदितान्यारक्तकान्ते शिवे
यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकृत् ॥ १४ ॥

हे आरक्तकान्ते, हे शिवे, इत्थं त्रीणि बीजानि मूलवाग्भवमहाश्रीकामराजस्फुरच्छक्त्याख्यानि त्रीण्युत्कृष्टकूटानि यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकृद्भवति । गर्भभूतानि । भूतर्तुश्रुतिसंख्यवर्णैर्विदितानीत्यन्वयः ॥ इत्थं पूर्वोक्तप्रकारेण । त्रीणि संकेतवाग्भवाद्यविद्यायाः । अपिः समुच्चये । मूलवाग्भवमहाश्रीकामराजस्फुरच्छक्त्याख्यानि मूलस्य महाविद्यायाः वाग्भवं प्रथमकूटं महाश्रीकामराजं महाविद्यायाः श्रीमद् द्वितीयं कामराजकूटम् । महत्त्वमेतस्य पूर्वोक्तकेवलकेवलाक्षरप्रासादविद्याकामकूटापेक्षया । स्फुरच्छक्त्याख्यं स्फुरन्ती चमत्कारकारिणी शक्तिर्यस्य । एवमभिप्रेतानि च तानि ।

१. 'भवन्त' ग. २. 'भूभुं:' ग.

चतुःश्रुतिप्रकटितानि चतुर्वेदेषु प्रोक्तानि अथर्ववेदे सौभाग्यकाण्डे—'कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः । पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमातादिविद्या ॥' इति, । ऋग्वेदे—'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिभिः प्रकाशितानि । उत्कृष्टकूटानि उत्कृष्टानि अतुलसामर्थ्यवन्तीति, कूटानि वर्णसमुदायरूपाणि । भूततुंश्रुतिसंख्यवर्णैर्विदितानि पञ्चषट्चतुरक्षरैर्ज्ञातानि । आरक्ता बालार्कतुल्या कान्तिर्यस्याः । शिवे कल्याणरूपे । य उपासकः । जानाति सत्संप्रदायाचार्यमुखादवगच्छति । स एव साभिषेकलब्धविद्य एव । सर्वजगतां स्थावरजङ्गमानाम् । सृष्टिस्थितिध्वंसकृत् सृष्टिरुत्पत्तिः, स्थितिः पालनम्, ध्वंसो नाशः, एतत्कार्यं कर्तुं समर्थः स्यादिति ॥

ननु श्रीविद्याकूटत्रयज्ञानमात्रेण यदि प्रोक्तसिद्धिः स्यात्, तदा सदाशिवोक्तनित्योपासनोपदेशो व्यर्थ एव स्यादित्याशङ्क्योपासकानां साङ्गोपाङ्गनित्योपास्तिकर्तव्यं प्रतिपादयति—

नित्यं यस्तव मातृकाक्षरसखीं सौभाग्यविद्यां जपे-
त्संपूज्याखिलचक्रराजनिलयां सायंतनाग्निप्रभाम् ।
कामाख्यं शिवनामतत्त्वमुभयं व्याप्यात्मना सर्वतो
दीव्यन्तीमिह तस्य सिद्धिरचिरात्स्यात्त्वत्स्वरूपैकता ॥ १६ ॥

हे सौभाग्यविद्येश्वरि, यस्तव सौभाग्यविद्यां मातृकाक्षरसखीं संपाद्य जपेत् तस्य इहाचिरात्सिद्धिः स्यात् । परत्र त्वत्स्वरूपैकता स्यात् । किं कृत्वा । अखिलचक्रराजनिलयां संपूज्य । कथंभूताम् । सायंतनाग्निप्रभाम् । पुनः कीदृशीम् । आत्मना कामाख्यं शिवनामतत्त्वं चोभयं व्याप्य सर्वतो दीव्यन्तीमित्यन्वयः ॥ नित्यं प्रतिदिनम् । यः साधकः । तव त्रिपुरसुन्दर्याः । मातृकाक्षरसखीं मातृकाक्षरसहायिनीम्, द्वितीयश्लोकव्याख्याने प्रोक्ताक्षमालाविधानसहिताम् । सौभाग्यविद्यां श्रीविद्याम् । जपेत् वाचिकोपांशुमानसेष्वन्यतमप्रकारेण । अक्षरमालया जपस्तु मानसः । एतदुक्तं वायवीयसंहितायाम्—'धिया मन्त्राक्षरश्रेणीं वर्णस्वरपदात्मिकाम् । उच्चरेदर्थसंस्मृत्या स उक्तो मानसो जपः ॥' इति । संपूज्य समाराध्य । अखिलचक्रराजनिलयाम् अखिलं संपूर्णं चक्रराजः श्रीचक्रं निलयः स्थानं यस्याः । एतावता सर्वावरणसहितां संपूज्येत्यर्थः । सायंतनाग्निप्रभां सायंसंध्योत्थप्रज्वलितवैश्वानरदीप्तिमतीम् । कामाख्यं कामेश्वराभिधम् । शिवनामतत्त्वं शिवानां ब्रह्मविष्णुरुद्रेश्वरसदाशिवाख्यानां समुदायरूपं सिंहासनम् । उभयं द्वयमपि आत्मना व्याप्य स्वदेहावयवैराच्छाद्य । सर्वतश्चतुर्दिक्षु । दीव्यन्तीं प्रकाशमानाम् । इह भूतले । तस्य साधकस्य । सिद्धिर्मनोवाञ्छिता । अचिरात्स्वल्पकालेन । स्यात् भवति । त्वत्स्वरूपैकता तव मूर्तिसायुज्यम् ॥

मान्वितराः सर्वाः सिद्धयो मदाराधनेनैव संभवन्ति, परन्तु केवलं महाकविलेपूनामल्पविद्यानां मूर्खाणां काव्यव्याकरणाभिधानाभ्यासं विना कथं सिद्धिः स्यादित्याशङ्क्याह—

काव्यैः पापठितैः किमल्पविदुषां जोघुष्यमाणैः पुनः
किं तैर्व्याकरणैर्विबोधिततया किं वाभिधानश्रिया।
एतैरम्ब न बोभवीति सुकविस्तावत्तव श्रीमतो-
र्यावन्नानुसरीसरीति सरणिं पादाब्जयोः पावनीम्॥ १६॥

हे अम्ब, यावत्ते पादाब्जयोः सरणीं नानुसरीसरीति तावदल्पविदुषां पापठितैः काव्यैः किम्। जोघुष्यमाणैर्व्याकरणैः पुनः किम्। विबोधिततया वाभिधानश्रिया किम्। (किम्) एतैः सुकविर्न भवति। कथंभूतयोः पादाब्जयोः। श्रीमतोः। कथंभूतां सरणिम्। पावनीमित्यन्वयः॥ काव्यैर्महाकविकृतैर्व्युत्पत्तिकारकैः। पापठितैर्वारंवारं पठितैः। किम्। न किमपीत्यर्थः। अल्पविदुषामीषद्व्युत्पन्नानाम्। निर्बुद्धीनामिति यावत्। जोघुष्यमाणैर्बहुधा घोषितैः। पुनः किं प्राग्वत्। तैरभ्यस्तैः। व्याकरणैः शब्दशास्त्रैः। विबोधिततया विज्ञाततया। किं प्राग्वत्। वा अथवा। अभिधानश्रिया अभिधानसंपत्त्या। एतैः काव्यव्याकरणाभिधानैः। अम्ब मातः। न बोभवीति अतिशयेन न संभवति। सुकविर्विद्वत्परितोषकः। तावत्तदवधि। तव श्रीमहात्रिपुरसुन्दर्याः। श्रीमतोः परमशोभनयोः। यावत् यदवधि। नानुसरीसरीति अत्यन्तं नानुसरति। सरणिं पद्धतिम्। पादाब्जयोश्चरणकमलयोः। पावनीं पवित्राम्॥

अतः परं देव्युपासकानामनिष्टक्षपादकमपीष्टं सपादयतीति प्रतिपादयति—

गेहं नाकति गर्वितः प्रणमति स्त्रीसंगमो मोक्षति
द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति।
मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवना-
त्त्वां वन्दे भवभीतिभञ्जनकरीं गौरीं गिरीशप्रियाम्॥ १७॥

श्लोकार्थः स्पष्ट एव॥

अतः परं साधकस्य कृतकृत्यतासंपादकं त्रिपुरनामनिरुक्तिमूलं श्रीमहात्रिपुरसुन्दर्याः कामकलाक्षरगतबिन्दुत्रयमध्यगमन्त्रगतं पदिगतं च त्रिकमात्र प्रकटयति—

आधेराग्निरवीन्दुबिम्बनिलयैरम्ब त्रिलिङ्गात्मभि-
र्मिश्रा रक्तसितप्रभैरनुपमैर्युष्मत्पदैस्तैस्त्रिभिः।
स्वात्मोत्पादितकाललोकनिगमावस्थामरादित्रयै-
रुद्भूतं त्रिपुरेति नाम कलयेद्यस्ते स धन्यो बुधः॥ १८॥

हे अम्ब, उक्तैस्त्रिभिः पदैः स्वात्मोत्पादितकाललोकनिगमावस्थामरादित्रयैरुद्भूतं ते त्रिपुरेति नाम यः कलयेत्स बुधो धन्य इत्यन्वयः॥ आधेरग्न्यादेः। अग्निरवीन्दुबिम्बनि-

1. 'त्रिपद' ख. 2. 'कि वा व्या' ख.

लयैः । अग्निरवीन्दूनां बिम्बानां मण्डलानां निलयानि निवासस्थानानि तैः । अम्ब जननि । त्रिलिङ्गात्मभिर्मूलाधारहृदयभ्रूमध्यस्थैः स्वयंभूबाणेतरलिङ्गस्वरूपैः । इदं पदत्रयविशेषणम् । मिश्रा········। रक्तसितप्रभैः श्वेतरक्तपाटलवर्णैः । अनुपमैः उपमारहितैः । युष्मत्पदैस्त्वच्चरणैः । तैः पूर्वोक्तविशेषणद्वयसहितैः । त्रिभिस्त्रिस्थानगैः । स्वसा महात्रिपुरसुन्दर्याः । आत्मा कामकलाक्षरं तस्मादुत्पादितानि, कालत्रयं प्रातर्मध्याह्नसायंसंध्यारूपम्, लोकत्रयं स्वर्गमृत्युपातालरूपम्, निगमत्रयं वेदत्रयम् । अवस्थात्रयं जाग्रत्स्वप्नसुषुप्तिरूपम्, अमरत्रयं ब्रह्मविष्णुरुद्ररूपम् । आदिशब्देन पीठत्रयं वह्नित्रयं इच्छादिशक्तित्रयमित्यादीनि तैः । उद्भूतमुत्पन्नं प्रथमागतम् । त्रिपुरा त्रिपुराप्रकारमात्रकारणरूपा । इति एवंविधम् । नाम नाममन्त्रः, तम् । कलयेज्जानीयात् । य उपासकः । ते महात्रिपुरसुन्दर्याः । स गुरुमुखादवगततद्रहस्यः । धन्यः कृतकृत्यः । बुधो ज्ञानी ॥

अतः परं त्रितयमात्रकारणभूतायाः श्रीकामकलात्मकमहात्रिपुरसुन्दर्या वाच्यवाचकत्वकृत्वेन प्रणवाक्षरत्रयस्य मूलाधारहृदयभ्रूमध्यवर्तित्वेन कूटत्रयस्य प्रणवत्वं प्रतिपादयति—

> आद्यो आप्यतमार्थवाचकतया रूढः स्वरः पञ्चमः
> सर्वोत्कृष्टतमार्थवाचकतया वर्णः पवर्गान्तकः ।
> वक्तृत्वेन महाविभूतिसरणिस्त्वाधारगो हृद्गतो
> भ्रूमध्यस्थित इत्यतः प्रणवता ते गीयते चागमैः ॥ १९ ॥

हे अम्ब, अतः कारणाद् आगमैः, प्रणव इति गीयते । कुतः । अकारोकारमकारैर्वाच्यवाचकवक्तृरूपैः आधारहृदयभ्रूमध्यगैः कूटत्रयसाम्यता वेदैर्गीयत इत्यन्वयः ॥ आद्योऽकारः । आप्यतमार्थवाचकतया अतिशयेन आप्या इति आप्यतमा मूलविद्या तस्या अर्थः स्वरूपं तस्य वाचकः "अ-उ-म्' इति ब्रह्म" इति श्रुतिः । इति परब्रह्मात्मिकां श्रीमहात्रिपुरसुन्दरीमेव वदति । 'अकारो विष्णुरुच्यते' इत्यागमाभिधानेन व्यापकत्वेति विश्वव्यापिकां तामेव वदति । 'कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा । वेणुनादसमारम्भादकरोद्विवशं जगत् ॥' इति तन्त्रराजवचनात् । 'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः' इति संकेतपद्धतिवचनात् । शिवशक्त्योरभेदेन तामेव वदति 'न शिवेन विना शक्तिर्न शक्तिरहितः शिवः । तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव ॥' इति महार्थमञ्जर्यामपि । आलेख्यविशेष इव गजवृषभयोः प्रतिभासो यथैकस्मिन्नपि परमार्थे शिवशक्तिविभागकल्पनां कुर्मः इति । अकारस्य परमार्थस्वरूपिण्याः श्रीमत्त्रिपुरसुन्दर्या वाचकतया रूढः प्रसिद्धः । अत एव वाच्यस्वरः पञ्चम उकारः सर्वोत्कृष्टतां प्राप्य वाचकतया सर्वेभ्य उत्कृष्टतमार्थां तामेव वदति । तेन वाचकता वर्णः पवर्गान्तकः वर्णो व्यञ्जनं पवर्गान्तको मकारः कर्तृत्वेन वक्तृत्वं महत्त्वादेव । एतेषामकारोकारमकाराणां वाच्यवाचकत्वं कामकलाक्षरमूलकत्वेन त्रिकात्मकतया संकेतितं भवति । महाविभूति-

सरणिः महाविभूतिर्महदैश्वर्यं तस्य सरणिः प्रापकः । तु पुनः । आधारगो मूलाधारगताग्निचक्रगः । हृद्गतः सूर्यचक्रगः । भ्रूमध्यस्थितः सोमचक्रग इत्यमुना प्रकारेण मूलाधारहृदयभ्रूमध्यगतकूटत्रयेणैकवाक्यताकारणता । प्रणवता ॐकाररूपता । ते श्रीमहात्रिपुरसुन्दर्याः । इति । गीयते उच्चैरुद्घोष्यते । रुद्रयामले—'उमेति परमा शक्तिः पूर्वभावमुपेयुषी । अध्युष्टवलयाकारा प्रणवत्वमुपागता । अकार रूपिण्यजरा शिवानन्ता मदद्रवा ॥'॥

अतःपरं गायत्र्यादिसर्वदर्शनाधिदेवतात्वेन श्रीमहात्रिपुरसुन्दरीमेव प्रतिपादयति—

गायत्री सशिरा तुरीयसहिता संध्यामयीत्यागमै-
राख्याता त्रिपुरे त्वमेव महतां शर्मप्रदा कर्मणाम् ।
तत्तद्दर्शनमुख्यशक्तिरपि च त्वं ब्रह्म कर्मेश्वरी
कर्ताहंन्पुरुषो हरिश्च सविता बुद्धः शिवस्त्वं गुरुः ॥ २० ॥

हे त्रिपुरे, संध्यामयी गायत्री च परं तत्तद्दर्शनमुख्यशक्तिरपि त्वमेवेति आगमैराख्याता । कथंभूता । गायत्री तुरीयसहिता । सशिरा च । पुनः कथंभूता । महतां कर्मणां शर्मप्रदा इत्यन्वयः ॥ गायत्री प्रसिद्धा । सशिराः शिरसा सहवर्तमाना । तुरीयसहिता तुरीयं प्रणवः । तुरीयबीजस्य प्रणवताष्टमश्लोके प्रतिपादिता । कार्यकारणयोरभेदात्कार्यभूतप्रणवस्य कारणभूततुरीयाक्षरस्य प्रणवत्वमुक्तम् । संध्यामयी त्रिकालसंध्यारूपा । आगमैर्वेदैः, अथवा—आगमैरागमज्ञैः । आख्याता प्रसिद्धीकृता । अत्र गायत्र्या मूलविद्यात्मकता त्रिपदीत्वेन संध्यात्रयस्य कालत्रयत्वेन गायत्र्याश्च तद्रूपत्वे । 'सशिरा तुरीयसहिता' इत्यनेन प्रणवादिकशिरोन्तिका गायत्री पञ्चमीविद्यात्मिकापि सूचिता । 'त्रिकूटमेककूटं तु त्रिकूटे पञ्चकूटता' इति वामकेश्वरवचनात् । त्रिपुरे त्रितयप्राप्तस्वरूपे । त्वमेव मूलविद्यैव । महतां यागादीनाम् । शर्मप्रदा सुखरूपफलप्रदा । कर्मणां क्रियाणाम् । तत्तद्दर्शनमुख्यशक्तिस्तत्तद्दर्शनाधिदेवता । अपि च पुनरपि । त्वमेव त्वं श्रीमहात्रिपुरसुन्दर्येव । ब्रह्म वेदान्तिनाम् । कर्म मीमांसकानाम् । ईश्वरी शाक्तानाम् । कर्ता नैयायिकानाम् । अर्हंश्चार्वाकाणाम् । पुरुषः सांख्यानाम् । हरिर्वैष्णवानाम् । सविता सौराणाम् । बुद्धो बौद्धानाम् । शिवः शैवानाम् । त्वं त्वमेव । गुरुः सर्वपूज्यत्वादुपदेशः सर्वेषां त्वमेवेत्यर्थः ॥

अतः परं कोशपञ्चकद्वारा भगवत्या विश्वशरीरे विलीनत्वं प्रातुर्ब्रह्मत्वं प्रतिपादयति—

अन्नप्राणमनःप्रबोधपरमानन्दैः शिरःपक्षयु-
क्पुच्छात्मप्रकटैर्महोपनिषदां वाग्भिः प्रसिद्धीकृतैः ।
कोशैः पञ्चभिरेभिरम्ब भवतीमेतत्प्रलीनामिति
ज्योतिःप्रज्वलदुज्ज्वलात्मचपलां यो वेद स ब्रह्मवित् ॥ २१ ॥

हे अम्ब, एभिः पञ्चभिः कोशैः कृत्वा भवतीमेतद्विश्वशरीरे प्रलीनां यो वेद स ब्रह्मविद्भवति । एभिः कैः । अन्नप्राणमनःप्रबोधपरमानन्दैः । कथंभूतैः । शिरःपक्षयुक्पुच्छात्मप्रकटैः । पुनः किंभूतैः । महोपनिषदां वाग्भिः प्रसिद्धीकृतैरित्यन्वयः ॥ अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयैः । अन्नं शिरः, प्राणमनसी पक्षौ, प्रबोधः पुच्छम्, परमानन्द आत्मा । एभिः कृत्वा प्रकटैः स्फुटैः । महोपनिषदां चतुर्वेदशिरसाम् । वाग्भिर्वाक्यैः । प्रसिद्धीकृतैः ख्यापितैः । कोशैरुक्तरूपैः । पञ्चभिः पञ्चप्रकारैः । एभिरुक्तविशेषणसहितैः । अम्ब मातः । भवतीं त्वाम् । एतत्प्रलीनाम् एतस्मिन्विश्वशरीरे प्रलीनां प्रविष्टाम् । इति अमुना प्रकारेण । ज्योतिःप्रज्वलदुज्ज्वलात्मचपलां ज्योतिषः प्रज्वलदिवोज्ज्वलात्मना चपलां चञ्चलाम् । य उपासकः । वेद जानाति । स लब्धोपदेशः । ब्रह्मवित् तत्त्वज्ञ इति ॥

'पूर्वं 'श्रीमातः—' इत्यारभ्य 'अन्नप्राण—' इत्यन्तैरेकविंशतिश्लोकैर्यद्रहस्यं प्रतिपादितं तत्र सद्गुरुतः प्राप्तदीक्षस्यैवाधिकारो नान्यस्येति सद्गुरोः सकाशाद्दीक्षाग्रहणस्यावश्यकतां तत्फलसिद्धिं च प्रतिपादयति—

सच्चित्तत्त्वमसीतिवाक्यविदितैरध्यात्मविद्याशिव-
ब्रह्माख्यैरतुलप्रभावसहितैस्तत्त्वैस्त्रिभिः सद्गुरोः ।
तद्रूपस्य मुखारविन्दविवरात्संप्राप्य दीक्षामतो
यस्त्वां विन्दति तत्त्वतस्तदहमित्यार्ये स मुक्तो भवेत् ॥ २२ ॥

हे आर्ये, सद्गुरोर्मुखारविन्दविवरात्त्रिभिस्तत्त्वैः सह दीक्षां प्राप्य यस्त्वां विन्दति, सोऽतः 'तदहम्' इति तत्त्वतो मुक्तो भवेत् । कथंभूतस्य सद्गुरोः । तद्रूपस्य । कथंभूतैस्तत्त्वैः । सच्चित्तत्त्वमसीतिवाक्यविदितैः[1] । कैः । अध्यात्मविद्याशिवब्रह्माख्यैः । पुनः कीदृशैः । अतुलप्रभावसहितैः । इत्यन्वयः ॥ सच्चित्तत्त्वमसीतिवाक्यविदितैः सत् ब्रह्म, चित् माया । इत्यनेनात्मतत्त्वं लभ्यते स्थूलदेहशोधकत्वात् । तत् मायातीतम् इत्यनेन विद्यातत्त्वं लभ्यते सूक्ष्मदेहशोधकत्वात् । त्वं स्वयम्, इत्यनेन शिवतत्त्वं लभ्यते । परदेहशोधकत्वात् । असि इत्यनेन सर्वतत्त्वं लभ्यते । समष्टिदेहशोधकत्वात् । अध्यात्मशिवब्रह्माख्यैः अर्थः स्पष्ट एव ॥ अतुलप्रभावसहितैर्देहचतुष्टयशुद्धिद्वारा जीवन्मुक्तिप्रदैः । तत्त्वैः यथार्थैः । त्रिभिस्त्रिधाभिन्नैः । सद्गुरोः सत्संप्रदायवतस्तद्रूपस्य पूर्णाभिषेकप्रभावेण देवीतादात्म्यसिद्धस्य । मुखारविन्दविवरात् वक्त्राम्बुजद्वारा । संप्राप्य लब्ध्वा । दीक्षां पूर्णाभिषेकाख्याम् । अतो दीक्षाप्राप्त्यनन्तरम् । य उपासकः । त्वां श्रीमहात्रिपुरसुन्दरीम् । विन्दति जानाति । तत्त्वतो यथार्थतः । तद् ब्रह्म । अहमहमेव इति भावनया । आर्ये सर्वोत्कृष्टे । स संप्राप्तदीक्षः । मुक्तो जीवन्मुक्तः । भवेत् स्यात् ॥

ननु मुक्तिप्रदा अल्पायाससाध्या न्यासपूजाविस्ताररहिता अन्ये शैववैष्णवसौराद्यो

---

1. 'विततैः' ख.

बह्वो मार्गाः सन्ति, तर्हि बह्वायाससाध्ये न्यासपूजायपारे ममास्मिन्मार्गे कथमेतावानादरः क्रियत इत्याक्षिप्तवतीं भगवतीं सविनयमुत्तरयति—

सिद्धान्तैर्बहुभिः प्रमाणगणितैरन्यैरविद्यातमो-
नक्षत्रैरिव सर्वमन्धतमसं तावन्न निर्भिद्यते।
यावत्ते सवितेव संमतमिदं नोदेति विश्वान्तरे
जन्तोर्जन्मनिवारणैकभिदुरं श्रीशांभवि श्रीशिवे ॥ २३ ॥

हे श्रीशांभवि, हे श्रीशिवे, अन्यैर्बहुभिः सिद्धान्तैरविद्यातमस्तावन्न निर्भिद्यते यावत् इदं समतं विश्वान्तरे न उदेति। (तावदन्यैर्बहुभिः सिद्धान्तैरविद्यातमो न निर्भिद्यते। कैः किमिव। नक्षत्रैः सर्वमन्धतमसमिव। कथंभूतमिदं ते संमतम्। सवितेव। कथंभूतम्। जन्तोर्जन्मनिवारणैकभिदुरम्। कथंभूतैः सिद्धान्तैः। प्रमाणगणितैः इत्यन्वयः॥ सिद्धान्तैस्तत्तद्दर्शनाङ्गीकृतैः। बहुभिर्नानाविधैः। प्रमाणगणितैः प्रमाणानि अनुमानादीनि तैर्गणितैः साधितैः। अन्यैः तार्किकाद्यैः। अविद्यातमः अविद्या अज्ञानं तदेव भ्रमोत्पादकत्वात्तमः। नक्षत्रैः तारकाद्यैः। इव तद्वत्। सर्वमशेषम्। अन्धतमसं महान्धकारः। तावत् तदवधि। न निषेधे। निर्भिद्यते निःशेषं दूरीक्रियते। यावत् यदवधि। ते तव। सवितेव सूर्यसदृशम्। संमतं सर्वमतोत्तमम्॥ इदं (विश्वान्तरे स्वोदरे)। नोदेति प्रचारं न प्राप्नोति। विश्वान्तरे विशेषेण स्वान्तरे स्वस्य जीवन्मुक्तस्यपेक्षस्य अन्तरे हृदये। जन्तोः सांसारिकस्य। जन्मनिवारणैकभिदुरं आगामीनि जन्मानि तेषां निवारणे एकं अद्वितीयं भिदुरं समर्थम्। श्रीशांभवि इदं हेतुगर्भं संबोधनम्। अनेन षडन्वयशांभवपर्यन्तं ज्ञानं त्वन्मतनिर्वाहकमित्युक्तम्। श्रीशिवे श्रीकल्याणरूपे॥

ननु अविद्याविनाशकमात्मानुसंधानं सकलसंमतं भवति तर्हि जीवन्मुक्तिवाञ्छकैः 'अथात्मा वारे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्तव्यः' इत्युपनिषद्वाक्यं प्रमाणीकृत्य निरन्तरमात्मानुसंधानमेव कर्तव्यम्, किमर्थमस्मिन्नतिदुर्घटे मन्मतेऽत्यादरः क्रियते इत्याग्रहवतीं भगवतीं मुनिरुत्तरयति—

आत्मासौ सकलेन्द्रियाश्रयमनोबुद्ध्यादिभिः शोचितः
कर्मबद्धतनुर्जनिं च मरणं प्राप्नोति यत्कारणम्।
तत्ते देवि महाविलासलहरीदिव्यायुधानां जय-
स्तस्मात्त्वां गुरुमभ्युपेत्य कलयेत्त्वामेव चेन्मुच्यते ॥ २४ ॥

हे देवि, तस्मात्कारणात् त्वां गुरुमभ्युपेत्य त्वामेव चेत्कलयेत्, तदा मुच्यते। यस्मादसावात्मा जनिं मरणं च प्राप्नोति तत्कारणं ते महाविलासलहरीदिव्यायुधानां जयः। कथंभूतोऽसावात्मा। सकलेन्द्रियाश्रयमनोबुद्ध्यादिभिः शोचितः। पुनः कथंभूतः। कर्मबद्धतनुः। इत्यन्वयः॥ आत्मा जीवदशाविष्टः। असौ संसारानुपरक्तः। सकलेन्द्रियाश्र-

यमनोबुद्ध्यादिभिः सकलानां कर्मेन्द्रियाणां ज्ञानेन्द्रियाणां च आश्रयस्तदधीनतया मनोबुद्ध्यादयस्तैः । शोचितः शुचं प्रापितः । कर्मबद्धतनुः कर्मभिः सांसारिकैर्निषिद्धानिषिद्धैः, आबद्धा जडीकृता तनुः संस्कारः । जनिरुत्पत्तिः, ताम् । च समुच्चये । मरणं देहत्यागः, तम् । प्राप्नोति प्रयाति । यत्कारणं यन्निमित्तम् । तद्वक्ष्यमाणम् । ते भगवत्याः । देवि प्राग्वत् । महाविलासलहरीदिव्यायुधानां जयो महाविलासोऽभिनवनवविधशृङ्गारसौन्दर्यार्णवस्तस्य लहर्यस्तरङ्गास्तद्वद्दिव्यान्यप्रतिहतसामर्थ्यवन्त्यायुधानि पाशाङ्कुशधनुर्बाणाख्यानि तेषाम् । जयः प्रतापो मोहनवश्यमारणस्तम्भनादीनि । तस्मात्कारणात् । त्वां त्वत्तादात्म्यसिद्धम् । गुरुं देशिकम् । अभ्युपेत्य प्रत्याराध्य । कलयेत् प्रभजेत् । त्वामेव श्रीमहात्रिपुरसुन्दरीमेव । चेत्तदा । मुच्यते मोक्षो लभ्यते ॥

अतः परं भगवान्दुर्वासा महामुनिः संसारसिन्धौ निमज्जनोन्मज्जनाभ्यामतिदुःखितानां किंचिदुत्पन्नज्ञानानां मादृशानामुपरि कृपाविष्टः सविनयं श्रीमहात्रिपुरसुन्दरीं प्रार्थयति—

नानायोनिसहस्रसंभववशाज्जाता जननयः कति
प्रख्याता जनकाः कियन्त इति मे सेत्स्यन्ति चाग्रे कति ।
एतेषां गणनैव नास्ति महतः संसारसिन्धोर्विधे-
र्भीतं मां नितरामनन्यशरणं रक्षानुकम्पानिधे ॥ २५ ॥

हे अनुकम्पानिधे इति कारणात् मां रक्ष । कथंभूतं माम् । संसारसिन्धोर्विधेर्भीतम् । पुनः कथंभूतम् । नितरामनन्यशरणम् । इतीति किम् । नानायोनिसहस्रसंभववशात्कति जनन्यो जाताः, पितरोऽपि कियन्तो विख्याताः, अग्रे कति सेत्स्यन्ति एतेषां गणनैव नास्तीति । कथंभूतस्य विधेः । महत इत्यन्वयः । अर्थः स्पष्ट एव ॥

ननु संसारदुःखनिवारणार्थं नानाव्रतानि नानायागादिक्रियाः प्राक्तनाचार्यैः प्रोक्ताः कथं न क्रियन्ते । मदाराधनायामेव किमाधिक्यमिति देव्याक्षेपे मुनिराह—

देहक्षोभकरैर्व्रतैर्बहुविधैर्दानैश्च होमैर्जपैः
संतानैर्हयमेधमुख्यसुमखैर्नानाविधैः कर्मभिः ।
यत्संकल्पविकल्पभावमलिनं ख्यातं पदं तस्य ते
दूरादेव निवर्तते परतरं मातः पदं निर्मलम् ॥ २६ ॥

हे मातः, तस्य यत्पदं ख्यातं तन्नानाविधैः कर्मभिः कृत्वा संकल्पविकल्पभावमलिनं भवति । ते पदं दूरादेव निवर्तते । कथंभूतं ते पदम् । परतरं निर्मलं चेत्यन्वयः । देहक्षोभकरैः शरीरशोषकैः । व्रतैरुपवासादिभिः । बहुविधैः नानाप्रकारैः । दानैस्तुलापुरुषादिभिः । जपैरन्यदेवताविषयैः । संतानैर्निरन्तरान्नसत्रादिभिः । हयमेधमुख्यसुमखैरश्वमे-

१. मूलपुस्तके तु 'सिन्धूर्मिभिः' इति पाठो दृश्यते. २. 'सध्यानैः' इति मूलपुस्तकपाठः. ३. 'जाल' इति मूलपुस्तके. ४. 'प्राप्यम्' इति मूलपुस्तकस्थोऽयं पाठः.

धमुख्यमहायज्ञैः। नानाविधैर्बहुप्रकारैः। कर्मभिः क्रियाभिः। यत्प्राप्यम्। संकल्पविकल्पभावमलिनं संकल्पः करोमि, विकल्पो न करोमि, अनयोर्भावः सशयस्तेन मलिनं सुखदुःखफलदम्। ख्यातं प्रसिद्धम्। पद स्थानम्। तस्य कर्तुः। ते परदेवतायाः। दूरादेव बहुव्यवधानेनापि न। निवर्तते परिवर्तते। परतरं परमोत्कृष्टम्। मातरम्ब। पदं स्थानम्। निर्मलं कलङ्करहितम्॥

अतः परं सकलमातृकाप्रपञ्चमूलभूतामकारहकाररूपां परां शक्तिं प्रस्तौति—

पञ्चाशन्निजदेहजाक्षरमयैर्नानाविधैर्धातुभि-
र्बह्वर्थैः पदवाक्यमानजनकैरर्थाविनाभाविभिः।
साभिप्रायवदर्थकर्मफलदैः ख्यातैरनन्तैरिदं
विश्वं व्याप्य चिदात्मनाहमहमित्युज्जृम्भसे मातृके॥ २७॥

हे मातृके, त्वं नानाविधैर्धातुभिर्विश्वं व्याप्य चिदात्मना अहमहमिति उज्जृम्भसे इत्यन्वयः। पञ्चाशन्निजदेहजाक्षरमयैर्निजदेहः पराशरीरं तस्माज्जातानि प्रसृतानि तेभ्यो मय उत्पत्तिर्येषां तैः। परारूपस्याक्षरमयत्वं सर्वत्रागमे प्रसिद्धम्। नानाविधैर्बहुप्रकारैः। धातुभिः प्रसिद्धैः। बह्वर्थैर्नानार्थकैः। पदवाक्यमानजनकैः पदम् अक्षरसमुदायः, वाक्यं पदसमुदायः, मानानि छन्दांसि वाक्यसमुदायरूपाणि, एतेषां जनकैः कारणभूतैः। अर्थाविनाभावितैः अर्थं विना न भावितानि इति तैः। अर्थयुक्तैरित्यर्थः। साभिप्रायवदर्थकर्मफलदैरभिप्रायेण कारणेन सह वर्तमाना येऽर्था घटपटादयस्तेषां कर्म कर्तव्यता तत्फलं निष्पत्तिस्तां ददति दर्शयन्ति तैः। ख्यातैः प्रसिद्धैः। अनन्तैरगणितैः। इदं विद्यमानम्। विश्व त्रैलोक्यम्। व्याप्य परिपूर्य। चिदात्मना चैतन्यरूपेण। अहम् अहम् इति उज्जृम्भसे उद्घोष कुरुषे। मातृके मूलभूते॥

अतः परं सिद्ध श्रीचक्रं सदेवतं प्रस्तौति—

श्रीचक्रं श्रुतिमूलकोश इति ते संसारचक्रात्मकं
विख्यातं तदधिष्ठिताक्षरशिवज्योतिर्मयं सर्वतः।
एतन्मन्त्रमयात्मिकाभिररुणं श्रीसुन्दरीभिर्वृतं
मध्ये बैन्दवसिंहपीठललिते त्वं ब्रह्मविद्या शिवे॥ २८॥

हे शिवे, ते श्रीचक्रं श्रुतिमूलकोश इति ख्यातम्। कथंभूतम्। संसारचक्रात्मकम्। पुनः कथभूतम्। तदधिष्ठिताक्षरशिवज्योतिर्मयम्। पुनः कथंभूतम्। सर्वतः श्रीसुन्दरीभिर्वृतम्। कथंभूताभिः। एतन्मन्त्रमयात्मिकाभिः। पुनः कीदृशम्। अरुणम्। मध्ये त्व ब्रह्मविद्या। कथंभूते मध्ये। बैन्दवसिंहपीठललिते इत्यन्वयः। श्रीचक्रं महात्रिपुरसुन्दर्याः पूजाचक्रम्। श्रुतिमूलकोशः श्रुतीनां वेदानां मूलं प्रणवः। 'ओङ्कारप्रभावा

१. 'र्थे' मूल०. २. 'विरर्थे' मूल०. ३. 'प्रख्यातं' मूल०. ४. 'रभितः' मूल०.

वेदाः' इति वचनात् । तस्य कोशभूतं श्रीचक्रगतमध्यत्रिकोणं तस्य कामकलाक्षरगतबिन्दुत्रयमयत्वात् । बिन्दुत्रयाणां ब्रह्मविष्णुरुद्ररूपत्वात् । 'ब्रह्मबिन्दुर्महेशानि वामा शक्तिरुदीरिता' इति ज्ञानार्णववचनात् । विश्वं वमतीति वामा वामाशक्तिः शब्दार्थसृष्टिकारणत्वेन श्रीचक्रस्य भुविमूलकोशत्वमित्यादिः । इति कारणात् । ते श्रीमहात्रिपुरसुन्दर्याः । संसारचक्रात्मकं संसारचक्रं कालचक्रं देशचक्रं च । श्रीचक्रस्य कालचक्रेण देशचक्रेण च साम्यं तन्त्रराजेऽष्टाविंशतितमे पटले श्रीशिवेन प्रतिपादितम् । यथात्र ग्रन्थगौरवभयान्न लिख्यते । यैरेव मूलविद्याक्षरैः श्रीचक्रं प्रसृतं तैरेवाक्षरैः संसारचक्रं प्रसृतमिति ज्ञानार्णवोक्तिः । यथा—'लकारात्पृथिवी जाता सशैलवनकानना । पञ्चाशत्पीठसंपन्ना सर्वतीर्थमयी परा ॥ सर्वगह्वामयी सर्वक्षेत्रस्थानमयी शिवे । सकाराचन्द्रतारादिग्रहराशिस्वरूपिणी ॥ हकाराच्छिवसंवाय्यव्योममण्डलसंस्थिता । ईकाराद्विश्वकर्त्रीयं माया तुर्यात्मिका प्रिये ॥ एकाराद्वैष्णवी शक्तिर्विश्वपालनतत्परा । रकारात्तेजसा युक्ता परज्योतिःस्वरूपिणी ॥ ककारात्कामदा कामरूपिणी स्फुरदव्यया । अर्धचन्द्रेण देवेशि विश्वयोनिरितीरिता । बिन्दुना शिवरूपेण शून्यरूपेण साक्षिणी ॥' इति । एवं संसारचक्रात्मकता मूलविद्यायास्तदात्मकता श्रीचक्रस्येति वा साम्यम् । विख्यातं प्रसिद्धम् । तदधिष्ठिताक्षरशिवज्योतिर्मयम् । तदधिष्ठितानि श्रीचक्राधिष्ठितानि यान्यक्षराणि तान्येव बीजभूतास्तत्तदावरणदेवतादिभूतवर्णास्त एव शिवाः । अणिमासिद्ध्यादयः कामाकर्षिण्यादयः । अनङ्गकुसुमादयः सर्वसंक्षोभिण्यादयः सर्वसिद्धिप्रदादयः सर्वज्ञादयः । वशिन्यादयः कामेश्वर्यादय एव ज्योतींषि तन्मयं तत्प्रचुरं सर्वतः श्रीचक्रमभिव्याप्य एतन्मन्त्रमयात्मिकाभिः एतद्विद्याक्षरप्रसृताभिः । लकाराच्चतुरस्रं सदैवतं प्रसृतम्, सकारात् षोडशदलं सदैवतम्, हकारादष्टदलं सदैवतम्, ईकाराच्चतुर्दशारं सदैवतम्, एकाराद्बहिर्दशारं सदैवतम्, रकारादन्तर्दशारं सदैवतम्, ककारादष्टकोणं सदैवतम्, अर्धेन्दोस्त्रिकोणं सदैवतम्, बिन्दोर्बैन्दवमिति मूलविद्यानवाक्षरैः संपूर्णं श्रीचक्रं सावरणं प्रसृतमिति मुनेरभिप्रायः । उक्तं च ज्ञानार्णवे—'लकारः पृथिवीबीजं तेन भूबिम्बमुच्यते । सकारश्चन्द्रमा भद्रे कलाषोडशात्मकः ॥ तस्मात् षोडशपत्रं च हकारः शिव उच्यते । अष्टमूर्तिः सदा भद्रे तस्मादष्टदलं भवेत् ॥ ईकारस्तु सदा माया भुवनानि चतुर्दश । पालयन्ती परा तस्माच्चक्रकोणं भवेत्प्रिये ॥ शक्तिरेकादशस्थाने स्थित्वा सूते जगत्त्रयम् । विष्णोर्योनिरिति ख्याता सा विष्णोर्दशरूपकम् ॥ एकारात्परमेशानी चक्रं व्याप्य विजृम्भिता । दशकोणकरं तस्माद्रकारो ज्योतिरव्ययः ॥ कठादशान्वितो वह्निर्दशकोणप्रवर्तकः । ककारान्मदनो देवि शिवं चाष्टस्वरूपकम् ॥ योनिवदवं तदा चक्रं वसुयोन्यङ्कितं भवेत् । अर्धमात्रा गुणान्सूते नादरूपा यतस्ततः ॥ त्रिकोणरूपा योनिस्तु बिन्दुना बैन्दवं भवेत् । कामेश्वरस्वरूपं तद्विश्वाधारस्वरूपकम् । श्रीचक्रं तु वरारोहे श्रीविद्यावीर्यसंभवम् ॥' इति । अरुणं बालार्कप्रभम् । श्रीसुन्दरीभिर्वृतं श्रिया सौन्दर्येण सुन्दर्यः श्रीसुन्दरीमायाः । श्रीसुन्दर्याः पञ्चमहाशवसंनद्धसिंहासनं कामेश्वराङ्कोपवेशनमिति विशेषः । वृतं परिवेष्टितम् । मध्ये मध्यत्रिकोणमध्ये । बैन्दवसिंहपीठललिते बैन्दवं बिन्दुचक्रं तत्र सिंहासनं पूर्वोक्तरूपं तेन

ललिते निरुपमशोभान्विते । त्वं श्रीमहात्रिपुरसुन्दरी । ब्रह्मविद्या परब्रह्मात्मिका । शिवे कल्याणरूपे ॥

अतः परं पूर्णाभिषेकसिद्धेन साधकेन श्रीचक्रावरणपूजानन्तरं परापूजाया अवश्यकर्तव्यत्वाद्विद्योद्धारं करोति—

बिन्दुप्राणविसर्गजीवसहितं बिन्दुत्रिबीजात्मकं
षट् कूटानि विपर्ययेण निगदेत्तारत्रिबालावलैः ।
एभिः संपुटितं प्रजप्य विहरेत्प्रासादमन्त्रं परं
गुह्याद्गुह्यतमं सयोगजनितं सद्भोगमोक्षप्रदम् ॥ २९ ॥

बिन्दुः पञ्चदशस्वरः प्राणः हकारादिः विसर्गः क्रिमन्त्यस्वरः जीवः सकारः सहितमेभिर्मिलित हंस इति पदं बिन्द्वात्मकं हंस इति त्रिबिन्द्वात्मकम् । बिन्द्वादिकं विसर्गादिकं बिन्दुविसर्गादिकं चेति । त्रीणि कूटान्यनुक्रमेण व्युत्क्रमेणाप्येतान्येव त्रीणीति एवं षट् कूटानि । यथा—आदौ पञ्चदशस्वरः हंसः १, षोडशस्वरः सोऽहम् २, अं हंसः. अः सोऽहम् इति षड्भिरक्षरैः ३, विपर्ययेण विलोमेन तृतीयं द्वितीयं प्रथमं चेति कूटानि निगदेत् उच्चरेत् । तारत्रिबालावलैः तारत्रयं प्रणवमाया श्रीबीजानि बाला वाग्भवकामराजशक्तिबीजानि षड्बीजं खेचरात्मकम् । एभिः सप्तबीजैः । संपुटितमनुलोमविलोमेन गर्भीकृतम् । प्रजप्य यथेष्टसंख्यां समाप्य । विहरेत्सुखमनुभवेत् । प्रासादमन्त्रं हौमिति बीजं परा प्रासादप्रासादपराख्यम् । परं पराबीजं हकारं सयोजितमिति ज्ञेयम् । उत्कृष्टं गुह्याद्गुह्यतमम् । गोप्याद्गोप्यतरम् । सयोगजनितं सकारसंयोजितम् । सद्भोगमोक्षप्रदं समीचीना भोगाः स्रक्चन्दनवनितागजतुरगारोहराजमान्यतादिकाः मोक्षं च प्रयच्छतीति । एतदुक्तं भवति—क्रमेण पूर्वोक्तानि सप्त बीजानि, ततः क्रमेणैवोक्तानि त्रीणि कूटानि ततः ह्सौं ह्सौः पुनर्व्युत्क्रमेण त्रीणि कूटानि ततो व्युत्क्रमेणैवोक्तसप्तबीजानि इति महापराप्रासारविद्या । अयं श्लोकः क्षेपक इति भासते । मुनिनातिगोप्यत्वाद्विद्याक्षराणां प्रभाव एव वर्णितः । स्फुटतयोद्धारो न कृतः । मया संप्रदायशुद्धत्वादत्र व्याख्यातः ॥

अतः परं श्रीत्रिपुरसुन्दरीं सर्वाभरणभूषितां बिन्दुचक्रसिंहासनोपविष्टां महाराजोपचारैराराधितां मुनिः प्रार्थयति—

आताम्रार्कसहस्रदीप्तिपरमा सौन्दर्यसारैरलं
लोकातीतमहोदयैरुपयुता सर्वोपमागोचरैः ।
नानानर्घ्यविभूषणैर्गणितैर्जाज्वल्यमानाभितः
श्रीमातस्त्रिपुरारिसुन्दरि कुरु स्वान्ते निवासं मम ॥ ३० ॥

हे श्रीमातः हे त्रिपुरारिसुन्दरि, त्वं मम स्वान्ते निवासं कुरु । स्थिरीभूता स्थित । भग-

---

१. 'क्षेपकः' मूल०. २. 'रश्मि:' मूल०. ३. 'स्वगतं' मूल०. ४. 'गणितैः' मूल०.

णितैर्नानानर्घ्यविभूषणैरलं यया सा तया उपयुता सती अभितो जाज्वल्यमाना । पुनः कथंभूता । आताम्रार्कसहस्रदीप्तिपरमा । कथंभूतैर्विभूषणैः । सौन्दर्यसारैः । पुनः कथंभूतैः । लोकातीतमहोदयैः । पुनः कीदृशैः । सर्वोपमागोचरैरित्यन्वयः । आताम्रार्कसहस्रदीप्तिपरमा आताम्रार्का बालार्कास्तेषां सहस्रं तस्य दीप्तिः कान्तिस्तया परमा सर्वोत्कृष्टा । सौन्दर्यसारैः सौन्दर्यमन्थनोद्भवैः । अलं पूर्णम् । लोकातीतमहोदयैर्लोकातीतो लोकोत्तरो महोदय उत्कर्षो येषाम् । मातर्जननि । त्रिपुरारिसुन्दरि त्रिपुरारिः शिवस्तस्य सुन्दरी मनोहरा । कुरु विधेहि । स्वान्ते हृदये । निवासं विश्रामम् । मम त्वदाराधकस्य ॥

पूर्वश्लोकेन श्रीमहात्रिपुरसुन्दर्याः समुदायरूपेण भूषणान्यभिधायेदानीं नानापुष्पालंकारवसनाभूषितायाः परमसौभाग्यशालिन्या दृष्टिगोचराङ्गभूषणानि महायोगीश्वरश्चरणमारभ्य मुकुटान्तानि प्रस्तौति—

शिञ्जन्नूपुरपादकङ्कणमहामुद्रासुलाक्षारसा-
लंकाराङ्कितमङ्घ्रिपङ्कजयुगं श्रीपादुकालंकृतम् ।
उद्भास्वन्नखचन्द्रखण्डरुचिरं राजज्जपासंनिभं
ब्रह्मादित्रिदशासुरार्चितमहं मूर्ध्नि स्मराम्यम्बिके ॥ ३१ ॥

हे अम्बिके, तेऽङ्घ्रियुगमहं मूर्ध्नि स्मरामि । कथंभूतम् । शिञ्जन्नूपुरपादकङ्कणमहामुद्रासुलाक्षारसालंकाराङ्कितम् । पुनः कथंभूतम् । श्रीपादुकालंकृतम् । पुनः कीदृशम् । उद्भास्वन्नखचन्द्रखण्डरुचिरम् । पुनः कीदृशम् । राजज्जपासंनिभम् । पुनः कीदृशम् । ब्रह्मादित्रिदशासुरार्चितमित्यन्वयः । शिञ्जन्निति शिञ्जन्नूपुरे पादकङ्कणे च महामुद्राश्च सुलाक्षारसश्च तैरलंकारितम् अङ्कितं च । अङ्घ्रिपङ्कजयुगं चरणकमलद्वन्द्वम् । श्रीपादुकालंकृतं श्रीपादुके चिन्तामणिरचिते ताभ्यामलंकृतं भूषितम् । उद्भास्वन्निति उद्[1]र्ध्वं भास्वन्ति प्रकाशमानानि नखान्येव चन्द्रखण्डानि तै रुचिरं सुन्दरम् । राजज्जपासंनिभं राजज्जपा नूतनजपापुष्पाणि तैः सदृशी निभा यस्य । ब्रह्मादीति ब्रह्मादयो ब्रह्मविष्णुरुद्रास्त्रिदशा इन्द्रादयः, असुरा दैत्याः, तैरर्चितं समाराधितम् । अहं तवाराधकः । मूर्ध्नि मस्तके । स्मरामि भावयामि । अम्बिके जननि ॥

इदानीं परदेवतायाः सुभूषितं सुपूजितं नितम्बबिम्बमभिष्टौति—

आरक्तच्छविनातिमार्दवयुजा निश्वासहार्येण सं-
त्कौशेयेन विचित्ररत्नखचितैर्मुक्ताफलैरुज्ज्वलैः ।
कूजत्काञ्चनकिङ्किणीभिरभितः संनद्धकाञ्चीगुणे-
रादीप्तं मुनितम्बबिम्बमरुणं ते पूजयाम्यम्बिके ॥ ३२ ॥

हे अम्बिके, ते मुनितम्बबिम्बमहं पूजयामि । कथंभूतम् । अरुणम् । पुनः कथंभू-

१. 'भासुर' मूल०. २. 'भिपूजित' मूल०. ३. 'यत्' मूल०.

तम् । सत्कौशेयेन मुक्ताफलैः काञ्चीगुणैश्च आदीप्तमित्यन्वयः । आरक्तच्छविना आरक्ता छविः कान्तिर्यस्य तेन । अतिमार्दवयुजा अतिकोमलेन । निश्वासहार्येण निश्वासवायुना कम्पनयोग्येन । सत्कौशेयेन समीचीनपट्टवस्त्रेण । विचित्ररत्नखचितैर्विचित्राणि नानाविधानि रत्नानि तैः खचितैर्गुम्फितैः । मुक्ताफलैर्महाकारिकुम्भोद्भवैः । उज्ज्वलैर्दीप्तिमद्भिः । कूजत्काञ्चनकिङ्किणीभिः कूजन्त्यः काञ्चनकिङ्किण्यः क्षुद्रघण्टिकाः । अभितः समन्तात् । संनद्धकाञ्चीगुणैः संनद्धा संघटिता काञ्ची कटिमेखला तस्या गुणैः सूत्रैः । आदीप्तम् अतिशयेन प्रकाशमानम् । सुनितम्बबिम्बं सुष्ठु मनोहरं नितम्बबिम्बं श्रोणिमण्डलम् । अरुणमारक्तम् । ते श्रीमहात्रिपुरसुन्दर्याः । पूजयामि भावयामि । अम्बिके प्राग्वत् ।

अतः परं चन्दनालिप्तं मणिमालाहारभूषितं ब्रह्मादिकानां स्तन(न्य)पानयोग्यं परदेवताकुचकुम्भद्वयं प्रस्तौति—

कस्तूरीघनसारकुङ्कुमरजोगन्धोत्कटैश्चन्दनै-
राल्प्तिं मणिमालयातिरुचिरं ग्रैवेयहारादिभिः ।
दीप्तं दिव्यविभूषणैरगणितैर्ज्योतिर्विभास्वत्कुच-
व्याजस्वर्णघटद्वयं हरिहरब्रह्मादिपीतं भजे ॥ ३३ ॥

हे जननि, ते कुचव्याजस्वर्णघटद्वयमहं भजे इत्यन्वयः । कस्तूरी मृगमदः, घनसारः अगरुसत्वं कर्पूरो वा, कुङ्कुमं काश्मीरप्रभवम्, एतेषां रजोगन्धैरुत्कटानि तैः । चन्दनैर्मलयजैः । आलिप्तम् आसमन्तात् प्रलेपितम् । मणिमालया वज्रवैडूर्यादिनिर्मितया । अतिरुचिरमत्यन्तभास्वरम् । ग्रैवेयहारादिभिः ग्रैवेयं कण्ठभूषणम्, हारो गजमौक्तिकनिर्मितः तदादिभिः । दीप्तं प्रकाशमानम् । दिव्यभूषणैर्विश्वकर्मणा रचितैः । अगणितैरपरिमितैः । ज्योतिर्विभास्वत् ज्योतिरिव प्रकाशमानम् । कुचव्याजस्वर्णघटद्वयं कुचव्याजेन स्तनमिषेण स्वर्णघटद्वयम् । हरिहरब्रह्मादिपीतं तेषामेव तत्पानाधिकारित्वात् । भजे भावयामि ॥

अतः परं परदेवताया बाहुचतुष्टयं सुभूषितं कण्ठदेशं च प्रस्तौति—

मुक्तारत्नविचित्रकान्तिललितैस्ते बाहुवल्लीरहं
केयूराङ्गदबाहुदण्डवलयैर्हस्ताङ्गुलीभूषणैः ।
संपृक्ताः कलयामि हीरमणिमन्मुक्तावलीकीलित-
ग्रीवापट्टविभूषणेन सुभगं कण्ठं च कम्बुश्रियम् ॥ ३४ ॥

हे देवि, ते बाहुवल्लीः कण्ठं च, अहं कलयामि । कथंभूता बाहुवल्लीः । केयूराङ्गदबाहुदण्डवलयैर्हस्ताङ्गुलीभूषणैश्च संपृक्ताः । कथंभूतैर्बाहुदण्डवलयैः । मुक्तारत्नविचित्रकान्तिललितैः । कथंभूतं कण्ठम् । हीरमणिमन्मुक्तावलीकीलितग्रीवापट्टविभूषणेन सुभगम् । पुनः कथंभूतं कण्ठम् । कम्बुश्रियमित्यन्वयः । मुक्ता प्राग्वत् । रत्नानि हीरादीनि तेषां

१. 'जननि ते' मूल०. २. 'दीप्तम' मूल०. ३. 'मणिनिर्मुक्तावल्यर्पाहत' मूल०.

विचित्रा नानावर्णा कान्तिरछविस्तया ललितैर्मनोहरैः । ते श्रीमहात्रिपुरसुन्दर्याः । बाहुवल्लीश्चतुर्हस्तलताः । अहं त्वदाराधकः । केयूराङ्गदबाहुदण्डवलयैः केयूरा मणिबन्धनधारणयोग्याः,अङ्गदाः कूर्परोपरितनभागधारणयोग्याः, बाहुदण्डवलयानि हस्तकटकानि कङ्कणानि च तैः । हस्ताङ्गुलीभूषणैर्हस्ताङ्गुलीनां भूषणानि मुद्रिकादीनि तैः । संपृक्ताः संयुक्ताः । कलयामि प्राग्वत् । हीरमणिमन्मुक्तावली वज्रगुलिकायुक्ता मुक्तावली तया कीलितं जडीकृतं ग्रीवापट्टविभूषणं तेन सुभगं कण्ठो गलदेशः । चः समुच्चये । कम्बुश्रियं कम्बुः शङ्खः तद्वच्छ्रीः शोभा यस्य ॥

अतःपरं देवतायाः सुप्रसन्नाया श्रीवदनं प्रस्तौति—

उद्यत्पूर्णकलानिधिश्रिवदनं भक्तप्रसन्नं सदा
संफुल्लाम्बुजपत्रकान्तिसुषमाधिक्कारदक्षेक्षणम् ।
सानन्दं कृतमन्दहासमसकृत्प्रादुर्भवत्कौतुकं
कुन्दाकारसुदन्तपङ्क्तिशशिभापूर्णं स्मराम्यम्बिके ॥ ३५ ॥

हे अम्बिके, ते वदनम् अहं स्मरामि । कथंभूतम् । सदा भक्तप्रसन्नम् । पुनः कथंभूतम् । संफुल्लाम्बुजपत्रकान्तिसुषमाधिक्कारदक्षेक्षणम् । पुनः कथंभूतम् । असकृत्सानन्दं यथा स्यात्तथा कृतमन्दहासम् । पुनः कीदृशम् । प्रादुर्भवत्कौतुकम् । पुनः कीदृशम् । कुन्दाकारसुदन्तपङ्क्तिशशिभापूर्णमित्यन्वयः । उद्यदुदयं प्राप्तः पूर्णकलानिधिः परिपूर्णपूर्णिमाचन्द्रस्तस्य श्रीः शोभा यस्य । भक्तप्रसन्नं भक्तानामुपासकानां प्रसन्नं वाञ्छितार्थसूचकम् । सदा निरन्तरम् । संफुल्लं विकसितमम्बुजं कमलं तस्य पत्राणां कान्तिः······ सुषुमा परमा शोभा तस्या धिक्कारे दक्षं समर्थमीक्षणं यस्य । सानन्दं यथा स्यात्तथा कृतमन्दहासं कृतः प्रकटितो मन्द ईषद् हासो येन । असकृद्वारंवारम् । प्रादुर्भवत्कौतुकं प्रद्योतितकुतूहलम् । कुन्दाकारा कुन्दकलिकाश्रेणिसमाना । सुदन्तपङ्क्तिः सुषमा शोभना दन्तानां पङ्क्तिः अरावलिर्यस्याः । शशिन इव भा प्रभा तया पूर्णं व्याप्तम् । स्मरामि प्राग्वत् ॥

अतः पर परदेवतायाः सुभूषितं कर्णयुगं नासाग्रभागं च प्रस्तौति—

तप्तस्वर्णकृतोरुकुण्डलयुगं माणिक्यमुक्तोल्लस-
द्धीरावद्धमनन्यतुल्यमपरं हैमं च चक्रद्वयम् ।
शुक्राकारनिकारदक्षममलं मुक्ताफलं सुन्दरं
बिभ्रत्कर्णयुगं भजामि ललितं नासाग्रभागं शिवे ॥ ३६ ॥

हे शिवे, तव नासाग्रभागं कर्णयुग च अहं भजे । कथंभूतं नासाग्रभागम् । अमलं सुन्दरं ललितं मुक्ताफलं बिभ्रत् । कथंभूतं मुक्ताफलम् । शुक्राकारनिकारदक्षम् । कथं-

१. 'निधीन्दु' मूल०. २. 'चित्र' मूल०.

भूतं कर्णयुगम्। ततस्त्वर्णकृतोरुकुण्डलयुगम्। अनन्यतुल्यं हैमं चक्रद्वयं च दधत्। कथंभूतम्। माणिक्यमुक्तोल्लसद्धीरावद्धमपरमित्यन्वयः। तसमनलाहतं स्वर्णं जाम्बूनदं तेन कृतं निर्मितम् उरु विस्तीर्णं कुण्डलयुगं ताटङ्कयुगलम्। माणिक्यानि मुक्ताश्च तैरुल्लसद्धीराबद्धम्। अनन्यतुल्यमन्येन ताटङ्कयुगेन न तुल्यं तस्माद्विलक्षणम्। अपरं द्वितीयम्। हैमं प्राग्वत्। चः समुच्चये। चक्रद्वयं वर्तुलाकारं कर्णोर्ध्वभूषणम्। शुक्राकारस्य निकारे धिक्कारे दक्षं समर्थम्। अमलं निर्मलम्। मुक्ताफलं गजकुम्भोद्भवम्। सुन्दरम्। बिभ्रद् दधत्। कर्णयुगम्। भजामि प्राग्वत्। ललितं मनोहरम्। नासाग्रभागम्। शिवे॥

अतः परं परदेवताया वेणिका प्रस्तौति—

जातीचम्पककुन्दकेसररजोगन्धोत्किरत्केतकी-
नीपाशोकशिरीषमुख्यकुसुमैः प्रोत्तंसिता धूपिता।
आनीलाञ्जनतुल्यमत्तमधुपश्रेणीव वेणी तव
श्रीमातः श्रयतां मदीयहृदयाम्भोजं सरोजालये॥ ३७॥

हे सरोजालये, हे श्रीमातः, तव वेणी मदीयं हृदयाम्भोजं श्रयताम्। कथंभूता वेणी। जातीचम्पककुन्दकेसररजोगन्धोत्किरत्केतकीनीपाशोकशिरीषमुख्यकुसुमैः प्रोत्तंसिता धूपिता च। आनीलाञ्जनतुल्यमत्तमधुपश्रेणीवेत्यन्वयः। श्लोकार्थः स्पष्ट एव॥

अतः परं परदेवतायाः सुपूजितं सुभूषितं मस्तकमभिस्तौति—

लेखालम्ब्यविचित्ररत्नखचितं हैमं किरीटोत्तमं
मुक्ताकाञ्चनकिंकिणीगणमहाहीरप्रबोधोज्ज्वलम्।
चञ्चच्चन्द्रकलाकलापललितं देवद्रुपुष्पार्चितं
माल्यैरम्ब विलम्बितं सुशिखरं बिभ्रच्छिरस्ते भजे॥ ३८॥

हे मातः, ते शिरो भजे। हैमं किरीटोत्तमं बिभ्रत्। कथंभूत किरीटोत्तमम्। लेखालम्ब्यविचित्ररत्नखचितम्। पुनः कथंभूतम्। मुक्ताकाञ्चनकिंकिणीगणमहाहीरप्रबोधोज्ज्वलम्। पुनः कीदृशम्। चञ्चच्चन्द्रकलाकलापललितम्। सुशिखरं चेत्यन्वयः। लेखालम्ब्यम् अतिनिबिडं यथा स्यात्तथा विचित्ररत्नैर्नानावर्णैः खचितं मण्डितम्। हैमं जाम्बूनदरचितम्। किरीटोत्तमं ब्रह्मादिस्थानां किरीटापेक्षया। मुक्ता गजमुक्ताः, काञ्चनकिंकिणीगणः

1. 'शिरः के' मूल०. २. एतच्छ्लोकस्थाने मूलपुस्तके श्लोकद्वयमिदमन्यदृश्यते—'उल्लसित च सुवर्णरत्नकलित पूर्णेन्दुबिम्बाकृतिच्छत्रं मौक्तिकरत्नचित्रखचितं क्षौमांशुकोत्पादितम्। मुक्ताजालविलम्बितं सकलश नानाप्रसूनाङ्कितं चन्द्रोग्रामरचामरान्वितं धत्ते धौरेवि ते स्तःश्रियः॥ १॥ विद्यामन्त्ररहस्यविन्मुनिगणैः सूतोपचार्यर्चनां वेदान्तधुरीणादिमानवर्तितां वेदान्ततत्त्वाभिधाम्। सर्वास्ता हि तुरीयनामसुरगणास्त्वद्रूपमेदैः परास्ता नित्यं समुपासते स्वविभवैः श्रीचक्रनाथे शिवे॥ २॥'

सुवर्णरचितः क्षुद्रघण्टिकासमूहः, तेन सह यो हीरप्रबन्धस्तेनोज्ज्वलं प्रकाशमानम् । चञ्चत्प्रद्योतत्(मानः) चन्द्रकलानां कलापः समूहः, तेन ललितं मनोहरम् । देवद्रुपुष्पार्चितं कल्पद्रुमकुसुमपूजितम् । माल्यैः पुष्पमालाभिः । अम्ब मातः । विलम्बितं लम्बायमानम् । सुशिखरं सुष्ठु शिखरं कोऽग्रभागम् । बिभ्रत् दधत् । शिरः मस्तकम् । ते श्रीमहात्रिपुरसुन्दर्याः । भजे प्राग्वत् ॥

अतः परं परदेवतायाः समालं साधरयुगं वपुः प्रस्तौति—

शृङ्गारादिरसालयं त्रिभुवनैर्माल्यैरतुल्यैर्युतं
सर्वाङ्गीणसदङ्गरागसुरभि श्रीमद्वपुर्धूपितम् ।
ताम्बूलारुणपल्लवाधरयुतं रम्यं त्रिपुण्ड्रं दध-
द्भालं नन्दनचन्दनेन जननि ध्यायामि ते मङ्गलम् ॥ ३९ ॥

हे जननि, तव वपुः, भालं च अहं ध्यायामि । कथंभूतम् । शृङ्गारादिरसालयम् । पुनः कथंभूतम् । त्रिभुवनैरतुल्यैर्माल्यैर्युतम् । पुनः कीदृशम् । सर्वाङ्गीणसदङ्गरागसुरभि । पुनः कीदृशम् । श्रीमत् । पुनः कथंभूतम् । धूपितम् । पुनः कीदृशम् । ताम्बूलारुणपल्लवाधरयुतम् । कथंभूतं भालम् । नन्दनचन्दनेन रम्यं त्रिपुण्ड्रं दधत् । मङ्गलमित्यन्वयः । शृङ्गाररसादिनवरसानामालयं निवासस्थानम् । त्रिभुवनैः त्रिभुवने जातानि त्रिभुवनानि तैः । ऋद्धिर्वैकल्पिकात्र । माल्यैः पुष्पैः । अतुल्यैर्निरुपमैः । युतं युक्तम् । सर्वाङ्गवर्ती सदङ्गरागः समीचीनोऽङ्गरागस्तेन सुरभि । श्रीमत् श्रीः शोभा विद्यते यस्य । वपुः स्वरूपम् । धूपितं धूपवासितम् । ताम्बूलेन अरुण आरक्तः पल्लवः अग्रभागो यस्यैतादृशेनाधरेण युतं सहितम् । रम्यं सुन्दरम् । त्रिपुण्ड्रं तिलकम् । दधत् । भालं ललाटम् । नन्दनचन्दनेन नन्दनवनोद्भवचन्दनेन । जननि । ध्यायामि भावयामि । ते श्रीपरदेवतायाः । मङ्गलं मङ्गलरूपम् ॥

अतः परं परदेवताया ध्यानस्य फलमाह—

एवं यः स्मरति प्रवुद्धसुमतिः श्रीमत्स्वरूपं परं
वृद्धोऽप्याशु युवा भवत्यनुपमः स्त्रीणामनङ्गायते ।
सोऽष्टैश्वर्यतिरस्कृताखिलसुरः श्रीजृम्भितात्मालयः
पृथ्वीपालकिरीटकोटिवलभीपुष्पार्चिताङ्घ्रिर्भवेत् ॥ ४० ॥

हे परदेवते, श्रीमत्स्वरूपमेवं यः स्मरति स वृद्धोऽपि युवा भवति, स्त्रीणां चानङ्गायते, अष्टैश्वर्यतिरस्कृताखिलसुरः श्रीजृम्भितात्मालयश्च भवति, पृथ्वीपालकिरीटकोटिवलभीपुष्पार्चिताङ्घ्रिर्भवेदित्यन्वयः । एवम् अमुना प्रकारेण । यः साधकः । स्मरति भावयति । प्रबुद्धसुमतिः प्रबुद्धा प्रकर्षं प्राप्ता सुमतिर्यस्य । श्रीमत्स्वरूपं श्रीमत्यास्तव स्वरूपं सावयवम् ।

१. 'भुवनी' मूल०. २. 'वलिभिः' मूल०. ३. 'ङ्घ्रिद्वयः' मूल०.

परं परमसुन्दरम्। वृद्धोऽपि गलितेन्द्रियोऽपि। आशु स्वल्पकालेन। युवा तरुणप्रायः। भवति स्यात्। अनुपमः पुरुषार्थेन। स्त्रीणां यौवनोद्धतानाम्। अनङ्गायते सौन्दर्येण स्वरूपध्यानरतः। अष्टैश्वर्यम् अणिमादिकं गजाश्वादिकं च तेन कृत्वा तिरस्कृता लघ्वीं प्रापिता अखिलाश्च ते सुराश्च एतादृशः सन्। श्रिया संपत्त्या जृम्भितं प्रोल्लसितं आत्मनः स्वकीयमालयं मन्दिरं येन। पृथ्वीपालाः राजानस्तेषां किरीटानां मुकुटानां कोटिषु शिखरेषु वलभ्यः स्वेष्टदेवताप्रसादगर्भितदीर्घाकारस्वर्णभूषणानि तदुपरितनपुष्पैरर्चितौ पूजितौ अङ्घ्री चरणौ यस्य। भवेत् स्यात्॥

अतः परं देव्यायुधचिन्तनस्य फलमाह—

अथ तव धनुः पुंण्ड्रेक्षुकृत्प्रसिद्धमतिद्युतिं
त्रिभुवनवधूर्मुद्यज्ज्योत्स्नाकलानिधिमण्डलम्।
सकलजननि स्मारं स्मारं गतः स्मरतां नर-
स्त्रिभुवनवधूमोहाम्भोधेः प्रपूर्णविधुर्भवेत्॥ ४१॥

हे सकलजननि, तव पुण्ड्रेक्षुकृद्धनुः त्रिभुवनवधूं प्रति उद्यज्ज्योत्स्नाकलानिधिमण्डलं भवति इति प्रसिद्धम्। कथंभूतं धनुः। अतिद्युति।...... नरः स्मारं स्मारं स्मरतां गतः सन् त्रिभुवनवधूमोहाम्भोधेः प्रपूर्णविधुर्भवेदित्यन्वयः। अथ अपरं च। तव श्रीमहात्रिपुरसुन्दर्याः। धनुः। पुण्ड्रेक्षुनिर्मितम्। प्रसिद्धं विख्यातम्। अतिद्युति भूरिकीर्तिमत्। त्रिभुवनवधूं प्रति उद्यज्ज्योत्स्नया कलानिधेश्चन्द्रस्य मण्डलं बिम्बं विरहोत्पादकम्। सकलजननि विश्वमातः। स्मारं स्मारं स्मरन् स्मरन्। गतः प्राप्तः। स्मरतां कन्दर्पताम्। नरं उपासकः। त्रिभुवनवधूनां सुरनरनागस्त्रीणाम्। मोहरूपसमुद्रस्य वृद्धिकरः प्रपूर्णविधुः पूर्णिमाचन्द्र एव स्यात्॥

प्रसूनशरपञ्चकर्भकटजृम्भणागुम्फितं
त्रिलोकमवलोकयत्यमलचेतसा चिन्तयन्।
अशेषरमणीजनस्मरविजृम्भणे यः सदा
पटुर्भवति ते शिवे त्रिजगदङ्गनाक्षोभणे॥ ४२॥

हे शिवे, यस्त्रिलोकं प्रसूनशरपञ्चकप्रकटजृम्भणागुम्फितम् अमलचेतसा आलोकयति सोऽशेषरमणीजनस्मरविजृम्भणे त्रिजगदङ्गनाक्षोभणे च पटुर्भवतीत्यन्वयः। प्रसूनानि पङ्कजादीनि। उक्तं च तन्त्रराजे—'कमलं कैरवं रक्तकह्लारेन्दीवरे तथा। सहकारमिति प्रोक्तं पुष्पपञ्चकमीश्वरि॥' इति। तान्येव शरा बाणास्तेषां पञ्चकं तस्य प्रकटं

१. छन्दोभङ्गादिदूषणमस्तोऽन्वयं पाठश्चिकानुरोधात्स्थापितः. 'पुष्पं कृत्वा' मूल०. २. 'मोदज्यो' मूल०. ३. 'म्भोधिप्रपूर्ण' मूल०. ४. 'प्रगटगुम्भणागुम्फितं' मूल०. ५. 'पचलन्' मूल०. ६. 'स्मर' मूल०.

स्फुटं जृम्भणं विकसनं तत्र आगुम्फितम् एतादृशं त्रिलोकमवलोकयति पश्यति । अमलधवलया स्थिरान्तःकरणेन । चिन्तयन् भावयन् । अशेषरमणीजनस्मरविजृम्भणे सकलस्त्रीजनस्मरविजृम्भणे । यः साधकः । सदा निरन्तरम् । पटुः समर्थः । भवति । ते परदेवतायाः । शिवे कल्याणरूपे । त्रिजगदङ्गनानां क्षोभणे वशीकरणे ॥

अतः परं पाशचिन्तनप्रभावं प्रतिपादयति—

पाशं प्रपूरितमहासुमतिप्रकाशो
यो वा तव त्रिपुरसुन्दरि सुन्दरीणाम् ।
आकर्षणेऽखिलवशीकरणे प्रवीणं
चित्ते दधाति स जगत्त्रयवश्यकृत्स्यात् ॥ ४३ ॥

हे महात्रिपुरसुन्दरि, अथ च यस्तव पाशं चित्ते दधाति, स प्रपूरितमहासुमतिप्रकाशः सन् जगत्त्रयवश्यकृत्स्यात् । कथंभूतं तव पाशम् । सुन्दरीणामाकर्षणे अखिलवशीकरणे च प्रवीणम् । इत्यन्वयः । अर्थः स्पष्ट एव ॥

अतः परमङ्कुशप्रभावं प्रतिपादयति—

यः स्वान्ते कलयति कोविदस्त्रिलोकस्तम्भारम्भणचणमत्युदारवीर्यम् ।
मातस्ते विजयमहाङ्कुशं सयोषान्देवान्स्तम्भयति च भूभुजोऽन्यसैन्यम्॥४४॥

हे मातः, यस्ते विजयमहाङ्कुशं स्वान्ते कलयति स सयोषान् देवान् स्तम्भयति, भूभुजः स्तम्भयति, अन्यसैन्यं च स्तम्भयति । कथंभूतः सः । कोविदः । कथंभूतं विजयमहाङ्कुशम् । त्रिलोकस्तम्भारम्भणचणम् । पुनः कथंभूतम् । अत्युदारवीर्यमित्यन्वयः । यः साधकः । स्वान्ते हृदये । कलयति चिन्तयति । कोविदः विचक्षणः । त्रिलोकस्य स्वर्गमृत्युपातालरूपस्य । स्तम्भः ताटस्थ्यं तस्यारम्भणं कर्तव्यता तत्र चणः दक्षस्तम् । अत्युदारवीर्यम् अत्यन्तमुदारं प्रौढं वीर्यं यस्य तम् । मातर्जननि । ते प्राग्वत् । विजयमहाङ्कुशं विजयप्रदो महाङ्कुशो विजयमहाङ्कुशस्तम् । सयोषान् योषिद्भिः सह वर्तमानान् । देवान् दिवि क्रीडनपरान् । स्तम्भयति स्थगयति । भूभुजः राजानस्तान् । अन्यसैन्यं परसैन्यम् ॥

अतः परं चतुरायुधध्यानस्य विशेषफलमाह—

चापध्यानवशाद्भवोद्भवमहामोहस्य व्युज्जृम्भणं
प्रख्यातं प्रसवेषुचिन्तनवशात्तत्तच्छरव्यं सुधीः ।

१. 'सयोषान्' मूल०. २. 'भूभुजोऽपरसैन्यम्' मूल०. ३ 'चापाद्भया' मूल०. ४ 'तारा-क्षरव्य' मू०.

पाशध्यानवशात्समस्तजगतां मृत्योर्वशत्वं महा-
दुर्गस्तम्भमहाङ्कुशस्य मननान्मायाममेयां तरेत्[1] ॥ ४५ ॥

हे मातः, सुधीः, चापध्यानवशाच्चापध्यानतत्परः सन् भवोद्भवमहामोहस्य भवात्संसाराद्युद्भवो यस्यैतादृशो महामोहस्तस्य व्युज्जृम्भणं विगतमुज्जृम्भणं प्रसरणं यस्मात्तत्तथा करोति इति प्रख्यातं प्रसिद्धम्। प्रसवेषुचिन्तनवशात् पुष्पबाणभावनापरः सन् यद्यचिन्तयति, तत्तत् शरव्यं लक्ष्यं करोति। पाशध्यानवशात् पाशचिन्तनतत्परः सन् समस्तजगतां सकलाहितानां मृत्योः कालस्य वशत्वं नयति। दुर्गस्तम्भमहाङ्कुशस्य मननात् निरन्तरं चिन्तनादमेयां मायां तरेत्॥

अतः परं पूर्वं द्वाविंशतितमश्लोके 'त्वद्रूपस्य गुरोर्मुखारविन्दविवराद्दीक्षां संप्राप्य मुक्तो भवेत्' इत्युक्तम्, चतुर्विंशतितमश्लोके 'त्वां गुरुमभ्युपेत्य त्वामेव कलयेत्तदा मुच्यते' इत्युक्तम्, तर्हि साधकस्य परदेवतातादात्म्यसिद्धिकरं मातृकादिन्यासजालं नोक्तमिति सिंहावलोकनन्यायेनाशङ्कयाह—

न्यासं कृत्वा गणेशग्रहभगणमहायोगिनीराशिपीठैः
पञ्चाशन्मातृकार्णैः सहितबहुकलैरष्टवाग्देवताभिः।
स श्रीकण्ठादियुग्मैर्निजविमलतनौ[2] केशवाद्यैश्च तत्त्वैः
षट्त्रिंशद्भिर्धराद्यैर्भगवति भवतीं यः स्मरेत्स त्वमेव ॥ ४६ ॥

हे भगवति, एवं न्यासं कृत्वा भवतीं यः स्मरेत्स त्वमेवेत्यन्वयः। न्यासं गुरुदर्शितमार्गेण कृत्वा विन्यस्य। गणेशेत्यादिन्यासाः पद्धतिषु स्पष्टाः। निजविमलतनौ निजा स्वकीया विमला पापरहिता तनुः शरीरं तस्याम्। इत्यनेन पापपुरुषदाहादिकृतभू(द्धू)तशुद्धिप्राणप्रतिष्ठादेहन्यासान् कुर्यादिति सूचितम्। अन्योऽर्थः स्पष्ट एव॥

अतः परं परदेवतोपासकस्यैहिकफलमाह—

सुरपतिपुरलक्ष्मीजृम्भणातीतलक्ष्मीः
प्रसरति निजगेहे यस्य दैवं त्वमार्ये।
विविधबहुकलानां पात्रभूतस्य तस्य
त्रिभुवनविदिता सा जृम्भते स्फूर्तिरच्छा[3] ॥ ४७ ॥

हे आर्ये, यस्य त्वं दैवं तस्य निजगेहे सुरपतिपुरलक्ष्मीजृम्भणातीतलक्ष्मीः प्रसरति। किं च तस्य सा अच्छा स्फूर्तिर्जृम्भते। कथंभूता। त्रिभुवनविदिता। कथंभूतस्य तस्य। विविधबहुकलानां पात्रभूतस्येत्यन्वयः। सुरपतिरिन्द्रस्तस्य पुरममरावती तत्र या लक्ष्मीः संपत्तिस्तस्या जृम्भणं विलासस्तदतीता ततोऽप्यधिकविलासवती। प्रसरति प्रभवति।

१. 'तरे' मूल०. २. 'विमलनिजतनौ' मूल०. ३. 'मुद्र' मूल०. ४. 'रथा' मूल०.

निजगेहे उपासकालये । यस्य यस्य कस्यापि । दैव दैवतम् । त्वं श्रीमहात्रिपुरसुन्दरी । आर्ये श्रेष्ठे । विविधबहुकलानां विविधा नानाचमत्कारकारिण्यो बह्व्योऽनेकाः कलाः विद्यास्तासाम् । पात्रभूतस्य निवासप्रायस्य । तस्य त्वदीयस्य । त्रिभुवनविदिता लोकत्रयविख्याता । सा देव्यनुग्रहप्रसादाज्जृ(त्प्राप्ता)। जृम्भते प्रकाशते । स्फूर्तिश्चमत्कृतिः । अच्छा निर्दोषा ॥

अतः परं मानसार्चनमाह—

मातस्त्वं भूर्भुवः स्वर्महरसि सुतनुस्त्वन्तरिक्षेन्दुसूर्यै-
रात्मा शुक्राग्रेन्द्रैरपि निगममहाब्रह्मभिः प्रोतशक्तिः ।
प्राणापानादियुक्तैः कलयति सकलं मानसं ध्यानयोगं
येषां तेषां सपर्या भवति सुरकृता ब्रह्मता योगिनां च ॥ ४८ ॥

अयं श्लोकः पाठभ्रमान्मया न व्याख्यातः । शिष्टैर्विचारणीयः ॥

अतः परं सविनयं देवीं प्रार्थयति—

क्व मे बुद्धिर्वाचा परमविदुषो मन्दसरणिः
क्व ते मातर्ब्रह्मप्रमुखविबुधस्याप्तवचसाम् ।
अभून्मे विस्फूर्तिः परतरमहिम्नस्तवनुतिः
प्रसिद्धं क्षन्तव्यं बहुलतरचापल्यमिति मे ॥ ४९ ॥

हे मातः, इति कारणात् कर्म प्रसिद्धं बहलतरचापल्यं क्षन्तव्यम् । इतीति किम् । मे मतिः क्व, मे वाचापि क्व, ते परतरमहिम्नस्तवनुतिः क्व । कथंभूता मे मतिः । मन्दसरणिः । कथंभूतस्य मे । परम् अविदुषः । कथभूता स्तवनुतिः । ब्रह्मप्रमुखविबुधस्याप्तवचसां मन्दसरणिः ॥

अतः परं साधकमनोगतं देवीं विज्ञापयति—

प्रसीद परदेवते मम हृदि प्रभूतं भयं
विदारय दरिद्रतां दलय देहि सर्वज्ञताम् ।
विधेहि करुणानिधे चरणपद्मयुग्मं स्वयं
विदारितजरामृति त्रिपुरसुन्दरि श्रीशिवे ॥ ५० ॥

---

१. 'ऋपि' मूल०. २. 'रिक्षस्य धुर्यो राज्ञां शुक्रेन्दुसूर्येन्दुभिरपि निगमा' मूल०. ३. 'धूतसङ्ग' मूल०. ४. 'ब्रह्मविद्येति जन्तोः' मूल०. ५. 'मन्दसरणेः' मूल०. ६. 'स्वान्त' मूल०. ७. 'न्मो' मूल०. ८. 'प्रसीद' मूल०. ९. 'मिह मे' मूल०. १०. 'स्वकं' मूल०. ११. 'विनाशय जरामृती' मूल०.

पाशध्यानवशात्समस्तजगतां मृत्योर्वशत्वं महा-
दुर्गस्तम्भमहाङ्कुशस्य मननान्मायाममेयां तरेत् ॥ ४५ ॥

हे मातः, सुधीः, चापध्यानवशाच्चापध्यानतत्परः सन् भवोद्भवमहामोहस्य भवात्सं-सारादुद्भवो यस्यैतादृशो महामोहस्तस्य न्युज्जृम्भणं विगतमुज्जृम्भणं प्रसरणं यस्मात्तत्तथा करोति इति प्रख्यातं प्रसिद्धम् । प्रसवेषुचिन्तनवशात् पुष्पबाणभावनापरः सन् यद्यचि-न्तयति, तत्तत् शरव्यं लक्ष्यं करोति । पाशध्यानवशात् पाशचिन्तनतत्परः सन् समस्त-जगतां सकलाहितानां मृत्योः कालस्य वशत्वं नयति । दुर्गस्तम्भमहाङ्कुशस्य मननात् निरन्तरं चिन्तनादमेयां मायां तरेत् ॥

अतः परं पूर्वं द्वाविंशतितमश्लोके 'लब्ध्वास्य गुरोर्मुखारविन्दविवराद्दीक्षां संप्राप्य मुक्तो भवेत्' इत्युक्तम्, चतुर्विंशतितमश्लोके 'त्वां गुरुमभ्युपेत्य त्वामेव कलयेत्तदा मुच्यते' इ-त्युक्तम्, तर्हि साधकस्य परदेवतातादात्म्यसिद्धिकरं मातृकादिन्यासजालं नोक्तमिति सिं-हावलोकनन्यायेनाशङ्क्याह—

न्यासं कृत्वा गणेशग्रहभगणमहायोगिनीराशिपीठैः
पञ्चाशन्मातृकार्णैः सहितबहुकलैरष्टवाग्देवताभिः ।
स श्रीकण्ठादियुग्मैर्निजविमलतनौ केशवाद्यैश्च तत्त्वैः
षट्त्रिंशद्भिर्धराद्यैर्भगवति भवती यः स्मरेत्स त्वमेव ॥ ४६ ॥

हे भगवति, एवं न्यासं कृत्वा भवतीं यः स्मरेत्स त्वमेवेत्यन्वयः । न्यासं गुरुदर्शितमा-र्गेण कृत्वा विन्यस्य । गणेशेत्यादिन्यासाः पद्धतिषु स्पष्टाः । निजविमलतनौ निजा स्व-कीया विमला पापरहिता तनुः शरीरं तस्याम् । इत्यनेन पापपुरुषदाहादिकृतभू(भू)तशु-द्धिप्राणप्रतिष्ठादेहन्यासान् कुर्यादिति सूचितम् । अन्योऽर्थः स्पष्ट एव ॥

अतः परं परदेवतोपासकस्यैहिकफलमाह—

सुरपतिपुरलक्ष्मीजृम्भणातीतलक्ष्मीः
प्रसरति निजगेहे यस्य दैवं त्वमार्ये ।
विविधबहुकलानां पात्रभूतस्य तस्य
त्रिभुवनविदिता सा जृम्भते स्फूर्तिरच्छा ॥ ४७ ॥

हे आर्ये, यस्य त्वं दैवं तस्य निजगेहे सुरपतिपुरलक्ष्मीजृम्भणातीतलक्ष्मीः प्रसरति । किं च तस्य सा अच्छा स्फूर्तिर्जृम्भते । कथंभूता । त्रिभुवनविदिता । कथंभूतस्य तस्य । विविधबहुकलाना पात्रभूतस्येत्यन्वयः । सुरपतिरिन्द्रस्तस्य पुरममरावती तत्र या लक्ष्मीः संपत्तिस्तस्या जृम्भणं विलासस्तदतीता ततोऽप्यधिकविलासवती । प्रसरति प्रभवति ।

१. 'तरे' मूल०. २. 'विमलनिजतनौ' मूल०. ३. 'मुद्र' मूल०. ४. 'रष्टा' मूल०.

निजगेहे उपासकालये । यस्य यस्य कस्यापि । देवं दैवतम् । त्वं श्रीमहात्रिपुरसुन्दरी । आर्ये श्रेष्ठे । विविधबहुकलानां विविधा नानाचमत्कारकारिण्यो बह्वयोऽनेकाः कलाः विद्यास्तासाम् । पात्रभूतस्य निवासप्रायस्य । तस्य त्वदीयस्य । त्रिभुवनविदिता लोकत्रयविख्याता । सा देव्यनुग्रहप्रसादाज्जृ(त्प्राप्ता) । जृम्भते प्रकाशते । स्फूर्तिश्चमत्कृतिः । अच्छा निर्दोषा ॥

अतः परं मानसार्चनमाह—

मातस्त्वं भूर्भुवः स्वर्महरसि सुतनुस्त्वन्तरिक्षेन्दुसूर्यै-
रात्मा शुक्राग्नेन्द्रैरपि निगममहाब्रह्मभिः प्रोतशक्तिः ।
प्राणापानादियुक्तैः कलयति सकलं मानसं ध्यानयोगं
येषां तेषां सपर्या भवति सुरकृता ब्रह्मता योगिनां च ॥ ४८ ॥

अयं श्लोकः पाठभ्रमान्मया न व्याख्यातः । शिष्टैर्विचारणीयः ॥

अतः परं सविनयं देवीं प्रार्थयति—

क्व मे बुद्धिर्वाचा परमविदुषो मन्दसरणिः
क्व ते मातर्ब्रह्मप्रमुखविबुधस्यास्तवचसाम् ।
अभून्मे विस्फूर्तिः परतरमहिम्नस्तवनुतिः
प्रसिद्धं क्षन्तव्यं बहुलतरचापल्यमिति मे ॥ ४९ ॥

हे मातः, इति कारणात् कर्म प्रसिद्धं बहुलतरचापल्यं क्षन्तव्यम् । इतीति किम् । मे मतिः क्व, मे वाचापि क्व, ते परतरमहिम्नस्तवनुतिः क्व । कथंभूता मे मतिः । मन्दसरणिः । कथंभूतस्य मे । परम् अविदुषः । कथंभूता स्तवनुतिः । ब्रह्मप्रमुखविबुधस्यास्तवचसां मन्दसरणिः ॥

अतः परं साधकमनोगतं देवीं विज्ञापयति—

प्रसीद परदेवते मम हृदि प्रभूतं भयं
विदारय दरिद्रतां दलय देहि सर्वज्ञताम् ।
विधेहि करुणानिधे चरणपद्मयुग्मं स्वयं
विदारितजरामृति त्रिपुरसुन्दरि श्रीशिवे ॥ ५० ॥

---

१. 'त्रपि' मूल०. २. 'रिक्षस्य पुर्या राज्ञा शुक्रेन्दुसूर्येन्दुभिरपि निगमा' मूल०. ३. 'धूतसङ्ग' मूल०. ४. 'ब्रह्मविद्येति जन्तोः' मूल०. ५. 'मन्दसरणेः' मूल०. ६. 'स्वान्त' मूल०. ७. 'न्नो' मूल०. ८. 'प्रसीद' मूल०. ९. 'मिह मे' मूल०. १०. 'स्वकं' मूल०. ११. 'विनाशय जरामृती' मूल०.

हे परदेवते, त्वं प्रसीद प्रसन्ना भव। हे करुणानिधे स्वयं चरणपद्मयुग्मं विधेहि वि-शेषेण ध्यानयोगगम्यं कुरु। कथंभूतं विदारितजरामृति। अन्योऽर्थः स्पष्ट एव॥

इति त्रिपुरसुन्दरीस्तुतिमिमां पठेद्यः सुधीः
स सर्वदुरिताटवीपटलचण्डदावानलः।
भवेन्मनसि वाञ्छितं प्रचुरसिद्धिऋद्धिर्भवे-
दनेकविधसंपदां पदमनन्यतुल्यो भवेत्॥ ९१॥

इति पूर्वोक्ता त्रिपुरसुन्दरीस्तुतिं महिम्नस्तवरूपामिमां मत्कृतां पठेत् प्रतिदिनमावर्त-येद्यः भक्तः सुधीः कृतनिश्चयः सः सर्वदुरिताटवीपटलं सर्वपापौघ्यसमुदायं प्रतिचण्डदा-वानलो भवेत्। तस्य मनसि वाञ्छितं च भवेत् इत्यादि। सुगममन्यत्॥

पुनर्मनोगत प्रार्थयति—

संगीतं सरसं विचित्रकवितामाम्नायवाक्यस्मृतिं
व्याख्यानं हृदि तावकीनचरणद्वन्द्वं च सर्वज्ञताम्।
श्रद्धां कर्मणि शाम्भवेति विपुलं श्रीजृम्भणं मन्दिरे
सौन्दर्यं वपुषि प्रदेहि जगतामम्बेश्वरि श्रीशिवे॥ ९२॥

अर्थः स्पष्टः॥

अतः परं महिम्नस्तोत्रपाठनिरतस्यैहिकफलमाह—

पृथ्वीपालप्रकटमुकुटस्रग्रजोरञ्जिताङ्घ्रि-
र्विद्वत्पूजास्तुतिशतसमाराधितो नाविताऽरिः।
विद्याः सर्वाः कलयति हृदा व्याकरोति प्रवाचा
लोकाश्चर्यैर्नवनवपदैरिन्दुबिम्बप्रकाशैः॥ ९३॥

अर्थः स्पष्ट एव॥

भूष्यं वैदुष्यमुद्यद्दिनकरकिरणाकारमाकारतेजः
सुज्ञानं भूरिमार्गं निगमनिगमनं दुर्गमं योगमार्गम्।
आयुष्यं ब्रह्मपोष्यं हरगिरिविशदां कीर्तिमभ्येत्य भूमौ
देहान्ते ब्रह्मपारं परतरचरणाकारमभ्येति विद्वान्॥ ९४॥

---

१. 'तावतमभीष्टसिद्धिर्भवेत्' मूल०. २. 'गुरुसत्कवित्वसरणीमाम्नायवाचा स्मृतिं' मूल०. ३. 'कालिकेति' मूल०. ४. 'विधुरपूजानतिनुतिं' मूल०. ५. 'प्रभावाढ्यो' मूल०. ६. 'निगमनिचयः' मूल०. ७. 'रूपं' मूल०. ८. 'मुव्यक्त भूतिं' मूल०. ९. 'निजत-नुकटन' मूल०. १०. 'सौख्यं' मूल०. ११. 'शिव' मूल०.

स विद्वान् भूमौ प्रोक्तमेतदभ्येत्य देहान्ते परतरचरणाकारं ब्रह्मपारमभ्येतीत्यन्वयः । भूयं भूयणम् । वैदुष्यं पाण्डित्यम् । आकारतेजः दिनकरकिरणाकारम् । भूरिमार्गं सार्वपथीनम् । सुज्ञानं निगमनिगमनं च निगमानां वेदानां निगमनं व्याख्यानं करोति च । दुर्गमं दुष्प्राप्यम् । योगमार्गे योगाभिनिवेशम् । ब्रह्मपोष्यं ब्रह्मणा तुल्यम् । आयुष्यं कल्पान्तस्थायित्वम् । हरगिरिविशदां कैलासवदुज्ज्वलाम् । कीर्तिमभ्येत्य अनुभूय । विद्वान् विद्योपासकः । देहान्ते शरीरत्यागानन्तरम् । ब्रह्मपारम् अपारं ब्रह्मस्वरूपम् । परतरचरणाकारं परतरायाः श्रीमहात्रिपुरसुन्दर्याः चरणाकारं निर्वाणं चरणरूपमभ्येति प्राप्नोति ॥

अतः परं दुर्वासा मुनिः स्वकृतस्तोत्रे स्वख्यात्यर्थं स्वनामनिबन्धनं करोति—

दुर्वाससा विदिततत्त्वमुनीश्वरेण
विद्याकलायुवतिमन्मथमूर्तिनैतत् ।
स्तोत्रं व्यधायि रुचिरं त्रिपुराम्बिकाया
वेदागमोक्तपटलैर्विदितैकमूर्तेः ॥ ९५ ॥

दुर्वाससा त्रिपुराम्बिकायाः स्तोत्रं व्यधायि कृतमित्यन्वयः । दुष्टं दुःखदं शणसूत्रनिर्मितवल्कलव्याघ्रचर्मगैरिकरञ्जितवस्त्रादिकं वासो यस्य । विदितं ज्ञातं तत्त्वमुपनिषत्सारं येन मुनीनां महायोगीश्वराणामीश्वर आचार्य एतादृशेन । विद्यारूपाः कलारूपाश्च या युवतयः तासां मन्मथमूर्तिना तत्प्रादुर्भावकारकत्वात् । स्तोत्रं श्रीत्रिपुरमहिम्नाख्यम् । व्यधायि कृतम् । रुचिरं देवीप्रीतिकरम् । त्रिपुराम्बिकायाः । कथंभूतायाः । वेदोक्तैरागमोक्तैश्च पटलैः स्वरूपनिरूपकग्रन्थैर्विदिता ज्ञातैका मूर्तिः स्वरूपं यस्याः ॥

सदसदनुग्रहनिग्रहगृहीतमुनिविग्रहो भगवान् ।
सर्वासामुपनिषदां दुर्वासा जयति देशिकः प्रथमः ॥ ९६ ॥

सतामसतां चानुग्रहनिग्रहार्थं गृहीतः मुनिविग्रहो येन । भगवान् महानुभावः । सर्वासां चतुर्वेदोक्तानाम् । उपनिषदां तत्त्वनिरूपिकाम् । जयति सर्वोत्कर्षेण विजयते । देशिकः प्रथम आद्य आचार्यः ॥

छत्रं चामरयोर्युगं व्यजनमादर्शस्तथा मर्दलो
भेरीशङ्खमृदङ्गकाहलकलागीतं च नृत्यं तथा ।
साष्टाङ्गं प्रणतिः स्तुतिर्बहुविधा चैतत्समस्तं मया
संकल्पेन समर्पितं ननु शिवे सन्तुष्टये कल्पताम् ॥

उच्चेषु नीचेष्वपि दर्शनेषु प्रकाशते देवि तव स्वरूपम् ।
समुज्ज्वलत्येव हि यज्ञवाटे मातङ्गवेश्मन्यपि जातवेदाः ॥

---

१. 'विहितमादिमुनीश्वरेण' मूल०. २. 'यथार्थरुचिरं' मूल०. ३. 'मूर्तेः' मूल०.

इति त्रैपुरं श्रीमहिम्नं गुरूत्त्या मया व्याकृतं प्रीतये सिद्ध्ये च ।
सतां साधकानां सुविद्यैः सुधीरैश्चिरं लोकनीयं हृदा निश्चलेन ॥
यत्रैव यत्रैव मनो मदीयं तत्रैव तत्रैव तव स्वरूपम् ।
यत्रैव यत्रैव शिरो मदीयं तत्रैव तत्रैव पदद्वयं ते ॥

इति श्रीदुर्वाससा मुनीन्द्रेण विरचितं श्रीत्रिपुरसुन्दरीमहिम्नः स्तोत्रं संपूर्णम् ।

---

## खड्गशतकम्।[1]

(सटीकम्।)

कल्पातिक्रूरकालभ्रुकुटिकुटिलताकल्पकल्पाग्रमुष्टिः
क्रुध्यत्कालीकटाक्षाङ्कित[स]कल·········निमे(पे)कान्तकाली ।
क्रीडत्यस्याक्रमेण क्रकचकृतिकृती कुन्ति(म्भि)कुम्भाग्रकूट-
क्रोडेपृक्कृत्तकण्ठोत्थितरुधिरकणाकीर्णकोणः कृपाणः ॥ १ ॥

[अस्य टीका त्रुटिता।]

खं प्रेङ्खद्भिः खरांशोः प्रखरखरशिखाः खण्डयन्स्वैर्मयूखैः
खेलासंख्येषु खङ्गीकृतरणरसिकः संमुखानां खमि(नि)त्रम् ।
ख्यातः सौख्यस्य खानिः खलु कमितृजुषां खेचरीणामखर्वः
खेलत्युत्खातखङ्गप्रतियुवसु खनत्कारवानस्य खड्गः ॥ २ ॥

[अस्य टीका त्रुटिता।]

गात्रस्य ··········· सिग्रहणमवगणय्याग्रतः स्वर्गमार्गं
ग्रस्यत्रस्य(?) महाग्रेसरकरगुणितोदग्रजाग्रद्गभस्तिः ।
गर्वोग्रग्रन्थिगोत्रग्रहिलरिपु············भङ्गीगृहीतो
गर्जत्यग्रेसराग्र्यग्रहगिलनगुरुः संगरे मण्डलाग्रः ॥ ३ ॥

[अस्य टीका त्रुटिता।]

---

१. अस्य काव्यस्यैकं पुस्तकं कश्मीरमहाराजानां जम्बूनगरस्थपुस्तकालयस्थपुस्तकतः पञ्चनददेशीयविश्वविद्यालयाध्यक्षश्रीयुतडॉक्टर्स्टैन् (M. A. Stein, Ph. D.) महाशयैर्यथाप्रत्यवतार्य स्वपुस्तकालयस्थापितमस्मभ्यं काव्यमालार्थं दत्तमिति तेषां महाशयानामुपकारं वर्णयितुमक्षमास्तेषां धन्यवादं प्रकाशयामः. अस्य च पुस्तकस्यान्तिमपत्रालाभेन नवनवतिरेव श्लोका उपलब्धाः. टीकापुस्तकेऽपि प्रारम्भे मध्ये च पत्राणि समाप्तिपत्रं च नोपलब्धानीति कवेर्नाम कालश्च न ज्ञायते.

प्राणं संग्रामलक्ष्म्या घनस्रुतियशसामङ्घ्रि[ता]न्वोम(?)····
 ·········साहसस्याल्पुहृदयल्घुर्भीत्यवैयस्य विघ्नः ।
घोटः कीर्तेर्वनाभापवनगजघटावातनैर्घृण्यनिघ्नो
 घूर्णत्यु···············रघूर्णिसमाघ्राति घोरोऽस्य खड्गः ॥ ४ ॥

[अस्य टीका त्रुटिता ।]

चण्डश्चण्डीशचक्षुश्चिरभृतविषमार्चिध्वजाचानुभाले
 चण्ड्याश्चामीवरा····जननयरव·······कौर्यचक्षुः ।
चित्रं स्वाचान्तवीरा सुरपि(?)रविरुचा चुम्बितश्चाकचिक्या-
 चक्षुःकर्माणि चूपत्यचिररुचिरुचां वञ्चकोऽस्यासिरुचैः ॥ ५ ॥

[अस्य टीका त्रुटिता ।]

[छा]या·······रूपोच्छलितरिपुशुचौ छादनं कृच्छ्रदेशे
 छायावाहाशनेत्वच्छलसमिति लसच्छौर्यकालालिपुच्छम् ।
·······तच्छात्रि·······च्छिदुरगणचणश्छेकहृच्छोककारी
 छायाकान्तच्छवीच्छाव्यतिकरवशतो मूर्च्छतीद्धोऽस्य खड्गः ॥ ६ ॥

································································
································································

················वित्तश्छिदुरगणचणः । 'तेन वित्तः–' इति चणप् । छेकानां नागराणां हृच्छोककारी ॥

जङ्घालो जैत्रजन्याजिरभुवि जनयञ्जन्तुजाते ज्वरार्तिं
 जीवातुर्बाहुजस्य त्रिजगति जयिनो दोर्भुजङ्गस्य जिह्वा ।
ज्याजानिर्व्याघ्रजाग्रद्गजरदनशिलाभञ्जनाजस्रयोग्यो
 जातज्वालो जटावानिह जयति जगज्जित्वरोऽमुष्य खड्गः ॥ ७ ॥

जमिति ॥ अमुष्य खड्ग इह लोके जयति । किंविधः । जैत्रं जयशीलं यज्जन्यं संग्रामस्तस्याजिरभुवि जङ्घालः । सत्वर इत्यर्थः । 'जङ्घालोऽतिजवे' इत्यमरः । जन्तुजाते प्राणिमात्रे ज्वरार्तिं ज्वरपीडां जनयन् । त्रिजगति त्रैलोक्ये जयिनः पराक्रमवतो बाहुजस्य क्षत्रियस्य जीवातुर्जीवनौषधम् । 'जीवातुर्जीवनौषधम्' इत्यमरः । पुनः किंविधः । अथवा त्रिजगति जयिनो दोर्भुजङ्गस्य बाहुसर्पस्य जिह्वा । ज्याजानिर्वसुधाजानिः । 'जायाया निङ्' । 'वसुधामौर्व्योर्ज्या' इति मेदिनी । व्याघ्राश्च जाग्रद्गजरदनाश्च शिलाश्च तासां भञ्जनं तत्राजस्रं योग्यः । जाता ज्वाला यस्मिन्स तथा । अतएव जटावान् । जगज्जित्वरः ॥

झात्काराज्जैत्रजन्ये झगिति जनयतो जन्मिकर्णज्वरार्तिं
झञ्झावातानुकाराञ्झणझणितिझणत्कारिणः प्रोज्जिहानः।
झापाङ्कीं तामवस्थां झगिति रिपुजनं ग्राहयन्धूर्जटीष्टां
झूरन्नम्राहितेषूज्झितरणरभसं प्रोज्जिहीतेऽस्य खड्गः॥ ८॥

झादिति॥ अस्य खड्ग उज्झितरणरभस संप्राप्तादरं यथा स्यात्तथा प्रोज्जिहीते गच्छति। किंविधः। जैत्रजन्ये जयशीले संग्रामे झगिति झात्कारानुकरणशब्दान्प्रोज्जिहानः। कृतवानित्यर्थः। 'ओहाङ् गतौ'। किंविधाञ्झात्कारान्। झञ्झावातानुकारान्सवृष्टिकवातसदृशान्। पुनः किंविधान्। झणझणितिझणत्कारिणः। किंकुर्वन्सन्। झापाङ्कीं मान्मर्थीमवस्थाम्। भस्मरूपामित्यर्थः। रिपुजनं वैरिलोकं झगिति शीघ्रं ग्राहयन्। किंविधामवस्थाम्। धूर्जटेः शंभोरिष्टाम्। नम्रा येऽहितास्तेषु झूरन्खिन्दन्॥

टंकारोद्धट्टिता या झटिति विघटयन्कोटिशश्चापयष्टी-
ष्टङ्को विद्विड्गिरीणां करटिकटकटाहातिकुट्टाग्रकोटिः।
दुष्कूटैर्येष्टिकूटैः कटुकुटिलसटैः पट्टिशैः कोटिसंख्यैः
खेटैर्दुर्घाटवाटान्प्रतिभटसुभटांष्टीकतेऽमुष्य खड्गः॥ ९॥

टमिति॥ अमुष्य खड्गः प्रतिभटसुभटान्प्रतिपक्षवीरान्द्राक्शीघ्रं टीकते। तान्प्रति गच्छतीत्यर्थः। किंविधः। टंकारेण शब्देनोद्धट्टिताः प्रकटिताः [याः] कोटिशोऽसख्याश्चापयष्टीर्झटिति शीघ्रं विघटयन्। पुनः किंविधः। विद्विषां गिरयस्तेषां टङ्को विदारकः। पुनः। करटिनो गजास्तेषां कटा गण्डस्थलानि त एव कटाहास्तैलादिपाकपात्राणि तेषां कुट्टा पिष्टीकरणसमर्थाग्रकोटिर्यस्येति। किंविधान्प्रतिभटसुभटान्। दुष्कूटैर्दुष्टाग्रैर्येष्टिकूटैर्येष्टिसमूहैः कटुकुटिलसटैः पट्टिशैः खड्गैः फलकैर्दुर्घाटो वाटो मार्गो येषां ते। कोटिसंख्यैरिति विशेषणं त्रिष्वपि योज्यम्॥

ठात्कारी कण्ठसीमन्यतिकठिनतरे स्कन्धपीठे कठोरे
पृष्ठाष्टीलानुकारे शठकमठपतेः कुम्भपृष्ठेऽपि चैभे।
द्राग्द्राघिष्ठः कठोरच्छविजरठतरद्योतसंघट्टमूर्छ-
त्कोष्ठाः काष्ठाः प्रकुर्वन्रिपुशिरसि लुठत्येतदीयः कुठारः॥ १०॥

ठात्कारीति॥ एतदीयः कुठारो रिपुशिरसि द्राक्शीघ्रं लुठति। किंविधः। ऐभे हस्तिसंबन्धिनि कण्ठसीमनि कण्ठसमीपदेशे ठात्कारी शब्दकर्ता। किंविधे कण्ठसीमनि। अतिकठिनतरे। पुनः किंविधः। कठोरे स्कन्धपीठे ठात्कारी। पुनः किंविधः। ऐभे कुम्भपृष्ठे ठात्कारी। किंविधे कुम्भपृष्ठे। शठकमठपतेर्धूर्तकच्छपस्य। 'शठो धत्तूरके

१.-२. 'कृपाण.' इत्येव पाठो भवेत्.

धूर्ते मध्यस्थपुरुषेऽलसे' इति महीपः । पृष्ठाष्ठीलानुकारे पृष्ठस्याष्ठीलं तत्तुल्ये । द्राघिष्ठो दीर्घः। कठोरच्छविः सूर्यस्तस्य जरठतरो यो योतः प्रकाशस्तस्य संघट्टस्तेन मूर्छन् द्विगुणीभवन् । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायां 'नाभ्यस्तात्-' इति नुम्न । किं कुर्वन्सन् । काष्ठा दिशः कोष्ठाः स्वाधीनाः प्रकुर्वन्सन् । 'कोष्ठः कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च' इति मेदिनी ॥

डिम्भो दण्डायुधस्य प्रधनधनतडिच्चण्डदोःकुण्डलीन्द्र-
क्ष्वेडः प्रोद्दण्डदर्पद्विरदननिगडो डिण्डिमः शौर्यभर्तुः ।
अस्य प्राचण्ड्यभाण्डं धृतमधुपगलद्गण्डवेतण्डशुण्डा-
काण्डं खण्डं वितन्वन्युधि धुतजडिमा हिण्डते मण्डलाग्रः ॥ ११ ॥

डिम्भ इति ॥ अस्य मण्डलाग्रो हिण्डत इतस्ततो गच्छति । किंविधः । दण्डायुधस्य यमस्य डिम्भः शिशुः । 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः । प्रधनमेव संग्राम एव घनतडित्तस्याश्चण्डदोर्हस्तः कुण्डलीन्द्रः शेषस्तत्क्ष्वेडो गरलम् । 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः । प्रोद्दण्डो दर्पो येषां ते ये द्विरदना गजास्तेषां निगडोऽन्दुकः । शौर्यभर्तुर्डिण्डिमः सूचकवाद्यविशेषः । प्रचण्डस्य भावस्तया, तद्भाण्डमधिकरणम् । पुनः किंविधः । युधि संग्रामे धृता मधुपा यैस्तैर्गलन्तः स्रवन्तो गण्डा येषां ते एवंविधा वेतण्डा गजास्तेषां शुण्डास्तासां काण्डं समूहं खण्डं च्छेदं वितन्वन्विस्तारयन् । धुतो जडिमा येन सः ॥

ढक्कास्वारूढकीर्तिप्रसृतिसुविजयश्रीविवोढा निरूढो
वाढं सोढातिगाढप्रहरणसमितौ लीढकोष्णास्रसीधुः ।
रीढा गूढप्रहर्तुर्द्रढिमकुलगृहं न्यस्तशस्त्रेषु षण्ढो
निर्व्यूढोद्गाढयुद्धप्रतिहतिषु दृढं ढौकतेऽमुष्य खड्गः ॥ १२ ॥

ढेति ॥ अमुष्य खड्गो निर्व्यूढोद्गाढयुद्धा वीरास्तेषां प्रतिहतयो प्रणाशास्तासु दृढं ढौकते प्रवर्तते । किंविधः । ढक्कया विजयमर्दलेन सुष्ठु आरूढा या कीर्तिस्तस्याः प्रसृतिः प्रसरस्तस्यां सुविजयश्रीस्तस्या विवोढा । निरूढः ख्यातः । अतिगाढप्रहरणा या समितिः संग्रामस्तत्र वाढं सोढा सहनशीलः । पुनः किंविधः । लीढमास्वादितं कोष्णं किंचिदुष्णं यदस्रं तदेव सीधुर्मद्यं येन । गूढप्रहर्तुरप्रकटमारणकर्तुः रीढावमानना । द्रढिम्नः कुलगृहं दृढताया अधिष्ठानम् । न्यस्तशस्त्रेषु त्यक्तायुधेषु षण्ढो निःसारः ॥

प्राणा दर्पस्य पाणौ रणशमनशिशोः कार्मणं द्वेषणानां
तूर्णं सद्वारवाणव्रणकरणकृती कीर्णदुर्नर्पणार्चिः ।

1. 'मूर्छ'धातोर्जक्षित्यादित्वे मानाभावेन नुमभावकथनमप्रमाणम्.

कोष्णद्विट्शोणिताक्तः खरकिरणघृणिश्रेणिशाणोऽरुणश्री-
रुद्गूर्णो वारणानां गणमसृणि शृणात्यस्य तीक्ष्णः कृपाणः ॥ १३ ॥

प्राणा इति ॥ अस्य तीक्ष्णः कृपाणो वारणानां गजानां गणं समूहमसृणि स्तमि॰हितं यथा स्यात्तथा शृणाति । 'शॄ हिंसायाम्' । मारयतीत्यर्थः । किंविधः । दर्पस्य बलस्य प्राणाः । बहुत्वेन निर्देशः । रण एव शमनशिशुस्तस्य पाणिर्हस्तः । पाणी रणेति 'रो रि' इति रलोपे 'ढ्लोपे–' इति दीर्घः । द्वेषणानां शत्रूणाम् । 'द्विषद्वेषणदुर्हृदः' इत्य॰मरः । कार्मणं मूलकर्म । तूर्णं शीघ्रं सचक्रात्वाणं कवचम् । 'कञ्चुको वारणोऽस्त्री' इत्य॰मरः । तत्र व्रणकरणं तत्र कृती कुशलः । कीर्णं प्रसारितं दुर्मर्षं दुःसहमाचिर्येन । कोष्णं यद्विषतां शोणितं रक्तं तेनाक्तः सिक्तः । खरकिरणः श्रीसूर्यस्तस्य घृणयो मयूखास्तेषां श्रेणिस्तस्याः शाणो घर्षणपाषाणः । अरुणा श्रीर्यस्य सः । उद्गूर्ण उत्थापितः ॥

तृप्यद्दन्तिक्षितीन्द्रं तरलतरतरत्पत्तिभङ्गं विघूर्ण-
त्तुङ्गाश्वावर्तगर्तं निशिततममिलत्कुन्तसंतानचक्रम् ।
त्वङ्गत्तीक्ष्णासितूर्वेत्तिमिमनतिदलच्छक्तिशुक्ति रणाब्धिं
तारस्तूर्णं तितीर्षुस्तृणलववदरीनस्य खड्गस्तृणेढि ॥ १४ ॥

तृप्यदिति ॥ अस्य खड्गोऽरीञ्शत्रूंस्तृणलववत्तृणेढि । मारयतीत्यर्थः । 'तृह हिंसा-याम्' । किंविधः । तूर्णं शीघ्रं रणाब्धिं संग्रामसमुद्रं तितीर्षुस्तरणेच्छुः । 'तॄ प्लवनतर-णयोः' । तार उज्ज्वलः । किंविधः रणाब्धिम् । तृप्यतो(न्तो) दन्तिन एव क्षितीन्द्राः-(तिध्राः) पर्वता यस्मिन्स तथा । तरलतरा अतिचञ्चलास्तरन्तो ये पत्तयः पदातयस्त एव भङ्गास्तरङ्गा यस्मिंस्तम् । विघूर्णन्तस्तुङ्गा येऽश्वास्त एवावर्तगर्ता यस्मिंस्तम् । ........................ । त्वङ्गन्तस्तीक्ष्णा येऽसयस्त एव तूर्वेत्तिमयो यस्मि-न्निति तथा तम् । अनतिदलच्छक्तय एव शुक्तयो यस्मिंस्तम् ॥

स्थूलं स्थूलं श्वसद्भिः प्रथितपृथुपृषद्वीक्षणैस्तीर्थमात्रं
संमन्वानैरपार्थं शिथिलरणकथैर्वेपथुव्यर्थशस्त्रैः ।
संप्राप्तैः स्थाणुसंस्थां प्रथितपथचरैस्त्रस्तनेत्रातिथित्वं
नीतः प्रत्यर्थिसार्थैर्व्यथयति सविधस्थानपीद्धोऽस्य खड्गः ॥ १५ ॥

स्थूलमिति ॥ अस्येद्धः समृद्धः खड्गः सविधस्थानपि समीपवर्तिनोऽपि व्यथयति । कि॰विधः । प्रत्यर्थिसार्थैः परिपन्थिसमूहैस्त्रस्तानि यानि नेत्राणि तत्रातिथित्वं नीतः । दृष्ट इति यावत् । किंविधैः प्रत्यर्थिसार्थैः । स्थूलं स्थूलं दीर्घं दीर्घं श्वसद्भिः । असह्यत्वात् । प्रथितपृथु पृषन्तो बिन्दवस्तद्युक्तानि वीक्षणानि येषां तैः । तीर्थमात्रं संमन्वानैः । अपार्थं निरर्थकं शिथिला रणकथा येषां तैः । वेपथुना कम्पेन व्यर्थानि शस्त्राणि येषां

तैः । अत एव स्थाणुसंस्थां संप्राप्तैः । प्रथितो यः पन्थास्तत्र चरन्तीति चरास्तैः । 'महापथस्तु मरणम्' इति ॥

दृप्यद्दोःकालकूटद्रुमतरुणदलं दर्पदन्तावलेन्द्र-
द्राघीयोदानलेखा दरदलितदलेन्दीवरद्रोणिदेहः ।
दीव्यन्नैदाघम(मा)ध्यंदिनदिवसमणिद्योतदुष्प्रेक्ष्यदीप्ति-
दौःस्थित्यं दीर्घदीर्घं दददरिसुदृशां दीप्यतेऽमुष्य खड्गः ॥ १६ ॥

दृप्यदिति ॥ अमुष्य खड्गो दीव्य(प्य)ते क्रीडते । किंविधः । दृप्यद्दोर्बाहुः स एव कालकूटद्रुमो विषतरुस्तस्य तरुणदलं नवीनपत्रम् । दर्प [एव] दन्तावलेन्द्रो हस्तीन्द्रस्तस्य द्राघीयो(यसी) दीर्घा दानलेखा । दरमीषद्दलितं विशीर्णं दलं यस्यैवंविधमिन्दीवरं तस्य द्रोणिर्मध्यभागस्तद्वद्देहो यस्य स तथा । श्याम इति यावत् । दीव्यन्नैदाघम(मा)ध्यंदिनमुष्णकालमध्याह्नं तत्र(द्भवो) यो दिवसमणिस्तस्य द्योतः प्रकाशस्तेन दुष्प्रेक्ष्या दीप्तिर्यस्य सः । अरिसुदृशां वैरिस्त्रीणां दीर्घदीर्घमतिमहद्दौःस्थ्यं दुःस्थस्य भावस्तथा तद्ददत् ॥

धैर्यस्याधारयष्टिर्धृतविबुधवधूसाध्वसो धाम धाम्नां
धूमः क्रोधानलस्य प्रधनरथवरस्योद्धुरो धूर्धरोऽयम् ।
धीरोदात्तोर्ध्ववाहा धरणिधरधृतस्तीक्ष्णधाराधरोऽद्धा
धीरानौद्धत्यभाजो रणधरणिचरानस्य धूनोति खड्गः ॥ १७ ॥

धैर्यस्येति ॥ अस्याय खड्ग औद्धत्यभाजो रणधरणिचरान्संग्रामभूमिगतान्धीरान्धूनोति कम्पयति । किंविधः । धैर्यस्य गुणस्याधारयष्टिः । धृतं विबुधवधूनां देवस्त्रीणां साध्वसं येन सः । धाम्नां तेजसां धामाधिष्ठानम् । क्रोध एवानलस्तस्य धूमः । प्रधनं संग्रामस्तदेव रथवरस्तस्योद्धुरो धूर्धरो भारधर्ता । धीरोदात्तः पुरुषश्रेष्ठस्तस्योर्ध्ववाहा हस्तः । 'भुजा वाहा' इति स्त्रीत्वेन निर्देशः । धीरोदात्तलक्षणं रसकलिकायाम्—'चतुर्धा पुरुषः—धीरोदात्तो धीरललितो धीरशान्तो धीरोद्धतश्चेति । तत्र—कृपावानतिगम्भीरो विनीतश्चाविकत्थनः । धीरोदात्तः स विज्ञेयो रामो दाशरथिर्यथा ॥' इति । धरणिधरेण राज्ञा धृतः । तीक्ष्णधाराधरः । 'अद्धा' इत्यङ्गीकारेऽव्ययम् ॥

नानानीके ननम्रान्नृपतिषु नमयन्नानतानाधिपत्ये
निःस्नापव्यं नयन्नानिधनमनिभृतानप्यलं निश्चलत्वम् ।
निर्मथ्नन्वैरिनारीजननयनसरोजन्म धाराजलेन
न्यंकुर्वन्निर्धुनीते प्रधनचरनृपानस्य नृत्यन्कृपाणः ॥ १८ ॥

नानेति ॥ अस्य नृत्यन्कृपाणः प्रधनचरनृपान्संग्रामस्थितराज्ञो(ज्ञो) निर्धुनीते । नितरां कम्पयतीत्यर्थः । किं कुर्वन्सन् । नानानीकेऽनीकसैन्ये नृपतिषु मध्ये ननम्रानुद्धतान्-

मयन्सन्। आनताश्चमानाधिपत्ये निःसापत्न्यं सपत्नरहितं यथा तथा अनिधनं मरणरहितं नयन्निति न किंतु नयन् । अनिभृतानगुतानलमत्यर्थं निश्चलत्वं निर्मिभन्। दूरीकुर्वन्नित्यर्थः। वैरिनार्यः शत्रुस्त्रियस्तासां जनः समूहस्तस्य नयनसरोजन्म नेत्रकमलम्। जात्यभिप्रायेणैकवचनम्। धाराजलेन न्यक्कुर्वन् ॥

पादान्ते पातुकक्ष्मापतिपटलपरापीडपुष्पाधिवासा-

त्पुष्यत्पुष्पंधयालीभ्रमकृदपपरीवारपारुष्यपात्रम्।

पूष्णः पुष्टप्रकाशप्रतिफलनपरिप्राप्तदिक्श्रीरपूर्वो

पौर्वापर्योत्पिनष्टि प्रबलपरनृपानस्य पाणौ कृपाणः ॥ १९ ॥

पादेति ॥ अस्य कृपाणः पौर्वापर्योत्प्रबला ये परनृपास्तान्प्रबलपरनृपाञ्शत्रुराजान्पिनष्टि। मर्दयतीत्यर्थः। किंविधः। पादान्ते पातुकाः पतनशीला ये क्ष्मापतयो राजानस्तेषां पटलं समूहस्तस्य परापीड उत्कृष्टशेखरस्तत्र पुष्पाधिवासात्पुष्पसौगन्ध्यात्पुष्यन्ती पुष्टीभवन्ती पुष्पधयाली भ्रमरपङ्क्तिस्तस्या भ्रमो भ्रान्तिस्तां करोतीति कृत्......
......तेन यत्पारुष्यं तस्य पात्रमधिष्ठानम्। पूष्णः श्रीसूर्यस्य पुष्टो यः प्रकाशस्तस्य प्रतिफलनं विलासस्तेन परिप्राप्ता दिक्षु दिशां वा श्रीर्येन स तथा। अत एवापूर्वः ॥

स्फारः शश्वद्विधूतौ स्फिरतरकिरणस्फीतम(मा)ध्यंदिनार्क-

स्फायत्कान्तिप्रतानप्रतिफलनभरैः शौर्यवह्नेः स्फुलिङ्गः।

फालः प्रत्यर्थिभूमेः फलमहितगणाभाग्यवृक्षस्य फाण्ड(ण्टं)

फेरूकुर्वन्समाङ्केष्वलिपु खपतितान्स्फूर्जतीद्धोऽस्य खड्गः ॥ २० ॥

स्फार इति ॥ अस्येद्धः खड्गः स्फूर्जति दीप्तीभवति। किंविधः। विधूतौ धूनने शश्वन्निरन्तरं स्फिरतरा ये किरणास्तैः स्फीतः प्रकटो म(मा)ध्यंदिनार्को मध्याह्नसूर्यस्तस्य स्फायद्वर्धिष्णु यत्कान्तिप्रतानं तस्य प्रतिफलनभरा द्विगुणभावास्तैः स्फारो दीर्घः। शौर्यवह्नेः स्फुलिङ्ग इव स्फुलिङ्गः कणः। विशेष्यपरता ज्ञेया। प्रत्यर्थिन एव भूमिः, तेषां वा भूमिः, तस्याः फालो विदारकः। अहिता वैरिणस्तेषां गणः समूहस्तस्याभाग्यं स एव वृक्षस्तस्य फाण्ड(ण्टं) फलम्। समीके संग्रामेऽभिमुखपतितान्फेरूकुर्वन्। अफेरवः फेरवः तामिति। 'अभूत-' इति च्विः। जम्बुकप्रायान्कुर्वन्नित्यर्थः ॥

बिब्बोको बाहुलक्ष्म्याः प्रबलबलभरद्वेषिबालाबलानां

बाष्पाम्बूनां निदानं बलभिदुपलकान्तिर्विडम्बिप्रकाशः।

बंहिष्ठस्तीव्रशोचिःप्रसरशबलितो बीजमिष्टार्थसिद्धे-

र्बाहावस्याम्बरान्तर्विलसति बहुधाडम्बरी मण्डलाग्रः ॥ २१ ॥

बिब्बोक इति ॥ अस्य बाहौ हस्ते मण्डलाग्रः खड्गो विलसति। किंविधः। बाहुलक्ष्म्या बिब्बोको विलासः। बिब्बोकलक्षणं गीतगौरीपतौ—'इष्टेऽपि वस्तुन्यवहेला'

इति । 'विब्बोकस्त्वतिगर्वेण वस्तुन्यष्टेऽप्यनादरः' इति दर्पणोक्तेश्च । प्रबलो बलभरो येषां ते ये द्वेषिणस्तेषां बालावलास्तासां बाष्पाम्बूनामश्रुजलानां निदानं कारणम् । बलभिदिन्द्रस्तदुपलं इन्द्रनीलपाषाणस्तस्यार्चिस्तस्य विडम्बी अनुकरणकर्ता प्रकाशो यस्य स तथा । बंहिष्ठोऽतिशयेन बहुरिति । पुनः किंविधः । तीव्रशोचिस्तीक्ष्णरोचिः । सूर्य इति यावत् । तस्य प्रसरस्तेन शबलितश्चित्रितः । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः । इष्टार्थविद्वेर्बीजमुत्पादकम् । अम्बरान्तराकाशमध्ये बहुधानेकधा आडम्बरी ॥

भास्वद्भास्वद्गभस्तिव्यतिकरभृतयाभ्रान्तरालेऽभिभूत्या

भूयः संभ्रान्तिभाजां दददहितभुवां भूभुजां स्तम्भमुद्राम् ।

भूम्ना भङ्गानभिज्ञः प्रसभमभिपतत्कुम्भिकुम्भाग्रभेदो-

द्भूतासृग्भासुरश्री रणभुवमभितो भात्यभीकोऽस्य खड्गः ॥ २२ ॥

भास्वदिति ॥ अस्याभीको निर्भयः, अथवा अभीक इव कामुक इव । रूपकम् । रणभुवं सङ्ग्रामभूमिमभितः समन्ताद्भाति । किंविधः । भास्वतः सूर्यस्य भास्वन्तो ये गभस्तयः किरणास्तेषां व्यतिकरः संपर्कस्तेन भृतया । पूर्णयेत्यर्थः । [अभि]भूत्याभ्रान्तराले आकाशमध्ये भूयो वारंवारं संभ्रान्तिभाजामहितभुवां भूभुजां राज्ञां स्तम्भमुद्रां जाड्यस्य ददत् । भूम्ना भङ्गः पराजयस्तदटनं(?) वा तस्यानभिज्ञः । प्रसभमभिपतन्तो ये कुम्भिनस्तेषां कुम्भाग्रभेदस्तस्मादुद्भूतं यदसृग्रक्तं तेन भासुरा श्रीर्यस्य ॥

मीमांसा मेदिनीशानमननमनयोर्मोक्षमार्गः समीके

मानात्सांमुख्यभाजामहिमकरमयूखातिमायन्मरीचिः ।

मन्दं मन्दं मदान्धद्विरदमदमषीपट्टमात्सर्यमूर्छ-

न्मूर्तिर्माद्यत्यमुष्य प्रमदनृपचमूमारणे मण्डलाग्रः ॥ २३ ॥

मीमांसेति ॥ अमुष्य मण्डलाग्रः प्रमदाः प्रकृष्टमदा ये नृपा राजानस्तेषां चमूः सेना तन्मारणे माद्यति । किंविधः । मेदिनीशानां पृथ्वीशानामनमनं च नमनं च तयोर्मीमांसा पूर्वोत्तरविचारः । समीके सङ्ग्रामे मानात्सांमुख्यभाजां मोक्षमार्गः । अहिमकरः श्रीसूर्यस्तस्य मयूखास्तैः कृत्वा अति अत्यन्तं मायन्तो मरीचयो यस्य सः । मन्दं मन्दं मदान्धा ये द्विरदास्तेषां मद एव मषीपट्टस्तस्य मात्सर्यं द्वेषस्तेन मूर्छन्ती द्विगुणिता मूर्तिः कायो यस्य । अतिश्यामशरीर इति यावत् ॥

यानं लोकत्रयाप्तावतिशयि यशसोरिक्षयाश्चर्ययज्ञे

यूपो युग्यं द्रढीयो युवि युधि विजयं यास्यतः क्षत्रियस्य ।

यात्रायां यूथनाथायतकटयुगलीं दारयन्यातयामा-

न्योधानस्त्रन्मायो जयति जयजुषां नायकः सायकोऽस्य ॥ २४ ॥

यानमिति ॥ अस्य सायकः खङ्गः । 'शरे खड्गे च सायकः' इत्यमरः । जयति । किंविधः । यशसो लोकत्रयासौ त्रैलोक्यगमने । विषये सप्तमी । अतिशयो यस्यास्तीति तथा । यानं वाहनम् । अरिक्षय एवाध्वर्ययज्ञस्तस्मिन् । यूपो यज्ञस्तम्भः । युधि युधि संग्रामे विजयं यासतः क्षत्रियस्य द्रढीयो अतिदृढं युग्यं युगस्य वोढा । 'तद्वहति रथयुगप्रासङ्गम्' इति यत् । यात्रायां विजये यूथनाथा गजास्तेषामायता विस्तृता या कटयुगली तां दारयन् । यातयामान्गतरसान्योधानसन्क्षिपन् । दूरीकुर्वन्नित्यर्थः । अमायो निष्कपटो ममताशून्यो वा । जयजुषां जयवतां नायको मुख्यः ॥

राष्ट्रद्विड्वासराणां रजनिरचरमा वीरशार्दूलसंख्या-
रेखा रोदोन्तराले रणरसिकरिपूद्रक्तसंरक्तसारः ।
रुद्धो(द्धा)रातिप्रचारः करिकरकरटान्दारयन्रंहसारं
राजत्यस्यातिसारः परसमरविधौ रक्तधारः कुठारः ॥ २५ ॥

राष्ट्रद्विडिति ॥ अस्य कुठारो राजति । 'राजृ दीप्तौ' । किंविधः । राष्ट्रं द्विषन्ति ते तथा द्वेषिणस्त एव वासरा दिवसास्तेषां रजनी । नाशकत्वात् । 'कृतिकारात्' इति ङीष् । अतो रजनिरपीति रायमुकुटः । अचरमा प्रथमा । वीरास्त एव शार्दूलास्तेषां सङ्ख्यारेखा गणनारेखा । रोदोन्तराले द्यावापृथिव्योर्मध्ये रणरसिका ये रिपवस्तेषामुदुत्कटं यद्रक्तं तेन संरक्तः सारः स्थिरांशो यस्येति स तथा । रुद्धोऽवरोधितोऽरातिप्रचारो येन सः । अरमत्यर्थं रंहसा वेगेन करिणो गजास्तेषां कराः शुण्डादण्डाः करटा गण्डस्थलानि तान्दारयन् । अतिसारोऽत्यन्तबलः । परसमरविधौ वैरिसंग्रामकर्तव्यतायां रक्तधारः ॥

लक्ष्मीलीलोपधानं कलिकुलनिलयोल्लेखसंतानमूलं
लोकालोकावधिक्ष्मावलयमिलदिलाधीशदुर्लक्ष्यखेलः ।
लूनव्यालेभगण्डोल्लसदलिपटलैर्लालितोऽमुष्य विद्विड्-
लोकासूँल्लेलिहानो विलसति कलहे कालवन्मण्डलाग्रः ॥ २६ ॥

लक्ष्मीति ॥ अमुष्य मण्डलाग्रः कलहे संग्रामे कालवद्यमवद्विलसति । किंविधः । लक्ष्म्या लीलोपधानम् । कलिः कलहस्तस्य कुलं समूहस्तस्य निलयोल्लेखो गृहसंनिवेशस्तस्य संतानं विस्तारस्तस्य मूलं कारणम् । लोकालोकः पर्वतः सोऽवधिर्मर्यादा यस्य तदेवंविधं क्ष्मावलयं पृथ्वीमण्डलं तत्र मिलन्तो य इलाधीशाः पृथ्वीशास्तैर्दुर्लक्ष्या खेला यस्येति सः । लूनाश्छिन्ना ये व्यालेभगण्डा उन्मत्तगजगण्डस्थलानि तेभ्य उल्लसन्ति यान्यलिपटलानि भ्रमरसंघास्तैर्लालितः । विद्विड्लोकाः शत्रुजनास्तेषामसून्प्राणाँल्लेलिहानोऽतिशयेनास्वादकः॥

वल्गद्भिर्वीरवाणावृतविपुलवलद्भिन्नहैर्वैरिवर्गै-
र्वैयात्याद्वीक्षितश्रीरतिनि(वि)कटगतिर्विस्फुरन्वीतशङ्कः ।

१. ऊीषता चिन्त्या.

वारंवारं विवस्वद्व्यतिकरितरुचा व्योम्नि विद्योतमानो

वैरिव्रातं विशिष्टं विवशयति वरे विग्रहेऽमुष्य खड्गः ॥ २७ ॥

वल्गादिति ॥ अमुष्य खड्गो वरे श्रेष्ठे विग्रहे संग्रामे विशिष्टं महान्तं वैरिव्रातं शत्रुसमूहं विवशयति मारयति । किंविधः । वल्गद्भिः संचरद्भिर्वीरवर्गैर्वैयात्यान्निर्लज्जत्वाद्वीक्षिता श्रीर्यस्य । किंविधैर्वीरवर्गैः। वारवाणैरङ्गत्राणैः ।'कञ्चुको श(वा)रवाणोऽस्त्री' इत्यमरः । तैरावृता विपुल(ला) वलावला(?)विग्रहाः शरीराणि येषां ते तथा तैः । अतिविकराला गतिर्यस्य सः । विस्फुरन् । वीतशङ्को निर्भयः । वारंवारं विवस्वतः श्रीसूर्यस्य व्यतिकरिता मिश्रिता या रुक्तया व्योम्नि आकाशे विद्योतमानः । दीप्त इत्यर्थः ॥

श्यामैरंशुप्रकाण्डैर्दिशि दिशि शतशो दर्शयन्स्वान्समूहैः

शूराणां शात्रवाणां शमनशिशुशताशङ्कया वीक्ष्यमाणः ।

शान्तश्रान्तिर्नृशंसाञ्जगति शकलयन्नाश्रितानां शरण्यः

शातः शत्रूनशङ्कं रणशिरसि शृणात्येतदीयः कृपाणः ॥ २८ ॥

श्यामैरिति ॥ एतदीयः कृपाणः शत्रून्रणशिरसि अशङ्कं निःशङ्कं शृणाति मारयति । 'शॄ हिंसायाम्' । किंविधः । श्यामैरंशुप्रकाण्डैः प्रशस्तांशुभिः । 'प्रकाण्डमुद्धतल्लजौ प्रशस्तवाचकान्यमूनि' इत्यमरः । दिशि दिशि प्रतिदिशं स्वान्स्वं वा शतशः । बहुधेत्यर्थः । दर्शयन् । पुनः शूराणां वीराणां शात्रवाणां वैरिणां समूहैः शमनो यमः । 'शमनो यमराड्यमः' इत्यमरः । तस्य शिशुतया तत्पुत्रभावेन वीक्ष्यमाणो दृश्यमानः । संहारकत्वादिति भावः । शान्ता गता श्रान्तिः श्रमो यस्य । जगति नृशंसान् घातुकान् शकलयन्खण्डयन् । आश्रितानां शरण्यः शरणाय योग्यः । शातस्तीक्ष्णः ॥

पाड्गुण्यद्वेपि वृत्ताञ्जगति कलुषयन्स्वाभिलापे निषण्णा-

न्पाखण्डानेष दुष्टैर्विषमविषहणो मर्षणो धर्षकेषु ।

पण्डो नम्रे द्विपत्स्यप्यनमति परुषः पुष्टचापच्छदश्रीः

खण्डं विद्वेषणानां परिकुपति रुषामुष्य कृष्णः कृपाणः ॥ २९ ॥

पाड्डिति ॥ एषोऽमुष्य कृपाणो विद्वेषणानां वैरिणां खण्डं समूहम् । 'सपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । रुषा क्रोधेन परिकुपति । 'कुष विलेखने' । धर्षयतीत्यर्थः । किंविधः । पाड्गुण्यम् । 'स्वाम्यमात्यसुहृत्कोशदुर्गराष्ट्रबलानि च' इति । तस्य द्वेषि वृत्तं येषां ते तान् स्वाभिलापे स्वमते निषण्णान्पाखण्डान्नास्तिकान् जगति कलुषयन् । दुष्टैर्विषमं यद्विषं तद्धन्तीति हणः । धर्षकेषु मर्षणः सहनशीलः । नम्रे द्विषत्यपि पण्डः । सौम्य इत्यर्थः । अनमति उद्धते द्विपति परुषः कठिनः । पुष्टो यश्चापः पक्षी तस्य छदः पक्षः । '⋯⋯छदः पुमान्' इत्यमरः । तद्वत् श्रीर्यस्येति स तथा ॥

---

१. 'शमनस्य शिशुना शतस्याशङ्कया' इति तु मूलानुसारी समासः.

संपूर्णः सत्त्वसारैः सुरसरणिसमावर्तिनीनां द्युतीनां
सौरीणां संप्रसारैः समसमयसमासन्नतेजःसहस्रः।
संग्रामाग्रेसराणां समितिषु सहसा साध्वसं संददानः
संपत्त्या साहसस्य स्फुरति सरभसं सर्वतः सायकोऽस्य ॥ ३० ॥

समिति ॥ अस्य सायकः खड्गः साहसस्योद्योगस्य संपत्त्या सरभसं सवेगं सर्वतः स्फुरति। किंविधः। सत्त्वसारैः संपूर्णः। पुनः—सुराणां देवानां सरणिर्मार्गो गगनमिति यावत्। तत्र समावर्तिनीनां सौरीणां सूरस्येमाः सौर्यस्तासां द्युतीनां कान्तीनां संप्रसारैः समसमयं समकालं समासन्नं प्राप्तं तेजःसहस्रं येन सः। समराग्रेसराणां युद्धपुरोगामिना समितिषु सभासु सहसा अतर्कितं साध्वसं भयम्। 'भीतिर्भीः साध्वसं भयम्' इत्यमरः। संददानः। ददातीति ददानः। समुपसर्गः॥

हाला मोहस्पृहासूंस्तृणमिव जहतां हा हलः शत्रुभूमे-
र्हेयो हालाहलश्चाप्यहमहमिकया तन्वतां विग्रहेहाः।
हाहेति व्याहरन्त्याप्यहितपृतनया हन्त कण्ठे गृहीतो
हन्त्युत्साहान्महीन्द्रान्ग्रहवति कलहे दुःसहोऽमुष्य खड्गः ॥ ३१ ॥

हालेति ॥ अमुष्य खड्गो महीन्द्रान्राज्ञ उत्साहाद्धन्ति मारयति। किंविधः। मोहं स्पृहयन्ति ते मोहस्पृहा अज्ञानवन्तो येऽसवः प्राणास्तान् तृणमिव जहतां हाला मद्यम्। अनेन सादरता व्यञ्जिता। मोहस्पृहेति भिन्नपदे हालाविशेषणं वा। पुनः किंविधः। शत्रुभूमेः शत्रव एव भूमिस्तस्या हलो विदारकश्च। परमहमहमिकया अहं पूर्वमिति विग्रहे शरीरे ईहा वाञ्छाः। 'स्पृहेहा तृड्वाञ्छा' इत्यमरः। तन्वतां विस्तारयतां हेयस्त्यक्तुं योग्यो हालाहलो विषम्। असंमत इति व्यज्यते। हन्त इति खेदे। हाहेति दुःखितवचनं व्याहरन्त्या अहितपृतनया वैरिसेनया कण्ठे गृहीतः। ग्रहवति हस्ताहस्तिकतया वृत्ते कलहे दुःसहः सोढुमशक्यः॥

ज्ञेयं ज्ञातुं किल ज्ञः प्रभवति सुबहुज्ञोऽपि साकल्यतः किं
ज्ञानं तस्मात्खपुष्पोपममिह हि ततो ज्ञातृता दूरयाता।
माज्ञः प्रज्ञावति स्यादिति मुदितमतिः स्वस्य वैज्ञानिकत्वं
विज्ञानां शात्रवाणां रणशिरसि कृती ज्ञापयत्यस्य खड्गः ॥ ३२ ॥

ज्ञेयमिति ॥ अस्य कृती खड्गो रणशिरसि विज्ञानां शात्रवाणां वैरिणां स्वस्यात्मनो वैज्ञानिकत्वं ज्ञानत्वं ज्ञापयति। दर्शयतीत्यर्थः। किंविधः। इति मुदितमतिः। इतीति किम्। प्रज्ञावति प्राज्ञः स्यादिति। न तु निर्बुद्धौ प्र(ति)ज्ञः। तदेव प्रकटयति—बहुज्ञोऽपि सर्वज्ञोऽपि ज्ञो बुधो ज्ञेयं वस्तु साकल्यतः सामस्त्यतः (ज्ञातुं प्रभवति) किलेति श्रूयते।

ज्ञानं किं प्रभवति । नेत्यर्थः । तस्मात् ज्ञानमिह लोके खपुष्पोपमम् । नास्तीत्यर्थः । हीति निश्चये । ततो ज्ञातृता दूरयाता दूरं गता ॥

क्षीराब्धिः क्षोभहीनः क्षपितमलयशा लक्ष्यनक्षत्रनेतुः

क्षीणानां कल्पवृक्षः क्षणजनकतया क्षीणशिक्षापरीक्षः ।

क्षोण्यां क्षुम्यद्विपक्षक्षयकृदभिमुखक्षत्रवक्षः क्षतोत्थैः

क्षीवः कौक्षेयकोऽस्य क्षणरुचिवदलक्ष्योऽन्तरिक्षेऽप्यलक्षि ॥ ३३ ॥

क्षीराब्धिरिति ॥ अस्य कौक्षेयकः क्षणरुचिवद्विद्युद्वदेवालक्ष्योऽपि अन्तरिक्षे आकाशे अलक्षि । किंविधः । लक्ष्यो यो नक्षत्रनेता चन्द्रस्तस्य क्षपितं मल एव यशो येन स तथा । क्षोभहीनः । क्षीराब्धिरिव क्षीराब्धिः । रूपकम् । क्षीणानां क्षणस्योत्सवस्य जनकतया उत्पादकतया कल्पवृक्षः । न क्षीणा अक्षीणा शिक्षा परीक्षा यस्येति स तथा। क्षोण्यां पृथिव्यां क्षुम्यन्तो ये विपक्षास्तेषां क्षयकृत् । अभिमुखं यत्क्षत्रं तस्य वक्षस्तत्र क्षतमाघातस्तस्मादुत्थैः । रक्तैरिति यावत् । 'विशेषणाद्विशेष्यप्रतीतिः' इति वामनः । क्षीवो मत्तः ॥

यस्यैकोऽनेकसंख्ये रणशिरसि ककुप्प्रान्तविश्रान्तशैल-

श्वभ्रान्तस्थैः सपत्नैरपि करकलितः सर्वतो वीक्ष्यमाणः ।

निःशङ्कं गाहमानोऽनवरतमुचितामात्मनः कोशगुप्तिं

शत्रूरःकोशमध्यस्थितिरिति बहुधाश्चर्यपात्रं कृपाणः ॥ ३४ ॥

यस्यैक इति ॥ यस्य कृपाणो बहुधा बहुप्रकारमिति आश्चर्यपात्रम् । अस्तीति शेषः । इतीति किम् । एकोऽप्यद्वितीयः करकलितो हस्तधृतोऽनेकसंख्ये रणशिरसि संग्राममस्तके ककुभां दिशां प्रान्ता दिगन्तास्तत्र विश्रान्ता ये शैला पर्वतास्तेषां श्वभ्रान्ता गर्तमध्याः । 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः । तत्रस्थैः सपत्नैः सर्वतो वीक्ष्यमाणः । पुनः— अनवरतं निरन्तरं उचितामात्मनः कोशगुप्तिं निःशङ्कं गाहमानः शत्रूरःकोशो मुहूर्तं(?)-स्तस्य मध्यस्थितिरिति आश्चर्यपात्रम् ॥

वेगे प्राभञ्जनेऽपि प्रपतति न चलो नैव धाराधराणां

वृन्देऽभ्यर्णेऽपि लीनो न च परविषये स्वस्य साध्यस्य हेतुः ।

नैवाश्रूणां निदानं नयनपथगतो जातु न च्छिन्नमूलो

धूमोऽपूर्वः प्रतापज्वलनजनिरसौ जृम्भतेऽमुष्य खड्गः ॥ ३५ ॥

वेगे इति ॥ अमुष्यासौ खड्गोऽपूर्वो धूमो जृम्भते विकसति । किंविधः । प्राभञ्जने प्रभञ्जनस्यायं प्राभञ्जनस्तस्मिन्वेगेऽपि न प्रपतति । गच्छतीत्यर्थः । अन्यो धूमो वायुवेगेन प्रपतति । चलो नैव । अपरस्तु चलः । धाराधराणां मेघानां वृन्दे समूहे अभ्यर्णेऽपि

[न] लीनः। अपरो मेघेषु लीनो भवति। च पदं परविषये स्वस्य अनिः(?)······हेतुः। अन्यो धूम ईदृशो न। नयनपथगतः सन्नश्रूणां निदानं न। अन्यो धूमोऽश्रुनिदानमिति। जातु इति कदाचित् छिन्नमूलो न। अन्यश्छिन्नमूलो भवति। अत एवापूर्वत्वम्॥

निष्कम्पो भीषणानां सदसि जनयिता किं च वृद्धस्य तार-
श्वेतिम्ना विश्रुतस्य त्रिजगति यशसो जन्मभूः साहसानाम्।
प्रौढानामप्यनीके गुरुरुचितकृतौ जृम्भतेऽनीकिनीनां
वैपक्षीणामपूर्वः शमनशिशुरसावस्य कृष्णः कृपाणः॥ ३६॥

निरिति॥ अस्यासौ कृपाणो वैपक्षीणां वैरिणामनीकिनीनामुचितकृतावपूर्वः शमनशिशुः यमबालक इव जृम्भते। 'शमनो यमराड्यमः' इत्यमरः। किंविधः। भीषणानां सदसि निष्कम्पः कम्परहितः। किं चान्यत्। तारश्वेतिम्ना सोज्ज्वलशुभ्रभावेन त्रिजगति लोकत्रये विश्रुतस्य ख्यातस्य वृद्धस्य पूर्वार्जितस्य यशसो जनयितोत्पादकः। साहसानां जन्मभूः। पुनः प्रौढानामप्यनीके वृन्दे गुरुरुपदेष्टा। उचितकृताविति पदं देहलीप्रदीपन्यायेनात्रापि योजनीयम्॥

उत्साहात्स्वेन(?) फुल्लो रिपुनृपतिगणं त्याजयित्वाजिपृष्ठे
फूत्काराद्वित्यपुष्टस्तदसुसततगातृप्तिपानक्रमेण।
शत्रूणां कालखण्डान्तरपलशकलं रक्तकल्पं दधानः
संख्ये प्रेङ्खत्यपूर्वो भुजभुजगफणोऽमुष्य तीक्ष्णः कृपाणः॥ ३७॥

उदिति॥ अमुष्य तीक्ष्णः कृपाणो अपूर्वो भुज एव भुजगः सर्पस्तस्य फणः। 'फणा द्वयोः' इत्यमरः। संख्ये संग्रामे प्रेङ्खति। किंविधः। स्वेनो(?)त्साहात्फुल्लः। किं कृत्वा। रिपुनृपतिगणमाजिपृष्ठे। संग्राममध्ये इत्यर्थः। फूत्कारात्त्याजयित्वा (निजन्ता?)। पुनः किंविधः। तेषां शत्रूणामसवः प्राणास्त एव सततगा वायवस्तेषामासमन्तात् तृप्त्या यत्पानं प्राशनं तस्य क्रमस्तेन नित्यपुष्टः। सर्पाणां पवनाशनेति नाम सान्वयम्। सर्पाणां मणिरपेक्षितः। पुनः—शत्रूणां कालखण्डान्तरं यत्पलं मांसं तस्य शकलं तद्रक्तकल्पं दधानः। धत्तेऽसौ दधानः॥

सान्द्रच्छायाछटावानपि सकलदिशामन्तरालेऽविपन्नः
सिक्तोऽप्यस्त्रे रिपूणामथ सपदि पयः पायितोऽप्यक्षरूक्षः।
वेगैः प्राभञ्जनैरप्यतरलितवपुर्दोस्तमालप्ररोहः
संग्रामाध्वान्तरीपे विलसति सुतरामेतदीयः कृपाणः॥ ३८॥

सान्द्रेति॥ एतदीयः कृपाणो दोस्तमालो बाहुरेव तमालवृक्षस्तस्य प्ररोहः संग्रामस्य अध्वान्तरीपं द्वीपम्। 'द्वीपो स्त्रियामन्तरीपम्' इत्यमरः। तस्मिन्विलसति। कि-

विधः । सान्द्रा या छाया कान्तिस्तस्याश्छटा विस्तारस्तद्वानपि सकलदिशामन्तराले मध्ये अविपन्नः अनया रिपूणामस्रे रक्तैः सिक्तोऽपि अयान्यत्स यदि पयः पायितोऽप्यक्षवद्रूक्षः । पुनः किंविधः । प्राभञ्जनैः प्रभञ्जनस्य वायोरिमे तैर्वेगैरपि अतरलितवपुः ॥

मात्सर्यादन्यजिह्वाशतखननधियेवाननं दारयन्ती

संतर्पादेव कोष्णा नवरुधिरवसामज्जधारा धयन्ती ।

गण्डूषान्विक्षिपन्ती दिशि दिशि यशसां छद्मना कालजिह्वा

शत्रूणां संगराग्रे विलसति सुतरामेतदीया कृपाणी ॥ ३९ ॥

मात्सर्यादिति ॥ एतदीया कृपाणी संगराग्रे संग्रामाग्रे विलसति सततमतिशयेन । केव । कालजिह्वेति रूपकम् । कालजिह्वा किंविधा । मात्सर्यादन्यजिह्वानां शतं तस्य खननं तद्धियेव तद्बुद्धेव आननम् । शत्रूणामिति संबन्धे षष्ठी । दारयन्ती । अत एव संतर्पादेव कोष्णा किंचिदुष्णा । पुनः किंविधा । नवं यद्रुधिरं रक्तवसा च मज्जा च तासां धारा धयन्ती । धेट् पाने । शत्रूणां यशसां छद्मना मिषेण दिशि दिशि गण्डूषान्विक्षिपन्ती ॥

क्रीडन्ती द्वन्द्वयुद्धाजिरभुवि कुतुकात्सर्वतः संगताभ्यः

स्वर्वेश्याभ्यः प्रतीक्ष्यामरतरुसुमनोवर्षमुच्चैर्ददाना ।

देवीकृत्य क्षितीन्द्रांस्तदभिमतकृते बालिका कालरात्रेः

शत्रूणां वीतशङ्कं विलसति सुतरामेतदीया कृपाणी ॥ ४० ॥

क्रीडन्तीति ॥ एतदीया कृपाणी सुतरां वीतशङ्कं यथा स्यात्तथा विलसति शोभते । किंविधा । द्वन्द्वयुद्धस्याजिरभुवि द्वन्द्वयुद्धाङ्गणभूमौ क्रीडन्ती खेलन्ती । पुनः किंविधा । कुतुकात्सर्वतः संगताभ्यो मिलिताभ्यः स्वर्वेश्याभ्यः प्रतीक्ष्याः पूज्या अमरा देवास्तेषां तरवः कल्पवृक्षादयस्तेषां सुमनोवर्षमुच्चैरतितरां ददाना दत्ते सा तथा । किं कृत्वा । क्षितीन्द्रान्राज्ञो देवीकृत्य अदेवा देवा इति अभूततद्भावे च्विः। किमर्थमित्याह—तदभिमतकृते तेषां क्षितीन्द्राणामभिमतं तत्कृते तदर्थम्। पुनः किंविधा । शत्रूणां विरोधिनां कालरात्रेर्बालिका कन्या ॥

प्रत्यर्थिक्ष्मापतीनां प्रतितनु जनयन्स्तम्भवैस्वर्यकम्प-

स्वेदान्वैवर्ण्यमश्रु प्रलयमपि समित्मण्डपे चण्डतेजाः ।

धत्ते स्वाङ्गं समुद्यत्पुलकमिति महाश्चर्यपात्रं जयश्री-

पाणिग्राहं चिकीर्षुर्जयति रसवतामग्रणीरस्य खड्गः ॥ ४१ ॥

१. 'पुनः किंविधा' इत्ययं पाठः. 'शत्रूणाम्' इत्यतः प्रागेवोचितत्वात् 'कोष्णाः' इति द्वितीयान्तं धाराविशेषणमेव वरम्.

प्रत्यर्थीति ॥ अस्य खड्गो जयति सर्वोत्कर्षेण वर्तते। किंविधः। जयश्रीर्जयलक्ष्मी-स्तस्याः पाणिग्राहं पाणिग्रहणं चिकीर्षुः कर्तुमिच्छुः। पुनः—रसवतां रागवतामग्रणीः श्रेष्ठः। पुनः—प्रत्यर्थिनो ये क्ष्मापतयस्तेषां प्रतितनु प्रतिशरीरं स्तम्भश्च विस्वरस्य भावो वैस्वर्यं कम्पश्च स्वेदश्च तान् जनयन्सन्। समिन्मण्डपे संग्राममण्डपे। 'समितिसंग्रामसभयोः' इति कोशसारः। विवर्णस्य भावो वैवर्ण्यमश्रु च प्रलयश्च नष्टचेतना तेषां समाहारं तमपि जनयन्संपादयन्। 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गश्च वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्वि(त्वि)काः' इत्युक्तेः। पुनः किंकृतः। चण्डं प्रचण्डं तेजो यस्य स तथा। पुनः—इति महाश्चर्यपात्रम्। इतीति किम्। स्वाङ्गं स्वशरीरं समुद्भूतपुलकं प्रादुर्भूत[रोमाञ्चं] धत्ते, यः पाणिग्रहणकर्ता तस्य स्तम्भादयः सात्त्विकभावा भवन्ति। अत्र तु अन्येषामिति एतदाश्चर्यम् ॥

निष्कोशे यत्र कोशं करकमलकृतं धारयन्ति स्म मूर्ध्नि
द्वेषिप्रष्ठास्तदीयः क्षयमगमदलं संचितः किं च कोशः।
नान्यं श्लिष्येयमस्मादिति नियमितधीः कोशमुच्चैरधासी-
द्यद्धाराम्भोजयश्रीः स जयति समरेऽमुष्य जैत्रः कृपाणः॥ ४२ ॥

निष्कोश इति ॥ अमुष्य समरे जैत्रो जयशीलः स कृपाणो जयति सर्वोत्कर्षेण वर्तते। स कः। यत्र यस्मिन्निष्कोशे पिधानरहिते सति द्वेषिप्रष्ठा वैरिप्रथमाः। 'प्रष्ठोऽग्रगामी' इत्यमरः। मूर्ध्नि मस्तके करकमलकृतं कोशं मुकुलं धारयन्ति स्म। किं चान्यत्। तदीयो द्वेषिप्रष्ठसंबन्धी कोश अगारमलमत्यर्थं संचित एकीकृतः। अलं क्षयं नाशमगमत्। यद्धाराम्भोजयश्रीर्यस्य खड्गस्य धारा तस्या अम्भः पानीयं तस्य जयश्रीः। अस्माच्चत्रोरन्यं न श्लिष्येयमिति नियमितधीर्निश्चितबुद्धिः कोशं गोपनवस्तु उच्चैरधासीद्देवाते(?) प्रशानं चकारेत्यर्थः ॥

सान्द्राम्भोदाभिरामद्युतिहसितमुखा कुन्तभाजां बलानां
मध्ये विन्ध्याभगन्धद्विरदकटतटीरक्तसिन्दूरपूर्णा।
इन्धे निःसीमपार्श्वद्वितयनियमनैरज्झिहानस्वरूपा
सीमन्तोल्लेखरेखा समिति मृगदृशोऽमुष्य तीक्ष्णः कृपाणः ॥ ४३ ॥

सान्द्रामिति ॥ अमुष्य कृपाणो समिति संग्रामे मृगदृशः सीमन्तोल्लेखरेखेव सीमन्तः केशपद्धतिस्तदुल्लेखरेखेव। रूपकम्। इन्धे। दीप्ता भवतीत्यर्थः। किंविधा। कुन्तभाजां बलानां मध्ये सान्द्रा येऽम्भोदा मेघास्तेषामभिरामा या द्युतिः कान्तिः सैव हसितं मुखे यस्याः सा। सीमन्तपक्षे कुन्ताः कुन्तलाः। नामैकदेशे नामस्मरणम्। बलाः केशाः। बल-

मर्यादारहितं यत्पार्श्वद्वितयं तस्य नियमनेरुविहानस्वरूपा। सीमन्तरेखापि उभयपार्श्वनियमनेरुविहानस्वरूपा भवतीति जातिः ॥

ऊर्ध्वं दीप्त्या स्फुरन्त्या रविरुचिविसरैर्मण्डलं दर्शयन्तं
विभ्राणं चञ्चुसूचीमिव निशिततरं शोणमस्रेण कोणम् ।
रंहोभूम्ना प्रपित्सुं रणशिरसि मुहुः कम्पना मन्वते यं
श्येनं शत्रुप्रवीरा वय इव स जयत्यस्य तीक्ष्णः कृपाणः ॥ ४४ ॥

ऊर्ध्वमिति ॥ अस्य स,तीक्ष्णः कृपाणो जयति सर्वोत्कर्षेण वर्तते । स कः । शत्रुप्रवीरा वय इव । विशब्दस्य बहुवचनम् । यं कृपाणं श्येनं मन्वते मानयन्ति । किंविधं श्येनम् । ऊर्ध्वमाकाशे रविरुचिविसरैः सूर्यकान्तिसमूहैः स्फुरन्त्या दीप्त्या मण्डलं बिम्बं दर्शयन्तम्। पुनः किंविधम् । अस्रेण रुधिरेण शोणं निशिततरमतितीक्ष्णं कोणमेकदेशं चञ्चुसूचीमिव बिभ्राणम् । चञ्च्वास्तीक्ष्णत्वात्सूचीसाम्यम् । श्येनचञ्चुः शोणेति जातिः । रंहोभूम्ना वेगबाहुल्येन रणशिरसि प्रपित्सुं पतितुमिच्छन्तम् । किंभूताः । प्रवीरा वयश्च मुहुर्वारंवारं कम्पनाः कम्पयुक्ताः । वयोऽपि कम्पनस्वभावाः ॥

उन्मज्जद्दानधाराजलबहलझरीजर्जरान्कूटकल्पा-
न्विन्ध्याद्रिस्पर्धिदन्तावलबलकरटान्कोटिशः कुट्टयन्तम् ।
आहत्यापह्नुवानं जननयनगतिं मन्वते शत्रुवीरा
यं दम्भोलिं स एष प्रधनभुवि समुज्जृम्भतेऽमुष्य खड्गः ॥ ४५ ॥

उन्मज्जदिति ॥ स एषोऽमुष्य खड्गः प्रधनभुवि रणभूमौ समुज्जृम्भते । स कः । शत्रुवीरा यं दम्भोलिमशनिम्। 'दम्भोलिरशनिर्द्वयोः' इत्यमरः । मन्वते । किंभूतम् । ये दम्भोलिं विन्ध्याद्रिर्विन्ध्यपर्वतस्तत्स्पर्धिनो ये दन्तावलास्तेषां बलं सैन्यं तस्य करटा गण्डस्थलानि तान्कोटिशोऽनेकशः कुट्टयन्तं विदारयन्तम् । किंविधान्दन्तावलबलकरटान् । उन्मज्जती या दानधारा तस्या जलं तस्य बहला झरी प्रवाहस्तया जर्जरान् । पुनः— कूटकल्पाञ्शिखरन्यूनान् । पुनः कथंभूतं दम्भोलिम् । जननयनगतिं लोकनेत्रमार्गमाहत्यापह्नुवानमाच्छादयन्तम् ॥

काली कालायसीयैः पटुजरठतरैर्निर्मिता सारभागैः
श्लिष्टा पर्वद्वयेन स्फुटपुलकवती सर्वतः कम्पमाना ।
उन्मीलन्त्यूज्जिहीतेऽहितधरणिभुजां तर्जनी तर्जनीयं
कालस्याकालकल्पव्यपगमपिशुनामुष्य तीक्ष्णा कृपाणी ॥ ४६ ॥

कालीति ॥ अमुष्य तीक्ष्णा कृपाणी इयं कालस्य यमस्य तर्जन्युन्मील्युज्जिहीते ऊर्ध्वे

गच्छति। किंविधा। कालायसस्येमे कालायसीयाः। कालायसं लोहम्। तैः सारमार्गैर्निर्मिता। अत एव काली श्यामा। किंविधैः सारमार्गैः। पटुजरठतरैरतिदृढैः। पुनः किंविधा। पर्वद्वयेन श्लिष्टा। स्फुटपुलकवती। सर्वतः कम्पमाना। उन्मीलन्ती। अहितधरणिभुजां वैरिराज्ञां तर्जयन्ती तर्जनां कुर्वती। अनादरे षष्ठी। अकाले असमये कल्पः क्षयस्तस्य व्यपगमः प्राप्तिस्तत्पिशुना सूचका॥

दूरादेनं जिघांसोरहमहमिकया धावतः प्रातिपक्ष्य-
क्ष्माभृद्वर्गस्य भीत्या झटिति निकटतः किं च वैमुख्यभाजः।
वेणीवालोक्यते या रणशिरसि मुहुर्व्योमयानस्थितानां
वृन्दैः पृष्ठे लुठन्ती विलसति सुतरामेतदीया कृपाणी॥ ४७॥

दूरादिति॥ सेत्यध्याहारः। एतदीया कृपाणी सुतरां विलसति। सा का। या कृपाणी व्योमयानस्थितानां विमानमार्गस्थितानाम्। 'व्योमयानं विमानोऽस्त्री' इत्यमरः। देवानां वृन्दैः समूहैः प्रतिपक्षे भवाः प्रातिपक्ष्याः शत्रवो ये क्ष्माभृतो राजानस्तेषां वर्गस्य समुदायस्य पृष्ठे लुठन्ती वेणीवालोक्यते दृश्यते। कुत्रेत्यपेक्षायामाह—रणशिरसि मुहुर्वारंवारम्। किंभूतस्य प्रातिपक्ष्यक्ष्माभृद्वर्गस्य। दूरादेन कृपाणीपतिं जिघांसोर्हन्तुमिच्छति स तथा तस्य। अहमहमिकया अहं पूर्वमहमिका तया धावतः। किं च झटिति शीघ्रं भीत्या भयेन वैमुख्यं भजतीति वैमुख्यभाक्तस्य निकटतः। तद्भिः॥

तत्कालं शातकौणव्यतिकरमहिमाविर्भवच्चाकचिक्यं
प्रत्युप्तं गाढगाढं वरकनकमये सर्वतो वृन्तदेशे।
प्रत्यर्थिक्ष्मापतीन्द्रस्फुटमुकुटशिखाशेखरीभूतनील-
ग्रावाणं मेनिरे यं स जयति समरेऽमुष्य जैत्रः कृपाणः॥ ४८॥

तत्कालमिति॥ सोऽमुष्य जैत्रः कृपाणः समरे जयति सर्वोत्कर्षेण वर्तते। स कः। य कृपाण लोकाः प्रत्यर्थिनो ये क्ष्मापतीन्द्रा राजानस्तेषां स्फुटं मुकुटशिखा मुकुटाग्राणि तेषां शेखरीभूतो मुख्यभूतो यो नीलग्रावा नीलपाषाणस्तं मेनिरे। तत्र या(त)स्मात्। किंभूतं ग्रावाणम्। वर यत्कनकं सुवर्णं तन्मये वृन्तदेशे मूलप्रदेशे। 'वृन्तं प्रसवबन्धनम्' इत्यमरः। सर्वतः सर्वत्र गाढगाढम् ..............................॥

अश्रान्तं पुष्करान्तस्थितिरथ समये यो विकोषः स्पृहायाः
पात्रेणावासमाशावलयमपि यशःसौरभेणाश्नुवानः।
स्पष्टं संग्राममलक्ष्म्याः श्रवणकुवलयभ्रान्तिमुद्रामशुद्रां
यो धत्ते स प्रतीतो रणशिरसि जयत्यस्य जैत्रः कृपाणः॥ ४९॥

[अस्य श्लोकस्य टीका त्रुटिता।]

यत्कान्तिर्नीलनीला विधुतकलिमलातङ्कशङ्कानिदानं
प्रत्यर्थिक्षोणिपालाधिपतिवरवधूनेत्रधाराधराणाम् ।
लोकानां नीरनाथभ्रममिह वितरन्नुत्कबन्धैकमूलं
रोदोरोकान्तकाले विलसति स चिरायैतदीयः कृपाणः ॥ ९० ॥

[अस्य श्लोकस्य टीका त्रुटिता ।]

यो लक्ष्मीमुद्दिधीर्षुः सुरभिमणियुते नागराजाश्वरत्ने
रामस्यादाञ्जिहीर्षुर्जलजमपि चलद्बाहुदण्डावधूतः ।
आश्चर्यं किं च दित्सन्ननिभृतमखिलोद्वेलपाथोधिनाथ-
क्रोडे मन्थाद्रिलीलां कलयति स जयत्यस्य तीक्ष्णः कृपाणः ॥९१॥

[अस्य श्लोकस्य टीका त्रुटिता ।]

हस्ताग्रे तिष्ठमानो रिपुज''''नक्कतान्तस्य दुष्प्रेक्ष्यमूर्तिः
स्पष्टं यो दुर्निवारो विधिविलसितवत्क्षत्रियाणां सहस्रैः ।
अश्रान्तं वर्धिताशः स्फुरितविलसितैः सर्वतः कालकूट-
भ्रान्तिं भूम्ना विधत्ते रणभुवि स जयत्यस्य तीक्ष्णः कृपाणः॥९२॥

[अस्य श्लोकस्य टीका त्रुटिता ।]

उत्पत्तिस्थानमानन्दितजननभृतस्त्वद्यशःशीतरश्मे-
रम्भः सारः प्रतीतोऽभिनवजलधरश्यामलो वारिराशिः ।
भीमः कीलालसारैरिह वहति न यो विग्रहं शैशुमारं
न क्वापि प्राप्तसङ्गः स जयति समरेऽमुष्य तीक्ष्णः कृपाणः॥९३॥

[अस्य श्लोकस्य टीका त्रुटिता ।]

शश्वन्मुष्ट्या गृहीतस्त्रिभुवनविवरव्यापकं भीममूर्तिः
पात्रं विश्वस्पृहायाः स्थिरतरकिरणः संततं भ्रान्तिशीलम् ।
प्रस्निग्धश्यामकान्तिर्विगतमलशरत्पार्वणेन्दुप्रकाशं
सूतेऽपूर्वं यशो यः स जयति समरेऽमुष्य जैत्रः कृपाणः ॥९४॥

[अस्य श्लोकस्य टीका त्रुटिता ।]

मध्ये सान्द्राम्बुदालीमसृणमलिनिमा सुन्दरश्रीर्मदान्ध-
प्रत्यर्थिक्षोणिपालद्विरदकटतटीरक्तसंसिक्तधारः ।

यः स्पष्टं वीरलक्ष्म्या लसदसितमिलत्पार्श्वकौसुम्भवासः-
खण्डभ्रान्तिं विधत्ते स जयति समरेऽमुष्य तीक्ष्णः कृपाणः ॥१५॥

[अस्य श्लोकस्य टीका त्रुटिता।]

प्रादुर्भावप्रतापप्रबलहुतभुजः शत्रुवंशेन्धनस्य
प्रष्ठो धाराधराणां रिपुयुवतिजनाश्रुस्रवन्तीनिदानम्।
दुष्प्रेक्ष्यार्चिच्छटावानपि किमपि पयःप्रान्ततः स्निग्धमूर्ति-
र्विख्यातोऽसंख्यसंख्याजिरभुवि स जयत्यस्य जैत्रः कृपाणः ॥१६॥

[अस्य श्लोकस्य टीका त्रुटिता।]

प्रत्यर्थिक्ष्मापतीन्द्रद्विरदकटतटीनिर्यदस्रारुणश्री-
हेतुर्मित्रोदयस्य प्रबलरिपुबलध्वान्तसंहारकालः।
उत्साहोदग्रबाहुहृदयगिरिशिखरे यः प्रभातप्रतीतिं
स्वीयस्यान्ते विधत्ते स जयति समरेऽमुष्य तीक्ष्णः कृपाणः ॥१७॥

[अस्य श्लोकस्य टीका त्रुटिता।]

छाया प्रत्यर्थिपृथ्वीतिलकविटपिनां वञ्चयंश्चक्रवालं
कष्टानामर्कतेजःप्रतिफलनभुवां दीपयंश्चाकचिक्यात्।
धीरैरुच्चैश्छिरस्त्रैरपि रणरसिकैर्दुःसहः शात्रवाणां
यो मध्याह्नप्रतीतिं जनयति स जयत्येतदीयः कृपाणः ॥ १८ ॥

[अस्य श्लोकस्य टीका त्रुटिता।]

यो रोदःकन्दरान्तोछसदसृगरुणीभूतधाराधरोऽस्ते
हेतुस्तेजस्विभर्तुर्विघटितसकलद्वेषिचक्रः क्षणेन।
कालातिक्रान्तिभीताञ्जलिमुकुलशतैरर्च्यमानः समन्ता-
त्सायंकालप्रतीतिं जनयति स जयत्यस्य जैत्रः कृपाणः ॥ १९ ॥

[अस्य श्लोकस्य टीका त्रुटिता।]

नक्षत्रोत्पातरम्यः क्षपितपरमहो वैभवः संविजातां
न्यक्कुर्वन्कान्तिमत्तां दिशि दिशि मघुणं दर्शयन्नीलिमानम्।
विख्यातं कालरात्र्या मुखमतनु तमो निर्विवेकप्रदोष-
भ्रान्तिं तन्वन्रिपूणां समिति विनयतेऽमुष्य जैत्रः कृपाणः ॥२०॥

[अस्य श्लोकस्य टीका त्रुटिता।]

मूकत्वं किं च कोणे क्वचिदपि लयनं नेत्रसंकोचमुद्रां
प्रत्यर्थिक्ष्मापतीनां रणशिरसि दिशन्दिग्भ्रमं संभ्रमेण ।
व्यक्त्या छायापथस्याकलितसुरपथो यो निशीथप्रतीतिं
शोणोत्कीर्णो विधत्ते स जयति सुतरामेतदीयः कृपाणः ॥ ६१ ॥

[अस्य श्लोकस्य टीका त्रुटिता ।]

ख्यातं प्रत्यर्थिशङ्खं श्रुतिविषयहरं संभ्रमात्संजिहीर्षु-
र्नीरन्निःसीमवेगातिशयविदलितायोधनाम्भोधिमध्यः ।
कीलालाभ्यन्तराले व्यचरदतिचिरं यो दिशन्नादिमत्स्य-
भ्रान्तिं प्रज्ञावतां स प्रधनभुवि समुज्जृम्भतेऽमुष्य खड्गः ॥ ६२ ॥

.................................................................

.................................................................

'युद्धमायोधनं जन्यं प्रधनम्' इत्यमरः । समुज्जृम्भते । स कः । यः प्रज्ञावतां बुद्धिमतामादिमत्स्यो मत्स्यावतारः श्रीकृष्णः [तद्भ्रा]न्तिं दिशन् । कीलालाभ्यन्तराले उदकमध्ये । 'पयः कीलालममृतम्' इत्यमरः । पक्षे—कीलालं रक्तं तत्रान्तराले तन्मध्ये । 'शोणितेऽम्भसि कीलालम्' इत्यमरः । अतिचिरं बहुकाले व्यचरदगच्छत् । 'चर गतिभक्षणयोः' इति । किंविधः । प्रत्यर्थी वैरी स एव शङ्खस्तन्नामा अस(सुरस्तं) संभ्रमादादरात्संजिहीर्षुर्हन्तुमिच्छुः । किंविधं शङ्खम् । ख्यातम् । पुनः—श्रुतिविषयो वेदविषयस्तं हरतीति हरस्तम् । पक्षे—कर्णविषयहरम् । पुनः किंविधः । जाग्रदविदिताळस्यो निःसीमो मर्यादारहितो वेगातिशयस्तेन विदलित आयोधनमेवाम्भोधिः संग्रामसमुद्रस्तस्य मध्यो येन स तथा ॥

अश्रान्तं पुष्करान्तःकृतवसतितया स्निग्धजम्बालमूर्ति-
र्भूभृन्नाथोन्नताङ्गव्यतिकरविभवोद्यत्खणत्कारभीमः ।
शश्वत्पारुष्यशंसी स्फुटमहिममहाविग्रहो मूलकूर्म-
भ्रान्तिं प्रज्ञावतां यो जनयति स जयत्येतदीयः कृपाणः ॥ ६३ ॥

अश्रान्तमिति ॥ स एतदीयः कृपाणो जयति । स कः । यः प्रज्ञावता(तां बुद्धिमतां) मूलकूर्मः कूर्मावतारो हरिस्तद्भ्रान्तिं जनयति । किंविधः । अश्रान्तं नित्यम् । 'सततानारताश्रान्त-' इत्यमरः । पुष्करान्तः । 'पुष्करं सर्वतो मुखम्' इत्यमरः । कृतवसतितया तत्र ......निवासत्वेन स्निग्धा जम्बालयुक्ता कर्दमयुक्ता शैवालयुक्ता वा मूर्तिर्यस्य स तथा । पक्षे—[पुष्करं] पिधानं तदन्तः कृतवसतितया स्निग्धजम्बाला मेदका मूर्तिर्यस्य स तथा । 'जम्बालः शैवले पङ्के जम्बले मेदके' इति मेदिनी । भूभृन्नाथ(थो मन्)दरादिस्तस्योन्नतं

यदग्रं शिखरं तस्य व्यतिकरः संसर्गस्ताद्विभवादुदयन्खणत्कार आघातशब्दस्तेन भीमः। पक्षे—भू[भृ]भृन्नाथा राजानस्तेषामुन्नतानि मस्तकानि तद्व्यतिकरादिभवात्संपर्कसामर्थ्यादुदयत्खणत्कारस्तेन भीमः। पुनः—शश्वन्निरन्तरं पारुष्यशंसी काठिन्यसूचकः। स्फुटमहिमा महान्विग्रहो देहो विरोधश्च यस्य सः॥

उन्मीलद्भासुरश्रीः स्फुटपुलकवपुः क्रूरदंष्ट्राप्रकाण्ड-

स्फायद्दीप्तिप्रतानव्यतिकरशबलो दारयन्वल्यगारम्।

मग्नां प्रत्यर्थिसैन्याम्बुधिपयसि हठान्मेदिनीमुद्दिधीर्षु-

र्यो मूलक्रोडलीलां कलयति स जयत्येतदीयः कृपाणः॥ ६४॥

उन्मीलदिति॥ स एतदीयः कृपाणो जयति। स कः। यो मूलक्रोड आदिवराहस्तल्लीलां कलयति अङ्गीकरोति। किंविधः। उन्मीलन्ती भासुरा श्रीर्यस्य स स्फुटं पुलकयुक्तं वपुर्यस्य सः। क्रूरो यो दंष्ट्राप्रकाण्डः प्रशस्तस्तम्ब(जम्भ)स्तत्र स्फायद्वर्धिष्णु यद् दीप्ति······रत्नाना कान्तिविस्तारः ········। प्रत्यर्थिनो विरोधिनस्तेषां सैन्यं तदेवाम्बुधिः समुद्रस्तस्य पयसि जले मग्नां मेदिनीं हठादुद्दिधीर्षुरुद्धर्तुमिच्छुः॥

दुष्प्रेक्ष्यै(क्षै)रन्यतेजःप्रतिहतिकरणैरर्चिषां चक्रवालै

रोदोरोकान्तरालं पटुविकटसटासंनिभैरश्नुवानः।

क्रूरत्वस्यैकपात्रं त्रिजगति न परिच्छिन्नशक्तिस्वरूपो

यो भ्रान्तिं नारसिंहीं जनयति स जयत्येतदीयः कृपाणः॥ ६५॥

दुष्प्रेक्ष्यै(क्षै)रिति॥ स एतदीयः कृपाणो जयति। स कः। यो नारसिंहीं नारसिंहस्येयं नारसिंही तां भ्रान्तिं जनयति। किंविधः। अर्चिषां तेजसां चक्रवालै रोदोरोकान्तरालं द्यावापृथिव्यो रोकं रन्ध्रं तस्यान्तरालं मध्ये। 'द्यावापृथिव्यो रोदस्यौ' इत्यमरः। 'छिद्रं निर्व्यथनं रोकम्' इति च। अश्नुवानो व्याप्नुवानः। पुनः—त्रिजगति क्रूरत्वस्यैकं पात्रम्। न परिच्छिन्नं शक्तिस्वरूपं यस्य स तथा। किंविधैरर्चिषां चक्रवालैः। दुष्प्रेक्ष्यैर्दुःखेन प्रेक्षितुं शक्यैः। पुनः—अन्यतेजसां प्रतिहतिर्नाशस्तत्करणैः। तत्कारणैरित्यर्थः। पट्व्यश्च ता विकटसटाश्च तत्संनिभैस्तत्तुल्यैः॥

नो दैन्येनाभिभूतो न च बलिविभवं योऽपदेशाद्दहार्षी-

त्रान्येभ्यः स्वस्तिकारी न च परिगणितैर्विक्रमैः संप्रतीतः।

नो मायासंवृतात्मा न च नमति पदन्यासभागित्यपूर्वं

खर्वत्वं विष्टपेषु प्रथयति स जयत्येतदीयः कृपाणः॥ ६६॥

नो दैन्येनेति॥ स एतदीयः कृपाणो जयति। स कः। यो विष्टपेषु भुवनेषु। 'विष्टपं भुवनं जगत्' इत्यमरः। इत्यपूर्वं खर्वत्वं ह्रस्वत्वम्। 'खर्वो ह्रस्वश्च वामनः' इत्यमरः। प्रथ-

यति ख्यापयति। यो दैन्येन दारिद्र्येण नो अभिभूतः पराभूतः। च परं यो [न] बलिविभवं बलिसामर्थ्यमपदेशाद्व्याजाद्दद्दर्पात् । अहार्दित्यर्थः। अन्येभ्य इतरेभ्यः स्वस्तिकारी स्वस्तिकर्ता न। 'नमःस्वस्ति-'इति चतुर्थी। पुनः—यः परिगणितैर्विक्रमैः संप्रतीतो न। बहुविक्रमवानिति भावः। मायासंवृतस्यात्मा(?)नो। मायाशून्य इत्यर्थः । यश्च न नमति नम्रो न भवति। पदन्यासभाक्। अत एवान्यापेक्षयापूर्वत्वम् ॥

पारुष्यस्यैकपात्रं किल सकलपरक्षत्रसंतानमारः
शत्रूद्यद्दोःसहस्रव्यपनयनपटुर्भिन्नभूभृद्विशेषः।
बाहाभाजां वरिष्ठैरपि भुवनगुरोः संनिधानाददृश्यो
धत्ते यो जामदग्न्यभ्रममिह स जयत्यस्य जैत्रः कृपाणः ॥ ६७ ॥

पारुष्यस्येति ॥ अस्य जैत्रः कृपाणो जयति। स कः। यो जामदग्न्यभ्रमं धत्ते। धारयतीत्यर्थः। किंविधः। पारुष्यस्य काठिन्यस्यैकं पात्रं किलेति श्रूयते । सकलं यत्परक्षत्रं तस्य संतानं वंशस्तस्य मारः मारणम्। मामः(?) घञ्। शत्रूणां शत्रोर्वा उद्यद्दोःसहस्रं बाहुसहस्रं तस्य व्यपनयनं दूरीकरणं तत्र पटुः कुशलः। भिन्ना भूभृद्विशेषा राजविशेषा येन स तथा। बाहाभाजां हस्तवतां वरिष्ठैरपि श्रेष्ठैरपि भुवनगुरोर्नायकस्य संनिधानाददृश्योऽदर्शनीयः। जामदग्न्यपक्षे—भुवनगुरोः शिवस्य संनिधानाददृश्यत्वम् ॥

यः कौशल्यार्तिकारी रिपुयुवतिहृदां संप्रहृष्यन्सुबाहु-
र्विश्वामित्रावमानप्रकटितविभवोऽशंकरेष्वासमाथी।
हन्ता संग्रामसीम्नि प्रबलबहुगुणामित्रपञ्चाननानां
लोकेष्वाश्चर्यरामः स जयति सुतरामेतदीयः कृपाणः ॥ ६८ ॥

य इति ॥ एतदीयः स कृपाणो जयति सुतरामतिशयेन। स कः। यो लोकेषु आश्चर्यराम इव रामः। रामाद्विलक्षणत्वेनाश्चर्यम् । तदेव [विशेष]णैर्विशदयति—यः कौशल्यार्तिकारीत्यनेन विरुद्धमतः कौ पृथिव्यां शल्यरूपा वैरिणस्तेषामार्तिकारी। रिपुयुवतिहृदां वैरिस्त्रीहृदयाणाम्। अनादरे षष्ठी। संप्रहृष्यन्। 'हृष् हरणे'(?) इत्यस्य रूपम्। सुबाहुर्येन। रामस्तादृग्भिन्नः। यो विश्वस्य जगतोऽमित्रास्तेषामवमानोऽनादरस्तेन प्रकटितो विभवो येन सः। रामस्तु विश्वामित्रमानकर्तेति प्रसिद्धम्। पुनः—यः खड्गोऽशंकरा दुःखकर्तारस्तेषु अस्यतेऽसौ आसस्तन्माथी। रामस्तु शंकरस्येष्वासं कार्मुकं तन्माथी । पुनः ········· देवानाममित्रा ·································मः दशाननस्तद्धन्तेत्याश्चर्यरामः ॥

स्निग्धाम्भोदाभिरामद्युतिरवनितले मित्रगोपालकानां
वृन्दैरालक्ष्यमाणो दिशि दिशि बहुधा विस्मिताशेषलोकः।

१ 'मायया संवृत परज्ञानाविषयीकृत आत्मा यस्य' इति पाठो भवेत्.

स्वर्गस्त्रीणामभीष्टं रणभुवि वितरन्खण्डितारातिबाणो
कंसारातिप्रतीतिं जनयति स जयत्यस्य जैत्रः कृपाणः ॥ ६९ ॥

स्निग्धेति ॥ अस्य जैत्रः स कृपाणो जयति । स कः । यः कंसारातिप्रतीतिं श्रीकृष्णप्रतीतिं जनयति । ······ ········किंविधः । स्निग्धो योऽम्भोदो मेघस्तद्वदभिरामद्युतिः । पुनः—अवनितले मित्रगोपालकानां मित्राणि गोपालका राजानः । पक्षे—मित्राणि गोपालकास्तेषां वृन्दैः आलक्ष्यमाणो दिशि दिशि प्रतिदिशं बहुधा बहुप्रकारं विस्मिता अशेषलोका यस्मिन्स्त तथा । स्वर्गस्त्रीणामभीष्टमीप्सितं [वितरन् ।] रणभुवि संग्रामभूमौ खण्डिता अरातिबाणा वैरिशरा येनेति । पक्षे—खण्डितोऽरातिश्चासौ बाणो बाणासुरो येन । · · ····ति ॥

सत्त्वाधिष्ठानभास्वत्तनुभिरधिसमित्प्राङ्गणं सुप्रसिद्धै-
र्धीरैरालोच्यमानः कथमपि विमुखो नम्रबालाबलासु ।
लोकातीतप्रभावातिशयमहिमतः शत्रुकामाहितो यो
बुद्धभ्रान्तिं विधत्ते स जयति सुतरामेतदीयः कृपाणः ॥ ७० ॥

[सत्त्वे]ति ॥ स एतदीयः कृपाणः सुतरां जयति । स कः । यो बुद्धभ्रान्तिं विधत्ते । किंविधः । अधिसमित्प्राङ्गणं संग्रामप्राङ्गणे············ । 'समित्सङ्गमायुद्धयोः' । [धीरैः] आलोच्यमानः । किंविधैः धीरैः । सत्त्व सार' सत्त्वांशश्च तस्याधिष्ठानं तेन भास्वन्तस्तनवः प्र······[ये]षां ते तैः । पुनः किंविधैः । ······ । नम्रा विनीता बालाः शिशवोऽबलाः स्त्रियस्तासु कथमपि विमुखो मारको न भवतीत्यर्थः । [न]म्रा बाला या अबलास्तासु विमुखः पराङ्मुखः । लोकातीतः सर्वाधिक(?)प्रभावातिशयस्तस्य महिमतो महिम्न इति तथा तस्मिः । ······मे अहितः । पक्षे—शत्रुकामेषु आहितः सादरः ॥

मज्जन्तं दुश्चरित्रप्रतिभयजलधौ संप्लवाद्धर्मराजं
यो वेगादुद्दिधीर्षुः प्रधनभुवि गतो निष्परीवारभावम् ।
दुर्दान्तानां समाजं समहरदहितम्लेच्छभूवल्लभानां
कल्किः शोकापनोदी विलसति स चिरायैतदीयः कृपाणः ॥७१॥

मज्जन्तमिति ॥ स एतदीयः कृपाणश्चिराय बहुकाल कल्किरिव कल्किः । [स] कः । यो दुर्दान्ताना दुष्टानामहिता ये म्लेच्छभूवल्लभा राजानस्तेषा समाजमहरद् । 'हृञ् हरणे' । किंभूतः । दुश्चरित्राविरोधे(?)···[प्र]तिभयं भीतिस्तदेव जलधिः समुद्रस्तस्मिन् पर्यन्तं धर्मराजं संप्लवात् सम्यक् प्लुतेर्वेगादुद्दिधीर्षुरुद्धर्तुमिच्छुः । पुनः—[प्रधन]भुवि संग्रामभूमौ निष्परीवारभावं निष्पिधानत्वं गतः । कल्किपक्षे—निष्परीवारोऽसहायः । शोकापनोदी शोकनाशकः ॥

यो निष्णातस्त्रिलोक्यां सरभसमहितोत्तुङ्गगोत्रप्रभेदे
जिष्णुः संग्रामसीम्नि प्रबलपरबलारातिभावात्प्रतीतः ।
वृत्रव्यामोहकारी त्रिदशपरिषदा सर्वदा श्लाघ्यमान-
श्लोकः शक्रप्रतीतिं जनयति स जयत्यस्य जैत्रः कृपाणः ॥ ७२ ॥

य इति ॥ अस्य जैत्रः कृपाणो जयति । स कः । यः शक्रप्रतीतिं जनयति । यस्त्रिलोक्यां सरभसं यथा तथा अहितानां वैरिणां [उत्तु]ङ्गानि यानि गोत्राणि कुलानि तेषां प्रभेदे प्रकृष्टभेदे निष्कान्तः(?)। शक्रपक्षे—सरभसाः सवेगा महिताः श्रेष्ठा उत्तुङ्गा उच्चा गोत्रा पर्वतास्तेषां प्रभेदे निष्णातस्तत्परः । जिष्णुर्जयशीलः । कुत्र । संग्रामसीम्नि । प्रबलं यत्परबलं तस्यारातिभावात्प्रतीतः ख्यातः । ···नः परो बलारातिभावात्प्रतीतः 'बलारातिः शचीपतिः' इति नाम्ना प्रतीतः वृत्रस्यान्धकारस्य व्यामोहकारी । स्वस्य श्यामत्वात् । पक्षे—वृत्रो दैत्यः । त्रिदशपरिषदा देवसभया सर्वदा श्लाघ्यमानः श्लोको यशो यस्य स तथा । ·········श्लोकः पद्यम् । 'श्लोको यशसि पद्ये च' इति कोशः ॥

यः श्रोत्राध्वप्रविष्टोऽप्यरिहृदि जनयत्याधिविस्फोटजातं
चक्षुष्यः क्षत्रमात्रं दहति शिशिरयत्यात्तगन्धोऽपि नम्रान् ।
किं च द्विट्खड्गधाराजलविलसनतो दीप्यतेऽसंख्यतेजा
लोकेऽप्याश्चर्यवह्निर्मृधभुवि स जयत्यस्य तीक्ष्णः कृपाणः ॥ ७३ ॥

य इति ॥ अस्य स तीक्ष्णः कृपाणो मृधभुवि संग्रामभूमौ जयति । स कः । ······ [लो]केऽसंख्यतेजा अतिदीप्त आश्चर्यवह्नी रूपकम् । श्रोत्राध्वप्रविष्टोऽपि कर्णमार्गप्रविष्टः श्रुतमात्रोऽरिहृदि शत्रुहृदये···आधि[वि]स्फोटजातं जनयति उत्पादयति । चक्षुष्यः सन्दृष्टिगोचरः क्षत्रमात्रम् । अत्र मात्रपदं साकल्ये । दहति । कैवल्ये वा क्षत्र··· । [क्ष]त्रमेव नान्यदिति आत्तगन्धोऽपि नम्रान् शिशिरयति । किं चान्यत् । द्विट्खड्गधारेव जल वैरिखड्गधारेव जल तस्य विलसनतो दीप्यते । अग्नेस्त्वेतद्विलक्षणत्व इत्याश्चर्यत्वादित्वमस्य ॥

संग्रामे संगतायाः सरभसविलसन्मण्डलाग्रोग्रपाणि-
प्रत्यर्थिक्षत्रदृष्टेः समसमयमतिक्रूरकर्मा कृतान्तः ।
कालः कल्पावसानभ्रमकृदरिजनाशेषकर्मैकसाक्षी
यः साक्षादन्तकश्रीः स जयति निशितोऽमुष्य जैत्रः कृपाणः॥ ७४॥

संग्राम इति ॥ अमुष्य निशितस्तीक्ष्णः स जैत्रः कृपाणो जयति । स कः । यः साक्षादन्तकश्रीर्यमश्रीः । किंविधः । संग्रामे युद्धे संगताया मिलितायाः सरभसं विलसन् । यो [मण्डला]ग्रः खड्गस्तेनोग्रः क्रूरः पाणिर्हस्तो यस्य एवंविधं प्रत्यर्थिक्षत्र तस्य दृष्टिस्तस्याः समसमयं तत्कालमतिक्रूरकर्मा । कृतो···ऽन्तो नाशो येन सः । कालः श्यामः कल्पावसानस्य भ्रमकृत् । अरिजनस्य शत्रुलोकस्य [अशेष]कर्मणामेकः साक्षी ॥

प्रत्यर्थिक्ष्मापतीनामसुहरणविधावुल्बणक्रूरकर्मा
शश्वन्मांसास्थिमज्जाव्यतिकरविभवाद्दूरदुष्प्रेक्ष्यमूर्तिः।
यः संमूर्छत्कदुष्णक्षतजशबलितः कालरात्रिप्रमोदी
क्रव्याद्बुद्धिं विधत्ते स जयति समरेऽमुष्य तीक्ष्णः कृपाणः ॥७५॥

प्रत्यर्थीति ॥ अमुष्य स तीक्ष्णः कृपाणः समरे जयति। स कः। यः क्रव्यात्। 'राक्षसः कौणपः क्रव्यात्' इत्यमरः। तद्बुद्धिं विधत्ते। [किंवि]धः। प्रत्यर्थिक्ष्मापतीनां प्रतिस्पर्धिपृथ्वीपतीनामसुहरणविधौ प्राणहरणविधौ उल्बणक्रूरकर्मा अत्यर्थं क्रूरकर्मा। शश्वन्निरन्तरं मांसमस्थि मज्जा च तेषां व्यतिकरः संपर्कस्तद्विभवात् दूरं दुष्प्रेक्ष्या मूर्तिर्यस्य स तथा। संमूर्छद्द्विगुणीभवत् किंचिदुष्णं कदुष्णं यत्क्षतजं रक्तं तेन शबलितश्चित्रितः। कालरात्रिर्देवता तत्प्रमोदी तत्संतोषकर्ता ॥

संग्रामोदन्वतां यः प्रभवति विभवात्प्राभवेऽत्युद्धतायाः
शश्वत्काबन्धसृष्टेः प्रबलमदवशाद्वल्गनस्यैकहेतुः।
दाता प्रत्यर्थिभूतक्षितिभृदभिमतानन्तधाराधराणां
जन्ये पाशिप्रतीतिं जनयति स जयत्येतदीयः कृपाणः ॥ ७६ ॥

संग्रामेति ॥ स एतदीयः कृपाणो जयति। स कः। यो जन्ये युद्धे पाशिप्रतीतिं जनयति। 'प्रचेता वरुणः पाशी' इत्यमरः। स कः। यः संग्राम एवोदन्वन्तः समुद्राः। 'उदन्वानुदधिः' इत्यमरः। तेषां प्राभवे पराभवे। 'प्राभवस्तु पराभवः' इति द्विरूपः। प्रभवति समर्थो भवति। कस्मात्। विभवात्सामर्थ्यात्। पुनः किंविधः। अत्युद्धतायाः काबन्धसृष्टेः शिरोविहीनशरीरसृष्टेः। पक्षे—उदकसृष्टेः। शश्वन्निरन्तरं प्रबलमदवशाद्वल्गनस्यैकहेतुरेककारणम्। पुनः—प्रत्यर्थिभूता याचकभूताः शत्रुभूताश्च क्षितिभृतो राजानः पर्वताश्च तेषामभिमता ये अनन्तधाराधराः खड्गा मेघाश्च तेषां दाता ॥

योऽश्रान्तं पुष्करान्तःकृतवसतितया पांशुपातानभिज्ञो
रंहोभूम्ना रिपूर्वीधरभुजविपिनोन्मूलने दृष्टसारः।
उत्तुङ्गस्कन्धपीठेष्वविरतविहृतिर्नाप्तगन्धः कदाचि-
द्वातभ्रान्तिं विधत्ते स जयति समरेऽमुष्य तीक्ष्णः कृपाणः ॥७७॥

योऽश्रान्तमिति ॥ अमुष्य स तीक्ष्णः कृपाणः समरे जयति। स कः। यो वातभ्रान्तिं वायुभ्रमं विधत्ते करोति। किंविधः। अश्रान्तं निरन्तरं पुष्करान्तः पिधानं मध्ये कृतवसतितया तत्र स्थित्वा पांशुपातानभिज्ञो रजःकणसंसर्गानभिज्ञः। सर्वदा निर्मल इति भावः। पक्षे—पुष्करं व्योम तदन्तःपातित्वात्पांशुपातानभिज्ञः। 'व्योम पुष्करमम्बरम्' इत्यमरः। रंहोभूम्ना वेगबाहुल्येन रिपव एवोर्वीधरा राजानस्तेषां भुजास्त एव विपिनं

तस्योन्मूलने दृढः सारो बलं यस्य स तथा । पक्षे—रिपव(णाम्) इवोर्वीधराणां पर्वतानां भुजेव विपिनानि तेषामुन्मूलने दृढसारः । उत्तुङ्गानि स्कन्धपीठानि तेष्वविरतविहृतिः । पक्षे—उत्तुङ्गा ये स्कन्धाः सप्तमवङ्गा (?) व(प्र)वहादयः । कदाचित्—नात्तो गन्धो लेशो येन । पक्षे—आत्तगन्धो वे(ने)ति काकुः । गृहीतगन्ध इति यावत् ॥

श्रीदत्वेन प्रतीतस्त्रिपु भुवनतलेषूग्रमित्रं समित्यां
शश्वल्लीलावदानप्रमदपरवशैः किंनरैर्गीतकीर्तिः ।
यो बिभ्रच्चोत्तराशां विजितिपु ककुभामाश्रितः सार्वभौमं
पौलस्त्यस्य प्रतीतिं जनयति स जयत्यस्य जैत्रः कृपाणः ॥ ७८ ॥

श्रीदेति ॥ अस्य स जैत्रः कृपाणो जयति । स कः । यः पौलस्त्यस्य कुबेरस्य । 'पौलस्त्यो नरवाहनः' इत्यमरः । [तस्य] प्रतीतिं जनयति उत्पादयति । किंविधः । त्रिषु भुवनेषु लोकेषु श्रीदत्वेन प्रतीतः ख्यातः । समित्यां संग्राम उग्राणां मित्रम् । पक्षे—उग्रः शिवः । 'उग्रः कपर्दी' इत्यमरः । पुनः—शश्वन्निरन्तरं लीला विलासस्तस्यावदानं महत्कर्म तस्य प्रमदो हर्षस्तत्परवशैर्हर्षाधीनैः किंनरैर्गीतकीर्तिः । पुनः—ककुभां दिशां विजितिषु उत्तराशां श्रेष्ठाशां बिभ्रत् । पुनः—सार्वभौमं सर्वभूमिसंबन्धमाश्रितः । पक्षे—सार्वभौमं दिग्गजमाश्रितः । 'पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः' इत्यमरोक्तम् ॥

भीमः कालेषु कालो भृतभुजगवराभोगदुष्प्रेक्ष्यमूर्ति-
र्नित्यं प्रत्यर्थिकामप्रविदलनफलस्पष्टदुर्मृष्टदृष्टिः ।
इत्थं यः शक्तिभूमप्रथितमहिमतो दर्शितेशानभावः
कोणे न क्वापि लीनः स जयति समरेऽमुष्य तीक्ष्णः कृपाणः ॥७९॥

भीम इति ॥ अमुष्य स तीक्ष्णः कृपाणः समरे संग्रामे जयति । स कः । य इत्थममुना प्रकारेण शक्तिभूमा शक्तिरुत्साहः । 'शौर्ये उत्साहादौ बले स्त्रियाम्' इति मेदिनी । तस्य बाहुल्यं तेन प्रथितः ख्यातो यो महिमा सामर्थ्यम् । तस्मात्तसिः । दर्शित ईशानभावो येन । ईशानपक्षे—शक्तिः पार्वती । ............................तद्वत्कालः । ईशानपक्षे—'व्योमकेशो भवो भीमः' इत्यमरः । कालेषु यमेषु कालो मृत्युः । पुनः—भृता भुजं गच्छतीति भुजगा वराभोगा श्रेष्ठपरिपूर्णता दुष्प्रेक्ष्या दर्शनायोग्या मूर्तिर्यस्येति स तथा । अथवा भृता भुजगवद्वरा भोगा दुष्प्रेक्ष्या मूर्तिर्येन स तथा । ईशानपक्षे—भृता भुजगावराणामाभोगे न दुष्प्रेक्ष्या मूर्तिर्यस्येति । पुनः कीदृशः । नित्यं प्रत्यर्थिनां वैरिणां कामं निश्चितं प्रविदलनं तदेव फलं तत्र स्पष्टा प्रकटा दुर्मृष्टा दृष्टिर्यस्मिन्स तथा । पक्षे—प्रत्यर्थी यः कामो मदनस्तस्य प्रविदलनमेव फलं तत्र स्पष्टा दुर्मृष्टा दृष्टिर्यस्य ।

पुनः—क्वापि कोणे न लीनः । पक्षे—क्वापि देशे लीनो नेति काकुः । अपि तु एकस्मिन्कोणे लीनः ॥

पोत्रं वाहाहलस्य प्रतिसुभटभुवां दारणे यानपात्रं
संग्रामाब्धिं तरीतुं स्थिरतरमनसः साहसात्क्षत्रियस्य ।
लोकातीतप्रशस्तिप्रगुणलिपिकृते दोस्तमालस्य पत्रं
यः पात्रं शौर्यलक्ष्म्याः स जयति समरेऽमुष्य तीक्ष्णः कृपाणः ॥८०॥

पोत्रमिति ॥ अमुष्य स तीक्ष्णः कृपाणः समरे जयति । स कः । यः प्रतिसुभटाः स्पर्धिनो वीरास्त एव भुवस्तासां दारणे विदारणे वाहा भुजा सैव हलो लाङ्गलस्तस्य पोत्रं मुखाग्रम् । 'मुखाग्रे क्रोडहलयोः पोत्रम्' इत्यमरः । लाङ्गलं हलम् इत्यपि । यः क्षत्रियस्य संग्रामाब्धिं संग्रामसमुद्रं तरीतुं········। 'यानपात्रे शिशौ पोतः' इत्यमरः । किंविधस्य क्षत्रियस्य । साहसादुद्योगात्स्थिरतरं मनो यस्य तस्य । यो लोकातीता लोकाधिका या प्रशस्तिस्तस्याः प्रगुणलिपिस्तत्र कृते तन्निमित्तं तदर्थे वा दोस्तमालस्य बाहुतमालस्य पत्रं तमालपत्रस्य लेखनसाधनत्वम् । शौर्यलक्ष्म्याः पात्रं भाजनम् । 'योग्यभाजनयोः [पात्र]म्' इत्यमरः ॥

काली मर्त्यार्थिभूतक्षितितिलककुलप्रांशुकूलंकपालं
प्रोन्मीलत्पुष्करान्ता जगति पितृपतेर्व्यञ्जयन्ती स्वसृत्वम् ।
कावन्धीं किं च सृष्टिं दिशि दिशि विपुले विग्रहे दर्शयन्ती
कालिन्दीवैतदीया नभसि विजयते तीक्ष्णकोणा कृपाणी ॥ ८१ ॥

कालीति ॥ एतदीया तीक्ष्णकोणा कृपाणी नभसि आकाशे विजयते । केव । कालिन्दीव यमुनेव । किंविधा । काली श्यामा । पुनः—प्रत्यर्थिभूताः क्षितितिलका राजानस्तेषां कुलं तत्र प्रांशव उच्चाः । श्रेष्ठा इति यावत् । तेषां कूलं सैन्यपृष्ठं तत्कषतीति कषा । 'कष विलेखने' । 'अथ कूलं तटे(?)सूर्ये सैन्यपृष्ठतडागयोः' इति मेदिनी । पक्षे—क्षितितिलका भूम्यलंकाराः पर्वतास्तेषां कुलप्रांशुः श्रेष्ठः कलिन्दस्तस्य कूलंकषा नदी । 'सिन्धुः स्रवन्ती तटिनी तरङ्गिणी कूलंकषा शैवलिनी' इति हलायुधः । अलमत्यर्थं प्रोन्मीलन्पुष्करान्तोऽपि धान्तो यस्यां सा । पक्षे—पुष्कराणि जलानि कमलानि वा । 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' इति । 'कबन्धमुदकं पाथः पुष्करम्' इत्यमरः । जगति लोके पितृपतेर्यमस्य । 'धर्मराजः पितृपतिः' इत्यमरः । स्वसृत्वं भगिनीत्वं व्यञ्जयन्ती दर्शयन्ती । किं चान्यत् विपुले विग्रहे विशेषे कावन्धीं [सृष्टिं] शिरोरहितकायसृष्टिं दिशि दिशि दर्शयन्ती । पक्षे—कावन्धीं सृष्टिं जलसृष्टिम् । विग्रहे शरीरे ॥

कीलालैर्वीतमूर्तिः किमपि रुचिभरैर्भासुरत्वं वहन्ती
भूभृद्भिः कोटिसंख्यैर्विधुतवनरसं गाहमाना रणाब्धिम् ।

अश्रान्तं शत्रुमध्यास्थितिरपि न पराभूतिभूर्वाडवाग्नि-
ज्वालेवालोक्यते या समिति विजयते सास्य जैत्रा कृपाणी ॥८२॥

कीलालैरिति ॥ अस्य सा जैत्रा कृपाणी समिति विजयते । सा का । या वाडवश्चासावग्निश्च स तथा तस्य ज्वालेवालोक्यते । किंविधा कृपाणी । कीलाले रक्तैर्वीतमूर्तिर्व्याप्तदेहा । रुचिभरैः कान्तिभरैः किमपि भासुरत्वं दीप्तत्वं वहन्ती । पक्षे—कीलालैर्जलैः । 'शोणितेऽम्भसि कीलालम्' इत्यमरः । रण एवाब्धिस्तं गाहमाना । किंविधं रणाब्धिम् । कोटिसंख्यैर्भूभृद्भिः । पक्षे—पर्वतैः । विधुतः घनरसो वीररसः । पक्षे—विधुतो घनरस उदकम् । 'मेघपुष्पं घनरसः' इत्यमरः । अश्रान्तं निरन्तरं शत्रुमध्ये आस्थितिरपि पराभूतिः पराभवस्तस्या भूः स्थानं न । जलस्याग्नेश्च विरोधः प्रसिद्धस्तेन शत्रुत्वम् ॥

प्रत्यर्थिक्ष्मापतीनां नयनविषयतां यातमात्रातिमात्रं
गात्राण्युद्घूर्णयन्ती दृशि च वि··························स्तप्रभायाः ।
आतृप्तिस्वादितान्यैः स्वयमतिशयितां क्षीबतामश्नुते या
सा पूर्वा वारुणीह स्फुरति सिति(शित)तरामुष्य जैत्रा कृपाणी ॥८३॥

[अस्य श्लोकस्य टीका त्रुटिता ।]

स्निग्धश्यामाभिरामा नभसि सरभसं विस्फुरन्ती वहन्ती
कीलालस्यातिभारं परतपनिधने दर्शितानेकधारा ।
प्रख्यातक्ष्माभृदुच्चैः शिरसि सुबहुशः स्वं पदं दर्शयन्ती
शश्वत्सा कालिकेव प्रसरति समरेऽमुष्य तीक्ष्णा कृपाणी ॥ ८४ ॥

[अस्य श्लोकस्य टीका त्रुटिता ।]

चक्षुष्यैवातिमात्रं रसिकजनमनःप्रीतिमुत्पादयन्ती
मात्सर्याद्वैरिपृथ्वीपतितिलकतिरस्कारविद्या विदग्धा ।
प्रत्यग्रोत्फुल्लनीलोत्पलदलरचिता कर्णिकेवाजिलक्ष्म्याः
स्निग्धश्यामाभिरामा विलसति सुतरामेतदीया कृपाणी ॥ ८५ ॥

[अस्य श्लोकस्य टीका त्रुटिता ।]

कीलालान्तर्निमग्ना किल किमपि रसानूर्मिता सान्द्रसाद-
स्निग्धश्यामाभिरामा घनरसजनिभिर्विस्मयाद्वीक्ष्यमाणा ।
दंष्ट्रौज्ज्वल्येन दीप्तिं पयसि विदधती मूलभूदारमूर्ति-
भ्रान्तिं या संविधत्ते समिति विजयते सास्य जैत्रा कृपाणी ॥८६॥

.................................................................................

पुनः—दंष्ट्रौज्ज्वल्येन पयस्युदके दीप्तिं विदधती कुर्वती ॥

नीला निःसीमपाता वियति विभवतो विस्फुरन्ती वहन्ती
स्निग्धत्वं फेनपुञ्जानिव विमलयशःसंचयानुद्वमन्ती।
दुर्लक्ष्या दीप्तिभूम्ना दशशतकरभृद्वाहपङ्क्तिप्रतीतिं
धत्ते बाहाभृतां या समिति विजयते सास्य जैत्रा कृपाणी ॥ ८७ ॥

नीलेति ॥ अस्य सा कृपाणी जैत्रा समिति विजयते। सा का। या बाहाभृताम्। 'बाहा भुजा' इति स्त्रीलिङ्गे। करवताम्। शूराणामित्यर्थः। दशशतं सहस्रं करान् किरणान् बिभर्तीति भृत्सूर्यस्तस्य वाहा अश्वास्तेषां पङ्क्तिस्तस्याः प्रतीतिं प्रत्ययं धत्ते। करोतीत्यर्थः। किंविधा। नीला श्यामा............। अश्वपङ्क्तिरपि नीला वियति आकाशे निःसीमपाता। तुल्यं(?) विभवतो विस्फुरन्ती। स्निग्धत्वं वहन्ती। विमला ये यशःसंचयास्तान्फेण(न)पुञ्जानिवोद्वमन्ती दीप्तेर्भूम्ना बाहुल्येन दुर्लक्ष्या लक्षितुमशक्या ॥

तन्वी नीलाञ्जनाभा किमपि निजपरीवारतो निष्पतन्ती
स्निग्धत्वस्यातिभूम्नाखिलवपुषि परं पिच्छ(च्छि)लत्वं वहन्ती।
भीत्या प्रत्यर्थिपृथ्वीपरिवृढतिलकैर्दन्दशूकीव दृष्टा
यात्यर्थं तीक्ष्णवक्त्रा समिति विजयते सास्य जैत्रा कृपाणी ॥ ८८ ॥

तन्वीति ॥ अस्य सा जैत्रा कृपाणी समिति विजयते। सा का। या प्रत्यर्थिनो ये पृथ्वीपरिवृढाः पृथ्वीप्रभवः। 'प्रभौ परिवृढः'। तेषु तिलका अलंकारभूतास्तैर्भीत्या भयेन दन्दशूकीव सर्पिणीव दृष्टा। 'दन्दशूको बिलेशयः' इत्यमरः। तस्य स्त्री दन्दशूकी। दशेः 'लुपसद' इत्यादियङन्तात् 'यजजप' इत्युकन्। किंविधा। तन्वी कृशा। तुल्याञ्जन नीलाञ्जनं तद्वदाभा श्यामेत्यर्थः। किमप्यल्पान्निजपरीवारतः स्वकोशान्निष्पतन्ती निर्गच्छती। पक्षे—परीवारः स्वकुलम्। परीवार इत्यत्र 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घता। स्निग्धत्वस्यातिभूम्ना चिक्कणत्वबाहुल्येनाखिलवपुषि परमत्यर्थं पिच्छिलत्वमार्द्रत्वं वहन्ती ॥

श्यामा निर्यत्कवोष्णक्षतजभृतमुखी किं च दुष्प्रेक्ष्यमूर्तिः
क्षोणीक्षोदान्धकारे पललविशसने पाटवं दर्शयन्ती।
निःशङ्का क्रूरदंष्ट्राद्वयरुचिरनला राक्षसीभ्रान्तिमारा-
द्दत्ते संख्यावतां या समिति विजयते सास्य जैत्रा कृपाणी ॥ ८९ ॥

श्यामेति ॥ अस्य सा जैत्रा कृपाणी समिति विजयते। सा का। संख्यावतां पण्डि-

वानां वा । 'संख्यावान्पण्डितः' इत्यमरः । राक्षसीभ्रान्तिम् । 'आराद्दूरसमीपयोः' । दत्ते ददातीत्यर्थः । किंविधा । श्यामा काली । निर्यत्कवोष्णं किंचिदुष्णं क्षतजं रक्तं तेन भृतं मुखं यस्याः सा । किं चान्यत् क्षोणी पृथ्वी तस्याः क्षोदो चूर्णिः स एव तस्य वा अन्धकारस्तस्मिन्दुष्प्रेक्ष्या मूर्तिर्यस्याः सा तथा । 'चूर्णे क्षोदः' इत्यमरः । पललस्य मांसस्य । 'पिशितं तरसं मांसं पललम्' इत्यमरः । विशसने विदारणे पाटवं पटोर्भावस्तं दर्शयन्ती । पुनः किंविधा । निःशङ्का भयरहिता । क्रूरं यद्दंष्ट्राद्वयं खड्गप्रदेशे टोहकीलद्वयं दंष्ट्रेत्युच्यते । तस्य रुचिः कान्तिस्तया श[ब]ला चित्रा ॥

तन्त्रज्ञानां निजाङ्गावरणकृतधियां साहसैकाग्र्यभाजां
पौनःपुन्येन पुंसामसदृशि समितौ धूननान्यश्नुवाना ।
निर्भीका मोहयन्ती नयनविषयतां यातमात्रैव योधा-
न्भूताविष्टेव यान्यान्विलसति सततं सास्य जैत्रा कृपाणी ॥ ९० ॥

तन्त्रेति ॥ अस्य सा जैत्रा कृपाणी सततं निरन्तरं विलसति । सा का । या भूताविष्टेव पिशाचाविष्टेव । किंविधा । पुंसां पुरुषाणां असदृशि अतुल्ये समितौ संग्रामे । पक्षे—सभायाम् । धूननानि कम्पितानि अश्नुवाना कुर्वाणा । किंविधानां पुंसाम् । तन्त्रज्ञानां शास्त्रज्ञानाम् । पक्षे—प्रधानकृत्यवेदिनाम् । पुनः—निजाङ्गानां सप्ताङ्गानां (सप्तराज्याङ्गानाम्) । 'स्वाम्यमात्यसुहृत्कोशदुर्गराष्ट्रबलानि च' इति । तेषामावरणे । पक्षे—निजाङ्गानि शरीराणि [तत्र] कृता धियो यैस्ते तया । तेषाम् । साहसस्यौद्योगस्यैकाग्र्यं भजन्ति ते तेषाम् । पौनःपुन्येनावृत्त्येत्यर्थः । पुनः किंविधा । निर्भीका निर्भया । पुनः—नयनविषयतां नेत्रगोचरतां यातमात्रैव गता सती योधान्वीरान्मोहयन्ती व्यामोहयन्ती ॥

सश्रीका विस्फुरन्ती सततपुलकितं दर्शयन्ती निजाङ्गं
सद्रागा वीर्यभाजां मनसि सरभसं क्षोभमुत्पादयन्ती ।
आश्लिष्यन्ती किलान्यं समिति सुविपुले कण्ठदेशेऽविगाढं
या वारस्त्रीव सक्ता भवति विजयते सास्य जैत्रा कृपाणी ॥ ९१ ॥

सश्रीकेति ॥ अस्य सा जैत्रा कृपाणी विजयते । सा का । या वारस्त्रीव वाराङ्गनेव सक्ता भवति । किंविधा । सश्रीका शोभायुक्ता विस्फुरन्ती निजाङ्गं सततं पुलकितं रोमाञ्चयुक्तं दर्शयन्ती । सन् रागो यस्याः सा । वीर्यभाजां मनसि चित्ते सरभसं सवेगं क्षोभमुत्पादयन्ती । किलेति दृश्यते समिति संग्रामे सभायां वा अन्यं सुविपुलं कण्ठदेशेऽविगाढं दृढतरमाश्लिष्यन्ती आलिङ्गयन्ती ॥

या दत्ते दङ्क्निपाताद‌हितभुजभृतां कम्पमानैव कम्पं
रक्ता रक्ताक्तिभावं सपदि निपतती तेषु भूम्ना निपातम् ।

इत्थं साम्यं प्रकाश्याप्यखिलमनुपमः कोऽपि यस्या विशेष-

स्त्वेका पञ्चत्वमाजौ विलसति सुतरां सास्य जैत्रा कृपाणी ॥९२॥

येति ॥ अस्य सा जैत्रा कृपाणी विलसति सुतरामत्यर्थम्। सा का। या कम्प-[मा]नैवाहितभुजभृतां वैरिबाहुभृतां दृङ्पातात् दृष्टिविषयतात्(?)कम्पं दत्ते ददाति। या रक्ता सती अहितभुजभृतां रक्ताक्तिभाव शोणितसिक्तत्वं दत्ते। पुनः—या सपदि तत्काले तेषु वैरिषु निपतती सती भूम्ना बाहुल्येन निपातं पतनं दत्ते। इत्थमखिलं साम्यं साधर्म्यं प्रकाश्यापि प्रकटीकृत्यापि यस्याः कृपाण्याः कोऽपि अनिर्वचनीयः, अनुपम उपमारहितो विशेष आधिक्यम्। तु पुनरेका अद्वितीया इती अहितभुजभृतामाजौ संग्रामे पञ्चत्वं पञ्चसंख्या पञ्चत्वं मरणं दत्ते इति शब्दच्छलम्। अयमेव विशेषः ॥

स्वाभावाद्याञ्जनाभा विलसति सततं पालने विष्टपानां

संहारे दृश्यते याहितधरणिभृतां रक्तवर्णा मुहूर्तम्।

विज्ञानैस्तर्क्यते या विशदतरयशःसृष्टिषु प्रोज्ज्वला सा

नानाश्चर्यस्वरूपा समिति विजयतेऽमुष्य जैत्रा कृपाणी ॥ ९३ ॥

स्वाभावादिति ॥ अमुष्य सा जैत्रा कृपाणी समिति विजयते। सा का। या नानाश्चर्यरूपा। तदेव विशेषणैर्विशदयति—या स्वाभावात् स्वभाव एव स्वाभावस्तस्मादञ्जनाभा कज्जलकान्तिः सततं निरन्तरं विष्टपानां भुवनानां पालने विलसति। या अहितधरणिभृतां वैरिपृथ्वीधराणां संहारे क्षणं मुहूर्तं रक्तवर्णा दृश्यते। या विज्ञानैः विशिष्टं ज्ञानं येषां ते तथा तैर्विशदतर यशस्तत्सृष्टिषु प्रोज्ज्वला प्रकृष्टोज्ज्वला तर्क्यते उन्मीयते। अत एव नानाश्चर्यरूपत्वम् ॥

या काली कालसाम्यं जनयति मिषतां निष्परीवारभावं

याता या तं विधत्ते रणशिरसि परं निष्परीवारमेव।

सास्याश्चर्या रिपूणां निपुणमवयवेष्वक्षुवानैव सङ्गं

निःसङ्गांस्तान्क्षणार्धात्किमपि विदधती दीव्यतीद्धा कृपाणी ॥९४॥

येति ॥ अस्य सा आश्चर्याश्चर्यरूपा कृपाणी इद्धा समृद्धा दीव्यति क्रीडति। सा का। या काली श्यामा मिषतामवलोकयतां कालसाम्यं यमसाम्यं तुल्यतां जनयत्युत्पादयति। पुनः—या निष्परीवारभावमावरणरहितत्वं याता प्राप्ता सती रणशिरसि तं परं वैरिणमवलोकयितारं निष्परीवारशून्यत्वं विधत्ते करोति। किंविधा। रिपूणामवयवेषु हस्तादिषु निपुणं यथा तथा सङ्गं नैवाश्नुवाना। अकुर्वतीत्यर्थः। पुनः—क्षणार्धात्तान्रिपून्किमपि निःसङ्गान्सङ्गरहितान्विदधती कुर्वती ॥

या स्निग्धश्यामलापि स्फुटधवलयशोधाम धाराधरापि
प्रत्यर्थिक्षत्रियान्तःपुरिकजनमनोनल्पसंतापहेतुः ।
एकापि द्वेषणानां हृदयमधि पुनः कोटिधा दर्शयन्ती
स्वाधिष्ठानं समीके विलसति सुतरां सास्य जैत्रा कृपाणी ॥ ९५ ॥

या स्निग्धेति ॥ अस्य सा जैत्रा कृपाणी समीके युद्धे । 'मृधमास्कन्दनं संख्यं समीकम्' इत्यमरः । सुतरां विलसति । सा का । या स्निग्धश्यामलापि स्फुटधवलयशोधाम स्फुटं धवलं यद्यशस्तस्य धाम गृहम् । अजहल्लिङ्गेन विशेषणविशेष्यभावः । पुनर्या धाराधरापि प्रत्यर्थिनो ये क्षत्रियास्तेषामन्तःपुरजनानां मनांसि तेषामनल्पो बहुर्यः संतापस्तस्य हेतुः । धारापदेन विरोधः । या धाराधरा सा कथं संतापहेतुः 'धाराधरो मेघः खड्गौ' इत्यभिधानेन धारापदे खड्गधारा ततो विरोधाभासः । पुनः—या एकापि द्वेषणानां वैरिणाम् । 'सपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । हृदयमधि पुनः कोटिधा कोटिप्रकारम् । 'संख्याया विधानार्थे धा' इति धा । स्वाधिष्ठानमास्थानमथवा प्रभावः । 'अधिष्ठानं पुरे चक्रे प्रभावेऽध्यासने' इति मेदिनी । दर्शयन्ती प्रकाशयन्ती ॥

या स्वैरं त्यक्तकोपा रणशिरसि दृढं द्वेष्टि विद्वेषिकोपं
या सम्राजः करस्था जनयति निखिलं शत्रुवर्गं करस्थम् ।
या भास्वन्मण्डलस्था गमयति न चिरात्सन्मुखान्वैरिवीरां-
स्तद्भास्वन्मण्डलं सा विलसति सुतरामस्य जैत्रा कृपाणी ॥ ९६ ॥

या स्वैरमिति ॥ अस्य सा जैत्रा कृपाणी सुतरां विलसति । सा का । या स्वैरं त्यक्तकोपा दूरीकृतपिधाना रणशिरसि संग्रामे दृढं गाढं विद्वेषिणां वैरिणां कोशमर्थसंघातं द्वेष्टि । या सम्राजः सम्यग्राजतेऽसौ सम्राट् तस्य सम्राजः करस्था सती निखिलं समग्रं शत्रुवर्गं करे करभारे तिष्ठतीति तथा तं जनयति । या भास्वन्मण्डलस्था भास्वद्दीप्तं यन्मण्डलं तत्रस्था भास्वत्सूर्यमण्डलं तत्रस्था तत्संसर्गेणवीत्यर्थ दन्ति वा (?) संमुखान्वैरिवीरान्योद्धुमागतानित्यर्थः । न चिरात् शीघ्रं तद्भास्वन्मण्डलं तत्प्रसिद्धं सूर्यमण्डलं गमयति आपयति । 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः ॥' इति वचनात् ॥

मुष्टिग्राह्यापि नागायुततुलितबलैर्दस्युभिर्दुर्ग्रहा या
गुप्तिप्राप्तापि जन्ये रिपुहननमयैर्यावदानैः प्रकाशा ।
शीतस्पर्शाप्यरण्ये तृणवदरिकुलं भस्मसाद्या विधत्ते
सा शाणोन्मृष्टकोणा विलसति सुतरामस्य जैत्रा कृपाणी ॥ ९७ ॥

मुष्टीति ॥ अस्य सा जैत्रा कृपाणी सुतरां विलसति । सा का । या मुष्टिग्राह्यापि मुष्टिना ग्रहीतुं शक्या तथा नागानां गजानामयुतं दशसहस्रं तेन तुलितं तोलितं बलं येषां ते तथा तैः दस्युभिर्वैरिभिः । 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः। दुर्ग्रहा । या मुष्टिग्राह्यापि पिधानान्तरितापि जन्ये युद्धे रिपुहननमर्यैर्वैरिमारणप्रचुरैरवदानैर्महत्कर्मभिः प्रकाशा प्रकारा (?)। या शीतस्पर्शापि। आयसः स्वाङ्गिकः शीतस्पर्शः। अरण्ये तृणवदरिकुलभस्मसाद्भस्माधीनम्। 'तदधीने साति:' इति सातिप्रत्ययः। विधत्ते करोतीत्यर्थः। किंविधः। शाणेनोन्मृष्टः कोणो यस्याः सा। शाणस्य उन्मृष्टः कोणो यया सेति वा॥

ऋज्वङ्गी या स्वयं न क्षणमपि सहते वक्रभावं रिपूणां

स्निग्धच्छिन्नाञ्जनाभा स्थगयति धवलं या यशः शात्रवीयम्।

ईशा दीर्घा मुहुर्या व्यसनमरिकुले दीर्घदीर्घं विधत्ते

सा निर्द्वन्द्वं स्फुरन्ती समिति विजयतेऽमुष्य जैत्रा कृपाणी॥९८॥

ऋज्वमिति ॥ अमुष्य सा जैत्रा कृपाणी विजयते। सा का। या स्वयं ऋज्वङ्गी सरलाङ्गी। क्षणमपि रिपूणां वक्रभावं न सहते। 'सह मर्षणे'। या स्निग्धं छिन्नपर्षितं(?) प(य)दञ्जनं कज्जलं तस्याभेवाभा कान्तिर्यस्याः सा। शात्रवीयं शत्रुसंबन्धि धवलं श्वेतं यशः स्थगयति आच्छादयति। या ईशा दीर्घा लाङ्गलदण्डवद्दीर्घा। 'ईषा वा' इति पाठः। मुहुर्वारंवारमरिकुले दीर्घदीर्घमतिमहद्व्यसनं दुःखं विधत्ते। किंविधा। समिति संग्रामे निर्द्वन्द्वं स्फुरन्ती॥

मुग्धा या युद्धभूमावहितनरपतींस्तत्क्षणं मोहयन्ती

प्रोद्भूता या विनेत्रा मुहुरभिपतितांस्तानसमुत्कम्पयन्ती।

स्वच्छायासंनिपा[ते किमपि विदधती संमुखावस्थितांस्ता-

नत्यर्थं भासुरश्रीर्विलसति नितरामस्य जैत्रा कृपाणी] ॥ ९९ ॥

मुग्धेति ॥ अमुष्य (अस्य) सा जैत्रा कृपाणी नितरां विलसति। सा का। या मुग्धा प्राऽसि(?) युद्धभूमावहितनरपतीन्वैरिनृपांस्तत्क्षण मोहयन्ती व्यामोहयन्ती। पुनः प्रोद्भूता कम्पिता विनेत्रा विगतनेत्रपरिधाना।'नेत्रं मथिगुणे वस्त्रभेदे' इति मञ्जरी।मुहुर्वारंवारमभिपतितानागतांस्तानहितनरपतीन्समुत्कम्पयन्ती सम्यगुत्कम्पयन्ती। पुनः—या स्वच्छायासनिपाते स्वस्य च्छाया कान्तिस्तस्याः संनिपाते समुखावस्थितान्समुखागतास्तानहितान् किमप्यनिर्वचनीयं विदधती कुर्वती। किंविधा। अत्यर्थं भासुरा श्रीर्यस्याः सा॥

[स्वे स्वे काले...................................................

................................................................ ।

.......................................................................
............................................................ ॥ १०० ॥

स्वे स्वे इति ॥ एतदीया सा कृपाणी निष्कार्पण्याहितानां निर्गतं कार्पण्यं कृपाणस्य भावः कार्पण्यं येषां ते निष्कार्पण्या येऽहिता वैरिणस्तेषां हृदि हृदये हठेनाकृष्टा तत्कीर्तिलक्ष्मीर्वसतु । सर्वदा तिष्ठत्वित्यर्थः । किंविधा । स्वे स्वे काले स्वस्वसमयेऽतिक्रान्तः. कारोः पिधानं भयात्सा पुनः स्वगुणविभवतः .....................................॥

---

## श्रीदक्षिणामूर्तिविरचिता
## लोकोक्तिमुक्तावली ।

शरद्धिमरश्मिवल्लक्षबृहत्तरमूर्तिलसद्भुजगं
मतङ्गजवक्त्रमविघ्नकरं मम मानसशृङ्खलितम् ॥
कपोलगलन्मदवारिविलोलमधुव्रतहर्युपलै-
रलंकृतमहमाकलयेऽनिशमीशसुतं गणपतिम् (?) ॥ १ ॥

मान्यैः सद्भिर्मत्कृतिः प्रेक्षणीया सा चेत्साध्वी तैस्तथाङ्गीक्रियेत ।
निन्देयुर्वा ते न मे स्याद्विपादो मात्राक्रान्तः को नु पङ्कत्वमेति ॥ २ ॥

महत्स्वधिगताशेषकल्याणगुणराशिषु ।
मदुक्तिवादोपस्कारवाटिकासूचिविक्रयः ॥ ३ ॥

मदर्वाचीनतादोषात्कृतिरेषा न निन्द्यताम् ।
उपेक्ष्यते पयः किं नु भाण्डवैरूप्यदर्शनात् ॥ ४ ॥

ईशानविष्णुविधिहैमवतीन्दिरावा-
क्पादाम्बुजानि मनुजाः परिशीलयध्वम् ।
तत्तत्कृपाणुनिचयो नु महर्धये स्या-
ज्जायेत नैकपृषतौघमयी हि सिन्धुः ॥ ५ ॥

मर्त्याः संसृतिवार्धिमध्यपतितास्तत्कारकं शंकरं
सर्वज्ञं शरणागतार्तिहरणं सम्यग्भजध्वं सदा ।
नैवान्यत्करणीयमस्ति भवतां मुक्त्यै न सेवान्तरं
दत्त्वा किं तरणेर्भृतिं ह्यनडुहः पुच्छं च संगृह्यते ॥ ६ ॥

स्वस्वस्थानस्थितिकृतिविधावक्षमैरन्यदेवै-
नित्यं सेव्यं निखिलभुवनाधारमाधारहीनम् ।
शंभुं मर्त्या भजत शरणं मुक्तये नान्यदेवं
दभ्रः किं नु स्वयमपि परालम्बयष्टिर्भवेद्वा ॥ ७ ॥

मा त्वं विषीद मदनान्तकमेव देव-
माराधयेच्छसि सुखं यदि जीवलोके ।
तल्लीनवाङ्मनसकर्मगतिः सदैव
वल्ली न ताम्यति परीतमहाद्रुमा हि ॥ ८ ॥

दक्षाध्वरध्वंससमाश्रितानां रक्षाकरं यात शरण्यमार्याः ।
मा वोऽस्तु भीः संसरणाच्च कालादुक्षा दृढस्तीक्ष्णतरे विषाणे ॥ ९ ॥

जातं मया पुरारे बहुशो जनिरत्र मे पुनर्मा भूत् ।
देहि तव पादसेवां यावन्मथितं किमोदनाकाङ्क्षा ॥ १० ॥

कमलं तव पदकमले विमले मम देहि चञ्चरीकत्वम् ।
नान्यत्किमपि च काङ्क्षे पश्चाद्दानं किमस्ति भिक्षायाः ॥ ११ ॥

शिवाख्यया विष्णवभिधानतो वा सकृत्तु संकीर्तित एव देवे ।
समस्तपापानि लयं प्रयान्ति किमस्ति कुम्भो हि दृढो गदायाः ॥ १२ ॥

विद्यैव दुर्लभतरा विनयेन युक्ता
विप्रास्तदर्थमनुवेलमतो यतध्वम् ।
वृत्त्यादिकं च विदुषां वितरन्ति सर्वे
शाखा प्लवंगममनादवती किमस्ति ॥ १३ ॥

विद्वज्जनो विगतभीर्विविधेऽपि देशे
विद्यावलोकमणमीतसमस्तलोकः ।
स्वस्थानवत्स खलु सर्वत एव पूज्यो
व्याघ्रस्य किं निजवने परकानने वा ॥ १४ ॥

वृत्त्यादिकर्शितोऽपि विद्वान्मान्यः स्वदेहयात्रायाम् ।
न सहेत ह्यवमानं व्याघ्रः क्षुधितोऽपि भक्षयेन्न तृणम् ॥ १५ ॥

न ह्येक एव विदुषां सत्कर्ता किंतु यत्र ते याताः ।
तत्रापि सत्कृताः स्युः पश्चाद्वनेऽपि नहि कुठारः किम् ॥ १६ ॥

जन्मार्जितेन तदनु श्रुतिचोदितेन
यस्तेजसोज्ज्वलति तं शिशुमप्यनाथम्।
विप्रं तु योऽवमनुते स भवेद्विनष्टो
वध्येत किं तनुरिति ज्वलनो हि वस्त्रे॥ १७॥

दैवाद्दरिद्रतमतां विदुषि प्रयाते
विप्रे कृशेऽपि मनुजा न कुरुध्वमस्य।
निन्दां तथापि महती हि तदीयविद्या
क्षीणे गजेऽपि तनुता न पदं प्रयाति॥ १८॥

पूर्वं जन्मशतेषु सत्परिचयादभ्यस्तविद्ये द्विजे
मा शङ्कां मनुजाः कुरुध्वमधुना संत्यक्तसर्वैषणे।
मुक्ते सद्गुरुवीक्षणादिति न वा जानाति शास्त्राण्यसौ
किं नु स्थापितमालिकस्य शिरसो ह्यावर्तको मृग्यते॥ १९॥

जन्मान्तरेषु कृतपुण्यचयो द्विजोऽयं
विद्यावतां जनिमुपेत्य कुले शुचीनाम्।
मुक्त्यै सदैव यतते विरतान्यकृत्यः
शावः करोति पतगः किमु जानुचारम्॥ २०॥

प्रज्ञाविशेषपरिबाधितविश्वमोहा-
न्विज्ञाततत्त्वनिपुणान्विरतान्यकृत्यान्।
अज्ञातभावचरितान्महतो न निन्द्या-
न्न ज्ञायते किमिति मूषिकवासलोष्ठम्॥ २१॥

आत्मानन्दरसज्ञानामलं शास्त्रावलोकनम्।
भक्षितव्या ह्यपूपाः किं गण्यानि सुषिराणि किम्॥ २२॥

वेदानधीत्य विधिवद्गृहमेत्य पश्चा-
दभ्यागतातिथिसुरान्स्वपितॄनुपास्ते।
यस्तं स्वकर्मनिरतं मनुजाः स्तुवन्ति
ग्रामस्य कीर्तिरशनेऽर्पित एव मातुः॥ २३॥

मर्माणि नर्मकृतिभिर्व्यथयन्त्यजस्रं
काको हि वेत्त्यनडुहो व्रणवेदनां किम् ॥ ३१ ॥
दारान्विहायात्मकुलानुरूपान्वाराङ्गनां वाञ्छति यो विमोहात् ।
घोरान्स पापी नरकान्प्रयायाद्दारान्वहेहुर्ललितो ह्यनड्वान् ॥ ३२ ॥
शास्त्रेषु चार्वाककृतेषु माया नेत्रेषु यः स्यान्मनसः प्रवेशः ।
पात्रे पुरैवाचरितोपचारः पोत्रे वराहस्य स फालबन्धः ॥ ३३ ॥
अन्येषामशुभं करोतु नितरामस्त्वप्रियोऽसाविति
प्रज्ञाः साधुजनाः खलेन सह मा मैत्रीं कुरुध्वं क्वचित् ।
तस्येयं प्रकृतिः सुखेतरकृतिः सर्वात्मना सर्वदा
तिक्तः सन्क्वचिदन्यतो मधुरतां निम्बः किमालम्बते ॥ ३४ ॥

इति दुष्टत्यागपद्धतिः ।

द्वैतालम्बनमार्गकोटिषु परिभ्रान्ताः कुतर्काहता
नानाभूतमहागमेषु बहुधा श्रान्ता भृशं द्वैतिनः ।
आत्मालोकनहेतुभूतममलं ज्ञानं विदुः किं परं
संभूयापि सहस्रमम्बरमणिं पश्येयुरन्धाः किमु ॥ ३५ ॥
कृत्वाप्यामरणान्तिकं भुवि जनः काम्यानि कर्माण्यतो
गत्वा स्वर्गमवाप्य तत्फलमधो यात्येव नो मुच्यते ।
वेदान्तेन विमुच्यते विधिवशात्कैवल्यमार्गेण हि
प्राकारं सकलं परीत्य ननु च द्वारेण निर्गम्यते ॥ ३६ ॥
मार्गैरधःपतनहेतुभिराश्रितानां
वेदेतरैर्भवमहाम्बुनिधिस्तरीतुम् ।
शक्येत नैव मनुजा निगमान्तनाव्यो
ह्यश्मप्लवेन तटिनी तरितुं न शक्या ॥ ३७ ॥
वेदेतराध्वपरिनिष्ठितमानसानां
लोकान्तरं नहि न मुक्तिकथा तथापि ।
संमन्त्र्य दुःखबहुला बहवः प्रयासा
ग्रामः खिलोऽपि नहि योजनमात्रहीनः ॥ ३८ ॥

सुता वयं सोमसुतां च पौत्रा विद्यावतां चेति विहाय गर्वम्।
द्विजाः समभ्यसत वेदविद्यां गजो भवेत्किं न शक्रद्विजस्य॥ २४॥

इति विद्वत्प्रशंसापद्धतिः।

वासो विप्रा इह खलजनैर्वर्जनीयः प्रयत्ना-
द्दोषैरेतैर्गरितकरणैराश्रितानां जनानाम्।
युष्माभिश्च स्वयमुपगताः प्राप्यते तद्विपत्ति-
र्दग्धोऽपि स्यादपि च स हितः शल्मलिः काञ्जिरेण॥ २५॥

सन्तः कदाचिदपि सख्यमसज्जनैर्न
कार्यं कृते तु दूषिता यदि नीचकृत्ये।
मुञ्जन्ति कोपविवशाः प्रहरन्ति चैते
सख्ये कृते सह शुना लिलिहेद्दशेद्वा॥ २६॥

सन्तो लोकमशेषमात्मसदृशं संचिन्त्य सद्भावतः
संसाराम्बुनिधौ निमग्नमचिरादुद्धर्तुमुद्युञ्जते।
मन्दाः स्वोद्धरणोद्यतानपि नरान्निन्दन्त्यविज्ञाय ता-
न्कूपे श्वा पतितो घ्नतो न मनुते चोद्धर्तुकामानपि॥ २७॥

श्रुत्यन्तस्थपुमर्थसाधनकथारिक्तोऽपि मुग्धो जनः
प्रत्याख्यानपराङ्मुखोऽपि परमान्धर्मानकुर्वन्नपि।
नित्यं स्वोदरपूरणैकनिरतः संभ्राम्यति स्वेच्छया
कृत्यं किंचन नास्ति यद्यपि शुनो यानं सदा धावनम्॥२८॥

खलाः प्रकृत्यैव खला भवन्ति विप्रा भवद्भिर्विहितोपदेशाः।
अप्यार्जवं नैव कदापि यान्ति पुच्छं शुनः किं न्वृजुतां भजेत॥ २९॥

धन्या हि यूयमिह विप्रकुलेषु जाता
विप्रात्मजा विटजनैः सह मास्तु सङ्गः।
यद्यस्ति तद्वदशुभाचरिता भवेत
वत्सोऽपि खादति मलं हि वराहसक्तः॥ ३०॥

प्राप्यापि पूर्वकृतपुण्यचयैर्द्विजत्वं
नीचाः सतामविदितव्यसनं द्विजानाम्।

मर्माणि नर्मकृतिभिर्व्यथयन्त्यजस्रं
काको हि वेत्स्यनडुहो व्रणवेदनां किम् ॥ ३१ ॥
दारान्विहायात्मकुलानुरूपान्वाराङ्गनां वाञ्छति यो विमोहात्।
घोरान्स पापी नरकान्प्रयायाद्दारान्विहेदुर्ललितो ह्यनड्वान् ॥ ३२ ॥
शास्त्रेषु चार्वाककृतेषु माया नेत्रेषु यः स्यान्मनसः प्रवेशः।
पात्रे पुरैवाचरितोपचारः पोत्रे वराहस्य स फालबन्धः ॥ ३३ ॥
अन्येषामशुभं करोतु नितरामस्मत्प्रियोऽस्माविति
प्रज्ञाः साधुजनाः खलेन सह मा मैत्रीं कुरुध्वं क्वचित्।
तस्येयं प्रकृतिः सुखेतरकृतिः सर्वात्मना सर्वदा
तिक्तः सन्क्वचिदन्यतो मधुरतां निम्बः किमालम्बते ॥ ३४ ॥

इति दुष्टत्यागपद्धतिः।

द्वैतालम्बनमार्गकोटिषु परिभ्रान्ताः कुतर्काहता
नानाभूतमहागमेषु बहुधा श्रान्ता भृशं द्वैतिनः।
आत्मालोकनहेतुभूतममलं ज्ञानं विदुः किं परं
संभूयापि सहस्रमम्बरमणिं पश्येयुरन्धाः किमु ॥ ३५ ॥
कृत्वाप्यामरणान्तिकं भुवि जनः काम्यानि कर्माण्यतो
गत्वा स्वर्गमवाप्य तत्फलमधो यात्येव नो मुच्यते।
वेदान्तेन विमुच्यते विधिवशात्कैवल्यमार्गेण हि
प्राकारं सकलं परीत्य ननु च द्वारेण निर्गम्यते ॥ ३६ ॥
मार्गैरधःपतनहेतुभिराश्रितानां
वेदेतरैर्भवमहाम्बुनिधिस्तरीतुम्।
शक्येत नैव मनुजा निगमान्तनाव्यो
ह्यश्मप्लवेन तटिनी तरितुं न शक्या ॥ ३७ ॥
वेदेतराध्वपरिनिष्ठितमानसानां
लोकान्तरं नहि न मुक्तिकथा तथापि।
संमन्त्र्य दुःखबहुला बहवः प्रयासा
ग्रामः खिलोऽपि नहि योजनमात्रहीनः ॥ ३८ ॥

त्रैवर्णिका वेदविदो हि यूयं मा यात कुत्रापि जिनादिमार्गान् ।
प्रवेशमात्रात्पतिता भवेत भ्रष्टं रुमायां लवणं हि सर्वम् ॥ ३९ ॥
द्वैतादिवादनिपुणेष्वपि मानुषेषु
लोकेषु सत्सु बहुधा बत तेषु कोऽपि ।
वेदान्तवादनिरतो न च दृश्यते हि
लभ्येत किं न्वविषु कश्चिदिभः सहस्रे ॥ ४० ॥
मार्गाणां परमार्थभूतविषयानन्दैकसंदायिनां
बौद्धादे रहितस्य मुक्तिकथया स्वर्गादिभोगैरपि ।
दुःखं पश्यत सांप्रतं द्विजवराः प्रेत्याप्यनन्तं भवे-
द्योग्यर्धं कुड्डवस्य हन्ति पदतश्चक्षुर्यथान्धं भवेत् ॥ ४१ ॥
इति द्वैतनिन्दापद्धतिः ।
युष्माभिः पुरुषार्थलेशरहितैर्मर्त्याः किमर्थं धनं
कृत्याकृत्यविवर्जितैरनुदिनं दुःखेन संचीयते ।
दैवं चोरनृपाग्निभिर्धनवतां तच्च क्षयं प्रापये-
ल्लूतास्येन तनोति संहरति तत्पुच्छेन शाखामृगः ॥ ४२ ॥
भुङ्ग्ध्वं यत्नविवर्जितं हुतवहे हुत्वा च दत्त्वार्थिने
भाव्यं यद्भवतां तदेव भविता तूष्णीं स्थितेऽपि स्वयम् ।
संभ्रान्तैरपि सर्वतः क्षितितले नाभावि संलभ्यते
क्षिप्तोऽप्यम्बुनिधौ किमाढकजलं प्रस्थः प्रगृह्णाति हि ॥ ४३ ॥
भुङ्ग्ध्वं च किंचिदिह वित्तमवाप्य विप्राः
सत्पात्रसाच्च सकलं विनियुङ्ग्ध्वमन्यत् ।
नो चेत्परत्र भवतां च सुखं कुतः स्या-
त्पिष्टं हि भक्षितवतां किमपूपमस्ति ॥ ४४ ॥
संपच्चयः सततमम्बुतरङ्गलोला
यावद्भवन्ति मनुजाः पुरुषार्थमाभिः ।
तावत्कुरुध्वमुपकारमुपस्थितानां
नाव्या नदी ननु नखंपचसैकता स्यात् ॥ ४५ ॥

आचीर्णमशुभं कर्म द्विजा भोगाय कल्पते।
आवेष्टितगलो नागः किमदृष्ट्वा हि गच्छति ॥ ४६ ॥
कुरुध्वं स्वोचितं कर्म नोत्तरोत्तरचोदितम्।
उच्चैरुड्डीयमानोऽपि कुलिङ्गः स्यान्नु वीश्वरः ॥ ४७ ॥
पापान्निवृत्तिं सुकृते प्रवृत्तिं कुरुध्वमद्यैव जनाः कृतान्तः।
हरेत बद्ध्वा रुदतोऽपि पापान्मुञ्चेत्किमाखौ रुदिते बिडालः ॥ ४८ ॥
वेदोदितानि सकलानि सदैव कुर्व-
न्कर्माणि तत्फलविरक्तमना मुमुक्षुः।
मुक्तो भविष्यति शनैर्न तु बध्यते तैः
शुल्कं किमस्ति सरतां हि विधूय भारम् ॥ ४९ ॥
ब्रह्माध्येयमवाप्य विप्रतनयाः प्रागेव पूर्वाश्रमं
वेदा यत्पुरुषार्थसाधनमतो बाल्यात्प्रभृत्यादरात्।
पश्चादर्थविचारयोग्यसमये ध्येतुं कथं शक्यते
लभ्येतेह फलापचायसमये किं वापचेतुं सुमम् ॥ ५० ॥
बन्धुभिर्वार्यमाणोऽपि कुर्यादध्यात्मचिन्तनम्।
प्रवर्ततां घटीयन्त्रं काको[1]ऽपि रटताद्भृशम् ॥ ५१ ॥
विप्रा मुमुक्षा यदि वो न कार्यस्तर्कादिशास्त्रेषु वृथैव यत्नः।
वेदान्त एवामृतसिद्धयेऽलमिक्षोरनेकाद्गुडखण्ड एकः ॥ ५२ ॥
उच्चावचानि जननानि भवन्ति याव-
त्कर्माणि तावदखिलानि लयं न यान्ति।
तत्कर्ममूलहननाय यतध्वमार्या
यावच्छिरो न विरमेज्जलबन्धरोगः ॥ ५३ ॥
न भेतव्यं द्विजैः क्वापि वैदिकैः क्षुद्रदैवतात्।
भीताश्चेदभिभूयेरन्भीताञ्जानाति मर्कटः ॥ ५४ ॥
विद्यावयःकर्मगुणैर्विशिष्टा व्यावर्तयध्वं कुपथात्स्वभृत्यान्।
नो चेत्तदंहो भवतां भविष्यत्युच्चैर्द्रुमे वाति हि गन्धवाहः ॥ ५५ ॥

---

१. 'वायसोऽपि सदा रटेत्' इति पाठान्तरम्.

वुधा न शोचन्ति मृतानशेषान्कथावशेषान्प्रति ते द्विजेन्द्राः ।
शोकैरलं शोषणहेतुभूतैर्गताम्भसः किं करणेन सेतोः ॥ ९६ ॥

दारिद्र्यरोगविवशा अपि चेन्मनुष्याः
संबद्धमेतदखिलं निजकर्मपाशैः ।
संचिन्त्य माक्षिपत दैवमहोऽतिरुष्टाः
किं भिद्यते हि मुकुरो निजवक्त्रदोषात् ॥ ९७ ॥

वर्णाश्रमाचारमकुर्वतो जनानन्यायचेष्टान्नृपतिस्तु दण्डयेत् ।
नैमे चरेयुर्हि कुकर्म दण्डिता दग्धो विडालो न महानसं विशेत् ॥ ९८ ॥

यावद्भवति पटुत्वं करणानां मुक्तये द्विजश्रेष्ठाः ।
तावद्यतध्वमनिशं वायौ सत्येव भवति पवितव्यम् ॥ ९९ ॥

यूयं चेत्पुरुषार्थिनो द्विजवरा मा मा विलम्बोऽस्तु वो
बाल्यादेव यतध्वमक्षपटुता यावत्सदा मुक्तये ।
पश्चात्प्रत्युत वार्धकाहतधियो मन्दीभवेत ध्रुवं
क्षीणः किं महिषो वहेत शकटं शून्यं च भारैरपि ॥ ६० ॥

यूयं चेत्पुरुषार्थसाधनपरा वृद्धा द्विजाः सांप्रतं
हन्तैतावदहो वयोऽपि गलितं कालेन कामादिभिः ।
अक्षाण्यद्य विकुण्ठितान्यथ पुनर्युष्मत्प्रयासो वृथा
ह्यश्चोरगतस्य सप्तमदिने बन्धः कवाटस्य किम् ॥ ६१ ॥

आत्मानं परमं प्रमाणनिकरैरप्राप्यमव्याहतं
ज्ञेयं यद्गुरुवीक्षणादपि जना मूढास्तु मुक्त्वैव तत् ।
कोशेषु प्रमितेषु पञ्चसु परिज्ञातुं समुद्युञ्जते
नष्टेभाः कलशान्तरेष्वपि करं कृत्वा विचिन्वन्ति हि ॥ ६२ ॥

षड्भावैरनुयुक्त एव सततं तापत्रयेणाकुले
कामाद्यैरपि षड्भिरूर्मिभिरपि ग्रस्ते शरीरे जनाः ।
बद्धाहंकृतयोऽत्र दुःखमुदितं हाहेति मा क्रुश्यत
बद्ध्वा किं पितृकानने हि भवनं कुर्यात्पिशाच्या भयम् ॥ ६३ ॥

प्रारब्धानुबुभूषया परवशा वश्येन्द्रिया निःस्पृहाः
सन्तः सन्ति सदा निरुद्धमनसो ये यत्र सारग्रहाः ।

तन्निष्ठा किमवाप्यते द्विजवरैः रागाभिभूतैर्नरैः
संराज्ञीक्षणमीक्षितुं न घटते कृत्वा करे मार्जनीम् ॥ ६४ ॥
मायाकार्यं जगदपि तथा तत्त्वदृष्ट्या विलोक्य
प्राज्ञः कुर्वन्परपुरुषयोरेकतां वेदवाक्यैः।
आसीतैको न्वहमिति न चेन्मायया मोहितः स्या-
दाज्ञातव्यस्तिमिरनिकरः किं प्रदीपे प्रशान्ते ॥ ६५ ॥
आयुस्तडिच्चलमपायि शरीरमेत-
न्मृत्युर्ग्रसिष्यति कदेति न कोऽपि वेद।
अद्यैव तद्भजत मुक्तिपथं द्विजेन्द्रा
ज्येष्ठागमावधि हि तिष्ठति किं नु दर्शः ॥ ६६ ॥
आत्मास्ति सर्वजगतामाधारः पूर्वमिति विचिन्त्यैव।
पश्चात्तत्त्वविचारः कुड्ये सत्येव चित्रकर्म स्यात् ॥ ६७ ॥
मन्दोऽपि कार्यान्तरनिर्व्यपेक्षः सदाभ्यसेदात्मपरां च विद्याम्।
क्रमात्परं ब्रह्म भवेत्स्वयं च यान्त्यां पिपील्यां हि शिला नता स्यात्॥६८॥
विप्रा विहायात्महितं पुमर्थं किमर्थमन्यार्थमियान्प्रयासः।
पुत्रादिदुःखैरपि तापिताः स्थ के वा पिबन्त्यन्यरुजः कषायम् ॥ ६९ ॥

इति शिक्षापद्धतिः।

मायान्धकारं तरितुं प्रदीपं वेदान्तविज्ञानमपि प्रपन्नाः।
कुर्वन्त्यहो कर्म जुगुप्सितं च दीपं गृहीत्वा हि पतन्ति कूपे ॥ ७० ॥
लब्ध्वापि दुर्लभमिहामृतदं द्विजत्वं
तस्मिन्प्रयाति विलयं विभियो मनुष्याः।
जायासुतार्थमतिमूढधियो यतन्ते
गच्छत्यहो शिरसि किं नु शिरस्त्रयाज्ञा ॥ ७१ ॥
जायेयमेष तनयः पशवो ममैते
मायेति सम्यगविचार्य विमूढलोकः।
आर्येषु सत्स्वपि ददाति न चैव भुङ्क्ते
तोये महत्यपि हि नास्ति जलं पिशाच्याः ॥ ७२ ॥

कामेषुणा कामरिपोर्मनोऽपि कल्लोलितं का मनुजेषु वार्ता।
आषाढवाते चलति द्विपेन्द्रे चूलीवतो वारिधिरेव काष्ठा॥ ७३॥

अध्यात्मादिकलापैराक्रान्ते सततदुःखसंसारे।
दुःखमिदानीमिति या चिन्ता सिकतोदनोपलान्वेषी॥ ७४॥

तापत्रयेण परितापवतां जनानां
काशी रुजापनयनाय शिवाश्रितास्ति।
किं त्वत्र सन्ति यवना निवसन्ति घोरा-
श्छायोत्तमा न सहते तनु वे····ताहि॥ ७५॥

विद्योपदिश्येत विरक्तिशून्ये विप्रेऽविवेके द्विजराजकेन।
या वेदविज्ञानरता द्विजाढ्याः सारण्यविस्तारितचन्द्रिका स्यात्॥ ७६॥

विषोपमे वीतरसे विषक्तो जनोऽयमज्ञो विषये सदैव।
न तत्र चिन्तासु तथा हि भक्ष्यो घुणस्य निम्बाद इवैव निम्बः॥ ७७॥

दरिद्रभावं निजकर्मवश्ये जने प्रयातेऽपि महारुजापि।
भवेदमुष्मिन्नवकष्टभावे शिलाहताङ्गे हि पतेद्गदापि॥ ७८॥

प्रारब्धभोगवशतः स्वयमागतानां
दौर्गत्यदुःखविपदां वरकल्प्य हेतुम्।
दुःखायतेन्य····मूढमना जनोऽयं
को वा विषीदति हि वेद्धरि तिष्ठतिष्ठम्॥ ७९॥

इति विषादपद्धतिः।

सन्तः स्वान्ते सततममलं संविचिन्वन्ति योगा-
दन्तः सन्तं निगमवचसा प्रत्यगात्मीभवन्तम्।
मूढो लोको बहिरिव परात्मानमाशङ्कतेऽसौ
अङ्के कृत्वा तनयममलं ग्राममन्वेषते हि॥ ८०॥

काम्यानां कतिचित्समापरिमितस्वर्गैकसंदायिनां
सद्यःस्वान्तनितान्तमोहनकृतां कर्ता जनः कर्मणाम्।
आत्मानन्दमनन्यवेद्यमपरिच्छिन्नं न जानाति तं
विक्रेता लवणस्य वेत्ति किमु तत्कर्पूरमूल्यं परम्॥ ८१॥

आत्माभिधं सुखमनन्तमखण्डमेकं
यज्ञादिकर्मजनितेन सुखेन तुल्यम् ।
मा ब्रूहि कर्म सुखदं तदपीति बुद्ध्या
रत्नाकरस्य सदृशं नु कुलालकुण्डम् ॥ ८२ ॥

वर्णत्वमात्रसमतामपि यद्युपेताः
क्षत्रादयोऽग्रजनितां किमु यान्त्यतस्ते ।
मन्दा वदन्ति सममात्मसुखेन चान्यं
द्रोणं पयः पिबत किं मथितं च तावत् ॥ ८३ ॥

किं नो दुःखहरं सुखं च तनुते किं वेति चिन्ताकुला
मा भूताद्य जना यतध्वमनिशं सर्वात्मना मुक्तये ।
सायुज्यं यदि सा भवेद्धि भवतां किं वा विचार्यं सुखं
हैमं भोजनभाजनं भवति चेत्पृच्छ्येत किं व्यञ्जनम् ॥ ८४ ॥

सत्यं वस्तु सदात्मरूपममलं सच्चित्सुखं भूसुरा
मायास्मिन्परिकल्पितैव न पुनस्तस्याः स्थितिः सात्त्विकी ।
तत्कार्यस्य चराचरस्य जगतः सत्त्वे कथा का भवे-
द्ग्रामोऽस्त्येव हि चेत्क्रियेत परतः सीमाविवादः पुनः ॥ ८५ ॥

कर्माणि जन्मान्तरसंचितानि महान्ति विज्ञानमहाहुताशे ।
सर्वाणि दग्धानि भवन्ति सद्यो महानलस्यास्ति किमार्द्रभावः ॥ ८६ ॥

लोकेषु सर्वदापि प्राप्तो जीवित्वमा श्वचण्डालात् ।
आत्मा भवति विशुद्धो मान्यो मणिरेव संकरस्थोऽपि ॥ ८७ ॥

कर्माणि बध्नन्ति शुभाशुभानि कर्तारमौपाधिकमेव जीवम् ।
परं न तत्साक्षिणमस्तदोषमाभीरमद्यात्किमजे शयाने ॥ ८८ ॥

विप्रा विरक्तमनसो गुरुणाप्तवाक्यै-
रात्मस्वरूपमुपदिष्टमखण्डमेकम् ।
एकाकिनो भवत लोकितुमप्रमत्ताः
संमर्दते किमवलोकितुमन्तरिक्षम् ॥ ८९ ॥

तत्त्वज्ञानान्मायाकर्मविनाशेऽपि न हि भवेद्देहस्तम्।
प्रारब्धमाशरीराद्वपे विरतेऽपि न विरमेत्कणिका ॥ ९० ॥
मुक्तेन कर्मजालैर्लोकहितायैव भवति करणीयम्।
न हि तत्फलेपमुक्त्यै पश्चात्पयसो नु सस्यानि ॥ ९१ ॥
यूनामकिंचनानां का वाञ्छा वारसुन्दरीवीथ्याम्।
कार्पासपण्यवीथ्याः कौलेयस्यापि कोऽपि संबन्धः ॥ ९२ ॥
सद्गुणां विगतत्रासां परमार्थप्रदायिनीम्।[1]
लोकोक्तिमौक्तिकीमालां कण्ठे यद्ध्वमकिंचनाः ॥ ९३ ॥
संमतेन सतां लोके दक्षिणामूर्तिसूरिणा।
लोकोक्तिमुक्तामालेयं रचितात्मप्रसिद्धये ॥ ९४ ॥

इति ज्ञानप्रशंसापद्धतिः।

समाप्तेयं लोकोक्तिमुक्तावली।

---

श्रीनीलकण्ठदीक्षितप्रणीत

## आनन्दसागरस्तवः।

विज्ञापनार्हविरलावसरानवाप्त्या
मन्दोद्यमे मयि दवीयसि विश्वमातुः।
अव्याजभूतकरुणापवनापविद्धा-
न्यन्तः सराम्यहमपाङ्गतरङ्गितानि ॥ १ ॥

---

१. 'मुनिरस्ति भरद्वाजः ख्यातस्त्रिभुवनेष्वपि।
अग्नैर्यस्य जहौ रामोऽप्यरण्यभ्रमणश्रमम् ॥ १ ॥
तस्यान्वये महत्यासीत्क्षीरोद इव चन्द्रमाः।
श्रीकण्ठचरणासक्तः श्रीमानप्पयदीक्षितः ॥ २ ॥
विधित्रयी यदाक्षिप्ता नान्यत्र लभते गतिम्।
अथन्त इव दुर्दान्तो जानकीशशरार्दितः ॥ ३ ॥
आगमैरप्यसंवेद्यमाद्यं यत्तत्त्वमैश्वरम्।
आकुमारं परिज्ञातं तदेवार्षाद्यदुक्तिभिः ॥ ४ ॥
श्रीकण्ठदेशिकग्रन्थसिद्धान्तद्योतचन्द्रिका।
श्रीमती निर्मिता येन शिवार्कमणिदीपिका ॥ ५ ॥

आवेद्यतामविदितं किमथाप्यनुक्तं
वक्तव्यमान्तररुजोपशमाय नालम् ।
ईत्युच्यते किमपि तच्छ्रवणे निधातुं
मातः प्रसीद मलयध्वजपाण्ड्यकन्ये ॥ २ ॥

आक्रन्दितं रुदितमाहतमानने वा
कस्यार्द्रमस्तु हृदयं किमतः फलं वा ।
यस्यां मनो द्रवति या जगतां स्वतन्त्रा
तस्यास्तवाम्ब पुरतः कथयामि खेदम् ॥ ३ ॥

---

× × × × × × × × ×

यं विद्म इति यज्वन्यानभ्यस्यामोऽखिलानिति ।
यस्य शिष्याः स्म इति च श्लाघन्ते स्वं विपश्चितः ॥ ८ ॥

नाकेऽपि सति देवानां माहात्म्यकलहे मिथः ।
वादः शाम्यति यद्वाचि विन्यस्य निखिलं भरम् ॥ ९ ॥

आमोदिभिर्वचःपुष्पैरर्चितो येन शंकरः ।
तस्माज काशधुत्तूरधारणोपहितां रुजम् ॥ १० ॥

तत्समानप्रभावस्य तदनन्तरजन्मनः ।
आसीदाच्चादीक्षितस्य पुत्रो नारायणाध्वरी ॥ ११ ॥

जयन्ति तनयास्तस्य पञ्च सौभ्रात्रशालिनः ।
गर्भदासा महेशस्य कवयश्च विपश्चितः ॥ १२ ॥

तेषामहं द्वितीयोऽस्मि भूमिदेवीतनूभुवाम् ।
नीलकण्ठ इति ख्यातिं नीतः शंभोः प्रसादतः ॥ १३ ॥

वार्तिकाभरणग्रन्थनिर्माणव्यक्तनैपुणः ।
श्रीवेङ्कटेश्वरमखी शिष्ये मय्यनुकम्पते ॥ १४ ॥'

श्रीनीलकण्ठदीक्षितस्य कृतिषु (१) कलिविडम्बनम्, (२) सभारञ्जनम्, (३) शान्तिविलासः, (४) वैराग्यशतकम्, (५) अन्यापदेशशतकम्, (६) आनन्दसागरस्तवः, इति षण्णां ग्रन्थानां नीलकण्ठदीक्षितस्य षड्ग्रन्थीति प्रसिद्धिः. तत्र ग्रन्थेष्वयमानन्दसागरस्तवः केवलं काव्यमालायां न प्रकाशितः इति सोऽपि मुद्रितोऽधास्माभिः, अयं न कदापि कस्यामपि लिप्यां मुद्रयित्वा प्राचुर्यं नीतः.

१. 'इत्यर्थ्यते किमपि तच्छ्रवणे निधातुम्' क.

पर्याकुले मनसि वाचि परिस्खलन्त्या-
मावर्तगर्त इव चक्षुषि घूर्णमाने।
कस्तेऽभिधास्यति शिवे मम तामवस्थां
काले दयस्व कथयामि तवाधुनैव ॥ ४ ॥
भक्तिं करोतु नितरां सुरजातिमात्रे
ग्रामीणजन्तुरिव पौरजनेषु लोकः।
अन्यत्र देवि भवदीयपदारविन्दा-
दाकृष्यमाणमपि मे हृदयं न याति ॥ ५ ॥
अङ्गीकुरु त्वमवधीरय वा वयं तु
दासास्तवेति वचसैव जयेम लोकान्।
एतावतैव सुकरो ननु विश्वमात-
रुद्दण्डदण्डधरकिंकरमौलिभङ्गः ॥ ६ ॥
वेदान्तवाक्यजनितं विमलं विचारै-
रासाद्य बोधमनुचिन्तनतोऽपरोक्षम्।
मुक्तिं व्रजन्ति मनुजा इति सूक्तिमाद्या-
मालम्ब्य कस्तरितुमर्हति शैलकन्ये ॥ ७ ॥
एकैकवेदविषयाः कति नाम शाखा-
स्तासां शिरांसि कति नाम पृथग्विधानि।
अर्थावबोधविधुरोऽक्षरलाभ एव
केषां नृणां कतिभिरस्तु शरीरबन्धैः ॥ ८ ॥
न्यायाः परस्परविभिन्नदिशः सहस्र-
मुच्चावचानि च भवन्त्युपबृंहणानि।
एवं स्थिते गिरिसुते निगमोपलानां
तात्पर्यसारमवधारयितुं क्षमः कः ॥ ९ ॥
अस्त्वक्षरग्रहविधिर्जनुषां सहस्रै-
रापाततो भवतु वापि ततोऽर्थबोधः।

---

१. 'अर्थावबोधविधुराक्षरलाभ एव तेषां शिवे कतिभिरस्तु शरीरबन्धैः' ख.

दुर्वादिकल्पितविकल्पतरङ्गसान्द्रा-
न्दुष्पूर्वपक्षजलधीन्कथमुत्तरेयुः ॥ १० ॥
ब्रह्मेति शक्तिरिति बन्धविमोचनीति
मायामयीति मदनान्तकवल्लभेति ।
सम्राष्टशब्दपरिवर्तनमात्र एव
सामर्थ्यमावहति शास्त्रपरिश्रमोऽयम् ॥ ११ ॥
तस्मै प्रसीदसि गिरीन्द्रसुते य इत्थं
संपादयेत शनकैरपरोक्षबोधम् ।
यस्मै प्रसीदसि स च क्षमतेऽवबोद्धु-
मित्थं परस्परसमाश्रयमेतदास्ते ॥ १२ ॥
आकर्णय त्वमिममभ्युपगम्य वादं
जानातु कोऽपि यदि वा हृदयं श्रुतीनाम् ।
तस्याप्यसंख्यभवबन्धशतार्जितोऽयं
द्वैतभ्रमो गलतु जन्मशतैः कियद्भिः ॥ १३ ॥
काले महत्यनवधावपतत्कदापि
काप्यन्तिमे जनुषि कोऽपि गतिं लभेत ।
इत्थं समर्थनविधिः परमागमानां
पर्यायसूक्तिविधया नयनं नञर्थे ॥ १४ ॥
एकापवर्गसमये जगतोऽपवर्गः
सर्वापवर्गसमये पुनरस्तशङ्कः ।
ईदृग्विधं कमपि पक्षमिहावलम्ब्य
स्थातुं सुखं क्षममनेन पथा प्रवृत्तैः ॥ १५ ॥
अभ्यस्य वेदमवधाय च पूर्वतन्त्र-
मालक्ष्य शिष्टचरितानि पृथग्विधानि ।
अध्यापनादिभिरवाप्य धनं च भूरि
कर्माणि मातरलसाः कथमाचरेयुः ॥ १६ ॥

---

१. 'विश्वविमोचनी' क.

आयस्य तावदपि कर्म करोतु कश्चि-
त्तेनापि मातरधिकं किमिहानुभाव्यम्[1]।
आस्ते सुखं य इह भारतवर्षसीम-
न्यास्ते स किंचिदित उत्तरतोऽपसृत्य ॥ १७ ॥

कर्म त्यजेम यदि नूनमधः पतेम
यद्याचरेम न कदापि भवं तरेम।
कर्म त्यजेदिति चरेदिति च प्रवृत्ता
भावेन केन निगमा इति न प्रतीमः ॥ १८ ॥

कर्मण्यकर्मविधिरेष यदाचरन्ति
कर्माणि तत्तदनुबन्धजिहासयेति।
सत्यं तथाप्यभिनवो भविता न बन्धः
प्राचीनबन्धहरणे क इवाभ्युपायः ॥ १९ ॥

प्रारब्धकर्म कियदारभते कियद्वा
प्रारप्स्यते कियदिदं क इवावधत्ताम्।
कालः कियानिव मया प्रतिपालनीयो
यस्य क्षणार्धमपि कल्पशतत्वमेति ॥ २० ॥

पुंसः क्षणार्धमपि संसरणाक्षमस्य
सांख्यादयः सरणयो न विशन्ति कर्णम्।
संख्याय गाङ्गसिकताः सकलाश्च सूक्ष्मा
भुङ्क्ष्वेति वागिव महाक्षुधयार्दितस्य ॥ २१ ॥

भक्तिस्तु का यदि भवेद्रतिभावभेद-
स्तत्केवलान्वयितया विफलैव भक्तिः।
प्रीतिस्त्वयि त्रिजगदात्मनि कस्य नास्ति
स्वात्मद्रुहो न खलु सन्ति जनास्त्रिलोक्याम् ॥ २२ ॥

आत्मा समस्तजगतां भवतीति सम्य-
ग्विज्ञाय यद्वितनुते त्वयि भावबन्धम्।

---

1. 'किमिवानुभाव्यम्' ख.

सा भक्तिरित्यभिमतं यदि सिद्धमिष्टं
व्यर्थं विशेष्यमलमस्तु विशेषणं नः ॥ २३ ॥
स्वात्मेतरत्वमवधार्य परत्वबुद्ध्या
यत्प्रीतये गुरुजनेष्विव सैव भक्तिः ।
स्यादेतदेवमियमेव तु मे जिहास्या
द्वैतभ्रमात्मिकमधिकं भवबन्धमूलम् ॥ २४ ॥
सेवैव भक्तिरिति कर्मपथप्रवेशः
सेव्यप्रसादफलका किल कर्मसेवा ।
ध्यानप्रवाह इति चेच्छ्रवणात्तृतीयः
प्रागेव मातरयमाकलितोऽभ्युपायः ॥ २५ ॥
अत्रैव दास्यसि विमुक्तिमथापि याचे
मातः शरीरपतनं मणिकर्णिकायाम् ।
अस्तु स्वकृत्यमनुकम्पनमीश्वराणां
दासस्य कर्मकरतेव तथा स्वकृत्यम् ॥ २६ ॥
सद्यो भवेत्सुकृतिनामुपदेशलाभः
पापात्मनां बहुतिथे समये व्यतीते ।
इत्यादिभिः किल पुराणवचोभिरम्ब
वाराणसीमपि न याचितुमुत्सुकोऽस्मि ॥ २७ ॥
आक्रान्तमन्तररिभिर्मदमत्सराद्यै-
र्गात्रं वलीपलितरोगशतानुविद्धम् ।
दारैः सुतैश्च गृहमावृतमुत्तमर्णै-
र्मातः कथं भवतु मे मनसः प्रसादः ॥ २८ ॥
धन्याः कति त्रिभुवने परमोपभोग्यं
संसारमेव परमेश्वरि भावयन्तः ।
आभासरूपमवबोधमिमं समेत्य
क्लिश्ये कियत्कियदहं त्वमुना भवेन ॥ २९ ॥

---

१. 'सा भक्तिरित्यभिमतं यदि भक्तिरिष्टम्' क. २. 'सेव्यप्रसादफलकम्' क.
३. 'आकुलितोऽभ्युपायः' क.

का संस्तुतिः किमपचारनिबन्धनेयं
कीदृग्विधस्य[1] तव किं क्षतमेतयेति।
प्रेश्ने[2] तु नास्मि कुशलः प्रतिवक्तुमेव
खेदस्तु मे जननि कोऽप्ययमेवमास्ते ॥ ३० ॥

एवं गतस्य मम सांप्रतमेतदर्ह-
मत्रेदमौपयिकमित्थमिदं च साध्यम्।
अस्मिन्प्रमाणमिदमित्यपि बोद्धुमम्ब
शक्तिर्न मे भुवनसाक्षिणि किं करोमि ॥ ३१ ॥

न ज्ञायते मम हितं नितरामुपायो
दीनोऽस्मि देवि समयाकरणाक्षमोऽस्मि।
तत्त्वामनन्यशरणः शरणं प्रपद्ये
मीनाक्षि विश्वजननीं जननीं ममैव ॥ ३२ ॥

किंचिन्मया श्रुतिषु किंचिदिवागमेषु
शास्त्रेषु किंचिदुपदेशपथेषु किंचित्।
आघ्रातमस्ति यदतो भवतीं वरीतुं
गोप्त्रीति काचिदुदपद्यत[3] बुद्धिरेषा ॥ ३३ ॥

ब्रह्मैवमेवमहमेष तदाप्त्युपाय
इत्यागमार्थविधुराः प्रथमे दयार्हाः।
त्वद्रक्षकत्वगुणमात्रविदो द्वितीया
इत्यर्थये[4] सदधिकारनिरूपणाय ॥ ३४ ॥

मातः करोषि ममतां मयि यावदीष-
त्तावद्यते मम ततः किमिवास्ति साध्यम्।
मामित्थमित्थमुपयुङ्क्ष्व न विस्मरेति
किं स्वामिनं त्वरयते क्वचन स्वभृत्यः ॥ ३५ ॥

---

१. 'कीदृग्विधस्य तव किं क्षमते मयेति' ख. २. 'प्रश्नेति' क. ३. 'काचिदुदबुध्यत' क; 'काचिदुपपद्यत' ख. ४. 'इत्यर्थये' क.

त्याज्यं त्यजानि विहितं च समाचराणि
  नित्येषु शक्तिमनुरुध्य हि वर्तितव्यम् ।
तद्बुद्धिशक्तिमनुरुध्य न कार्यशक्ति-
  मित्येतदेव तु शिवे विनिवेदयामि ॥ ३६ ॥
आत्मैव मार इति तं त्वयि यो निधत्ते
  सोऽङ्गानि कानि कलयत्वलसः प्रपत्तेः ।
विश्वत्र सात्र सविलक्षणलक्षणाया
  विलम्भसंपदियमेव समस्तमङ्गि ॥ ३७ ॥
त्वत्प्रेरणेन मिषतः श्वसतोऽपि मातः
  प्रामादिकेऽपि सति कर्मणि मे न दोषः ।
मात्रैव दत्तमशनं ग्रसतः सुतस्य
  को नाम वक्ष्यति शिशोरतिभुक्तिदोषम् ॥ ३८ ॥
मुक्तिं सिसाधयिषतां निजयैव बुद्ध्या
  प्रारब्धकर्म भवतु प्रतिबन्धहेतुः ।
त्वामेव साधनतयापि समाश्रितानां
  तुल्यं तदम्ब यदि कस्तव वीरवादः ॥ ३९ ॥
प्रारब्धकर्म गिरिजे भवदाश्रिताना-
  मन्यत्र संक्रमय नाशय वा समूलम् ।
मर्त्याश्च खल्वपि विषं वपुषि प्रसक्तं
  संक्रामयन्ति परतोऽपि च नाशयन्ति ॥ ४० ॥
त्वद्दर्शनश्रवणवन्दनचिन्तनादि-
  प्वक्षाणि देवि विनियुज्य यथाधिकारम् ।
रक्षेत्यसंख्यभवसंभृतयैव मैत्र्या
  रुन्ध्यां यदि स्थिरममून्यधुनैव न स्युः ॥ ४१ ॥

---

१. 'विहितं तु समाचराणि' क. २. 'साङ्गानि कानि कलयन्त्वलसः प्रपत्तेः । विश्वत्र साध्यसविलक्षणलक्षणाया............'समस्तमङ्गम्' ख. ३ क-पुस्तकेऽयं श्लोको न विद्यते.

त्रातव्य एष इति चेत्करुणा मयि स्या-
त्रायस्व किं सुकृतदुष्कृतचिन्तया मे ।
कर्तुं जगत्तिरयितुं च विशृङ्खलायाः
कर्मानुरोध इति कं प्रति वञ्चनेयम् ॥ ४२ ॥
त्वय्यर्पितं प्रथममप्पययज्वनैव
स्वात्मार्पणं विदधता स्वकुलं समस्तम् ।
का त्वं महेशि कुलदासमुपेक्षितुं मां
को वानुपासितुमहं कुलदेवतां त्वाम् ॥ ४३ ॥
मौढ्यादहं शरणयामि सुरान्तरं चे-
त्किं तावता स्वमपि तस्य भवामि मातः ।
अज्ञानतः परगृहं प्रविशन्परस्य
स्वत्वं प्रयास्यति पशुः किमु राजकीयः ॥ ४४ ॥
आधाय मूर्धनि वृथैव भरं महान्तं
मूर्खो निमज्जथ कथं भवसागरेऽस्मिन् ।
विन्यस्य भारमखिलं पदयोर्जनन्या
विस्रब्धमुत्तरत पल्वलतुल्यमेनम् ॥ ४५ ॥
क्वेदं पतिष्यति वपुः क ततो नु गम्यं
को दण्डयिष्यति कियन्तमनेहसं वा ।
किं तस्य संतरणसाधनमित्यनन्ता
चिन्ता स्थिता त्वयि शनैरवतारिता सा ॥ ४६ ॥
ज्ञानं दिशेयमुत तेन विनोद्धरेयं
प्रारब्धमप्यपलपेयमुतानुरुन्ध्याम् ।
इत्थं सकृत्प्रपदनैकवशंवदाया
मातर्मयि प्रववृते महतीह चिन्ता ॥ ४७ ॥
एतज्जडाजडविवेचनमेतदेव
क्षित्यादितत्त्वपरिशोधनकौशलं च ।

१. अप्पयदीक्षितो नीलकण्ठदीक्षितस्य पितामहस्य आचादीक्षितस्याग्रजो भ्राता. अप्पयदीक्षित एव अप्पदीक्षितश्च. अप्पयदीक्षितः प्रसिद्धः.

ज्ञानं च शैवमिदमागमकोटिलभ्यं
मातुर्यदङ्घ्रियुगले निहितो मयात्मा ॥ ४८ ॥
षट्त्रिंशदावरणमध्यजुषि त्वदङ्घ्रौ
हालास्यनाथदयिते निहितो मयात्मा ।
भूभृत्तलत्रिदशवर्तिषु कः क्षमेत
तच्चक्षुषापि निभृतेन निरीक्षितुं माम् ॥ ४९ ॥
वन्ध्यं हरिष्यसि सुखं वितरिष्यसीति
निश्चिप्रचं निखिलमम्ब तदास्त एव ।
संप्रत्यहं त्वयि निधाय भरं समस्तं
यन्निर्वृणोमि किमितोऽपि ममापवर्गे ॥ ५० ॥
काश्यां निपातय वपुः श्वपचालये वा
स्वर्गे नय त्वमपवर्गमधोगतिं वा ।
अद्यैव वा कुरु दयां पुनरायतौ वा
कः संभ्रमो मम धने धनिनः प्रमाणम् ॥ ५१ ॥
नाहं सहे तव कथाश्रवणान्तरायं
नाहं सहे तव पदार्चनविच्युतिं वा ।
मोक्षं दिशैतदविरुद्धमिदं न चेत्स्या-
न्नैवास्तु मातरपवर्गमहोपसर्गः ॥ ५२ ॥
आचूडमाचरणमम्ब तवानुवार-
मन्तःस्मरन्भुवनमङ्गलमङ्गमङ्गम् ।
आनन्दसागरतरङ्गपरम्पराभि-
रान्दोलितो न गणयामि गतान्यहानि ॥ ५३ ॥
पाषाणतोऽपि कठिने शिरसि श्रुतीनां
प्रायः परिभ्रमवशादिव पाटलाभम् ।

---

१. हालास्यनगरीति दक्षिणमधुराया नाम. २. 'वन्ध्यं हरिष्यति सुखं वितरिष्य ………किमतोऽपि ममापवर्गे' ख. ३. 'धनदः प्रमाणम्' क. ४. 'अविरुद्धमेव न चेत्स्यात्' क.

अम्ब स्मरेयममृतार्णवमान्थलब्ध-
हैयंगवीनसुकुमारमिदं पदं ते ॥ ९४ ॥
ये नाम सन्ति कतिचिद्गुरवस्त्रिलोक्यां
तेषामपि क्षयमुपेतवता गुरुत्वम्।
पादेन मूर्ध्नि विधृतेन वयं तवाम्ब
संसारसागरमिमं सुखमुत्तरामः॥ ९५ ॥
साधारणे स्मरजये निटिलाक्षिसाध्ये
भागी शिवो भजतु नाम यशः समग्रम्।
वामाङ्घ्रिमात्रकलिते जननि त्वदीये
का वा प्रसक्तिरिह कालजये पुरारेः॥ ९६ ॥
स्यात्कोमलं यदि मनो मम विश्वमात-
स्त्वत्पादयोर्मृदुलयोस्तव पादुकास्तु।
स्यात्कर्कशं यदि करग्रहणे पुरारे-
रश्माधिरोहणविधौ भवतूपयोगः॥ ९७ ॥
प्रस्निग्धमुग्धरुचिपादतले भवत्या
लग्नं दृढं यदिह मे हृदयारविन्दम्।
एषैव साम्रभुवनद्विशतीपतित्व-
साम्राज्यसूचनकरी तव पद्मरेखा॥ ९८ ॥
अप्राकृतीं मृदुलतामविचिन्त्य किंचि-
दालम्बितासि पदयोः सुदृढं मया यत्।
तन्मे भवार्णवनिमज्जनकातरस्य
मातः क्षमस्व मधुरेश्वरि बालकृत्यम्॥ ९९ ॥
यत्रानमन्पशुपतिः प्रणयापराधे
मन्दं किल स्पृशति चन्द्रकलाञ्चलेन।
पुष्पार्चनेऽपि मृदितं पदयोर्युगं त-
न्मातस्तुदन्ति न कथं परुषा गिरो मे॥ १०० ॥

१. मधुरेश्वरि मधुरानगर्या हालास्यनगर्या ईश्वरि.

अव्याजसुन्दरमनुत्तरमप्रमेय-
मप्राकृतं परममङ्गलमङ्घ्रिपद्मम् ।
संदर्शयेदपि सकृद्भवती दयार्द्रा
द्रष्टास्मि केन तदहं तु विलोचनेन ॥ ६१ ॥
दिव्या दृशोऽपि दिविषद्ग्रहणोचितानि
वस्तूनि काममवधारयितुं क्षमन्ते ।
त्वन्मात्रवेद्यविभवे तव रूपधेये
त्वद्भाव एव शरणं परिशेषितो नः ॥ ६२ ॥
अस्मिन्महत्यनवधौ किल कालचक्रे
धन्यास्तु ये कतिपये शुकयोगिमुख्याः ।
लीनास्त्वदङ्घ्रियुगले परिशुद्धसत्त्वा-
स्तानात्मनस्तव नखानवधारयामः ॥ ६३ ॥
आ शैशवान्ममतया कलितस्त्वयासा-
वानृण्यमम्ब तव लब्धुमना मृगाङ्कः ।
स्वात्मानमेव नियतं बहुधा विभज्य
त्वत्पादयोर्विनिदधे नखरापदेशात् ॥ ६४ ॥
नान्तः प्रवेशमयते किमपि श्रुतं मे
नास्तिक्यवादशिलया प्रतिरुध्यमानम् ।
तत्पातयाम्यहमिमां महतीमघस्ता-
त्पादोदकेन कियता परदेवतायाः ॥ ६५ ॥
सन्नाहिभिर्यमभटैः परिवार्यमाणे
मय्यर्भके करुणया स्वयमापतन्त्याः ।
आकर्णयेयमपि नाम विरामकाले
मातस्तवाङ्घ्रिमणिनूपुरशिञ्जितानि ॥ ६६ ॥
ब्रह्मेशकेशवमुखैर्वेहुभिः कुमारैः
पर्यायतः परिगृहीतविमुक्तदेशम् ।

---

१. 'कलितस्त्वसौ' क.

उत्सङ्गमम्ब तव दास्यसि मे कदा त्वं
मातृप्रियं किल जडं सुतमामनन्ति ॥ ६७ ॥
ऊरौ शिरस्तव निवेश्य दयावितीर्ण-
संयानपल्लवसमीरविनीतखेदम्।
अत्रैव जन्मनि विभोः परमोपदेश-
माकर्णयेयमपि किं मणिकर्णिकायाम् ॥ ६८ ॥
काञ्चीगुणग्रथितकाञ्चनचेलदृश्य-
चण्डातपांशुकविभापरभागशोभि।
पर्यङ्कमण्डलपरिष्करणं पुरारे-
र्ध्यायामि ते निखिलमम्ब नितम्बबिम्बम् ॥ ६९ ॥
गर्भे निवेश्य भुवनानि चतुर्दशापि
संरक्षितुं कलितनिश्चितया भवत्या।
प्राकारमेव रचितं परितोऽपि नून-
मूहे सुवर्णमयमेदुरपट्टबन्धम् ॥ ७० ॥
मुक्ताश्च खल्वपि यदि त्रिदिवे भवत्या
स्तन्याशया स्तनतटं न परित्यजन्ति।
अस्माकमुद्भटभवज्वरतापिताना-
मार्द्रीभवन्तु वदनानि कुतो न हेतोः ॥ ७१ ॥
नष्टोपलब्धमधिगत्य शिशुं चिरान्मां
वात्सल्यविद्रुतहृदः परदेवतायाः।
क्लिद्यत्पयोधरविनिःसृतदुग्धबिन्दु-
निष्यन्दपङ्क्तिरिव दीव्यति हारयष्टिः ॥ ७२ ॥
यत्तद्धनुर्नमनोमयमैक्षवं ते
तस्यास्तु देवि हृदयं मम मूलदेशः।
चापाधिरोपणविधौ चरणाञ्चलेन
संभाव्यते किल समाक्रमणं कदाचित् ॥ ७३ ॥

१. 'उत्सङ्गमेव' क. २. 'कलितनिश्चलया' ख. ३. 'हरितोऽपि नून' क.

आस्थाय दारुणतरं कमपि स्वभाव-
मत्यन्तदुष्कृतकृतामपि शिक्षणाय ।
गृह्णासि सायकपदे कुसुमान्यमूनि
मातः सुतेषु महती किल रूक्षतेयम् ॥ ७४ ॥

पाशं सृणिं च करयोस्तव भावयन्तः
संस्तम्भयन्ति वशयन्ति च सर्वलोकान् ।
चापं शरं च सकृदम्ब तव स्मरन्तो
भूपालतां दधति भोगपथावतीर्णाः ॥ ७५ ॥

पाशाङ्कुशौ तव करे परिचिन्त्य राग-
द्वेषौ जयन्ति परमार्थविदस्तु धन्याः ।
एकत्र चापमितरत्र शरं च मत्वा
व्यावर्तयन्ति हृदयं विषयान्धकूपात् ॥ ७६ ॥

उत्क्रान्तमान्तरमिदं करणं जनाना-
मभ्येति चन्द्रमिति हि श्रुतयो वदन्ति ।
आस्तामिदं मम तु देवि मनोऽधुनैव
लीनं दृढं वदनचन्द्रमसि त्वदीये ॥ ७७ ॥

विद्यात्मनो जननि तावकदन्तपङ्क्ते-
र्वैमल्यमीदृगिति वर्णयितुं क्षमः कः ।
तत्संभवा यदमला वचसां सवित्री
तन्मूलकं कवियशोऽपि ततस्तरां यत् ॥ ७८ ॥

स्वच्छापि ते वहति यत्किल दन्तपङ्क्तिः
स्वच्छन्दनिर्दलितदाडिमबीजशोभाम् ।
तन्मे रजोव्यतिकराधिकपाटलिम्नि
चित्ते परं परिचयादिति चिन्तयामि ॥ ७९ ॥

---

१. 'भूपालतां धवति' ख. २. 'परमार्थविदस्तुरन्त्याः' ख. ३. अयं श्लोकः ख-पुस्तके नास्ति.

अर्धं जितं त्रिपुरमम्ब तव स्मितं चे-
दर्धान्तरेण च तथा भवितव्यमेव ।
तच्चिन्तये जननि कारणसूक्ष्मरूप-
स्थूलात्मकत्रिपुरशान्तिकृते स्मितं ते ॥ ८० ॥

मत्क्लेशदर्शनपरिद्रवदन्तरङ्ग-
हय्यङ्गवीनपरिवाहनिभं जनन्याः ।
अन्तस्तमोपहमनुस्मरतां जनानां
मन्दस्मितं तव तु मङ्गलमस्तु भूत्यै ॥ ८१ ॥

सांसिद्धिकाननसरोरुहदिव्यगन्ध-
सान्द्रीकृतेन्दुशकलाकलिताधिवासम् ।
ताम्बूलसारमखिलागमबोधसारं
मातर्विधेहि मम वक्त्रकलाचिकायाम् ॥ ८२ ॥

नासामणिस्तव शिवे चिरसंस्तवेन
प्रत्याहृते मनसि भाति तपोधनानाम् ।[2]
अज्ञानसंततिनिशात्ययसूचनार्थ-
माविर्भवन्त्युरुदेशिकतारकेव ॥ ८३ ॥

ताम्बूललक्ष्यपरिफुल्लकपोललक्ष्य-
ताटङ्कमौक्तिकमणिप्रतिबिम्बदम्भात् ।
हस्तद्वयव्यतिकरामलसत्त्वमाद्यं
वर्णं बिभर्ति जठरे तव वक्त्रबिम्बम् ॥ ८४ ॥

दत्ते श्रियं बहुविधां कुशलानि दत्ते
दत्ते पदं सुरपतेरपि लीलयैव ।
ईदृग्विधाम्ब तव दृष्टिरितोऽधिका वा
नाद्यापि कर्णमतिवर्तितुमीश्वरेयम् ॥ ८५ ॥

पाषाणकूटकठिने जनदुर्विगाहे
व्यर्थं महत्युपनिषद्विपिने प्रवृत्ता ।

---

१. 'ताम्बूलगर्भपरिफुल्लकपोललक्ष्म्यां ताटङ्क० । हस्तद्वयव्यतिकरामलसत्त्वं' ख.
२ श्लोकोऽयं क-पुस्तके नास्ति.

सेव्येत केन तव लोचनचन्द्रिकेय-
मेनां निपातय सकृन्मयि तप्यमाने ॥ ८६ ॥

कामं शिवेन शमितं पुनरुज्जगार
दृष्टिस्तवेति किमियं जननि स्तुतिस्ते ।
लीलाप्रसूतपुरुषार्थचतुष्टयाया-
स्तस्याः परं तु स भवत्यवयुक्त्यवादः ॥ ८७ ॥

सोमो जगज्जनयितेति यदाह वेदो
नेदं लतापरमिति भ्रमितव्यमार्यैः ।
यः शैवसामतनुवर्तिभवद्दगात्मा
चन्द्रो जगत्सृजति तत्पर एष वादः ॥ ८८ ॥

सूच्यग्रवद्वसुमतीमणुवच्च मेरुं
दृष्टिर्यदम्ब तव पश्यति दानशौण्डा ।
दृष्टास्त्वया वयमपीह ततः(ततः) स्तरामो
वेशन्तमेव भवसागरमुत्तरङ्गम् ॥ ८९ ॥

वाणीनिकेतनतया घनसारगौराः
कह्लारकेसररुचः कमलानुषङ्गात् ।
मातर्जयन्ति शरणागतलोकचेतो-
मालिन्यमार्जनवशादसिताः कटाक्षाः ॥ ९० ॥

आकर्णमुल्लसति मातरपाङ्गदेशे
कालाञ्जनेन घटिता तव भाति रेखा ।
शैवालपङ्क्तिरिव संततनिर्जिहान-
कारुण्यपूरपदवी कलितानुबन्धा ॥ ९१ ॥

विश्वं सृजत्यवति हन्ति च यत्कटाक्षो
विश्वस्यतां कथमसौ चपलस्वभावः ।

---

१. 'भवत्यवयुक्त्यवादः' एवमेव पुस्तकद्वयेऽपि वर्तते. २. 'तव स्मरामो' क. ३. 'भवसागरमुत्तरामः' ख. ४. 'कारुण्यपूर्णपदवी' क. ५. 'यः कटाक्षो' क.

एषोऽपि यामनुसरंल्लभते यशांसि
तामेव विश्वसिमि देवि तवानुकम्पाम् ॥ ९२ ॥
अर्धं कलङ्करहिता करुणैव शंभो-
रर्धं गुणास्तदितरे सकलाः समेताः ।
इत्यम्ब संप्रति किल स्फुरितं रहस्यं
संपश्यतो मम भवन्मयमैशमर्धम् ॥ ९३ ॥
अम्ब भ्रुवोस्तव विचेष्टितमप्रमत्तं
संपश्यतां निजनिजार्थनिदेशहेतोः ।
तन्मूलदेशनिहिता निभृता सुराणां
दृष्टिः प्रयाति मृगनाभिविशेषकत्वम् ॥ ९४ ॥
सारं कणं कणमघर्मरुचां सहसा-
त्संगृह्य निर्मितमिदं तव वक्त्रबिम्बम् ।
तावत्सुधाकरकलङ्ककुलानि पश्चा-
दन्यत्र देवि निहितानि कचापदेशात् ॥ ९५ ॥
विन्यस्तमिन्द्रमणिकन्दलसुन्दरेषु
केशेषु ते स्फटिकनिर्मलमिन्दुखण्डम् ।
आधारसंगतिवशादसितायमान-
मिन्दीवरच्छदवतंसदशां बिभर्ति ॥ ९६ ॥
चिन्तामणिस्त्रिभुवनेश्वरि कौस्तुभश्च
ख्यातौ मणी तव गृहाङ्गणकुट्टिमस्थौ ।
किं रत्नमन्यदुपलभ्य किरीटकोटिं
वाचस्पतिप्रभृतयस्तव वर्णयन्तु ॥ ९७ ॥
प्रादुर्भवत्तरणिबिम्बशतारुणानि
पर्याप्तशीतकिरणायुतशीतलानि ।
शृङ्गाररसारपरिवाहमयानि मात-
रङ्गानि केऽपि चरमे जनुषि स्मरन्ति ॥ ९८ ॥

१. 'पश्चादन्यत्र देवि' क. २. 'वाचस्पतिप्रभृतयस्तव कर्णयन्ति' ख.

प्रत्यग्रकुङ्कुमरसाकलिताङ्गरागं
प्रत्यङ्गदत्तमणिभूषणजालरम्यम् ।
ताम्बूलपूरितमुखं तरुणेन्दुचूडं
सर्वारुणं किमपि वस्तु ममाविरस्तु ॥ ९९ ॥
अर्धं त्रियस्त्रिभुवने सचराचरेऽस्मि-
न्नर्धं पुमांस इति दर्शयितुं भवत्या ।
स्त्रीपुंसलक्षणमिदं वपुराहृतं य-
त्तेनासि देवि विदिता त्रिजगच्छरीरा ॥ १०० ॥
निर्मासि संहरसि निर्वहसि त्रिलोकीं
वृत्तान्तमेतमपि वेत्ति न वा महेशः ।
तस्येश्वरस्य गिरिजे तव साहचर्या-
ज्जातः श्रुतिष्वपि जगज्जनकत्ववादः ॥ १०१ ॥
सत्तास्यखण्डसुखसंविदसि त्रिलोकी-
सर्गस्थितिप्रतिहतिष्वपि निर्व्यपेक्षा ।
त्वामन्तरेण शिव इत्यवशिष्यते कि-
मर्धं शिवस्य भवतीत्यनभिज्ञवादः ॥ १०२ ॥
नास्मिन्नविस्तपति नात्र विवाति वातो
नास्य प्रवृत्तिमपि वेद जगत्समस्तम् ।
अन्तःपुरं तदिदमीदृशमन्तकारे-
स्तादृशास्तु सुखमत्र चरन्ति बालाः ॥ १०३ ॥
त्वत्संनिधानरहितो मम मास्तु देश-
स्त्वत्तत्त्वबोधरहिता मम मास्तु विद्या ।
त्वत्पादभक्तिरहितो मम मास्तु वंश-
स्त्वच्चिन्तया विरहितं मम मास्तु चायुः ॥ १०४ ॥
त्वं देवि यादृगसि तादृगसि त्वमीदृ-
गेषेति वक्तुमिव बोद्धुमपि क्षमः कः ।

१. 'संचरन्ति' क.

मामेव तावदविदन्नतिपामरोऽहं
मातः स्तुतिं त्वयि समर्पयितुं विलज्जे ॥ १०५ ॥

काचित्कृता कृतिरिति त्वयि सार्पितेति
कापि प्रमोदकणिका मम नान्तरङ्गे ।
मौढ्यं मदीयमिह यद्विदितं ममैव
किं त्वम्ब विश्वसिमि दीनशरण्यतां ते ॥ १०६ ॥

कालानपास्य विषुवायनसंक्रमादी-[1]
नस्तंगते हिमकरे च दिवाकरे च ।
अम्ब स्मरेयमपि ते चरणारविन्द-
मानन्दलक्षणमपास्तसमस्तभेदम् ॥ १०७ ॥

[2]चतुरध्यायी रूपं कलहंसव्यञ्जनं जगन्मातुः ।
अपरब्रह्ममयं वपुरन्तः शशिखण्डमण्डनमुपासे ॥ १०८ ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्याचादीक्षितपौत्रेण श्रीनारायणदीक्षितात्मजेन भूमिदेवीगर्भसंभूतेन श्रीनीलकण्ठदीक्षितेन विरचितासु कृतिष्वानन्दसागरस्तवः संपूर्णः ।

---

[3]श्रीलोलिम्बराजकृतं

## हरिविलासम् ।

प्रथमः सर्गः ।

रचयति सहसा यश्चित्रमेतं प्रपञ्चं
प्रशमयति च तद्वत्केनचित्कौतुकेन ।
अविदितमपरैस्तच्चण्डमुण्डादिनाना-
दनुजदलनदक्षं शर्वसर्वस्वमव्यात् ॥ १ ॥

---

1. 'विषयायनसंक्रमादी' ख. 2. आर्येयं ख-पुस्तके नास्ति. 3. "आसीत्खलु भोजराजमहीपालसमकालिकसूर्यनामधेयनृपतिकिशोरस्वकीर्तिकदम्बधवलितदिगन्तरन्दाविद्वद्गुणगणविवेकसहृदयहरिहरपदाभिधेयभूभर्तृसभायामनेकविद्याकुशलः कविकुलावतंसो दाक्षिणात्यभूसुरो दिवाकरसूरिसूनुर्लोलिम्बराजो नाम । अनेन च प्राप्तयौवनदशेनापि निरपत्यस्वज्येष्ठभ्रातृकृतसुतनिर्विशेषलालनेन चिरकालं विद्यामनभ्यसता

यदपि मत्कविता गुणवर्जिता तदपि साधुसुखाय भविष्यति ।
इह निमित्तमिदं यदुदीर्यते हरिकथा कलिकल्मषनाशिनी ॥ २ ॥

रे रे खलाः शृणुत मद्वचनं समस्ताः
स्वर्गे सुधास्ति सुलभा न तु सा भवद्भिः ।
कुर्मस्तदत्र भवतामुपकारकारि
काव्यामृतं पिबत तत्परमादरेण ॥ ३ ॥

सुरासुरानुग्रहनिग्रहार्थं कृपागृहं विग्रहमादधानः ।
श्रीकेशवः शैशवमेत्य नन्दगोपालगेहाभरणं बभूव ॥ ४ ॥

---

विषयासक्तमनस्कतया विक्षिप्तचित्तेन भोजनसमय एव सदनमुपसर्पता धनार्जनार्थं देशान्तरेषु भ्राम्यतोऽग्रजस्य वियोगभरसंतप्तमानसतत्पत्नीकरापहृतभोजनपात्रेण 'यादि दुर्विनीत, विफलमियत्कालं परिपोषितोऽसि' इति श्रुतहृदयभेदिदुर्वचसा तथा व्यपादि यथा निद्रायाखिलविषयानतिचिरसमयमधिकदत्तचित्ततयातिकष्टेन विविधविद्यासंपत्त्यर्थं सप्तशृङ्गेति प्रसिद्धदक्षिणदिग्भूधरोपरिविराजमानाष्टादशभुजमहिषासुरमर्दिनीसेवनमात्तबहुलविश्वासमकारि। येन निजजननिखिलमनीषितपूरणकरणदृढव्रतजगदम्बिकाकृता 'तथास्तु' इति वाक्यव्यञ्जिता प्रसन्नतानेन स्वल्पेनैवानेहसासादीति जनश्रुतिः । ततः प्रभृत्यप्येकघटिकान्तरालमुत्तमकाव्यपरिगणनीयशतपद्यनिर्माणसामर्थ्यभागभूत् । तथा च तत्कृतवैद्यजीवनगतपद्यम्—'रम्यं वामदृशां दृशां सुखकरं श्रीसप्तशृङ्गास्पदं स्पष्टाष्टादशबाहु तद्भगवतो भर्गस्य भाग्यं भजे । यद्भक्तेन मया घटस्तनि घटीमध्ये समुत्पाद्यते पद्यानां शतमङ्गनाधरसुधास्पर्धाविधानोद्धुरम् ॥' इति । न केवलमेतावदेव, किंतु नानाविद्यापारावारपारीणतापि । तथा च तत्रैव—'आयुर्वेदवचोविचारसमये धन्वन्तरिः केवलं सीमा गानविदां दिवाकरसुधाम्भोधित्रियामापतिः । उत्तंसः कविताकृतां मतिमतां भूभृत्सभाभूषणं कान्तोक्त्याकृत वैद्यजीवनमिदं लोलिम्बराजः कविः ॥' इति । भोजराजसंलापपद्येनास्य तत्समयजीवनमवसीयते । तत्पद्यं यथा—'भो लोलिम्बकवे कुरु प्रणमनं किं स्थाणुवत्स्थीयते कस्मै भोजनृपाल बालशशिने नायं शशी वर्तते । किं त्वयोऽस्मि विभाति चास्तसमये चण्डद्युतेर्वाजिनः पादघाणमिदं जवाद्विगलितं खे राजतं राजते ॥' इति च । अथ प्राप्तभगवतीप्रसादोऽयमतिचमत्कृतिकारिकाव्यामृतधाराप्रसारशक्तिमान्मनोहरान्काव्यानेकानिबन्धान्निबबन्धेति । तत्र वैद्यके सुप्रसिद्धं वैद्यजीवनं नामैकम्, अपरश्च वैद्यावतंसो नाम । काव्येषु तु केवलमस्य महाविपश्चितो नन्दसद्मप्राप्तिमारभ्योद्धवसंदेशपर्यन्तं हरिलीलावर्णनपरं हरिविलासनामकमुपमोत्प्रेक्षाद्यलंकाररमणीयालंकारभूषितमेकमेव नातिप्रसिद्धं कोविदजनमनोविनोदक्षममुपलभ्यते॥" इति काशीविद्यासुधानिधौ (Vol. II. No.10) वेचनरामशर्मा.

१. 'कृपागृहम्' ख. २. 'आददानः' ख. ३. 'भरणीबभूव' घ.

अङ्घ्रिपल्लवरुचानुरञ्जिता रिङ्गतो भगवतो मुरद्विषः ।
अङ्गणेषु निचिताः सितोपलाः पद्मरागपदवीं प्रपेदिरे ॥ ५ ॥
परिस्फुरत्कैरवकोशकल्पः कृष्णस्य पाणौ नवनीतगोलः ।
नीतां श्रियं याचितुमाननेन समागतश्चन्द्र इवावभासे ॥ ६ ॥
भगवति यदुनाथे नन्दसद्मावतीर्णे
फलदलमुकुलश्रीः शाखिनां सर्वदासीत् ।
प्रतिदिनमधिकाभूद्गोधनानां समृद्धिः
क्षणमपि न बबाधे व्याधिराधिश्च कंचित् ॥ ७ ॥
सुकृतं किमकारि नन्दपत्न्या किमु नन्देन वयं न तत्प्रतीमः ।
विजहार जगद्गुरुर्यदङ्के नवपङ्केरुहलोचनो मुकुन्दः ॥ ८ ॥
मुहुरिति विलपन्ती कुत्र पुत्रः प्रयातो
द्रुतगति बहिरन्तः पर्यटन्ती समन्तात् ।
मरकतमणिमह्यां नाविदन्नन्दपत्नी
स्फुटमपि घनकृष्णं बालकृष्णं कदाचित् ॥ ९ ॥
कस्याश्चिदालिङ्गितबालकायाः प्रतिप्रतीकं प्रचुरोरसवायाः ।
कस्तूरिकाक्लिप्तमिव प्रकामं वक्षो मृगाक्ष्याः क्षणमात्रमासीत् ॥ १० ॥
मृगमदतिलकोऽस्य क्रीडतो घर्ममध्ये
व्यरुचदमलसान्द्रस्वेदबिन्द्वन्तरस्थः ।
उडुभिरिव निरुद्धो वक्रनक्षत्रभर्तुः
कलितगिलनशङ्कैः सैंहिकेयः समन्तात् ॥ ११ ॥
नन्दश्चिदानन्दमयस्य तस्य मायानुरूपस्य परावरस्य ।
आलिङ्गनाद्यत्सुखमापदन्तस्तज्ज्ञानभाजोऽनुभवन्ति नान्ये ॥ १२ ॥
कन्दुकद्वयमतीव सुन्दरं राधिकोरसि निरीक्षितं मया ।
रन्तुमम्ब मम तत्प्रदीयतां स ब्रुवन्निति बहूनहासयत् ॥ १३ ॥

---

१. 'निहिताः सिताः शिलाः' ग. २. 'माधवायाः' ग. ३. 'रसनिर्भरायाः' ख. ४. 'इसम्' ख.

निर्गुणोऽपि गुणिनाममतिप्रियैः स्वैर्गुणैर्जगदिदं चराचरम् ।
मोहयन्विनयते स गोकुले पुण्यकृन्नयनगोचरो हरिः ॥ १४ ॥
गोकुलान्निकट एव देवकीबालकौ त्रिभुवनैकपालकौ ।
लीलयानुचरवर्गवत्सलौ वत्सलौल्यवशतो विचेरतुः ॥ १५ ॥
शयनाशनासनसमागमगीतं कुरुतः स कामकमनीयशरीरौ ।
सततं सहैव वसुदेवकिशोरौ वपुरेव भिन्नमुभयोर्न तु चेतः ॥ १६ ॥
अश्विनाविव नितान्तसुन्दरौ चापलानुकृतबालकुञ्जरौ ।
तौ परस्परवियोगकातरौ भ्रातरौ सह सदा विजह्रतुः ॥ १७ ॥
पूतना हरिवधार्थमाययौ प्राप सैव वधमात्मनस्ततः ।
यः परस्य विषमं विचिन्तयेत्प्राप्नुयात्स कुमतिः स्वयं हि तत् ॥ १८ ॥

धरस्य धरणात्करे वनहुताशनप्राशना-
दरिष्टबकधेनुकप्रभृतिदानवध्वंसनात् ।
इहाद्भुतमनुक्षणं शिशुरसौ सरोजेक्षणः
क्षणक्षणविलक्षणो लचितलक्षणो व्यातनोत् ॥ १९ ॥

अपि तनुतरमूर्तिर्भूतनाथप्रभावो
दधदपि च शिशुत्वं पूतनाघातकारी ।
अपि परयुवतीप्सुः पूतनामप्रबन्धो
मुदमतनुत पित्रोः पूतनारिः स्वसूक्तैः ॥ २० ॥

उज्झितस्वतनया व्रजस्त्रियः कृष्णमेव रमयांबभूविरे ।
चित्रमत्र किमु कुर्वते सदा तत्स्पृहामपि गतस्पृहा जनाः ॥ २१ ॥

द्वार्दत्तदृष्टिरसकृन्मधुसूदनोऽसौ
तत्र प्रविश्य बुभुजे नवनं समस्तम् ।
स्नानादिकर्मकरणाय कलिन्दकन्यां
यान्मतंगजगतासु गतासु तासु ॥ २२ ॥

---

१. 'अगौणैर्' ख. २. 'नीतिकामकमनीयशरीरौ' ख. ३. 'समागम' ख. ४. 'नन्दनुभौ मनुजेन्द्रौ' ख. ५. 'अद्य गोकुलमिदं किमु चित्रं' ग. ६. 'स्नानोचितान्' ग.

समीक्ष्य समुपागतां सपदि सद्मनः स्वामिनीं
पलायनपरायणः स नवनीतचोरोऽभवत् ।
रुषा तमनुयायिनी न भवति स धर्तुं क्षमा
घनस्तनपरिश्रमादलसगामिनी कामिनी ॥ २३ ॥
असकृत्प्रनर्तितकराम्बुरुहस्त्वदुपद्रुतो द्रुतमुपेत्य रुषा ।
इति नन्दगोपगृहिणीमवदद्व्रजवासिवामनयनानिकरः ॥ २४ ॥
अनुचितानि वचांसि वदत्यपि क्षिपति वक्षसि चैष लघूपलान् ।
अपि च पश्यति कैतवचक्षुषा गतनयस्तनयस्तव सर्वथा ॥ २५ ॥
अस्मासु यातासु बहिः प्रयत्नाद्गृहान्तरं तस्करवत्प्रविश्य ।
सुतस्त्वदायं नवनीतदुग्धदधीनि भुङ्क्ते व्रजपालपत्नि ॥ २६ ॥
दत्ते सखिभ्यश्च बहिःस्थितेभ्यः पात्राणि सर्वाणि भिनत्ति पश्चात् ।
अन्यायमेतादृशमातनोति सदा मदान्नैष बिभेति किंचित् ॥ २७ ॥
एवं गोपीवाक्यमाकर्ण्य सम्यक्ताः प्रत्याह प्रेमपूर्वं यशोदा ।
एतत्सर्वं मन्निमित्तं क्षमध्वं यूयं यात स्वगृहं भोः सुवृत्ताः ॥ २८ ॥
इत्थं प्रसादं गमितासु सद्यो गृहं गतासु व्रजवल्लभासु ।
सुतं समालिङ्ग्य भयावलीनं स्वानन्दपीनं जननी जगाद ॥ २९ ॥
किमिति गच्छसि वत्स परालयं स्वगृह एव रमस्व निरन्तरम् ।
तव ददे मसृणानि दधीन्यहं गतपयांसि पयांसि बहून्यपि ॥ ३० ॥
इति तव चरितं निशम्य दुष्टं दुरितपथैकपराङ्मुखो व्रजेन्द्रः ।
अयि सुत यदि ताडनं विदध्यादहह तदा किमिदं चरीकरीमि ॥ ३१ ॥
अतिदुष्टकंसनृपसाध्वसयोगादिति शिक्षितोऽपि बहुधा जनयित्र्या ।
पुनरप्यचूचुरदसौ नवनीतं न परोदितं हि कलयन्ति कुमाराः ॥ ३२ ॥
सततमखिलबालाः कर्मनामान्यगाय-
न्प्रतिभवनममुष्य श्रीपतेरेव तावत् ।

---

१. 'अये' ख. २. 'वक्षसिजेषु' ग. ३. 'प्रविष्टः' ख. ४. 'कंचित्' ग. ५. 'क्षम्यतां प्रार्थयेऽहं' ग. ६. 'मजगामिनीषु' ग. ७. 'जगाद किंचिज्जननी अनाप्त्या' ख. ८. 'अपि' ख. ९. 'किमहं' ख. १०. 'मसृणान्यचूचुरदसौ भयहीनो' ग.

अमृतममृततुल्यं शैवलिन्या हि मुक्त्वा
विदधति सुधियः किं कूपपानीयपानम् ॥ २३ ॥
नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
त्रैलोक्यकौतुककरं क्रियते स्म काव्यं
लोलिम्बराजकविना कविनायकेन ॥ २४ ॥

इति श्रीमत्सूर्यपण्डितकुलालंकारहरिहरमहाराजद्योतितलोलिम्बराजविरचिते हरिविलासे महाकाव्ये बालक्रीडावर्णनं नाम प्रथमः सर्गः ।

## द्वितीयः सर्गः ।

नन्दः स्वनन्दनमवेक्ष्य वयोविशेष-
संशोभमानवपुषं बहुयुक्तियुक्तः ।
वृन्दावने बहुलबालतृणाभिरामे
रामेण सार्धमव गास्तनयेत्यभाणीत् ॥ १ ॥
ततः पुरस्कृत्य समग्रगोधनं कलिन्दकन्यातटकाननस्थलीम् ।
प्रभातकाले सखिसंघसंवृतः समाजगामागमदुर्गमो हरिः ॥ २ ॥
विदलिताखिलपान्थपरिश्रमं सुवयसां वयसां कलकूजितैः ।
प्रविशति स्म वनं पशुजीवनं बहुबलेन बलेन समं हरिः ॥ ३ ॥
वेणीव भूमृगदृशः स्फुटफेनबिन्दु-
श्रेणीच्छलेन धृतजातिलताप्रसूना ।
आलोकिता सखिजनेन समं मुहूर्तं
निःपक्ष्मपातममुना यमुना पुरस्तात् ॥ ४ ॥
तदवलोक्य विलासकलोचितं पवननर्तितवल्लि समन्ततः ।
स्तवकचारुविचित्रमहीरुहं प्रचुरमार रमारमणः सुखम् ॥ ५ ॥
तडिदम्बरमम्बुदाभिरामं कृतकर्णाभरणं मयूरपिच्छैः ।
अधराधरशालिवंशवाद्यं जगदाद्यं परमं महश्चकासे ॥ ६ ॥
उपरि मुरलिकायाः प्राप्तबिम्बाधरायाः
करकमलनखास्ते बालकृष्णस्य तस्य ।

१. 'शोभायमान' ख. २. 'लता' ख. ३. 'समस्त' ख. ४. 'मधुराधर' ख.
५. 'परमं गोपगतं' ग.

निविडमिव निखाता दन्तवस्त्रांशुमाला-
मिलनवहलरागाः पद्मरागा विरेजुः ॥ ७ ॥
अपि प्रचुरलालसा मधु मधुव्रता नापिब-
न्मुखात्तमपि नूतनं तृणचरास्तृणं नाचरन्।
मुरारिमुरलिस्वरामृतरसैकबद्धादरा
न हंसपिककेकिनः किमपि कूजितं चक्रिरे ॥ ८ ॥
विभुवंशरवश्रवणप्रवणा वुभुजुर्न भुजंगभुजो भुजगान्।
निकटेऽपि गतागतकेलिकरान्मकरान्न सरःसु बकप्रकराः ॥ ९ ॥
गोदोहनादिगृहकृत्यकृतादराणां
नन्दव्रजाम्बुजसहोदरलोचनानाम्।
वेणुस्वनो यदुपतेः श्रुतमात्र एव
वृन्दावनाधिगमनोत्सुकतां व्यतानीत् ॥ १० ॥
प्रेम नात्मतनयस्य न क्षपा भ्रातृभर्तृपितृजापि न त्रपा।
भीतिरप्यहह मार्गभोगिनां नैव तद्गमनविघ्नमातनोत् ॥ ११ ॥
प्रस्थिता मणिसुवर्णभूषिताश्चर्चिता मृगमदैर्मृगीदृशः।
अङ्घ्रिमर्दितमहाभुजंगमा जंगमा इव लता बभासिरे ॥ १२ ॥
तुङ्गपीनकुचकुम्भशोभिताद्वक्षसश्च्लितचैलपल्लवाः।
वेणुनादहृतचित्तवृत्तयश्चित्रवच्चलदृशोऽवतस्थिरे ॥ १३ ॥
आसामपि प्रेम परं किमात्मनि मनोधिनाथेऽप्यतिबोद्धुकामः।
मायामनुष्यः सहसा तदक्षणामगोचरो गोकुलपालकोऽभूत् ॥ १४ ॥
भगवति सहसैवान्तर्हिते संज्वरार्ता
च्युतमतिरतिरस्यान्वेषणार्थे समन्तात्।
शिव शिव वनमध्ये गोक्षुरक्षत्रचार-
क्षतचरणतला स्त्रीमण्डली हिण्डते स्म ॥ १५ ॥

१. 'प्रवणो न भुजंगधुनो बुभुजे भुजगान्' ख. २. 'मकरानपि नैव बकप्रकराः' ख. ३. 'स्मृतमात्र' ख. ४. 'अभिगमनो' ख. ५. 'संभाव्य सौभाग्यमदं मनःस्थमन्तर्गतः सर्वचराचरस्य। अनङ्गरूपः क्षणमङ्गनानामगोचरो' ख. ६. अथ हृदि विदधाना विस्मयस्यास्तारं गममतिश्रुति' ग.

पप्रच्छ काचन वधूरिति कृष्णसारं
कृष्णः सरोजनयनो भवता न दृष्टः।
तस्या विलोचनविलासपराजितोऽसौ
दुःखीव किंचिदपि नोत्तरयांचकार ॥ १६ ॥

भो भो भूरुह ते दिशो दश गताः शाखाः शिरश्चाम्बरं
गोपः कोऽपि तमालकोमलरुचिः कच्चिन्न दृष्टस्त्वया।
एवं ताभिरुदाहृते बत मुहुर्वक्तुं वचोऽनीश्वरो
मूर्ध्ना वायुचलेन चन्दनतरुः प्रत्युत्तरं दत्तवान् ॥ १७ ॥

अयि तुलसि नमस्ते मुञ्च मौनं कृपातः
कथय कथय कृष्णः क्वाधुना वर्ततीति।
भवति परमदुःखं तद्वियोगाग्निना मे
करुणमिति मुहुस्तां गोपिका काप्यवादीत् ॥ १८ ॥

बर्हं गृहीतुमवतंसकृतेऽतिकान्तो
प्राप्तो भवेद्विभुरसौ विदितस्त्वयैव।
तत्कथ्यतां सुभग केन पथा प्रयातः
काचिन्मयूरमिति गोपगृहिण्यपृच्छत् ॥ १९ ॥

तदवधि तरलाक्ष्यो लक्ष्यते यः समन्ता-
दिह वसति स धूर्तः शीघ्रमायात यूयम्।
असकृदिति वदन्ती कामिनी कापि बालं
बत कमपि तमालं गाढमालिङ्गते स्म ॥ २० ॥

यो वासो यमुनातटे विरचितो येन द्विजास्तोषिता-
श्छायापल्लवसंश्रयैर्हिममरुद्दर्पादि सोढं च यत्।
अत्रैवास्य फलं बभूव तपसा किंचित्कुचानम्रया
तन्वङ्ग्या यदयं स्वयं दृढतरं दोर्भ्यां समालिङ्गितः ॥ २१ ॥

---

१. 'वर्ततीति' ख. २. 'अन्विकं वे' ख. ३. 'तटभुवि' ख. ४. 'ये न' ग. ५. 'सकलं' ख.

अनवेक्ष्य तमीश्वरं समन्ताद्वचनागोचरदुर्दशाः स्त्रियस्ताः।
यमुनापुलिनं प्रति प्रयाता मधुमत्ता इव भूतले निपेतुः ॥ २२ ॥

अथ ता मदनानलेन दग्धा दिनदीनेन्दुमुखीर्दयासमुद्रः।
समजीवयदच्युतः समस्ताः सुदतीः स्वसमागमामृतेन ॥ २३ ॥

ताभिर्युक्तः पद्मपत्रेक्षणाभी राकारात्रिस्वामिरम्याननाभिः।
तत्र प्रीत्या पुष्पधन्वेव साक्षाद्रासारम्भं चक्रपाणिश्चकार ॥ २४ ॥

सकलरागविचित्रविचारवत्सहजगाननिबद्धमृगीगणः।
नटवदुत्सवकृद्व्रजवल्लवो व्रजगतो जगतो विभुराबभौ ॥ २५ ॥

नवकुङ्कुमलिप्तविग्रहः श्रवणन्यस्तसुवर्णचम्पकः।
विवरावलिनृत्यदङ्गुलिर्मुरलिं वादयते स माधवः ॥ २६ ॥

रदच्छदस्फूर्जदलक्तरागा कस्तूरिकापङ्ककृताङ्गरागा।
राधा तदालोकनसानुरागा श्रीरागरागालपनं चकार ॥ २७ ॥

तद्रासमण्डलविलोकनकौतुकेन
देव्यो ययुस्त्रिदशवर्त्म सुवर्णवर्णाः।
उद्वीक्ष्य ता दृढमिदं निरटङ्कि लोकै-
रभ्रे विनापि तडितः क्वचिदुल्लसन्ति ॥ २८ ॥

द्रष्टुमभ्यागतं शार्ङ्गिणो विभ्रमान्भासयन्त्या नभोमण्डलं सर्वतः।
दुर्लभोरुश्रिया क्लृप्तकेलिक्रियारम्भया रम्भया रम्भयारं भया ॥ २९ ॥

तत्र त्रिनेत्रादिसुराः स्वपत्रैः सर्वे समीयुर्जवनैर्मनोवत्।
पश्चाद्गणेशोऽप्यतिकुन्थदाखुस्तदान्तरिक्षे नगरभ्रमोऽभूत् ॥ ३० ॥

निरयस्य निदानमुक्तमार्यैः कुलटात्वं मनसापि सुन्दरीणाम्।
अमृताय बभूव तत्तु साक्षाद्व्रजसारङ्गदृशां हि चित्रमेतत् ॥ ३१ ॥

रूपविभ्रमगुणोदयेन का मेनकामपि न गोपिकाजयत्।
केवला तदपि जीविताधिका राधिका भगवतो हरेरभूत् ॥ ३२ ॥

---

१. 'मौग्ध्यमावहन्त्यः' ख. २. 'स्वीय' ख; 'सौख्य' ग. ३. 'विचारवित्' ख. ४. 'व्रजवल्लभा' ख. ५. 'आर्यैः' ख. ६. 'व्रज सत्पदशा विचित्र' ग.

इति सुतनुसमूहैर्ग्राम्यवल्लभकेलिः
पथि सुरभिरजोभिर्लुप्तनिःसारहेलिः ।
यश इव शशिशुभ्रं श्रीपतिः सानुगोऽसौ
नवजलधरधामानन्दधामाससाद ॥ ३३ ॥
अपि परयुवतीप्सुः पापसंस्पर्शशून्यो
दधदपि मनुजत्वं सर्वदेवैकनाथः ।
अपि तनुतरमूर्तिर्व्याप्तलोकत्रयोऽसौ
नवजलधरधामा नन्दधामाससाद ॥ ३४ ॥
नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
काव्यामृतं हरिविलास इति प्रसिद्धं
लोलिम्बराजकविना कविनायकेन ॥ ३५ ॥

इति श्रीमत्सूर्यपण्डितकुलालंकारहरिहरमहाराजयोनितलोलिम्बराजविरचिते
हरिविलासे महाकाव्ये रासक्रीडावर्णनं नाम द्वितीयः सर्गः ।

---

तृतीयः सर्गः ।

इत्थं विधायाविरसेन रासक्रीडां स वृन्दावनमध्यदेशे ।
इच्छाविहारी सह गोपगोभिर्गोवर्धनं गोधरमाजगाम ॥ १ ॥
तदवेक्षणलोललोचनं जगदानन्दकरं जगद्गुरुम् ।
तमुवाच विचारचतुरश्चतुरं वाक्यमिदं हलायुधः ॥ २ ॥
विरचयन्ति विहारनिहान्वहं प्रणयिनीजनरञ्जितमानसाः ।
रुचिरचित्रविहंगमवारिजावृतवनेषु वनेषु वनेचराः ॥ ३ ॥
अनुभवति वियोगं नात्र कोकः कदाचि-
त्कलयति सह सख्यं चम्पकैश्चञ्चरीकः ।
न विरमति विकासो नीरजानां रजन्यां
जनयति वैरं नित्यं चन्दनः पुन्नयोगात् ॥ ४ ॥

---

१. 'आजगाम' ख. २. 'ऐश्वर्यधुरंधर(भिरे? ) एव यन्त्रम्' ख. ३. 'लोचन' ख.
४. 'जनयित्रं' ख.

तुङ्गत्वं नितरां निरीक्ष्य सहजं सौभाग्यमप्यद्भुतं
दिव्यानस्य मणींस्तथा प्रतिभटान्दिग्दन्तिनां दन्तिनः।
अस्यानन्यसमस्य हन्त गिरयो लज्जाभराद्दुस्तरा-
न्मैनाकप्रमुखा निपेतुरुदधौ ये निस्त्रपास्ते स्थिताः॥ ५॥

अमरचमरकेशी शश्वदम्भोविहार-
त्रुटितललितहारस्रस्तमुक्तासमूहैः।
मधुकरकृतगानं पद्मखण्डेष्वखण्डं
सरिदुदयमगाधं गाधितां यात्यमुष्मिन्॥ ६॥

मध्यशालिनि सुपर्ववर्त्मनः पार्वणे रजनिजीवितेश्वरे।
भूभृतामयमधीश्वरोऽद्भुतं छत्रयुक्त इव शोभतेतराम्॥ ७॥

मुञ्चन्मदं निर्झरकैतवेन जेजीयतेऽसौ करिराजरूपः।
हेमाद्रिमुख्या गिरयः समस्ताः शावत्वमेतस्य विडम्बयन्ति॥ ८॥

सहकुटुम्बमिहागताः कदाचिज्जलहीने सति मानसे समस्ताः।
श्रमनुत्सु सरःसु राजहंसाः कलहंसाश्च मनोरमा रमन्ते॥ ९॥

इह प्रतिवनं मदाम्बुदिरकालकालं विना
नटप्रतिभटः सदा शिखियुवा नरीनृत्यते।
द्विपाधिपविदारणारुणनखाग्रसंत्रासकृ-
न्मृगाधिपभयंकरी न न दरी दरीदृश्यते॥ १०॥

इतस्तत इहार्थिनां प्रियपरम्परापूरणा-
ज्जयन्ति जगतीरुहः सुरतरुद्रुहस्तत्क्षणात्।
हरन्ति च शुकाः स्फुरत्प्रथमपल्लवालीरुचः
सुधामधुरबन्धुरध्वनिमुचः शुचः सुव्रवत्॥ ११॥

समग्रऋतुसंपदा सततसंवृतैः सर्वतः
सुरैः सह सुराङ्गनावलिरिहैव संतिष्ठते।
सुरैरपि न सर्वथा सुभगकंदरं मन्दरं
हरेरपि न चासरत्कनकमन्दिरं मन्दिरम्॥ १२॥

---

१. 'रम्याश्चापि' ख. २. 'पूरणा जयन्ति' ख. ३. 'न च स्मरति तन्महामणिगणप्रभाभास्करं प्रसन्नता कन्दरप्रकरमन्दिरं मन्दिरम्' ख.

ये ये नृपाः प्रतिनृपालमहाभयेन
नानासमृद्धिसुभगानि पुराण्यमुञ्चन् ।
ते ते तपस्विन इवात्र निषेव्यमूल-
कन्दोदकानि समयं गमयन्ति तावत् ॥ १३ ॥

क्रीडागृहन्ति लवलीलतिकानिकुञ्जा-
स्तल्पन्ति बालमृदुलारुणपल्लवानि ।
भोगाः प्रसुप्तफणिनामुपबर्हणन्ति
मञ्चन्ति चात्र दृषदः कुलटाजनानाम् ॥ १४ ॥

नृपयुवतिकुचश्रीतस्करे कुम्भयुग्मे
दिनदलरवितप्ते प्रत्यहं प्रक्षिपन्ति ।
इह न कति करीन्द्राः पुष्करालंकृतायां
सरिति किमपि पीत्वा पुष्करैः पुष्कराणि ॥ १५ ॥

जलदैर्जलधिभ्रमादुपेतैर्जलमादातुमिव द्विपैर्विभान्ति ।
इह सालमिलिन्दमीनबालाबककादम्बकदम्बकास्तडागाः ॥ १६ ॥

अष्टापदद्रुसुमनःसुरभीकृतेषु
क्रीडावनेषु शिवयोः स्थितयोर्विनोदात् ।
अर्णोरुहासनसुतः कलहप्रियोऽत्र
भीतिं करोति महतीं महतीरवेण ॥ १७ ॥

अस्मिन्कदम्बकलिकाकलितावतंसा
गुञ्जावलीललितपीनपयोधराग्रा ।
दृष्टैव कस्य वशिनो विषयानुरक्तं
चित्तं चिरं वनचरी न चरीकरीति ॥ १८ ॥

इत्थं शृण्वंस्तस्य वाणीविलासान्पश्यन्रत्नश्रेणिशोभाविशेषान् ।
प्रीतिं प्राप्तो गोदुहां चक्रवर्ती मन्दं मन्दं शैलमध्यारुरोह ॥ १९ ॥

१. 'कुटटाङ्गनानाम्' ख. २. 'तपतपनमहोभिस्तापिते कुम्भयुग्मे युवतिकुचयुगश्रीधारिणि प्रेरयन्ति' ख. ३. 'इह कति न करीन्द्राः' ख; 'इह मदवदिभेन्द्राः' ग. ४. इमौ श्लोकौ ख-ग-पुस्तकयोर्न वर्तेते. ५. 'दृष्ट्वैव' ग. ६. 'विषयानुरक्तम्' ख. ७. 'अभ्यारुरोह' क.

अलंकृते पुण्यपयःप्रवाहैर्विश्रान्तिदानोद्यतवृक्षवर्गे ।
सिद्धाश्रिते श्रीपतिरित्वित्तवृत्तिस्तस्मिन्प्रसादोदयमाससाद ॥ २० ॥
तत्राभिरामं नवनीरदाभो विराममासाद्य सुखीबभूव ।
गाश्चारयंश्चारुतृणस्थलीषु क्रीडामकार्षीदथ नन्दसूनुः ॥ २१ ॥(युग्मम्)
अथ तस्य विधातुमर्चनं रुचिराभिः सुमनःसमृद्धिभिः ।
गिरिराजममुं मनोरमं मधुमुख्या ऋतवः समाययुः ॥ २२ ॥
आरूढो मलयानिलद्विपवरं युक्तो विलासानुगैः
पीतः पुष्पविलोचनैर्नवलतापौराङ्गनानां जनैः ।
अभ्राभ्यद्वनपत्तने मधुमहीपालस्ततः कोकिला-
लीलालापमिलद्भ्रमद्भ्रमरिकाभाङ्कारभेरीरवैः ॥ २३ ॥
पुष्पाणि प्रथमं ततः प्रकटिताः स्वान्तोत्सवाः पल्लवाः
पश्चादुन्मदकोकिलाकलकलनाकोलाहलाः कोमलाः ।
इत्थं प्रादुरभूत्प्रविश्य परितः प्राज्यप्रमोदप्रदः
प्रोद्दामद्रुमराजिराजितवनस्थल्यामृतुः क्ष्मापतिः ॥ २४ ॥
प्रसूनकलिकाकुलैः किसलयैः करस्पर्शिभिः
स्फुरन्मधुमदभ्रमद्भ्रमरकोकिलकूजितैः ।
इति क्रमसमुद्गतैरुपवनावलीमण्डली-
ममण्डयदिव प्रियामृतुवसुंधरावल्लभः ॥ २५ ॥
सुहृदस्तरुणीनखक्षतानां प्रतिपक्षाः पथिकाङ्गनाजनानाम् ।
दहनद्युतिदस्यवः समन्ताद्विपिने किंशुककुड्मला विरेजुः ॥ २६ ॥
किंशुकक्षितिरुहां विलसन्तः कुड्मलाः कुटिलतां कलयन्तः ।
पान्थवारणविदारणताम्राः कामकेसरिनखा इव रेजुः ॥ २७ ॥
आयाति यावन्मधुरेष तावद्वनस्थलीप्रोषितभर्तृकासीत् ।
अभ्यागतेऽस्मिन्मदनस्पलक्ष्मीः सौरभ्ययुक्ता तिलकं बभार ॥ २८ ॥

१. एतत्पूर्वम् 'स ततो विचरन्नितस्ततो बलभद्रेण समं शनैः शनैः । करकङ्कणवद्वसुंधरातटमालोकयति स्म माधवः ॥' इति श्लोकः ख-पुस्तकेऽधिकः. २. 'तत्र' ख. ३. अयं श्लोकः ख-ग-पुस्तकयोर्नास्ति. ४. 'गणैः' ख. ५. 'कोलाहलः कोमलः' ख. ६. 'उपेत' ख. ७. 'वनक्षोणीमृतुक्ष्मापतिः' ख. ८. इमौ श्लोकौ ख-ग-पुस्तकयोर्न स्तः.

कामकेलिकलिकंसमाधवे माधवे वनमुपागते चिरात् ।
वाग्विलाससजितमत्तकोकिलाः कोकिलाः कलरवैर्विजह्रिरे ॥ २९ ॥
वारस्त्रीव वनस्थली नवनवां शोभां वमाराव्हं
पान्थान्पीडयति स्म तस्कर इव क्रूरैः शरैर्मन्मथः ।
शृङ्गारः सगुणः क्षमापतिरिव प्राप प्रतिष्ठां परां
रात्रिः स्वीकुरुते स्म मुग्धललनालज्जेव कार्श्यं क्रमात् ॥ ३० ॥
उपवनतरुनृत्याध्यापने लब्धवर्णो
विरचितनवकेलिः पद्मिनीकामिनीभिः ।
प्रियसुहृदसमेषोरायवो योगियोग-
स्थितिविदलनदक्षो दक्षिणो गन्धवाहः ॥ ३१ ॥
पथिकजननयार्थं चन्दनाद्रेः प्रतस्थे
कनककमलधूलीदिग्वितानं वितन्वन् ।
सरसमरविशेषश्रान्तशातोदरीणां
प्रशमितकुचकुम्भस्वेदनीरः समीरः ॥ ३२ ॥
प्राप्तः प्राज्यमिव श्रमं जलजिनीसौरभ्यभारं वह-
न्नुद्दामस्तबकानमन्नवलतालक्ष्मीमिवालोकयन् ।
स्वीकुर्वन्मदमन्थरानिव गतेर्वामभ्रुवां विभ्रमा-
न्मन्दं मन्दमुपाजगाम पवनः पाटीरवाटीतटात् ॥ ३३ ॥
अतिमन्दचन्दनमहीरुहवातं स्तबकाभिरामलतिकातलजातम् ।
अपि तापसानुपवनं मदनार्तान्मदमञ्जुगुञ्जदलिपुञ्जमकार्षीत् ॥ ३४ ॥
कुपितापि मनःपतिना सह का सहकारविलोकनजाततरसा ।
तरसा रमते स्म न हा रमणी रमणीयतनुः सुतनुः सुरभौ ॥ ३५ ॥
प्रस्फुरत्प्रचुरबालपल्लवा वीरुधश्च तरवश्च शाशिरे ।
व्रीडिता इव कुसुम्भवारिभिः काननिम्नसमये समागते ॥ ३६ ॥
कति कति न वसन्ते पल्लवः शालिनो वा
विलसदपनुमनोभिः शोभमाना बभूवुः ।

१. 'कलन' स. २. मत्वा श्लोकः स-ग-पुस्तकयोर्नास्ति. ३. 'नदिना' स.

तदपि युवजनानां प्रीतये केवलोऽभू-
दभिनवकलिकालीभारशाली रसालः ॥ ३७ ॥

अनुपमगुण एकः स्यान्महत्त्वस्य हेतु-
र्वत गुणगणगन्धैः कश्चिदर्थो न तावत्।
अतिशयवरवर्णनास्पदं प्राप भूभृ-
च्चतुरचतुरकान्ताकर्णयोः कर्णिकारम् ॥ ३८ ॥

रूपसौरभसमृद्धिसमेतं चम्पकं प्रति ययुर्न मिलिन्दाः।
कामिनस्तु जगृहुस्तदशेषा ग्राहका हि गुणिनां कति न स्युः ॥ ३९॥

अवलोक्य विलासवनस्थलीं न पथिकैः पथि कैः पतितं भुवि।
मैलयद्रुमसौरभमेदुरोदरसमीरसमीरितवल्लरीम् ॥ ४० ॥

बकुलकुलमिलन्मिलिन्दमाला-
मदकलकोकिलकूजितोदयेन।
अहनि नियमिनोऽपि तत्त्वचिन्ता-
च्युतमतयो मतयोपिता बभूवुः ॥ ४१ ॥

विकसति सहकारे स्फारसौरभ्यसारे
वहति धुतपटीरे मन्दमन्दं समीरे।
कलयति कलवाचं कोकिले साभिमानः
क्षणमपि न मृगाक्ष्या वल्लभो दुर्लभोऽभूत् ॥ ४२ ॥

कूजितानि कलयन्वनप्रियो न प्रियो विरहिणामजायत।
मन्मथाग्निरपि भस्मसादरं सादरं मुनिमनोऽम्बुजं व्यधात् ॥ ४३॥

विलासिभिरिवोन्मदै रचितरम्यगुञ्जारवैः
प्रसूनसुरभीकृतैर्विगलितश्रमास्तापसाः।
अशोकशिखरस्थितैः सुनयनान्वितैः षट्पदै-
र्निरन्तरनिषेवितामितमधौ मधौ रेमिरे ॥ ४४ ॥

---

१. अयं श्लोकः ख-ग-पुस्तकयोर्नास्ति. २. 'समवलोक्य' ख. ३. 'मलयजद्रुम' ख. ४. 'अहह' ख. ५. 'कोकिलोके च रुद्रः' ख. ६. 'त्रपाः' ख.

दत्ते जनोऽसौ खलु विद्यमानमविद्यमानं न तु कोऽपि तावत् ।
वियोगिनां पुष्पनमन्नशोकः शोकप्रदोऽभूदिति चित्रमेतत् ॥ ४५ ॥
जगौ विवाहावसरे वनस्थलीवसन्तयोः कामहुताशसाक्षिणि ।
पिकद्विजः प्रीतमना मेनोहरं मुहुर्मुहुः कूजितमन्त्रमादरात् ॥ ४६ ॥
आस्वादितं स्वादुमरन्दविन्दु स्वच्छन्दमिन्दिन्दिरसुन्दरीभिः ।
माकन्दपुष्पं प्रमदाजनस्य प्रमोदमामोदभरैरकार्षीत् ॥ ४७ ॥
वसन्तकाले पथिकैककाले स्फुलिङ्गमालेव वियोगिवर्गान् ।
उद्धूलिता तापयति स्म धूली धूलीकदम्बस्य समीरणेन ॥ ४८ ॥
पान्थानां प्रमदा इव प्रतिदिनं दैन्यं हृदिन्यो ययु-
ईश्यन्ते स्म दिगम्बरा इव वने पत्रोज्झिताः पादपाः ।
निःश्वासा इव दुःसहा विरहिणां वाता ववुः सर्वतः
पायंपायमिव प्रियाधररसं पाथं पपुः प्राणिनः ॥ ४९ ॥
रेजे पुष्पैर्ग्रीष्ममासाद्य मल्ली मल्लीं सद्यः संश्रयन्ते स्म भृङ्गाः ।
भृङ्गैस्तत्रारम्भि हर्षेण गानं गाने लौल्यं लेभिरे योगिनोऽपि ॥ ५० ॥
अपि च नभसि वीक्ष्य व्याप्तदिक्चक्रवालं
सजलजलदजालं प्राप्तहर्षप्रकर्षः ।
विहितविपुलबर्हाडम्बरो नीलकण्ठो
विमदमृदुलकण्ठो नाट्यमङ्गीचकार ॥ ५१ ॥
महीमण्डलीमण्डपीभूतपाथोधरोवर्षहर्षासु वर्षासु सद्यः ।
कदम्बे प्रसूनं प्रसूने मरन्दो मरन्दे मिलिन्दो मिलिन्दे मदोऽभूत् ॥५२॥
दृष्ट्वाडम्बरमम्बरे घनकृतं सौदामिनीनर्तकी-
नृत्यारम्भमृदङ्गमङ्गलरवं श्रुत्वा च तद्गर्जितम् ।
पुष्प्यत्पुष्पभरानताङ्गणतरुस्कन्धावसद्वायस-
क्वाणाकर्णनसोत्सवप्रियतमं पान्था ययुर्मन्दिरम् ॥ ५३ ॥

१. 'अविचित्रम्' ख. २. 'मनोरमम्' ख. ३. 'मङ्गलमन्त्रम्' ख. ४. 'इन्दीवर' ख. ५. अयं श्लोकः ख-ग-पुस्तकयोर्नास्ति. ६. 'पाथः' ख. ७. 'अथ नभसि निरीक्ष्य' ख. ८. 'मदमृदुकलकण्ठः' ख; 'मदनमृदुलकण्ठः' ग. ९. 'आरब्ध' ख.

अभिनववयवसश्रीशालिनि क्ष्मातलेऽस्मि-
न्नतिशयपरभागं भेजिरे जिष्णुगोपाः ।
कुवलयशयनीये मुग्धमुग्धेक्षणाया
मणय इव विमुक्ताः कामकेलिप्रसङ्गात् ॥ १४ ॥

एष्यन्त्यवश्यमधुना हृदयाधिनाथा
मुग्धा मुधा कुरुत मा विविधं विलापम् ।
इत्थं शशंसुरिव गर्जितकैतवेन
पाथोधराः पथिकपङ्कजलोचनाभ्यः ॥ १५ ॥

आकर्णितानि रसितानि यया प्रसर्प-
त्प्रद्युम्नराजरथनिःस्वनसोदराणि ।
उच्चै रणचरणनूपुरया पुरंध्र्या
क्षिप्रं प्रियैः कुपितयापि तयाभिसस्रे ॥ १६ ॥

अम्भोवाहमुरद्विषो निवसनं ध्वान्ताद्रिदिव्यौषधी
कंदर्पस्य विलासचम्पकधनुर्वर्षालतामञ्जरी ।
लेखा व्योमकपोपले विरचिता चामीकरस्य स्फुर-
द्धाम्नः पान्थविलासिनीजनमनःकम्पाय शम्पाभवत् ॥ १७ ॥

द्वैदयं विदधेऽध्वगवामदृशां गगनं गुरुतरपवदल्पतरम् ।
रसदम्बुधरं विलसच्चपलं चपलं चपलं चपलं च पलम् ॥ १८ ॥

तडिच्चपलचक्षुषां गगनरङ्गनृत्यक्रिया-
वशात्सुमनसश्च्युता इव नवाभ्रधम्मिल्लतः ।
दवाग्निजनितापदां क्षितिरुहां मुदं मेदिनी-
रजः प्रलयबिन्दवः सलिलबिन्दवस्तेनिरे ॥ १९ ॥

प्रणतिभिरपि पत्युः प्रार्थनाभिश्च सख्याः
क्षणमपि मनसस्ते मानिनी मानमौज्झत् ।
तमसमशरशस्त्रीभूतगानप्रकारः
फणिनमिव शिखण्डी किं न खण्डीचकार ॥ ६० ॥

१. 'प्रियम्' ख. २. इमौ श्लोकौ ख-ग-पुस्तकयोर्न स्तः. ३. 'न मनस्तः' ख.

वनसमयमहीभृत्पत्तनस्याम्बरस्य
त्रिभुवनपतिचापं गोपुरत्वं प्रपेदे।
अतिविरसवचोभिः प्राप्तपङ्काभिषेकाः
कुकवय इव भेकाः खेदयन्ति स्म लोकान् ॥ ६१ ॥

सद्मन्येव निरन्तरं निवसतिर्मित्राद्यनालोकनं
पन्थाः पङ्कसमाकुलः कलुषता वारां सदा दुर्दिनम्।
एवं यद्यपि दूषणानि तदपि स्वर्भूर्जनोल्लासकृ-
त्सस्योत्पत्तिनिमित्तैकगुणतः प्रावृट् प्रपेदे यशः ॥ ६२ ॥

वृद्धान्तिगेव विजहौ सरिदुद्धतत्वं
वेदान्तिनामिव मतं शुचि नीरमासीत्।
चन्द्रे प्रभा युवतिवक्र इवाद्भुताभू-
द्विद्वत्कवित्वमिव केकिरुतं न रेजे ॥ ६३ ॥

मधुर्मधुरितभङ्गीं भेजिरे हंसनादा-
स्तुहिनपटललीलां लेभिरे वारिवाहाः।
क्षितिरभवदपङ्का किं च रोलम्बमाला-
वलिललितनलिन्यः शैवलिन्यस्तदासन् ॥ ६४ ॥

स्फुटं स्फुटपलाशवत्सुभगभासि चञ्चूपुटे
विपाककपिशीकृताः कलममञ्जरीर्बिभ्रती।
बभौ दिवि शुकावलिः कुवलयच्छविर्जङ्गमा
स्वभावहृदयंगमा विबुधचापलक्ष्मीरिव ॥ ६५ ॥

चक्रे चण्डरुचा समं रणमसौ हेमन्तपृथ्वीपति-
र्ये ये तत्र धृताः करप्रतिभटास्ते तेऽमुना तत्क्षणात्।
कान्तानां कुचभूधरे निदधिरे मन्येऽहमेवं तदा
नो चेन्मन्दकरः कथं दिनकरस्तप्तश्च तन्वीस्तनः ॥ ६६ ॥

१. 'अपि' ख. २. 'जनाह्लादकृत्' ग. ३. 'वृद्धाङ्गनेव' ख. ४. 'मधुरिम' ख.
५. 'जिता दिवाकरकराः' ख.

तपनस्तपति स मन्दमन्दं ज्वलनोऽपि ज्वलति स किंचिदेव।
शरणं शिशिरेऽथ किं न यूनां युवतीनां कुचयुग्ममात्रमासीत्॥ ६७॥

संकलऋतुसमृद्धि तत्र भुक्त्वाभिरामां
समसमुदितचिह्नां तत्प्रभावोदयेन।
असितजलधिजायादिव्यदासीरसुभ्रू-
सिचयनिचयहारि ब्रह्मगोष्ठं प्रतस्थे॥ ६८॥

काले साध्यमयूखमुग्धमुदिरच्छेदाभिरामाम्बरे
गोपस्वामिनि गोकुलं प्रति गते गोधूलिभिर्धूसरे।
वत्सैर्मातृविलोकनोत्सुकतरैरारब्धशब्दं मुहु-
र्गोपा वंशजवेणुवादनपराः स्वं स्वं गृहं प्राविशन्॥ ६९॥

नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात्।
त्रैलोक्यकौतुककरं क्रियते स काव्यं
लोलिम्बराजकविना कविनायकेन॥ ७०॥

इति श्रीमत्सूर्यपण्डितकुलालंकारहरिहरमहाराजद्योतितलोलिम्बराजविरचिते हरिविलासे महाकाव्ये ऋतुवर्णनं नाम तृतीयः सर्गः॥

---

चतुर्थः सर्गः।

आकारणार्थं वसुदेवसूनोरक्रूरमक्रूरमुखं स्वभावात्।
तत्रान्तरे प्रेषयति स कंसो वीरावतंसो धृतदुर्विचारः॥ १॥
भावितद्वदनचन्द्रदर्शनप्रेमपूरपरिपूरितोदरः।
रामकृष्णपदपांसुपावनं प्राप गोकुलमसौ कुलोज्ज्वलः॥ २॥

---

१. 'किं च' ख. २. स्तनयुग्म' ख. ३. एतदनन्तरम् 'अथ सुखमनुभूय भूधरेऽस्मिन्नृतुनिकरेण विराजिते समन्तात्। निकटमुपगते सहस्ररश्मौ चरमगिरेर्व्रजमच्युतः प्रतस्थे॥ गोधनानि पुरतः समाययुर्गोदुहस्तदनु बर्हभूषणाः। रेजतुर्मुरलिकामनोहरौ तौ तदन्त्यगतौ नराविव॥ प्रापदस्तमयमुष्णदीधितिः कामिनीभिरसकृन्निरीक्षितः। धूलिधूसरतनुश्च सामजः प्राविशद्व्रजमसौ जगद्गुरुः॥' इति श्लोकाः ख-पुस्तकेऽधिकाः. ४. इमौ श्लोकौ ख-ग-पुस्तकयोर्न स्तः. ५. 'सून्वोः' ख. ६. 'यमतम यास्यन्' ख.

असंख्यगोसंख्यविराजमाने दीपक्रियासादरसुन्दरीके।
संवीक्ष्य नन्दस्य गृहे रमन्तौ मनोरमौ तौ रथमुत्ससर्ज ॥ ३ ॥

निगदितनिजनामा वैष्णवाग्रेसरस्तौ
रभसरभसयुक्तो विश्ववन्द्यौ ववन्दे।
प्रसृतभुजभुजाभ्यां गाढमालिङ्गितः स-
न्पुलक इव भवदुःखं नैव किंचिद्विवेद ॥ ४ ॥

नन्दस्तत्र तदैव तावदगमत्प्रेम्णा परेणान्वितो
बिभ्राणः पुलकान्ननाम शिरसा दोर्भ्यां च तं सस्वजे।
तत्पूजामकरोद्यथाविधि ततः सर्वोपचारान्वितां
पश्चाद्वाचमुवाच तापशमनीं द्राक्षासदृक्षाक्षराम् ॥ ५ ॥

कार्यं त्वद्गुणवर्णनं तदुचितं नैवैकवक्त्रस्य मे
कुर्वे स्वस्तवमप्ययुक्तमधुना युक्तस्तु किंचिद्विदः।
प्राप्ता पुण्यपरम्पराद्य महती पापं समग्रं गतं
धन्योऽहं धरणौ त्वदीयचरणौ दृष्टौ यदर्हन्मया ॥ ६ ॥

वचनमित्थमुदीर्य मनोहरं विरमति स्म पतिर्व्रजवासिनाम्।
तदनु तं निजगाद गदाग्रजः प्रियसुहृत्स्मितपूर्वमपूर्वभाक् ॥ ७ ॥

प्रशमयितुमधर्मं धर्मवृद्धिं विधातुं
त्रिभुवनपतिरास्ते त्वद्गृहे कृष्ण एषः।
अयमपि बलभद्रो भद्रकृत्सज्जनानां
तव महिममहत्त्वं किं वयं वर्णयामः ॥ ८ ॥

त्रिजगदुदयहेतू ब्रह्मरुद्रेन्द्रचन्द्रै-
रविदितमहिमानौ रामकृष्णाविमौ यत्।
कलितनरशरीरौ त्वद्गृहे गोचरौ स-
स्तव महिमसमृद्धिं किं वयं वर्णयामः ॥ ९ ॥

आलिङ्गितोऽसौ परमेश्वरेण रामेण पश्चात्परमादरेण।
स वैजयन्तिस्थितरेणुसार्धं कायं कृतार्थं मनुते स्म सर्वम् ॥ १० ॥

---

१. 'वसन्तौ' ग. २. ५-९ श्लोकाः ख-पुस्तके न सन्ति. ३. 'त्रिधीकमनोरमेण' ख. ४. 'हर्षाङ्कुरसंयुक्तविलोचनोऽसौ धन्यं वपुर्मानयति स्म सर्वम्' ख.

नन्देन पश्चात्परिपूजितोऽसौ दिव्यासनस्थो गलिताध्वखेदः ।
गोपाङ्गनाक्लेशकरं चिराय वक्ता स वाक्यं वदति स किंचित् ॥ ११ ॥

ईहागमनकारणं शृणु सखेऽधुना सादरं
हलाब्जहरिदर्शनोत्सुकतरोऽस्ति कंसश्चिरम् ।
इमौ नय तदन्तिकं त्वमसुरान्तकौ तत्प्रगे
मुहूर्तमतिसुन्दरं विजयवर्धनं वर्तते ॥ १२ ॥

नन्द ते तनुजदर्शनोत्सुकः कंसभूमिपतिरस्ति संततम् ।
तत्प्रगृह्य तनयावुभाविमौ सद्य एव मथुरा विलोक्यताम् ॥ १३ ॥

तन्निशम्य वचनं तदीरितं तापमाप परमं व्रजाधिपः ।
माधवस्तु मुदमापदुत्कटां दैत्यनिर्दलनसाधनोद्यतः ॥ १४ ॥

तस्येति वक्तुर्वचनावसाने व्रजेश्वरस्तं पुनराबभाषे ।
आत्मासि नस्त्वं भगवत्प्रियत्वात्कुर्मः प्रमाणं भवदुक्तमेव ॥ १५ ॥

उषसि यास्यति यादवनन्दनो मधुपुरीं प्रति कंसकृतादरः ।
इति निशम्य वचो विपदुःसहं निजगदुस्तमरातिमिव स्त्रियः ॥ १६ ॥

अक्रूर ते नामनि निश्चयेन वली बहुव्रीहिसमास एव ।
अस्माकमात्मानममुं यतस्त्वं कृतान्तवन्नेतुमुपागतोऽसि ॥ १७ ॥

कनककङ्कणकुण्डलमेखलामणिगणांश्च गृहाण सहस्रशः ।
अयि पवित्र परंतु मधुद्विषं मधुपुरीं प्रति मा नय सर्वथा ॥ १८ ॥

अयि नृशंस बलादबलाजनान्नयसि चेत्त्वमभीप्सितमात्मनः ।
द्रुतमिहानय पातकमन्यथा व्रजवधूवधजं भवतो भवेत् ॥ १९ ॥

इत्थं कथां कुर्वति तेन सार्कं कदम्बके बल्लवबल्लभानाम् ।
श्रीर्म्लानिमङ्गीकुरुते स तासां मुखैः समं यामवती वियोगात् ॥ २० ॥

प्रौढप्रतापनिलयस्य दिनेश्वरस्य
प्राणेश्वरस्य समुपागमनं विदित्वा ।

---

१. अयं श्लोकः ख-पुस्तके नास्ति. २. 'उद्धताम्' ख. ३. श्लोकोऽयं ख-पुस्तके नास्ति. ४. १९-२१ श्लोकाः ख-पुस्तके न सन्ति.

कृष्ण त्वदेकशरणा वयमत्र सर्वा
नार्यः सनीरनयना हरिमित्थमूचुः ॥ ३१ ॥
अत्रागमिष्याम्यहमाशु तावत्प्रयात यूयं गृहमिन्दुमुख्यः।
स इत्थमाश्वास्य वधूर्वचोभिर्मनोहरैर्विश्वपतिः प्रतस्थे ॥ ३२ ॥
सुकृतं सकलं समाप्तमासीदिति मन्ये व्रजवासिनां जनानाम्।
सुहृदाननीरजांशुमाली वनमाली मथुरां यतः प्रतस्थे ॥ ३३ ॥
आगताः कथमपि व्रजं प्रति प्राणनाथविरहाकुलीकृताः।
हन्त ता निजगृहेषु संस्थिताः संस्थिता इव सरोजलोचनाः॥३४॥
नापाठयन्मृदुगिरः शुकसारिकास्ता
नालालयंश्च नकुलान्पृथुकानिव स्वान्।
किंचाम्बुदध्वनिमुचो मुरजस्य नादै-
र्नानर्तयन्किमपि केलिकलापियूनः ॥ ३५ ॥
एषा सा यमुना तटे च तदिदं वृन्दावनं पावनं
क्रीडाकुञ्जगृहास्त एव सुमनःस्तोमाभिरामश्रियः।
तेनैकेन विना परंतु परमानन्देन गोष्ठौकसां
गाढोद्वेगगतौजसां किमपि हा प्रीतिप्रदं नाभवत् ॥ ३६ ॥
विरहहुतवहाकुलीकृतानां प्रतिदिवसं व्रजवामलोचनानाम्।
दिवसगणनयाङ्गुलीदलानां तनु तनु हन्त समग्रमग्रमासीत् ॥३७॥
अपि रजनिषु निद्रादैन्यशून्या दृगासी-
दहह दुरतिवाह्यो वर्षवद्वासरोऽभूत्।
यदुतिलकवियोगव्याकुलानां वधूनां
परभृतकृतजल्पः कालकल्पश्च जज्ञे ॥ ३८ ॥
हर हर विरहाग्नौ प्रौढिमानं प्रयाते
मलयजहरहाराहारसंसर्गसारात्।

---

१. 'सर्वदातः' क. २. 'इत्थं समादिश्य वधूरुदश्रूरुदभवीर्षो हरिरवचाट' ख. ३. श्लोकोऽयं ख-पुस्तके नास्ति. ४. 'प्रीतेः परम्' ख. ५. 'दूना' ख. ६. 'दुरति-वाह्यो' ख.

व्रजजनतरुणीनां ताम्रधाम्नां ललाम्नां
स्रगपि कुचयुगस्थाङ्गारतां गाहते स्म ॥ ३९ ॥

रतिनायकसायकप्रतप्तव्रजनारीनयनाम्बुसिन्धुदम्भात्।
प्रतिसद्म जगाम भानुकन्या किमु कृष्णस्य विलोकनोत्सुकत्वात्॥४०॥

अमृतं गरलं वदन्ति यद्द्विपजस्तन्मतमुत्तमं सखि।
वितनोत्यमृतद्युतिर्यतः परितापानिति काचिदब्रवीत् ॥ ४१ ॥

अगलन्वलयानि तत्करेभ्यस्तदनङ्गाग्निमिवाक्षमाणि सोढुम्।
शयनं च शयेषु तत्कपोलाः किमु कौशेशयसंशयादकुर्वन् ॥ ४२ ॥

प्रथमाक्षरवर्जितानि तासां भवनानि व्रजसुभ्रुवामभूवन्।
विषयप्रकरो यकारशून्यो न कदाचिच्च रतिर्विना विनासीत् ॥ ४३ ॥

न शैवलं शैवलिनीषु किंचिन्न पुष्करं पुष्करिणीषु तद्वत्।
न वा मृणालानि मृणालिनीषु स्मरप्रतप्तप्रमदोपचारात् ॥ ४४ ॥

चक्षुश्च्युतप्रचुरपुष्करबिन्दुवृन्दै-
रार्द्रीभवत्पृथुपयोधरभूधराग्राः।
मुक्ताफलैर्विदधिरे त्रिपुरारिपूजां
प्राप्तुं पुनः प्रियवधूं व्रजवारिजाक्ष्यः ॥ ४५ ॥

व्यापकोऽस्ति हरिरत्र नर्तको यद्व्रजान्मधुपुरीमपि यातः।
ताभिरम्बुधरबन्धुरकान्तिः सर्वदैव ददृशे स पुरस्तात् ॥ ४६ ॥

पुण्यान्यपुण्यान्यपि पुष्कलानि व्रजप्रियाणामिति तर्कयामः।
सर्वेश्वरस्याद्भुतहर्षहेतोर्योगो वियोगोऽपि बभूव यत्नात् ॥ ४७ ॥

आलिङ्गति स्तनयुगं हरिरादरेण
बिम्बाधरं पिबति वस्त्रमपाकरोति।
वंशीरवैर्नवनवैश्च मुदं ददाति
स्वप्ने कया न ददृशे मुदशीति शश्वत् ॥ ४८ ॥

---

१. 'कुचतटस्थाङ्गारताम्' ख. २. अयं श्लोकः ख-पुस्तके नास्ति. ३. 'अभूत्' ख.
४. 'विरमित' ख. ५. अयं श्लोकः ख-पुस्तके नास्ति.

कृष्ण त्वदेकशरणा वयमत्र सर्वा
नार्यः सनीरनयना हरिमित्थमूचुः ॥ ३१ ॥
अत्रागमिष्याम्यहमाशु तावत्प्रयात यूयं गृहमिन्दुमुख्यः ।
स इत्यमाश्वास्य वधूर्वचोभिर्मनोहरैर्विश्वपतिः प्रतस्थे ॥ ३२ ॥
सुकृतं सकलं समासमासीदिति मन्ये व्रजवासिनां जनानाम् ।
सुहृदाननणीरजांशुमाली वनमाली मथुरां यतः प्रतस्थे ॥ ३३ ॥
आगताः कथमपि व्रजं प्रति प्राणनाथविरहाकुलीकृताः ।
हन्त ता निजगृहेषु संस्थिताः संस्थिता इव सरोजलोचनाः॥३४॥
नापाठयन्मृदुगिरः शुकसारिकास्ता
नालालयंश्च नकुलान्पृथुकानिव स्वान् ।
किंचाम्बुदध्वनिमुचो मुरजस्य नादै-
र्नानर्तयन्किमपि केलिकलापियूनः ॥ ३५ ॥
एषा सा यमुना तटे च तदिदं वृन्दावनं पावनं
क्रीडाकुञ्जगृहास्त एव सुमनःशोभाभिरामश्रियः ।
तेनैकेन विना परंतु परमानन्देन गोष्ठौकसां
गाढोद्वेगगतौजसां किमपि हा प्रीतिप्रदं नाभवत् ॥ ३६ ॥
विरहहुतवहाकुलीकृतानां प्रतिदिवसं व्रजवामलोचनानाम् ।
दिवसगणनयाङ्गुलीदलानां तनु तनु हन्त समग्रमग्रमासीत् ॥३७॥
अपि रजनिषु निद्रादैन्यशून्या दृगासी-
दहह दुरतिवाहो वर्षवद्वासरोऽभूत् ।
यदुतिलकवियोगव्याकुलानां वधूनां
परभृतकृतनादः कालकल्पश्च मन्द्रे ॥ ३८ ॥
हर हर विरहाग्नौ प्रौढिमानं प्रयाते
मलयजहरहाराहारसंसर्गसारात् ।

१. 'धवंशजः' क. २. 'इत्थ समादिश्य वधूरुदश्रूदशमर्वाधो हरिरुदपाठ' ख. ३. श्लोकोऽयं ख-पुस्तके नास्ति. ४. 'प्रीतेः परम्' ख. ५. 'दूना' ख. ६. 'दुरति-वाहो' ख.

यज्ञादिकर्मैककृतादराणां गतागतप्राप्तिरवश्यमेव ।
त्वन्नाम नारायण ये स्मरन्ति तरन्ति ते संसृतिसागरं द्राक् ॥ ७३ ॥
अक्रूर इत्थं स्तुतिमीश्वरस्य श्लोकैरतिश्लोककरैरकार्षीत् ।
ततः प्रणामं स करोति यावत्तावत्त्रिलोकीतिलकस्तिरोऽभूत् ॥ ७४ ॥

आगत्य सूर्यतनयापयसः स तीर-
मावश्यकं सकलकर्म समाप्य सम्यक् ।
आनन्दविस्मयसमूहसमन्वितोऽन्त-
र्नत्वा तमादिपुरुषं रथमारुरोह ॥ ७५ ॥

भवविरक्तमना भगवत्प्रियो रविसुतासलिलाद्बहिरागतः ।
विहितसर्वविधिर्हृदि विस्मितो रथमथो विदितर्जुपथोऽभ्यगात् ॥ ७६ ॥

नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
काव्यं कृतं हरिविलास इति प्रसिद्धं
लोलिम्बराजकविना कविनायकेन ॥ ७७ ॥

इति श्रीमत्सूर्यपण्डितकुलालंकारहरिहरमहाराजयोतितलोलिम्बराजविरचिते हरिविलासे महाकाव्ये भगवद्वर्णनं नाम चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

अन्वितं वाजिभिर्वायुवद्वेत्वरैश्चामरैश्चारुभिः शोभितैः सर्वतः ।
श्रीपतेराज्ञया नोदयामास तं गान्दिनीनन्दनः स्यन्दनं सुन्दरम् ॥ १ ॥
दिव्यरत्नमयमन्दिरत्विषा निर्मितामितनभस्तलश्रियम् ।
तां जगत्पतिरिवामरावतीं पश्यति स मथुरां पुरीं पुरः ॥ २ ॥
अवलोकनलोलविलोचनयोर्यदुनन्दनयोर्नवयौवनयोः ।
पथि काचन काञ्चनचारुरुचिः प्रमदा प्रमदातिशयं विदधे ॥ ३ ॥

---

१. 'शिरसाभिरामं पुनः पुनः प्रेमसमुद्रमग्नः' ख.　२. श्लोकोऽयं ख-पुस्तके नास्ति.
३. 'त्रैलोक्यकौतुककर क्रियते स्म काव्यम्' ख.　४. 'संयुतम्' ख.　५. 'सत्वरैः' ख.
६. 'नोदयामास तं रामकृष्णान्वितम्' ख.　७. श्लोकोऽयं ख-पुस्तके नास्ति.

प्रतिक्षणभवत्कथाकलितकौतुकाः [1]श्लाघ्यतां
नयन्ति मतिमज्जना जनपते जनुः केचन ॥ ६५ ॥

जलजन्तुधृतो जले गजेन्द्रः[2] पशुरप्येष भवत्स्मृतिं चकार ।
सदसद्विदुरैरतस्त्वमेव स्मरणीयोऽसि विपत्सु विश्वबन्धो ॥ ६६ ॥

गृहं सुरसमृद्धिमत्प्रियतमा रमास्पर्धिनी
मतिर्गुरुगुरुत्ववद्वपुरनङ्गभङ्गप्रदम्[3] ।
यशः शशिवदुज्ज्वलं ज्वलनवत्प्रतापः प्रभो
समग्रमिदमाप्यते तव पदप्रसादोदयात् ॥ ६७ ॥

भवज्वरनिवृत्तये पतितपावन त्वत्पद-
प्रवालमिदमौषधं हृदि सकृत्सुधीर्धारयेत्[5] ।
[4]अपि प्रियतमाजनाननिरीक्षणं वर्जये-
द्वसेच्च विजने वने फलदलाम्बु संसेवयेत् ॥ ६८ ॥

पदाम्भोरुहाम्भो दधाति त्वदीयं महेशोऽपि साक्षात्सदा मस्तकेन ।
विधिस्तावदासीद्भवन्नाभिपद्मादतः कः समस्ते समस्तेश्वरः स्यात् ॥ ६९ ॥

[6]समयत्रितयेऽपि सतां त्रसतां चरणौ शरणं भुजगप्रतिमात् ।
अयि तत्रभवन्भवतो भवतो भवतो भवतोपविशेषकरौ ॥ ७० ॥

अये सुरशिरोमणे प्रतिदिनं प्रणम्यादरा-
त्कृताञ्जलिरहं पुनः पुनरिदं जनं प्रार्थये ।
अनारतगतागतश्रमसमीरकाकोदरं
सुरद्रुमसहोदरं भज भजाशु दामोदरम् ॥ ७१ ॥

शिव इति शिवमूर्ते त्वं प्रसिद्धाभिधानः
स्तनवसनसमीरस्वच्छचित्तस्य गौर्याः ।
उपदिशसि सदान्ते प्राणिमात्रस्य कर्णे
प्रतिदिनमविमुक्ते मुक्तये रामनाम ॥ ७२ ॥

---

१. 'सार्थकं नयन्ति मनुजा जनुर्जनपदे गतं केचन' ख. २. 'महागजेन्द्रः' ग. ३. 'अहो गुणस्यास्पदम्' ग. ४. 'अपथ्यमिह वर्जयेद्विषयवासनालक्षणम्' ग. ५. 'सधीर्धरेत्' ग. ६. ७०-७२ श्लोकाः ग-पुस्तके न सन्ति.

यज्ञादिकर्मैककृतादराणां गतागतप्राप्तिरवश्यमेव ।
त्वन्नाम नारायण ये स्मरन्ति तरन्ति ते संसृतिसागरं द्राक् ॥ ७३ ॥
अक्रूर इत्थं स्तुतिमीश्वरस्य श्लोकैरतिश्लोककरैरकार्षीत् ।
ततः प्रणामं स करोति यावत्तावत्त्रिलोकीतिलकस्तिरोऽभूत् ॥ ७४ ॥

आगत्य सूर्यतनयापयसः स तीर-
मावश्यकं सकलकर्म समाप्य सम्यक् ।
आनन्दविस्मयसमूहसमन्वितोऽन्त-
र्नत्वा तमादिपुरुषं रथमारुरोह ॥ ७५ ॥

भवविरक्तमना भगवत्प्रियो रविसुतासलिलाद्बहिरागतः ।
विहितसर्वविधिर्हृदि विस्मितो रथमथो विदितर्जुपथोऽभ्यगात् ॥ ७६ ॥

नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
काव्यं कृतं हरिविलास इति प्रसिद्धं
लोलिम्बराजकविना कविनायकेन ॥ ७७ ॥

इति श्रीमत्सूर्यपण्डितकुलालंकारहरिहरमहाराजद्योतितलोलिम्बराजविरचिते
हरिविलासे महाकाव्ये भगवद्वर्णनं नाम चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

अन्वितं वाजिभिर्वायुवद्वेत्वरैश्चामरैश्चारुभिः शोभितैः सर्वतः ।
श्रीपतेराज्ञया नोदयामास तं गान्दिनीनन्दनः स्यन्दनं सुन्दरम् ॥ १ ॥
दिव्यरत्नमयमन्दिरत्विषा निर्मितामितनभस्तलश्रियम् ।
तां जगत्पतिरिवामरावतीं पश्यति स्म मथुरां पुरीं पुरः ॥ २ ॥
अवलोकनलोलविलोचनयोर्यदुनन्दनयोर्नवयौवनयोः ।
पथि काचन काञ्चनचारुरुचिः प्रमदा प्रमदातिशयं विदधे ॥ ३ ॥

---

१. 'शिरसाभिरामं पुनः पुनः प्रेमसमुद्रमग्नः' ख. २. श्लोकोऽयं ख-पुस्तके नास्ति.
३. 'त्रैलोक्यकौतुककरं क्रियते स्म काव्यम्' ख. ४. 'संयुतम्' ख. ५. 'सर्वतः' ख.
६. 'नोदयामास तं रामकृष्णान्वितम्' ख. ७. श्लोकोऽयं ख-पुस्तके नास्ति.

तन्मुखोद्गतकथाकदम्बकाकर्णनाविदितवर्त्मवेदनः ।
माधवो[1]ऽथ सहसैव पे[2]शलां पश्यति स्म मथुरां पुरीं पुरः ॥ ४ ॥

मुग्धाः प्रदीपप[3]टलं प्रशमं नयन्ति
यस्यां रतेरवसरे वसनाञ्चलेन ।
अङ्गस्थभूषणमणिप्रकराः परंतु
तासां वृथा विदधते बत चेष्टितं तत् ॥ ५ ॥

पश्यन्ति यत्र यमुनामसकृद्गवाक्ष-
मार्गैर्मृगाङ्कवदनाः परिपूर्णतीराम् ।
अम्भोविहारविहितादरवारिजाक्षी-
वक्षोजवीक्षणविनोदिविटावलीभिः ॥ ६ ॥

दिनकरकरजालैर्यत्र संशोषितेषु
प्रलयदहनकल्पैः केलिवापीजलेषु ।
अलिकुलपरिपीता अप्यमन्दा मरन्दा
जलजजठरजाताः पूर्ववत्पूरयन्ति ॥ ७ ॥

आरुह्य सौधशिखराणि नवातपानि
पीनस्तनद्वयपरिश्रमतः कथंचित् ।
प्रक्षालयन्ति वदनं वनिताः प्रभाते
यस्यां सदा सुरसरित्सलिलैः सलीलम् ॥ ८ ॥

अन्यत्र भिक्षुर्लभते सुशीलो वपुर्वियोगे परमं पदं यत् ।
यस्यां सदा मद्यमदप्रसक्ता वाराङ्गनास्तत्सुखमाप्नुवन्ति ॥ ९ ॥

सरभसमवगाह्यते कथंचित्सुतनुजनेन विलासवापिकाम्भः ।
ज्वलदतुहिनभासि मासि यस्यां चलमकरं मकरन्दवत्सुजातम् ॥ १० ॥

अनुपमरचनानां यत्र लीलागृहाणां
मरकतखचितानि प्राङ्गणक्ष्मातलानि ।
अ[4]विरलरसपानारब्धगानालिकान्ता-
फुलकुसुमसुजातैः पारिजातैर्जयन्ति ॥ ११ ॥

---

१. 'अपि' ग. २. 'पेशलम्' ख. ३. 'पटलीम्' ख. ४. 'मरकतकलितकान्तिरङ्कानि-नीमण्डनत्वं प्रचुरकुसुमजातैः पारिजातैर्नयन्ति' ग.

रहसि विलिखितस्य प्राणनाथस्य चित्रे
दृढतरपरिरम्भारम्भरङ्गैकभूमिः ।
चकितचपलचक्षुर्वीक्ष्य वक्त्रं सखीनां
स्मितसुभगमुखश्रीर्लज्जते यत्र योषा ॥ १२ ॥

अविरतभगवत्कथैकतानाः प्रमदजलार्द्रदृशश्च्युतप्रपञ्चाः ।
निमिषमिव दिनं नयन्ति यस्यां कति कति भागवतोत्तमा न शश्वत् ॥१३॥

अथ पथि रजकं[1] ददर्श कंचित्प्रभुषु वरो वसनानि तं ययाचे ।
न स कुमतिरदात्ततः शिरोऽस्यावहरदुदग्रकराग्रमण्डलाग्रः ॥ १४ ॥

[2]अम्बराण्यददतो दुरात्मनो याचितस्य रजकस्य कस्यचित् ।
न्यक्कृतिं कृतवतोऽतिरागवान्कं चकर्त नृविकर्तनो हरिः ॥ १५ ॥

ततो वसित्वा वसनानि सम्यक्पीताम्बरोऽसावसिताम्बरश्च ।
शेषाण्यदाद्गोपकदम्बकाय तेषां तदा काचन कान्तिरासीत् ॥ १६ ॥

[3]प्रविवेश पुरीं परैरगम्यां बहुरम्यां स समं समग्रगोपैः ।
तमवेक्षितुमुज्झितस्वबालापुरबालाश्च समाययुर्गवाक्षान् ॥ १७ ॥

धन्या अहो व्रजसदां सुदृशः समस्ता
यासामसौ यदुपतिः पतिवन्मुदोऽभूत् ।
सौधान्निरीक्ष्य नरनाथपथे मुकुन्द-
मन्योन्यमित्थमवदन्मथुरामहीलाः ॥ १८ ॥

अवनिभृदवरोधैः सौधतः प्रद्युमन्यं
च्युतलसदवतंसं स्पष्टवक्त्रारविन्दम् ।
अपगतजनलज्जं निश्चलाम्भोजनेत्रं
जघनशिथिलवस्त्रं श्रीपतिर्दृश्यते स्म ॥ १९ ॥

सुन्दरैकनृपतिः परमात्मा वीक्षितो मम समस्तसखीभिः ।
वञ्चिताहमिति वञ्चितनिद्रामृत्युमुत्तममन्यत काचित् ॥ २० ॥

---

१. 'शङ्किकमीषः' ग. २ श्लोकोऽयं ख-पुस्तके नास्ति. ३. १७-२४ श्लोकाः ..के न सन्ति

तन्मुखोद्गतकथाकदम्बकाकर्णनाविदितवर्त्मवेदनः ।
माधवोऽथ सहसैव पेशलां पश्यति स्म मथुरां पुरीं पुरः ॥ ४ ॥

मुग्धाः प्रदीपपटलं प्रशमं नयन्ति
यस्यां रतेरवसरे वसनाञ्चलेन ।
अङ्गस्थभूषणमणिप्रकराः परंतु
तासां वृथा विदधते बत चेष्टितं तत् ॥ ५ ॥

पश्यन्ति यत्र यमुनामसकृद्गवाक्ष-
मार्गैर्मृगाङ्कवदनाः परिपूर्णतीराम् ।
अम्भोविहारविहितादरवारिजाक्षी-
वक्षोजवीक्षणविनोदिविटावलीभिः ॥ ६ ॥

दिनकरकरजालैर्यत्र संशोषितेषु
प्रलयदहनकल्पैः केलिवापीजलेषु ।
अलिकुलपरिपीता अप्यमन्दा मरन्दा
जलजजठरजाताः पूर्ववत्पूरयन्ति ॥ ७ ॥

आरुह्य सौधशिखराणि नवातपानि
पीनस्तनद्वयपरिश्रमतः कथंचित् ।
प्रक्षालयन्ति वदनं वनिताः प्रभाते
यस्यां सदा सुरसरित्सलिलैः सलीलम् ॥ ८ ॥

अन्यत्र भिक्षुर्लभते सुशीलो वपुर्वियोगे परमं पदं यत् ।
यस्यां सदा मद्यमदप्रसक्ता वाराङ्गनास्तत्सुखमाप्नुवन्ति ॥ ९ ॥

सरभसमवगाह्यते कथंचित्सुतनुजनेन विलासवापिकाम्भः ।
ज्वलदतुहिनभासि मासि यस्यां चलमकरं मकरन्दवत्सुजातम् ॥ १० ॥

अनुपमरचनानां यत्र लीलागृहाणां
मरकतखचितानि प्राङ्गणक्ष्मातलानि ।
अविरलरसपानारब्धगानालिकान्ता-
कुलकुसुमसुजातैः पारिजातैर्जयन्ति ॥ ११ ॥

---

१. 'अपि' ग. २. 'पेशलम्' ख. ३. 'पटलीम्' ख. ४. 'मदनकलिकलाविलासिनीमण्डनस्य प्रचुरकुसुमजातैः पारिजातैर्नयन्ति' ग.

अनिश्चलमना मनःपवनयोः पुरोगामिनं
मनोरमतुरंगमं नृपतिराललोह क्षणात् ॥ २८ ॥

तमागतं भृत्यमुखान्निशम्य समस्तसैन्यैः सहितः समन्तात्।
कंसः कृतान्तप्रतिमल्लमल्ले रङ्गस्थले मञ्चमुरीचकार ॥ २९ ॥

नागेन्द्रैर्नगसोदरैर्मदसरित्संतर्पितेन्दिन्दिरै-
रश्वैश्च प्रवरैः खुरोद्धतरजःपुञ्जैः मरुन्नाम्बरैः।
अन्वीतः परितः प्रकाशितगतिर्ढक्कादितूर्यस्वनैः
कंसः कालकरालयोधसहितो रङ्गस्थलं प्राविशत् ॥ ३० ॥

सर्वत्र सर्वेश्वरमेव पश्यन्रङ्गस्थले मञ्चमुरीचकार।
ततो ववर्षाशु शरानपारान्भुजंगभीमान्भृशमौग्रसेनिः ॥ ३१ ॥

असिमुसलभुशुण्डीभिण्डिमालत्रिशूलैः
परशुपरिघकुन्तैर्मुद्गरैस्तोमरैश्च।
अपि विशिखगदाभिः पट्टिशैश्चक्रकालं
यदुकुलमृगराजो जघ्निरे तस्य योधाः ॥ ३२ ॥

हिममिव हिमजातं भानुमानातपेन
द्विरद इव करेण स्तोममम्भोजिनीनाम्।
रविकरपरिरम्भः प्रस्फुरन्मण्डलाग्रं
बलम .............................. ॥ ३३ ॥

यत्र स्थितः कंसमहीश्वरोऽसौ वीरैर्वृतः[2] शस्त्रसमेतहस्तैः।
स्थलं तदेवाभिससार शौरिः सिंहो यथा कुञ्जरकेलिकुञ्जम् ॥ ३४ ॥

जिघांसया तस्य समागता ये मल्ला मदान्धा धरणीध्रकल्पाः।
सर्वेऽपि ते तेन बलोद्धतेन नीताः पुरं प्रेतपतेः क्षणेन ॥ ३५ ॥

अथ परमलघिम्ना मञ्चमारुह्य तुङ्गं
मृगपतिरिव शृङ्गं भोगिभोगप्रमेण।

---

१. ३०-३३ श्लोकाः ख-पुस्तके न सन्ति. २. 'भटैर्वृतो हस्तगृहीतशस्त्रैः' ख. ३. 'आसेन दीनः सह तैः सुहृद्भिः' ख.

पीताम्बरो जलदनीलरुचिः स कृष्णः
श्यामांशुको जलजगौरतनुः स रामः ।
इत्थं यथार्थमयथार्थविदे जनाय
सूचीमुखेन सरलेन शशंस काचित् ॥ २१ ॥

रतिपतिपरिपन्थिपर्वताग्रे कनकलता इव पुष्पशोभमानाः ।
न किमु रुरुचिरे तदा स्वसौधे प्रचुररुचारुचिराश्चिरं चिरन्ध्यः ॥२२॥

सौन्दर्याणां राशिमेकं मुकुन्दं वारंवारं वारनार्योऽप्यपश्यन् ।
गत्वा गेहं तस्य शैवालशय्यां स्मारं स्मारं स्मारतापादकुर्वन् ॥ २३ ॥

कामं साक्षान्मेनिरे तं समस्ताः कामं कान्ते तेनिरे नैव किंचित् ।
किं चापश्यन्नैव ताश्चन्द्रचन्द्र··················श्चन्दनं चम्पकानि ॥ २४ ॥

धरणिरमणमार्गे कंसदासी त्रिवक्रा
मधुमथनमलिम्पच्चारुणा चन्दनेन ।
स सपदि हृदि हृष्टस्तां मनोज्ञामकार्षी-
न्न भवति महतां हि क्वापि मोघः प्रसादः ॥ २५ ॥

आनन्दकन्द यदुराज यदि प्रसन्न-
स्तन्मां सुखीकुरु विचित्ररतिप्रकारैः ।
इत्थं स्मरज्वरवशाद्बहु भाषमाणां
तां साधु साध्विति हरिः प्रहसन्नुवाच ॥ २६ ॥

रामः शौरिर्नन्दमुख्याश्च गोपा रङ्गस्थाने तस्थिरे ते समस्ताः ।
अक्रूरोऽथ स्यन्दनस्थोऽतिशीघ्रं रम्याकारं कंसवेश्माविवेश ॥ २७ ॥

उभौ कृतशुभाशुभौ सदसतां क्रमादाहृतौ
तदास्यसरसीरुहादिति निशम्य कम्पातुरः ।

---

१. 'त्रिवक्रा' ख. २. २७-२८ श्लोकयोः स्थाने इमौ श्लोकौ स्तः ख-पुस्तके—'पीताम्बरो जलदनीलरुचिः स कृष्णः श्यामांशुको जलजगौरतनुः स रामः । इत्थं यथार्थमयथार्थविदे जनाय सूचीमुखेन सरलेन शशंस कश्चित् ॥ निरीक्षितः सौधशिरःस्थिताभिस्तां राजधानीं पुरसुन्दरीभिः । समग्रगोपावलिमध्यवर्ती विवेश कृष्णश्च सकृष्णवक्त्रः ॥'.

अनिश्चलमना मनःपवनयोः पुरोगामिनं
　　मनोरमतुरंगमं नृपतिरारुरोह क्षणात् ॥ २८ ॥
तमागतं भृत्यमुखान्निशम्य समस्तसैन्यैः सहितः समन्तात् ।
कंसः कृतान्तप्रतिमल्लमल्ले रङ्गस्थले मञ्चमुरीचकार ॥ २९ ॥
नागेन्द्रैर्नगसोदरैर्मदसरित्संतर्पितेन्दिन्दिरै-
　　रथैश्च प्रखरैः खुरोद्धतरजःपुञ्जैः मल्लुराम्बरैः ।
अन्वीतः परितः प्रकाशितगतिर्ढक्कादितूर्यस्वनैः
　　कंसः कालकरालयोधसहितो रङ्गस्थलं प्राविशत् ॥ ३० ॥
सर्वत्र सर्वेश्वरमेव पश्यन्रङ्गस्थले मञ्चमुरीचकार ।
ततो ववर्षाशु शरानपारान्भुजंगभीमान्भृशमौग्रसेनिः ॥ ३१ ॥
　　असिमुशलभुशण्डीभिण्डिमालत्रिशूलैः
　　　　परशुपरिघकुन्तैर्मुद्गरैस्तोमरैश्च ।
　　अपि विविधगदाभिः पट्टिशैश्चैककालं
　　　　यदुकुलमृगराजौ जघ्निरे तस्य योधाः ॥ ३२ ॥
　　हिममिव हिमजातं भानुमानातपेन
　　　　द्विरद इव करेण स्तोममम्भोजिनीनाम् ।
　　रविकरपरिरम्भः प्रस्फुरन्मण्डलाग्रं
　　　　बलम······························ ॥ ३३ ॥
यत्र स्थितः कंसमहीधरोऽसौ वीरैर्वृतः[2] शस्त्रसमेतहस्तैः ।
स्थलं तदेवाभिससार शौरिः सिंहो यथा कुञ्जरकेलिकुञ्जम् ॥ ३४ ॥
जिघांसया तस्य समागता ये मल्ला मदान्धा धरणीध्रकल्पाः ।
सर्वेऽपि ते तेन बलोद्धतेन नीताः पुरं प्रेतपतेः क्षणेन ॥ ३५ ॥
　　अथ परमलविन्ना मञ्चमारुह्य तुङ्गं
　　　　मृगपतिरिव शृङ्गं भोगिभोगप्रभेण ।

---

१. ३०-३३ श्लोकाः ख-पुस्तके न सन्ति. २. 'भटैर्वृतो हस्तगृहीतशस्त्रैः' ख. ३. 'त्रासेन हीनः सह तैः सुहृद्भिः' ख.

अहह तदसिना द्रागपातयामास मह्यां
  नलिनमिव मनोज्ञं कंसकं स प्रकोपात् ॥ ३६ ॥
प्रकटितघृतसाराः कांदिशीकत्वभाजां
  तदनु तदनुगानां शस्त्रवस्त्राणि जह्रुः ।
अपि पशुपतिडिम्भाः सोत्सवा निर्भयत्वा-
  न्मदकलकरिकल्पा रङ्गभङ्गं च चक्रुः ॥ ३७ ॥
[1]महामहसमन्वितः समभवद्यशोदापतिः
  प्रफुल्लनलिनाननः सह समग्रगोधुग्गणैः ।
हतेषु परिपन्थिषु प्रथितपौरुषेषु क्षणा-
  द्विपत्तितिमिरातुरोद्धरणसूनुना सूनुना ॥ ३८ ॥

एष यास्यति वर्तकः कथं नाकनाथनगरीं स्वमातुलः ।
प्राहिणोदिति धियेव सत्वरं सीरभृत्तदनु तस्य सैनिकान् ॥ ३९ ॥
प्रभुमपि पशुपालने यदेनं व्रजपतिरादिशति स्म तत्प्रमाणम् ।
सदुचितमघमाघमाय तस्मै व्यतरदहो यदसौ स्वरूपयोगम् ॥ ४० ॥
कुसुमवृष्टिरकारि तदा सुरैर्ननृतुरप्सरसश्च पुनः पुनः ।
जगदिदं गतशल्यमभूत्सुखं विदधिरे च तपांसि तपस्विनः ॥ ४१ ॥
अथ तत्र [2]गतत्रपमेत्य गृहाद्‌तिनिर्दयताडितमस्तकहृत् ।
परिगृह्य शिरः कुपतेः करयोर्विललाप विलासवतीनिकरः ॥ ४२ ॥
[3]विले पुरस्ताथ विलासवत्यस्तत्रागतास्तत्परिरभ्य दोर्भ्याम् ।
हा नाथ हा नायक हा विलासिज्ञातः कथं मृत्युरसौ तवेति ॥ ४३ ॥
फुल्लदम्बुरुहरम्यलोचनं कर्णलम्बिकमनीयकुण्डलम् ।
केन वज्रकठिनात्मना हतं प्राणनाथ भवतः शिरः क्षणात् ॥ ४४ ॥
कोटिशः करटिनस्तवाङ्गणे लक्षशश्च ललितास्तुरंगमाः ।
पत्तिरेव सुकुमार हा कथं त्वं गतोऽसि भुवनान्तरं प्रति ॥ ४५ ॥

१. 'महामहमसुर्द्रवाङ्गजसदामर्धीशोऽभवत्' ख. २. 'गतत्रपयैत्य' ख. ३. श्लोकोऽयं ख-पुस्तके नास्ति.

वीर हीनवसुदेवसूनुना त्वां निशम्य निहतं महोदयम् ।
अद्य गोत्रजगणो गृहोदरे नैव मास्यति मुदातिमेदुरः ॥ ४६ ॥

रुचिरं वचनं दृशौ सुदीर्घे बत निःशेषनिशेषवल्गु वक्त्रम् ।
तनुता च तनौ स्तनौ च पीनौ प्रिय विश्वं विफलं विना त्वयैतत् ॥४७॥

हा प्रफुल्लनवकुन्दसुन्दरास्ते न चाप्रतिम मान्त्यमी रदाः ।
यैर्भवान्व्यरचयद्[2]व्रणावलिं कोमलेऽधरदले पुनः पुनः ॥ ४८ ॥

अयि सुभग विना त्वया पुरीयं वयमिव राजति हन्त नैव किंचित् ।
अहह किमनया महासमृद्ध्या तृणवदसूनपि सांप्रतं प्रतीमः ॥ ४९ ॥

विश्वं विलोकयति विष्वगिदं समस्तं
किं त्वं सुखं[1] स्वपिषि भूमितले कठोरे ।
उत्तिष्ठ वीरवर रत्नमये[3] स्वधाम्नि
पुष्पालिशालिशयने शयनं कुरु[4] त्वम् ॥ ५० ॥

भोजनावसर[5] एव भूपतेरेति नाद्य बहिरेव किं स्थितः ।
सारिका यदि गृहे गदेत्तदा त्वं विपन्न इति को नु तां वदेत् ॥५१॥

अयि चुम्बसि चेन्न वक्त्रपद्मं[6] कुचयोश्चेत्परिरम्भणं न दत्से ।
त्रपयास्य जनस्य वार्यते किं[7] किमु कोपो वरिवर्ति चक्रवर्तिन् ॥ ५२ ॥

त्वं गमिष्यसि महेन्द्रमन्दिरं भोक्ष्यसे नवनवाश्च सुन्दरीः ।
हन्त दुःखमधुना क्षणे क्षणे सुन्दरेक्षण न एव केवलम् ॥ ५३ ॥

युक्तमेव दिवि गामिना त्वया तद्व्यधायि यदुपेक्षिता[8] वयम् ।
ईदृशीं तव दशां निरीक्ष्य नो यन्न दग्धहृदयं विदीर्यते ॥ ५४ ॥

उदितै रुदितैश्च तत्र सर्वान्[9]व्यथयामासुरिति क्षितीन्द्रपत्न्यः ।
अथ तत्समयोचितोक्तिभिस्ता दृढमाश्वासयति स्म वासुदेवः ॥ ५५ ॥

---

१. 'न सुखम्' ख. २. 'मणावलीः' ख. ३. 'पाण्डुरधाम्नि धाम्नि' ख. ४. 'कुरुष्व' ख. ५. 'भोजनप्रसर एव' ख. ६. 'वक्त्रबिम्बम्' ख. ७. 'ह्रा' ख. ८. 'तदुपेक्षिता' ख. ९. 'तन्वीर्व्यथयन्तीरिति भूमिपालपत्नीः । तपसः प्रशमोचितैर्वचोभिः' ख.

ततो व्यधात्पार्थिवमुग्रसेनं वन्धं स्वपित्रोश्च निराचकार।
तत्रासतश्चापगतान्दिगन्तान्सुहृज्जनानानयति स देवः ॥ ५६ ॥

अचिरकुचतटीनां नाट्यकाले नटीना
प्रतिगृहमथ तत्र प्रत्यहं प्रादुरासीत्।
धिमिकिति धिमिधिद्धिद्धिद्धिधिद्धिद्धिधिद्धि
धिगिधिगिधिगि तत्तत्थय्यथय्येति शब्दः॥ ५७ ॥

अथ कन्यचरणः सुरासुरै रन्तुमिच्छति मया समं हरिः।
कसदूतिरिति जातनिर्वृतिर्देहगेहसुषमा व्यरीरचत् ॥ ५८ ॥

भूषांशुकाश्वगजराजविराजमाना-
न्प्रस्थाप्य नन्दपशुपालपतीन्समस्तान्।
कृष्णस्तया सह सहस्रदलायताक्ष्या
ज्योत्स्नाकृतसरजनिं रजनिं निनाय॥ ५९॥

प्रोहिणोदथ विभुर्व्रजाङ्गनासान्त्वनाय मतिमन्तमुद्धवम्।
सोऽपि त व्रजमगाद्रथस्थितो विश्वविश्वधृतविष्णुभावनः ॥ ६० ॥

चरमाचलमौलिमण्डनत्वं द्युमणौ प्राप्तवति प्रभोर्भुजिष्यः।
अविशद्व्रजमुद्धवाभिधानो युतमानो रजसा गवा समन्तात् ॥ ६१ ॥

सह गणेन गवा व्रजमुद्धवस्ततरजः कणकच्चरकूर्चकः।
प्रियतमास्तनसगतसाम्ययोर्विहगयोर्विरहावसरेऽविशत् ॥ ६२ ॥

रतिपतिपरितापात्पाण्डुगण्डस्थलीभि-
प्रतिगृहकृततल्पं पल्लवैर्बल्लवीभिः।
विरतसुरतलीलालास्यहास्यप्रसङ्ग-
नंनपुरमभवत्तत्रोद्धवस्योद्धवाय ॥ ६३ ॥

---

१ 'सुहृद्गणान्' ख. २. 'धिमिधिक्ता धिरिधगित्ता धिगित्ता तगतगतगततत्थ-धिथेयीति शब्द' ख. ३ 'हरिपाद' ख. ४ 'सहस्रदलायताक्षो' ख. ५ 'प्राहिणो-त्ससदयो' ख. ६ 'प्रति ययौ' ख. ७. कृतविश्वभावन' ख. ८. श्लोकोऽयं ख-पुस्तके नास्ति. ९ 'अतितरतिपरितापात्' ख. १० 'मजनगरमभूत्तत्रोद्धवस्योत्सवाय' ग.

सहसाङ्गणमागतं रमाया रमणस्यानुचरं स नन्दगोपः ।
तरसा परिरम्य सम्प्रहर्षं गततर्षं विषयेषु विज्वरोऽभूत् ॥ ६४ ॥

संपूज्य तं विधिवदुद्धवमासनाद्यैः
सम्यक्समग्रविधिविद्विविधोपचारैः ।
पप्रच्छ गोपपतिरित्यमनङ्गमूर्ति-
रास्ते स तत्र कुशली मुशली च तद्वत् ॥ ६५ ॥

पप्रच्छ यद्यद्व्रजसार्वभौमस्तत्तत्स तस्मै कथयांबभूव ।
तस्मिन्क्षणे ताः स्मरदुःखदीना मन्दाक्षहीना जगदुस्तमित्थम् ॥ ६६ ॥

कंसो हतः स्वसुहृदामपकारकारी
प्राप्तं च राज्यममरेन्द्रपदानुसारि ।
दास्यन्ति भूमिपतयः शतशः स्वपुत्री-
रत्रागमो बत भवेदधुनास्य कस्मात् ॥ ६७ ॥

ग्राम्या वयं क्व पशुपालजनैकभोग्याः
सर्वोत्तमः क्व कमलाकरलालिताङ्घ्रिः ।
सङ्गोऽस्य यत्सममवत्स घुणाक्षरस्य
न्यायस्तदाप्तिरधुना शशशृङ्गतुल्या ॥ ६८ ॥

अकृत सुकृतपुञ्जैः स्वप्नमध्येऽप्यलभ्याः
परमपुरपुरन्ध्रीः सङ्गलब्धा विहाय ।
विदितरतिविशेषः श्रीपतिः प्राप्तराज्यो
यदनुभवति दासीं तन्न संभावयीति ॥ ६९ ॥

ध्रुवमेतदयोमयं विधिर्विदधे मे हृदयं·······हि तत् ।
शतधा न विदीर्यते यतो विरहे दुर्विषये मधुद्विषः ॥ ७० ॥
आगमिष्यति कदाचिदच्युतः कौतुकेन कृपया पुनः पुनः ।
उद्धव ध्रुवमनेन हेतुना जीवति व्रजविलासिनीजनः ॥ ७१ ॥

---

१. 'नन्दस्तमित्यमवदद्धननीलमूर्तिः' ख. २. 'गोपविलासवत्यो निरस्तलज्जा' ख. ३. 'यः' ख. ४. 'प्रार्थयन्तीः' ख. ५. 'दासीः' ख. ६. श्लोकोऽयं ख-पुस्तके नास्ति. ७. 'कृपयाथवा पुनः' ख.

हन्त किं न वयमुद्धव दीना दीनबन्धुरपि किं न मुरारिः ।
हीरुदेति हृदि नास्मदुपेक्षां कुर्वतोऽस्य परमाद्भुतमेतत् ॥ ७२ ॥

अयि शृणु बत दीनोद्धारकोऽस्यां त्रिलोक्यां
सृजति विरुदमेतन्मूलभूतं त्रपायाः ।
वयमिह विरहाग्नौ दह्यमाना विमुक्ताः
सह स हरिणदृष्ट्या तत्र केलिं करोति ॥ ७३ ॥

अनृतमुद्धव मा वद सर्वथा भगवतः शपथस्तव वर्तते ।
बत वयस्य सभासु कदापि नः किमपि स स्मरति स्मरसुन्दरः ॥७४॥

यावदार्य बत जीवितमास्ते तावदेहि दयया परमात्मन् ।
एवमेव वद तं बत गत्वा ब्रूमहे किमु वयं पुनरन्यत् ॥ ७५ ॥

इति ब्रुवाणो विरराम रामागणो गलद्गोलवगोसरोजः ।
ततः स वाक्यं स्वयमाबभाषे दुःखद्रुमोन्मूलनकारि तासाम् ॥ ७६ ॥

उत्कर्षः क्रियते कथं कुमुदिनीबन्धोः प्रतिस्पर्धिनः
कृत्वास्यं मलिनं विलोचनजलैः स्फारीभवत्कज्जलैः ।
आयास्यत्यचिरात्करिष्यति सुखोद्रेकं स वः पूर्वव-
द्राकाकैरवबन्धुबन्धुरमुखः कृष्णाभिधानो हरिः ॥ ७७ ॥

इति मधुरवचोभिर्घोषसीमन्तिनीनां
मनसि मनसिजाते स्वास्थ्यवासं वितन्वन् ।
कतिचिदयमनैषीत्तत्र रात्रीस्त्रिलोकी-
पतिगुणगणगानोद्भूतहर्षाश्रुपूरः ॥ ७८ ॥

उचितं न करोति कैटभारिः क्षणमप्येकमिहैति यन्न विद्वान् ।
इति स स्वमनस्यमंस्त तत्तद्विरहक्लेशकृशत्वदर्शनेन ॥ ७९ ॥

---

१. 'अपि सुचरितर्दीनोद्धारकस्य' ख. २. 'सृजतु' ख. ३. 'वियुक्ताः' ख. ४. 'प्रति' ख. ५. 'इतीरयित्वा विरराम रामाकदम्बकं दृक्चलितास्रधारम्' ख. ६. 'तन्मानसस्वास्थ्यकरं स्वमाधात्' ख. ७. 'हर्षाश्रुबिन्दुः' ख. ८. 'उचितं न करोति करोति किं मजमायाति कदापि यन्न विद्वान् । इति सौवयनस्य तन्यतासौ वनितान्तं विरहार्तिदर्शनेन ॥' इति क-पुस्तके क्षेपकः.

सुजनवरयशोदानन्दसंदर्शनार्थं
यदुपतिमिह गत्वा प्रेषयैवैकवारम् ।
मुहुरिति मिलिताभिस्ताभिरुक्तो रथस्थः
कथमपि हरिदासो गोकुलान्निर्जगाम ॥ ८० ॥

यद्यद्बभाषे सुमुखीसमूहो यद्यत्स तद्दैन्यमवेक्षते स्म ।
तत्सर्वमागत्य गुणाकराय न्यवेदयद्भागवतावतंसः ॥ ८१ ॥

सरस्वदुदरे क्षणादलघु हैमहर्म्यस्फुर-
च्चकार पुटभेदनं विगतवेदनं स्वर्गवत् ।
इभाभ्रशशभृद्रसेन्दु(१६१०८)मितसुन्दरीभिः समं
स तत्र सुखमन्वभूद्यदुकुलावतंसो हरिः ॥ ८२ ॥

ज्ञात्वापि गोपललनाः स्वसमागमोत्का
नो गोकुलं प्रति जगाम जगन्निवासः ।
नानानरेन्द्रतनयाहृतचित्तवृत्ति-
र्जीर्णं जलं नवजलैर्ह्रियते हि नद्याः ॥ ८३ ॥

अनन्तः समं तासु कान्तासु लेभे
खनागाभ्रचन्द्रर्तुभू(१६१०८०)संख्यसूनून् ।
गुणज्ञान्गुणानां गणे रञ्जयन्तं
जयन्तं जयन्तं कमाहुर्न तेषाम् ॥ ८४ ॥

सैदाश्रयी तस्य सदाश्रितस्य निस्तीर्णनानारणसंकटस्य ।
अज्ञानकान्तारधनंजयस्य धनंजयस्य क्षणराशिरासीत् ॥ ८५ ॥

बाल्यमैत्र्युपगतं द्विजमेकं दुर्बलं धृतसरन्ध्रपटार्धम् ।
अर्चति स्म परिरभ्य स सम्राट् श्रीमदं न कैलयन्ति कुलीनाः ॥८६॥

त्वद्वाहोद्धूतधूल्यः करिकरनिकरैः सीकराश्च प्रयुक्ता
व्योम व्यापुः समन्ताद्यदुमुकुटमणे तत्र पङ्कोऽद्भुतोऽभूत् ।

१. एतत्पूर्वम् 'तत्समागमकृते बहु लौल्यं कार्श्यमप्यतिशयेन शरीरे । वीक्ष्य सोऽप्यहह दुःखसहस्रादश्रुपूरपरिपूर्णदृगासीत् ॥' इति श्लोकः ख-पुस्तके. २. श्लोकोऽयं ख-पुस्तके नास्ति. ३. 'गणयन्ति' ख.

आगच्छद्भिः सुरैः क्ष्मां तव भजनकृते स्फाटिकीभिः शिलाभि-
र्बद्धः पन्थास्तदानीं सुरसरिदिति तं मानवा मानयन्ति ॥ ८७ ॥

श्रीकृष्ण त्वत्प्रतापेन प्रतप्ताङ्गीर्दिगङ्गनाः ।
दिग्गजा वीजयन्त्येव कर्णतालैः पुनः पुनः ॥ ८८ ॥

वनेषु वनदेवता दिवि दिवौकसां वल्लभा
भुजंगकुलकन्यका भुजगलोकलीलावने ।
यशः समरसंचितं नरमृगेन्द्र गायन्ति ते
प्रभाविजितकौमुदीकुमुदपाण्डुताडम्बरम् ॥ ८९ ॥

इति तस्य कृता स्तुतिः सुदाम्ना धनलाभार्थमुपागतेन दूरात् ।
अवतारशिरोमणिस्ततस्तं धनवन्तं धननाथवच्चकार ॥ ९० ॥

जनकृतकृतधर्मे तस्य राज्ये समन्ता-
दगणितभुजशौर्यौदार्यरूढस्य शश्वत् ।
गहनगहनमध्ये दस्युनामापि नासी-
त्रिदशतरुसमानो याचमानो जनोऽभूत् ॥ ९१ ॥

अपि सचिवसहस्रसंयुतोऽसौ स्वयमकरोद्व्यवहारमेकविद्वान् ।
क्षणमपि खलसंगतिं न चक्रे सुकविसभासु सभासु नित्यमासीत्॥९२॥

सदा सादरं सुन्दरीगीयमानं पुरग्रामकान्तारकुञ्जोदरेषु ।
असौ माधवो दुःखवृक्षावलीनां लवित्रं पवित्रं चरित्रं चकार ॥ ९३ ॥

विश्वंभरोऽन्यांश्च निहत्य दैत्यान्विश्वंभराभारमपाचकार ।
भवाब्धिमज्जज्जनतारकस्य प्रायोऽवतारोऽस्य सदुत्सवाय ॥ ९४ ॥

यस्त्रातुं व्रजमुज्जहार सहसा गोवर्धनं क्ष्माधरं
यस्त्रैलोक्यमदर्शयन्निजमुखाम्भोजे यशोदाकृते ।
यः पुत्रं स्वगुरोर्यमालयगतं शक्त्यानिनाय क्षणा-
द्यो भूभारमपाचकार सकलं तस्मै नमः शार्ङ्गिणे ॥ ९५ ॥

१. श्लोकोऽयं ख-पुस्तके नास्ति. २. 'सतन' ख. ३. 'हि' ख.

सुजनैः कुजनैरपि रत्नकलारमणस्य कवेः कविताश्रवणात् ।
रमणीभणितं मुरलीरणितं भ्रमरीभणितं तृणवद्गणितम् ॥ ९६ ॥
अतसीकुसुमोपमेयकान्तिर्यमुनाकूलकदम्बमूलवर्ती ।
नवगोपवधूविनोदशाली वनमाली वितनोतु मङ्गलानि ॥ ९७ ॥
नानागुणैरवनिमण्डलमण्डनस्य
श्रीसूर्यसूनुहरिभूमिभुजो नियोगात् ।
काव्यं कृतं हरिविलास इति प्रसिद्धं
लोलिम्बराजकविना कविनायकेन ॥ ९८ ॥

इति श्रीमत्सूर्यपण्डितकुलालंकारहरिहरमहाराजद्योतितलोलिम्बराजविरचिते हरिविलासे महाकाव्ये कंसवधो नाम पञ्चमः सर्गः ।

---

## गोस्वामिश्रीयुतजनार्दनभट्टप्रणीतं

## शृङ्गारशतकम् ।

मलयपवनः क्षीबः कुम्भी क्षपाकरमण्डलं
भुवनविदितं श्वेतं छत्रं पिकाः परिचारकाः ।
विकचतरवो यस्योत्तुङ्गाः पराः पटमण्डपा-
स्त्रिभुवनमहाधीशः कामो विभाति जगत्त्रये ॥ १ ॥
विकचलवलीपुष्पैर्हारं करोति च गुम्फति
प्रचुरमणिभिः क्लृप्तां स्वैरं निजां रशनामपि ।
सुरतसदने पत्युः प्रीत्यै कला कुरुते परा
न तु विधुमुखी दीपे स्नेहं ददाति कथंचन ॥ २ ॥

---

१. एतयोः श्लोकयोः स्थाने 'किं त्यक्त्वा वसतिं बले क्षितितले पातालमेवाश्रितं भो भोगीश्वर हन्त तत्र सततं मां क्लेशयन्त्यर्थिनः । आस्ते कोऽपि हरिर्गयाचलगिरौ क्ष्मापालचूडामणिस्तेनार्थिप्रकरः कृतो धनदवद्गच्छाधुना त्वं सुखम् ॥ श्रीमान्ब्रह्मरसोऽभवद्द्विजकुलालंकारचूडामणिर्गङ्गानिर्मलमौनिमार्गवकुले तस्माद्रविः पण्डितः । आसीत्तस्य सुतः सुरासुरकृतिं येल्हाम्बिकायां चिराल्लेभे श्रीहरिनाम रत्नमवनीमध्ये तदास्तां चिरम् ॥' इति श्लोकद्वयं क्वचित्. २. 'त्रैलोक्यकौतुककरं क्रियते स्म काव्यम्' ख.

कदाचिदारोहति सौधमुन्नतं कदाचिदायाति धरातलं पुनः।
कदाचिदास्यं विनिवेश्य जालके प्रियं नवोढा तु सलज्जमीक्षते ॥ ३ ॥

भाले विधाय तिलकं मम नेत्रयोश्च
दत्त्वाञ्जनं हृदि च हारमथो निधाय।
प्राणाधिपः सखि शनैः करपल्लवेन
नीवीमपास्य हि कुतः सुखमेति भूयः ॥ ४ ॥

उत्साहकारकसखीवचनैर्विधाय
भूषाविधिं कनकगौरतराङ्गकेषु।
प्राणेश्वरस्य सदनाय कृतप्रयाणा
मुग्धा तथापि हृदि कम्पभरं बिभर्ति ॥ ५ ॥

अयि सखि कुरु क्षिप्रं रम्भादलैः शिशिरानिलं
सहचरि तनौ सत्कर्पूरं द्रुतं परिलेपय।
सरसबिसिनीपत्रैस्तुल्यं प्रिये परिकल्पय
स्फुटमिति विभो तस्या गेहे भवन्ति किलोक्तयः ॥ ६ ॥

कान्तस्ते कमलाभिरामनयने कल्ये हि देशान्तरं
गन्तेति श्रुतमद्य लोकवचनात्तथ्यं किमेतद्वचः।
पृष्टा सेति मया दयाधननिधे प्रोवाच दीनानना
यत्तद्वक्तुमपि क्षमा न रसना मे जायते सांप्रतम् ॥ ७ ॥

संफुल्लामलमल्लिकासुमसमुद्भूतैः परागोत्करै-
र्व्याप्तः शीतलनीरपूर्णसरसी संपातशीतः परम्।
आरब्धोद्धुरमैथुनोत्थबहुलस्वेदाम्बुसार्द्राङ्गना-
वृन्दस्याप्यतिसौख्यदो निशि शनैरायात्ययं मारुतः ॥ ८ ॥

अयि सखि मम प्राणाधीशो गतो विषयान्तरं
कुसुमविशिखस्तस्मादुच्चैर्दुनोति तनुं शरैः।
लघु कुरु यथा यत्नं येन स्मराधिनिवारणे
पटुतरमतेस्तस्याशु स्यादिहागमनं ततः ॥ ९ ॥

कृत्वेन्दीवरभूषणानि रचनां कस्तूरिकायाः स्तनौ
धृत्वा नीलनिचोलमेणनयने त्वं यासि पत्युर्गृहम् ।
प्रावृट्कालपयोधरादिव तडित्कान्तिस्तनोस्ते तथा-
प्येषा हन्ति तमःसमुच्चयमहो निःसृत्य नैशं द्रुतम् ॥ १० ॥

प्रियतम पुरा सर्वस्त्रीभ्यो मयि प्रियताभव-
ज्जगति सकलो जानात्येवं जनः स्फुटमेव ताम् ।
वद किमुघनी जातं यस्माद्विहाय हि मां प्रिया-
मपरवनितावृन्दैः साकं करोषि कुतूहलम् ॥ ११ ॥

अयि सखि निशा किं वा घस्रः शशी किमु भास्करः
स्फुरति पुरतः कामः किं वा ममास्ति स वल्लभः ।
प्रतिपलमिति प्राणाधीशप्रिया विरहातुरा
कथयति मुहुर्मन्दं मन्दं सखीं सविधस्थिताम् ॥ १२ ॥

यत्रानम्रसरोजसाम्यमयते स्वस्तादिदीर्घालक-
व्याजभ्राम्यदनेकभृङ्गपटलीसंजातशोभं मुखम् ।
काञ्चीकाञ्चनकल्पिता वितनुते कोलाहलं कोमलं
तत्तन्व्याः सुरतं स्मृतं हि कुरुते बाधामगाधां हृदि ॥ १३ ॥

उच्चौ कुचौ कृशतरा च कटिर्गभीरो
नाभिः समुन्नततरं च नितम्बबिम्बम् ।
निम्नोन्नतेति सुदृशः सुभगे शरीरे
मग्नं मनो मम न मां पुनरभ्युपैति ॥ १४ ॥

वेणी खड्गसमा भ्रुवौ परिलसद्बाणासनाभे शुभौ
कर्णौ पाशसमौ तथा विजयते नासा च तूणोपमा ।
मुग्धेऽपाङ्गविलोकनं शरसमं जाने ततस्त्वं कृता
प्रायः पञ्चशराभिधक्षितिभुजा शस्त्रस्य शाला निजा ॥ १५ ॥

पूर्णः कलाभिरखिलाभिरौषधीपतिरेष यत्सखि दुनोति मां भृशम् ।
युक्तं हि तन्नु दयालवो भवेदिह कुत्र लब्धविभवे जलात्मजे ॥ १६ ॥

मलिनहृदयो गर्जत्युच्चैर्घनो यदि गर्जतु
प्रकृतिकठिना यस्मादेते भवन्ति हि पूरुषाः।
त्वमपि चपले किं नो वेत्सि प्रिये विरहव्यथां
दिशि दिशि यतः खिन्नाया मे पुरः परिनृत्यसि ॥ १७ ॥
नो भुङ्क्ते किल वीटिकां न कुरुते संलापमाभाषिता
नो शेते शयने न संमुखमहो सा वीक्षिता चेक्षते।
हासं न प्रसते प्रहासवचनैर्दत्ते न चालिङ्गनं
स्वान्ते मोदभरं तथापि तनुते नित्यं नवोढा प्रिया ॥ १८
वीक्ष्य वीक्ष्य हृदि लक्ष्म सपत्न्या अङ्घ्रियावकभवं रमणस्य।
भामिनीकुवलयोपमनेत्रे शोणपङ्कजनिभे लघुचक्रे ॥ १९ ॥
क्रोडस्थायाः सभयहरिणीलोचनाया नितान्तं
गाढाश्लेषाकुलतरतनोः स्रस्तकूर्पासकायाः।
सव्रीडाया मुकुलितदृशो मुञ्च मुञ्चेति मन्दं
जल्पन्त्या साधरदलसुधा संस्मृता मां दुनोति ॥ २० ॥
दृष्ट्वाधिविन्नासदनेऽम्बुजाक्षी कान्तं सरानेककलाप्रसक्तम्।
सा तं जगादापि न किंचिदुच्चैः परं सखीनां तु पुरो रुरोद ॥ २१ ॥
पीनोत्तुङ्गकुचान्तरालतरला माला हि मुक्तामयी
हेमोर्वीधरयुग्मकल्पितगमस्वःसिन्धुवद्राजते।
इत्युक्त्वा परिहासपेशलमतिः कान्तो वयस्ये समा-
मुत्तुङ्गौ मम वक्षजौ दृढतरं जग्राह कामातुरः ॥ २२ ॥
पवनवेल्लितनीलसरोरुहच्छविविजित्वरचारुविलोचने।
परपुरन्ध्रिपराङ्मुखवल्लभे समुचितं नहि दूषणरोपणम् ॥ २३ ॥
नेत्रे जागरणारुणे विधिनुतः शोणारविन्दश्रियं
भाले तत्पदयावलक्ष्म च पुनः प्रत्यक्षमेवेक्ष्यते।
लग्ना लोचनचुम्बनेऽञ्जनमयी रेखाधरे राजते
दुष्टस्यास्य तथापि चेतसि मनाग्लज्जापि नो जायते ॥ २४ ॥

यामिनीरमणमञ्जुलबिम्बं श्रीपराजयविजित्वरवक्त्रे ।
त्वामुपैति किल रोपतमिस्रं तेन मे भवति चेतसि चित्रम् ॥ २५ ॥

विरहजलदो धारातुल्यैर्निरन्तरपातिभि-
मंदनविशिखैः क्लिन्नं मोहप्रभञ्जनपीडितम् ।
प्रियतम विना त्वामेणाक्ष स्फुरत्कुचसद्धटं
हृदयसदनं दुर्वारो हा प्रपातयतीव तत् ॥ २६ ॥

प्रथमप्रणयस्मृतिप्रजातद्विगुणस्नेहरसातिरेकभाजोः ।
अरहःस्थितयोर्विभाति यूनोर्नयनानामतिमञ्जुलो विलासः ॥ २७ ॥

मामके बत करोषि किमालि कामतप्तहृदि चन्दनचर्चाम् ।
आवृतो वसनतूलसमूहैर्यत्र नाथमुपयाति कृशानुः ॥ २८ ॥

मुञ्च मानमधुना भज कान्तं मन्दमन्दमयमेति वसन्तः ।
अत्र भामिनि पिकावलिगीतैर्याति धैर्यगुणमाशु जनानाम् ॥ २९ ॥

तावद्व्यर्थतरं सुधासुरुचिरं सन्मन्दिरं सुन्दरं
भोगोपस्करचित्रवस्त्रवलिता तावच्च शय्या वृथा ।
यावद्बालमृणालकोमलभुजद्वन्द्वाभिरामग्रहा-
श्लेषप्रोत्थमनोभवो न हि भवेत्प्राणप्रियासंगमः ॥ ३० ॥

दृश्यन्ते विरलानि मारुतपथे यद्यप्युडून्युच्चकै-
रस्तक्ष्माधरतश्च पित्सति कलानाथोऽपि पाथोनिधौ ।
प्राची चञ्चललोचना श्रुतिलसत्ताटङ्कवच्छोभते
भानुस्ते हि तथापि याति कठिने मानो न का नो गतिः ॥ ३१ ॥

तुङ्गवर्तुलकुचोत्तमकोका मञ्जुलत्रिवलिचारुतरङ्गा ।
कामजश्रमविदारणदक्षा किङ्किणीरणितहंसविरावा ॥ ३२ ॥

लोचनस्फुटसरोरुहरम्या गौरता विमलवारिभृता च ।
केशशैवलमनोरमकान्तिर्भाति तन्वि तटिनीव तनुस्ते ॥ ३३ ॥ (युग्मम्)

क्षोणी यस्य कृते ययौ शयनतां कान्तारमावेश्मतां
भोगच्छत्रसुदीपिकासु च फणारत्नं च मे दीपताम् ।

ध्वान्तं चैव सहायतां स कठिनस्वान्तोऽत्र नो दृश्यते
हे धावर्त''''(?)किं करोमि शरणं गच्छामि कं सांप्रतम् ॥३४॥
दृष्ट्वा कस्मादुपेतो रहसि मृगदृशावेकशय्याप्रसुप्ते
कान्तः केलीकलाढ्यो निकटमथ,तयोर्मन्दमन्दं जगाम ।
धृत्वा चैकामुरोजे सहसितमपरां सादरं सत्कपोले
चक्रे क्रीडां तथासौ न हृदि किल यथा जन्म(ग्म)तुस्ते विषादम् ॥३५॥
पादयोः पतति यद्यपि नाथः सादरं वितनुतेऽपि चटूनि ।
कोपनारुणसरोरुहनेत्रा त्यज्यते तदपि हन्त रुषा न ॥ ३६ ॥
समुन्नतकुचद्वन्द्वकाठिन्यजितपर्वते ।
नवनीतमृदुस्वान्ते कान्ते किं कुरुषे रुषम् ॥ ३७ ॥
उक्ता ब्रवीपि सुरतं न मया निशाया-
स्त्वं दौष्टवेन गजगामिनि लज्जया वा ।
ताम्बूलकज्जलकुआमयचिह्नचित्रं
तत्संनिवेदयति मां रमणोत्तरीयम् ॥ ३८ ॥
अधरमधरे कण्ठं कण्ठे निधाय भुजं भुजे
हृदि च हृदयं मध्ये मध्यं सरोजदृशो दृढम् ।
सरभसमहो चोरावूरुं पदं च पदे बला-
द्गमयति जनो धन्यः कश्चित्समां शिशिरे निशाम् ॥ ३९ ॥
आयास्यामि पुनस्त्वान्तिकमहं यामे व्यतीते प्रिये-
त्युक्त्वा पङ्कजलोचनां रसमसं कान्ता समांजं ययौ ।
जाते क्वापि च सि(शि)ञ्जिते किमु समायातेति मार्गं मुहु-
र्दर्शं दर्शमथो मया निशि मनाग्लब्धो न निद्रारसः ॥ ४० ॥
प्रयाति त्रियामाल्पशेषाधुनापि प्रिये मुञ्च मानं मदुक्तं विधेहि ।
गतः प्रैति कालः पुनर्नेति जल्पत्यसौ ताम्रचूडोऽपि तारस्वरेण ॥ ४१ ॥
सहायमासाद्य सुधामयूखं प्रिये वसन्तं च वने वसन्तम् ।
वियोगिनं मां मदनोऽद्य बाणैः शाणे निघृष्टैर्नितरां छिनत्ति ॥ ४२ ॥

१. 'भ्रातर्वत' इति भवेत्.

पुष्पबाणशरजालनिपातप्रोत्थरन्ध्रनिचये हृदि तस्याः ।
नाथ जीवकलनाय विना त्वामद्य कोकिलरुतानि विशन्ति ॥ ४३ ॥

तस्या गेहमुपेत्य तत्र मृदुलां शय्यां विधायोज्ज्वलां
साकूतं परिधाय भूषणगणं चित्राणि वस्त्राणि ताम् ।
कान्ते कामकलाविचक्षणमते कामातुरं पाहि मा-
मालिङ्गयेति मनोरथैर्हि सकलाः पान्थस्य यान्ति क्षपाः ॥४४॥

श्रावं श्रावं गर्जितं वारिदानां स्मारं स्मारं प्रेयसीं कोऽपि पान्थः ।
ग्रामे चक्रे रोदनं वै तथासौ येनाशेषो ग्राम्यलोको रुरोद ॥ ४५ ॥

नलिननयने दृष्ट्वा पूर्वं प्रियाम्बुदमागतं
रतिपतिशरप्रोत्थैर्वातैर्मुहुस्तरलीकृते ।
कलितवसतिर्मीनाभिख्यो मरालयुवा क्षणं
स तनुचपलः स्थास्यत्युच्चैस्त्वदीयहृदम्बुजे ॥ ४६ ॥

प्रिये हारं दूरं नय विमलमल्लीसुमकृतं
मुधा वारं वारं किमथ घनसारं कलयसि ।
वयस्ये हा शय्यामपनय नवाम्भोजरचितां
विना कान्तं कान्तं न लगति नितान्तं किमपि मे ॥ ४७ ॥

नो वेण्यस्ति सुगन्धितैलमसृणा नैवाञ्जनं नेत्रयो-
र्नो रागोऽधरपल्लवे च मधुरे ताम्बूलजन्मा महान् ।
हारो नैव पयोधरे न रशना मध्ये तथाप्युच्चकै-
स्तारुण्यं हरिणीदृशस्तु विपुलां पुष्णाति शोभां तनौ ॥ ४८ ॥

भुक्तचूतपरिपक्वफलोऽयं सांप्रतं पिकयुवा किल रौति ।
पूर्णकुक्षिरधिकं सखि लोको यत्करोति रचना वचनानाम् ॥ ४९ ॥

अन्याङ्गनाभिरधिकं स करोति केलिं
त्वं तेन मा कुरु विषादमदभ्ररूपे ।
पेपीयते मधुकरः क्व न तं मरन्दं
नो जातु विस्मरति पङ्कजिनीं तथापि ॥ ५० ॥

सर्वां सिञ्चति मेदिनीं जलभरैः संप्राप्य कालं परं
तामेवोष्णकरः करोति किरणैरुग्रैश्च तप्तां भृशम् ।
एवं त्वां रमणो विहाय रुचिरे सौख्यं ददातीव तां
दुःखं मा कुरु तेन पश्य समयायत्तं समस्तं यतः ॥ ९१ ॥
यस्तदान हि पुरा श्रुतो मुदं रोम्णि रोम्णि पुरहा(?) मनोरमः ।
सांप्रतं प्रियतमं विना प्रिये हन्ति मां स किल केकिनः स्वनः ॥९२॥
मा तिष्ठ कान्ते विजने कदाचिन्नावाच्यमस्तीह खलस्य किंचित् ।
यः शङ्कते नैव मनाग्विमूढः कर्णे वदन्वै पुरुषप्रसङ्गम् ॥ ९३ ॥
यद्बुद्धो न पयोनिधौ जलचरैर्दग्धो न चौर्वाग्निना
पीतः कुम्भभुवा गतो न जठरे नाशं सहाम्भोधिना ।
गच्छन्व्योम्नि निराश्रयेन पतितो जानेऽहमेवं प्रिये
धात्रा हन्त वियोगिदुःखकृतये चन्द्रस्ततो रक्षितः ॥ ९४ ॥
केनायं तव कान्त भालफलके लाक्षारसो लापितः
केनेयं विगुणा गुणाढ्यरभसान्माला कृता वक्षसि ।
इत्युक्तः प्रियया सहासवदनो नत्वा पदाम्भोजयो-
रालिङ्ग्याशु दृढं कपोलवलये(?) बालां चुचुम्बे चिरम् ॥९५॥
अयि सुन्दरि संप्रति पश्य पुरश्चरमाचलमस्तकमेति रविः ।
समुपैति तमःपटलीजटिला रजनी कुरु कामकलाः सकलाः ॥ ९६ ॥
गतिर्मन्दा दन्ती चपलनयने चारुतुरगौ
कटाक्षौघः पत्तिर्वचनरचना चारणततिः ।
इदं सैन्यं सर्वं तव वपुषि सारङ्गनयने
कथं स्थाता पत्यौ वद सपदि मानप्रतिभटः ॥ ९७ ॥
कटौ न कलमेखला न कुचमण्डले मालिका
दृशोरपि न चाञ्जनं न पुनरस्ति रागोऽधरे ।
प्रियेण सहचारिणा मदनतस्करस्योच्चकै-
स्ततस्त्वमसि लुण्ठिता निधुवने वने शोभते ॥ ९८ ॥

१. 'पुरु हा' इति भवेत्.

वक्त्रं शारदशुभ्रदीधितिसमं शैवालतुल्याः कचा
नेत्रे पङ्कजसंनिभे च मृदुलौ बाहू मृणालोपमौ ।
इत्थं शीतलवस्तुभिर्विरचिता धात्राब्जनेत्रा तथा-
प्येषा तापपरम्परां वितनुते चित्रं वियोगे स्मृता ॥ ५९ ॥

कपोलेऽम्भोजाक्ष्याः प्रियदशनचिह्नं प्रियदृशोः
सरोजाक्षी वक्त्रच्युतभुजगवल्लीरसलवम् ।
सपत्नी दृष्ट्वाराद्दुरुतरविनिश्वासतरलो-
न्नतोरोजद्वन्द्वं रहसि शनकै रोदिति मुहुः ॥ ६० ॥

कुरङ्गशावाक्षि न पक्षपातस्त्वया विधेयः किल कोकिलेऽस्मिन् ।
प्रियस्य योगे तव सौख्यदोऽयं पुनर्वियोगे भविता सुखाय ॥ ६१ ॥

तन्वी नदीयं द्युतिवारिपूर्णा कराम्बुजा मूर्धजशैवलाढ्या ।
दृङ्नावमारुह्य मनांसि यूनां प्रयान्ति यस्यां हि कुचान्तरीयम् ॥६२॥

मुखं चन्द्रः कैश्यं शनिरवनिपुत्रोऽरुणतरो-
ऽधरो भास्वान्भूयः कनकघटितो भूषणगणः ।
बुधो वाणी हास्यं भृगुमुनिसुतोऽस्या गुरुरयं
नितम्बस्तद्बाला प्रविलसति सर्वग्रहमयी ॥ ६३ ॥

विख्याता रघुवंशवद्गुणगणैः शृङ्गारसारा परं
शृङ्गारे रसमञ्जरीवदमला माघार्थवत्स्तनौ ।
श्लिष्टा नैषधवच्च मानकरणे कादम्बरीवद्व्रते
नानाश्लेषविचक्षणा विजयते सारङ्गरम्येक्षणा ॥ ६४ ॥

माकन्द माकन्दममुं खनित्वा दूरीकुरु त्वं सदनाद्वयस्ये ।
कान्तं विना मां तु नितान्तमस्य कामो निहन्ति स्फुटमञ्जरीभिः॥६५॥

मासेषु धन्यः सखि पौषमासस्तस्मिन्नमी धन्यतमाः पयोदाः ।
अकालवृष्ट्या परदेशगामी प्राणेश्वरोऽयं मम रक्षितो यैः ॥ ६६ ॥

सानन्दं कृतकामकौतुककलाश्रेणीपरिश्रान्तया
तन्वङ्ग्या सह सुन्दराम्बरयुते सुप्तस्य मञ्चे निशि ।

यूनः सौधगवाक्षमार्गपतिताः स्वान्ते नितान्तं नवाः
प्रावृट्कालपयोदपुष्करकणाः कुर्वन्ति तत्संमदम् ॥ ६७ ॥
निर्व्याजारुणयोर्मया चरणयोर्दत्तो नु लाक्षारसो
दत्तं किं नु न वा दृशोर्मृगदृशः शोभोज्ज्वलं कज्जलम् ।
इत्थं नाथ भवत्प्रियाङ्गसुषमा संभ्रान्तचित्ता मुहु-
र्मां तस्याः परिचारिका प्रतिदिनं शृङ्गारमापृच्छति ॥ ६८ ॥
हे भ्रातर्बलिपुष्ट भूतमखिलं यद्भावि तन्निर्णयं
कर्तुं शक्ततरोऽसि यद्वद कदा कान्तो ममायास्यति ।
इत्युक्त्वा मृगलोचना कृतवती यावत्तु मौनं मना-
क्तावद्वीक्ष्य समागतं प्रियतमं लज्जापरीता बभौ ॥ ६९ ॥
गर्जन्त्यम्बुधरा रटन्ति विकटं वन्यास्त्विमे बर्हिणो
वायुर्वाति च शीतलः कुसुमितान्वृक्षान्मुहुः कम्पयन् ।
कामः क्रूरतरः करोति कदनं कुन्ताग्रकठोरैः शरैः
प्राणाः प्राणपति विना सखि कथं स्थास्यन्ति दीना मम ॥७०॥
यतः खिन्नो नित्यं मदनशिखिना ग्रामनगरी
महावीथीमध्ये भ्रमसि विकलस्त्वं खलु युवन् ।
ततो जाने नानेकपगमनशीला हि नियतं
चकोराक्षी सा ते नयनपदवीमागतवती ॥ ७१ ॥
इमे लोकाः सर्वे तरुणजनचेष्टासु कुशलाः
समीक्षन्ते सख्यः सुभग विहसन्त्यत्र निभृतम् ।
अहं खिन्नैकान्तं मनसिजशरैश्चासि किमतः
कराकर्षैरेवं व्यथयसि वृथा मामसमये ॥ ७२ ॥
सुभग विगता हा ते प्रीतिः क्व सा मयि या स्थिता
प्रथममबलापुञ्जादुच्चैः प्रतिक्षणमुत्तमा ।
यदिह सविधासीनां दीनां मनोजशरैः खरैः
कलयसि न मां नाथानाथां दशातिकृशामपि ॥ ७३ ॥

अयमपरलतायाः सादरं हन्त पीत्वा
मधु मम मकरन्दं पातुमायाति भृङ्गः ।
इति मनसि विषादं मल्लिके मा कुरु त्वं
बत वद मधुपानां मानसे को विवेकः ॥ ७४ ॥

सद्वस्त्रसौष्ठवमवद्विगुणाङ्गलक्ष्म्यो
माणिक्यभर्मकृतभूषणभासमानाः ।
वातेरितांम्बुजविभाचयचारुनेत्राः
कस्य स्त्रियो न पुरुषस्य मनो हरन्ति ॥ ७५ ॥

कन्दर्पदर्पकलिताङ्गमनोहराणां
प्रेम्णा स्वयं सुरतमन्दिरमागतानाम् ।
अङ्गानि कोमलतराणि मनोरमाणां
धन्या नराः सरभसं हि परिष्वजन्ते ॥ ७६ ॥

विलसति वलद्वल्लीपुष्पप्रभूतरजोभरैः
सततमबले नन्ता केकी करोति च ताण्डवम् ।
जलदपटले विद्युद्वल्ली विभाति विलासिनि
त्वमपि च तथा साकं भर्त्रा विधेहि निजेप्सितम् ॥ ७७ ॥

दूरं गच्छ मयूर चातक युवन्वाचालमुच्चैः कल-
ध्वानं कोकिल किं करोषि जलदा रावं निजं स्तम्भय ।
सख्यः किं कुरुथानुलेपमधुना चन्द्रोल्लसच्चन्दनै-
रित्थं सा विरहातुरा तव कृते बाला वदत्याकुला ॥ ७८ ॥

पश्यान्ते तिमिरौघवारणघटाप्रध्वंसपञ्चाननो
भानोर्भूवलयेऽखिले प्रसरति प्रौढो मयूखव्रजः ।
ताराभिः सहतारकापतिरसौ मन्दप्रभो दृश्यते
नो तस्मादुचितं पुनश्च शयनं जातं प्रभातं प्रिये ॥ ७९ ॥

वर्षे वर्षमवर्षणं पुनरपि प्राप्नोति धाराधरो
ग्रामं ग्राममगामितामपि पुनः कालेऽनिशे गच्छति ।

अस्तं सायमुपैति हि प्रतिदिनं प्रातोदयोऽप्यंशुमां-
श्चित्रं भामिनि जातु याति तव नो रोषो हि दोषाकरः ॥८०॥

उक्तं दुर्वचनं मया न सुभगे हास्येऽपि दुःखप्रदं
त्यक्त्वा त्वामयि भाषितैरपि मया नान्याङ्गना लालिता ।
त्वामेकामनवद्यभूषणभरैः संभावयामि त्वया
हे निष्कारणकोपने वद कृतः कोपः किमर्थं मयि ॥ ८१ ॥

पीयूषादप्यधिकमधुरं तद्वचस्ते च नेत्रे
चञ्चन्नीलोत्पलदलरुची सोज्ज्वला वक्त्रकान्तिः ।
ते ते भावा निधुवनविधौ हन्त बिब्बोकमुख्याः
सर्वं दुःखं जनयति सखे नः स्मृतं नीरजाक्ष्याः ॥ ८२ ॥

प्राणाधीश पुरः कपीशजनकप्रोद्भूतनूतद्रुम-
द्राघिष्ठामितमञ्जरीकवलने सन्त्येकतानाः खगाः ।
यस्मिन्मञ्जुवनप्रियप्रियतमा गायन्ति सत्पञ्चमं
तस्मिन्नुत्सहते विहाय तरुणीं गन्तुं मधौ कः पुमान् ॥ ८३ ॥

नित्यं पङ्कजिनी यथा मधुलिहः स्वान्ते वसत्युत्तमा
नूत्ना कज्जलनीलनीरदघटा चित्ते यथा बर्हिणः ।
कान्तिश्चन्द्रमसश्चकोरशकुनेर्नित्यं यथा मानसे
सा पङ्केरुहलोचना सखि तथा नित्यं मदीये हृदि ॥ ८४ ॥

कस्मादद्य न भूषितं वपुरिदं सद्भूषणैः काञ्चनैः
कस्मादच्छतराणि नाद्य वसनान्यङ्गीकृतानि त्वया ।
उक्ता सेति मया मनोज्ञ विजने बाला विशालाक्ष्य मा
क्षिप्रं रोदनमेकमेव विदधे प्रत्युत्तरं नो ददौ ॥ ८५ ॥

इतः केकी नादैस्तुदति शतकोटिप्रतिभटै-
रितः कामः कामं कठिनतरबाणैः प्रहरति ।
इतो गर्जत्युच्चैर्जलधरगणो भीमनिनदै-
र्विना नाथं जाने न सखि भविता किं ननु मम ॥ ८६ ॥

पूर्वं नेत्रयुगं सुखं बहुतरं प्राप्नोति संदर्शना-
त्पश्चादुत्सुकतामुपैति हि मनः सानन्दसंभाषणात् ।
देहो मज्जति कामकौतुकरसाम्भोधौ समालिङ्गना-
त्किं किं शर्म न संतनोति तरुणप्राणप्रियासंगमः ॥ ८७ ॥

मदन किमु न त्वं वै दग्धो हरेण दृगुच्छल-
ज्ज्वलनकठिनज्वालाजालप्ररूढकणोत्करैः ।
किमुत तव नो जाता कान्तावियोगभवा व्यथा
विषमविशिखैर्यन्मामेवं दुनोषि वियोगिनम् ॥ ८८ ॥

विदितमवनौ जन्मस्थानं परं पयसां निधि-
स्तव वपुरिदं पीयूषाढ्यं मृणालसमाः कराः ।
विकचकुमुदान्मूर्ध्नी खिन्नां वियोगजया रुजा
हिमकर महच्चित्रं यन्मां दुनोष्यबलां बलात् ॥ ८९ ॥

दूरे तिष्ठति कार्मुकं स्मरशरव्राताः परं दुःखदाः
प्रोत्कण्ठा तरलं भृशं मम मनः प्राणाः कठोराः परैः ।
चन्द्रादच्छतरं कुलं च सहसा लज्जावियोगज्वरः
सोढव्याः सखि सांप्रतं कथममी हा दुःसहा वह्नयः ॥ ९० ॥

रम्भापत्रविनिर्मितां सुशिशिरां शय्यां चितां वेत्ति सा
जानाति स्फुटकंजगुल्मुकसमं न्यस्तं कुचाभ्यन्तरे ।
प्रत्यङ्गं प्रतिलेपितं मलयजं दावानलं मन्यते
तस्यास्तापनिवारणाय सुभग त्वामौषधं वेद्मि तत् ॥ ९१ ॥

आगच्छामि झटित्यहं प्रियतमे कार्यं विधायाल्पकं
गत्वेतस्त्वमिहैव तिष्ठ विजने तावद्गृहे सुन्दरे ।
इत्युक्त्वा सखि वञ्चकः स तु गतस्तत्र स्थिता या निशा
सर्वा सा हि गता ममातिकुटिलो नो वै तथाप्यागतः ॥ ९२ ॥

पत्राली न कपोलयोर्न हृदये हारो दृशोर्नाञ्जनं
नो वक्त्रे बत वीटिका न च कटौ संदृश्यते मेखला ।

नूनं यत्प्रभवात्स एव सकलैर्भूपागणैः संनिम-
स्तन्वङ्ग्याः सुरतान्तकान्तिमतुलां कोपः करोति स्फुटम् ॥ ९३॥
चञ्चलं किमपि नेक्षणद्वयं नास्ति यद्यपि च वाचि वक्रता ।
किंचिदुन्नतमुरस्तथापि मे मानसं हरति हन्त सुभ्रुवः ॥ ९४ ॥
गाथाभिः सुकृतध्वजाभिरमितैः पद्यैश्च धर्मोत्कटैः
प्रध्वस्तामितपापया श्रुतिपुटैर्निष्पीतया गीतया ।
वारं वारमिदं सुशिक्षितमपि स्वान्तं सखे मामकं
सौन्दर्यद्रुममञ्जरीमभिनवामेकान्ततां मुञ्चति ॥ ९५ ॥
अपाकुरु कपोलतः सखि भुजङ्गवल्लीरसं
परित्यज कुचस्थलात्रुटितबन्धनं कञ्चुकम् ।
पिधेहि दशनच्छदे दशनजक्षतं लाक्षया
वदेत्थमबलागणे गुरुजने कथं यास्यसि ॥ ९६ ॥
चरणपतनैर्वाक्यैर्दानैर्निरन्तरसेवया
प्रियतममनो गृह्णन्त्यन्याः शठा हि पुरन्ध्रयः ।
स्मरशरखरैः शोभासारैर्दृगन्तनिरीक्षणैः
सहचरि मया कान्तः कामं कृतः परिचारकः ॥ ९७ ॥
माहेन्द्रीप्रभवाम्बुवाहपटलप्रत्यग्रबिन्दुव्रजैः
शीता धूलिकदम्बपुष्पजरजःपुञ्जैः सुगन्धीकृताः ।
मन्दा सुन्दरसुन्दरीजनकचव्यूहान्तरालोद्गते-
र्वाता वान्ति वियोगिनामसुखदाः संयोगिनां सौख्यदाः॥ ९८ ॥
कस्मात्तन्वि तनूनि संप्रति समान्यङ्गानि जातानि ते
कस्मात्कोकनदप्रभं मुखमिदं जातं हि चन्द्रोपमम् ।
एवं पृच्छति वल्लभेऽम्बुजमुखि प्रोच्य(?)स्वभावादिति
व्यावृत्याथ तया सगद्गदरवं मुक्तश्च बाष्पोत्करः ॥ ९९ ॥
प्रावृट्कालनवीननीलजलदध्वानं निशीथे मुहुः
श्रुत्वात्यन्तभयप्रदं स्मरशरक्षीणा हि पान्थाङ्गना ।

शय्यायामवनौ निपत्य च पुनः शय्यातले भूतले
वारं वारमुदग्रकान्तविरहज्वालाकुलातङ्कति ॥ १०० ॥
शृङ्गारशतकमेतज्जनार्दनाख्यद्विजन्मना रचितम् ।
तिष्ठतु तावद्यावत्तिष्ठति धरणीतलं सकलम् ॥ १०१ ॥

इति श्रीगोस्वामिजगन्निवासात्मजगोस्वामिजनार्दनभट्टकृतं
शृङ्गारशतकं संपूर्णम् ॥

---

## दैवज्ञश्रीसूर्यकविविरचितं

# रामकृष्णविलोमकाव्यम् ।

स्वकृतटीकया समेतम् ।

श्रीमन्मङ्गलमूर्तिमार्तिशमनं नत्वा विदित्वा ततः
शब्दब्रह्ममनोरमं सुगणकज्ञानाधिराजात्मजः ।
यद्ग्रन्थाध्ययनैर्विनेयनिवहोऽप्याचार्यचर्यामगा-
त्सोऽहं सूर्यकविर्विलोमरचनं काव्यं करोम्यद्भुतम् ॥
छन्दःपूरणमुत्क्रमक्रमविधौ साकाङ्क्षता तत्पदे-
ष्वारम्भाचरिते क्रमोऽपि सुतरामेतत्त्रयं दु...
एवं सत्यपि मन्मतिः कियदपि प्रागल्भ्यमालम्बते
तत्सर्वं गुणिनः क्षमन्तु यदहो यूयं श्रमज्ञाः स्वयम् ॥

कदाचिदपि संतरेत्कविपरो नरो नीरधिं कथंचिदपि धावति प्रवरधाम धाराध्वनिः ।
कृतेऽप्यतिविशारदा प्रचुरशारदानुग्रहं विलोमकविताकृतौ सुकविधीरधारा भवेत् ॥
भागीरथी रामकथातिरम्या कालिन्दिका कृष्णकथा मनोज्ञा ।
सरस्वती सूर्यकवेस्तृतीया स्नातुं प्रयागेऽत्र मतिः कवीनाम् ॥
समाक्षराद्विर्विषमाक्षरार्थां द्वेधा भवेद्व्यत्तकवित्वसीमा ।
समानभिन्नार्थतया द्विधाद्या भिन्नाक्षरार्था च भवेद्द्वितीया ॥

अथ कवित्वपरिभाषा पिङ्गलादौ कथिता—

'अध्याहारो यत्तदोर्वा क्रियायाः पादाद्यन्ते वा विसर्गो विसर्गः ।
कुत्राप्यूह्या लक्षणाव्यञ्जना वा विद्यादेतां चित्रकाव्यानुपूर्वीम् ॥'
नैकाक्षराणि छन्दोक्तिर्नाप्रसिद्धाभिधानकम् ।
नैव व्याकरणक्लिष्टं द्राक्षापाकोऽत्र केवलम् ॥

अथ ययोः कथाप्रसङ्गस्तावेवेष्टदेवतात्वेन प्रणमति—

तं भूसुतामुक्तिमुदारहासं वन्दे यतो भव्यभवं दयाश्रीः ।
श्रीयादवं भव्यभतोयदेवं संहारदामुक्तिमुतासुभूतम् ॥ १ ॥

तं भूसुतामुक्तिं वन्दे । भूसुताया रावणरक्षितायाः सीताया मुक्तिर्मोक्षणं यस्मात्तं राघवं वन्दे । नमस्कारोमीत्यर्थः । किंभूतम् । उदारहासम् । उदारो गम्भीरो हासो यस्यासौ तथा । उद्वेगनिमित्तेषु सर्वानर्थेषु प्राप्तेष्वप्यनुद्विग्नमित्यर्थः । पुनः किंभूतम् । भव्यभवम् । भव्यः पवित्रो भवोऽवतारो यस्यासौ तथा । अथ कथम् । यतो दयाश्रीश्च बभूवेत्यध्याहारः । दया भूतदया श्रीश्च शोभा च तयोर्निदानमित्यर्थः । एतद्रामपक्षे ॥ कृष्णपक्षे तु—श्रीयादवं वन्दे । किंभूतम् । भव्यभतोयदेवम् । भव्या उत्तमा भा दीप्तिर्यस्यासौ सूर्यः । तथा तोयशब्देन चन्द्रः । जलात्मकत्वात् । तयोर्योतनाद्देवः । सूर्याचन्द्रमसोरपि प्रकाशक इत्यर्थः । तदुक्तम्—'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' अथ किंभूतं यादवम् । संहारदामुक्तिम् । संहारोऽनर्थस्तं ददातीति तथाविधा पूतना तस्या मुक्तिर्मोक्षो यस्मात्स तथा तम् । पुनः किंभूतम् । उत प्रत्युत असुभूतम् । सर्वत्र प्राणरूपेणावस्थितमित्यर्थः । अथवा प्राणनं जीवनं तद्रूपं चैतन्यस्वरूपम् । तदुक्तम्—'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इत्यादि । पूतनायै मुक्तिं दातुमन्तर्यामित्वेन स्वयमेव प्रेरकोऽभूदित्युक्तम् ॥

ननु देहवतोऽपि रामादेः कथमन्तर्यामित्वमित्याशङ्क्य तुल्याक्षरयेन्द्रवज्रयाह—

चिरं विरंचिर्न चिरं विरंचिः साकारता सत्यसतारका सा ।
साकारता सत्यसतारका सा चिरं विरंचिर्न चिरं विरंचिः ॥ २ ॥

विरंचिर्ब्रह्मा द्विपरार्धावसानं यावत्सर्वभूतापेक्षया चिरं तिष्ठतीति प्रथमम् । अपरं तु आब्रह्मभुवनाल्लोकाः पुनरावर्तिन इति श्रवणान्न चिरं विरंचिरिति ज्ञायते । तस्यायुषः परिमितत्वात् । अथ साकारता सत्यसतारकास्ति । सेति तच्छब्देन रामस्य या साकारता सत्यसतारका । तारकेण सहवर्तमाना सतारका । सत्या सती सतारका सत्यसतारका । सत्यमबाधितं विज्ञानमयं तारकं यद्ब्रह्म तद्रूपेत्यर्थः । रामपक्षे एतत् ॥ कृष्णपक्षे तु—साकारतासत्यसतारकास्ति । या कृष्णरूपिणी साकारता सा सती सर्वदैव वर्तमाना । नित्येत्यर्थः । किंभूता । असतारका । तारकाभिः सहवर्तमानं सतारकं व्योम, तत्र विद्यते यस्याः सा असतारका । व्योमापि यस्यां लीयते इतः परं नित्यत्वं किं वर्णनीयमित्यर्थः । चिरं विरंचिरित्यादि पूर्ववत् ॥

अथ रामकृष्णाभ्यां यां मायामवलम्ब्य साकारता स्वीकृता तस्याः स्वरूपं समाक्षरया रथोद्धतयाह—

तामसीत्यसति सत्यसीमता माययाक्षमसमक्षयायमा ।
माययाक्षमसमक्षयायमा तामसीत्यसति सत्यसीमता ॥ ३ ॥

असति सत्यसीमता तामसीति । असति शुक्तिकारजतवदसत्ये प्रपञ्चे सत्यसीमता सत्यत्वमर्यादा तामसी मायेति । अथास्या असत्यत्वं कार्यवशादनुभूयत इत्याह—मायेति । यया मायया कृत्वा मा लक्ष्मीः अयमा न विद्यते यमो नियमो यस्याः सा तथा । योग्येयोग्ये वा कुत्र स्थातव्यं कियत्कालं स्थातव्यमिति क्षणभङ्गुराया लक्ष्म्या यमो नियमो नास्ति । उत्तरक्षणे बादरर्शनाभ्रमरूपतेत्यर्थः । कथंभूतया यया । अक्षमसमक्षया । न क्षमं अक्षमं समक्षं यस्याः सा तथा । तस्या मायायाः स्वरूपे विचार्यमाणे समक्षत्वं न प्राप्नोति प्रेक्षणेनैव नश्यतीत्युक्तत्वात् । यतः परमात्माज्ञानरूपो मायात्वज्ञानरूपा सा कथं ब्रह्मसमक्षतां याति । यतो ज्ञानमज्ञानस्यैव घातकमित्यर्थः । एवमुभयत्रापि सममिति समाक्षरपदद्वयम् ॥

एवमविद्यायाः स्वरूपं निरूप्येदानीं विद्यारूपं विषमाक्षरया शालिन्याह—

का तापघ्नी तारकाद्या विपापा त्रेधा विद्या नोष्णकृत्यं निवासे ।
सेवा नित्यं कृष्णनोद्या विधात्रे पापाविद्याकारताघ्नी पताका ॥ ४ ॥

अत्र त्रिविधसंसारतापघ्नी कास्तीति विचार्यमाणे त्रेधा विद्यास्तीति । त्रिःप्रकारा त्रेधा ऋग्यजुःसामात्मिका । ननु तर्हि न कर्मकाण्डं विद्याशब्दव्यपदेश्यम् । विद्यां चाविद्यां च 'यस्तद्वेदोभयं सह' इत्याद्युक्तत्वादित्याशङ्क्याह । किंभूता त्रेधा विद्या । तारकाद्या । तारकं परं ब्रह्म श्रीरामाख्यमाद्यं श्रेष्ठत्वान्निरूपणीयत्वेन प्राप्तं यस्याः सा तथा । उपनिषद्विद्यादिकेत्यर्थः । पुनः किंभूता । विपापा विगतं पापमज्ञानं यया सा तथा । अथ तस्याः पापोपशामकत्वे दृष्टान्तमाह—निवासे नोष्णकृत्यमिति । नितरां वासो यस्मिन्निति निवासः शीतलच्छायाद्युपस्कृतं गृहं तस्मिन्नुष्णकृत्यं संतापभवनं नास्ति । तद्वद्वेदार्थपरिशीलनेन त्रिविधतापोन्मूलनमित्यर्थः । रामपक्षे चैतज्ज्ञेयम् ॥ कृष्णपक्षे तु—कृष्णभक्तिसहकृतैव विद्या अज्ञाननाशकर्त्रीत्याह—सेवा नित्यमिति । विधात्रेऽनुष्ठात्रेऽर्जुनाय ब्रह्मणे वा कृष्णनोद्या नित्यं सेवा पापाविद्याकारताघ्नी भवति । कृष्णेन नोद्या प्रेर्यमाणा नित्यं सेवा अनन्यभक्तिः सा पापं दुःखं तन्मूलमविद्याकारोऽज्ञानं तदुभयमपि नाशयति । तदुक्तं भगवद्गीतायाम्—'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥' इति । अनन्यभक्तिरेव कृष्णसाक्षात्कारे निमित्तमिति सदृष्टान्तमाह—किंभूता सेवा । पताका । पताकेव पताका । यथा गरुडलाञ्छनाङ्किता कृष्णध्वजपताका दृष्टमात्रैव आगतः कृष्ण इति साक्षात्कारं व्यनक्ति तद्वदनन्यभक्तिरपीत्यर्थः ॥

अथ प्रथमं मायापरमात्मनः समक्षं स्थातुं न शक्नोतीति स्वरूपानुसंधानेन मायायास्तिरस्कार इत्युक्तम् । तत्रात्मज्ञाने महानायासः । श्रीरामसेवया तु विद्याप्राप्तिस्तया तत्कालमेवाज्ञाननिरास इति विषमाक्षरयेन्द्रवज्रयाह—

श्रीरामतो मध्यमतोदि येन धीरोऽनिशं वश्यवतीवराद्वा ।
द्वारावतीवश्यवशं निरोधी नयेदितो मध्यमतोऽमरा श्रीः ॥ ५ ॥

वा इत्यथवा स पुमान्धीरः येनानिशं श्रीरामतः मध्यमतोदि श्रीरामतो निमित्तभूतान्मध्यं मध्येऽवभासमानं प्रपञ्चाख्यमतोदि नाशितम्। स एव धीर इत्यर्थः। किंभूताच्छ्रीरामतः। वश्यवतीवरात्। वशं नेतुं समर्थं वश्यं रूपं तद्वती जानकी तस्या वरात्। भर्तुरित्यर्थः॥ कृष्णपक्षे तु—निरोधी पुमान्मध्यं नु चिदचिद्ग्रन्थिस्वरूपं मनः इतः प्रपञ्चाद्द्वारावतीवश्यवश नयेत्। वायुनिरोधीन्द्रियनिरोधी च पुमान्द्वारावत्या वश्यस्तत्रासक्तः कृष्णस्तत्र वशं नयेत्। योगेन वैराग्येण वा चित्तं निरुध्य श्रीकृष्ण एव एवं वशं नयेदित्यर्थः। तत्र किं भवतीत्याह—अतोऽस्मादुपायाच्छ्रीर्मोक्षलक्ष्मीरमरास्थिरा भवति। अन्यथा निरोधवतानपि विघ्नैरभिभूयत इत्यर्थः। उक्तं च—'तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्' इत्यादि॥

अथ कथाप्रारम्भः—तत्र विश्वामित्रः स्वयज्ञसंरक्षणार्थं रामं याचितुं दशरथं प्रत्यगादिति विषमाक्षरया रथोद्धतयाह—

कौशिके त्रितपसि क्षरव्रती योऽददाद्द्वितनयस्वमातुरम्।
रन्तुमास्वयन तद्विदादयोऽतीव्ररक्षसि पतत्रिकेशिकौ॥ ६॥

यः क्षरव्रती द्वितनयस्वं कौशिकेऽददात्। क्षरेषु सर्वेषु भूतेषु व्रतममीप्सितपूरणं येन तथाविधो दशरथो द्वयोस्तनययोः समाहारो द्वितनयं तदेव स्वं धनं कौशिके विश्वामित्रे दत्तवान्। ननु प्राणादपि प्रियतमं पुत्राख्यं धनं विश्वामित्रार्थं केन निर्बन्धेन दत्तवानित्याशङ्क्याह—किंभूते विश्वामित्रे। त्रितपसि त्रिःप्रकारकं त्रिगुणात्मकं प्रसादक्षोभसमर्थं तपो यस्य स तथा। तस्मिन्किंभूतं द्वितनयस्वम्। आतुरम्। पित्रोर्वियोगादित्यर्थः॥ कृष्णपक्षे तु—श्रीशुकः परीक्षितं प्रति वक्ष्यमाणं कृष्णकथोद्देशमनुवदति—भो आस्वयन, आ समन्तात्सुष्ठु अयनं गतिः परमार्थगतिर्यस्य तथाविधः परीक्षित्। तद्विद्कृष्णोऽतीव्ररक्षसि न विद्यते तीव्रं रक्षः यस्मात्तदतीव्ररक्षस्तस्मिन्पूतनाख्ये। तथा पतत्रिकेशिकौ पतत्री पक्षी बकासुरः, केशी हयरूपी दैत्यः, तयोः कुः पार्थिवशरीरं तस्मिन्नादयोऽस्ति। आसमन्ताद्दया कृपा यस्य स तथा। पूतनाबककेशिशरीराणि कृपयैवातारयदित्यर्थः। किं कर्तुम्। रन्तुं क्रीडां कर्तुम्। क्रीडाच्छलेनेत्यर्थः॥

अथ विश्वामित्रेण सह रामं प्रस्थितमाकर्ण्य राक्षसास्ताटकां प्रेषयामासुरित्याह—

लम्बाधरोरु त्र्यलम्बनासे त्वं याहि याहि क्षरमागताज्ञा।
ज्ञातागमा रक्ष हि या हि या त्वं सेना बलं यत्र रुरोध बालम्॥ ७॥

भो लम्बाधरोरु, त्वं क्षरं याहि। अधरश्च ऊरू च अधरोरु। लम्बमधरोरु यस्याः सा लम्बाधरोरुः तस्याः संबोधनम्। तथा किंभूते। त्र्यलम्बनासे। त्रये लोकत्रये लम्बी नासा यस्याः सा तथाविधे। त्वं क्षरं नाशयोग्यं मानुषदेहं रामं याहि याहि। आदरे वीप्सितद्विरुक्तिः। किंभूता त्वम्। आगताज्ञा। आगता प्राप्ता आज्ञा रावणाज्ञा यया तथा॥ कृष्णपक्षे—श्रीकृष्णं गोकुलस्थितमाकर्ण्य कंसः पूतनामाज्ञापयति—हे पूतने, त्वं तत्र याहि। यत्रं पुरुषार्थं रक्ष।

तत्र केत्याह—यत्र सेना बालं ररोध । इनेन स्वामिना नन्देन सहवर्तमाना यशोदा बालं कृष्णं ररोध रुद्ध्वा आच्छाद्य स्थितवती तत्रेत्यर्थः । कुत एतावन्तं विश्वासं कृतवतीत्याह—ह्रीति निश्चयेन । ज्ञातागमा ज्ञात आगमो यया सा । कोऽपि बालघातार्थे आयास्यतीति संभावयन्तीत्यर्थः ॥

अथ ताडकया सह शूर्पणखापि समागतेत्याह—

लङ्कायना नित्यगमा धवाशा सार्कं तयानुन्नयमानुकारा ।
राकानुमा यन्नु यातकंसा शावाधमागत्य निनाय कालम् ॥ ८ ॥

लङ्कायना तया साकं नित्यगमाभूत् । लङ्कायामयनं गतिर्यस्याः सा शूर्पणखा तया ताडकया साकं नित्यगमाभूत् । नित्यं गच्छतीति नित्यगमा । पर्यटनासक्ताभूदित्यर्थः । अनुन्नयमानुकारा । न नुन्नः प्रेरितोऽनुन्नः स्वतः प्रवृत्त एवंविधो यो यमः कृतान्तस्तद्वदनुकारो यस्याः सा. । निष्कृपेत्यर्थः । किंभूता । धवाशा धवविषयिणी आशा यस्याः सा तथा । रामं भर्तारमपेक्ष्यमाणा ॥ कृष्णपक्षे—शावाधमा आगत्य कालं निनाय । शवप्रियाः शावाः क्रव्यादास्तेष्वधमा बालघातिनी पूतना आगत्य गोकुलं प्राप्य कालं स्वग्रासकं कृष्णं निनाय प्राप्तवती । ननु राक्षसी गोकुलान्तर्गता तत्रस्थैः किं पूर्वं न निषिद्धेत्याह—यतो राकानुमा । राका पूर्णिमा तया अनुमीयते सा । प्रथमं राकावदतिसुन्दरं रूपं धृतवती तद्दाक्षिण्येन केनापि गृहान्तर्गमनेनाक्षिप्ता । नन्विति निर्धारेण । यातकंसा । यातोऽन्तरितः कंसो यस्याः सा तथा । पुनः कंसेन न दृष्टा । कृष्णग्रस्ता सती विपन्ना इत्यर्थः ॥

अथ विश्वामित्रस्य यागव्यवस्थामनुष्टुबाह—

गाधिजाध्वरवैरा ये तेऽतीता रक्षसा मताः ।
तामसाक्षरतातीते ये रावैरध्वजाधिगाः ॥ ९ ॥

गाधिजो विश्वामित्रस्तस्याध्वरो यागस्तत्र वैरं येषां ते खरदूषणादयस्ते अतीता रामेण ते हताः । देहादिप्रपञ्चमतिक्रम्य गता इत्यर्थः । किंभूताः । रक्षसा रावणेन मताः स्वसंमानेन प्रसिद्धाः ॥ कृष्णपक्षे—पूतनावधमाकर्ण्य कंसेनान्ये, बकतृणावर्तादयः प्रेषिताः इत्याह—तामसाक्षरतातीते कृष्णे सति ये रावैः प्रेषिता दैत्या ते अध्वजाधिगा आसन् । तामसाहंकारेणासमन्तादुत्पन्नायाक्षरता प्रपञ्चात्मकता ततोऽप्यतीते परब्रह्मरूपे कृष्णे सति दैत्या रावैः कंसनिदेशशब्दैरागतास्तेऽध्वजाधिगा गोकुलमार्गयाने जाता या आधिर्मानसी व्यथा तां गच्छन्तः प्राप्ताः । अहो गोकुलं गत्वा प्रपञ्चातीते कृष्णेऽस्माभिः किं कर्तव्यम् । पूतनावन्मर्तव्यमिति पर्याकुलचित्ता आसन्नित्यर्थः ॥

अथ मुनिभिः केवलं रामार्पणबुद्ध्या कृतस्य यागस्य प्रशंसामाह—

तावदेव दया देवे यागे यावदवासना ।
नासवादवया गेया वेदे यादवदेवता ॥ १० ॥

देवे रघुनाथे दया कृपा प्रीतिस्तावदेव संभवतीति। यावद्यागेऽवासना यागे क्रियमाणेऽवासना स्वर्गादिभोगप्राप्तये इच्छाराहित्यम्। तस्मात्फलराहित्येन यो यागः स रामप्रीतये भवतीत्यर्थः॥ कृष्णपक्षे—कृष्णे परब्रह्मस्वरूपतामवधारयन्तो दैत्याः पुनः परामर्शं चक्रुरित्याह—यादवदेवता कृष्णमूर्तिर्वेदे उपनिषद्भागे या गातुं निरूपयितुं योग्या न तु साक्षात्कारं कर्तुमथवान्येन निरूपयितुं न शक्यते इत्याह—नासवादिति। असुसंबन्धि आसवं प्राणात्मकं शरीरम्। अवेत्युपसर्गोऽवलक्षणलक्षोतकः। तथा चावलक्षणान्मनुष्यदेहात्तत्काशात्रहि निरूपयितुं शक्यते। एवं प्रथमं तस्य निरूपणासंभवे तस्य हननमस्माभिरसंभावितमेवेत्यर्थः। वस्तुतस्तु आसवात्। आसवादिति मदजननवस्तुमात्रोपलक्षणम्। तस्मान्न अवया न ज्ञेया। तन्निमित्तमासवाद्दुर्ज्ञेयेत्यर्थः। अवयेति अवयायते इत्यवया। 'आतोऽनुपसर्गे कः' इति कः। पश्चाट्टाप्। अवपूर्वको यातिरेतिश्च ज्ञानार्थः॥

अथ स्वयंवरदर्शनार्थं कौशिकेन सह जनकगृहं प्रति गतो रामस्तत्र किं कृतवानित्याह—

सभास्वये भग्नमनेन चापं कीनाशतानद्धरुषा शिलाशैः।
शैलाशिषारुद्धनताशनाकी पञ्चानने मग्नभये स्वभासः॥ ११॥

अये श्रोतः, अनेन रामेण सभासु शिलाशैः सह चापं भग्नम्। सभासु स्थितासु शिलावद्दृढा जानकीविषयिण्याशा येषां ते शिलाशाः राजानस्तैः सह चापं भग्नम्। न केवलं चापं भग्नम्। राजानो भग्ना भग्नमनोरथाः कृता इत्यर्थः। कीनाशतानद्धरुषा कीनाशस्य भावः कीनाशता यमरूपता तया आनद्धोऽभिनिविष्टो रावणस्तस्य रुषा कोपेन। प्राचीनवैरानुबन्धिनिमित्तेन पूर्वं धनुरुद्धर्तुं प्रवृत्तो रावणो धनुषाधः पतितः, परंतु न हत इति रुषा कोपेनेवेत्यर्थः॥ कृष्णपक्षे—गोवर्धनोद्धरण इन्द्रो लाघवं प्राप्त इत्याह—पञ्चानने नृसिंहे कृष्णे स्वभासः स्वप्नतापान्मग्नभये निःशङ्कं यागं कारयितुं प्रवृत्ते सति शैलाशिषारुद्धनताशनाकी हष्टः शैलस्य गोवर्धनस्याशिषा अभीष्टपूरणेन रुद्धा रोधं प्रापिता अतएव नता भग्ना हविर्ग्रहणेच्छा यस्य तथाविधो नाकी स्वर्गाधिपोऽभूदित्यर्थः। 'यो गोवर्धनभूधरं करधृतं लीलाम्बुजन्मायितं कृत्वा सप्तदिनानि नाचलदपाद्घोषांश्च घोरापदः। यश्चक्रे निजशासने हरिविरिञ्च्याखण्डलादीन्सुरानुद्दण्डानपि सोऽवताज्जगदिदं गोपालराजो हरिः॥' इति श्रीभागवते दशमस्कन्धे॥

अथ स्वयंवरार्थमागतानां राज्ञां वर्णयन्नाह—

न वेद यामक्षरभामसीतां का तारका विष्णुजितेऽविवादे।
देवाविते जिष्णुविकारता का तां सीमभारक्षमयादवेन॥ १२॥

यामक्षरभामसीतां लोको न वेद। अक्षरमविच्युतं भाम सौभाग्यं यस्याः सा अक्षरभाम्नी सा चासौ सीता च तां न जानातीत्यर्थः। अविवादे विष्णुजिते का तारका विष्णुना रामचन्द्रेण जितं विष्णुजितं तस्मिन्विष्णुजिते अविवादे सर्वसमते सति का तारका ता-

रकात्वं का प्राप्नोतीत्यर्थः । तारकासंबन्धस्तु चन्द्रं विनान्येन सह न भवति। प्रकृते रामचन्द्रेण सह सीतैव तारकात्वं प्राप्तुमर्हति । नान्येनेत्यर्थः ॥ कृष्णपक्षे—गोकुलोपरि क्षुब्धस्येन्द्रस्य न किंचिच्चलतीत्याह—सीम्नो मारः सीममारः सीमा गिरिमर्यादा तस्या मारक्षमश्चासौ यादवश्च तेन देवचक्रत्या अविते रक्षिते गोकुले जिष्णोरिन्द्रस्य शिलावर्षणादिविकारता का । न कापीत्यर्थः ॥

अथ धनुषि भग्ने सति जानक्या रामो वृत इत्याह—

तीव्रगोरन्वयत्रार्यो वैदेहीमनसो मतः ।

तमसोऽन महीदेवैर्योत्रायन्वरगोव्रती ॥ १३ ॥

तीव्रा गावः किरणा यस्यैवंविधस्य तीव्रगोः सूर्यस्यान्वयं वंशं त्रायन्ते तेऽन्वयत्राः सूर्यवंशाभिमानरक्षका दिलीपादयस्तेष्वार्यः श्रेष्ठः सूर्यवंशालंकरणं रामः वैदेहीमनसो मतः जानक्या मनःपूर्वकं वृतः । धनुःपणबन्धेनेत्यर्थः ॥ कृष्णपक्षे—ब्रह्मसत्रं प्रति गतः कृष्णस्तैर्न मानित इत्याह—अत्रायन्वरगोव्रती कृष्णः अत्र ब्रह्मसत्रे आयन्प्राप्तः वरा भाग्यशालिन्यो गाव एव व्रतं परिपालितत्वेनोपस्थितं यस्यासौ गोव्रती कृष्णः तमसोऽज्ञानान्महीदेवैर्ब्राह्मणैर्न मानित इत्यध्याहारः ॥

अथ जानक्याः पारमार्थिकं स्वरूपं वर्णयन्नाह—

वेद या पद्मसदनं साधारावततार मा ।

मारता तव राधा सा नन्द सद्मप यादवे ॥ १४ ॥

साधारा मा अवततार । आधारेण विष्णुना सह लक्ष्मीः अवतारं चक्रे । सा का । या पद्मसदनं वेद पद्ममेव सदनं अधिवासस्थलं वेद ज्ञातवती । अनेन लक्ष्म्याः पूर्णावतार इति सूचितम् । अथ वा पद्मं विष्णोश्चरणकमलं तदेव सदनं विश्रामस्थलं जानातीति ॥ कृष्णपक्षे—अथ कापि गोपिका नन्दं प्रति राधायाः पैशुन्यं वदति—भो सद्मप गृहाधीश नन्द, सा तव राधा । सेति तच्छब्देन विदितवृत्तान्तेति सूचितम् । तया यादवे सैवं कृष्णे मारता मदनरूपता इत्येवं समाचारोऽस्ति । अनेन कृष्णस्य वयःसंबन्धिनी वर्णिता भवति ॥

अथेश्वरस्य धनुर्भङ्गमाकर्ण्य परशुरामोऽभ्यगादित्याह—

शैवतो हननेऽरोधी यो देवेषु नृपोत्सवः ।

वत्सपो नृपु वेदे यो धीरोऽनेन हतोऽवशैः ॥ १५ ॥

नृपोत्सवः शैवतो हनने अरोधी । नृपस्य आगतस्य दशरथस्योत्सवो यस्मात्स नृपोत्सवो रामः शिवस्य पक्षपातीति शैवः परशुरामस्तस्माच्छैवतः हनने कोपाविर्भावेऽप्यरोधी न रोधं प्राप्तवान् । अकुण्ठितशक्तिरासीदित्यर्थः । विमानस्थितेषु देवेषु पश्यत्सु सत्सु ॥ कृष्णपक्षे—अथ कृष्णस्वरूपं धेनुकवधं चाह—यः वेदेऽस्ति वेदे प्रतिपादितोऽस्ति स नृपु वत्सपोऽभूत् । अनेन वत्सपेन कृष्णेन धीरो धेनुकः अवशैः असाध्यैस्तज्जातीयैरन्यैः सह हतः । मारित इत्यर्थः ॥

अथ परशुरामो रामं प्रति सक्रोधं वदति—

नगोपगोऽसि क्षर मे पिनाकेऽनायोऽजने धर्मधनेन दानम् ।
नन्दानने धर्मधने जयो ना केनापि मे रक्षसि गोपगो नः ॥ १६ ॥

भो क्षर नश्वर, मे पिनाके त्वं नगोपगः असि । यद्यपि त्वया जीर्णं धनुर्भग्नं तथापि मदानते धनुषि नगस्य पर्वतस्योप समीपे गच्छतीति नगोपगः पाषाणस्तत्तुल्योऽसि । मदीयधनुषोऽतिगुरुत्वेन निश्चेष्टो भवसीत्यर्थः । एवमेतादृशे त्वयि जनकेन यत्कन्यादानं कृतं तद्युक्तमित्याह—धर्मधनेन कन्यालक्षणेन अजने यद्दानं सः अनायः । अजनोऽदानपात्रम् । एवं अदानपात्रे त्वयि यद्दानं कृतं सः अनायः नयो नीतिस्तत्संबन्धी नायः, न नायः अनायः । अनीतिरित्यर्थः ॥ कृष्णपक्षे—दैत्यवधं दृष्ट्वा नन्दः कृष्णं स्तौति—भोः कृष्ण, त्वं नन्दानने नासि । नन्द एव आननं मुख्यो यस्मिन्गोकुले तस्मिन् ना पुरुषः परमात्मा असि । बलवत्त्वात् । अतएव किंलक्षणे नन्दानने । धर्मधने जन्मान्तरीयधर्मैरर्जितं तस्मिंस्तथा नः अस्माकं जयोऽपि त्वमेवासि । केनापि सुकृतविपाकेन गोपगः गोपविशेषेण वर्तमानः सन् मे इति मां रक्षसि ॥

अथ रामं राज्याधिकारिणं दृष्ट्वा कैकेयी सापत्नभावं दर्शयतीत्याह—

ततान दाम प्रमदा पदाय नेमे रुचामस्वनसुन्दराक्षी ।
क्षीरादसुं न स्वमचारु मेने यदाप दाम प्रमदा नतातः ॥ १७ ॥

आमस्वना अपरिपक्ववचना तथाविधा सुन्दराक्षी कैकेयी पदाय राज्यप्राप्तये यद्दाम निर्बन्धकारणं ततान विस्तारयामास । स्वपुत्राय राज्यं देयमिति दशरथाय निर्बन्धं चकारेत्यर्थः । आमस्वनेति पदेन नेदं मातृकृत्यमिति सूचितम् । अथ कथं दाम ततानेत्याह—इमे रुचा न रुचा दीप्त्या इमे रामादयः पदयोग्या न भवन्ति । तथा तस्याः किं लौकिकं भयं नास्तीत्याह—प्रमदेति । प्रकृष्टो गर्वो यस्याः सा तथा ॥ कृष्णपक्षे—अथ कदाचित्कृष्णेन दधिभाण्डे भग्ने दुग्धनाशे जाते यशोदायाः अतिश्रमोऽभूदित्याह—प्रमदा यशोदा क्षीरात्सकाशादसुं प्राणमपि स्वकीयं न मेने । यथा क्षीरे ममता तथा प्राणे मा भूदित्यर्थः । अथ कृष्णबन्धनार्थं यद्दाम आप प्राप तदचारु कार्यक्षमं न भवतीति मेने । अतः दामपूरणहेतोर्नेता नम्रा । परिश्रान्ताभूदित्यर्थः ॥

अथ वनवासार्थं रामे प्रस्थिते सति अहल्योद्धारणप्रसङ्गमाह—

तामितो मत्तसूत्रामा शापादेप विगानताम् ।
तां नगाविषदेऽपाशा मात्रासूत्तमतो मिता ॥ १८ ॥

मत्तसूत्रामा तां इतः प्राप्तः मत्तः काममोहितः सूत्रामा इन्द्रस्तां प्रति प्रसिद्धामहल्यां प्रति गतः । 'सूत्रामा गोत्रभिद्वज्री' इत्यमरः । तथा एष सूत्रामा इन्द्रः शापाद्विगानतां इतः गौतमकृतात् विगानतां सहस्रभगत्वादिलक्षणां प्राप्तः ॥ कृष्णपक्षे—पूर्वश्लोके यशोदया कृष्णः दाम्ना बद्ध इति निरूपितं तत्र यमलार्जुनोन्मूलनप्रसङ्गमाह—तां व्यवस्थामनुभूय

नगाविपदे कृष्णे सति यशोदा मात्रासु अपाशा तथा उत्तमतो मिता अभूत् । न गच्छतस्तौ नगौ स्थावरौ वृक्षौ यमलार्जुनौ ताभ्यां अविषमसूतं मोक्षः तत्पदे कृष्णे सति यशोदा-मात्रासु दधिदुग्धादिविषयेषु अपाशा अनिर्बन्धा सती उत्तमतः अलौकिककर्म कर्तुः कृ-ष्णान्मिता समर्यादाभूत् ॥

अथ शूर्पणखायाः प्राप्तायाः नासिकानिकृन्तनं कृतमिति शालिनीछन्दसाह—

नासावद्यापत्रपाज्ञाविनोदी धीरोऽनुत्या सस्मितोऽद्याविगीत्या ।

त्यागी विद्यातोऽस्मि सत्यानुरोधी दीनोऽविज्ञा पात्रपद्यावसाना ॥ १९॥

शूर्पणखा तावन्नासावद्यापत्रपास्ति । नासा नासिका तस्या अवद्यं विगानं छेदलक्षणं तत्र अपत्रपा निर्लज्जास्ति । लक्ष्मणस्तु आज्ञाविनोदी आज्ञया रामाज्ञया विनोदो यस्या-स्तिविनोदी । तथा धीरः उदात्तः श्रीरामस्तु अनुत्या शूर्पणखाकृतया स्तुत्या उपालम्भेन अद्याविगीत्या अकीर्तिख्यापनेन सस्मितोऽभूत् ॥ कृष्णपक्षे—नारदशापादुन्मोचि-ताभ्यां कुबेरपुत्राभ्यां स्तुतः कृष्णस्तौ प्रति स्वरूपमाह—अहं विद्यातः ज्ञानतस्त्यागी ज्ञानप्रदोऽस्मि । तथा सत्यानुरोधी सत्यं परब्रह्म तत्र अनुरोधोऽत्यासक्तिर्यस्य स तथा । लोकस्तु दीनः विषयसुखासक्तोऽस्ति । अविज्ञा अविद्या तु पात्रपद्यावसाना पात्रं ज्ञान-पात्रं मद्भक्तस्तस्य पद्या पद्धतिर्ज्ञानमार्गनिष्ठत्वं तेनैवावसानं नाशो यस्याः सा तयोक्ता । एवं सति शापनिर्मुक्तिः क्रियत इत्यर्थः ॥

अथ पञ्चवटीवने सपरिमहे रामे कृताधिवासे सति किंचिदपूर्वं जातमित्याह—

संभावितं भिक्षुरगादगारं याताधिराप स्वनघाजवंशः ।

शवं जघान स्वपराधिताया रङ्गादगारक्षुभितं विभासम् ॥ २० ॥

भिक्षुः संभावितमगारमगात् । भिक्षुरूपधरो रावणः संभावितं पूर्वं निर्माणकत्वेन ज्ञातं अगारं पञ्चवटीस्थलं अगात् । ततः स्वनघाजवंशः याताधिः सन् आप । सुतरां अनघः निष्पापः एवंविधोऽजवंशो ब्रह्मवंशो रावणः यातो गतः आधिश्चिन्ता यस्य जानकीं दृष्ट्वा निश्चितः जानकीं प्राप । निष्पापवंशोत्पन्नोऽप्येतादृशं निन्द्यं पापकर्माकरोदित्याश्चर्यादिति सू-चितम् ॥ कृष्णपक्षे—पूर्वोपक्रान्तः कृष्णो रङ्गाद्रङ्गस्थानात्सकाशात् शवं चिन्तयापूर्वमेव गतप्राणं कंसं जघान । किंभूतम् । अगारक्षुभितम् । अगारं राजकीयपरिवारस्तस्मिन्क्षु-भितं सक्रोधम् । एष चाणूरघाती कृष्णो बहिः कथं न निःसार्यत इति । पुनः किंभूतम् । विभासं विच्छायं गतकान्तिम् । सद्योऽमृतमिवद्युतमित्यर्थः । अथ कस्माद्धेतोर्जघानेत्याह— स्वपराधितायाः । अपराधिनो भावः अपराधिता सुतरामपराधिता तस्यास्तथा । पितृ-निर्बन्धाग्रजहननपूतनादिकूटरचनाद्यो येऽपराधास्तत्कर्तृत्वादित्यर्थः ॥

अथ मृगयापरावृत्तस्य रामस्य जानकीमपश्यतो निर्वेदमाह—

तयातितारस्वनयागतं मा लोकापवादद्विंतयं पिनाके ।

केनापि यं तद्विदवाप कालो मातंगयानस्वरतातियातः ॥ २१ ॥

तया मागतं तया जानक्या मेति धिक् मृषैव गतं निष्क्रान्तम्। अथ सा स्वतो न गता बलात्कारेण नीता भविष्यतीत्याह—किंभूतया। अतितारस्वनया। उच्चैराक्रोशमानयापि। एवं तस्यां गतायां पिनाके लोकापवादद्वितयं जातम्। पिनाके पुरुषार्थाधिष्ठाने लोकापवादद्वितयं अज्ञानेन मृगपृष्ठतो धावनं स्त्रीहानिश्चेति अपवादद्वितयम् जातमित्यर्थः॥ कृष्णपक्षे—कंसहननात्पूर्वरङ्गमाह—यं कंसं केनापि प्रकारेण कालः कृतान्तोपमः कृष्णः अवाप। ननु परब्रह्मस्वरूपस्य कृष्णस्य कंसद्वेषः कथमित्याह—किंभूतः कालः। तद्वित् तदुपस्थितं कंसनिबन्धनं वेत्तीति तद्वित्। अथ स कः प्रकारस्तमाह—किंभूतः कालः। मातंगयानस्वरतातियातः। मातंगः कुवलयापीडस्तस्य यानं धावनं स्वरश्च तद्याक्रोशस्तमतिलङ्घ्य यातः। कुवलयापीडं क्रोशन्तं मारयित्वा रङ्गं प्राप्त इत्यर्थः॥

अथ रामस्य पुनर्जानकीं प्रति निर्वेदोक्तिमाह—

शवेऽविदा चित्रकुरङ्गमाला पञ्चवटीनर्म न रोचते वा।
वातेऽचरो नर्मनटीव चापं लामागरं कुत्रचिदाविवेश॥ २२॥

भो जानकि, अविदा अज्ञानेन मया सह पञ्चवटीनर्म न रोचते वा। येन त्वं गतासीत्यर्थः। अथ तदेवाज्ञानं प्रकटयन्नाह—शवे शवीप्रेयराक्षसे चित्रकुरङ्गमालास्तीति मायामृगमजानता। मयेत्यर्थः॥ कृष्णपक्षे—कृष्णस्य सामर्थ्यं कंसहननात्पूर्वमेव प्रकटीभूतमित्याह—यः कृष्णः वाते वात्याभूतदैत्ये तृणावर्ते अचरः अचलोऽभूत्तथा लामागरं कुत्रचिदाविवेश। लामा पूतना तस्याः गरं विषं नर्मेव क्रीडामात्रमिव कुत्रचिदाविवेश। न कृष्णे अनेन बाल्ये एतावन्तं पुरुषार्थं कृतवान्किं पुनर्यौवने इति सूचितम्। एवमेतदुभयं सदृष्टान्तमाह—किमिव। नर्मनटी चापमिव नटी नर्तकीचापं भ्रूभङ्गमात्रं दर्शयति। तद्वदित्यर्थः॥

अथ जानकीं स्कन्धे गृहीत्वा सत्वरं निर्गतस्य रावणस्य जटायुना साकं सङ्गोऽभूदिति श्लोकद्वयमाह—

नेह वा क्षिपसि पक्षिकंधरा मालिनी स्वमतमत्त दूयते।
ते यदूत्तमतम स्वनीलिमाराधकं क्षिपसि पक्षिवाहने॥ २३॥

जटायुः रावणं प्रति वदति—भो स्वमतमत्त, इयं मालिनी दूयते। स्वमतं स्वाग्रहस्तेन मत्त उन्मत्तः स्वाग्रहमेव करोषि परकीयविचारं न शृणोषि। असावधानत्वादित्यर्थः। मालिनी अतिसुकुमारा जानकी दूयते क्लेशं प्राप्नोति। किंभूता पक्षिकंधरा। पक्षिणि स्वपक्षपातिनि मयि कंधरा मन्या यस्याः सा तां इह मत्स्याने न क्षिपति वा न मुञ्चसि वा। तर्हि सङ्ग्रामेण मोचयिष्यामीति तात्पर्यार्थः॥ कृष्णपक्षे—कंसवधे कृते उद्धवाक्रूरादयः कृष्णं स्तुवन्ति—भो यदूत्तमतम, स्वनीलिमाराधकं स्वस्य नीलिमा तं आराधयतीति स्वनीलिमाराधकं पुरुषं ते पक्षिवाहने क्षिपसि। यदुषु उत्तमतम श्रेष्ठतम स्वदनुस्मृतिं कुर्वाणं पुरुषं ते पक्षिवाहने गरुडः तस्मिन् क्षिपसि आरोहयसि।

गरुडारूढं कृत्वा वैकुण्ठं प्रति नयतीत्यर्थः । एवमपरोक्षभावनया एतत्फलं कंसस्य श्रीमत्साक्षात्कारे प्रवृत्तस्य मुक्तिरित्यत्र किं चित्रमित्यर्थः ॥

ततो जटायुवचनाज्जानकीशुद्धिं लब्ध्वापि दक्षिणतश्चलितस्य रामस्यावस्थामाह—

वनान्तयानस्वणुवेदनासु योषामृतेऽरण्यगताविरोधी ।

धीरोऽविताऽगण्यरते मृषा यो सुनादवेणुस्वनयातनां वः ॥ २४ ॥

स रामः योषामृते वनान्तयानस्वणुवेदनासु अरण्यगताविरोधी अभूत् । योषां जानकीं विना वनान्तेषु यानं परिभ्रमणं तत्र महाक्लेशप्राप्तावपि सुतरामणुवेदनासु । विवेकेन लक्ष्मणकृतेन सान्त्वनेन च ईषत्क्लेशेषु जातेषु सत्सु अरण्यगताः वानराः अविरोधिनो मित्राणि वयस्याः यस्य स्त्रीविदनासूद्भवासु सतीषु वानरैः सह सख्यं यज्जातं तेन विश्रान्तिरभूदित्यर्थः ॥ कृष्णपक्षे—कृष्णे विहाय गोकुलं मथुरां गते सति विरहक्लिष्टा गोप्यो मिथः प्रोचुरित्याह—अगण्यरते धीरः वः अविता इति । मृषा गणयितुं संभावयितुं योग्यं गण्यं न गण्यं अगण्यं अश्लाघ्यं कुब्जया सह रतं तत्र धीरः निर्लज्जत्वेन प्रवृत्तः कृष्णः वः अविता पुनर्गोकुलमागत्य रक्षिष्यतीति मृषा असत्यं तत्कुतः सुनादवेणुस्वनयातनां किं न स्मरतीत्यध्याहारः । सुष्ठु नादो यस्यासौ सुनादः एतादृशः वेणुस्तस्य स्वनस्तेन कृतां यातनां दूराद्वेणुस्वनमाकर्ण्य यावत्कृष्णदर्शनं तावत्पर्यन्तं या यातनाविरहदुःखमस्माकं किं पुनस्तस्मिन् परदेशं गते सतीति किं न स्मरतीत्यर्थः ॥

अथ पूर्वश्लोके अणुवेदनास्विति पदेन महति दुःखे सति कथं विश्रान्तिरित्याह—

किं नु तोयरसा पम्पा न सेवा नियतेन वै ।

वैनतेयनिवासेन पापं सारयतो नु किम् ॥ २५ ॥

पम्पा तोये रसः स्वादुता यस्याः सा तोयरसा एवंविधा पम्पा किं नास्ति । अस्त्येवेत्यर्थः । तथा—वै इति निश्चयेन । नित्यनियतेनता हनुमता सेवा किं नास्ति । अस्त्येव । एवमुभयथापि रामस्य विश्रान्तिर्विरहदुःखेऽप्यासीदित्यर्थः ॥ कृष्णपक्षे—गोप्यः उद्धवं परिहसन्ति—वैनतेयनिवासेन गरुडनिवासेन कृत्वा पापं सारयतो दूरीकुर्वतः पुरुषस्य किं नु वाच्यमित्यध्याहारः । कृष्णोपासनया निष्पापस्त्वं कथमस्मान्प्रतारयसीति सूचितम् ॥

अथ वालिना हतदारः सुग्रीवो रामं शरणं प्रयात इत्याह—

स न तातपहा तेने स्वं शेनाविहितागसम् ।

संगताहिविनाशे स्वं नेतेहाप ततान सः ॥ २६ ॥

स न तातपहा रामः शेन स्वं तेने न तस्य नम्रस्य शरणं गतस्य आतपं संतापं हन्तीति तथाविधो रामः शेन सुखेन स्वं तेने । आश्वासजनितसुखेन स्वं स्वकीयं सुग्रीवं तेने विस्तारितवान् । न विहितं न संपादितम् आगः अपराधो येन तथा । निरपराधत्वेनाविहितागसमिति सूचितमित्यर्थः ॥ कृष्णपक्षे—उद्धवः गोपिकां प्रति कृष्णस्याश्रितपक्षपातं वदति—स नेता नियन्ता कृष्णः इह सरस्वतीरसं स्थानं नन्दं संकटके आप प्राप

तथा संगताहिविनाशे स्वं जनं ततान । संगतः प्राप्तः यो अहिः सर्पस्तस्य विनाशे कृते सति स्वकीयं जनं गोकुलस्थितं ततान विस्तारयामास । नन्दं निधनशङ्कया मुमूर्षुं विस्तारितवान् स किं भवतीत्युपेक्षत इति सूचितम् ॥

अथ वालिनं हत्वा सुग्रीवपत्नीं मुमोचेत्याह—

कपितालविभागेन योषादोऽनुनयेन सः ।
स नये न नु दोषायो नगे भाविलतापिकः ॥ २७ ॥

स रामः अनुनयेन प्रीत्या कपितालविभागेन योषादोऽभूत् । कपिर्वाली तालाश्च तद्रक्षकास्तेषां विभागेन विच्छेदेन योषां ददातीति योषादः योषां सुग्रीवपत्नीं दत्तवान् ॥ कृष्णपक्षे—गोपिका वदन्ति—स कृष्णः नये नीतिमार्गे नास्ति । नु इति वितर्के । किंतु दोषायोऽस्ति । दोषाणां दुःखानां आयः प्राप्तिर्यस्मात्स तथा । पुनरायास्यतीति चेन्न । कुतः । यथा नगे भाविलतापिकः नगे पर्वते भाविनी या लता वल्ली सहकारशाखा तत्र पिकः पिकतुल्यः । यथा यमसंभावितार्थः तद्वदित्यर्थः ॥

अथ वालीपुत्रः अङ्गदो रामं प्रति वदति—

ते सभा प्रकपिवर्णमालिका नाल्पकप्रसरमभ्रकल्पिता ।
तालिपकभ्रमरसप्रकल्पना कालिमार्णव पिक प्रभासते ॥ २८ ॥

भो राम, ते सभा प्रकपिवर्णमालिकास्ति । प्रकृष्टा ये कपयो वानरास्तेषां ये विचित्रवर्णास्तेषां माला यस्यां सा तथा नानाविधवानरश्रेणीसंपन्ना । सा तु अल्पकप्रसरं यथा भवति तथा अल्पसंख्याका, परंतु अभ्रकल्पिता नास्ति । अभ्रे आकाशे मेघमण्डलपर्यन्त वा नास्ति । अनेन रक्षःपङ्क्तिः आकाशे प्रकल्पितास्तीत्यर्थः ॥ कृष्णपक्षे—गोपिकास्तावदन्योपदेशेन पिक प्रति वदन्ति—भोः कालिमार्णव मालिन्यसमुद्र पिक कोकिल, त्वयि तालिपकभ्रमरसप्रकल्पना प्रभासते । तल्पे भवं तालिपकं सुरतं तस्य भ्रमरस्तत्र यो रसः स प्रभासते स्वप्ने सुरतभ्रमे यावान् रसः स एव त्वयि भासते । न साक्षादस्मत्सुरतसुखं तत्तु तव स्वप्नेऽपि दुर्लभमित्यर्थः ॥

अथ रावणो यद्यपि सकलसैन्यसन्नाहवानस्ति तथापि तत्र वीरलक्षणं नास्तीत्याह—

रावणेऽक्षिपतनत्रपानते नाल्पकभ्रमणमक्रमातुरम् ।
रन्तुमाक्रमणमभ्रकल्पना तेन पात्रनतपक्षिणे वरा ॥ २९ ॥

रावणे अक्रमातुरं यथा भवति तथा अक्षिपतनत्रपानते सति अल्पकभ्रमणं न भविष्यति न क्रमः अक्रमः परस्त्रीहरणादिकस्तेन आतुरं यथा स्यात्तथा अक्षिपतनं रामस्य दृष्टिपातस्तेन या त्रपा लज्जा तया रावणे नम्रे सति पर्याकुलतया यत् भ्रमणं चित्तभ्रमः किं न भविष्यति । भूयादेव । अहो वीरव्रतमतिक्रम्य पापं कृतवतो मम जयो नास्त्येवेति लज्जया कृत्वा चित्तस्यैव किं त्रासो न भविष्यतीत्यर्थः ॥ कृष्णपक्षे—उद्धवो गोपिकाः प्रति वदति—भो गोप्यः, तेन आक्रमणं दैत्यनिर्बर्हणादिकं तथा अभ्रवत्कल्पना मेघ-

श्यामता च रन्तुं क्रीडार्थमवलम्बिता तत्स्थानेऽनेन तस्य न किमपि प्रयोजनं तत्र तेन कारणेन सा मेघश्यामता पात्रनतपक्षिणे वरा पात्रे नताः पात्रनताः पुरुषास्तेषां पक्षो यस्य स तत्पक्षी तस्मै कृष्णाय वरा कल्पिता। भक्तानां ध्यानगोचरत्वायेत्यर्थः। तथा च भवतीनां ध्यानयोगेनैव कृतार्थत्वमस्तीति सूचितम् ॥

अथ सीतानुक्षर्यमादिष्टो हनुमान् रामं प्रति विद्युन्मालयाह—

दैवे योगे सेवादानं शङ्का नाये लङ्कायाने।
नेयाकालं येनाकाशं नन्दावासे गेयो वेदैः ॥ ३० ॥

अये श्रीराम, लङ्कायाने लङ्कां प्रति गमने शङ्का नास्ति। कुतः। यतो दैवे योगे सेवादानं जातमस्ति। देवसंबन्धी दैवस्तस्मिन् तव योगे या सेवावलम्बितास्ति। अतो लङ्कागमने त्वत्सेवाया एव सामर्थ्यमित्यर्थः ॥ कृष्णपक्षे—पुनरुद्धवः कृष्णं स्तौति—स कृष्णः नन्दावासे नन्दव्रजेऽभूत्। स कः। येन आकाशं नेयाकालं नेतुं संहर्तुं योग्यो नेयः आसमन्तात् कलयति तत् एवंविधमाकाशं काले आकाशादिकमपि संहर्तुं क्षमः। तत्रभवतीनां सारः श्रमः कियानित्यर्थः। किंभूतः। वेदैः गेयः गातुं योग्यः ॥

अथ जानकीशुद्धिं कृत्वा परावृत्तो हनुमान् रामं प्रति वदतीति समाक्षरया शालिन्याह—

शङ्कावज्ञानुत्त्वनुज्ञावकाशं याने नद्यामुग्रमुद्याननेया।
याने नद्यामुग्रमुद्याननेया शङ्कावज्ञानुत्त्वनुज्ञावकाशम् ॥ ३१ ॥

हे राम, सा जानकी उग्रमतिक्लेशं यथा भवति तथा नद्यां कुल्यायां उद्याने नेया उद्याने क्रीडावने नेतुं योग्या नेया अस्ति। तथा सीता कृत्रिमसरित्युपकण्ठे उद्यानेऽस्तीत्युक्तम्। इत्थं त्वं रावणस्य क्रीडावनं गन्तुं कथमवकाशं लब्धवानित्याह—याने प्रयाणकाले अनुज्ञावकाशं यथा भवति तथा शङ्कावज्ञानुत् तु श्रीमदनुज्ञालम्भावसरत्वेन शङ्कावज्ञे नुदिते। तथा शङ्का राक्षसभयं तत्कृतावज्ञा अम्बुवनपाटादिकृता। तदुभयं मया निराकृतमित्यर्थः ॥ कृष्णपक्षे—गोकुलात्परावृत्त उद्धवः कृष्णं प्रति वदति—भोः कृष्ण, उद्याननेया काचि गोपिका नद्यां याने उग्रं अतिक्लेशं यथा भवति तथा तिष्ठति। या त्वया पूर्वं स्कन्धोपरि धृत्वा उद्यानं प्रति प्रापिता तर्हि तस्या दयितदेवरादयः किं न सन्तीत्याह—हे कृष्ण, सा गोपिका अहं पुनरागमिष्यामीति श्रीमदनुज्ञया लब्धावकाशं यथा स्यात्तथा शङ्कावज्ञा सती तिष्ठति। शङ्कया दयितभयं तस्य अवज्ञा अवगणना यस्याः सा दयितदेवरादीनां शङ्काभयं तथा तत्कृतविकारायविगणय्य प्राणावशेषा तिष्ठति। एवं तयैकया विनान्याः सर्वा अपि मया संबोधिता इत्युक्तं भवति ॥

अथ समुद्रं निग्रम्य लङ्कां गन्तुं शक्तोऽपि रामः क्षुद्रवानरसैतुकं द्रष्टुं सेतुरन्चार्यमादिदेशेत्याह—

वा दिदेश द्विसीतायं यं पाथोयनसेतवे।
वेतसेन यथोपायं यन्नासीद्विशदे दिवा ॥ ३२ ॥

वेति अथवा स रामः यं कंचिद्वानरं पाथोयनसेतवे दिदेश । पाथसामुदकानामयनं यस्मिन् पाथोयनः समुद्रस्तस्य सेतवे सेतुबन्धायादिदेश आज्ञापयामास । किमर्थं परम् । द्विसीतायं यथा स्यात्तथा । द्वयोः सीतयोः समाहारो द्विसीतं तस्यायः प्राप्तिः । किं पुनरेकसीतालब्धिः । अपरं सेतुबन्धाख्यं पुरुषार्थं सीताद्वयलाभो भविष्यतीत्युत्साहेनादिदेशेत्यर्थः ॥ कृष्णपक्षे—कंसे हते मातामहायोग्रसेनाय राज्यं दत्त्वा स्वयं तत्सैन्यपतिर्बभूवेत्याह—स कृष्णः यथोपायं वेतसेन यन्तासीत् । यथोपायं राजनीतिमनतिक्रम्य वेतसेन वेत्रधारत्वेन नियन्तासीत् विशदे दिवा सुमुहूर्तोपलक्षिते दिवा दिवसे ॥

अथ राक्षसैः सह संग्रामोपस्थितः श्रीरामो हनुमत्प्रशंसामाह—

वायुजोऽनुमतो नेमे संग्रामेऽरवितोऽह्नि वः ।

वह्नितो विरमे ग्रासं मेनेऽतोऽमनुजो युवा ॥ ३३ ॥

हे वानराः, वः इति युष्माकं मध्ये अरवितः अह्नि वा संग्रामे उपस्थिते सति वायुजोऽनुमतः अस्ति । न रविर्यस्मिंस्तत् अरवि तस्मिन् । रात्रावित्यर्थः । वा अह्नि दिवा वा संग्रामे उपस्थिते सति हनुमानेव अनुमतः संमतः । रात्रौ दिवा वा मायाविभिः सह संग्रामे वायुपुत्र एव निर्वाहयिष्यतीत्युक्तं भवति । इमे सर्वे वानराः नानुमताः न संमताः ॥ कृष्णपक्षे—कंसादिहनने राज्यस्थापने वा कृष्णस्य किं चित्रं वर्णनीयमित्याह—अतः परं यः विरमे प्राप्ते सति वह्नितः वह्निमेव ग्रासं भक्ष्यत्वेनोपस्थितं मेने । अमनुजः देवः सन् युवा पराक्रमी । तत्र न किमपि चित्रमित्यर्थः ॥

अथ रामरावणयोर्युद्धप्रसङ्गे वानरैर्व्याकुलितो रावणो रामेण सह न प्रभावमगादित्याह—

क्षताय मा यत्र रघोरितायुरङ्गानुगानन्यवयोऽयनानि ।

निनाय यो वन्यनगानुकारं युतारिघोरत्रयमायताक्षः ॥ ३४ ॥

यत्र अङ्गानुगानन्यवयोऽयनानि सन्ति तत्र इतायुः रघोः क्षताय मामूत् । अङ्गं अनुगच्छन्ति ते अङ्गानुगाः शरणं गता वानरास्तेष्वनन्यं वयः जन्म येषां ते अनन्यवयसः सुग्रीवहनुमदादयस्तेषां अयनानि संग्रामे व्यूहप्रवेशपरिसरणानि यत्र तत्र इतायुर्दशास्यः रघोः रामचन्द्रस्य क्षताय शस्त्रादिभिर्घाताय मानसमर्थोऽभूत् । प्रथमतो वानरैरेव व्याकुलीकृतः रामेण सह योद्धुमलब्धावकाशोऽभूदित्यर्थः ॥ कृष्णपक्षे—वृन्दावने कृष्णो दैत्यानवधीदित्युक्तम् । तत्र त्रयमतिभयानकं हतमित्याह—यः आयताक्षः कृष्णः युतारिघोरत्रयं मुक्तिं निनाय । युताः योगं प्राप्ताश्च ते अरयश्च तेषु घोरत्रयं निनाय प्रापितवान् । पूतना अघासुरः केशी चेति भयानकं त्रयं स्वान्तिके प्रापितमित्यर्थः । अथ भयानकमेव व्यनक्ति—किंभूतं घोरत्रयम् । वन्यनगानुकारं वने स्थितः वन्यः स चासौ नगः पर्वतस्तद्वदनुकारो यस्य सः । तथा अतिप्रचण्डमित्यर्थः ॥

अथ सपरिवारस्य रावणस्य तारके परब्रह्मणि प्रवेशोऽभूदित्याह—

तारके रिपुराप श्रीरुचा दाससुतान्वितः ।
तन्वितासु सदाचारु श्रीपरा पुरि के रता ॥ ३५ ॥

रिपुः श्रीरुचा तारके आप रिपुः रावणः श्रीर्मोक्षलक्ष्मीः तस्याः रुग्दीप्तिः प्रकाशस्तेनेत्यर्थः । किंभूतः । दाससुतान्वितः । दासाश्च कुम्भकर्णादयः सुता इन्द्रजिदादयस्ते सर्वेऽपि तारकं प्राप्ता इत्यर्थः ॥ कृष्णपक्षे—सदा चारु यथा स्यात्तथा तन्वितासु गोपीषु श्रीपरा पुरि के रता आसीत् । तनुना शरीरेण इतासु प्राप्तासु गोपिकासु मध्ये श्रियः लक्ष्म्याः परा श्रीपरा द्वितीयलक्ष्मीरिव सैरन्ध्रीपुरि मथुरायां के परब्रह्मणि कृष्णे रतासीत् । गोकुले कृष्णविरहेण तदा ध्याननीतासु सतीषु मथुरायां कृष्णस्य सैरन्ध्र्या सार्कं गार्हस्थ्यमभूदित्यर्थः ॥

अथ रावणे सपरिवारे हते सति लङ्का हतप्रभाभूदिति विद्युन्मालयाह—

लङ्का रङ्कागाराध्यासं याने मेया काराव्यासे ।
सेव्या राका यामे नेया संध्यारागाकारं कालम् ॥ ३६ ॥

याने रामागमने सति लङ्का रङ्कागाराध्यासं यथा स्यात्तथा मेयाभूत् । लङ्का नगरी रङ्कस्यागारं रङ्कागारं तस्य अध्यासो भ्रमस्तेन ज्ञातुं योग्याभूत् । इयं लङ्का तु कस्यचिद्रङ्कस्य अगारमिति भ्रमेण ज्ञाताभूदित्यर्थः । कस्मिन्सति । काराव्यासे सति कारा बन्दीगेहं तस्य अव्यासे अविस्तारे सति । कारा विस्तारं निर्भिद्य बन्दीभूतेषु देवेषु । निर्मोचितेषु सत्स्वित्यर्थः ॥ कृष्णपक्षे—पूर्वे सैरन्ध्र्या सार्कं कृष्णस्य गार्हस्थ्यमभूत्तत्र दृष्टान्तमाह—सेव्या सेवितुं योग्या सेव्या अतिरमणीयमभूदित्युक्तम् । सैरन्ध्री यामे संयोगावसरे कालं मेघश्यामं कृष्णं प्रति नेया नेतुं योग्या नेयाभूत् । अन्वयोग्यपदेनोभयोः संयोगे शोभातिशयः सूचितः । काकमिव राका संध्यारागाकारमिव पूर्णचन्द्रोदयोपलक्षिता राका संध्यारागाकारं प्राप्य यथा शोभातिशयशालिनी भवति तद्वदित्यर्थः ॥

गोदावरीब्रह्मगिरेः सकाशात्संप्रापिता प्रागुदधिं प्रयत्नात् ।
येनार्षिणा सोऽपि पुनः प्रतीपमानेतुमर्हे प्रभवेत्किमेताम् ॥

एवं विलोमाक्षरकाव्यकर्तुर्भूयांसमायासमवेक्ष्य तज्ज्ञाः ।
जानन्त्विमां चित्रकवित्वसीमां दैवज्ञसूर्याभिधसंप्रदिष्टाम् ॥

इति श्रीदैवज्ञपण्डितसूर्यकविविरचितं विलोमाक्षररामकृष्णकाव्यं समाप्तम् ।

---

# KÂVYAMÂLÂ.

A collection of old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhânas, Prahasanas, Chhandas, Alankâras &c.

PART VI.

EDITED BY

PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRNAYA-SÂGARA" PRESS.

BOMBAY.

1890.

*Price 1 Rupee.*

काव्यविलासः–चिरंजीवभट्टाचार्यः.
काव्यादर्शः–दण्डी. (सटीकः).
काव्यानुशासनम्–वाग्भटः.
काव्यानुशासनविवेकः–हेमचन्द्रः.
काव्येन्दुप्रकाशः–कामराजदीक्षितः.
चन्द्रालोकः–जयदेवः. (वैद्यनाथकृतटीका).
चित्रमीमांसाखण्डनम्–जगन्नाथपण्डितः.
त्रिवेणिका–आशाधरः.
दूतीप्रकाशः–विट्ठलः.
ध्वनिगाथापञ्जिका–राजानकरत्नाकरः.
भरतार्णवः–नन्दिकेश्वरः.
रतिरहस्यम्–कुक्कोकः.
रसचन्द्रिका–विश्वेश्वरः.
रसतरङ्गिणी–भानुदत्तः. (नागेशकृतटीका).
रसदीर्घिका–विद्यारामः.
रसमञ्जरी–भानुदत्तः. (नागेशकृतटीका).
रसमीमांसा–गङ्गारामः. (स्वकृतटीका).
रसरत्नहारः–शिवरामः. (सटीकः).
लघुचित्रालंकारः–जीवराजः.
वाग्भटालंकारः–वाग्भटः. (सटीकः).
विदग्धमुखमण्डनम्–धर्मदासः. (सटीकम्).
वृत्तिवार्तिकम्–अप्पयदीक्षितः.
शब्दव्यापारविचारः–राजानकमम्मटः.
शिशुप्रबोधालंकारः–पुञ्जराजः.
शृङ्गारतरङ्गिणी–सूर्यदासः.
शृङ्गारदीपिका–वेमभूपालः.
शृङ्गारसरसी–भावमिश्रः.
शृङ्गारामृतलहरी–सामराजदीक्षितः.
सरस्वतीकण्ठाभरणम्–भोजदेवः. (रामसिंहदेवकृतटीका).
साहित्यकौमुदी–विद्याभूषणः. (सटीका).
साहित्यतरङ्गिणी–कृष्णः.
साहित्यदर्पणः–विश्वनाथः. (सटीकः).
साहित्यबोधः–सीतारामः.

## गद्यकाव्यानि।

प्रबन्धकोशः–राजशेखरसूरिः.
प्रबन्धचिन्तामणिः–मेरुतुङ्गसूरिः.
मदालसाख्यायिका–भवदेवः.
वीरनारायणचरितम्–अभिनवबाणः.

## नीतिग्रन्थाः।

नीतिकल्पतरुः–क्षेमेन्द्रः.
नीतिसारः–कामन्दकः. (सटीकः).

## नाट्यादिग्रन्थाः।

रागमाला–
रागविबोधः–सोमनाथः. (सटीकः).
संगीतदर्पणम्–दामोदरः.
संगीतपारिजातः–अहोबलः.
संगीतमाधवः–प्रबोधानन्दः.
संगीतरत्नाकरः–शार्ङ्गदेवः. (सिंहभूपालकृतटीका).

## जैनसंस्कृतग्रन्थाः।

आत्मानुशास्तिद्वात्रिंशिका–
ऋषभपञ्चाशिका– (धनपालकृतटीका).
ऋषिमण्डलस्तवावचूरिः–धर्मघोषः.
गौतमस्तोत्रम्–
चतुर्विंशतिजिनस्तवः–
,, –मुनिसुन्दरः.
चन्द्रप्रभस्तवनम्–जिनप्रभः.
नीतिशतकम्–श्रीधरः.
पञ्चपरमेष्टिस्तवनम्–
पञ्चवर्गपरिहारस्तवनम्–शीलशेखरगणिः.
,, –सोमतिलकः.
परमसुखद्वात्रिंशिका–
पार्श्वनाथस्तवनम्–जिनसमुद्रः.
पार्श्वस्तवः–
प्रतिमाशतकम्–
प्राभाविकचरितम्–प्रभाचन्द्रः.
भयहरस्तोत्रम्–

मङ्गलस्तोत्रम्–मुनिसुन्दरः.
महिम्नस्तोत्रममस्तास्तोत्रम्–चन्द्रराजः.
मूर्खशतकम्–
यमकमयपार्श्वनाथस्तोत्रम्–शिवसुन्दरः.
युगादीश्वरस्तोत्रम्–श्रीरत्नाकरः.
वीतरागस्तोत्रविवरणम्–हेमचन्द्रः.
वीरस्तवनम्–
वैराग्यशतकम्–श्रीधरः.
शङ्खेश्वरपार्श्वनाथस्तवः–
शृङ्गारशतकम्–श्रीधरः.
श्रीमद्वीरस्तवः–
श्रीवर्धमानजिनस्तवनम्–लक्ष्मीसमुद्रगणिः.
श्रीवीरनिर्वाणकल्याणस्तवः–
सर्वजिनस्तवः– (जयानन्दसूरिकृतटीका).
साधारणजिनस्तवनम्–

## जैनप्राकृतग्रन्थाः ।

अजितशान्तिस्तवनम्–
आदिनाथस्तवनम्–
" –
कर्मप्रकृतिः–नेमिचन्द्रः.
जयतिहुअणस्तोत्रम्–अभयदेवः. (संस्कृतवृत्तिसमेतम्).
देवागमस्तोत्रम्–समन्तभद्रः.
पञ्चपरमेष्टिमन्त्रमहिमास्तोत्रम्–जिनवल्लभः.
पार्श्वनाथलघुस्तवः–
मङ्गलस्तोत्रम्–मुनिसुन्दरः.
विचारषट्त्रिंशिका–गजसागरगणिः. (सटीका).
विचारसारार्धविंशतिः–
वैराग्यशतकम्–
समवसरणस्तोत्रम्– (सटीकम्).
सम्यक्त्वविचारस्तवनम्– (उदयहर्षगणिकृतटीका).
स्तोत्रसंग्रहः–

